# BIBLIOTHECA INDICA:

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED BY

## THE ASIATIC SOCIETY OF BENGAL.

NEW SERIES.—NOS. 900, 908, 915, 918, 921, 927, 935, 943, 955, 960, 975, & 977.

# THE TATTVA-CINTĀMAṆI

BY

GAṄGEÇA UPĀDHYĀYA

## PART IV.—VOLUME II.

ÇABDA-KHAṆḌA

FROM VIDHIVĀDA TO PRAMĀṆA-CATUṢṬAYA-PRĀMĀṆYAVĀDA

WITH THE COMMENTARIES OF

MATHURANĀTHA TARKAVĀGĪÇA

AND

JAYADEVA MIÇRA;

AND WITH

THE ĀKHYĀTAVĀDA

AND

THE NAÑVĀDA

OF

MAHĀMAHOPĀDHYĀYA RAGHUNĀTHA ÇIROMAṆI.

EDITED BY

MAHĀMAHOPĀDHYĀYA KĀMĀKHYĀNĀTHA TARKAVĀGĪÇA,

*Professor, Sanskrit College, Calcutta.*

CALCUTTA:

PRINTED AT THE BAPTIST MISSION PRESS.

1901.

# तत्त्वचिन्तामणौ

## शब्दखण्डं।



विधिवादादिप्रमाणचतुष्टयप्रामाण्यवादान्तं।

महामहोपाध्याय-श्रीमङ्गेशविरचितं।

महामहोपाध्याय-श्रीमथुरानाथ-तर्कवागीशविरचित-
रहस्यनामकटीकया महामहोपाध्याय-श्रीजय-
देवमिश्रविरचितालोकाख्यटीकया
महामहोपाध्याय-श्रीरघुनाथ-
शिरोमणिकृतेन आख्यात-
वादेन नञ्वादेन
च सहितं।

एशियाटीकसोसाइटीसमाजानुमत्या संस्कृतविद्यालयाध्यापक-
महामहोपाध्याय-श्रीकामाख्यानाथ-तर्कवागीशेन
परिशोधितं।



कलिकाताराजधान्यां
बाप्तिस्तमिशनयन्त्रे मुद्रितं।
शकाब्दाः १८२२।

# अनुक्रमणिका ।

दुःखपङ्कनिमग्नानां जीवानां षोड़शपदार्थ-तत्त्वज्ञानद्वारा दुःखात्यन्त-विमुक्तये परमकारुणिको महर्षिर्गौतमः षोड़शपदार्थनिरूपणात्मकं तर्क-शास्त्रं प्रणिनाय । स च महर्षिः प्रत्यक्षानुमानोपमान-शब्दात्मकप्रमाणचतु-ष्टयप्रामाण्यवादी, तन्मतमवलम्ब्य श्रीमद्गङ्गेशोपाध्यायः तत्त्वचिन्तामणि-नामकग्रन्थेन तादृशप्रमाणचतुष्टयस्य प्रामाण्यं सप्रपञ्चं सोपपत्तिकञ्च व्यवस्थापितवान् । स च तार्किकविदग्धाग्रणीर्मिथिलाजनपदमलञ्चकार कस्मिन् समये कतममन्वयं मण्डयामास तद्विशेषेण नावधार्य्यते, किन्तु षड्-दर्शनटीकाकृद्वाचस्पतिमिश्रात् तस्याप्राचीनतेत्येवं निर्णेतुं शक्यते, यतस्तेन स्वग्रन्थे "प्रत्यक्षपरिकलितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिकाः न हि करिणि दृष्टे चीत्कारेण तमनुमिमते अनुमातारः" इति वाचस्पतिवचनयो-रविरोध इति वदता तस्मात् स्वस्याप्राचीनता सूचिता । स एव नव्यन्यायस्य प्रथमप्रणेता, तस्यैव पाण्डित्यबलेन न्यायदर्शनं सर्व्वत्र समादरमाससाद । तद्ग्रन्थस्य चिन्तामणिसंज्ञकत्वेन महामहोपाध्याय-श्रीजयदेवमिश्रविर-चिततद्ग्रन्थव्याख्याया आलोकनामकत्वं, महामहोपाध्याय-श्रीरुचिदत्त-विरचिततद्ग्रन्थव्याख्यायाः प्रकाशनामकत्वं, तार्किकाग्रगण्यमहामहो-पाध्याय-श्रीरघुनाथशिरोमणिविरचिततद्ग्रन्थव्याख्याया दीधितिनामकत्वञ्च युक्तमेव । तादृशव्याख्यात्रयस्य उत्कर्षवत्त्वेऽपि अतिसंक्षिप्तत्वात् महामहो-पाध्याय-श्रीमथुरानाथ-तर्कवागीशेन रहस्यनामकातिविशदव्याख्यया तद्-ग्रन्थतात्पर्य्यमुपवर्णितं । अस्मिन् तत्त्वचिन्तामणिनामकग्रन्थे चत्वारः परि-च्छेदाः सन्ति, प्रथमः प्रत्यक्षपरिच्छेदः, द्वितीयः अनुमानपरिच्छेदः, तृतीय-उपमानपरिच्छेदः, चतुर्थः शब्दपरिच्छेदः, प्रथमपरिच्छेदे प्रत्यक्षप्रमितेः लक्षणं कारणं प्रामाण्यञ्च विशेषेणोपवर्णितं, द्वितीयपरिच्छेदे अनुमितेर्लक्षणं कारणं प्रामाण्यञ्च विशेषेणोपवर्णितं, ईश्वरानुमानप्रणाली विशेषेणोपवर्णिता

च। तृतीयपरिच्छेदे उपमितेर्लक्षणं कारणं प्रामाण्यञ्च विशेषेणोपवर्णितं, चतुर्थपरिच्छेदे शाब्दप्रमितेर्लक्षणं कारणं प्रामाण्यञ्च विशेषेणोपवर्णितं। द्वितीयानुमानपरिच्छेदस्य केचिदंशाः अस्मत्प्रदेशे पठन-पाठनयोः प्रचरन्ति, सुतरां पठन-पाठनाभावात् उक्तग्रन्थोलुप्तकल्प एव जातः। तमिममुपादेयं ग्रन्थं लुप्तकल्पमालोचयद्भिः एसियाटीक-सोसाइटी-समाजविद्भिः परिशोधनपूर्व्वकमुद्रणेनास्य ग्रन्थस्य प्रकाशार्थमहमाज्ञप्तः, मयाप्यस्य संस्कारविषये यावान् परिश्रमः समुचितः तावान् अकारि तथापि भ्रम-प्रमादवशात् स्खलितं सन्तः संस्कुर्व्वन्तु। अतिप्रामाणिकालोकप्रभृतिव्याख्या-पुस्तकानां सुलभत्वेऽपि अतिविशदत्वात् सुगमत्वात् सर्व्वैरन्तेवासिभिः विशेषेणादृतत्वाच्च महामहोपाध्याय-श्रीमथुरानाथ-तर्कवागीशविरचितरहस्य-नामकव्याख्यया सह मूलपुस्तकमिदं मुद्रापितं। प्रत्यक्षपरिच्छेदस्य समवाय-वादे अनुपलब्धप्रामाण्यवादे अभाववादे प्रत्यक्षकारणवादे मनोऽणुत्ववादे अनुव्यवसायवादे निर्व्विकल्पकवादे अनुमानपरिच्छेदस्य ईश्वरानुमानवादे शब्दपरिच्छेदस्य शक्तिवादे समासवादे अख्यातवादे धातुवादे उपसर्गवादे प्रमाणचतुष्टयप्रामाण्यवादे च महामहोपाध्याय-श्रीमथुरानाथ-तर्कवागीश-कृतरहस्यनामकव्याख्यापुस्तकस्याप्राप्तत्वात् तत्र तत्र मूलविभागेषु महामहोपाध्याय-श्रीजयदेवमिश्रविरचितालोकनामकव्याख्यापुस्तकं सन्निवेशितं। उपमानपरिच्छेदे रहस्यनामकव्याख्यापुस्तकस्यालोकनामकव्याख्यापुस्तकस्य चाप्राप्तत्वात् तत्र विभागे महामहोपाध्याय-श्रीकृष्णकान्तविद्यावागीशविरचितदीपन्याख्यव्याख्यापुस्तकं सन्निवेशितं। शब्दपरिच्छेदस्य उच्छन्नप्रच्छन्न-वादे विधिवादे अपूर्व्ववादे शक्तिवादे समासवादे आख्यातवादे धातुवादे उपसर्गवादे प्रमाणचतुष्टयप्रामाण्यवादे च महामहोपाध्याय-श्रीरुचिदत्त-कृतप्रकाशनामकव्याख्यायां अभिनवपदार्थाविष्कारदर्शनात् तत्र तत्र विभागे कुत्र-कुत्रचित् रहस्यनामकव्याख्याया अधस्तात् कुत्र-कुत्रचिच्च आलोकनाम-कव्याख्याया अधस्तात् रुचिदत्तकृतप्रकाशनामकव्याख्यानमपि सन्निवेशितं। यानि आदर्शपुस्तकान्यवलम्ब्य मयैतत्परिशोधनं कृतं तेषामेकं नवद्वीप-

निवासि-पूज्यपाद-महामहोपाध्याय-श्रीभुवनमोहनविद्यारत्नमहोदयसन्निधानादपरं नवद्वीपनिवासि-श्रीहरिनाथतर्कसिद्धान्तमहोदयसन्निधानादितरत् पूर्व्वस्थलीनिवासि-महामहोपाध्याय-श्रीयुक्तकृष्णनाथन्यायपञ्चाननमहोदयसन्निधानादपरं आँटपुरनिवासि-पूज्यपाद-श्रीश्यामापदन्यायभूषणमहोदयसन्निधानानपरमपि राजकीयसंस्कृतविद्यामन्दिरात् प्राप्तं, एतत् पुस्तकपञ्चकं सम्पूर्णं परिशुद्धञ्च। अन्यच्च यत् सोसाइटीसमाजात् लब्धं तदसम्पूर्णं। तदेवं षड़ादर्शपुस्तकानि एतत्पुस्तकपरिशोधने सहायत्वेन लब्धानि। तत्त्वचिन्तामण्यन्तर्गताख्यातवादापेक्षया समुज्ज्वलत्वात् सर्व्वैरन्तेवासिभिर्विशेषेण समादृतत्वाच्च महामहोपाध्याय-तार्किकाग्रगण्य-श्रीरघुनाथ-शिरोमणिभट्टाचार्य्यविरचित आख्यातवादः तत्त्वचिन्तामण्यन्तर्गतशब्द-परिच्छेदे नञ्पदार्थविचाराभावात् उक्तशिरोमणिभट्टाचार्य्यकृतनञ्वादश्च तत्त्वचिन्तामणिशेषे परिशिष्टभावेन मुद्रापित इत्यलं पल्लवितेन।

श्रीकामाख्यानाथशर्म्मणः।

# तत्त्वचिन्तामणिकार-तत्त्वचिन्तामणिटीकाकारधृत-श्लोकानां अकारादिक्रमेण प्रतीकसूची।

## प्रत्यक्षखण्डस्य।

## म ।



## य ।



## व ।



## स ।

# तत्त्वचिन्तामणिप्रबन्धकारोल्लिखित-तट्टीकाकारोल्लिखितानां ग्रन्थकारनाम्नां अकारादिक्रमेण सूची ।

## प्रत्यक्षखण्डस्य ।

ग्रन्थकर्त्तृनामानि ।

## म ।



## स ।



---

# तत्त्वचिन्तामणिकार-तट्टीकाकारोल्लिखितग्रन्थनाम्नां
# अकारादिक्रमेण सूची ।



## प्रत्यक्षखण्डस्य ।

ग्रन्थनाम ।

### भ ।



### म ।



### व ।



### श्रु ।



### स ।

# तत्त्वचिन्तामणिकारोल्लिखितानां तट्टीकाकारोल्लिखिता-नाञ्च वैदिकशब्दानां अकारादिक्रमेण सूची ।

## प्रत्यक्षखण्डस्य ।

वैदिकशब्दः ।

### अ ।



### आ ।



### इ ।



### क ।

## ग।



## च।



## द।



## प।



## य।



## व।

विश्वजित् ६ । ४ ॥ २८ । ३ ॥ ३० । ७ ॥

व्रीहिः ४४ । ८ ॥

## श ।

श्येनः १८ । ११ ॥ ६३ । १० ॥

श्राद्धं १८ । १२ ॥ ४६ । ५ ॥ ४६ । १८ ॥

## स ।

स्फ्यः ४३ । १ ॥ ४६ । १२ ॥ ४७ । ३ । ४८ । ६ ॥

स्वर्गः १३ । १२ ॥ १४ । १६ ॥ २१ । ६ ॥ २२ । ६ ॥ २८ । ३ ॥ २६ । २१ ॥
६७ । १६ ॥ ७० । ८ ॥ ८६ । ३ ॥ ३४४ । ३ ॥

---

# अकारादिक्रमेण विषयसूची।

## तत्त्वचिन्तामणौ प्रत्यक्षखण्डस्य।

विषयः।

### अ।



### ग।

## ज ।



## न ।



## प ।

## म ।



## श्र ।



## स ।



---

# तत्त्वचिन्तामणि-तट्टीकाकारधृतानां श्लोकानां श्रुतीनाञ्च प्रतीकस्य अकारादिक्रमेण सूची।



## अनुमानखण्डस्य।

प्रतीकः।





## तत्त्वचिन्तामणि-तट्टीकाकारधृतग्रन्थकारनाम्नां अकारादिक्रमेण सूची ।

### अनुमानखण्डस्य ।

ग्रन्थकारनामानि ।

## न।



## प।



## भ।



## म।



## ल।



## स।

# तत्त्वचिन्तामणि-तट्टीकाकारधृतग्रन्थनाम्नां अकारादिक्रमेण सूची ।



## अनुमानखण्डस्य ।

ग्रन्थनामानि ।

### न ।

निबन्धः ८८८ । ५ ॥

### व ।

वेदः ७२० । १९ ॥

### ल ।

लीलावती ८६ । १० ॥ २८४ । १५ ॥



## तत्त्वचिन्तामणि-तट्टीकाकारोल्लिखितवैदिकशब्दानां अकारादिक्रमेण सूची ।



### अनुमानखण्डस्य ।

वैदिकशब्दाः ।

# अकारादिक्रमेण विषयसूची ।

## अनुमानखण्डस्य ।

विषयः ।

### अ ।



### उ ।

## ह ।

## तत्त्वचिन्तामणि-तट्टीकाकारोद्धृतश्लोक-श्रुतीनां प्रतीकस्य अकाराद्यक्षरक्रमेण सूची ।

---

### ईश्वरानुमानखण्डस्य ।

प्रतीकः ।

## त ।



## द ।



## न ।



## प ।



## भ ।



## म ।

## व ।



## स ।

# तत्त्वचिन्तामणि-तट्टीकाकारधृतग्रन्थकारनाम्नां अकारादिक्रमेण सूची ।

## ईश्वरानुमानखण्डस्य ।

ग्रन्थकर्तृनामानि ।

### आ ।



### त ।



### न ।



### प ।



### व ।

# तत्त्वचिन्तामणि-तट्टीकाकारधृतग्रन्थनाम्नां अकारादिक्रमेण सूची ।



## ईश्वरानुमानखण्डस्य ।

ग्रन्थनामानि ।

# तत्त्वचिन्तामणि-तट्टीकाकारोल्लिखितवैदिकशब्दानां अकारादिक्रमेण सूची ।

## ईश्वरानुमानखण्डस्य ।

वैदिकशब्दाः ।

### अ ।



### द ।



### प ।



### य ।



### र ।



### स ।



### ह ।

# अकारादिक्रमेण विषयसूची ।

## ईश्वरानुमानखण्डस्य ।

विषयः ।

ई ।



क ।



त ।



द ।



प ।



म ।



व ।



स ।

# तत्त्वचिन्तामणि-तट्टीकाकारधृतश्लोकानां प्रतीकस्य अकारादिक्रमेण सूची ।



## उपमानखण्डस्य ।

प्रतीकः ।

### अ ।



### ए ।



### ग ।



### स ।





# तत्त्वचिन्तामणिकार-तट्टीकाकारोल्लिखितग्रन्थकार-नाम्नां अकारादिक्रमेण सूची ।

## उपमानखण्डस्य ।

ग्रन्थकारनामानि ।

### ए ।



### ज ।



### न ।



### म ।



### स ।

# अकारादिक्रमेण विषयसूची ।



## उपमानखण्डस्य ।

विषयः ।

### उ ।



### स ।

# तत्त्वचिन्तामणिकार-तट्टीकाकारधृतश्लोक-श्रुतीनां अकाराद्यनुक्रमेण प्रतीकसूची ।

## शब्दपरिच्छेदीयप्रथमभागस्य ।

# तत्त्वचिन्तामणिकार-तट्टीकाकारोल्लिखितग्रन्थकार-नाम्नां अकारादिक्रमेण सूची ।



## शब्दपरिच्छेदीयप्रथमभागस्य ।

ग्रन्थकर्त्तृनामानि ।

## य ।



## व ।



## स ।

# तत्त्वचिन्तामणिकार-तट्टीकाकारोल्लिखितग्रन्थनाम्नां अकारादिक्रमेण सूची ।



## शब्दपरिच्छेदीयप्रथमभागस्य ।

ग्रन्थनामानि ।

### भ ।

भारतं ३४२ । ८ ॥ ३४४ । १५ ॥ ३४६ । ७ ॥ ३४७ । ५ ॥ ३५५ । १ ॥

### व ।

वेदः ९९ । १ ॥ १०२ । १ ॥ १०३ । १ ॥ १३१ । १७ ॥ १३८ । ४ ॥ १३९ । ३ ॥ १४३ । २ ॥ १४६ । १ ॥ १४७ । ३ ॥ १५० । ५ ॥ ३४० । २ ॥ ३४३ । १ ॥ ३४५ । १ ॥ ३४९ ॥ ३ ॥ ३५१ । २ ॥ ३९१ । ३ ॥ ४६९ । १ ॥ ४७० । २ ॥ ४७१ । १ ॥ ४७४ । ४ ॥ ४८३ । १ ॥ ४८९ । ६ ॥ ४९४ । १ ॥ ४९८ । १ ॥ ५०० । १ ॥ ५०२ । २ ॥ ५१० । १ ॥ ५११ । १ ॥

### स ।

स्मृतिः ३६४ । २ ॥ ३६० । ८ ॥ ४६९ । ७ ॥ ४७० । २ ॥ ४७३ । २ ॥ ४७४ । ४ ॥ ४८१ । २ ॥ ४८५ । ६ ॥ ४८८ । ५ ॥ ४८९ । १ ॥ ४९९ । १ ॥ ५०० । १ ॥ ५०२ । २ ॥ ५१० । १ ॥ ५११ । १२ ॥

---

# तत्त्वचिन्तामणिकार-तट्टीकाकारोल्लिखितवेदोक्तशब्दानां अकारादिक्रमेण सूची ।

## शब्दपरिच्छेदीयप्रथमभागस्य ।

वैदिकशब्दाः ।

### अ ।

अष्टका ५११ । १२ ॥

### व ।

विश्वजित् २२९ । १ ॥

### स ।

स्वर्गः ५१० । १५ ॥

### ह ।

होलाका ५०३ । १ ॥

# अकारादिक्रमेण विषयसूची ।

## शब्दचिन्तामणेः प्रथमभागस्य ।

विषयः ।

### अ ।



### आ ।



### क ।



### त ।



### न ।



### प ।

## स ।

## तत्त्वचिन्तामणिकार-तट्टीकाकारो[redacted]लिखितग्रन्थनाम्नां अकारादिक्रमेण सूची ।



### शब्दपरिच्छेदीयद्वितीयभागस्य ।

ग्रन्थनामानि ।

### प ।

प्रत्यक्षप्रकाशः ६५ । १७ ॥

### व

वेदः १ । १ ॥ २ । २ ॥ ५३१ । २ ॥

### श्र

श्रुतिः २२७ । ४ ॥ २२६ । १ ॥ ११६ । १८ ॥ ३२० । ६ ॥ ५१४ । ३ ॥



# तत्त्वचिन्तामणिकार-तट्टीकाकारोल्लिखितवैदिक-शब्दानां अकारादिक्रमेण सूची ।

## शब्दपरिच्छेदीयद्वितीयभागस्य ।

वैदिकशब्दाः ।

## तत्त्वचिन्तामणि-तट्टीकाकारोद्धृतश्लोक-श्रुतीनां प्रतीकस्य अकारादिक्रमेण सूची ।

## शब्दपरिच्छेदीयद्वितीयभागस्य ।

प्रतीकः ।

### अ ।



### आ ।



### इ ।



### क ।



### ज ।



### त ।

## द ।



## ध ।



## न ।



## प ।



## य ।



## व ।



## श ।

## स ।

# तत्त्वचिन्तामणि-तट्टीकाकारोल्लिखितग्रन्थकारनाम्नां अकारादिक्रमेण सूची ।



## शब्दपरिच्छेदीयद्वितीयभागस्य ।

ग्रन्थकारनामानि ।

### अ ।



### उ ।



### ग ।



### ज ।



### न ।



### प ।

## भ ।



## म ।



## व ।



## श ।



## स ।



---

## अकाराद्यनुक्रमेण विषयसूची ।



## शब्दपरिच्छेदीयद्वितीयभागस्य ।

विषयः ।

### अ ।



### आ ।



### उ ।



### क ।



### च ।



### ज ।

## ध ।



## प ।



## य ।



## ल ।



## व ।



## स ।



## ह ।

ॐ नमो गणेशाय ।

# तत्त्वचिन्तामणौ

## शब्दाख्यतुरीयखण्डे विधिवादः ।

आचारमूलत्वं* वेदस्य प्रवर्त्तकज्ञानजनकत्वेन भव-

---

### शब्दाख्यतुरीयखण्डे विधिवादरहस्यं ।

उच्छन्नप्रच्छन्नग्रन्थेन वेदस्याचारमूलत्वनिरूपणानन्तरं प्रवर्त्तकज्ञानं निरूपयितुं, प्रवर्त्तकज्ञाने आचारमूलत्वस्योपपादकत्वरूपामुपोद्घातसङ्गतिं दर्शयन् शिष्यावधानाय प्रतिजानीते, 'आचारेति, 'आचारः' प्रवृत्तिः, तन्मूलत्वं तत्प्रयोजकत्वं, 'प्रवर्त्तकज्ञानजनकत्वेन' जनकतासम्बन्धेन प्रवर्त्तकज्ञानवत्त्वेन, तेन प्रवर्त्तकज्ञाने सङ्गतिलाभः(१)

---

(१) अन्यथा प्रवर्त्तकज्ञानजनकतायामेव सङ्गतिलाभः स्यादिति भावः ।

---

* उपोद्घातसङ्गतिमाह, 'आचारेति, प्रसङ्ग एवात्र सङ्गतिरित्यन्ये । 'तत्रापीति, तत्राभिधा लिङाद्यर्थः सैव प्रवृत्तिहेतुरिति भट्टाः । तथाहि

# तीति प्रवर्त्तकज्ञानं निरूप्यते। तच्चाभिधा-सङ्कल्पा-

'भवति' निर्व्वहति, 'निरूप्यते' वेदस्याचारमूलत्वनिरूपणानन्तरं निरूप्यते। एतेन प्रवर्त्तकज्ञानजनकत्वस्य स्वरूपसत एवाचारमूलत्व-निर्व्वाहकत्वात्तन्निर्व्वाहार्थं तन्निरूपणमनुपयुक्तं। न च प्रवर्त्तकज्ञान-जनकत्वज्ञानं विना नाचारमूलत्वज्ञानं अतस्तज्ज्ञानार्थं प्रवर्त्तकज्ञान-निरूपणमिति वाच्यं। प्रवर्त्तकज्ञानजनकत्वज्ञानं[१] विनाप्याचार-मूलत्वज्ञाने विरोधाभावात् तथासत्याचारमूलत्वज्ञानं वेदस्य प्रव-र्त्तकज्ञानजनकत्वज्ञानेन भवतीत्येव वक्तुमुचितत्वाच्च इति पूर्व्वपक्षा-भासो निरस्तः। सङ्गतिप्रदर्शनपरोऽयं ग्रन्थो न निरूपणप्रयोजन-प्रदर्शनपर इति ध्येयं।

अत्र भट्टाः प्रवृत्तिजनने विधिव्यापारीभूतोविधिसमवेतोभाव-नापरनामा अतिरिक्तपदार्थविशेषोऽभिधा तस्या एव ज्ञानं प्रवर्त्तकं तच्चैव च भावनात्वरूपेण विधिशक्तिः, सा च जन्यत्वसम्बन्धेन एक-

(१) आचारमूलत्वं स्वरूपसम्बन्धविशेष इत्याशयेन समाधत्ते प्रवर्त्तकज्ञानेति।

लिङादेस्तावदभिधानामकः स्वनिष्ठो व्यापारोऽवश्याभ्युपेयः व्यापारभिन्नस्य परनिष्ठव्यापारजनकत्वं स्वनिष्ठव्यापारद्वारा यथा दण्डस्य स्वनिष्ठस्पन्दार्जन-द्वारा चक्रनिष्ठस्पन्दजनकत्वं, अत्र व्यापारे व्यभिचारवारणाय व्यापारभिन्न-स्येति, व्यापारिणः स्वनिष्ठव्यापारजनने न व्यापारापेक्षा अनवस्थापत्तेरित्यत-उक्तं परनिष्ठेति, ज्ञानद्वारैव लिङादि प्रवृत्तिं जनयत्विति शब्दाश्रिता सा नायात्यतीत्यत उक्तं स्वनिष्ठेति, सा च शब्दाश्रितत्वाच्छब्दभावनेत्युच्यते,

पदोपात्तत्वप्रत्यासत्त्या[१] वा आख्यातसामान्यशक्तिबललभ्ये कृतिरूप-व्यापारे विधेरर्थान्तरे विशेषणतयान्वेऽति, प्रकृत्यर्थोऽपि विषयितया व्यापारे विशेषणं, तथाच यागविषयकभावनाजन्यव्यापारवान् पुरुष इत्यन्वयः । न चैतादृशबुद्धावपि प्रयोजनाज्ञाने कुतः प्रवृत्तिः प्रयोजनज्ञानस्याहेतुत्वे "विश्वजितेत्यादौ फलकल्पनानुपपत्तेः इति वाच्यं । यागविषयकव्यापारेऽभिधाजन्यत्वस्यान्वये व्यापारनिष्ठेष्टसाधनत्वस्यान्वयप्रयोजकरूपतया योग्यतात्वेन योग्यताबलादेव व्यापारे तज्ज्ञानात् । यद्वा विधित एव स्वर्गादिसाधनत्वग्रहः तच्च प्रवृत्तिरूप-व्यापारे आख्यातार्थेऽन्वेति प्रवृत्ताविष्टसाधनताज्ञानमेव प्रवर्त्तकं । न चैवं न्यायमताविशेषः इष्टसाधनत्वस्य विध्यर्थत्वादिति वाच्यं । क्रियागतेष्टसाधनत्वं न विध्यर्थः अपि तु प्रवृत्तिगतमिति विशेषात् अभिधाभ्युपगमानभ्युपगमाभ्यामपि विशेषसम्भवाच्च । न चैवं तादृशाभिधायां मानाभाव इति वाच्यं । विधिः प्रवृत्तिजनकधर्म्मसम-वायिकारणं तज्जनकद्रव्यत्वादात्मवत् इत्यनुमानादेव तत्सिद्धेः पर-मते शब्दस्य द्रव्यत्वासिद्धिः । न च प्रवृत्तिजनकशरीरे व्यभि-चारः, तस्य शरीर-प्राणसंयोगोपादानत्वात् । न च विधिर्न प्रवृत्तौ

(१) स्वप्रतिपादकवाक्यप्रतिपाद्यत्वरूपप्रत्यासत्त्येत्यर्थः ।

---

अपरार्थविषयत्वेनार्थभावनेत्युच्यते, सा च सर्व्वाख्यातवाच्या तदुक्तं, "अभि-धाभावनामाहुरन्यामेव लिङादयः । अर्थात्मभावना त्वन्या सर्व्वाख्यातेषु गम्यते" ॥ 'अर्थात्मत्वं' अर्थविषयत्वं, अर्थभावना च कर्म्म करणमिति-कर्त्तव्यताद्यपेक्षत इत्यंशत्रयवती भवति, अन्यथा फलं स्वर्गादि सा न भाव-

कारणं प्रवृत्तिसामान्ये तस्य व्यभिचारादिति वाच्यं। वैधधीजन्य-प्रवृत्तौ तद्धेतुत्वात् ज्ञानवत् प्रवृत्तावपि वैलक्षण्यसम्भवाच्च। तच्च जातिरूपमखण्डोपाधिरूपं वा इत्यन्यदेतत्। नन्वस्तु अभिधा तथापि तद्धीर्न प्रवृत्तिहेतुः प्रवृत्तिसामान्ये तस्या व्यभिचारात् प्रत्यक्षादि-नेष्टसाधनत्वग्रहेऽपि प्रवृत्तेः। नापि यागादिविषयिकायां, यागकृतिः स्वर्गसाधनमित्याप्तवाक्यादितोऽपि प्रवृत्तेः। नापि विधिजन्यायां, तज्जन्यतावच्छेदकस्यैव दुष्परिचयात्। नापि जातिविशेषविशिष्टायां, गुणगतजात्यनभ्युपगमादिति, चेत्, न, विधिजन्यतावच्छेदकाखण्डो-पाध्यवच्छेदेनैव तद्धेतुत्वात्। न च भावनादिपदादपि तादृशप्रवृ-त्त्यापत्तिरिति वाच्यं। विधिजन्यभावनाज्ञानस्यैव विलक्षणशक्तिमत्त्वेन तादृशप्रवृत्तिविशेषे हेतुत्वादित्याहुः।

परे तु सङ्कल्पज्ञानं प्रवर्त्तकं, सङ्कल्प इच्छा, तत्रैव विधिशक्तिः, याग इच्छाविषय इत्येवान्वयबोध इत्याहुः।

अन्ये तु वैदिकविधिजन्यप्रवृत्तौ अपूर्व्वज्ञानं प्रवर्त्तकं, नित्ये सन्ध्यावन्दनादौ फलाभावेन तथा कल्पनात् नित्यापूर्व्वस्य पण्डस्य तत्रापि स्वीकारात्[१] विधिशक्तिरपि तत्रैव, यागजन्यमपूर्व्वमित्ये-वान्वयबोध इत्याहुः।

---

(१) न च नित्ये सन्ध्यावन्दनादौ फलाभावेन व्यभिचार इति वाच्यं। नित्यापूर्व्वस्य तत्रापि स्वीकारादिति ख॰।

---

चेत् तस्यैतच्छितयाधीनत्वात्, एवञ्च शब्दभावनापि भावनात्वात् किं केन कथमित्यंशत्रयवती भवति, तदिदमाह, "लिङोऽभिधा सैव च शब्दभावना भाव्या च तस्याः पुरुषप्रवृत्तिः। सम्बन्धबोधः करणं तदीयं प्ररोचना चाङ्ग-

पूर्व्व-भावनाज्ञानं न प्रवर्त्तकं, तस्मिन् सत्यपि अ-

केचित्तु भावनाज्ञानं वैदिके प्रवर्त्तकं, भावना च प्रयत्नो न लिष्टसाधनताज्ञानं नित्ये तदभावात्, विधिशक्तिरपि तत्रैव आख्यातसामान्यस्य तदर्थत्वात् अन्वयश्चास्य पचतीत्यादिवदित्याहुः(१)।

तदेतन्मतचतुष्टयं एकेनैव ग्रन्थेन दूषयति, 'तत्राभिधेति, 'तत्र' निरूपणे, विषयत्वं सप्तम्यर्थः, अन्वयश्चास्य 'प्रवर्त्तकमित्यनेन, तथाच तन्निरूपणविषयीभूतं प्रवर्त्तकमिदं नेत्यन्वयः, अभिधात्वञ्च विधिसमवेतपदार्थत्वं अभिधापदवाच्यत्वं वा तेनास्मन्मते नाप्रसिद्धिः अस्मन्मते शब्दशक्तेरेव अभिधापदवाच्यत्वात्।

केचित्तु 'तत्र' प्रवृत्तौ, 'न प्रवर्त्तकं' नोत्पादकं न जनकमिति यावदित्याहुः।

'तस्मिन् सतीति विनेष्टसाधनताज्ञानं तेषां ज्ञानेऽप्यप्रवृत्तेरित्यर्थः, इदञ्च सङ्कल्पापूर्व्व-भावनाज्ञानं न प्रवर्त्तकमित्यत्रैव हेतुः अभिधायां मानाभावेन तज्ज्ञानसत्त्वस्य वक्तुमशक्यत्वात्। 'असत्य-

(१) तथाच यागानुकूलकृतिमानित्यन्वयबोध इति भावः।

तयोपयुज्यते" ॥ इति, किमित्याकाङ्क्षायां प्रवर्त्तनीयपुरुषप्रवृत्तिर्भाव्या सैव कर्म्म, केनेत्याकाङ्क्षायां सम्बन्धबोध इति, अव्युत्पन्नस्य लिङ्पदादप्रवृत्तेः सम्बन्धबोधेन तच्छक्तिग्रहरूपेण सहकारिणा सा प्रवर्त्तयतीत्यर्थः, कथमित्याकाङ्क्षायां 'प्ररोचनेति, 'प्ररोचना' स्तुत्यर्थवादः, स च कर्म्मणः प्रशस्तत्वज्ञानमन्तरेणावसीदन्तीं प्रवृत्तिमप्रापयन्तीं विधिशक्तिं प्राशस्त्यज्ञानद्वारा प्रवृत्तिजननीं करोति, अतएव यत्र प्ररोचना न श्रूयते

प्रवृत्तेः असत्यपि प्रवृत्तेश्च। कार्य्यत्वज्ञानं प्रवर्त्तकमिति

---

पीति, इदञ्च सर्व्वत्रैव हेतुः वैदिकविधिजन्यज्ञाने विधिसमवेत-पदार्थसङ्कल्पापूर्व्व-भावनादिविषयकत्वेऽसत्यपि क्रियेष्टसाधनत्वज्ञानेन प्रवृत्तेरित्यर्थः। इदमुपलक्षणं वस्तुतस्तु एतादृशाभिधायामेव माना-भावः। न चोक्तानुमानमेव मानं, शब्दस्य प्रवृत्तिसामान्ये शाब्दप्रवृत्तौ वा व्यभिचारात् अन्यथासिद्धत्वाच्च अकारणत्वात् शब्दस्य द्रव्यत्वा-सिद्धेः अप्रयोजकत्वाच्च(१)। एवं सङ्कल्पज्ञानमपि न प्रवर्त्तकं माना-भावात् इच्छात्मकस्य तस्य स्वरूपसतोहेतुत्वेन तदभावे तज्ज्ञानाद-प्रवृत्तेः, एवमपूर्व्वज्ञानमपि वैदिकविधिजन्यप्रवृत्तौ न कारणं अपू-र्व्वादिपदादपि प्रवृत्त्यापत्तेः। अतएव भावनाज्ञानमपि न प्रवर्त्तकं भावनापदादपि तदापत्तेरित्यपि बोध्यमिति सङ्क्षेपः। 'कार्य्यता-ज्ञानमिति कृतिसाध्यताज्ञानमित्यर्थः। न च कृतिसाध्यताज्ञानं विनापि घट-याग-पाकादिकर्त्तुस्तदुपायकपाल-हविस्तण्डुलादिसिद्ध-

---

(१) ननु शब्दात्मान्यतरत्वमेव हेतुर्वाच्यः अतो नासिद्धिरत आह, अप्र-योजकत्वाच्चेति।

---

तत्रापि कल्प्यत इति तस्या विध्यविनाभाव इति। इदमत्र तत्त्वं, अभि-धापि न तत्त्वेन ज्ञाता स्वरूपसती वा हेतुरतिप्रसङ्गादिति प्रवर्त्तनात्वेन भावनात्वेन च ज्ञाता तथा, तथाच यज्यादिपदसमभिव्याहारेण यागादि-जनकप्रवृत्तिजनकत्वग्रहे समानसंवित्संवेद्यतया यागादावपि कृतिसाध्य-त्वभानं, भाव्यानुपस्थितौ च भावनात्वेन ज्ञानमसम्भवीति समभिव्याहृतफलं प्रति भावनात्वेन ज्ञायते, अतएवाश्रुतफले विश्वजिदादौ फलं कल्प्यते,

गुरवः। तथा हि ज्ञानस्य कृतौ जन्यायां चिकी-

---

विशेष्यकप्रवृत्तिदर्शनाद्व्यभिचार इति वाच्यं। प्रवृत्तेर्हि विषयताद्वयी एका साध्यत्वाख्यविषयता, सा च यन्निष्ठकृतिसाध्यताज्ञान-चिकीर्षादिना प्रवृत्तिस्तन्निष्ठा, तच्च घट-याग-पाकाद्येव न तु तज्जनकीभूतकपालादिसिद्धनिष्ठा, अतएव घटं करोति यागं करोतीत्येवानुव्यवसाय-व्यवहारौ न तु कपाल-हविरादेः सिद्धतादशायां कपालं करोति हविः करोतीत्यनुव्यवसायो व्यवहारो वा कृतिवाचिधातुयोगे द्वितीयायाः साध्यत्वाख्यविषयतार्थकत्वनियमात्। न च साध्यत्वाख्यविषयताया एव कृतिवाचिधातुयोगे द्वितीयार्थत्वनियमे कपाल-तन्त्वादेः सिद्धतादशायां कपालं करोति तन्तुं करोतीत्यादिव्यवहारवत् कपालं घटवन्तं करोति तन्तुं पटवन्तं करोतीत्यादिव्यवहारोऽपि न स्यादिति वाच्यं। साध्यवैशिष्ट्यबोधकपदासमभिव्याहृतकृतिवाचिधातुयोगे द्वितीयाया एव तथा नियमात्तत्र कपालादिपदोत्तरद्वितीयाया आधेयत्वमर्थः, घटादिपदञ्च घटत्वादिपरं, मतुवर्थः आश्रयत्वं, धात्वाख्यातयोर्व्यापार-प्रयत्नौ यथा

---

तथाचाभिधागतमिष्टसाधनत्वमपि भासते तच्च क्रियागतमिष्टसाधनत्वं विना नेत्याक्षिप्तत‌दिष्टसाधनताबोधोऽपि, तथाच प्रवर्त्तनात्व-भावनात्व-ज्ञानानुकूलाप्यपरा शक्तिर्लिङादिपदएव, अतएवैका प्रवृत्त्यनुकूला अपरा ज्ञानानुकूला इति शक्तिचतुष्टयमिति। अन्ये तु व्यवहारेण व्युत्पित्सुर्बालः स्वप्रवृत्तिजनकत्वेनावधारिते शक्तिं कल्पयति, तादृशीच्छैवेति, सैव लिङर्थ-इत्याहुः। अपरे तु अपर्व्वमेव विध्यर्थो वैदिके तज्ज्ञानस्यैव प्रवर्त्तकत्वा-

योगमर्थः, तथाच कपालवृत्तिघटत्वाश्रयानुकूलव्यापारजनकयत्नवानित्यन्वयः, कपाले घटं करोमीत्यादिवत् कपालं घटं करोमीत्यादिप्रयोगोऽपीष्यतएवेत्यपि वदन्ति। अपरा च उपादानत्वापरनाम्नी सिद्धत्वाख्यविषयता सा च सिद्धकपाल-हविस्तण्डुलाद्युपाद्यनिष्ठा कपालेन घटं करोमि हविषा यागं करोमीत्यनुव्यवसायात् तत्र च उपादानत्वाख्यविषयताया एव तृतीयार्थत्वात् तस्य च धात्वर्थे कृतावन्वयात्। न च तत्र जन्यत्वं विषयत्वं(१) वा तृतीयार्थः, तस्य च घट-यागादावेवान्वय इति वाच्यं। सर्व्वत्र तृतीयार्थस्य धात्वर्थएवान्वयस्य व्युत्पन्नत्वात्। अन्यथा तण्डुलावयवेन तण्डुलं पचतीत्यपि व्यवहारापत्तेः। अन्या च उद्देश्यत्वाख्यविषयता, सा च यत्साधनताज्ञानाधीना चिकीर्षा तन्निष्ठा, तच्च जलाहरण-स्वर्गौदनादिरूपं फलमेव जलाहरणार्थितया घटं करोमि स्वर्गार्थितया यागं करोमीत्यनुव्यवसायात् जलाहरणमुद्दिश्य घटं करोमि स्वर्गमुद्दिश्य यागं करोमीत्याद्यनुव्यवसायाच्च। इत्थञ्च तत्तत्साध्यतावच्छेदकक-तत्तत्साध्यकप्रवृत्तित्वावच्छिन्नं प्रति तत्तत्साध्यतावच्छेदकविशेष्यतावच्छेदकक-

(१) आधेयत्वमित्यर्थः, क्वचित्तथैव पाठः।

दित्याहुः। इतरे तु प्रवृत्तिरूपभावनाज्ञानं प्रवर्त्तकमिति सैव विध्यर्थ इति वदन्ति। तदेतत् सर्व्वं दूषयति, 'तस्मिन्निति, इदञ्च हेतुद्वयं यथायोग्यं बोध्यं अभिधायां मानाभावेन तत्र तस्मिन् सतीत्यादिहेतोरनन्वयात्। इदमत्राकूतं पदार्थसम्बन्धभिन्नायामभिधायां मानाभावः व्यवहाराधीनव्युत्पत्तिबलेन शब्दस्य ज्ञानमात्रजनकत्वावधारणेन प्रवृत्तिजनकत्वाभावात् भावे वा आवश्यकेष्टसाधनताज्ञानमात्रव्यापारकत्वेनोपपन्नावभिधानस्या-

तत्तत्साध्यविशेष्यककृतिसाध्यताज्ञानं हेतुरिति न व्यभिचारः। एवं चिकीर्षाया अपि हेतुत्वमवसेयं, तेन तस्या अपि कपाल-हविस्तण्डुलाद्युपायकप्रवृत्तौ(१) न व्यभिचारः, अन्यथा नैयायिकनयेऽपि व्यभिचारस्य दुर्व्वारत्वात् तैरपि कृतिसाध्यताज्ञान-चिकीर्षयोर्हेतुत्वोपगमादिति भावः।

यत्तु प्रवृत्तेर्विषयताविशेषे मानाभावः, किन्तु कपाल-हविस्तण्डुलाद्युपायएव प्रवृत्तिविषयः प्रवृत्तिविशेष्यत्वमेव चोपादानत्वं। न चैवं घटं करोति यागं करोति पाकं करोतीत्यादिव्यवहारानुपपत्तिः कृतिवाचिधातुयोगे द्वितीयाया विशेष्यतार्थकत्वनियमादन्यथा कपालत्वं करोतीत्यादिव्यवहारापत्तिरिति वाच्यं। अत्र घट-याग-पाकादिपदस्य कपाल-हविस्तण्डुलादौ लाक्षणिकत्वात् कृतिवाचिधातुयोगे द्वितीयाया विशेष्यतानुकूलत्वान्यतरार्थकत्वनियमेनानुकूलत्वं वा तत्र द्वितीयार्थइति प्राचीननैयायिका वदन्ति। तदसत्। लक्षणया शब्दप्रयोगरूपव्यवहारसमर्थनेऽपि घटादिविशेष्यकत्वावगाहित्वेनानुभूयमानायाः घटं करोतीत्यादिप्रात्यक्षिकप्रतीतेरनुपपादनात् लक्षणायां मानाभावाच्च। किञ्च जलाहरण-स्वर्गादिरूपफलस्य उद्देश्यताख्यविषयतायाः घट-याग-पाकादेश्च साध्यताख्यविषयताया अनभ्युपगमे इष्टसाधनताज्ञान-कृतिसाध्यताज्ञान-

(१) कपाल-हविस्तण्डुलाद्युपादानविषयकप्रवृत्ताविति ख०।

---

व्यापारकत्वे मानाभावात्। न चोक्तनियमात् तत्कल्पनं, स्वनिष्ठत्वस्य गौरवेणाप्रयोजकतया कर्म्मविशेषणत्वात् अनुमित्यादिकरणव्याप्तिस्मृत्यादौ

र्षातिरिक्तं न कर्त्तव्यमस्ति तत्सत्त्वे कृतिविलम्बो-

---

चिकीर्षाणां कार्य्य-कारणभावोऽपि दुर्व्वार इत्युक्तप्राय एव वक्ष्यामश्चोपरिष्टात्[1] इति दिक्। अत्र च तत्प्रकारक-तद्विशेष्यक-तत्साधनताज्ञानत्वं तत्साध्यतावच्छेदककतत्साध्यक-तदर्थिप्रवृत्तिकारणतावच्छेदकं न वा तदर्थिप्रवृत्तित्वं तत्साधनताज्ञानजन्यवृत्ति न वेत्यादिविप्रतिपत्तयः, तेन नैयायिकैरपि कृतिसाध्यताज्ञानस्य प्रवर्त्तकत्वाभ्युपगमेऽपि न क्षतिः। तदर्थित्वञ्च तदुद्देश्यकत्वं, न त्विष्टसाधनताज्ञानं प्रवर्त्तकं न वा तत्साधनताज्ञानं तदर्थिप्रवृत्तिकारणं न वेत्यादिविप्रतिपत्तिः परैरपि हविराद्युपादाननिष्ठयागादिरूपचिकीर्षाविषयसाधनताज्ञानस्य यागादिगोचरप्रवृत्तौ हेतुत्वोपगमात् इष्टसाधनत्व-कृतिसाध्यत्वोभयविषयकसमूहालम्बनस्य प्रवृत्तिहेतुत्वाभ्युपगमाच्च इति ध्येयं। 'चिकीर्षातिरिक्तं न कर्त्तव्यमस्तीति, 'कर्त्तव्यं' द्वारं, चिकीर्षावश्यं द्वारमिति समुदितार्थः, तथैव प्रकृतोपयोगात्। न चैवं प्रवर्त्तकज्ञानत्वव्यापकचिकीर्षाव्यापारकत्वं इति फलितं तच्चायुक्तं उपादानप्रत्यक्षे व्यभिचारात् तस्य साक्षादेव प्रवृत्तिहेतुत्वादुपादानेच्छायास्तस्य द्वारत्वमतेऽपि चिकीर्षाया अद्वारत्वाच्च इति वाच्यं। 'ज्ञानस्येत्यस्य प्रवृत्तिं प्रति साक्षात्साधनीभूतज्ञानस्येत्यर्थात्

---

(१) वक्ष्यमाणस्योपरिष्टादिति ग०।

व्यभिचाराच्च। इच्छापि न लिङर्थः तस्याः स्वरूपसत्या एव प्रवर्त्तकत्वेन ज्ञानफलकप्रवृत्तेरकल्पनात् स्वर्गकामादिपदलभ्यत्वाच्च। अपूर्व्वज्ञानमपि न

उपादानप्रत्यक्षस्य न साक्षात्साधनं उपादानप्रत्यक्षविगमेऽपि प्रवृत्त्य-नुदयात् उपादानेच्छायास्तद्व्यापारत्वमतेऽपि तस्य साक्षात्साधनत्वावश्य-कत्वात् । न च तथापि फलज्ञाने व्यभिचारः फल-चिकीर्षयोः प्रवृत्तावहेतुत्वादिति वाच्यं । फलज्ञानस्य फलेच्छाद्वारा उपायेच्छा-मात्रसम्पादकत्वेन अन्यथासिद्धतया प्रवृत्तिजनकत्वस्यैव तत्रासिद्धेः । यदि च फलज्ञानमपि प्रवृत्तिजनकं तदा उपायचिकीर्षाया एव तद्व्यापारत्वेनैव चिकीर्षाव्यापारकत्वरूपसाध्यस्यापि तत्र सुतरां सत्त्वाच्च । न हि स्वसमानविशेष्यकचिकीर्षाव्यापारकत्वपर्य्यन्तं साध्यं, अनुप-योगादिति ध्येयं । ननु चिकीर्षारूपव्यापारसत्त्वेऽपि कुतो न क्वचित् कृत्युत्पाद इत्यतआह, 'तत्सत्त्व इति, 'हेत्वन्तरेति, हेत्वन्तरं दण्ड-कपालाद्युपादानलौकिकप्रत्यक्षं प्रतिबन्धकाभावश्चेति भावः । ननु तत्त-दुपादानतावच्छेदकप्रकारक-तत्तदुपादानकप्रवृत्तित्वेन तत्तदुपादान-तावच्छेदकप्रकारक-तत्तदुपादानविशेष्यकलौकिकसाक्षात्कारत्वेनोपा-दानप्रत्यक्ष-तत्तदुपादानप्रवृत्त्योर्हेतु-हेतुमद्भावाद्दण्ड-कपालाद्युपादान-प्रत्यक्षाभावे तदुपादानकप्रवृत्तिर्मास्तु घटादिसाध्यकप्रवृत्तिस्तु कथं न जायते तत्र चिकीर्षासत्त्वात् घटादिसाध्यकप्रवृत्तिं विनापि संयोगादिसाध्यक-दण्डाद्युपादानकप्रवृत्तौ दण्डाद्युपादानकप्रवृत्तित्व-सत्त्वेन तत्तदुपादानकप्रवृत्तिसामग्र्या घटादिसाध्यकप्रवृत्तिसामग्र्य-

प्रवर्त्तकं अपूर्व्वपदादिना तद्भानेऽप्रवृत्तेः तदज्ञानेऽपीष्टसाधनत्वज्ञाने प्रवृ-त्तेश्च । भावनाज्ञानमपि सर्व्वाख्यातसाधारण्यान्न प्रवर्त्तकमिति 'ज्ञानस्येति, साक्षादसाधनस्येति शेषः । तेन प्रवृत्तिविषयप्रत्यक्षे न व्यभिचारः, फल-ज्ञानन्तु न प्रवर्त्तकमित्यर्थः प्रत्यक्षप्रकाशः इतिप्रकाशः ।

पेक्षया विशेषसामग्रीत्वविरहात्[1] दण्डोपादानकप्रवृत्तिं विनापि कपालोपादानकघटसाध्यकप्रवृत्तौ घटसाध्यकप्रवृत्तित्वसत्त्वेन तदुपादानकप्रवृत्तिसामग्र्या घटादिसाध्यकप्रवृत्तिसामग्र्यपेक्षया सामान्यसामग्रीत्वविरहाच्चेति[2] चेत्, न, सामग्र्याः सामान्य-विशेषभावानापन्नत्वेऽपि दण्ड-चक्र-कपालाद्यन्यतमोपादानकप्रवृत्त्यतिरिक्ताया घटादिसाध्यकप्रवृत्तेरलीकतया तादृशान्यतमोपादानकप्रवृत्तिसामग्रीविरहादेव तादृशान्यतमोपादानप्रत्यक्षाभावदशायां तदनुत्पत्तेः तद्धर्मावच्छिन्नयत्किञ्चिद्व्यक्तिसामग्रीसहिताया एव तद्धर्मावच्छिन्नसामग्र्याः कार्य्योपधायकत्वादिदमेव च कारणसमाजाधीना कार्य्योत्पत्तिरिति गीयते। एतेन घटादिचिकीर्षाविरहेऽपि दण्डगोचरप्रत्यक्षाद्दण्डोपादानकप्रवृत्त्यापत्तिस्तदवच्छिन्नसामग्रीसत्त्वादित्यपि निरस्तं। घटसंयोग-भ्रम्याद्यन्यतमसाध्यकप्रवृत्त्यतिरिक्ताया दण्डोपादानकप्रवृत्तेरलीकतया तादृशान्यतमसाध्यकप्रवृत्तिसामग्रीविरहादेव तदनुत्पत्तेः कार्य्योत्पत्तेः कारणसमाजाधीनत्वात्।

गुरुचरणास्तु[3] उपादानप्रत्यक्षस्य हि स्वातन्त्र्येण न हेतुत्वं किन्तु घटादिनिष्ठचिकीर्षाया दण्डाद्युपादानकलौकिकसाक्षात्कारस्य च सत्त्वेऽपि दण्डादौ घटासाधनत्वज्ञानदशायां[4] घटसाध्यकदण्डोपा-

(१) तथाच दण्डोपादानकप्रवृत्तिसामग्री न घटादिसाध्यकप्रवृत्तेर्विशेषसामग्रीति भावः।

(२) तथाच दण्डोपादानकप्रवृत्तिसामग्री न घटसाध्यकप्रवृत्तेः सामान्यसामग्रीति भावः।

(३) नव्यास्त्विति ग०।

(४) दण्डादौ घटसाधनत्वज्ञानाभावदशायामिति ग०।

दानकप्रवृत्तिवारणाय दण्डोपादाननिष्ठचिकीर्षाविषयघटादिसाधन-ताज्ञानस्यापि घटादिसाध्यक-दण्डाद्युपादानकप्रवृत्तित्वावच्छिन्नं प्रति न्यायनये परनये च विशेषकारणत्वावश्यकत्वात् तदेव चिकीर्षा-विषयसाधनताज्ञानमुपादानांशे लौकिकप्रत्यक्षात्मकं हेतुरुपेयते कार्य्य-कारणभावद्वयकल्पनमपेक्ष्य लाघवात्। न च घटादिसाध्य-ककपालोपादानक-घटध्वंससाध्यकदण्डोपादानकसमूहालम्बनप्रवृत्तौ दण्डनिष्ठघटसाधनताज्ञानस्याहेतुत्वात् तत्र व्यभिचारवारणाय घट-त्वावच्छिन्नसाध्यतानिरूपितदण्डत्वावच्छिन्नोपादानताशालिप्रवृत्ति-त्वमेव कार्य्यतावच्छेदकमुपेयं तथाच दण्डत्वावच्छिन्नोपादानता-निरूपितघटत्वावच्छिन्नसाध्यताशालिप्रवृत्तित्वमादाय विनिगमना-विरहात् तत्रापि गुरुतरकार्य्य-कारणभावद्वयमावश्यकमिति वाच्यं। दण्डाद्युपादाननिष्ठचिकीर्षाविषयघटादिसाधनताज्ञानस्य घटादि-साध्यकदण्डाद्युपादानकप्रवृत्तिं प्रति विशेषकारणत्वावश्यकतया वि-निगमनाविरहात् तादृशकार्य्य-कारणभावद्वयस्य सर्व्वसम्मतत्वात् इत्थञ्च विशेषसामग्रीविरहादेवोपादानप्रत्यक्षाभावदशायां न घटा-दिसाध्यकप्रवृत्त्यतिप्रसङ्गः[१]। एतेन घटादिनिष्ठचिकीर्षाविरहेऽपि दण्डगोचरप्रत्यक्षात् दण्डनिष्ठसाधनताज्ञानात्मकविशेषसामग्रीसह-कृताद्दण्डोपादानकप्रवृत्त्यापत्तिस्तदवच्छिन्नसामग्रीसत्त्वादिति द्विती-यातिप्रसङ्गोऽपि निरस्तः। केवलदण्डोपादानकप्रवृत्तित्वस्य कार्य्यता-नवच्छेदकत्वात् घटादिसाध्यक-दण्डाद्युपादानकप्रवृत्तेश्च घटादि-

---

(१) प्रवृत्त्यात्पत्तिप्रसङ्ग इति ग०।

हेत्वन्तराभावात्, चिकीर्षा च* कृतिसाध्यत्वप्रकारिका

निष्ठचिकीर्षालक्षणघटादिसाध्यकप्रवृत्तिसामान्यसामग्रीविरहादेवासम्भवादिति प्राहुः।

अथ प्रत्यक्षविषयकपालव्यक्तौ इदं न कपालमित्यसंसर्गग्रहसत्त्वेऽपि कपालत्वप्रकारेण कपालं घटसाधनं इति कपालत्वांशे निर्धर्म्मितावच्छेदकक-तत्कपालविषयकलौकिकप्रत्यक्षात् कपालत्वप्रकारेण तत्कपालोपादानकप्रवृत्त्यापत्तिः। न च कपालत्वप्रकारेण तद्व्यक्तौ प्रवृत्ताविष्टापत्तिरिति वाच्यं। अनुभवविरोधादिति चेत्, न, तत्तदुपादानतावच्छेदकांशे इदन्त्वधर्म्मितावच्छेदकक-तत्तदुपादानविशेष्यकप्रत्यक्षस्य इदं कपालमित्याद्याकारस्य कपालमिदं घटसाधनमित्याकारकस्य वा तत्तदुपादानतावच्छेदकक-तत्तदुपादानकप्रवृत्तिं प्रति हेतुत्वेन निर्धर्म्मितावच्छेदककज्ञानस्याहेतुत्वात्। न चैवमिदं घटसाधनमिति लौकिकप्रत्यक्षात् इदन्त्वप्रकारेणैतद्व्यक्त्युपादानकप्रवृत्तिर्न स्यात्। तस्येदन्त्वांशे निर्धर्म्मितावच्छेदककत्वादिति वाच्यं। उपादानतावच्छेदकभेदेन कार्य्य-कारणभावभेदात् इदन्त्वस्थले निर्धर्म्मितावच्छेदककज्ञानस्यापि हेतुत्वात् इदमिदं नेत्यसंसर्गग्रहासम्भवेन तत्रातिप्रसङ्गविरहादित्यास्तां विस्तरः।

* व्यापारीभूतां चिकीर्षां लक्षयति, 'चिकीर्षा चेति, अतएव क्रियाविषयत्वं फलान्यविषयत्वं विशेषणं फलगोचरतादृशेच्छाया अप्रवर्त्तकत्वात् अतएव कृत्यसाध्यक्रियायां तादृशेच्छासम्भवेऽपि न कृतौ व्यापार इति क्रिया कृतिसाध्यत्वेन वास्तवेन विशेषितेत्याहुः, तच्चिन्त्यं गुरुतरभारोत्तोलनादौ कृत्यसाध्येऽपि तादृशेच्छायाः कृतौ व्यापारत्वात् अतएव

# कृतिसाध्यक्रियाविषयेच्छा पाकं कृत्या साधयामीति

'चिकीर्षा चेति, व्यापारीभूता चिकीर्षा चेत्यर्थः, अन्यथा चिकीर्षासामान्यस्य लक्ष्यत्वे लक्षणे फलचिकीर्षायामतिव्याप्तिवारकं कृतिसाध्यक्रियाविषयत्वविशेषणं व्यर्थं स्यादित्यनुपदमेव स्फुटीभविष्यति, 'कृतिसाध्यत्वप्रकारिकेति, अत्र फलचिकीर्षाया व्यापारत्वाभावेनालक्ष्यत्वात् तत्रातिव्याप्तिवारणाय 'कृतिसाध्यक्रियाविषयेति, 'क्रियापदं धर्म्मिमात्रपरं, कृतिसाध्यत्वञ्च साध्यत्वाख्यफलीभूतकृतिविषयताशालित्वं, तथाच साध्यत्वाख्यफलीभूतकृतिविषयताशालिधर्म्मिविषयकेत्यर्थः, फलञ्च न तथाविधविषयताशालीति भावः।

केचित्तु 'क्रियापदमेव साध्यत्वाख्यफलीभूतकृतिविषयताशालिपरं। न चैवं पृथक् कृतिसाध्यत्वं क्रियाविशेषणं व्यर्थमिति वाच्यं। कृतिसाध्यत्वप्रकारकज्ञानस्य व्यापारीभूता या चिकीर्षा सैव प्रकृते लक्ष्या सा च संवादिनी चिकीर्षैव विसंवादिचिकीर्षायां तत्प्रकारकज्ञानस्य हेतुत्वे अन्यथाख्यात्यापत्तेः, तथाच दृष्ट्यादिविषयकविसंवादिचिकीर्षायामतिव्याप्तिवारणाय तद्विशेषणस्यावश्यकत्वादित्याहुः।

'पाकमिति, पाकं कृत्या साधयामीत्याकारिकायां तस्यां तदनुभवात् कृतिसाध्यत्वप्रकारकत्वस्यानुभवसिद्धत्वादित्यर्थः, कृतिसाध्यत्वेन पाकमिच्छामीति तदनुव्यवसायसत्त्वादिति भावः। 'इच्छाया-

तत्र कृतिजन्य एव श्रम इति वक्ष्यते, तस्मात् काचित्काभिप्रायेण स्वरूपनिर्व्वचनमेतत् इति मन्तव्यं। ततः किमित्यत आह, 'स्वेति, स्वपदमत्र

तदनुभवात्, सा च स्वकृतिसाध्यताज्ञानसाध्या इच्छा-याः स्वप्रकारकधीसाध्यत्वनियमात् । अतएव स्वकृति-

---

इत्यादि, 'इच्छायाः' स्वप्रकारकसंवादीच्छायाः, तत्प्रकारकसंवादीच्छायास्तत्प्रकारकधीजन्यत्वनियमादिति फलितार्थः । गुरुनये रजतादिप्रकारकविसंवादीच्छायां रजतादिप्रकारकज्ञानाजन्यायां व्यभिचारवारणाय संवादित्वोपादानं, कूटलिङ्गस्थलेऽप्यनायत्या[१] तदिच्छाया विषयान्तरविषयकत्वकल्पनेन विसंवादः कल्प्यते । न चैवं सम्वादिचिकीर्षायां तज्जन्यप्रवृत्तौ च कृतिसाध्यत्वप्रकारकज्ञानस्य हेतुत्वेऽपि चिकीर्षासामान्ये प्रवृत्तिसामान्ये च कृतिसाध्यताज्ञानस्य हेतुत्वासिद्धिरिति वाच्यं। संवादिचिकीर्षादौ कृतिसाध्यत्वप्रकारकज्ञानस्य हेतुत्वे सिद्धे यद्विशेषयोरिति न्यायात्[२] चिकीर्षादिमात्रं प्रत्येव कृतिसाध्यताविषयकज्ञानस्य हेतुत्वसिद्धिरिति भावः, एवमग्रेऽपि ।

केचित्तु या यत्प्रकारिकेच्छा सा तद्विषयकज्ञानसाध्येति नियमः न तु प्रकारतापर्य्यन्तप्रवेशः, मूलेऽपि 'स्वप्रकारकेत्यस्य स्वविषयकेत्यर्थः, एवञ्च रजतादिप्रकारकविसंवादीच्छायां न व्यभिचारः ।

---

(१) कूटलिङ्गं दुष्टलिङ्गं यथा वह्नेः साध्यतायां ह्रदत्वादिकं ।

(२) यद्विशेषयोः कार्य्य-कारणभावस्तत्सामान्ययोरपीति न्यायादित्यर्थः ।

---

प्रवर्त्तकज्ञानं तादृशमिति कृत्वा प्रकृते तु तदनन्तर्भावेऽप्यदोषादिति ध्येयं । 'इच्छाया इति, ज्ञानेच्छायाः स्वप्रकारप्रकारकज्ञानसाध्यत्वनियमादित्यर्थ इतिप्रकाशः ।

तच्च तन्मये इच्छाविशेष्यविशेष्यक-रजतप्रकारकज्ञानस्याहेतुत्वेऽपि स्वातन्त्र्येण रजतोपस्थितेरवश्यं हेतुत्वात्। न च तन्मये विसंवादीच्छायामुपस्थितेष्टतावच्छेदकासंसर्गाग्रहस्यैव हेतुतया रजतज्ञानं(१) तच्च कारणतावच्छेदकमेव न तु कारणमिति व्यभिचारो दुर्वार-एवेति वाच्यं। कारण-कारणतावच्छेदकसाधारणप्रयोज्यत्वरूपसाध्यत्वस्य नियमघटकत्वात्। न चैवं प्रकृतेऽपि कृतिसाध्यताज्ञानस्यैककालावच्छिन्नैकात्मवृत्तित्वसम्बन्धेनेष्टसाधनताज्ञाननिष्ठकारणतावच्छेदकत्वमेवायातु कुतः कारणत्वमिति वाच्यं। वक्ष्यमाणक्रमेण तन्मये इष्टसाधनताज्ञानस्य इच्छाविरोधितया इष्टसाधनताज्ञानस्य चिकीर्षाहेतुत्वासम्भवात् परिशेषेण जन्यतारूपस्यैव कृतिसाध्यताज्ञानप्रयोज्यत्वस्य चिकीर्षायां सिद्धेः। न चेष्टसाधनताज्ञानस्याजनकत्वेऽपि बलवदनिष्टाननुबन्धित्वज्ञाननिष्ठजनकतावच्छेदकत्वमेव आयात्विति वाच्यं। बलवद्द्वेषस्यैव इच्छाविरोधितया तज्ज्ञानस्यापि चिकीर्षाहेतुत्वासिद्धेः। वस्तुतस्तु विशेष्य-विशेषणभावे विनिगमकाभावात् उपस्थितेष्टतावच्छेदकासंसर्गाग्रहवदगृहीतासंसर्गकेष्टतावच्छेदकोपस्थितेरपि तन्मये विसंवादीच्छाजनकतया जन्यत्वरूपसाध्यत्वमेव नियमघटकमिति न कोऽपि दोष इत्याहुः।

'अतएवेति, चिकीर्षायाः स्वकृतिसाध्यताज्ञानसाध्यत्वादेवेत्यर्थः, 'स्वकृतिसाध्ये' स्वकृतिसाध्यत्वेन ज्ञाते, इदञ्चापाततः, वस्तुतोलाघवात् पाको मे कृतिमान् भवत्वित्याकारिका साध्यतासंसर्गेण कृतिप्रका-

(१) उपस्थितः उपस्थितिविषयीभूतः ज्ञानविषयीभूत इति यावत्, अतएव ज्ञानस्य कारणतावच्छेदककोटिप्रविष्टत्वं।

**साध्ये पाके प्रवर्त्तते, न त्विष्टसाधनताज्ञानसाध्या स्वकृत्यसाध्ये* चिकीर्षापत्तेः, स्वकृत्यसाध्यत्वज्ञानं प्रतिबन्धकमिति चेत्, न, तदभावकारणत्वे गौरवात्।**

---

रिकेच्छैव व्यापारो न तु कृतिसाध्यत्वप्रकारिका गौरवात्, अतएव ज्ञानमपि साध्यतासंसर्गेण कृतिप्रकारकमेव हेतुरिति तत्त्वं। यद्यप्युक्तनियमबलेन कृतिसाध्यताज्ञानस्य हेतुत्वं साधितमेव तथापि युक्त्यन्तरदानाय पुनरनुवदति, 'न त्विति, 'इष्टसाधनताज्ञानसाध्या' कृतिसाध्यताज्ञानं विनापीष्टसाधनताज्ञानसाध्या, यथाश्रुतेऽपिमहेत्वसङ्गतेः, 'स्वकृत्यसाध्ये' स्वकृत्यसाध्यत्वेन निश्चिते, 'स्वकृत्यसाध्यत्वज्ञानमिति स्वकृत्यसाध्यतानिश्चयइत्यर्थः, कृतिसाध्यतासंशये प्रवृत्तेरनुभवात् यथाश्रुतासङ्गतेः। न च कृतिसाध्यतासंशयेऽपि प्रवृत्तिस्वीकारे बहुवित्तव्ययायाससाध्येऽपि प्रवृत्त्यापत्तिरिति वाच्यं। बलवदनिष्टानुबन्धित्वज्ञानस्य प्रतिबन्धकत्वादेव तदिच्छा-प्रवृत्त्योरभावादिति ध्येयं। 'तदभावकारणत्व इति कृतिसाध्यताज्ञानत्वेन हेतुत्वमपेक्ष्य कृत्यसाध्यतानिश्चयाभावत्वेन हेतुत्वे गौरवादित्यर्थः। न चाप्रामाण्यनिश्चय[illegible]तत्कृतिसाध्यताज्ञानत्वापेक्षया अप्रामाण्यज्ञानानास्कन्दितकृत्यसाध्यत्वनिश्चयाभावत्वमेव लघ्विति वाच्यं। कृतिसाध्यताज्ञानस्याप्रामाण्यनिश्चये बलवदनिष्टानुबन्धित्वज्ञानोदयादेव प्रवृत्त्यभावसम्भ-

---

* 'स्वकृत्यसाध्ये' स्वकृत्यसाध्यत्वेन ज्ञाते, अतएवाह, 'स्वेति, 'लाघवावतारादिति। यद्यप्येवंविधलाघवावतारे त्वन्मते भेदाग्रहो न प्रवृत्तिहेतु-

वात् तत्र च तद्भानाक्रान्दितत्वस्याप्रवेशात् स्वकृत्यसाध्यतानिश्चयवत् तदभावव्याप्यादिनिश्चयस्यापि प्रतिबन्धकत्वावश्यकतया बहुतरकार्य्य-कारणभावकल्पनागौरवाच्चेति भावः ।

केचित्तु ननूक्तनियमबलादस्तु कृतिसाध्यताज्ञानं हेतुः तथापि कृतिसाध्यताज्ञानत्वेन तस्य न हेतुत्वमपि तु इष्टसाधनताविषयक-ज्ञानत्वेन सर्व्वत्रेष्टसाधनत्व-कृतिसाध्यत्वोभयविषयकसमूहालम्बनादेव चिकीर्षेत्यत्राह, 'न त्विष्टसाधनताज्ञानसाध्येति न त्विष्टसाधनता-ज्ञानत्वावच्छिन्नकृतिसाध्यताज्ञाननिष्ठकारणताकेत्यर्थः, 'स्वकृत्यसाध्ये' स्वकृत्यसाध्यत्वेन निश्चिते, 'चिकीर्षापत्तेः' केवलेष्टसाधनताज्ञाना-च्चिकीर्षापत्तेः, कारणतावच्छेदकावच्छिन्नसत्त्वादिष्टापत्तौ चोक्तनि-यमभङ्गप्रसङ्गादिति भावः[१] । 'तदभावकारणत्वे गौरवादिति, इद-मुपलक्षणं कृत्यसाध्यतानिश्चयस्य प्रतिबन्धकत्वेऽपि यत्र कारणान्तरा-भावादिष्टसाधनताज्ञाने न कृतिसाध्यताभानं तत्र केवलेष्टसाधनता-ज्ञानात् चिकीर्षापत्तेर्दुर्व्वारत्वाच्चेत्यपि बोध्यं । उक्तनियममस्वीत्वेव[२] तटस्थः शङ्कते, 'अथेत्यादीत्याहुः ।

(१) व्यभिचारेण कृतिसाध्यताज्ञानस्याहेतुत्वे चिकीर्षायां न कृतिसाध्य-ताज्ञानजन्यत्वमिति भावः ।

(२) उक्तनियममस्वीत्वैवेति ग० । या यत्प्रकारिका इच्छा सा तत्-प्रकारकज्ञानसाध्येति नियममित्यर्थः ।

---

इभेदग्रहापेक्षया गुरुत्वात्, तथापि तद्धेतोरेवेति न्यायादतिरिक्तविशिष्ट-ज्ञानकल्पनागौरवाच्च, युगपदुपस्थित्यभावेन तत्र तथा अत्र युगपदुपस्थितौ

अथाभाव उभयसिद्धः कृतिसाध्यताधीरसिद्धेत्यतो न लाघवावसर इति चेत्, न, यत्र शब्दादनुमानाद्वा दैवात् सा तत्र लाघवावतारादिच्छायाः स्वप्रकारकज्ञानसाध्यत्वनियमेन कृतिसाध्यत्वज्ञानस्यावश्यकत्वाच्च

'अभावः' कृत्यसाध्यतानिश्चयाभावः, 'उभयसिद्धः' चिकीर्षापूर्व्वमुभयसिद्धः, 'असिद्धा' चिकीर्षापूर्व्वमुभयासिद्धा,[१] 'न लाघवावसर' इति कृतिसाध्यताज्ञानत्वस्य सदपि लाघवं न कारणतावच्छेदकतायां विनिगमकमित्यर्थः, लघु-गुरुधर्म्मावच्छिन्नं यदि फलपूर्व्वमुभयसिद्धं तदैव लाघवस्य कारणतावच्छेदकतायां विनिगमकत्वमिति भावः। 'दैवात्' प्रतिबन्धकसामग्रीविरहात्, 'सा' चिकीर्षापूर्व्वं कृतिसाध्यताधीः, 'लाघवावतारादिति कृतिसाध्यताज्ञानत्वरूपलघुधर्म्मावच्छिन्नस्य चिकीर्षापूर्व्वमुभयमते सत्त्वादित्यर्थः। ननु तथापि कृतिसाध्यताज्ञानस्य नियतपूर्व्ववर्त्तित्वं कल्प्यं मम त्वनन्यथासिद्धत्वमात्रं अतो लाघवमत आह,[२] 'इच्छाया इति तत्प्रकारकसंवादीच्छायाः, 'स्वप्रकारकज्ञानसाध्यत्वनियमेन' तत्प्रकारकज्ञानजन्यत्वनियमेनेत्यर्थः, 'आवश्यकत्वाच्च' चिकीर्षाहेतुत्वावश्यकत्वाच्च। अपि च कृत्यसाध्यताज्ञानप्रतिबन्ध-

(१) कृत्यसाध्यतानिश्चयाभावस्य हेतुत्वं स्वीकुर्व्वतोमते चिकीर्षापूर्व्वं कृतिसाध्यताधीरसिद्धेत्यर्थः।

(२) नन्वित्यादिः आहेत्यन्तः पाठः ग-पुस्तके नास्ति।

लाघवावतार इति भावः। 'साध्यत्वनियमेन' प्रयोज्यत्वनियमेनेत्यर्थ इति प्रकाशः।

**जनकज्ञानं विघटयत एव ज्ञानस्य प्रतिबन्धकत्वाच्च। व्याप्तिज्ञानविघटनद्वारा अनुमितिप्रतिबन्धकानैकान्तिकज्ञानवत्।**

---

कत्वान्यथानुपपत्त्यैव कृतिसाध्यताज्ञानस्य चिकीर्षाहेतुत्वसिद्धिरित्याह, 'जनकज्ञानमिति, तज्जनकीभूतज्ञानविघटकस्यैव ज्ञानस्य तत्र प्रतिबन्धकत्वाच्चेत्यर्थः। अत्र व्याप्तौ दृष्टान्तमाह, 'व्याप्तिज्ञानविघटनद्वारेति अनुमितिजनकव्याप्तिज्ञानविघटकेत्यर्थः, तथाच यत् यत्प्रतिबन्धकज्ञानं भवति तत् तज्जनकज्ञानविघटकं भवति यथा व्यभिचारज्ञानमनुमितिप्रतिबन्धकज्ञानं भवति अनुमितिजनकव्याप्तिज्ञानघटकमपि भवतीति सामान्यतोव्याप्त्या कृत्यसाध्यतानिश्चयस्य चिकीर्षाप्रतिबन्धकज्ञानत्वेन हेतुना चिकीर्षाजनकज्ञानविघटकत्वसाधने पक्षधर्म्मताबलात्(१) कृतिसाध्यताज्ञानस्यैव चिकीर्षाजनकत्वसिद्धिरिति भावः। न च जनकज्ञानविघटकत्वेनान्यथासिद्धतया तदभावस्याहेतुत्वात् स्वरूपासिद्धिर्दृष्टान्तासिद्धिश्च इति वाच्यं। प्रतिबन्धकत्वं हि न कारणीभूताभावप्रतियोगित्वं, किन्तु प्रयोजकीभूताभावप्रतियोगित्वं, प्रयोजकत्वञ्च कारणकारणव्यावृत्तान्यथासिद्धिचतुष्टयरहितत्वे सति नियतपूर्व्ववर्त्तित्वं कारण-तत्कारणसाधारणं, हेतौ ज्ञानपदोपादानादेव च विषयान्तरसञ्चारादौ न व्यभिचारः, साध्ये च ज्ञानपदं स्वरूपकथनं, विघटकत्वञ्च प्रतिबन्धकत्वमेव न त्वेककालावच्छेदेन तदधिकरणावृत्तित्वरूपं विरोधित्वं, गुरुनयेऽभावस्याधिकरणज्ञानरूपतया

---

(१) कृत्यसाध्यतानिश्चयः चिकीर्षाजनककृतिसाध्यताज्ञानेतरविघटकत्वाभाववानित्याकारकवाधनिश्चयबलादित्यर्थः।

कृत्यसाध्यताज्ञानस्यापि कृत्यसाध्यताज्ञानाभावस्य ज्ञानात्मकस्य[१] विरोधितया सिद्धसाधनापत्तेः। न चासाधुत्वज्ञाने साधुत्वज्ञाना-जन्यशाब्दधीप्रतिबन्धके व्यभिचार इति वाच्यं। अनाकाङ्क्षत्वरूपा-साधुत्वज्ञाने आकाङ्क्षाज्ञानमादाय साध्यस्यापि सत्त्वात् अन्यादृशा-साधुत्वज्ञानस्य च प्रतिबन्धकत्वे मानाभावात्। न च तथापि सिद्धौ व्यभिचार इति वाच्यं। गुरुनये सिद्धेरप्रतिबन्धकत्वात् तद्व्यावृत्त-प्रतिबन्धकताया एव वा हेतौ निवेशात्। अतएवासिद्धत्वज्ञाना-जन्येच्छाप्रतिबन्धके सिद्धत्वज्ञानेऽपि न व्यभिचारः। तद्व्यावृत्तप्रति-बन्धकताया एव हेतौ निवेशादसिद्धत्वनिश्चयस्यापि इच्छाहेतुत्वा-भ्युपगमाद्वा। अथ तथापि बाध-सत्प्रतिपक्षादौ व्यभिचारः। न च तद्व्यावृत्तापि प्रतिबन्धकता हेतौ निवेशनीयेति वाच्यं। कृत्यसाध्य-ताज्ञानाभाव-व्यभिचारज्ञानाभावयोरपि बाधाभावतयैव चिकीर्षानु-मित्योः प्रयोजकतया स्वरूपासिद्धि-दृष्टान्तासिद्ध्योरापत्तेः। न च साक्षाद्विरोधित्वे सतीत्यनेन हेतुर्विशेषणीय इति वाच्यं। साक्षा-दविरोधित्वं हि न ग्राह्याभाव-तद्व्याप्याद्यनवगाहित्वं प्रकृतेऽपि तद-सिद्धेः कृत्यसाध्यताज्ञानस्य चिकीर्षाप्रकारीभूतकृतिसाध्यत्वाभावाव-गाहित्वात्, अतएव न कारणीभूताभावाप्रतियोगित्वमपि प्रकृतेऽपि तदसिद्धेः पूर्व्वपक्षिणा कृत्यसाध्यताधियः साक्षादेव प्रतिबन्धकत्वा-भ्युपगमात्। न च हेतौ प्रतिबन्धकज्ञानत्वपदेन ज्ञानत्वावच्छिन्न-प्रतिबन्धकताशालित्वं विवक्षितं बाध-सत्प्रतिपक्षादेश्च निश्चयत्वेन

(१) अधिकरणज्ञानात्मकस्येति ख०

अन्यथा स्वकृत्यसाध्यत्वानिष्टसाधनत्वोपेक्षणीयत्व-

प्रतिबन्धकत्वमिति वाच्यं । प्रकृतेऽपि तदसिद्धेः उक्तयुक्त्या[१] कृत्य-साध्यतानिश्चयस्यैव पूर्व्वपश्चिमते प्रतिबन्धकत्वात् इति चेत्, न, हेतौ स्वपाश्चविरोध्यवगाहिज्ञानभिन्नत्वेन यत्पदार्थविशेषणात् स्व-पदं प्रतिबन्धकज्ञानपरं, चिकीर्षायाश्च ज्ञानभिन्नत्वादेव सङ्गतः, स्वपाश्चविरोध्यवगाहित्वन्तु स्वं यत्र यदभाव-तद्व्याप्य-तदवच्छेदका-न्यतममवगाहते तत्र तदवगाहित्वं संवादित्वेनापि हेतौ यत्पदार्थो-विशेषणीयः तेनेष्टभेदग्रहे प्रवृत्त्यादिप्रतिबन्धके तन्नये न व्यभि-चारः[२] संवादिप्रवृत्तौ विशिष्टज्ञानमेव हेतुरिति साध्यसत्त्वादेव न तमादायैव व्यभिचारः । न च तथापि कूटलिङ्गस्थले लिङ्गा-संसर्गाग्रहेण लैङ्गिकासंसर्गाग्रहाधीनसंवादीच्छा-प्रवृत्तिप्रतिबन्धकेष्ट-भेदग्रहे जनकीभूतविशिष्टज्ञानविघटकत्वाभावाद्व्यभिचार इति वाच्यं। विशिष्टज्ञानस्य संवादीच्छा-प्रवृत्तिहेतुत्वेन अनायत्या तत्रापीच्छा-प्रवृत्त्योर्विषयान्तरविषयकत्वकल्पनेन विसंवादित्वस्य तैः स्वीकारा-दिति दिक् । 'अन्यथा' एतादृशव्याप्त्यनङ्गीकारे, 'कृत्यसाध्यत्वमिति दृष्टान्तार्थं यथा त्वया कृत्यसाध्यत्वज्ञानस्य प्रतिबन्धकत्वं कल्पनीयं तथैतेषामपि स्यादित्यर्थः, 'अनिष्टसाधनत्वं' बलवदनिष्टानुबन्धित्वं,

(१) कृतिसाध्यतासंशयदशायां चिकीर्षोत्पत्तेः कृत्यसाध्यतानिश्चयत्वेनैव प्रतिबन्धकत्वमिति भावः ।

(२) गुरुमते तत्र बाधनिश्चयाभावकालीनस्य धर्म्मि-धर्म्मिणोर्ज्ञानद्वयस्यैव कारणत्वान्न तत्र जनकज्ञानविघटकत्वमिति भावः ।

निष्फलत्वज्ञानं प्रतिबन्धकं क्रियाज्ञानमेव प्रवर्त्तकं कल्प्येत ।

ननु सनोधात्वर्थगोचरेच्छावाचित्वात् लाघवाच्च कृताविच्छा चिकीर्षा सा च तृप्ताविवेष्टसाधनताज्ञानादिति चेत्, न, वह्निना साधयामीतिवत् कृत्या

'उपेक्षणीयत्वं' इष्टसाधनतावच्छेदकरूपशून्यत्वं, 'निष्फलत्वं' इष्टफलोपधानशून्यत्वं, 'प्रतिबन्धकं' चिकीर्षाप्रतिबन्धकं, 'क्रियाज्ञानमेवेत्येवकारेण इष्टसाधनतादिज्ञानव्यवच्छेदः ।

सोन्दड़ः शङ्कते[१] 'नन्विति, 'सन इति, 'वाचित्वात्' बोधकत्वात्, एतच्च चिकीर्षापदस्य यौगिकत्वपक्षे, चिकीर्षापदस्याखण्डरूढत्वपक्षे त्वाह, 'लाघवादिति कृतिसाध्यत्वप्रकारकेच्छात्वापेक्षया कृतीच्छात्वस्य प्रवृत्तिनिमित्तस्य लघुत्वादित्यर्थः, 'चिकीर्षा' चिकीर्षापदवाच्या, 'तृप्ताविवेति तृप्तिर्भवत्वितीच्छेवेत्यर्थः, 'इष्टसाधनताज्ञानात्' इष्टसाधनताज्ञानमात्रात् कृतिसाध्यताज्ञानं विनापीष्टसाधनताज्ञानादिति यावत्, तत्र कृतिसाध्यत्वस्याप्रकारतया कृत्यसाध्यतानिश्चयस्याप्रतिबन्धकतया च कृतिसाध्यताज्ञानस्य हेतुत्व मानाभावादिति भावः । अत्र तृप्तिर्भवत्वितीच्छेवेति प्रसाध्याङ्कोदृष्टान्तः[२] गुरुनये तृप्तिसाध्यं सुखं भवत्वितीच्छेव विशेषणतया सुखत्वमिव तृप्तित्वमपि विषयीकरोति न तु तृप्तिर्भवत्विति स्वातन्त्र्येणेच्छा कृतिसाध्यत्वा-

(१) सोन्दड़मतमाशङ्क्य निराकरोतीति ख० ।

(२) उभयवाद्यसिद्ध इत्यर्थः ।

साधयामीतीच्छायाः कृतेः पूर्व्वमनुभूयमानायाः सनन्तावाच्यत्वेन गौरवेण च प्रत्याख्यातुमशक्यत्वात् । किञ्च पाकं चिकीर्षतीत्यत्र प्राधान्येन पाकस्येच्छाविषयत्वमनुभूयते न तु कृतेः, धातोश्च सन्प्रत्ययाभि-

---

प्रकारकेच्छां प्रति सुखत्व-दुःखाभावत्वप्रकारकज्ञानयोर्हेतुत्वेन कृतिसाध्यत्वाप्रकारकोपायेच्छाया अलीकत्वात् वृष्टिसाध्यं सुखं भवत्वितीच्छायान्तु सुखे वृष्टिसाध्यत्वज्ञानमेव हेतुरिति मन्तव्यं । 'वह्निना साधयामीतिवदिति साध्यत्वप्रकारिकाया इति शेषः, 'अनुभूयमानायाः' नियमतोऽनुभूयमानायाः, 'सनन्तावाच्यत्वेन' सनन्ताप्रतिपाद्यत्वेन, 'गौरवेण' प्रवृत्तिनिमित्तगौरवेण, 'प्रत्याख्यातुमशक्यत्वादिति कारणतायाः प्रत्याख्यातुमशक्यत्वादित्यर्थः, तथाच चिकीर्षापदाप्रतिपाद्यापि सा प्रवृत्तिहेतुरिति भावः । ननु कृतिसाध्यत्वप्रकारकेच्छायाश्चिकीर्षापदाप्रतिपाद्यत्वमिति यदुक्तं तदपि दूषयति, 'किञ्चेति, 'प्राधान्येनेति विशेष्यतयेत्यर्थः, अप्राधान्येन विषयत्वस्य तत्र द्वितीयार्थत्वे पाकत्वं चिकीर्षतीत्यपि प्रयोगापत्तिरिति भावः । 'न तु कृतेरिति, अतो न कृतीच्छा चिकीर्षाप्रतिपाद्येति भावः । ननु पाकं चिकीर्षतीत्यत्र पाकस्य विशेष्यतया इच्छाविषयत्वमनुभूयतइत्ययुक्तं सन्प्रत्ययसमभिव्याहृतधातोरिच्छाविशेष्यवाचित्वेन धात्वर्थस्यैव विशेष्यत्वादित्यत आह, 'धातोश्चेति, 'इच्छाप्रकारवाचित्वमिति, न तु विशेष्यवाचित्वमिति शेषः, प्रकारश्च कृतिसाध्यत्वं साध्यतासंसर्गेण कृतिर्वा आद्ये तु लक्षणादिकानुसरण-

धेयेच्छाप्रकारवाचित्वं, ओदनं बुभुक्षत इत्यत्र भोजन-विशेष्यतयौदनस्येच्छाविषयत्वानुभवात्। इष्टसाधनत्वेन दृष्टाविव कृताविच्छासम्भवेऽपि कृतीच्छा न प्रवर्त्तिका किन्तु स्वकृतिसाध्येच्छैव, घटं जानाति चिकीर्षति करोतीतिज्ञान-चिकीर्षा-कृतीनामेकविषयत्वा-

मित्यन्यदेतत्[१]। 'भोजनविशेष्यतयेति भोजनप्रकारकेच्छाविशेष्यतयेत्यर्थः, ओदनविशेष्यकभोजनप्रकारकेच्छाश्रय इत्यन्वयबोधादिति भावः। ननु कृतिसाध्यत्वप्रकारकेच्छाया नियमतः कृतिपूर्व्वमनुभवसिद्धत्वेऽपि न सा प्रवृत्तिहेतुः अवच्छेदकगौरवात् किन्तु कृतीच्छैव इष्टसाधनताज्ञानेन तस्या अपि प्रवृत्तिपूर्व्वं सम्भवात्। न चैवं क्रियाया इष्टसाधनतादिज्ञानेन विनापि कृतेरिष्टोपायत्वादिज्ञानात् प्रवृत्त्यापत्तिरिति वाच्यं। इष्टत्वात्, अन्यथा तवापि कृतेरिष्टाजनकत्वादिज्ञानदशायामपि क्रियाया इष्टसाधनत्वादिज्ञानात् प्रवृत्त्यापत्तेस्तुल्यत्वादित्यत आह, 'इष्टसाधनत्वेनेति इष्टसाधनत्वज्ञानेनेत्यर्थः, 'दृष्टाविवेति, प्रवृत्तिपूर्व्वमिति शेषः। 'करोतीति तादृशानुव्यवसायेनेत्यर्थः, 'ज्ञान-चिकीर्षा-कृतीनामिति, प्रवृत्त्या सह प्रवृत्तिकारणज्ञान-चिकीर्षयोः समानविशेष्यत्वावच्छेदकत्वादित्यर्थः। इदमुपलक्षणं अतिप्रसङ्गभङ्गाय तद्विशेष्यककृतौ तदनुकूलकृतीच्छाया एव हेतुताया वक्तव्यत्वात् पाकानुकूलकृतीच्छा-

(१) तत्त्वव्याख्यादिकं ग्रन्थमित्यन्यदेतदिति ख०, ग०।

नुभवात्। अथ यदि कृत्या साधयितुमिच्छा सा तदा चिकीर्षितस्य पाकस्यान्यतः सिद्धौ सा नापगच्छेत्, न ह्युपायविशेषसाध्यत्वेनेच्छोपायान्तराधीनफललाभेन निवार्य्यते, प्रीत्या धनलाभेऽपि प्रतिग्रहेण तल्लिप्साया अनिवृत्तेरिति चेत्, न, स्वविषयसिद्धत्वस्य*

त्व-स्वकृतिसाध्यत्वप्रकारकेच्छात्वयोः समशरीरत्वेन लाघव-गौरवमपि नास्तीति ध्येयं। 'कृत्या साधयितुमिति कृतिसाध्यत्वप्रकारिकेत्यर्थः, 'सा' चिकीर्षा, 'चिकीर्षितस्य पाकस्येति चिकीर्षाविषयतावच्छेदकपाकत्वावच्छिन्नस्येत्यर्थः, 'अन्यतः सिद्धौ' अन्यतः सिद्धत्वग्रहे, 'सा' पाकत्वप्रकारिका, 'नापगच्छेत्' न जायेत न तदापि जायेतेति यावत्, 'उपायविशेषसाध्यत्वेनेति एकोपायसाध्यत्वप्रकारिकेत्यर्थः, 'उपायान्तराधीनेति, उपायान्तराधीनसिद्धत्वज्ञानेनेत्यर्थः, 'प्रीत्या धनलाभेऽपीति धनलाभस्य प्रीत्या सिद्धत्वज्ञानेऽपीत्यर्थः, 'प्रतिग्रहेणेति प्रतिग्रहसाध्यत्वप्रकारकधनलाभेच्छाया इत्यर्थः, 'अनिवृत्तेः' उत्पत्त्यनिवृत्तेः उत्पत्तेरिति यावत्, तथाच तदुपायसाध्यत्वप्रकारकेच्छां प्रति तदुपायतः सिद्धत्वज्ञानस्यैव प्रतिबन्धकतया उपायान्तराधीनसिद्धत्वज्ञानेऽपि कृतिसाध्यत्वप्रकारकेच्छोत्पत्तौ न बाधकमिति भावः। 'स्वविषयसिद्धत्वस्येति, स्वविषयतावच्छेदका-

* 'स्वविषयेति स्वविषयसिद्धत्वज्ञानस्येत्यर्थः, ज्ञानातिरिक्तेच्छायां तज्ज्ञानस्य तथात्वादित्याहुः। वस्तुतः सिद्धत्वज्ञानं नेच्छाविरोधि किन्तु विरोधिगुणान्तरमेव, परन्तु तदा सिद्धज्ञानाभावेन हेत्वभावादग्रिमेच्छा न जायते, एवञ्च धनादावुत्पन्नेऽपि तदसिद्धत्वभ्रमसम्भवान्नेच्छाविच्छेद इति

फलेच्छाविच्छेदस्य चोपायेच्छाविरोधित्वात्। अस्ति

वच्छिन्नविशेष्यताकसिद्धत्वज्ञानस्येत्यर्थः, यथाश्रुते पाकं कृत्वा साध-यामीतीच्छाया अन्यतः सिद्धपाकाविषयतया तत्सिद्धौ तन्निवृत्ते-रनुपपादनात्[१]। न च तस्याः[२] अन्यतः सिद्धपाकोऽपि विषयः व्यधिकरणप्रकारकेच्छाया अभ्युपगमादिति वाच्यं। तथापि पाक-त्वरूपेणान्यतः सिद्धपाके सिद्धत्वज्ञाने तेन रूपेणासिद्धपाकमात्रे तदापत्तेस्तादवस्थ्यात् भिन्नप्रकारकस्यापि सिद्धत्वज्ञानस्य प्रति-बन्धकतापाताच्च[३]। सिद्धत्वञ्च क्वचिदुत्पन्नत्वं क्वचित् स्वत्वभागित्वं[४] क्वचिच्च क्षेमसाध्यताविरोधित्वरूपं ज्ञानादौ ग्रामादौ दुःख-प्रागभावादौ यथाक्रमेण बोध्यं। प्रतिबन्धकाभावकूटस्य हेतुत्वाच्च नाननुगमो दोषाय। न चैवं सिद्धग्रामादौ कथमिच्छेति वाच्यं। तत्र ग्रामादिलाभस्यासिद्धस्यैवेच्छाविषयत्वान्न तु ग्रामादेरिति भावः। 'उपायेच्छाविरोधित्वात्' उपायेच्छानुत्पादप्रयोजकत्वात्, फलेच्छा-

(१) उपायान्तराधीनसिद्धत्वज्ञाने पाकं कृत्वा साधयामीतीच्छाया निवृ-त्तेरुपपादयितुमशक्यत्वादिति भावः।

(२) 'तस्याः' पाकं कृत्वा साधयामीतीच्छाया इत्यर्थः।

(३) क्रियाः सिद्धा इत्याकारकसिद्धत्वज्ञानस्य पाकं कृत्वा साधयामीती-च्छाप्रतिबन्धकतापाताच्चेत्यर्थः।

(४) क्वचित् विद्यमानत्वमिति ख०, ग०।

सिद्धत्वज्ञाने सत्येव विच्छेदः न तथा ज्ञाने अनुमितिज्ञाने तु जाते तदभावात् तत् स्वरूपसदेव तन्निवृत्तिप्रयोजकं, अतएव सिद्धत्वज्ञानमपि स्वरूपसदे-वेति भावः। 'अस्ति चेति, पाके सिद्धतया स्वविषयसिद्धत्वं, ओदनसिद्धतया फलेच्छाविच्छेद इति भाव इति प्रकाशः।

च तत्र पाकौदनयोः सिद्धत्वं, अन्यौदनेच्छायां पाक-

---

विच्छेदस्य प्रतिबन्धकत्वाभावेन यथाश्रुतासङ्गतेः, 'तत्र' चिकीर्षितस्य पाकस्यान्यतः सिद्धत्वज्ञानस्थले, 'सिद्धत्वं' सिद्धत्वग्रहः, पाकस्य सिद्धत्वज्ञानात् स्वविषयसिद्धत्वज्ञानं ओदनस्य सिद्धत्वज्ञानात् फलेच्छाविच्छेद इति भावः । ननु स्वविषयतावच्छेदकावच्छिन्नविशेष्यताकसिद्धत्वज्ञानत्वेन प्रतिबन्धकत्वे स्वत्वान्तर्भावादननुगमः । न च तद्धर्म्मप्रकारकतद्धर्म्माश्रयविशेष्यकेच्छां प्रति तादृशसिद्धत्वज्ञानं विरोधीति वाच्यं । विसंवादीच्छाया असङ्गहात् । अथ तद्धर्म्मप्रकारकेच्छां प्रति तद्धर्म्मावच्छिन्नविशेष्यताकसिद्धत्वज्ञानं विरोधि । न चैवं शूद्रादिपाके सिद्धत्वज्ञाने ब्राह्मणस्य पाके चिकीर्षा न स्यादिति वाच्यं । तदानीं स्वीयपाकत्वादिरूपेणैव ब्राह्मणस्य पाके चिकीर्षोत्पादात् पाकत्वरूपेण तदनुत्पादादिति चेत्, न, ग्रामे स्वत्वं मे भवत्वित्यादिसिद्धग्रामादिगोचरेच्छायां ग्रामत्वरूपेण सिद्धत्वज्ञानेऽपि जायमानायां व्यभिचारात् कपालत्व-हविष्ट्वादिरूपेण सिद्धत्वज्ञानेऽपि जायमानायां कपाल-हविराद्युपादानेच्छायां व्यभिचाराच्च, सिद्धत्वज्ञानदशायां तदनभ्युपगमे तदानीं प्रवृत्तेरप्यपलापप्रसङ्गात् उपादानेच्छायाः प्रवृत्तौ हेतुत्वात् । अतएव तद्धर्म्मप्रकारकत्वावच्छिन्नमुख्यविशेष्यताकेच्छां प्रति तद्धर्म्मावच्छिन्नविशेष्यताकसिद्धत्वज्ञानं विरोधि नातो ग्रामे स्वत्वं मे भवत्विति सिद्धग्रामादिगोचरेच्छायां व्यभिचार इति कस्यचित् प्रलपितमप्यपास्तं, कपाल हविराद्युपादानेच्छायां व्यभिचारात् पाकत्वादिरूपेण सिद्ध-

त्वज्ञानदशायां मम कृतिसाध्यः पाको भवत्वितिचिकीर्षाया अनुत्पा-
दवद् घटत्वादिरूपेण सिद्धत्वज्ञानदशायामपि नीलो घटो भवत्वि-
तीच्छाया अनुत्पत्तिप्रसङ्गाच्चेति । नैवं । तद्धर्मोद्देश्यतावच्छे-
दककेच्छां प्रति तद्धर्मप्रकारकसिद्धत्वज्ञानस्य प्रतिबन्धकत्वात् उद्दे-
श्यत्वञ्च भवत्वित्यादिपदाभिलप्यमानो विषयताविशेषः, ग्रामे स्वत्वं
भवत्वित्यादौ तु ग्रामादिर्नोद्देश्यः किन्तु तत्र स्वत्वमेव, एवं कपाल-
द्विरायुपादानगोचरेच्छायामपि कपालादिर्नोद्देश्यः किन्तु घट-
यागादिः, उद्देश्यतावच्छेदकत्वञ्च तत्पर्य्याप्त्यधिकरणत्वं तेन घटत्वा-
दिरूपेण सिद्धत्वज्ञानदशायां न नीलो घटो भवत्वितीच्छानुपपत्तिः,
अतएव च यस्यां पाकादिविषयकचिकीर्षायां पाकत्वादिमात्रेण
उद्देश्यता सा पाकत्वादिरूपेण सिद्धत्वज्ञानादेवापैति यस्यान्तु
स्वकृतिसाध्यपाकत्वादिरूपेण(१) सा तु स्वकृतिसाध्यपाकत्वादिरूपेण
सिद्धत्वज्ञानादेवापैतीति विभागः। तादृशविलक्षणविषयतानङ्गीकारे
तु तत्तद्व्यक्तित्वेनैव प्रतिबध्यता प्रतिबन्धकता तु तत्तद्व्यक्तित्वेन सामा-
न्यतस्तत्तद्धर्मावच्छिन्नविशेष्यताकसिद्धत्वज्ञानत्वेन वेत्यन्यदेतत् ।

केचित्तु यद्धर्मावच्छेदेनेष्टसाधनताज्ञानाधीना इच्छा तद्धर्म-
प्रकारकसिद्धत्वनिश्चयो विरोधी इष्टसाधनत्वञ्च यत्र पाकत्वरूपेण
गृहीतं तत्र पाकत्वप्रकारकसिद्धत्वधियैव सापगच्छति यत्र कृति-
साध्यपाकत्वादिना तदवगतं तत्र तदवच्छिन्नसिद्धत्वधियैवेति
विभागः। तेन प्रतियत्नसाध्यधनलाभत्वस्य इष्टसाधनतावच्छेदकत्वात्
प्रकारान्तरेण तल्लाभेऽपि न तदपगमः। न च सिद्धत्वज्ञानदशायां

(१) उद्देश्यतेति पूर्व्वेणान्वयः।

जायमानायां घट-यागादिसाध्यकप्रवृत्तिजनककपाल-हविराद्युपादानेच्छायां व्यभिचार इति वाच्यं। गुरुनये उपादाननिष्ठचिकीर्षाविषयसाधनताज्ञानस्य साक्षादेव प्रवृत्तिहेतुत्वेन तादृशेच्छायां मानाभावात् तच्चाग्रे स्फुटीभविष्यति, एवं न्यायनयेऽपि । न च तथापि यथा पाकत्वरूपेणेष्टसाधनताज्ञानात् कृतिसाध्यत्वप्रकारकज्ञानसहकृतात् पाकः कृतिसाध्यो भवत्वितीच्छा तथा ग्रामत्वादिरूपेण सिद्धग्रामादाविष्टसाधनताज्ञानात् स्वीयस्वत्वप्रकारकज्ञानसहकृतात् ग्रामो मे स्वत्ववान् भवत्वित्याकारकसिद्धग्रामादिविशेष्यकेच्छोत्पत्तौ बाधकाभावात् तत्र व्यभिचारः ग्रामत्वादिरूपेण सिद्धत्वग्रहेऽपि तदुत्पत्तेरिति वाच्यं । स्वकृतिसाध्यत्वातिरिक्तस्थले तत्प्रकारकफलार्थीच्छायां तत्प्रकारकफलसाधनताग्रहस्य फलबलेन हेतुतया ग्रामत्वरूपेण इष्टसाधनताज्ञाने तादृशेच्छाया एवासिद्धेरित्याहुः । तदसत् । गुरुनये नित्यविषयकेच्छाया असङ्ग्रहात्[१] घटादिसाध्यकप्रवृत्तौ घटादिचिकीर्षावत् कपालाद्युपादानकप्रवृत्तौ कपालादीच्छाया अपि हेतुत्वेन कपालाद्युपादानकेच्छायां व्यभिचारस्य दुर्व्वारत्वाच्च। अन्यथा चिकीर्षाविषयसाधनताज्ञानस्य लौकिकप्रत्यक्षस्य चाविशिष्टत्वेऽपि यत्रेच्छा तत्रैवोपादानतया प्रवृत्तिर्यत्र नेच्छा तत्र नेति नियमानुपपत्तेः न्याय-मीमांसासिद्धान्तस्य च युक्तिविरुद्धत्वेनानुपादेयत्वादिति सङ्क्षेपः ।

(१) कृतिसाध्यत्वातिरिक्तस्थले तत्प्रकारकफलसाधनताज्ञानस्य हेतुत्वेन तादृशज्ञानाभावेन नित्यविषयकेच्छाया असंग्रह इति भावः ।

चिकीर्षा भवत्येव, प्रत्युतासिद्धत्वात् कृतावेवेच्छा न विच्छिद्येत यदि कृतिविषयसिद्धत्व-फलेच्छाविच्छेदौ न विरोधिनौ। प्रीत्या धनलाभे च तदधिकधनेच्छा न

---

ननु तथापि तत्र पाकत्वौदनत्वाभ्यां सामान्यतः सिद्धपाक-तज्जन्यौदनयोः सिद्धत्वज्ञानात् पाकत्वौदनत्वाभ्यां पाकौदनयोरिच्छा मास्तु ओदनान्तरत्वप्रकारकौदनेच्छायां पाकान्तरत्वप्रकारकपाका-न्तरचिकीर्षा तु स्यादित्यत आह, 'अन्यौदनेच्छायामिति ओद-नान्तरत्वप्रकारकौदनेच्छायामित्यर्थः, 'पाकचिकीर्षा' पाकान्तरत्व-प्रकारिका पाकान्तरचिकीर्षा, 'प्रत्युतेति, पाकत्वावच्छिन्नस्यान्यतः सिद्धत्वज्ञानदशायामिति शेषः, 'असिद्धत्वादिति पाकस्य सिद्ध-त्वज्ञानेऽपि पाकानुकूलकृतौ सिद्धत्वाज्ञानादित्यर्थः, 'कृतिविषयसि-द्धत्वेति कृतिविषयस्य पाकादेः सिद्धत्वधीरित्यर्थः, 'न विरोधिनौ' न कृतिविषयकेच्छाविरोधिनौ। नन्वेवं धनलाभत्वरूपेण धनलाभे प्रीत्या सिद्धत्वज्ञाने सुखसामान्यरूपफलेच्छाजन्या धनलाभत्वरूपेण धनलाभे प्रतिग्रहसाध्यत्वप्रकारिकेच्छापि मा जायतां स्वविषयताव-च्छेदकावच्छिन्नधर्म्मिताकसिद्धत्वज्ञानसत्त्वात् प्रीत्यधीनधनलाभजन्य-सुखे सुखत्वप्रकारकसिद्धत्वज्ञानसत्त्वेन सुखसामान्यरूपफलेच्छाविच्छे-दाच्च इत्यत्रेष्टापत्तिमाह, 'प्रीत्या धनलाभे चेति धनलाभत्वरूपेण धनलाभे प्रीत्या सिद्धत्वज्ञाने चेत्यर्थः, 'तदधिकधनेच्छेति तदधि-कसुखत्वप्रकारकफलेच्छाजन्या तदधिकधनलाभत्वेन तदधिकधनला-भेच्छेत्यर्थः, 'न विच्छिद्यते' उत्पद्यते, 'तस्य' तद्धर्म्मावच्छिन्नस्य,

विच्छिद्यते तस्यासिद्धत्वात् तत्फलेच्छायाश्च सत्त्वात् धनमात्रार्थिनश्च प्रीत्या धनलाभेऽपि प्रतिग्रहेण तल्लिप्सा नास्त्येव धनमात्रस्य सिद्धत्वात्। किञ्चिद्विशेष-

---

'असिद्धत्वात्' सिद्धत्वाज्ञानात्, 'तत्फलेच्छायाश्चेति तदधिकसुखत्वप्रकारकतत्फलेच्छायाश्चेत्यर्थः, 'धनमात्रार्थिनश्चेति, धनमात्रार्थिनश्च प्रतिग्रहेण तल्लिप्सा प्रीत्या तल्लाभे नास्त्येवेति योजना, 'धनमात्रार्थिनः' धनलाभजन्यसुखसामान्यार्थिनः धनलाभजन्यसुखसामान्यफलेच्छावत इति यावत्,[१] 'प्रतिग्रहेण तल्लिप्सा' धनलाभत्वावच्छिन्नविशेष्यताक-प्रतिग्रहसाध्यत्वप्रकारकेच्छा, 'प्रीत्या तल्लाभे' धनलाभत्वावच्छिन्नविशेष्यताकप्रीतिसिद्धत्वग्रहे, 'नास्त्येव' न भवत्येवेत्यर्थः, 'धनमात्रस्य सिद्धत्वादिति, धनलाभत्वावच्छिन्नस्य सिद्धत्वज्ञानादित्यर्थः। ननु धनलाभत्वरूपेण प्रीतिसिद्धधनलाभ एव प्रीतिसिद्धत्वग्रहोऽस्ति न तु प्रतिग्रहसाध्यधनलाभेऽपि तवान्यथाख्यात्यापत्तेः तथाच तत्सत्त्वे धनलाभत्वरूपेण प्रतिग्रहसाध्यधने प्रतिग्रहसाध्यत्वप्रकारकेच्छायां किं बाधकमित्यत आह, 'किञ्चिद्विशेषसिद्धेवेति सामान्यधर्मप्रकारकयत्किञ्चिद्विशेषनिष्ठसिद्धत्वज्ञानेनैवेत्यर्थः, 'सामान्येच्छाविच्छेद इति व्यक्त्यन्तरेष्वपि सामान्यधर्मोद्देश्यतावच्छेदककेच्छानुत्पाद इत्यर्थः। ननु सामान्येच्छां प्रति सामान्यधर्मावच्छिन्नासु यावतीषु व्यक्तिषु तत्तद्व्यक्तित्वेन सिद्धत्वज्ञानमेव विरोधि न तु सामान्यधर्मप्रकारेण यत्किञ्चिद्व्यक्तिमात्रे

(१) धनलाभजन्यसुखसामान्येच्छाजन्येति यावदिति ग० ।

सिद्धैव हि सामान्येच्छाविच्छेदः। अन्यथा सकलस्व-
विषयसिद्धेरसम्भवेन तद्विच्छेदो न स्यादेव। वस्तुतस्तु*

सिद्धत्वज्ञानमित्यत आह, 'अन्यथेति प्रातिस्विकरूपेण[1] सर्व्वासु व्यक्तिषु सिद्धत्वज्ञानस्यैव विरोधित्वे इत्यर्थः, 'सकलस्वविषयसिद्धेरिति स्वोद्देश्यतावच्छेदकपाकत्वादिसामान्यधर्म्मावच्छिन्नासु यावतीषु व्यक्तिषु प्रातिस्विकरूपेण सिद्धत्वज्ञानस्येत्यर्थः, 'असम्भवेन' युगपद्ग्रहेणाप्यसम्भवेन, 'तद्विच्छेदो न स्यादेवेति सिद्धत्वज्ञानप्रयुक्तपाकत्वादिसामान्यधर्म्मोद्देश्यतावच्छेदककेच्छाविच्छेदः क्वापि न स्यादित्यर्थः।

गुरुचरणास्तु[2] ननु सामान्येच्छां प्रति सामान्यधर्म्मप्रकारेण सामान्यधर्म्मावच्छिन्नासु यावतीषु व्यक्तिषु सिद्धत्वज्ञानमेव विरोधीत्यत आह, 'अन्यथेति यावतीषु व्यक्तिषु सामान्यधर्म्मप्रकारकसिद्धत्वग्रहस्यैव विरोधित्वे इत्यर्थः, 'सकलस्वविषयसिद्धेरसम्भवेनेति स्वविषयतावच्छेदकपाकत्वादिसामान्यधर्म्मावच्छिन्नासु यावतीषु व्यक्तिषु सिद्धत्वस्य बाधितत्वेनेत्यर्थः, 'तद्विच्छेद इति, अन्यथाख्यात्यापत्त्या सर्व्वत्र सिद्धत्वज्ञानस्यासम्भवादिति भाव इत्याहुः।

(१) तत्तद्व्यक्तित्वादिनेत्यर्थः। (२) केचित्त्विति ग०।

* ननु कृतिसाध्यत्वप्रकारकेच्छां विनापि कृतीच्छास्थले प्रवृत्तेरनुभूयमानत्वेन व्यभिचारादनन्यगत्या भिन्नविषयकेच्छाया अपि हेतुत्वं कल्प्यमित्यत आह, 'वस्तुतस्त्विति, ननु कथं भासत इत्यत आह, 'क्रियाद्वारैवेति,

क्रियानुकूला कृतिरिष्टोपाय इति ज्ञाने क्रियायाः

ननु कार्य्य-कारणभावापन्नानां ज्ञानेच्छा-कृतीनां एकविशेष्य-कत्वानुभवोऽसिद्धस्तथाच लाघवात् स्वकृतीच्छात्वेनैव कारणत्वं। न चातिप्रसङ्गभङ्गाय[१] तद्विशेष्यककृतौ तदनुकूलकृतीच्छाया एव हेतुताया वक्तव्यत्वात् पाकानुकूलस्वकृतीच्छात्व-स्वकृतिसाध्यत्वप्रकारकपाकेच्छात्वयोः समशरीरत्वान्न लाघव-गौरवमिति वाच्यं। तावतापि विनिगमनाविरहेण तत्त्वेन हेतुताया दुर्व्वारत्वात्। न च पाकानुकूलकृतीच्छाया हेतुत्वे न्यायनये इच्छाद्वारा प्रवृत्तिं प्रति पाकानुकूलकृतीष्टसाधनताज्ञानस्य हेतुत्वप्रसक्तौ प्रवृत्तिं प्रतीष्टसाधनताज्ञानस्य कार्य्य-कारणभावे कारणतावच्छेदकगौरवं पाकेष्टसाधनताज्ञानत्वापेक्षया पाकानुकूलकृतीष्टसाधनताज्ञानत्वस्य गुरुत्वादिति वाच्यं। प्रवृत्तिं प्रतीष्टसाधनताज्ञानस्याहेतुत्वेऽपि क्षतिविरहात् इच्छयैव[२] उपक्षीणत्वात्[३] कृतीच्छां प्रति च[४] कृतीष्टसा-

(१) एकसाध्यककृतौ अन्यसाध्यककृतीच्छाया हेतुत्ववारणायेत्यर्थः।

(२) ननु कृतिं प्रतीष्टसाधनताज्ञानस्याहेतुत्वे कृताविष्टसाधनत्वज्ञानकाले तव प्रवृत्त्यापत्तिरित्यत आह, इच्छयैवेति, कृताविष्टसाधनताज्ञानकाले कारणाभावादिच्छैव न जायते कृतीष्टसाधनताज्ञानस्य जनकीभूतस्य सत्त्वे कृताविष्टसाधनताज्ञानस्यासम्भवादिति भावः।

(३) इच्छाद्वारोपेक्षणीयत्वादिति ख०।

(४) नन्विच्छां प्रति इष्टसाधनत्वज्ञानस्य हेतुत्वे अतिरिक्तकारणत्वकल्पनं तव मते स्यादित्यत आह, कृतीच्छां प्रति चेति।

साक्षात्साधनताबाधे परम्परासाधनतामादायैव साधनत्वप्रतीतिरिति सिद्धान्तात् क्रियाद्वारत्वभाने तदुभयं भाति, तज्जन्यत्वे सति तज्जन्यजनकत्वस्यैव

कृतिसाध्यत्वमिष्टोपायत्वञ्च भातं क्रियाद्वारैव कृतेरि-

धनताज्ञानस्य हेतुतायास्तत्रापि सम्मतत्वात् तत्र पाकेष्टसाधनता-ज्ञानत्वस्यावच्छेदकस्य लघुत्वेऽपि प्रवृत्तिं प्रति स्वकृतिसाध्यत्वप्रकार-कज्ञानस्यापि पृथक्कारणत्वकल्पने गौरवाच्च । न च तत्रापि स्वकृ-तिविशेष्यकपाकानुकूलत्वप्रकारकज्ञानस्य हेतुत्वात् तच्च तुल्यत्वमिति वाच्यं। तस्य पृथक्हेतुत्वविरहात् पाकानुकृतित्वप्रकारेण तादृश-कृतिविशेष्यकेष्टसाधनताज्ञानत्वेन हेतुत्वादिष्टसाधनताज्ञानस्य हेतु-तायामेव तस्य प्रवेशात्, यदि च तत्रापि स्वकृतिसाध्यपाकत्वप्रका-रकेष्टसाधनताज्ञानत्वेन हेतुत्वं न तु स्वकृतिसाध्यताग्रहस्य पृथक्हे-तुत्वं तदा तु नावच्छेदकलाघवसम्भावनापि स्वकृतिसाध्यपाकेष्टसा-धनताज्ञानत्व-पाकानुकूलस्वकृतीष्टसाधनताज्ञानत्वयोः समशरीरत्वा-दित्यस्वरसादाह, 'वस्तुतस्त्विति, 'इष्टोपायत्वञ्च भातमिति । न च स्वमते इष्टोपायत्वभानाभिधानमनुपयुक्तमिष्टसाधनत्वज्ञानस्य स्वकृ-तिसाध्यत्वप्रकारकेच्छायामहेतुत्वादिति वाच्यं । न्यायनये तुल्यसा-

द्वारत्वादित्येके, 'क्रियानुकूला कृतिरित्यत्र समानसंवित्संवेद्यतया कृतिसा-ध्यत्वभानमित्यपरे । 'तथापीति, स्वकेदारत्वघटितत्वज्ञानवत् कृतिसाध्यत्वज्ञान-मिष्टसाधनताज्ञानोपक्षीणमिति भावः । 'तर्हीति, अनन्यथासिद्धान्वया-द्यनुविधायित्वादिति भावः । 'जीवनयोनीति, ननु तद्धेतोरेवेति न्यायात् प्राणपञ्चकसञ्चारो जीवनादृष्टजन्य एव न तज्जन्य इति चेत्, अत्र वदन्ति, वायुदारणत्वेन भस्त्रावायुदारणवत्तस्यापि यत्नजन्यत्वानुमानात् । न च वाह्य-वायूदाहरणे व्यभिचारः, तस्यापीश्वरयत्नजन्यत्वादिति, तन्न, एवं हीश्वरयत्ने-नैव प्रकृतेऽप्यर्थान्तरं स्यात् यदि जन्यत्वं साध्यं तदोक्तव्यभिचारानुद्धार एव

ष्टसाधनत्वादिति तद्बोधात् कृताविव कृतिसाध्यत्वेन क्रियायामपि सैवेच्छेति चिकीर्षायां कृतिसाध्यत्वप्रकारनैयत्यमतः कृतिसमानविषयचिकीर्षात्वेन चिकीर्षायाः कृतिकारणत्वं न तु कृतीच्छात्वेन भिन्नविषयतया

---

मङ्गीकृत्वसम्पादनाय तदभिधानात् स्वमतेऽपि इष्टसाधनताज्ञानस्याहेतुत्वेऽपि वक्ष्यमाणयुक्त्या इष्टसाधनताज्ञानविशिष्टकृतिसाध्यताज्ञानत्वेन हेतुताया इष्टसाधनताज्ञानस्य हेतुतावच्छेदकत्वेनापेक्षितत्वाच्चेति ध्येयं । कुतोभातं तदाह, 'क्रियाद्वारैवेति, इष्टं प्रति कृतेः साक्षात्साधनत्वस्य बाधात्तज्जन्यक्रियायामिष्टोपायत्वमगृहीत्वा तस्य दुर्ग्रहत्वादिति भावः । 'तद्बोधात्' इष्टसाधनताबोधात्, 'चिकीर्षायां' प्रवृत्तिपूर्व्ववर्त्तिक्रियानुकूलकृतीच्छायां, 'कृतिसमानविषयेति पाकादिविशेष्यकेत्यर्थः, 'चिकीर्षात्वेन' स्वकृतिसाध्यत्वप्रकारकेच्छात्वेन, 'कृतीच्छात्वेन' पाकानुकूलकृतीच्छात्वेन, 'भिन्नविषयतया गौरवादिति भिन्नविशेष्यकत्वलक्षणगौरवादित्यर्थः । न च समान-

---

ईश्वरस्य परैरनङ्गीकाराच्च । अन्ये तु धावतः प्रयत्नोत्कर्षेण श्वासक्रियात्वावच्छेदेन प्रयत्नजन्यत्वं सुषुप्त्यादिकाले च प्रयत्नान्तराभावात्तज्जन्यत्वं । किञ्च समाधिस्थानां श्वासधारणे श्वासक्रियाप्रतिबन्ध इत्यविवादं जीवनादृष्टन्तु तदापि तत्प्रवृत्ति तथाच जीवनयोनिकृतिव्यतिरेकादेव तत्र श्वासक्रियाविरह इति तत्र तज्जन्यत्वमिति वदन्ति । यद्यपि सञ्चारोद्देशेन प्राणे प्रवृत्तिरापाद्या सा च प्राणातीन्द्रियतया न सम्भवति, प्रवृत्तिविषयप्रत्यक्षस्य तद्धेतुत्वात्तथापि तन्मते प्राणस्य प्रत्यक्षत्वादिदमुक्तमस्मन्मते तु प्राण-

विशेष्यकत्वभिन्नविशेष्यकत्वलक्षणलाघव-गौरवं न कारणतायां विनिगमकं किन्त्ववच्छेदकलाघव-गौरवं कल्पनालाघव-गौरवञ्च तथेति वाच्यं। एकत्रावच्छेदकलाघवादेरसत्त्वेऽपि अणुरपि विशेषोऽध्यवसायकर इति न्यायेन[१] समानविशेष्यकत्व-भिन्नविशेष्यकत्वलक्षणलाघव-गौरवस्यापि कारणतायां विनिगमकत्वात् लाघव-गौरवस्य कारणतायां विनिगमकत्वे तान्त्रिकाणां व्यवहारस्यैव नियामकत्वात्, अन्यथा[२] अनुमितिं प्रति वह्निव्याप्यो धूमः पर्व्वते इत्यादि पक्षविशेषणकपरामर्शहेतुताया दुर्व्वारत्वप्रसङ्गात्[३] घटादिविशिष्टज्ञानं

(१) अणुरपि किञ्चिदपि विशेषो वैलक्षण्यं अध्यवसायकरः कारणतायां प्रतिबन्धकतायाञ्च विनिगमक इत्यर्थः।

(२) भिन्नविशेष्यकत्व-समानविशेष्यकत्वरूपलाघव-गौरवस्य कारणतायामविनिगमकत्वे।

(३) एतन्मते पक्षविशेष्यकपरामर्श एवानुमितिहेतुरिति भावः।

बहुनाड्यामतिप्रसङ्गो बोध्यः। न च मनोवहादिनाडीवत्त्वेष्टापत्तिः, फलबलेन तत्रैव तथाभावात् अस्यास्तु फलाभावेन फलवत्प्रवृत्तिविषयत्वायोग्यत्वादित्याङ्कः। ननु विषभक्षणादिव्यावर्त्तकं स्वविशेषणवत्ताप्रतिसन्धानजन्यत्वं कार्य्यताज्ञाने विशेषणमावश्यकं तथाच तत एवोक्तातिप्रसङ्गनिरासे चिकीर्षाधीनत्वं विशेषणं व्यर्थमिति चेत्, न, अयं कृतिसाध्यप्राणपञ्चकसञ्चारी जीवित्वादित्याद्यनुमानसम्भवादत एव भ्रमेऽप्यतिप्रसङ्गवारणार्थं विशेषणोपादानमिति भावः। न च यत् कृतिसाध्यताज्ञानं ततः सा कृतिरिति जीवनयोनिकृतिसाध्यताज्ञानात् सैव कृतिरिति नोक्तातिप्रसङ्ग इति वाच्यं। तादृशज्ञानं विनापि जीवनयोनिकृत्युत्पादेन व्यभिचारात्तस्यास्तज्ज्ञानाजन्यत्वात् तस्मात्तत्प्रवृत्तिरूपकृतिविशेषं प्रत्येव तज्ज्ञानस्य हेतुत्वात् तत एवातिप्रसङ्गवारणाय चिकीर्षाधीनत्वं विशेषणमावश्यकं। अत्र वदन्ति

प्रति भूतले घटाभाव इत्यभावविशेष्यकज्ञानस्यापि प्रतिबन्धकता- पत्तेश्च अवच्छेदकलाघव-गौरवविरहादिति भावः ।

केचित्तु 'भिन्नविषयतया गौरवादिति भिन्नविशेष्यतया कार्य्य- तावच्छेदक-कारणतावच्छेदकगौरवादित्यर्थः, कृतिसाध्यत्वप्रकारके- च्छाया हेतुत्वे साध्यतासंसर्गेण स्वकृतिप्रकारकेच्छात्वेन हेतुत्वं स्वकृति- त्वेन च कार्य्यत्वं तत्तद्धर्म्मावच्छिन्नसमानविशेष्यता च प्रत्यासत्तिः । न च पुरुषान्तरीयेच्छामादायातिप्रसङ्ग इति वाच्यं । तत्पुरुषी- यत्वेनापीच्छाविशेषणात् स्वत्वान्तर्भावेन प्रतिपुरुषं कार्य्य-कारणभा- वभेदस्यावश्यकत्वात् स्वकृतीच्छाया हेतुत्वे तु भिन्नविशेष्यकतया समानविशेष्यकत्वस्य प्रत्यासत्तित्वासम्भवात्[१] अतिप्रसङ्गभङ्गाय वि- शिष्य तत्तत्क्रियाविशेषस्यापि कार्य्यतावच्छेदक-कारणतावच्छेदक- कोटौ निवेशनीयत्वाद्गौरवमिति भाव इत्याहुः । तदसत्, ममापि स्वकृतीच्छात्वेनैव हेतुत्वं कृतित्वेनैव कार्य्यत्वं, किन्तु कार्य्यदिशि तत्तद्धर्म्मावच्छिन्नविशेष्यतायाः प्रत्यासत्तित्वं कारणदिशि चानुकूल- त्वसंसर्गेण स्वकृत्यंशे तत्तद्धर्म्मावच्छिन्नप्रकारतायाः प्रत्यासत्तित्वमिति तुल्यत्वादिति दिक् ।

(१) तथाच समवाय एव प्रत्यासत्तिः एवञ्च यागानुकूलकृतीच्छासत्त्वे पाकसाध्यकप्रवृत्त्यापत्तिवारणाय तत्साध्यककृतौ तदनुकूलकृती- च्छाया एव हेतुत्वोपगमात् कारणतावच्छेदक-कार्य्यतावच्छेदकयो- र्गौरवमिति समुदितार्थः ।

कृतिसाध्यताधीरेव हेतुर्न तु कृतावुक्तविशेषणापेक्षा तथा हि चिकीर्षा- धीनकृतिसाध्यताज्ञानस्य हेतुत्वेऽपि प्रकृते चिकीर्षाधीना कृतिरयोग्यैव विषयस्वभावादित्येव बीजं, तथाच कृतिसाध्यताधीरेव चिकीर्षाधीनकृतौ

गौरवात्। तथापि येन रूपेण यस्येष्टसाधनत्वं तेन प्रकारेण तच्चेच्छा यथा स्वकेदारवृष्टित्वेन इष्टसाधनत्वात् तथैवेच्छा तथा कृतिसाध्यत्वेन पाकस्येष्टसाधनत्वमतः कृतिसाध्यत्वेन तच्चेच्छा भवतीति, कृतौ कृतिविषये वा चिकीर्षायां न वृष्टीच्छा, विलक्षण-

---

ननु भवतु कृतिसाध्यत्वप्रकारकेच्छा चिकीर्षा तथापि तत्र कृतिसाध्यताज्ञानं न हेतुः किन्तु इष्टसाधनताज्ञानमेव। न चैवं कृत्यसाध्यताज्ञानेऽपि चिकीर्षापत्तिरिति वाच्यं। तत्प्रकारकेच्छां प्रति तद्धर्म्मावच्छेदेनेष्टसाधनताज्ञानस्य हेतुत्वेन कृत्यसाध्यताज्ञानदशायां कृतिसाध्यत्वावच्छेदेन पाकस्येष्टसाधनताज्ञानाभावादेव तत्र चिकीर्षानुत्पत्तेरित्याशङ्कते, 'तथापीति, 'येन रूपेणेति यद्धर्म्मावच्छेदेनेत्यर्थः, 'इष्टसाधनत्वं' इष्टसाधनत्वग्रहः, 'तेन प्रकारेण' तत्प्रकारेणैव, 'स्वकेदारवृष्टित्वेन' स्वकेदारवृष्टित्वावच्छेदेन, 'इष्टसाधनत्वात्' तज्ज्ञानात्, 'इष्टसाधनत्वं' इष्टसाधनत्वग्रहः, 'अतः' अस्मात्, 'इतिशब्दानन्तरं न कृत्यसाध्यताज्ञाने चिकीर्षेति शेषः। 'कृतिविषये वेति, 'वाशब्द इवार्थे कृतावित्यनन्तरं योज्यः, तथाच कृताविव कृतिविषय इत्यर्थः, 'वृष्टीच्छेति चिकीर्षाविषयजलसंयोगाद्युद्देश्यक-

---

कारणं तथाच तथा ज्ञानेऽप्युक्तस्थले चिकीर्षाधीनकृतेरयोग्यत्वादेव नोत्पद्यते। न चान्वयव्यभिचारः, तादृशविषयविलम्बादेव विलम्बादन्यथा भ्रमेण चिकीर्षाधीनकृतिसाध्यताज्ञानेऽपि चिकीर्षायामपि प्राणपणकसञ्चारे प्रवृत्तापत्तेर्वेश्मलेपायमानत्वात्। ननु चिकीर्षाधीनत्वं न ज्ञातं तन्न येन चिकी-

सामग्र्यन्तरकल्पनमिति चेत्, भवेदेवं, यदि कृति-साध्यत्वेन पाकस्य ओदनसाधनता स्यात्, न चैवं, गौरवात्, किन्तु पाकत्वेन, स तु कृतिं विना नेत्य-न्यदेतत्। वह्निना साधयामीतिवत् कृत्या साधया-मीतीच्छा इष्टसाधनताज्ञानादेवेति चेत्, तर्हि तत्र वह्निसाध्यताज्ञानवदत्रापि कृतिसाध्यत्वज्ञानं कारण-मावश्यकं कृतौ चानुभवसिद्धचिकीर्षाधीनत्वं विशेषः

सिद्धदृष्टिगोचरेच्छेत्यर्थः, तत्र जलसंयोगादिसाधनताग्रहस्य परेणापि हेतुत्वोपगमादिति भावः। 'गौरवात्' कृतिसाध्यपाकत्वस्य कारण-तावच्छेदकत्वे गौरवात्, 'सः' पाकः, 'कृतिं विनानेति परम्परया-कृतिं विनानेत्यर्थः। 'वह्निना साधयामीतिवदिति, उपायविशेष-साध्यत्वप्रकारिकेति शेषः, 'इष्टसाधनताज्ञानादेवेति न तु तदव-च्छेदेनेष्टसाधनताज्ञानादित्यर्थः, 'कारणमावश्यकमिति, अन्यथा कृत्यसाध्यताज्ञानेऽपि चिकीर्षापत्तिरित्युक्तत्वादिति भावः। ननु प्राणपञ्चकसञ्चारादौ जीवनयोनिकृतिसाध्यताज्ञानेऽपि चिकीर्षा-प्रवृत्त्यापत्तिरित्यत आह, 'कृतौ चेति, 'विशेषः' विशेषणं, तथाच

र्षाधीनकृत्यसाध्यमपि तादृशकृतिसाध्यत्वेन बुध्येतेति कथं भ्रमनिबन्धनो-ऽतिप्रसङ्ग इति चेत्, न, चिकीर्षाधीनत्वेनोपलक्षितकृतिविशेषासाध्यस्य प्रा-णपञ्चकसञ्चारादेस्तत्साध्यत्वभ्रमसम्भवात् अन्यथा सुखेऽतिप्रसङ्गभङ्गायोपाय-विषयत्वविशेषणप्रवेशापत्तेः, न वान्वयव्यभिचारः, सिद्धे इच्छाभाव इव विषय-योग्यताविलम्बादेव विलम्बात्। न च तत्रासिद्धत्वज्ञानविलम्बाद्विलम्बः, तद-

जीवनयोनिकृतिसाध्ये न

चिकीर्षाधीनकृतिसाध्यताज्ञानं हेतुः जीवनयोनिकृतिसु न तथेति भावः। 'जीवनयोनीति' जीवनयोनियत्नत्वेन कृतित्वेन वा जीवनयोनिकृतिसाध्यताज्ञाने इत्यर्थः, इदमुपलक्षणं निवृत्तित्वेन कृतित्वेन वा निवृत्तिसाध्यताभ्रमे चेत्यपि बोध्यं। न च प्राणसञ्चारे या प्रवृत्तिरापद्यते तस्याः प्राण एवोपादानं भविष्यतीत्युपादानप्रत्यक्षाभावादेव न प्रवृत्तिरिति वाच्यं। प्राणवहनाड्या अपि तदुपादानत्वसम्भवात्तस्या अप्यभिघातद्वारा प्राणसञ्चारजनकत्वात् तन्मते प्राणस्यापि प्रत्यक्षत्वाभ्युपगमाच्च। न च नित्यातिरिक्तस्थले इष्टसाधनतालिङ्गककृतिसाध्यताज्ञानस्य विशेषसामग्रीत्वेनाये वाच्यतया तदभावादेव न तत्र चिकीर्षा-प्रवृत्ती इति वाच्यं। तस्यापीष्ट-

दिच्छापि तादृशकृतिविषययोग्यताज्ञानहेतुत्वौचित्यात् एवञ्च भ्रमेऽतिप्रसङ्गवारणाय स्वपदप्रवेशोऽप्यनावश्यकः तस्य तादृशकृत्ययोग्यत्वादिति, अत्र ब्रूमः, स्वेच्छाधीनकृतिसाध्यताज्ञानं प्रवर्त्तकमित्यग्रे स्फुटं, स्वेच्छाधीनत्वञ्च न ज्ञातं तन्त्रं किन्तु स्वरूपसत् एवञ्च वस्तुगत्या स्वेच्छाधीना या कृतिस्तत्साध्यताज्ञानस्य प्रवर्त्तकत्वे प्राणपञ्चकसञ्चारस्थले तादृशकृतेरप्रसिद्धतया तद्भ्रमासम्भवेन तन्निबन्धनातिप्रसङ्गाभावात् एवञ्च यथाश्रुतेनैवोपपत्तौ कृतिसाध्यताज्ञाने अवच्छेदकत्वकल्पनैवातिप्रसङ्गनिरासायोपयुज्यते न तु तादृशकृतिविषययोग्यज्ञानरूपहेत्वन्तरकल्पनं गौरवात् इति मन्तव्यं। न च सुखेऽतिप्रसङ्गवारणाय तस्यावश्यकत्वमिति वाच्यं। उपायेच्छाधीनकृतित एव सुखसम्भवे तत्रापि स्वेच्छाधीनकृतेरप्रसिद्धतया तादृशज्ञानासम्भवेनातिप्रसङ्गाभावात् यथा च फलज्ञानं फलेच्छा वा न प्रवर्त्तिका तथोक्तं प्रत्यक्षप्रकाशे इति प्रकाशः।

साधनत्वेन तद्भ्रमेण वा तल्लिङ्गककार्य्यताज्ञानस्यापि सम्भवात् । न चेष्टापत्तिः, जीवनयोनिकृत्यादिसाध्यताज्ञानदशायां चिकीर्षा-कृत्योः सर्व्वानुभवविरुद्धत्वादिति भावः ।

अत्र मिश्राः प्राणपञ्चकसञ्चारस्य चिकीर्षाधीनप्रवृत्तिविषयत्व-स्वरूपायोग्यत्वात् प्राणपञ्चकसञ्चारवत्त्वरूपविशेष्यतावच्छेदकान्तर्भावेन चिकीर्षा-प्रवृत्ति-कृतिसाध्यताज्ञानानां कार्य्य-कारणभावस्य कचि-द्प्यकल्पनात् कृतिसाध्यताज्ञानस्य विषयनिष्ठतया हेतुत्वपक्षेऽपि स्वरूपायोग्यविशेष्यव्यावृत्तविशेष्यताया एव कारणतावच्छेदकत्वा-सत्तित्वाज्जीवनयोनिकृत्यादिसाध्यताज्ञानेऽपि न प्राणपञ्चकसञ्चारे प्रवृत्तिरिति चिकीर्षाधीनत्वविशेषणं नोपादेयमेव, अन्यथा चिकी-र्षाधीनत्वविशेषणोपादानेऽपि तदधीनकृतिसाध्यत्वस्यैव भ्रमात् प्रवृ-त्त्यापत्तेर्दुर्व्वारत्वादित्याहुः । तदसत्, कृतौ चिकीर्षाधीनत्वाविशेषणे एवंरूपेण प्राणपञ्चकसञ्चारे प्रवृत्त्यभावोपपादनेऽपि घटादौ कृतित्वेन जीवयोनिकृत्यादेः साध्यताभ्रमात् प्रवृत्त्यापत्तेर्दुर्व्वारत्वात् घटाद्यन्त-र्भावेन कार्य्य-कारणभावस्यावश्यं क्लृप्तत्वात्तन्निष्ठविशेष्यतायाः स्वरूपा-योग्यव्यावृत्तत्वाच्च । न चेष्टापत्तिः, अनुभवविरोधात्, अन्यथा प्राण-पञ्चकसञ्चारेऽपीष्टापत्तेः सम्भवात्, न हि तस्य स्वरूपायोग्यत्वे अनु-भवातिरिक्तं प्रमाणमस्ति, आहार्य्यप्रबलश्वासप्रश्वासदशायां प्राण-सञ्चारेऽपि चिकीर्षा-प्रवृत्त्योरनुभूयमानतया प्राणपञ्चकसञ्चारस्य स्वरूपायोग्यत्वविरहाच्च । न चैवं चिकीर्षाधीनत्वविशेषणेऽपि तदधी-नकृतिसाध्यत्वस्यैव भ्रमात् प्राणसञ्चारे प्रवृत्त्यापत्तिर्दुर्व्वारेति वाच्यं । तथानायत्या दृष्टापत्तेरेव शरणत्वाज्जीवनयोनिकृतिसाध्यताज्ञान-

प्रवृत्तिः, अन्यथा कृतिसाध्येष्टसाधनतापक्षेऽपि तत्र प्रवर्त्तेत। ननु* चिकीर्षाधीनत्वस्योपलक्षणत्वे उपलक्ष्य-

दृशायामिष्टापत्तेः सर्व्वानुभवविरुद्धत्वेनाशक्यत्वात्, अन्यथा एतादृशानुभवविवादे कार्य्य-कारणभावव्यवस्थैव न स्यात्। न च कृतित्वेन कृतिसामान्यसाध्यताज्ञानत्वेनैव हेतुत्वं जीवनयोनिकृत्यादिसाध्यताव्यावृत्तप्रकारतानिरूपितविशेष्यतायाः कारणतावच्छेदकप्रत्यासत्तित्वाच्च नोक्तातिप्रसङ्ग[१] इति वाच्यं। तथा सति लाघवात् ज्ञानत्वेनैव हेतुत्वौचित्येन कृतिसाध्यत्वविषयकत्वान्तर्भावस्यापि व्यर्थत्वापत्तेः जीवनयोनिकृत्यादिसाध्यताव्यावृत्तकृतिसाध्यतानिष्ठप्रकारतानिरूपितविशेष्यतायाः प्रत्यासत्तित्वाभ्युपगमेनैवातिप्रसङ्गभङ्गसम्भवात् प्रवृत्तिसाध्यताभ्रमात् प्राणसञ्चारे प्रवृत्तेरुत्पादस्य तवापि दुर्व्वारत्वात्, कृतिसाध्यतानिष्ठप्रकारतानिरूपितविशेष्यतायाः प्रत्यासत्तित्वलाभायैव कृतिसाध्यताविषयकत्वान्तर्भाव इति चेत्, तर्हि प्रवृत्तित्वावच्छिन्नप्रवृत्तिसाध्यतानिष्ठप्रकारतानिरूपितविशेष्यतायाः प्रत्यासत्तित्वलाभाय चिकीर्षाधीनत्वोपादानस्यापि सार्थकत्वादिति कृतं पल्लवितेन।

'कृतिसाध्येति कृतिसाध्यत्वे सतीष्टसाधनताज्ञानस्य हेतुत्वपक्षेऽपीत्यर्थः। ननु वस्तुगत्या या चिकीर्षाधीना कृतिस्तत्साध्यताज्ञानं हेतुः चिकीर्षाधीनकृतित्वेन तत्साध्यताज्ञानं वेति विकल्प्य दूषयति, 'नन्विति, 'उपलक्षणत्वे' परिचायकमात्रत्वे ज्ञान-

---

(१) न प्राणसञ्चारे प्रवृत्तिरित्यर्थः।

* अस्तु वा स्वचिकीर्षाधीनत्वं विशेषणं सुखचिकीर्षाजन्या न कृतिरित्यस्यार्थे स्फुटत्वादिति तटस्थः शङ्कते, 'नन्विति, ननु स्वप्रमाणकत्वान्नाप्यमित्यत आह,

मात्रगतानतिप्रसक्तधर्म्माभावात् कृतिमात्रस्य चाति-
प्रसङ्गात् तत्तत्कृतिविशेषा उपलक्ष्याः, तथाच तदन-
नुगमात् प्रवृत्त्यननुगमः, विशेषणत्वे चिकीर्षायां प्रवृत्तौ
च चिकीर्षाज्ञानकारणत्वे गौरवं प्रमाणाभावश्च।

---

विषयतया कारणतावच्छेदककोट्यप्रविष्टत्व इति यावत्, 'उपलक्ष्य-
मात्रगतेति चिकीर्षाधीनपदप्रतिपाद्यमात्रनिष्ठेत्यर्थः, 'मात्रशब्दो-
यावदर्थकः, अतः प्रमेयत्वादिवारणाय 'अनतीति, 'कृतिमात्रस्य'
कृतित्वस्य, 'अतिप्रसङ्गात्' जीवनयोनियत्नसाधारणत्वात्, 'तत्तत्-
कृतिविशेषाः' तत्तत्कृतित्वेन कृतिविशेषाः, 'उपलक्ष्याः' कारणता-
वच्छेदकप्रविष्टतया चिकीर्षाधीनपदप्रतिपाद्याः, अन्यथा[१] प्रमेय-
त्वादिप्रकारकज्ञानमादायातिप्रसङ्गादिति[२] भावः। 'तदननुगमात्'
तत्तत्कृतित्वानां नानात्वात्, 'प्रवृत्त्यननुगमः' प्रवृत्तिसामान्ये व्यभि-
चारः,[३] 'विशेषणत्वे' ज्ञानविषयतया कारणतावच्छेदककोटिप्रवि-
ष्टत्वे, प्रामाणिकं गौरवं न दोषायेत्यत आह, 'प्रमाणाभावश्चेति।
ननु यथोक्तातिप्रसङ्गवारणान्यथानुपपत्तिरेव[४] मानमित्यरुचेर्दोषा-

---

(१) तत्तत्कृतित्वेन कारणतावच्छेदककोट्यप्रविष्टत्व इत्यर्थः।

(२) अतिप्रसङ्गात् पाकः प्रमेयसाध्यइत्यादिज्ञानात् चिकीर्षा-प्रवृत्ती स्यातामित्यर्थः।

(३) तत्कृतिसाध्यताज्ञानं विनापि प्रवृत्त्युत्पत्तेरिति भावः।

(४) प्रामाणिकसत्त्वारे प्रवृत्त्यापत्तिरूपातिप्रसङ्गवारणान्यथानुपपत्तिरेवे-त्यर्थः।

---

'प्रमाणेति, 'विरोधेनेति, तत्साध्यत्वभाने समानसंवित्संवेद्यतया साधन-

किञ्च चिकीर्षासाध्यावस्थायाः कृतेः सिद्धावस्थसाधनत्वविरोधेन कृतिसाध्यता पाकादौ न स्यादेतेति चेत्, न, अस्ति हि कृतिविशेषो मानसप्रत्यक्षसिद्धो जीवनयोनिप्रयत्नव्यावृत्तश्चिकीर्षोपलक्ष्यः यत्र चिकीर्षाकारणत्व-

न्तरमाह, 'किञ्चेति, 'साध्यावस्थायाः' साध्यत्वविशिष्टायाः, 'सिद्धावस्थसाधनत्वेति सिद्धतादशामात्रवृत्तिपाकादिनिष्ठसाध्यतानिरूपकत्वेत्यर्थः, साधनत्ववत् साध्यतानिरूपकत्वेनापि साध्यताश्रयत्वस्य विरोधादिति भावः। 'कृतिसाध्यता' चिकीर्षासाध्यकृतिसाध्यता, उपलक्ष्यमात्रगतानतिप्रसक्तधर्मो नास्तीति यदुक्तं तद्दूषयति, 'अस्ति हीति, 'कृतिविशेषः' कृतिनिष्ठो विशेषः, 'चिकीर्षोपलक्ष्यः' चिकीर्षाधीनपदप्रतिपाद्यमात्रनिष्ठः, 'यत्रेति यदवच्छिन्ने इत्यर्थः, 'जातिरूप इति प्रवृत्तित्वाख्यजातिरूप इत्यर्थः। न चैकस्मिन् समूहालम्बनयत्नेऽनिष्टार्थे निवृत्तिरूपे इष्टार्थे प्रवृत्तिरूपे निवृत्तित्वमादाय साङ्कर्य्यं दुर्व्वारमिति वाच्यं। राग-द्वेषयोर्यौगपद्याभावादेकस्य प्रवृत्ति-निवृत्तिरूपत्वासम्भवात्[१]। न च यत्रापेक्षाबुद्ध्यात्मकमिष्टानिष्टसाधनत्वादिविषयकसमूहालम्बनमेकज्ञानं ततः क्रमेण फलेच्छा-फलद्वेषौ ततः क्रमेणोपायेच्छोपायद्वेषौ तत्रेष्टानिष्टोभयविषयकप्रवृत्ति-निवृत्त्यात्मकसमूहालम्बनयत्नसम्भव इति वाच्यं। अपेक्षाबुद्धेः क्षणत्रयाव-

(१) तथाच इष्टसाधनत्वानिष्टसाधनत्वोभयविषयकसमूहालम्बनं ततः फलेच्छा ततः फलद्वेषः तत्समये च ज्ञानाभावात् न समूहालम्बनप्रयत्नसम्भव इति भावः।

अङ्गः स च तव जातिरूपो मम त्वनुगतकारणोपाधि-रूपः, एवञ्च चिकीर्षाधीनत्वेनानुगतेन कृतिविशेषा-

---

स्थायितया उपायेच्छाकाले तन्नाशात् उपायेच्छाकाले(१) उपाय-द्वेषोत्पत्त्यसम्भवेन तत्राप्युभयात्मकयत्नासम्भवात् उपादानप्रत्यक्षस्य(२) प्रवृत्तिं प्रति साक्षात्साधनस्य विलम्बेनापि तत्रोभयात्मकयत्नासम्भवाच्च ज्ञानेच्छा-द्वेषाणां यौगपद्याभावेन तत्राव्यवहितपूर्व्वमुपादानप्रत्यक्षा-सम्भवात्। न च तथापि ज्ञानेच्छयोः राग-द्वेषयोर्वा यौगपद्याभ्युपगमे साङ्कर्य्यं दुर्व्वारमिति वाच्यं। तथा सति तत्र युगपत्प्रयत्नद्वयाभ्युप-गमेन साङ्कर्य्यविरहात् प्रयत्नयौगपद्यस्यापि एकदोत्पन्नपरस्परवि-लक्षणविंशत्यङ्गुलिचेष्टास्थले क्लृप्तत्वात् प्रयत्नभेदं विना तदनुपपत्ते-रिति भावः। 'अनुगतकारणेति प्रवृत्तोऽस्मि प्रवृत्तोऽस्मीत्यनु-गतप्रत्ययकारणेत्यर्थः, 'उपाधिरूप इति अखण्डोपाधिरूप इत्यर्थः, गुणगतजात्यनभ्युपगमादिति भावः। 'चिकीर्षाधीनत्वेनेति, चिकी-

---

(१) ननु चतुर्थक्षणपर्य्यन्तस्थायित्वोपगमेनैव तत्र प्रयत्नोत्पत्तिसम्भव इत्यत-आह, उपायेच्छेति।

(२) पञ्चमक्षणपर्य्यन्तस्थायित्वोपगमेऽपि न तादृशकृत्युत्पादसम्भव इत्याह, उपादानप्रत्यक्षस्येति।

लभानमिति भावः। ननु को धर्म्मस्तत्र कार्य्यतावच्छेदक इत्यत आह, 'स चेति, 'ममेति गुणगतजात्यनङ्गीकर्त्तुरित्यर्थः, 'अनुगतेति, अनुगते कारणे चिकी-र्षालक्षणे, 'उपाधिरूपः' तत्तद्व्यक्तित्वरूप इति यावत्, कार्य्यतावच्छेदकाननुग-मस्यादोषत्वात् न त्वनुगतकारणघटित उपाधिश्चिकीर्षाजन्यत्वलक्षण इत्यर्थः,

णामुपलक्ष्याणां अनुगतत्वमपि। यथा गोत्वेण तटस्थे-नोपलक्षिता महिष्यादिव्यावृत्तधानकर्म्मव्यक्तिविशेषाः धेनुपदेनोच्यन्ते न तु गोत्वमपि, तथा चिकीर्षापि,

---

र्षाजन्यतावच्छेदकेनेत्यर्थः, 'अनुगतेन' सर्व्वसाधारणेन, 'उपलक्ष्याणां' चिकीर्षाधीनपदप्रतिपाद्यानां, 'अनुगतत्वं' सर्व्वसाधारणानतिप्रसक्त-धर्म्मावच्छिन्नत्वं, 'यथेति स्वमते दृष्टान्तः,[१] 'तटस्थेन' शक्यविषयेण, 'उपलक्षिताः' प्रमिताः, 'धेनुपदेनोच्यन्ते' धेनुपदजन्यबोधविषया इत्यर्थः, 'न तु गोत्वमपीति, तज्जन्यबोधविषय इति शेषः। शक्यता-वच्छेदकन्तु धानकर्म्मत्वमेव गोत्वस्य प्रयोगोपाधित्वात्[२] तस्य महि-ष्यादिसाधारण्येऽपि न महिष्यादिबोध इति भावः। 'तथा चिकी-

---

(१) गोत्वविशिष्टधानकर्म्मत्वस्य शक्यतावच्छेदकत्वेन शक्तिविषयत्वात् न न्यायमतसाधारण्यं।

(२) तत्पदशक्यविषयत्वे सति स्वाश्रयभिन्नस्य तत्पदजन्यशाब्दबोधव्याव-र्त्तकत्वादित्यर्थः।

---

तज्जन्यत्वे ग्राह्ये तज्जन्यत्वस्यानवच्छेदकत्वादिति। यत्तु अनुगतकारणप्रयो-ज्यानुगतोपाधिरूप इत्यर्थ इति तन्न, तस्यैवानुगतत्वे चिकीर्षाधीनत्वेनानुगत-त्वमित्यग्रिमग्रन्थविरोधात्।

एवञ्च पूर्व्वोक्तानानुगममुद्धरति, 'एवञ्चेति, यथा धूमत्वाद्यवच्छेदेन वह्निजन्यत्वग्रहेऽपि धूमालोकादीनां वह्निजन्यत्वमनुगतं तथा तत्तद्व्यक्ति-तित्वाद्यवच्छेदेन चिकीर्षाजन्यत्वग्रहेऽपि चिकीर्षाजन्यत्वं सर्व्वानुगतमि-त्यर्थः। नन्वेवं चिकीर्षापि लिङादिपदशक्या स्यादित्यत आह, 'यथेति,

एवं जीवनयो। नियतव्यावृत्तकृतिविशेषाणां कृतित्वेन ज्ञानं कारणमिति नाननुगमः। ननु कृतिसाध्ये न कृतिर्विशेषणमसत्त्वात् सत्त्वे वा कृतौ सत्यां ज्ञानं ज्ञाने च कृतिरित्यन्योन्याश्रयः, नोपलक्षणमतिप्रसङ्गादिति चेत्, न, कृतिर्हि ज्ञाने विषयतया विशेषणमेव साध्ये

---

र्षापीति एवं चिकीर्षाजन्यत्वमपीत्यर्थः, न कारणीभूतज्ञानविषय-इति शेषः, किन्तु चिकीर्षाधीनत्वेन प्रमिता व्यक्तिविशेषा एव कारणीभूतज्ञानविषया इति भावः। क्वचित् 'एवं चिकीर्षापीति पाठः, 'कृतित्वेन' कृतिविशेषत्वेन, 'नाननुगम इति न व्यभिचार इत्यर्थः, तथाच प्रवृत्तित्वरूपेण प्रवृत्तिसाध्यताज्ञानं प्रवृत्तौ हेतुरिति भावः। 'कृतिसाध्य इति कृतिसाध्यताज्ञानं प्रवर्त्तकमित्यत्र कृतिसाध्यताज्ञाने इत्यर्थः, 'न विशेषणमिति न तदन्वयिना प्रवृत्तिहेतुत्वेनान्विते-त्यर्थः, 'असत्त्वादिति कृतेः प्रवृत्तिपूर्व्वमसत्त्वादित्यर्थः, 'सत्त्वे वा' प्रवृत्तिपूर्व्वं सत्त्वाभ्युपगमे वा, 'कृतौ सत्यां' कृतावुत्पन्नायां, 'ज्ञानं' कृतिविशिष्टज्ञानं, पूर्व्ववर्त्तीति शेषः, 'ज्ञाने' कृतिविशिष्टज्ञाने, 'नोपलक्षणमिति न ज्ञानान्वयिना प्रवृत्तिहेतुत्वेनानन्वितेत्यर्थः, 'अतिप्रसङ्गादिति, ज्ञानमात्रात् कृत्यसाध्यत्वेन निश्चितेऽपि प्रवृत्ति-प्रसङ्गादित्यर्थः। कृतौ यथोक्तोपलक्षणत्वसत्त्वेऽपि कृतिविशेषत्वेन कृतिविशेषविषयकसाध्यताज्ञानस्यैव हेतुत्वात् ज्ञानमात्रव्यावृत्तिरिति समाधत्ते, 'कृतिर्हीति, 'ज्ञाने' कारणीभूतज्ञाने, 'विषयतया' विषयतासम्बन्धेन, 'विशेषणमेव' तद्विषयकज्ञानाद्यावर्त्तकमेव, 'साध्ये

च परिचायकतयोपलक्षणं अन्यथा इष्टसाधनेऽपीष्टं न विशेषणमसत्त्वात् नोपलक्षणमतिप्रसङ्गात्, लिङ्गज्ञानादौ वा का गतिः। नन्वेवं श्रमेऽपि चिकीर्षा स्यात्तस्यापि चिकीर्षाधीनकृतिसाध्यत्वात् अत्र वदन्ति।

---

चेति किन्तु प्रवृत्तिरूपकार्य्ये इत्यर्थः, 'परिचायकतया' ज्ञानविषयतया कारणतावच्छेदकतया, कारणत्वाभावेनेति शेषः, 'उपलक्षणमिति ज्ञानान्वयिना प्रवृत्तिकारणत्वेनानन्वितेत्यर्थः, विशेषणत्वोपलक्षणत्वयोर्विरोधेऽपि व्यावर्त्तकत्वोपलक्षणत्वयोर्विरोधाभावादिति भावः। 'इष्टसाधने' इष्टसाधनताज्ञाने, 'लिङ्गज्ञानादाविति, तत्रापि लिङ्गं न विशेषणं अतीतानागतलिङ्गस्थलेऽनुमितिपूर्व्वं तदसत्त्वात् नोपलक्षणं ज्ञानमात्रादनुमितिप्रसङ्गादिति भावः। 'नन्वेवमिति, 'एवं' एवमपि प्रवृत्तित्वेन प्रवृत्तिसाध्यताज्ञानस्य हेतुत्वेऽपीति यावत्, 'श्रमेऽपीति, 'श्रमः' नान्तरीयकदुःखविशेषः,[१] 'चिकीर्षा स्यादिति श्रमत्वरूपेण चिकीर्षा स्यादित्यर्थः, अन्यथा सुखत्वादिरूपेण तत्र चिकीर्षायामिष्टापत्तेः, तेन रूपेण प्रवृत्तिः स्यादित्यपि बोध्यं, 'चिकीर्षाधीनकृतिसाध्यत्वादिति स्वजनकक्रियाहेतुप्रवृत्तिसाध्यत्वादित्यर्थः। ननु श्रमे चैत्यवन्दनादिवदिष्टसाधनताज्ञानाभावादेव न चिकीर्षाप्रवृत्ती तैरपि नित्यातिरिक्तस्थले इष्टसाधनतालिङ्गकृतिसाध्यता-

---

(१) दुःखविशेष इति ख०।

---

'लिङ्गज्ञानादाविति अतीतलिङ्गज्ञानादावित्यर्थः। नन्वेवं श्रमेऽपि चिकीर्षा-

**अमस्तु भोजनादिक्रियासाध्यो न तत्कृतिसाध्यः अचिकीर्षितत्वात् कृतेः स्वध्वंससाक्षात्कारातिरिक्ते**

ज्ञानस्यैव चिकीर्षा-प्रवृत्तिविशेषसामग्रीत्वेन वक्ष्यमाणत्वात् । न च मल्लादीनां सार्थकश्रमे रोगनाशादिरूपेष्टसाधनताज्ञानमपि वर्त्तत-इति वाच्यं । तत्रापि श्रमहेतुक्रियाया एव रोगनाशादिसाधनत्वेन श्रमस्येष्टसाधनत्वाभावादिति चेत्, न, इष्टसाधनत्वभ्रमेण तल्लिङ्गक-कृतिसाध्यताज्ञानसम्भवात् भ्रमस्तु ज्ञानद्वयमेकं वा अन्यदेतत्, यत्र श्रमात्मकदुःखध्वंसे उत्कटेच्छा तत्रेष्टसाधनताप्रमाया अपि सम्भ-वाच्च । न च तदानीं तत्र चिकीर्षा-प्रवृत्त्योरिष्टापत्तिरिति वाच्यं । दुःखत्वादिरूपेण दुःखस्येच्छा-प्रवृत्तिविषयत्वे मानाभावेन अङ्कुर-जनने शिलाशकलमिव दुःखत्वादिरूपेण दुःखमपीच्छा-प्रवृत्ति-विषयत्वस्वरूपायोग्यमिति सिद्धान्तात् । न चैवं मल्लादीनां व्या-यामादिश्रमे चिकीर्षा-प्रवृत्त्यनुपपत्तिरिति वाच्यं । तत्रापि तद्धेतु-क्रियायामेव चिकीर्षा-प्रवृत्त्युत्पत्तेर्न तु श्रम इति भावः । 'स्वध्वं-सेति स्वध्वंससाक्षात्कारातिरिक्तं यत् स्वजनकचिकीर्षाया अविषय-स्तदजनकत्वनियमादित्यर्थः, अत्र 'स्वध्वंसः' स्वजन्यो ध्वंसः न तु

---

धीनकृतिसाध्यताज्ञानात् प्रवर्त्तेतेत्यत्र कस्यचित् समाधानमाह, 'श्रम-स्त्विति, नन्वचिकीर्षितमपि तथास्तु इत्यत आह, 'कृतेरिति, कृतित्वेन जनकत्वे नियमोऽयं इत्यत्र स्वध्वंसेत्यादेस्तात्पर्य्यं तेन स्वपूर्व्ववर्त्तिगुणान्तर-ध्वंसे विरोधिगुणत्वेन कृतेर्जनकत्वेऽपि न दोषः, यद्यप्येवमप्यदृष्टादिकं प्रति तत्त्वेन कृतेर्जनकत्वाद्व्यभिचार एव, तथापि तद्भिन्नत्वेनापि विशेषणीयमिति भावः । 'चिकीर्षेति स्वजनकचिकीर्षाविषयमात्र इत्यर्थः, अप्रयोजकत्व-

**चिकीर्षाविषयमात्रे जनकत्वात्, न हि भोजनचिकीर्षाधीनकृत्या गमनं साध्यते इति केचित्, तन्न, गुरुतरभारोत्तोलने कृत्यसाध्ये भ्रमात् प्रवृत्तस्य निगडनिश्चलदेहस्य वा कृतौ सत्यामुत्तोलन-चलनक्रियानुत्पादेऽपि श्रमानुभवात् कृतेरेव कारणत्वात्। न तु तज्जन्यक्रियायाः सुखे व्यभिचाराच्च। न हि सुखं**

---

स्वप्रतियोगिनः, तेन विरोधिगुणतया गुणान्तरनाशकत्वेऽपि न क्षतिः, ध्वंसमात्रात्कारातिरिक्त इति तु न्यायः, ध्वंसव्यवच्छेदस्तु न्यायनयमाश्रित्य तन्मतेऽतिरिक्तस्य तस्यानभ्युपगमात् चिकीर्षितजनकव्यापारान्येत्यपि विशेषणान्न चेष्टायां व्यभिचारः, अपूर्व्वकरणापाटवजन्यशब्दयोस्तास्मन्मते कृत्यजन्यत्वात्[१] याग-दोषयोरेव तज्जनकत्वादिति भावः। 'निगडनिश्चलदेहस्येति, चलने भ्रमात्[२] प्रवृत्तस्येति शेषः। ननु तत्रापि नाडीक्रियात एव श्रम इत्यरुचेराह, 'सुख इति निमित्तसप्तमी सुखमादायेत्यर्थः, 'व्यभिचारात्' स्वध्वंसेत्यादिनियमस्य व्यभिचारात्, व्यभिचारमेव विवृणोति, 'न हीति। केषाञ्चित् समाधानमाशङ्क्य निराकरोति, 'चिकीर्षाजन्य-

---

(१) न तत्र व्यभिचार इति शेषः। (२) कृतिसाध्यताभ्रमादित्यर्थः।

---

निरासायाह, 'न हीति, ननु तत्राप्यङ्गचालनक्रियाजन्यः श्रम इत्यरुचेराह,'निगडेति' आमवातजडीकृतकलेवरस्योत्थातुकामस्येत्यपि बोध्यं, उक्तव्याप्तौ व्यभिचारमाह, 'सुख इति' तस्य स्वजनकचिकीर्षाविषयत्वाभावादिति

कृतिकारणचिकीर्षाविषयः, उपायचिकीर्षाजन्या हि कृतिः न तु सुखचिकीर्षाजन्या। चिकीर्षाजन्यकृतिसाध्यत्वं न श्रमे द्वेषयोनिप्रयत्नादपि तदुत्पत्तेरित्यपरे। तन्न। शत्रुवधस्येष्टसाधतनत्वेन चिकीर्षा-

---

कृतिसाध्यत्वमिति, चिकीर्षाजन्यकृतित्वेन चिकीर्षाजन्यकृतिसाध्यत्वमित्यर्थः, प्रकृते तथैव विवक्षितत्वादिति भावः[१]। 'द्वेषयोनिप्रयत्नादिति, द्वेषस्य योनिः कारणं यो यत्न इत्यर्थः, शत्रुगोचरद्वेषजन्यशत्रुवधगोचरप्रवृत्तितोऽपीत्यर्थः, 'इष्टसाधनत्वेनेति, चिकीर्षाविषयतयेति शेषः, 'यत्नाजनकत्वादिति प्रवृत्त्यजनकत्वादित्यर्थः,

---

(१) तथाच प्रवृत्तित्वावच्छिन्नं प्रति चिकीर्षाधीनकृतित्वावच्छिन्नजनकतानिरूपितजन्यत्वज्ञानं हेतुरिति भावः।

---

भावः। तदेवाह, 'न हीति, तत्रैवान्येषां समाधानमाह, 'चिकीर्षेति, 'शत्रुवधस्येति, प्रतियोगिविषयकद्वेषस्य भिन्नविषयतया गौरवेणाप्रवर्त्तकत्वात् किन्तु लाघवेन समानविषयकेच्छाया एव, नन्वेवं तन्निवृत्तौ द्वेष एव हेतुरुक्तायुक्तिरिति चेत्, न, इष्टत्वात् तदुक्तं कुसुमाञ्जलौ "राग-द्वेषाविनाभावोऽपीत्यादि। न च निवृत्तिप्रयत्नतोऽपि श्रमे पूर्व्वपक्षतादवस्थ्यमिति वाच्यं। निवृत्तिप्रयत्नस्य क्रियां प्रत्यजनकत्वेन तच्छ्रमजनकत्वस्य शङ्कानास्पदतया प्रवृत्तिहेतुत्वस्यैव द्वेषे शङ्कितत्वादित्याहुः। वस्तुतस्तु प्रवृत्तिविरह एव निवृत्तिस्तथाच प्राचीनमतेऽनुशयप्रकाश एवायं ग्रन्थकृत इति विपञ्चितमस्माभिरनुमानप्रकाशे। उभयमपि दूषयति, 'तन्नेति, 'कृत्यन्तरात्' जीवनयोनिप्रयत्नात्,

जन्यकृतिसाध्यत्वात् द्वेषस्य यत्नाजनकत्वात्, द्वेषसिद्धिस्तु शत्रुं द्वेष्मीत्यनुभवबलात्।

यत्तु श्रमः कृतित्वेन कृतिसाध्यो न चिकीर्षाधीन-

---

भिन्नविषयत्वात्[१] प्रवृत्तिं प्रति चिकीर्षाया व्यभिचारप्रसङ्गाच्चेति भावः। नन्वेवं शत्रुवधप्रवृत्तिपूर्व्वं शत्रौ द्वेषे किं मानमित्यत आह, 'द्वेषसिद्धिस्त्विति, तदानीमिति शेषः। न च द्वेषस्य प्रवृत्त्यजनकत्वे निवृत्तिजनकत्वमस्त्येवेति तज्जन्यश्रमे व्यभिचारात् श्रमस्य न तेन रूपेण कृतिसाध्यत्वमिति वाच्यं। निवृत्तेर्भिन्नविषयतया क्रियां प्रत्यजनकत्वेन श्रमाजनकत्वात्, पलायनादिक्रियायाश्च तद्देशवर्ज्जनरूपेष्टसाधनताज्ञानाधीनप्रवृत्तिजन्यत्वादिति भावः[२]।

'यदिति, तथाच चिकीर्षाविषयत्वमेव तादृशकृतिजन्यतावच्छेदकमिति भावः। नन्वेवं भोजनादावपि चिकीर्षा न

---

(१) अजनकत्वे हेतुमाह, भिन्नविषयत्वादिति, तथाच शत्रुविशेष्यकद्वेषान्न शत्रुध्वंसगोचरप्रवृत्तिरिति भावः, यदि चिकीर्षां विना प्रवृत्त्युत्पादस्तदा प्रवृत्तौ चिकीर्षाया व्यभिचारप्रसङ्गाच्चिकीर्षां विना तत्र प्रवृत्त्युत्पाद इति समुदिततात्पर्य्यं।

(२) तथाच चिकीर्षाविषयतद्धर्म्मावच्छिन्नं प्रति चिकीर्षाधीनकृतित्वेन हेतुत्वं श्रमत्वस्य चिकीर्षाविषयतावच्छेदकत्वाभावात् तदवच्छिन्नं प्रति कृतित्वेनैव हेतुत्वमिति भावः।

---

उभयत्र हेतुमाह, 'जीवनयोनीति, यद्यपि चिकीर्षाधीनकृतिमात्रादपि न श्रम इति कृतिविशेषस्तादृशोवाच्यस्तथाच जीवनयोनिकृतिविशेष एव तथास्त्विति नायं परिहारस्तथापि चिकीर्षाधीनकृतौ क्रियाविशेषरूप-

कृतित्वेन, यद्यचिकीर्षितेऽपि श्रमे चिकीर्षाधीन कृतित्वेन कारणता स्यात् तदा चिकीर्षितमेव भोजनं कृत्या साध्यते नाचिकीर्षितं गमनादीति न स्यात्, श्रमवद्गमनेऽपि तज्जन्यत्वप्रसङ्गात्, भोजनादिस्तु चिकीर्षाधीनकृतिविशेषात्, स हि कृतिमात्रं व्यभिचरति जीवनयोनिकृतेस्तदनुत्पादात् । यद्वा श्रमो न भोजनकृतिसाध्यः किन्तु तन्निरन्तरोत्पन्नाज्जीवनयोनिप्रयत्नादेवेति । तन्न । न हि कृतित्वेन तच्छ्रमजनकत्वं, नापि कृत्यन्तरादेव श्रमोत्पत्तिः, जीवनयोनिप्रयत्ने सत्यपि भारोद्वहनादिकमकुर्व्वतस्तादृशश्रमाननु-

---

स्यात् तस्यापि श्रमवत् कृतिमात्रजन्यत्वादित्यत आह, 'भोजनादिस्त्विति, जीवनयोनियत्नसाधारणकृतित्वेन श्रमं प्रति जनकत्वमुक्त्वा जीवनयोनियत्नत्वेन तदाह, 'यद्वेति, तदुभयं दूषयति, 'तन्नेति, 'तच्छ्रमजनकत्वं' तस्याः श्रमजनकत्वं, 'कृत्यन्तरात्' जीवनयोनियत्नात्,

---

विषयवैलक्षण्यात्ततः श्रमः, न च जीवनयोनियत्ने तथेति वैषम्यमित्याशयः, 'तादृशेति सम्पातायातं, श्रमाननुभवेनेत्येव विवक्षितं, 'तस्येति जीवनयोनियत्नस्येत्यर्थः, श्रमहेतुत्वे किं बाधकमत आह, 'अन्यथेति, 'तदनुवृत्तौ' खेदानुवृत्तौ, 'श्रमानुवृत्तिप्रसङ्गात्' स्वकारणीभूतश्रमानुवृत्तिप्रसङ्गादित्यर्थः, जीवनयोनिप्रयत्नानुवृत्तौ तज्जन्यश्रमानुवृत्तिप्रसङ्गादित्यर्थः, इत्यन्ये । एकदेशिनां समाधानं निरस्य स्वयं समाधत्ते 'नैवमिति । श्रमस्येति इष्टसाधने कृति इत्यर्थः ।

भवेन तस्य श्रमाजनकत्वात् तस्मात् भोजनादिवत् श्रमविशेषाणामपि भोजनादिकृतिसाध्यत्वमनन्यगतिकत्वात्। सुप्तस्य स्वेदाद्यनुमितः श्रमः तज्जन्य इति चेत्, न, स्वेदादेः श्रमान्यहेतुकत्वात् अन्यथा जागरेऽपि तदनुवृत्तौ श्रमानुवृत्तिप्रसङ्गात् इति मैवं, स्वेच्छाधीनत्वस्य कृतिविशेषणत्वात्, श्रमश्च नियमतो-

---

'तस्य' जीवनयोनियत्नस्य, 'श्रमविशेषाणां' भोजनादिनान्तरीयकश्रमाणां, 'भोजनादिकृतिसाध्यत्वमिति, न तु जीवनयोनिकृतिसाध्यत्वमिति शेषः। 'तज्जन्य इति जीवनयोनियत्नजन्य इत्यर्थः, तथाच श्रमसामान्यएव तस्य जनकत्वमेकच क्लृप्तत्वादित्यभिमानः, 'श्रमान्येति, शरीरस्य पाञ्चभौतिकत्वान्निद्रायामव्याहतगतिना वायुना आनीतवहिश्चरतेजोभागेन शरीरस्थो वह्निः प्रज्वाल्यते तेन च फेनायितं जलं रोमादिसन्धिना निर्गच्छतीति सिद्धान्तादिति भावः। 'तदनुवृत्ताविति जीवनयोनियत्नानुवृत्तावित्यर्थः, एतत्सर्व्वं समाधिसौकर्य्यादुक्तं। वस्तुतस्तु श्रमस्य चिकीर्षाधीनकृतित्वेन तादृशकृतिसाध्यत्वाभावेऽपि तद्भ्रमाच्चिकीर्षा-प्रवृत्त्यापत्तेर्दुर्व्वारत्वात्। न चेष्टापत्तिः, स्वरूपायोग्यत्वभङ्गप्रसङ्गादित्यपि बोध्यं। 'स्वेच्छाधीनत्वस्येति स्वप्रकारकेच्छाधीनत्वस्येत्यर्थः, 'स्वपदं चिकीर्षा-प्रवृत्तिप्रकारीभूतधर्म्मपरं, 'कृतिविशेषणत्वादिति, चिकीर्षाधीनपदोपलक्षिते प्रवृत्तित्वावच्छिन्ने

---

इष्टसाधनीभूतमल्लादेः श्रमः स्वेच्छाधीनकृतिसाध्यप्रवृत्तिविषयश्चेति भावः। न च फलेच्छाया हेतुत्वात् तां विना कथं श्रमे प्रवृत्तिरापाद्यत इति वाच्यं।

न्येच्छाधीनकृतिसाध्यः श्रमे दुःखत्वेनेच्छाविरहादत-

विशेषणत्वादित्यर्थः, तथाच प्रवृत्तित्वप्रकारकस्वप्रकारकेच्छाधीन-प्रवृत्तिसाध्यताज्ञानत्वेन हेतुत्वमिति भावः। 'अन्येच्छा' अन्यप्रकारकेच्छा, एवमग्रेऽपि, 'दुःखत्वेन' दुःखत्वप्रकारेण, 'अधीनत्वं' प्रयोज्यत्वं, न तु जन्यत्वं, तेन सुखत्वप्रकारकेच्छायाः फलेच्छात्वेन प्रवृत्तावहेतुत्वेऽपि न सुखे सुखत्वप्रकारेण चिकीर्षानुपपत्तिः। न च स्वप्रकारकेच्छाधीनत्वस्य कृतिविशेषणत्वेऽपि तादृशकृतिसाध्यत्वस्यैव भ्रमात् श्रमत्वरूपेण श्रमे चिकीर्षा-प्रवृत्त्यापत्तिर्दुर्व्वारा इष्टापत्तौ च स्वरूपायोग्यताव्याघातात् विशेषणवैयर्थ्यप्रसङ्गाच्च यथोक्तस्थलेऽपीष्टापत्तेः सम्भवादिति वाच्यं। स्वप्रकारकेच्छाधीनत्वं हि न ज्ञातं प्रयोजकं किन्तु वस्तुगत्या या स्वप्रकारकेच्छाधीना प्रवृत्तिः प्रवृत्तित्वेन तत्साध्यताज्ञानं हेतुरिति श्रमत्वप्रकारकेच्छाधीनकृतेरप्रसिद्धतया तादृशभ्रमासम्भवात्। अतएव स्वविषयकत्वमपहाय स्वप्रकारकत्वपर्य्यन्तानुधावनं श्रमेऽपि सुखत्वाद्यारोपे स्वेच्छाधीन-प्रवृत्तेः सौलभ्येनारोपसम्भवात्। न च स्वप्रकारकेच्छाधीनत्वस्य स्वरूपसतो विशेषणत्वे प्रवृत्तिपर्य्यन्तानुधावनमफलं तावतैव जीवन-योनिकृत्यादिव्यावृत्तेः किन्तु कृतित्वेन स्वप्रकारकेच्छाधीनकृति-साध्यताज्ञानत्वेन हेतुत्वमस्तु लाघवाभावेऽपि विनिगमनाविरहेण

इष्टसाधनतालिङ्गोपस्थापकत्वेनाहेतुत्वात् अन्यथा तन्मते नित्ये प्रवृत्तिर्न स्यात् फलेच्छायास्तत्राभावादिति भावः। 'स्वचिकीर्षेति, यद्यपि प्रवर्त्तकज्ञानं न स्वेच्छाधीनत्वं चिकीर्षाधीनत्वं वावगाहते किन्तु तदुपलक्ष्यकृतिविशेषः

एवान्येच्छाजन्यकृतिसाध्यत्वेन श्रमो नान्तरीयक इत्युच्यते। स्वचिकीर्षाधीनत्वन्तु न कृतौ विशेषणं गौरवात्।

---

तादृशधियो हेतुत्वस्य दुर्व्वारत्वात् इति वाच्यं। तेन रूपेण हेतुत्वे प्रवृत्तित्वेन प्रवृत्तिसाध्यताव्यतिरेकनिश्चयदशायामपि कृतित्वेन कृतिसाध्यताज्ञानस्य सम्भवात् तस्मात् प्रवृत्त्यापत्तेः। न च तत्रापि कृतित्वेन कृतिसाध्यताव्यतिरेकनिश्चये प्रवृत्तित्वेन प्रवृत्तिसाध्यताज्ञानात् प्रवृत्त्यापत्तिरिति वाच्यं। सामान्याभावज्ञाने विशेषाभावज्ञानस्य औत्सर्गिकतया तदानीं प्रवृत्तित्वेन प्रवृत्तिसाध्यताज्ञानस्यैवानुत्पत्तेः, यस्य तु कदाचित्तत्सत्त्वेऽपि तज्ज्ञानं तस्य प्रवृत्ताविष्टापत्तेः प्रवृत्तिसाध्यताज्ञानसत्त्वे प्रवृत्त्युत्पादस्य सर्व्वानुभवसिद्धत्वादिति भावः। 'अतएवेति श्रमत्वप्रकारकेच्छाविरहादेवेत्यर्थः, नियमत इति शेषः। 'अन्येच्छा' अन्यप्रकारकेच्छा, 'स्वचिकीर्षाधीनत्वन्त्विति स्वप्रकारकचिकीर्षाधीनत्वन्त्वित्यर्थः, 'गौरवादिति चिकीर्षात्वस्य कृतिसाध्यत्वप्रकारकेच्छात्वरूपस्य कारणतावच्छेदककोटिप्रवेशे गौरवादित्यर्थः।

अत्र गुरुचरणाः। स्वप्रकारकेच्छाधीनत्वस्य प्रवृत्तिविशेषणत्वेऽपि सुखत्व-दुःखाभावत्वरूपेण सुख-दुःखाभावयोस्तत्प्रकारकेच्छाधीनकृतिसाध्ययोः साध्यतया प्रवृत्त्यापत्तिर्दुर्व्वारा तथापि भोगादिरूपेष्ट-

---

वस्तुत एव तदुभयमस्तीति किं लाघवेन तथापि कारणतायाश्चकेनावच्छेदकतया तत्र धर्म्मान्तरमवश्यं ग्रहीतव्यमिति तत्र लाघवावतार इति भावः। 'गौरवादिति, कृतिसाध्यत्वप्रकारकत्वाभावप्रवेशादिति भावः। 'धर्म्मान्तरं'

साधनताज्ञानसम्भवात् । न चेष्टापत्तिः, तयोश्चिकीर्षाविषयत्वेऽपि श्रमत्वेन श्रमवत् साध्यतया[१] प्रवृत्तिविषयत्वस्वरूपायोग्यत्वमिति सिद्धान्तात् तत्सिद्धान्तानादरे श्रमस्य स्वरूपायोग्यत्वमिति सिद्धान्तस्यानादरणीयतापातात् । अथ विशेष्यतावच्छेदकभेदेन कृतिसाध्यताज्ञानचिकीर्षयोः प्रवृत्तिं प्रति कार्य्य-कारणभावभेदात् सुखत्वादिरूपविशेष्यतावच्छेदकान्तर्भावेण कार्य्य-कारणभावस्य क्वचिदप्यकल्पनादेव तत्र न प्रवृत्त्यतिप्रसङ्गः कृतिसाध्यताज्ञान-चिकीर्षयोर्विषयनिष्ठतया हेतुत्वपक्षेऽपि सुखत्वावच्छिन्नविशेष्यताव्यावृत्तविशेष्यताघटितप्रत्यासत्त्यैव कृतिसाध्यताज्ञान-चिकीर्षयोः प्रवृत्तिहेतुत्वान्न तत्र प्रवृत्तिप्रसङ्गः चिकीर्षा च तत्र भवत्येवेति चेत्, तर्हि स्वप्रकारकेच्छाधीनत्वमपि स्वरूपसद्विशेषणं व्यर्थं श्रमेऽप्यनयैव दिशा श्रमत्वरूपेण चिकीर्षा-प्रवृत्त्यतिप्रसङ्गवारणसम्भवात् । न च स्वप्रकारकेच्छाधीनकृतिसाध्यताव्यतिरेकनिश्चये न प्रवृत्तिरिति तद्विशेषणमावश्यकमिति वाच्यं । स्वप्रकारकेच्छाधीनत्वस्य स्वरूपसत एव विशेषणतया तादृशज्ञानसत्त्वेऽपि वस्तुगत्या या तादृशी कृतिः कृतित्वेन तत्साध्यताधीसम्भवात्[२] तत्रापि तदानीं प्रवृत्तेर्दुर्व्वारत्वात् । अथेच्छोद्देश्यत्वं द्विधा फलत्वेनोद्देश्यत्वं उपायत्वेनोद्देश्यत्वञ्च अन्यथेष्टसाधनताज्ञानेच्छयोः कार्य्य-कारणभावस्यैव दुर्व्वचत्वादित्यग्रे स्फुटीभविष्यति तथाच स्वप्रकारकेच्छाधीनेत्यत्र स्वप्रकारकपदमुपायत्वेन यदुद्देश्यत्वं

(१) अभेदे तृतीया तथाच साध्यत्वाभिन्नप्रवृत्तिविषयत्वेत्यर्थः ।

(२) विशेषाभावनिश्चयस्य सामान्यवत्ताज्ञानविरोधित्वादिति भावः

अन्ये तु कृतिगतं धर्म्मान्तरमेव उद्देश्यत्वं तद्विशिष्ट-कृतिसाध्यश्च न श्रमः अचिकीर्षितत्वात् किन्तु कृति-

---

तदवच्छेदकतारूपप्रकारतापरं तेन श्रमत्व-सुखत्व-दुःखाभावत्वानां त्रयाणामेव निरासः सुख-दुःखाभावयोः साध्यतया प्रवृत्तिविषयत्व-स्वरूपायोग्यत्ववत् सुखत्व-दुःखाभावत्वाभ्यां उपायतयोद्देश्यत्वेनापी-च्छाविषयत्वस्वरूपायोग्यत्वादिति चेत्, तथापि स्वत्वस्यानुगतस्या-भावात् प्रातिस्विकयागत्व-पाकत्वाद्यन्तर्भावेणैव कार्य्य-कारणभावो निर्वक्तव्यः तथाच श्रमादिस्थले प्रवृत्तेरलीकतया याग-पाकादिस्थले क्लृप्तयावद्विशेषसामग्रीबाधादेव श्रमादौ प्रवृत्त्यतिप्रसङ्गवारणसम्भवा-दिति प्राञ्चः ।

मीमांसकैकदेशिमतमाह, 'अन्ये त्विति, 'धर्म्मान्तरमेवेति, तद्विशिष्टकृतिसाध्यताज्ञानमेव प्रवर्त्तकतया गुरोरभिमतमिति भवः । 'तद्विशिष्टेति उद्देश्यत्वविशिष्टकृतित्वेन उद्देश्यत्वविशिष्टकृतिसाध्यस्ये-त्यर्थः, यथाश्रुते भोजनादिकृतेरेव श्रमजनकतया भोजनादिवत् श्रमस्याप्युद्देश्यत्वाश्रयकृतिजन्यत्वादसङ्गतिः, 'अचिकीर्षितत्वादिति, चिकीर्षितं प्रत्येव तेन रूपेण कृतेः कारणत्वेन कार्य्यतावच्छेदका-नाक्रान्तत्वादिति भावः । 'कृतिमात्रसाध्य इति प्रवृत्तित्वेन प्रवृत्ति-

---

मनित्यं, 'अचिकीर्षितत्वादिति चिकीर्षितस्यैव तादृशकृतिसाध्यत्वाभ्युपगमा-दिति भावः । 'अतएवेति यत एव कृतिमात्रसाध्यः श्रमोऽतएव, कर्म्म कष्टाज्जातं कष्टं श्रमसम्बलितमिति सार्व्वलौकिकानुभव इति भावः । धर्म्मा-

मात्रसाध्यः । अतएव कष्टं कर्म्मेत्यनुभवोलोकानां । एवं चिकीर्षायां ममैकं कृतिसाध्यत्वं प्रयोजकं तव तु कृति-साध्यत्वे सतीष्टसाधनत्वं सुखत्वं दुःखाभावत्वञ्चेति च-

---

मात्रसाध्य इत्यर्थः, यथाश्रुते जीवनयोनियत्नादपि तदुत्पत्तिप्रस-ङ्गात् । ननु यदि श्रमस्य नोद्देश्यत्वविशिष्टकृतित्वेन कृतिसाध्यता तदा तादृशप्रयत्नात् श्रमानुत्पत्त्या प्रवृत्तिमात्रस्य श्रमजनकत्वानु-भवो न स्यादित्यत आह, 'अतएवेति यत एव प्रवृत्तित्वेन प्रवृ-त्तिमात्रसाध्यता अतएव, 'कर्म्म' प्रवृत्तिमात्रं, 'कष्टं' श्रमजनकं इत्यनुभवोलोकानामित्यर्थः, कारणतावच्छेदकस्य प्रवृत्तित्वस्य उद्दे-श्यत्वविशिष्टप्रयत्नसाधारणतया ततोऽपि श्रमोत्पत्तेरिति भावः । अत्रेदमस्वरसवीजं तथा सति भोजनादावपि चिकीर्षा प्रवृत्तिश्च न स्यात् तत्रापि तथा जनकत्वे मानाभावात् उक्तक्रमेणैव उपपत्ते-स्तादृशधर्म्मे मानाभावाल्लाघवेन कारणतावच्छेदकतया तत्कल्पने साक्षादुपपादकतया ज्ञान एव तत्कल्पनौचित्यात् एककारणपरि-शेषापत्तेः । किञ्च श्रमे तादृशकृतिसाध्यत्वाभावेऽपि तद्भ्रमात् चिकीर्षा-प्रवृत्त्यापत्तिर्दुर्व्वारा इष्टापत्तौ स्वरूपायोग्यत्वव्याघाता-दित्यनुसन्धेयं । इदानीं मीमांसकः स्वमते नैयायिकनयापेक्षया लाघवमुपसंहारव्याजेन दर्शयति, 'एवमिति, 'प्रयोजकं' ज्ञानवि-षयतया कारणतावच्छेदकं, 'तव तु' नैयायिकस्य तु, 'कृतिसाध्यत्वे सतीष्टसाधनत्वमिति कृतिसाध्यत्वमिष्टसाधनत्वञ्चेत्यर्थः, तेन न

---

न्तरकल्पने गौरवमिति विपरीतं तदाह, 'एवमिति, 'चतुष्टयमिति, सत्यन्तं

तुष्टयं, इच्छाप्रयोजकन्तु मम सुखत्वं दुःखाभावत्वञ्चेति द्वयं, वृष्टिसाध्ये सुखे हीच्छावृष्टिमपि विषयीकरोति, न त्विष्टसाधनत्वेन तच्चेच्छा साधनत्वस्येच्छाविरोधि-

---

चतुष्टयत्वानुपपत्तिः, सति सुखे भोगस्यावश्यकत्वान्न तस्य काम्यत्वमिति न भोगत्वमादायाधिक्यं, यदि च सोऽपीच्छाविषयस्तदा तदादाय पञ्चत्वं बोध्यं, बलवदनिष्टाननुबन्धित्वज्ञानस्य हेतुत्वे विवादात्तन्नोक्तं, 'इच्छाप्रयोजकञ्चेति कृतिसाध्यत्वाप्रकारकेच्छाप्रयोजकञ्चेत्यर्थः, 'द्वयमिति, भोगस्येच्छाविषयत्वे भोगत्वमादाय त्रयं बोध्यं। नन्वेवं वृष्टिर्भवत्विति कृतिसाध्यत्वाप्रकारिका वृष्टाविच्छा न स्यादत आह, 'वृष्टीति वृष्टिसाध्यं सुखं भवत्वित्याकारिका वृष्टिसाध्यत्वप्रकारिका सुखेच्छेत्यर्थः, 'वृष्टिमपीति, विशेषणतयेति शेषः, 'इष्टसाधनत्वेन' इष्टसाधनताज्ञानेन, 'तच्चेच्छेति वृष्टिर्भवत्विति स्वातन्त्र्येण तच्चेच्छेत्यर्थः, 'साधनत्वस्येति साधनत्वस्य सिद्धमात्रधर्मतया तज्ज्ञानस्येच्छाविरोधित्वादित्यर्थः, तथाच वृष्टिर्भवत्वित्याकारिकेच्छायाः सर्व्वथैवापलापः। न च तथापि कपाल-हविराद्युपादानेच्छा कथं स्यात्तस्या अपि कृतिसाध्यत्वाप्रकारकत्वादिति वाच्यं। गुरुनये उपादानेच्छायाः प्रवर्त्तकत्वानभ्युपगमेन तादृशेच्छाया अप्यसिद्धेः, तन्नये

---

सर्व्वत्रान्वितं, कृतिसाध्यत्वमादायैव चतुष्टं बोध्यं, भोगेऽपि चिकीर्षासम्भवात्तमादाय चतुष्टयमित्यन्ये, 'द्वयमिति, भोगेच्छाभ्युपगमे भोगत्वमपि बोध्यं। नन्वेवं वृष्टाविच्छा न स्यादित्यत आह, 'वृष्टीति, सुखेच्छायां सुखत्वमिवावच्छेदकतया वृष्टिरपि विषय इति भावः।

त्वात्। तव तु त्रयं, विषभक्षणे तु कृतिसाध्यत्वेऽपि बलवदनिष्टसाधनत्वेन चिकीर्षा नास्तीति कृतौ चिकीर्षाजन्यत्वं विशेषणमिति कश्चित्, तत्तुच्छं, एवं हि

---

चिकीर्षाविषयसाधनत्वेनोपादानप्रत्यक्षस्य साक्षादेव प्रवर्त्तकत्वादिति भावः। 'तव' नैयायिकस्य, 'त्रयमिति, इष्टसाधनत्वमादाय भोगस्य काम्यत्वे भोगत्वमादाय चतुष्टयं बोध्यं, तदयं निष्कर्षः मीमांसकनये चिकीर्षात्वावच्छिन्नं प्रति कृतिसाध्यताज्ञानं हेतुः कृतिसाध्यत्वाप्रकारकेच्छां प्रति च सुखत्व-दुःखाभावत्वज्ञानं सुखत्व-दुःखाभावत्वातिरिक्तरूपेण कृतिसाध्यत्वाप्रकारिकेच्छायाः तन्मते अलीकत्वादिति कार्य्य-कारणभावत्रयं, नैयायिकनये सामान्यतस्तत्तदर्थीच्छात्वावच्छिन्नं प्रति तत्साधनत्वज्ञानत्वेन सुखत्वप्रकारकेच्छां प्रति सुखत्वप्रकारकज्ञानत्वेन दुःखाभावत्वप्रकारकेच्छां प्रति दुःखाभावत्वप्रकारकज्ञानत्वेन चिकीर्षात्वावच्छिन्नं प्रति कृतिसाध्यताज्ञानत्वेन हेतुत्वमिति कार्य्य-कारणभावचतुष्टयमिति भावः। चिकीर्षाजन्यकृतिसाध्यताज्ञानं प्रवर्त्तकं तत्र चिकीर्षाधीनत्वविशेषणप्रयोजनं यत् केचिदवदन्ति तदुपन्यस्य दूषयति, 'विषेति, 'इतीति, तत्र चिकीर्षाप्रसङ्गवारणायेति शेषः, 'विशेषणमिति, विषभक्षणस्य न चिकीर्षा-

---

प्रवर्त्तकज्ञाने चिकीर्षाधीनत्वविशेषणप्रयोजनं यत् केश्चिदुक्तं तदुपन्यस्य निराकरोति, 'विषेति। 'एवं हीति, द्वेषदशायां निग्रहस्तु नास्त्येव तत्सत्त्वे वा ततोऽपि तदनुत्पत्तेस्तस्य निवृत्तिरूपत्वादिति भावः। तथापि विषभक्षणाद्यावृत्त्यर्थं नैतद्विशेषणं ततस्तद्व्यावृत्त्यभावादिति भाव इति प्रकाशः।

विषभक्षणं कृतिसाध्यमेव न स्यात् जीवनयोनिकृते-स्तस्यानुत्पत्तेरिति व्यर्थं विशेषणं।

स्यादेतत् इष्टसाधनताभ्रमाद्*विषभक्षणे चैत्यवन्दने च चिकीर्षाजन्यकृतिसाध्यत्वमस्ति ज्ञानप्रयुक्तत्वात् कार्य्यत्वस्य, तथाच सञ्जातबाधोऽपि तत्र कार्य्यत्वज्ञानात् प्रवर्त्तेत तथा तृप्तोऽपि भोजने।

---

धीनकृतिसाध्यमित्यभिमानः। अभिमानं निराकरोति, 'एवं हीति, चिकीर्षाजन्यकृत्यसाध्यत्वे हीत्यर्थः, 'जीवनयोनिकृतेरिति, निवृत्तेश्चेति शेषः, 'व्यर्थं विशेषणमिति, कृतिसाध्यत्वाभावेनैव तत्रातिप्रसङ्गवारणसम्भवात् भ्रममादायातिप्रसङ्गस्य विशेषणदानेऽप्यविशेषादिति भावः।

नैयायिकः शङ्कते, 'स्यादेतदिति, 'इष्टसाधनताभ्रमादिति बलवदनिष्टाननुबन्धीष्टसाधनताभ्रमादित्यर्थः, उत्तरमिति शेषः, तेनोभयमतसाधारण्यं, भ्रमश्च न्यायनये विशिष्टज्ञानं तन्मते चाग्टहीतासंसर्गकज्ञानद्वयमित्यन्यदेतत्। 'विषभक्षण इति, विषभक्षणे बलवदनिष्टानपुबन्धित्वभ्रमात् कृतिसाध्यत्वं, चैत्यबन्धने च इष्टसाधनताभ्रमादिति बोध्यं। 'कृतिसाध्यत्वमस्ति स्वकृतिसाध्यत्व-

*'भ्रमादिति, नैयायिकस्य मते भोजन इति। न च फलेच्छाविच्छेदप्रतिबन्धक इति वाच्यं। तस्याः प्रवर्त्तकज्ञानोपक्षीणत्वादन्यथा तन्मते नित्यप्रवृत्तिर्न स्यादित्याशयादिति प्रकाशः।

ननु स्वकृतिसाध्यतानुभवस्तथा, अन्यथेष्टसाधनतास्मरणे विषभक्षणेऽपि प्रवर्त्तेत, न चेष्टसाधनताज्ञानं

मस्ति, 'ज्ञानप्रयुक्तत्वात्' इष्टसाधनताज्ञानप्रयुक्तत्वात्, 'कार्य्यत्वस्य' कृतेः, प्रयुक्तत्वञ्च तन्मये कारणतावच्छेदकविधया[१] अस्मन्मते च कारणविधयेत्यन्यदेतत्। 'कार्य्यस्येति पाठे कृतिरूपकार्य्यस्येत्यर्थः, 'मज्ञातबाधोऽपीति इष्टासाधनत्व-बलवदनिष्टजनकत्वज्ञानवानपीत्यर्थः, 'तच' विषभक्षण-चैत्यवन्दनयोः, 'कार्य्यत्वज्ञानादिति स्वकृतिसाध्यत्वस्मरणादित्यर्थः, इदमुपलक्षणं पाकादावपि मज्ञातबाधदशायां तथा प्रसङ्गो बोध्यः, 'कृप्तोऽपीति। न च फलेच्छाविरहादेव न तत्र प्रवृत्तिरिति वाच्यं। फलेच्छाया नित्यस्थले व्यभिचारेण भिन्नविषयकत्वेन[२] चाजनकत्वादिति भावः।

अत्र कस्यचित् समाधानं शङ्कते, 'स्वकृतीति, 'तथा' गुरुमते प्रवृत्तिहेतुः, 'अन्यथा' कृतिसाधारणज्ञानमात्रस्यैव गुरुमते प्रवर्त्तकत्वे, 'इष्टसाधनतास्मरण इति निर्धर्म्मितावच्छेदकप्रमुष्टतत्ताकेष्टसाधनतास्मरण इत्यर्थः, मज्ञातबाध इति शेषः, 'प्रवर्त्तेतेति तन्मते चैत्यवन्दनादौ प्रवर्त्तेत, अनुभवस्य हेतुत्वे च पक्षतावच्छेदकप्रकारेणेष्टसाधनत्वरूपलिङ्गज्ञानाभावे कृतिसाध्यतानुभवाभावादेव न विषभक्षणादौ प्रवृत्तिरिति भावः। 'न चेति, प्रकृत इति शेषः,

(१) इष्टसाधनतालिङ्गकेष्टसाधनताज्ञानविशिष्टकृतिसाध्यताज्ञानस्य कारणतायामिष्टसाधनताज्ञानस्य कारणतावच्छेदकत्वमिति तात्पर्य्यं।

(२) ननु काम्यगोचरप्रवृत्तित्वमेव कार्य्यतावच्छेदकं वाच्यमतो न व्यभिचार इत्यत आह, भिन्नविषयकत्वेन चेति।

वेदोवाऽनुभावकमस्तीति चेत्, न, वस्तुतस्तत्र* कृति-साध्यत्वे लिङ्गान्तरेणाप्तवाक्येन वा तदनुभवसम्भवात् लिङ्गाभासाच्छब्दाभासाद्वा अप्रवृत्तिप्रसङ्गाच्च, भेदाग्रहवादिनस्तत्र तव तदनुभवाभावात्, मैवं, स्वविशे-

---

'इष्टसाधनताज्ञानमिति पचतावच्छेदकचैत्यवन्दनत्वादिप्रकारेणेष्ट-साधनतारूपलिङ्गज्ञानमित्यर्थः, 'अनुभावकं' कृतिसाध्यतानुभावकं, आद्यस्तनपानस्य प्रवृत्तौ व्यभिचारसत्त्वेऽपि प्रौढ्या दूषणान्तरमाह, 'वस्तुत इति वस्तुगत्येत्यर्थः, 'तत्र' विषभक्षणादौ, 'तदनुभवसम्भवा-दिति मज्ञातबाधतादशायामपि कृतिसाध्यतानुभवसम्भवादित्यर्थः, अनुभवस्य हेतुत्वे व्यभिचारमप्याह, 'लिङ्गाभासादिति, 'अप्रवृत्ति-प्रसङ्गादिति कृत्यसाध्ये गुरुतरभारोत्तोलनादौ प्रवृत्त्यसम्भवादित्यर्थः, 'भेदाग्रहवादिन इति स्वकृतिसाध्यताभेदाग्रहमात्रवादिन इत्यर्थः, अन्यथाख्यातेरनङ्गीकारादिति भावः। 'तदनुभवाभावादिति, तथाच स्वकृतिसाध्यताज्ञानसामान्यमेव प्रवृत्तिहेतुर्न तु तदनुभ-वमात्रमिति तत्र स्वकृतिसाध्यतास्मरणात् प्रवृत्त्यापत्तिर्दुर्वारेति

---

* दूषणे सत्येव दूषणान्तरमाह, 'वस्तुत इति, 'भेदाग्रहेति, तथाच स्मृतिसाधारणं कृतिसाध्यताज्ञानमेव हेतुः तच्चात्रास्त्येवेति प्रवृत्त्यापत्तिरिति भावः। न च भावियौवनराज्यातिप्रसङ्गवारणायेदानीन्तनकृतिसाध्यताज्ञानं प्रवर्त्तकं स्मरणे चानुभवागोचरकालविशेषस्याभावात् कथं ततः प्रवृत्त्या-पत्तिरिति वाच्यं। स्मृत्यापि स्वकालस्यानुभवागोचरस्यैव ज्ञानसामान्यसा-मग्रीमहिम्ना विषयीकरणात् अतीतत्वाद्यगोचरज्ञानस्य वर्त्तमानसमयविष-

भावः। यद्यपि सञ्जातबाधस्य स्वकृतिसाध्यतास्मरणात् कथं प्रवृत्त्यापादनं भाविधौवराज्ये प्रवृत्त्यतिप्रसङ्गवारणाय इदानीन्तनस्वकृतिसाध्यताज्ञानस्यैव प्रवर्त्तकत्वेन तदभावात् इदानीमन्तर्भावेण कृतेः प्रागननुभूतत्वेन स्मरणायोगात्। न च तन्मते अतीतत्वाद्यगोचरज्ञानस्य विषयनिष्ठवर्त्तमानत्वविषयतानियमादनुभवागोचरस्यापीदानीन्तनत्वस्य कृतौ भानमिति[१] वाच्यं। प्रमुष्टतत्ताकज्ञाने मुख्यविशेष्यनिष्ठवर्त्तमानताभानस्यैव तैः स्वीकारादिदानीन्तनकृतेः पूर्वाननुभूतत्वेन पूर्वानुभूतकृतावेव इदानीन्तनत्वभानाभ्युपगमे अन्यथाख्यात्यापत्तेश्च। किञ्च इदानीन्तनकृत्यनुत्पादेन इदानीन्तनकृतिसाध्यत्वस्य[२] बाधात् तत्र तादृशकृतिसाध्यत्वस्मरणाभ्युपगमे अन्यथाख्यात्यापत्तिस्तथापि स्वकृतिसाध्यतास्मरणादेव आद्यस्तनपानप्रवृत्त्यनुरोधात् यत्र चिकीर्षायामपि न भोजनादौ कुतश्चित्प्रतिबन्धकात् प्रवृत्तिस्तत्र इदानीन्तनकृतेरप्रसिद्धा तत्साध्यताज्ञानाभावात् चिकीर्षाया असम्भवाच्च कृतावुपस्थितेदानीन्तनत्वासंसर्गाग्रहसहकृतस्वकृतिसाध्यताज्ञानमेव तन्मते प्रवर्त्तकं तथाच प्रकृतेऽपि ज्ञानमात्रस्यैव स्वोत्पत्तिक्षणविषयकत्वनियमेन स्मृतितः उपस्थितस्य इदानीन्तनत्वस्य[३] कृतावसंसर्गाग्रहात्सामान्यतः स्वकृतिसाध्यताविशिष्टस्मरणाच्च प्रवृत्त्यापत्तिरित्यभिप्रायः।

गुरुचरणास्तु इष्टसाधनताज्ञानस्याहेतुत्वे सञ्जातबाधदशायामपि

(१) कृतौ स्मृतौभानमितीति क, ग०।

(२) इदानीन्तनवस्त्वन्तरसाध्यककृतिसाध्यत्वस्य।

(३) उत्पत्तिक्षणत्वमेव इदानीन्तनत्वं।

षणवत्ताप्रतिसन्धानजन्यं हि कार्य्यताज्ञानं प्रवर्त्तकं तथा हि काम्ये पुरुषविशेषणं कामना ततः काम्य-साधनताज्ञानेन याग-पाकादौ कार्य्यताज्ञानं, नित्ये

---

शब्दाभास-लिङ्गाभासादिना इदानीन्तनस्वकृतिसाध्यताभ्रमात् चैत्य-वन्दनादौ प्रवृत्त्यापत्तिः वस्त्वन्तरविषयकतादृशप्रवृत्त्यन्तरमादाय अनुभूयमानारोपसम्भवात् । न च तन्मते तादृशकृतिसाध्यताविशि-ष्टज्ञानमेव प्रवर्त्तकमिति न भ्रमात् प्रवृत्त्यापत्तिरिति वाच्यं । तथा सति निगडनिश्चलदेहस्य कृत्यसाध्ये गुरुतरभारोत्तोलनादौ प्रवृत्त्यनुपपत्तेः अन्यथाख्यात्यनभ्युपगमेन विशिष्टज्ञानाभावात् । किञ्च इदानींपदेन स्थूलकालस्यैव प्रवर्त्तकज्ञाने निवेशादसञ्जातबाधकाले कृतेरुदयेन तत्कालवर्त्तमानस्वकृतिसाध्यताप्रमापि सञ्जातबाधदशायां लिङ्गान्तरादिना सम्भवतीत्येव दूषणं द्रष्टव्यमिति प्राहुः ।

'स्वविशेषणेति स्वं प्रवर्त्तमानः पुरुषः तस्य यद्विशेषणं तन्निष्ठोयो-धर्म्मस्तद्वत्ताज्ञानजन्यमित्यर्थः, 'पुरुषविशेषणं' पुरुषवृत्तिधर्म्मः, 'ततः' तदनन्तरं, 'कार्य्यताज्ञानं' कार्य्यतानुमानं, स्वविशेषणवत्ताप्रतिसन्धा-

---

यतानियमादित्याशयादित्याहुः । 'स्वविशेषणेति स्वस्य प्रवर्त्तमानपुरुषस्य यद्विशेषणं कामनादि तस्य या तद्वत्ता वर्त्तमानता तत्प्रतिसन्धानजन्यमित्यर्थः। नन्वाद्यप्रवृत्तौ कर्म्मतास्मरणस्य हेतुत्वात् तस्य च तत्प्रतिसन्धानजन्यत्वाभा-वाद्व्यभिचारः, एवं भेदाग्रहवादिनो विसंवादिप्रवृत्तावपि तथा । न च परम्परया पूर्व्वानुभवद्वारा तत्प्रतिसन्धानजन्यत्वान्न तथेति वाच्यं । एवं हि सञ्जातबाधस्यापि कार्य्यतास्मरणात् विषभक्षणे प्रवृत्त्यापत्तिरिति चेत्, न ।

च काल-शौचादि स्वविशेषणं, तथाचैतत्सन्ध्यायामहं

तज्जन्यमिति शेषः, अनुमानप्रकारस्त्व अग्रे वाच्यः। ननु[१] काम्यसाधनताज्ञानात् याग-पाकादौ कार्य्यताज्ञानं कथं कामनावत्ताज्ञानजन्यं स्वकाम्यसाधनताज्ञानेनैव तज्जननादिति चेत्, न,[२] तद्वत्ताज्ञानं हि पक्षे तत्सम्बन्धज्ञानं भवति च काम्यसाधनताज्ञानमपि कामनायाः स्वविषयसाधनतात्मकसम्बन्धज्ञानं, वस्तुतस्तु तद्वत्ताज्ञानं तत्सम्बन्धज्ञानं तज्ज्ञानमेव वा न तु पक्षोऽप्यन्तर्भूतः तथाच काम्यसाधनताज्ञानमपि कामनायाः तत्सम्बन्धस्य च ज्ञानं भवत्येव कामनायाः स्वविषयतात्मकतत्सम्बन्धस्य च विषयीकरणादिति भावः। एवं सति यथा नातिप्रसङ्गस्तदनुपदमेव विवेचयिष्यामः। 'कालेति तत्तत्कर्म्मविहितकालेत्यर्थः, 'शौचादीत्यादिना द्विजातित्वादिपरिग्रहः, तेन शूद्रादौ न व्यभिचारः। 'स्वविशेषणं' प्रवर्त्तमानपुरुषनिष्ठधर्म्मः, तत्तत्कालस्यापि जीवित्वसम्बन्धेन पुरुषनिष्ठत्वादिति भावः। 'तथाचेति तेन चेत्यर्थः, अन्वयस्त्वास्य कार्य्यताज्ञानमित्यनेन, 'एतत्सन्ध्याया-

(१) न चेति ग०। (२) इति वाच्यमिति ग०।

---

तदतिरिक्तस्थले तस्य हेतुत्वादित्येके। अन्ये तु अनाद्यप्रवृत्तौ तद्धेतुः विसंवादिप्रवृत्तिस्थलेऽपि स्वतन्त्रकार्य्यत्वस्मृतिरूपभ्रमस्येष्टसाधनत्वभ्रमरूपतत्प्रतिसन्धानाधीनत्वादित्याहुः,। अपरे त्वाद्यप्रवृत्तावपि स्मरणरूपेष्टसाधनत्वप्रतिसन्धानाधीनं यत् कृतिविशेषसाध्यमिति ज्ञानं प्रवर्त्तकं तच्च न स्मृतिरूपं पूर्व्वं तादृशानुभवाभावात् किन्तु व्याप्त्यादिस्मृतौ सत्यामिष्टसाधनतालिङ्गकमेव तत्र कार्य्यताज्ञानं। न चैवमग्रिमग्रन्थविरोधः, तस्य मतान्तरेणाभिधानादित्याहुः। नन्वहं कृतिसाध्यविषभक्षणाः पुरुषत्वादित्यादिना

कृतिसाध्यसन्ध्यावन्दनः सन्ध्यासमये शौचादिमत्त्वात् पूर्व्वसन्ध्यायामहमिवेति कार्य्यताज्ञानं [illegible]दिस्ववि-

मिति इदञ्च साध्यस्य कृतिविशेषणं न तु पक्षविशेषणं, प्रयोजनाभावात् प्रवर्त्तकज्ञानाप्राप्तेश्च[१] 'सन्ध्यासमय इति एतत्सन्ध्यासमय इत्यर्थः, 'शौचादीत्यादिना द्विजातित्वपरिग्रहः, तेन शूद्रादौ न व्यभिचारः, यो यत्सन्ध्याकालीनशौचादिमान् द्विजातिः स तत्कालीनकृति-साध्यसन्ध्यावन्दनक इति सामान्यतो व्याप्तिरिति भावः। न चात्र कृतिसाध्यत्वं कृतिफलोपहितत्वमेव साध्यघटकं स्वरूपयोग्यत्वरूपत्वे हेतुविशेषणवैयर्थ्यापत्तेः तथाच कृत्यसाध्यत्व-राजभयरूपबलवदनिष्ट-साधनत्वज्ञानादिना आलस्यादिना वा अकृतसन्ध्यावन्दनके द्विजातौ व्यभिचार इति वाच्यं। तच्छून्यत्वेनापि हेतोर्विशेषणीयत्वात्। न च कृतसन्ध्यावन्दनकस्यापि तत्र प्रवृत्तिः स्यादिति वाच्यं। स्वविषय-सिद्धा चिकीर्षाविरहेण तत्राप्रवृत्तेरिति। यद्यप्येतज्ज्ञानं न प्रवर्त्तकं

(१) इदानीन्तनकृतिसाध्यताज्ञानाप्राप्तेश्चेत्यर्थः।

तादृशकार्य्यताज्ञानं सञ्जातबाधस्याप्यस्तीति अतिप्रसङ्ग इति चेत्, अत्र वदन्ति मदीयेदानीन्तनेच्छाविषयसाधनत्व-शुचित्वसमानाधिकरणविहित-कालजीवित्वप्रतिसन्धानात्मकविशेषद्वयसामग्रीसहितस्य तस्य जनकत्वं। न चेदमुभयं विषभक्षणादावस्तीति, एवं स्वविशेषणवत्ताप्रतिसन्धानजन्यत्वात् सर्व्वस्यैव कार्य्यताज्ञानस्य सामान्यसामग्रीत्वमित्यत्र किं मानमिति चिन्त्यं। केचित्तु यस्मिन् विशेषणे सत्यननुष्ठानेऽनिष्टाव्याप्तिरिष्टहानिर्वा तदिह विवक्षितं कामनायां हि सत्यां अननुष्ठाने इष्टस्यौदनादेर्हानिरेवं शौचे

शेषणज्ञानजन्यं, तदुक्तं, स च कार्य्यविशेषः पुरुषविशेषणावगतः प्रवृत्तिहेतुरिति। संजातबाधस्य च विषभक्षणे चैत्यवन्दने च भ्रमदशायामिव नेष्टसाध-

कृतौ मदंशप्रकारकत्वात् तथापि सन्ध्यावन्दनमिदानीं मत्कृतिसाध्यं मत्प्रवृत्तिप्रतिबन्धकशून्यत्वे सति शौचादिमतो ममेदानीं कृतिसाध्यत्वेन वेदबोधितत्वादित्यनुमाने ग्रन्थतात्पर्य्यं[१]। अत्र मीमांसकपन्थसंवादमाह,[२] 'तदुक्तमिति, 'स च कार्य्यविशेष इति स च कार्य्यनिष्ठोविशेष इदानीन्तनस्वकृतिसाध्यत्वरूप इत्यर्थः, 'पुरुषविशेषणावगत इति पुरुषविशेषणेन कामनादिलिङ्गेनावगत इत्यर्थः, 'पुरुषविशेषेणावगत इति पाठे विशिष्यतेऽनेनेति विशेषो विशेषणं कामनादि तेनावगत इत्यर्थः, 'प्रवृत्तिहेतुः' प्रवृत्तिप्रयोजकः। एवञ्चोक्तातिप्रसङ्गमुद्धरति, 'सञ्जातबाधस्येति, 'भ्रमदशायामिवेति बलवद्-

(१) इत्यनुमानोत्तरानुमानान्तरं प्रवर्त्तकं द्रष्टव्यमिति ग्रन्थतात्पर्य्यमिति ख०। इदानीं शौचादिमतो मम इदानीं प्रवृत्तिप्रतिबन्धकशून्यत्वे सति मम कृतिसाध्यत्वादित्युत्तरभाव्यं प्रमाणान्तरं प्रवर्त्तकं द्रष्टव्यमिति ग०।

(२) अत्र मीमांसकसम्मतिमाहेति ग०।

सति अननुष्ठाने पापाव्याप्तिः पुरुषत्वादिकन्तु तथेति मोक्षातिप्रसङ्ग इत्याऽऽहुस्तदपि चिन्त्यं, इच्छान्यादेरननुगमेन विशेषणस्याननुगमात् यदि वान्यतरत्वादिना तदनुगमस्तदा कामनाद्यन्यतरप्रतिसन्धानजन्यत्वमेवास्तु लाघवात्, यदि वान्यतरत्वं न कारणतावच्छेदकप्रविष्टं अन्यथा दण्डाद्यन्यतमत्वेनापि हेतुत्वं स्यादिति मन्यसे तदा तुल्यमिति। वस्तुतः स्वविशेषण

नताज्ञानमस्ति येन तज्जन्यकार्य्यताज्ञानात् प्रवर्त्तेत तृप्तस्य च कामनाविरहेण इष्टसाधनताज्ञानाभावात् न तथा बोधः ।

निष्टाननुबन्धीष्टसाधनताभ्रमदशायामिवेत्यर्थः, 'इष्टसाधनत्वज्ञानमिति बलवदनिष्टाननुबन्धीष्टसाधनताज्ञानमित्यर्थः । यद्यपि विषभक्षणे बलवदनिष्टाननुबन्धित्वज्ञानाभावेऽपि तज्जन्यसुखे इच्छासत्त्वात्[1] इष्टसाधनत्वरूपस्वविशेषणवत्ताप्रतिसन्धानजन्यं कार्य्यताज्ञानं सम्भवत्येव, तथापि स्वविशेषणवत्ताप्रतिसन्धाने बलवदनिष्टाननुबन्धित्वविषयकत्वमपि विशेषणं देयमित्यभिप्रायः । 'इष्टसाधनताज्ञानाभावादिति इदानीन्तनेच्छाविषयसाधनताज्ञानाभावादित्यर्थः, 'न तथा बोधः' न तज्जन्यबोधः । न चैवमतीतशौचादिलिङ्गाभासजन्यकार्य्यताज्ञानादपि प्रवृत्त्यापत्तिरिति वाच्यं । इदानीन्तनत्वेनापि

(१) इच्छासत्त्वादित्यनेन इदानीन्तनेच्छाविषयसाधनत्वरूपेष्टसाधनत्वस्य सत्त्वं व्यञ्जितम् ।

वत्ताप्रतिसन्धानजन्यत्वेन हेतुत्वमिति न प्रकृतग्रन्थार्थः किन्तु तज्जन्यमित्येव तथाच प्रवृत्तिसामान्ये कार्य्यताज्ञानत्वेन हेतुता काम्य-नित्यविशेषयोश्च विशेषसामग्रीद्वयमिति एवञ्चाग्रे स्वेच्छाधीनत्वेन श्रमे समाधानमभ्युपगमवादेनेति मन्तव्यं । नित्ये चेत्युपलक्षणं नैमित्तिकेऽपि शौचादिमत्त्वे सति निमित्तवत्त्वं तथेति ध्येयं, 'एतत्सन्ध्यायामिति । इदन्तु प्राथमिकमनुमानं न त्वेतदेव प्रवर्त्तकं प्रवृत्तिविषयविशेष्यकज्ञानस्यैव प्रवर्त्तकत्वात् । किन्त्वज्ञानुमाने सति एतत्सन्ध्योपासनमिदानीं मत्कृतिसाध्यं मत्कृतिनिष्ठ-

स्वविशेषणविशेषणात् । न चैवं कालभेदेन पुरुषभेदेन च कार्य्य-कारणभावभेदादनन्तकार्य्यकारणभावप्रसङ्ग इति वाच्यं । नैयायिकनयेऽपि प्रवृत्तिविषयविशेष्यकेदानीन्तनस्वेच्छाविषयसाधनत्वेदानीन्तनस्वकृतिसाध्यत्वादिज्ञानस्य चिकीर्षायां प्रवृत्तौ च हेतुत्वेन कालभेदेन पुरुषभेदेन च कार्य्य-कारणभावस्याविशिष्टत्वात् । अतएव वक्ष्यमाणक्रमेण नित्य-काम्यभेदेन कार्य्य-कारणभेदेऽपि न क्षतिरिति मन्तव्यं । न च स्ववृत्तिधर्म्मप्रतिसन्धानजन्यकार्य्यताज्ञानमात्रस्य प्रवृत्तिहेतुत्वे इष्टसाधनत्वाद्यज्ञानेऽपि इदं स्वेच्छाधीनेदानीन्तनमत्कृतिसाध्यं स्वेच्छाधीनेदानीन्तनमत्कृतिव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वात् अन्यत्वे सति तादृशकृत्यघटितसामग्र्यजन्यत्वादेत्यादिना कार्य्यतानुमानात् प्रवृत्त्यापत्तिः तस्यापि तादृशप्रवृत्त्यघटितसामग्र्यजन्यत्वादिरूपस्ववृत्तिधर्म्मप्रतिसन्धानजन्यत्वात्[१] इति वाच्यं । स्वविशेषणपदेन विशिष्य तदानीन्तनस्वेच्छाविषयसाधनत्व-तदानीन्तनशौचादिमत्त्वरूप[२] स्ववृत्तिधर्म्मस्य विवक्षितत्वात् ।

(१) तस्यापि तादृशकृतिजन्यत्वे सति तादृशसामग्र्यजन्यत्वादिरूपस्ववृत्तिधर्म्मप्रतिसन्धानजन्यत्वादिति ख० ।

(२) तदानीन्तनशुचित्व-जीवित्वरूपेति ग० । इदानीन्तनस्वेच्छाविषयसाधनत्वेदानीन्तनशौचादिमत्त्वरूपेति ख० ।

हेतुताप्रतियोगिककार्य्यतानाधिकरणत्वादित्यनुमानं । न चासिद्धिः, एकवित्तिवेद्यतया प्रथमानुमानेन तद्ग्रहात्, अतएव प्राक् तदपेक्षा, उक्तानुमानानन्तरं तद्विशेष्यकं मानसमेव वा ज्ञानं प्रवर्त्तकमित्याहुः, तच्चिन्त्यं, तस्य स्वविशेषणवत्ताप्रतिसन्धानाजन्यत्वेनाप्रवर्त्तकत्वात् परम्परया तज्जन्यत्वस्यातिप्रसक्तत्वात्

नचैवमननुगमः इष्टसाधनत्वाज्ञानेऽपि शौचादिमत्त्वप्रतिसन्धानजन्य-कार्य्यताज्ञानात्[१] काम्ये प्रवृत्त्यापत्तिश्चेति वाच्यं। काम्यगोचरप्रवृत्तौ इदानीन्तनस्वेच्छाविषयसाधनत्व-बलवदनिष्टाननुबन्धित्वज्ञान-जन्यकार्य्यताज्ञानं हेतुः नित्यगोचरप्रवृत्तौ च इदानीन्तनशौचादिमत्त्वप्रतिसन्धानजन्यं कार्य्यताज्ञानमिति विशिष्य हेतु-हेतुमद्भावात् प्रवृत्तिमात्रे च कार्य्यताज्ञानसामान्यं हेतुः नित्य-काम्यभेदेन कार्य्य-कारणभावभेदेऽपि यथा न दोषस्तथोक्तं प्राक्। नित्यपदञ्च इदानीं तत्पुरुषेण नित्यत्वेन ज्ञायमानपरं, तेन नित्यस्य काम्यत्वभ्रमेण शौचादिलिङ्गककार्य्यताज्ञानमात्रात् प्रवृत्तिः, काम्यत्वञ्च तदानीं तत्पुरुषेण नित्यत्वेनाज्ञायमानत्वं तेन काम्यस्य नित्यत्वभ्रमे शौचादिमत्ताज्ञानजन्यकार्य्यताज्ञानादेव प्रवृत्तिः, नित्यत्वञ्च प्रत्यवायजनकीभूताभावप्रतियोगित्वं।

केचित्तु तादृशोभयविशेषणाधीनकार्य्यताज्ञानानामेकशक्तिमत्त्वेन प्रवृत्तिसामान्यं प्रति हेतुत्वं[२] इति वदन्ति, तदसत्, तथापि भोज-

(१) शौचादिमत्ताप्रतिसन्धानजन्यकार्य्यताज्ञानेष्टसाधनत्वप्रतिसन्धानजन्य-कार्य्यताज्ञानादित्यर्थः।

(२) अतः प्रातिस्विकरूपेण तत्तद्विशेषणस्य कारणतावच्छेदककोटिप्रविष्टत्वेऽपि न परस्परं व्यभिचार इति शेषः।

---

तस्मादेतन्मते ज्ञानमात्रस्यैवात्मविशेष्यकतया भिन्नविशेष्यकस्यापि प्रवर्त्तकत्वमित्येव तत्त्वमिति, 'सन्ध्येति, यथा हेतुर्न व्यभिचारी तथा कार्य्यः। न च नित्ये वेदाधीनज्ञानस्यैव प्रवर्त्तकतया नैतदनुमानापेक्षेति वक्तव्यं, तस्य स्वविशेषणवत्ताप्रतिसन्धानाजन्यत्वेनाप्रवर्त्तकत्वात् इदानीन्तनत्वादेस्तत्राभानाच्च। एवञ्च नित्ये वेदाधीनकार्य्यताज्ञानं प्रवर्त्तकमिति मतान्तरेण बोध्यं। 'पुरुषेति पुरुष-

नादौ शौचादिलिङ्गककार्य्यताज्ञानमात्रात्[१] प्रवृत्तिवारणाय विशेषसामग्र्या आवश्यकत्वे तथोपगमस्य प्रथासमात्रत्वात्।

केचित्तु फलार्थिचिकीर्षा-प्रवृत्तौ प्रति फलसाधनताज्ञानविशिष्टकृतिसाध्यताज्ञानं हेतुः, फलं स्वर्गादि, तदर्थित्वं तदुद्देश्यकत्वं। न चैवं स्वर्गादाविच्छाविरहेऽपि स्वर्गादिसाधनताज्ञानविशिष्टकृतिसाध्यताज्ञानात् चिकीर्षादिप्रसङ्ग इति वाच्यं। स्वर्गोद्देश्यकेच्छां प्रति[२] स्वर्गादीच्छाया अपि पृथक् हेतुत्वात् शौचादिमत्ताप्रतिसन्धानविशिष्टकृतिसाध्यताज्ञानञ्च नित्यस्वत्वीयचिकीर्षा-प्रवृत्तौ प्रति हेतुः, नित्यस्वत्वीयत्वञ्च चिकीर्षाविषयतावच्छेदकावच्छिन्नविशेष्यकनित्यत्वज्ञानविशिष्टत्वं, वैशिष्ट्यञ्च क्षणद्वयसाधारणाव्यवहितोत्तरक्षणावच्छेदेनैकात्मवृत्तित्वं। न चैवं काम्यतादशायामपि शौचादिमत्ताप्रतिसन्धानविशिष्टकार्य्यताज्ञानान्नित्यस्वत्वीयचिकीर्षाद्यापत्तिरिति वाच्यं। नित्यस्वत्वीयचिकीर्षादिकं प्रति समानविशेष्यकनित्यत्वज्ञानस्यापि हेतुत्वादित्याहुः। तदसत्, प्राचीननैयायिकानां गुरूणाञ्च शौचादौ तत्कालीनत्व-तत्पुरुषीयत्वविशेषणस्यावश्यकतया कालभेदेन पुरुषभेदेन च कार्य्य-कारणभावभेदस्यावश्यकत्वात् तत एवातिप्रसङ्गवारणसम्भवे नित्यस्वत्वीयत्वस्य कार्य्यतावच्छेदककोटिप्रवेशे नित्यत्वज्ञानस्य

(१) सन्ध्यावन्दनादौ च नित्यतादशायामिष्टसाधनताप्रतिसन्धानजन्यकार्य्यताज्ञानमात्रादित्यर्थः।

(२) स्वर्गार्थीच्छां प्रतीति ग०।

विशेषणं कामनादि, क्वचित् 'पुरुषविशेषेति पाठस्तदा स्वविशेषणवत्ताप्रतिसन्धानवत्त्वं पुरुषे विशेषः इति प्रकाशः।

पृथक्हेतुत्वे च गौरवाच्च, सर्व्वत्र तज्जन्यत्वं तद्विशिष्टत्वमेव वैशिष्ट्यञ्च एककालावच्छेदेनैकात्मवृत्तित्वं, जन्यत्वप्रवेशे गौरवात् बालकस्याद्य-स्तनपानप्रवृत्तौ स्वकृतिसाध्यतास्मरणस्य तैरपि हेतुत्वेन वक्ष्यमाण-तया व्यभिचाराच्च स्मरणस्येष्टसाधनत्वादिज्ञानाजन्यत्वात्। न च जन्यत्वपदेन प्रयोज्यत्वं विवक्षितं तथाच तत्र तत्स्मरणमपि जन्मा-न्तरीणतादृशकार्य्यत्वानुभवद्वारा तत्प्रयोज्यं भवत्येवेति न व्यभि-चार इति वाच्यं। तथा सति सञ्जातबाधस्य जन्मान्तरानुभूत-कार्य्यतास्मरणाद्विषभक्षणे प्रवृत्त्यापत्तेः तृप्तस्यापि कालान्तरानुभूत-कृतिसाध्यतास्मरणाद्भोजनादौ प्रवृत्तेरापत्तेश्च इष्टसाधनताज्ञान-विशिष्टकार्य्यताज्ञानञ्च तत्रास्त्येव बालकस्य स्तनपानजन्यसुखविशेष-साधनतास्मरणात् तत्सुखविशेषे तदानीमिच्छासत्त्वाच्च स्वरूपस-त्तदानीन्तनेच्छाविषयसाधनताज्ञानस्यापि तदानीं सत्त्वेन स्मरण-स्यापि तद्विशिष्टत्वात्। अतएवेष्टसाधनतादिज्ञानसत्त्वे लिङ्गान्तरात् कार्य्यताज्ञानेऽपि प्रवृत्तिर्नानुपपन्ना, न वा लिङ्गसंशयस्यानुमित्यहे-तुत्वेऽपि इष्टसाधनतासन्देहात् प्रवृत्तिरनुपपन्ना। न चैवं फल-कामनाविशिष्टकार्य्यताज्ञानमेव काम्ये प्रवर्त्तकमस्तु इति वाच्यं। फलकामनायां सत्यां तद्विषयसाधनत्वाज्ञानेऽपि प्रवृत्त्यापत्तेः। न चेष्टसाधनताज्ञानविशिष्टकार्य्यताज्ञानं कार्य्यताज्ञानविशिष्टेष्टसाधन-ताज्ञानं वा हेतुरित्यत्र विनिगमनाविरहादिष्टसाधनताज्ञानस्यापि हेतुत्वं दुर्व्वारमिति वाच्यं। इष्टसाधनताज्ञाननाशेऽपि चिकीर्षासत्त्वे प्रवृत्त्यनुभवेन व्यभिचारात्। न च चिकीर्षैव तस्य व्यापारः चिकीर्षां प्रत्यपि विनिगमनाविरहेण उभयोर्हेतुत्वादिति वाच्यं। इच्छायाः

अन्ये त्वात्मनो जीवित्वप्रतिसन्धानजन्यं श्रमे कृति-
साध्यताज्ञानं सम्भवतीति जीवनव्यतिरिक्तत्वं स्व-

समानप्रकारकज्ञानजन्यत्वनियमेन कृतिसाध्यताज्ञानस्य हेतुताया आवश्यकत्वात्तत्र विनिगमनाविरहानवकाशात्। न च तथापीष्टसाधनताज्ञानविशिष्टत्व-स्वकृतिसाध्यताविषयकत्व-ज्ञानत्वानां विशेष्यविशेषणभावे विनिगमनाविरहो दुर्व्वार इति वाच्यं। इष्टसाधनताज्ञानविशिष्टत्व-कृतिसाध्यताविषयकत्व-ज्ञानत्वानामेकत्र द्वयमिति रीत्या व्यासज्यवृत्त्यवच्छेदकत्वाभ्युपगमात्तादृश विनिगमनाविरहानवकाशात्, इष्टसाधनताज्ञानस्य उपस्थितप्रवृत्तिविषयागृहीतासंसर्गकेष्टसाधनतादिज्ञानं बोध्यं, न तु प्रवृत्तिविषयविशेष्यकं, तथा सति भ्रमस्य विशिष्टज्ञानत्वानभ्युपगमेन इष्टसाधनतादिभ्रमाच्चैत्यवन्दनादौ कदाचित् प्रवृत्तिर्न स्यात्, एवं कार्य्यताज्ञानमपि उपस्थितप्रवृत्तिविषयागृहीतासंसर्गककार्य्यताज्ञानं बोध्यं, न तु प्रवृत्तिविषयविशेष्यकं, तथा सति कृत्यसाध्ये गुरुतरभारोत्तोलनादौ प्रवृत्त्यनुपपत्तेः, अन्यथाख्यात्यनभ्युपगमेन तत्र विशिष्टज्ञानासम्भवात्। न चैवमसंसर्गाग्रहप्रवेशे गौरवमिति वाच्यं। तावता अन्यथाख्यातिसिद्धावपि इष्टसाधनताज्ञानस्य प्रवृत्तिहेतुत्वासिद्धेरित्यास्तां विस्तरः।

महार्णवकारीयमतमाह, 'अन्ये त्विति, 'जीवित्वप्रतिसन्धानेति जीवित्वादिप्रतिसन्धानेत्यर्थः, आदिना शरीरित्व-ज्ञानवत्त्वादिपरिग्रहः, 'श्रमे' जीवित्वमात्रसाध्यनान्तरीयकश्रमे, 'सम्भवतीति, अहमिदानीं कृतिसाध्यतत्कर्म्मजन्यश्रमकः जीवित्वादित्यादिना रूपेणेति

**विशेषणे विशेषणमिति, तन्न, श्रमे स्वेच्छाधीनकृति-साध्यत्वाभावात्। इष्टसाधनतालिङ्गकं कार्य्यताज्ञानं प्रवर्त्तकं इत्यपरे, तन्न, नित्ये* तदभावात्।**

भावः। 'इतीति, नित्यत्वेन ज्ञायमाने तादृशश्रमे जीवित्वप्रतिसन्धानजन्यकृतिसाध्यताज्ञानमादाय प्रवृत्तिप्रसङ्गवारणायेति शेषः। 'जीवनव्यतिरिक्तत्वमिति स्वविशेषणवत्ताप्रतिसन्धानजन्येत्यत्र स्वविशेषणपदं जीवनभिन्नस्वविशेषणपरमित्यर्थः। 'स्वेच्छाधीनेति, स्वविशेषणपदस्य जीवित्वरूपविशेषणभिन्नपरत्वेऽपि इष्टसाधनत्व-शुचित्वादिभ्रमेण तल्लिङ्गककार्य्यताज्ञानेऽपि तत्राप्रवृत्त्युपपादनाय स्वेच्छाधीनत्वस्यावश्यं निवेशनीयत्वादिति भावः[१]। 'प्रवर्त्तकमिति प्रवृत्तिसामान्यकारणमित्यर्थः, 'नित्य इति, नित्ये फलानभ्युपगमात् पण्डापूर्व्वस्य च[२] स्वतः पुरुषार्थत्वाभावादिति भावः। 'विषभक्षणव्यावृत्तमिति विषभक्षणादिव्यावृत्तमित्यर्थः, आदिपदात् चै-

(१) स्वेच्छाधीनत्वस्यावश्यं निवेशनीयत्वेन तावतैवातिप्रसङ्गवारणसम्भवे एतादृशविवक्षायां मानाभावादिति भाव इति ग०।

(२) ननु पण्डापूर्व्वमेव तत्रेष्टं तत्साधनत्वं सन्ध्यावन्दनादावस्त्येव इत्यत-आह, 'पण्डापूर्व्वस्य चेति, तथाच पण्डापूर्व्वस्यान्येच्छानधीनेच्छाविषय-त्वरूपेष्टत्वाभावादभ्रान्तस्य क्वचिदपि तत्र प्रवृत्तिर्न स्यादिति भावः।

* 'नित्य इति, पण्डापूर्व्वं नेष्टमिति भावः। 'लघुत्वादिति, नित्यमपि सफलमिति भावः। 'किञ्चेति, पक्षे हेतौ च जन्यपदं बोध्यं। उपायपदं भोगचिकीर्षायां व्यभिचारवारणाय। 'तुल्यमिति इष्टसाधनत्वधीरपि कृति-

**ननु विषभक्षणव्यावृत्तमिष्टसाधनत्वमेव कृतिसाध्यताज्ञाने विषयतया विशेषणमस्तु स्वविशेषणवत्ताज्ञानजन्यत्वापेक्षया लघुत्वात्। किञ्चोपायविषया**

त्यवन्दनादिपरिग्रहः, 'इष्टसाधनत्वमेवेति बलवदनिष्टाननुबन्धित्वे सतीष्टसाधनत्वमित्यर्थः, 'विशेषणमस्तु' विशेषकार्य्य-कारणभावे विशेषणमस्तु, तथाच प्रवृत्तिविषयविशेष्यकबलवदनिष्टाननुबन्धित्वेष्टसाधनता-कृतिसाध्यताप्रकारताशालिज्ञानत्वेन अन्यथाख्यात्यनङ्गीकारे च उपस्थितप्रवृत्तिविषयागृहीतसंसर्गकतादृशचितयावगाहिज्ञानत्वेन काम्यस्थले प्रवृत्तिहेतुत्वमिति भावः। इदमुपलक्षणं नित्यस्थलेऽपि शौचादिमत्त्वं विषयतया कृतिसाध्यताज्ञाने विशेषणमस्तु इत्यपि बोध्यं। 'स्वविशेषणवत्ताज्ञानजन्यत्वापेक्षयेति इष्टसाधनताज्ञानविशिष्टत्वापेक्षयेत्यर्थः, एककालावच्छेदेनैकात्मवृत्तित्वरूपवैशिष्ट्यस्य उभयत्र[१] प्रवृत्तिविषयविशेष्यकत्वावच्छिन्नत्व-ज्ञानत्वयोश्च[२] प्रवेशेन तस्य गुरुत्वात्। न चेष्टसाधनताविषयकत्व-कृतिसाध्यताविषयकत्व-ज्ञानत्वानां विशेष्य-विशेषणभावे विनिगमकाभावात् तवापि बहुतरकार्य्य-कारणभावकल्पनागौरवमिति वाच्यं। एकत्र द्वयमिति रीत्या तेषां व्यासज्यवृत्त्यवच्छेदकत्वाभ्युपगमात्[३] अन्यथा तवापि

(१) इष्टसाधनताज्ञाने कृतिसाध्यताज्ञाने चेत्यर्थः।

(२) उभयत्र प्रवृत्तिविषयविशेष्यकत्वावच्छिन्नत्वस्य उभयत्र ज्ञानत्वयोश्चेति क॰, ग॰।

(३) इष्टसाधनत्वविषयकत्व-कृतिसाध्यत्वविषयकत्व-ज्ञानत्वानां परस्परासंसृष्टानामेव व्यासज्यवृत्त्यवच्छेदकत्वाभ्युपगमादिति ख॰।

चिकीर्षा इष्टसाधनताज्ञानसाध्या उपायेच्छात्वात् वृष्टी-

इष्टसाधनताज्ञानविशिष्टत्व-कृतिसाध्यताविषयकत्व-ज्ञानत्वानां विशे-षण-विशेष्यभावे विनिगमनाविरहेण तथात्वप्रसङ्गात्[१]। न चैवं पृथगिष्टसाधनतादिज्ञानसत्त्वे तद्विषयककार्य्यताज्ञानानन्तरं प्रवृ-त्तिर्न स्यादिति वाच्यं। लाघवादेवंरूपेण हेतुत्वकल्पने तत्र तदु-त्तरं समूहालम्बनज्ञानकल्पनात्। न च तथापि निश्चिताव्यभि-चारकं रूपं परित्यज्य सन्दिग्धव्यभिचारकेण रूपेण हेतुत्वकल्पन-मयुक्तमिति वाच्यं। निश्चिताव्यभिचारकलघुरूपसत्त्व एव तथात्वा-दिति भावः[२]। 'उपायविषयेति सुख-दुःखाभावेतरविषयेत्यर्थः, 'इष्टसाधनताज्ञानसाध्येति इष्टसाधनताज्ञानत्वावच्छिन्नकारणताप्रति-योगिककार्य्यताश्रय इत्यर्थः, 'उपायेच्छात्वादिति सुख-दुःखाभाव-त्वाप्रकारकेच्छात्वादित्यर्थः, पक्ष-हेत्वोर्जन्यत्वं विशेषणं देयं तेन ईश्व-रेच्छायां नांशतो बाध-व्यभिचारौ, 'वृष्टीच्छावदिति वृष्टिर्भवत्वि-तीच्छावदित्यर्थः। इदमुपलक्षणं कृतिसाध्यत्वाप्रकारकपाकादीच्छापि दृष्टान्तो बोध्यः। अयञ्च प्रसाध्याङ्को दृष्टान्तः, परेण तु कृति-साध्यत्वाप्रकारकोपायोद्देश्यकेच्छानभ्युपगमेन वृष्टिर्भवत्वितीच्छायास्त-न्मतेऽसिद्धेः वृष्टिसाध्यं सुखं भवतु इतीच्छायां सुखे वृष्टिसाध्यत्व-

(१) गुरुतरकार्य्य-कारणभावबाहुल्यस्य दुर्व्वारत्वादिति ख० ग०।

(२) तथाच निश्चिताव्यभिचारकलघुरूपावच्छेदेनैव कारणत्वं न तु स-न्दिग्धव्यभिचारकलघुरूपावच्छेदेनेति नियमो यत्र तस्य सत्त्वं तत्रैव सम्भवति अत्र तन्नास्तीति भावः।

च्छावत्। भोगचिकीर्षायां तदभावादप्रयोजकमिष्टसाधनत्वमिति चेत्, न, तत्रापि स्वविशेषणधीजन्यत्वाभावेन तत्र तस्याप्रयोजकत्वात्। कृतिहेतुचिकीर्षायां तत् प्रयोजकं, न च भोगचिकीर्षा तथा, उपायचिकीर्षात एव कृतिसम्भवात् इति चेत्, तुल्यमिति, मैवं, साध्यत्व-साधनत्वयोर्व्विरोधेनैकत्र ज्ञातुमशक्य-

---

ज्ञानस्यैव हेतुत्वात् न त्विष्टसाधनताज्ञानस्येति ध्येयम्। शङ्कते, 'भोगचिकीर्षायामिति सुख-दुःखाभावचिकीर्षायामित्यर्थः, 'तद्भावात्' इष्टसाधनताविषयककृतिसाध्यताज्ञानस्य हेतुत्वाभावात्, 'अप्रयोजकमिति उपायचिकीर्षायामपि विषयतया कारणतानवच्छेदकमित्यर्थः, 'तत्रापीति, भोगचिकीर्षाकारणीभूतकार्य्यताज्ञान इति शेषः, 'तत्र' तत्रापि, उपायचिकीर्षायामपीति यावत्, 'तस्य' स्वविशेषणज्ञानजन्यत्वस्य, 'अप्रयोजकत्वात्' कारणतानवच्छेदकत्वप्रसङ्गात्। शङ्कते, 'कृतीति चिकीर्षात्वेन कृतिहेतुचिकीर्षायामित्यर्थः, 'तत्' स्वविशेषणधीजन्यत्वं, 'तथा' चिकीर्षात्वेन कृतिहेतुः, तेन भोगचिकीर्षायाः फलेच्छात्वेन कृतिहेतुत्वपक्षेऽपि नातिप्रसङ्गः, 'तुल्यमिति'(१) ममापि उपायचिकीर्षायां इष्टसाधनत्वं प्रयोजकमित्यर्थः। प्रामाणिकं गौरवं न दोषायेत्याशयेन समाधत्ते, 'मैवमिति, 'साध्य-

---

(१) तव मते कृतिहेतुचिकीर्षायां स्वविशेषणधीजन्यत्वं ममापि उपायचिकीर्षायां इष्टसाधनत्वं प्रयोजकमिति तुल्यमित्यर्थः।

हेतुचिकीर्षायामेव हेतुरित्यर्थः। 'मैवमिति, तथाच प्रामाणिकं गौरवं न

त्वात्। असिद्धावस्थस्य हि साध्यत्वं सिद्धतादशायां तदभावात्, सिद्धतादशायाञ्च साधनत्वं असिद्धावस्थावतः कार्य्यानुत्पत्तेः तथाच पाकादेरसिद्धत्व-सि-

त्व-साधनत्वयोरिति कृतिसाध्यत्व-कालान्तरभाव्योदनादिसाधनत्वयोरित्यर्थः, कालान्तरभावित्वं स्वध्वंसाधिकरणक्षणभावित्वं,[१] 'विरोधेन' एकावच्छेदेनैकचावर्त्तमानत्वेनेत्यर्थः,[२] 'एकच' पाकादौ, 'ज्ञातुं' एकेन निश्चयेन विषयीकर्त्तुं। विरोधमुपपादयति, 'असिद्धावस्थस्येति आद्यक्षणविशिष्टपाकादेरित्यर्थः, 'साध्यत्वं' कृतिसाध्यत्वं, कृतिसाध्यत्वस्य तदधीनसमयसम्बन्धवत्त्वरूपत्वादिति भावः। 'सिद्धतादशायामिति आद्यसमयसम्बन्धविनाशदशायामित्यर्थः, 'तदभावात्' पाकादौ कृतिसाध्यत्वाभावात्, आद्यक्षणसम्बन्धस्यैव कारणाधीनत्वादिति भावः। 'सिद्धतादशायाञ्च साधनत्वमिति आद्यक्षणसम्बन्धविनाशदशायामेव कालान्तरभाव्योदनादिसाधनत्वमित्यर्थः, 'असिद्धावस्थावत इति आद्यक्षणावस्थायिनो यागादेरित्यर्थः,[३] 'कार्य्यानुत्पत्तेः' कालान्तरभाविकार्य्यानुत्पत्तेः। यद्यपि उत्पत्तिकालीनात्कालान्तरभाविकार्य्यानुत्पादेऽपि कारणतावच्छेदकधर्म्मवत्त्वरूपं कारणत्वमुत्पत्तिक्षणेऽप्यस्तो-

(१) स्वं कृतिसाध्यत्वाधिकरणकालः स चाद्यक्षण इति।

(२) एकस्मिन् एकदा विरहेणेति क०।

(३) उत्पत्तिकालीनात् कारणादित्यर्थ इति ग०।

दोषायेति भावः। विरोधमेव स्फुटयति, 'असिद्धेति, प्रकृते किमायातमत आह, 'तथा चेति, ननु साध्यत्वं साधनत्वञ्च पाकादेः स्वरूपमेवातो न विरोध-

इत्वज्ञाने साध्यत्व-साधनत्वग्रहः। न चैकमेकेनैकदा

ति कथं विरोधः तथापि स्वरूपयोग्यमिदं न फलं जनयिष्यतीति ज्ञाने प्रवृत्त्यनुत्पादात् फलोपधानात्मकेष्टसाधनत्वस्यैव संशयसाधारणं ज्ञानं हेतुर्वाच्यः तच्च यागादावाद्यक्षणे न सम्भवति तस्य कालान्तर एव फलोपधायकत्वादिति भावः[१]।

केचित्तु गुरुनये फलसमयवर्त्तिन एव[२] कारणतया फलसमयवर्त्तित्वस्यापि कारणताघटकत्वाच्चाद्यक्षणे न तत्सम्भव इत्यभिप्रायः। इत्थञ्च साधनत्वपदं सामान्यत ओदनादिसाधनतापरमेव, न तु कालान्तरभावित्वेन ओदनादिकं विशेषणीयं, 'सिद्धतादशायाञ्चेत्यच कार्य्यकालवर्त्तित्वविशिष्टदशायाञ्चेत्यर्थः, 'असिद्धावस्थावतः कार्य्यानुत्पत्तेरित्यस्य उत्पत्तिकाले कार्य्यसहवर्त्तित्वघटितस्य कारणत्वस्याभावादित्यर्थ इत्यप्याहुः।

विरोधं व्युत्पाद्य एकनिश्चयविषयत्वासम्भवं व्युत्पादयति, 'तथाचेति, 'असिद्धत्व-सिद्धत्वज्ञान इति असिद्धत्वसिद्धत्वोभयावगाहिज्ञाने इत्यर्थः, 'साध्यत्व-साधनत्वग्रहः' इतिसाध्यत्वौदनादिसाधनत्वप्रकारकग्रहः, विभिन्नावच्छेदकद्वयविषयकज्ञानस्यैव एकस्मिन् धर्म्मिणि विरुद्धोभयप्रकारकत्वनियमादिति भावः। 'न चैकमिति भावा-

(१) तादृशस्य कालान्तरभाव्योदनसाधनत्वस्योत्पत्तिक्षणे न सम्भवतीति भाव इति ग०। (२) कार्य्यकालवर्त्तिन एवेत्यर्थः।

इत्याह, 'न चेति, नन्वेकनिरूपितयोस्तयोर्विरोधेऽपि इतिनिरूपितं सा-

सिद्धमसिद्धञ्च इति ज्ञायते। न च स्वरूपगतता साध्यत्व-साधनत्वयोरतो न विरोध इति वाच्यं। यदि हि स्वरूपनिबन्धनं तदुभयं तदा तत्स्वरूपं सदैव सिद्धमसिद्धञ्च स्यात्, भिन्ननिरूपितत्वेऽपि तयोः सिद्ध-

---

भाववत्त्वज्ञानद्वयवत् सिद्धत्वासिद्धत्वज्ञानयोरपि परस्परं विरोधित्वादित्यभिमानः, 'असिद्धत्वमुत्पत्तिकालीनत्वं स्वनिष्ठसमयसम्बन्धध्वंसाभावाधिकरणक्षणवृत्तित्वमिति यावत्, 'सिद्धत्वं स्वनिष्ठसमयसम्बन्धध्वंसाधिकरणक्षणवृत्तित्वं यागादेर्व्यापारसम्बन्धेन स्वर्गाव्यवहितपूर्व्वक्षणेऽपि वृत्तेः, 'न विरोध इति नैकावच्छेदेनैकत्रावर्त्तमानत्वमित्यर्थः। स्वरूपगतत्वं तादात्म्यसम्बन्धेनाधिकरणस्वरूपावच्छिन्नत्वं विभिन्नावच्छेदकावच्छेदेनैकस्मिन्नधिकरणवर्त्तमानत्वं वा नाद्य इत्याह, 'यदि हीति, 'स्वरूपनिबन्धनं' तादात्म्येनाधिकरणस्वरूपावच्छिन्नं, 'तत्स्वरूपं' पाकादिस्वरूपं, 'सिद्धमसिद्धञ्चेति, तयोः साध्यत्व-साधनत्वव्यापकत्वादिति भावः। अन्ये आह, 'भिन्ननिरूपितत्वेऽपीति विभिन्नावच्छेदेनैकत्राधिकरणे वर्त्तमानत्वे चेत्यर्थः,

---

ध्यत्वं दृष्टनिरूपितञ्च साधनत्वं न विरुद्धमित्यत आह, 'भिन्नेति। केचित्तु स्वगतत्वं यदि स्वरूपावच्छिन्नत्वं तदाह, 'यदीति, अथ स्वरूपेऽन्यावच्छेदेन सत्त्वं तदा तदवच्छेदकमुक्तमेवेत्युक्तदोषानिवृत्तिरित्याह, 'भिन्नेतीत्याहुः। 'सिद्धत्वेति, तदवगमे च विरोध एवेति भावः। 'तस्मादिति, तथाच समयभेदेनोभयज्ञानं सम्भवति न त्वेकदेति भावः। 'इदानीमिति शाखाद्यवच्छेदेन वृक्षे संयोग-तदत्यन्ताभावग्रहवत् समयभेदावच्छेदेन तदुभय-

# त्वासिद्धत्वे अनवगम्याज्ञानात्, तस्मात् समयभेदोपा-

विरुद्धतयेति शेषः, 'सिद्धत्वासिद्धत्वे इति, 'अनवगम्य' अविषयीकृत्य, 'अज्ञानादिति, पाकादौ कृतिसाध्यत्वौदनादिसाधनत्वयोः समूहालम्बनज्ञान एव तथा नियमादिति भावः[१]। उपसंहरति, 'तस्मादिति,[२] 'समयभेदोपाधिकः' विभिन्नसमयनिरूपितः, 'तदुभयसम्बन्ध इति कृतिसाध्यत्वौदनसाधनत्वात्मकसम्बन्धः पाकवृत्तिरित्यर्थः, न विषयतया कृतिकारणतावच्छेदक इति शेषः ।

केचित्तु 'समयभेदोपाधिकः' सिद्धत्वासिद्धत्वद्शारूपसमयभेदावच्छिन्नः, 'तदुभयसम्बन्धः' कृतिसाध्यत्वौदनसाधनत्वयोः सम्बन्ध इति व्याचक्षुः । तन्न 'भिन्नमिरूपितत्व इति पूर्व्वमेवाभिधानात् सन्दर्भविरुद्धमिति ध्येयं ।

ननु धर्म्मिणि विभिन्नावच्छेदकद्वयवत्तावगाहित्वमेकधर्म्मिणि विरुद्धोभयप्रकारतायां न तन्त्रमपि तु प्रकारीभूतविरुद्धोभयधर्म्मे विभिन्नावच्छेदकावच्छिन्नत्वावगाहित्वमेव तन्त्रं वृक्षे मूलाद्यवत्त्वमनवगम्यापि वृक्षेऽपि कपिसंयोगो न मूल इति विरुद्धोभयप्रकारकप्रत्ययोदयात् तथाच प्रकृतेऽपि पाकादौ सिद्धत्वासिद्धत्वमनवगम्यैव सिद्धत्वासिद्धत्वद्शावच्छेदेन कृतिसाध्यत्वेष्टसाधनत्वग्रहः स्यादित्यभि-

---

(१) विभिन्नावच्छेदकान्वयविषयकसमूहालम्बन एव एकस्मिन् धर्म्मिणि विरुद्धोभयप्रकारकत्वनियमादित्यर्थः ।

(२) ननु विरुद्धयोस्तयोरेकत्र समावेश एव कथमित्यत आह, 'तस्मादितीति ख०, ग० ।

धिकएव तदुभयसम्बन्धः पाके । इदानीं साध्यत्वं अग्रे साधनत्वं ज्ञायत इति चेत्, न, इदानीमग्रिमपदार्थयोर्नानात्वादननुगमेन व्याप्यग्रहात् शब्देन तथा प्रतिपादयितुमशक्यत्वात् गौरवाच्च । न च कृतितः सिद्धमिष्टसाधनमितिज्ञानात् चिकीर्षा, न हि सिद्धं

---

प्रायेणाशङ्कते, 'इदानीमिति, अनुमानात्तादृशं ज्ञानं विधितो वा नाद्य इत्याह, 'इदानीमग्रिमेति प्रत्यक्षाहिकतयोत्पत्तिक्षणव्यक्तेरेवेदानींपदार्थत्वात् तद्ध्वंसाधिकरणक्षणस्य चाग्रिमपदार्थत्वादिति भावः । 'अननुगमेनेति इदानीं तदानींसाधारणस्य तदग्रिमक्षणसाधारणस्य चानुगतानतिप्रसक्तव्यापकतावच्छेदकस्याभावेनेत्यर्थः, 'व्याप्यग्रहादिति व्यक्त्यन्तरे इदानीन्तनकृतिसाध्यत्वाद्यनिश्चयदशायां व्याप्तिग्रहासम्भवादित्यर्थः, नान्त्य इत्याह, 'शब्देनेति, अननुगततया च तेन रूपेण शक्त्यभावादिति भावः । ननु अननुगतरूपेणैव विधिशक्तिरित्यत आह, 'गौरवाच्चेति । 'कृतितः सिद्धमिति कृत्यधीनसमयसम्बन्धध्वंसविशिष्टमित्यर्थः, सिद्धत्वेष्टसाधनत्वयोर्विरोधाभावादिति भावः । 'सिद्धं' सिद्धत्वेन ज्ञातं, दूषणान्तरमाह,

---

ग्रहोऽपीति भावः । ननु व्याप्यग्रहेऽनुमानाभावेऽपि शब्दात्तद्ग्रहः स्यादत आह, 'शब्देनेति, शक्यतावच्छेदकैकरूपाभावादिति भावः । अस्तु वा कथञ्चित्तद्ग्रहस्तथापि साधनत्वादिविषयत्वेन कार्य्यताज्ञानस्य हेतुत्वे गौरवमित्याह, 'गौरवाच्चेति, यद्यप्येकत्र साधनत्वमपरत्र स्वविशेषणवत्ताप्रतिसन्धानजन्यत्वमिदानीमन्तर्भावश्चोभयत्र तथाप्यग्रे पदार्थान्तर्भावाद्गौरवं

**कश्चित् चिकीर्षति, कृतेः पूर्व्वं कृतितः सिद्धमिति ज्ञानाभावाच्च। न च कृतिसाध्यत्वेन पाकादेरिष्टसाधनत्वात् साधनत्वमपि साध्यं। न हि कृतिसाध्यत्वेन पाकस्यौदनसाधनता, इत्युक्तं तस्मात् कृत-क्रियमाण-विलक्षणं कृत्यनन्तरभविष्यत्तारूपं कृतिसाध्यत्वं चि-**

---

'कृतेरिति, 'ज्ञानाभावादिति, सर्व्वत्र तादृशलिङ्गाभावादिति भावः। ननु कारणतावच्छेदकविशिष्टतादशायामेव कारणत्वमिति कृतिसाध्यत्वेनौदनादिसाधनत्वादोदनादिसाधनत्वदशायामपि कृतिसाध्यत्वमित्याशङ्कते, 'न चेति, 'साधनत्वमपि साध्यमिति साधनतादशायामपि कृतिसाध्यत्वमित्यर्थः। 'उक्तमिति, लाघवात् पाकत्वेनैव हेतुत्वादिति भावः। इदमुपलक्षणं कृत्यधीनसमयसम्बन्धवत्त्वरूपस्य कृतिसाध्यत्वस्य पाकादावोदनाद्युपधायकत्वदशायामसम्भवाच्चेत्यपि बोध्यं। 'कृत-क्रियमाणविलक्षणमिति अतीतत्वानागतक्षणवर्त्तित्वदशाव्यावृत्तमित्यर्थः, 'कृत्यनन्तरेति कृत्यधीनसमयसम्बन्धवत्त्वमित्यर्थः, 'साधनत्वविरोध्येवेति ओदनादिसाधनत्वदशायां पाकादाववृत्त्येवेत्यर्थः। ननु यथोक्तसिद्धत्वासिद्धत्वज्ञानयोः परस्परं विरोधित्वे मानाभावात् पाकादौ युगपत् सिद्धत्वासिद्धत्वज्ञाने

---

बोध्यं। ननु कारणतावच्छेदकावच्छिन्ने कारणत्वमिति कृतिसाध्यत्वविशिष्टेसाधनत्वमतः साध्यधर्म्म एव साधनत्वमिति न विरोध इत्याशङ्क्य निराकरोति, 'न चेति, 'साध्यमिति साध्यधर्म्म इत्यर्थः। वैलक्षण्यमेवाह, 'कृत्यनन्तरेति, नन्वेकावच्छेदेनोभयग्रहाभावेऽप्येकत्र धर्म्मिणि तदुभयग्रहे न

कीर्षाप्रयोजकं तादृशञ्च साधनत्वविरोध्येव। किञ्च साधनत्वस्य सिद्धमात्रधर्म्मत्वात् साधनत्वज्ञानमिच्छा-विरोधि, न हि कश्चित् सिद्धमिच्छतीत्युक्तं। एतेन

---

बाधकाभावः, किञ्चास्तु तयोः परस्परविरोधित्वं तथाप्यवच्छेदकम-वगाह्यैव विरुद्धयोरेकत्र प्रतीतिरिति नियमे मानाभावः अव-च्छेदकविनिर्म्मोकेनापि वृक्षः संयोगवान् तदभाववांश्चेति प्रत्ययदर्श-नादित्यस्वरसादाह, 'किञ्चेति, 'साधनत्वस्य' स्वर्गादिसाधनत्वस्य, 'सिद्धमात्रधर्म्मत्वात्' सिद्धत्वव्याप्यत्वात्, सिद्धत्वं स्वनिष्ठसमयसम्बन्ध-ध्वंसवत्त्वं क्षणिकपदार्थे स्वर्गादिसाधनत्वविरहात् कृतिसाध्यत्वञ्च[१] न तादृशसिद्धत्वव्याप्यं उत्पत्त्यात्मकक्षणिकपदार्थेऽपि तत्सत्त्वादिति भावः।

केचित्तु 'साधनत्वस्य' तन्निष्ठसाधनत्वस्य, 'सिद्धमात्रधर्म्मत्वात्' तन्निष्ठसिद्धत्वदशामात्रवृत्तित्वात् कालिकसम्बन्धेन तन्निष्ठसिद्धत्व-व्याप्यत्वादिति यावत्, तन्निष्ठसिद्धत्वञ्च तदीयसमयसम्बन्धध्वंसवत्त्वं साधनत्वस्य फलसमयवर्त्तित्वघटितत्वेन उत्पत्तिकाले साधनत्वविर-हादिति भाव इत्याहुः।

'इच्छाविरोधीति उद्देश्यतया इच्छोत्पत्तौ विरोधीत्यर्थः। ननु सिद्धत्वज्ञानस्येच्छां प्रत्यविरोधित्वात्तद्व्याप्यवत्त्वज्ञानस्येच्छाविरो-

---

(१) नन्वेवं कृतिसाध्यत्वमपि साधनत्वव्याप्यं तज्ज्ञानस्य इच्छाविरोध्येव कथमिच्छाकारणमित्याशङ्कां निराचिकीर्षुराह, 'कृतिसाध्यत्वञ्चेति।

---

विरोधः वृक्षः संयोगी तदभाववांश्चेतिवदित्यस्वरसादाह, 'किञ्चेति, 'एतेनेति साधनत्वस्य इच्छाविरोधित्वेनेत्यर्थः, एवञ्च पर्वोक्तानुमाने दृष्टान्तासिद्धिरिति

धित्वे मानाभावः सिद्धत्वस्यापि सिद्धत्वव्याप्यत्वादित्यत आह, 'न हीति, 'सिद्धं' सिद्धत्वेन ज्ञातं । न चैवं भवन्मते कथमिष्टसाधनताज्ञानविशिष्टकृतिसाध्यताज्ञानात् चिकीर्षा साधनत्वज्ञानस्येच्छाविरोधिनः सत्त्वादिति वाच्यं । अस्मन्मते अनायत्या इष्टसाधनताज्ञाननाशे सति विनश्यदवस्थादिष्टसाधनताज्ञानविशिष्टात्कृतिसाध्यताज्ञानादेव चिकीर्षा कारणतावच्छेदकपूर्व्वसत्त्वस्यानपेक्षितत्वात् एककालावच्छेदेनैकात्मवृत्तित्वस्य वैशिष्ट्यतया चिरकालीनेष्टसाधनताज्ञानमादाय नातिप्रसङ्गः । यदि च फलसमयवर्त्तिन एव कारणत्वं तदा स्वाव्यवहितोत्तरकालावच्छेदेनैकात्मवृत्तित्वस्य वैशिष्ट्यतया इष्टसाधनताज्ञाननाशकालोत्पन्नात् कृतिसाध्यताज्ञानादेव सर्व्वत्र चिकीर्षा, स्वाव्यवहितोत्तरत्वञ्च स्वध्वंसाधिकरणक्षणध्वंसानधिकरणत्वे सति स्वध्वंसाधिकरणत्वं । न चैवमेककालावच्छेदेनैकात्मवृत्तित्वस्य वैशिष्ट्यत्वपक्षे यत्र प्रथममिष्टसाधनताज्ञानं ततोऽपेक्षाबुद्ध्यात्मकं कृतिसाध्यताज्ञानं तत इष्टसाधनताज्ञाननाशस्ततइष्टासाधनत्वज्ञानं तत्रापि तदनन्तरमपि चिकीर्षापत्तिः कारणतावच्छेदकपूर्व्वसत्त्वस्यानपेक्षितत्वात्, फलसमयवर्त्तिन एव कारणत्वमते यत्रेष्टसाधनताज्ञाननाशकालेऽपेक्षाबुद्ध्यात्मकं कृतिसाध्यताज्ञानं तत इष्टासाधनताज्ञानं तत्र तदनन्तरमपि चिकीर्षापत्तिः अव्यवहितोत्तरकालावच्छेदेन एकात्मवृत्तित्वस्य वैशिष्ट्यस्य सत्त्वात् फलसमये कृतिसाध्यताज्ञानसत्त्वाच्चेति वाच्यं। मम मते द्वित्वादेरपेक्षाबुद्धिनाशनाश्यत्वानभ्युपगमेनापेक्षाबुद्धेः क्षणत्रयावस्थायित्वासिद्धेरिति भावः । इदन्त्ववधेयं साध्यत्व-साधनत्वयोर्विरोधात्

इच्छादाविष्टसाधनताज्ञानमुपायेच्छाकारणत्वेन कॢप्तमिति निरस्तं। कथं तर्हि स्वतोऽसुन्दरे इच्छादाविच्छा, तत्साध्येष्टज्ञानादिति गृहाण।

अन्ये तु सुख-दुःखाभाव-तत्साधनेष्विच्छाप्रयोज-

---

काम्यसाधनतालिङ्गकं कार्य्यताज्ञानं(१) काम्ये हेतुरस्तु नित्ये शौचादिमत्ताविषयककार्य्यताज्ञानमेव प्रवर्त्तकमस्तु लाघवान्न तु तद्धीजन्यमिति प्राभाकराणां दुःसमाधेयमिति। 'एतेनेति, साधनत्वज्ञानस्य इच्छाविरोधित्वेनेत्यर्थः, 'इच्छादाविति कृतिसाध्यत्वाप्रकारकइष्टादीच्छायामित्यर्थः, 'उपायेच्छाकारणत्वेनेति उपायेच्छासामान्यकारणत्वेनेत्यर्थः, लाघवादिति भावः। 'निरस्तमिति, तत्रापीष्टसाधनताज्ञानस्योक्तयुक्त्या हेतुत्वाभावादिति भावः। 'तत्साध्येति सुखादौ इच्छिसाध्यताज्ञानादित्यर्थः, इच्छिसाध्यं सुखं भवत्वितीच्छायामेव सुखत्वस्येव इच्छेरपि विषयत्वादिति भावः।

'सुख-दुःखाभावेति सुख-दुःखाभावत्वेन बलवदनिष्टाननुबन्धित्वे सतीष्टसाधनत्वेन ज्ञातेष्वित्यर्थः, सुखत्वादिप्रकारकज्ञानजन्यमिति

---

(१) कृतिसाध्यताज्ञानमिति ग०।

---

भावः। 'तदिति, तत्साध्यत्वप्रकारिकेच्छा भवन्ती सुखत्वमिवावच्छेदकतया इच्छिमपि विषयीकरोतीति भावः। एतदज्ञाने सिद्धत्वादिकं न भासते इत्यभिमानः। 'तदेवेति, कृतिसाध्यत्वप्रकारकज्ञाने सतीति शेषः। न च बलवदनिष्टसाधनत्वज्ञाने प्रवृत्त्यापत्तिः, उद्देश्यत्वज्ञाने तादृशज्ञानाभावादिति भावः। बलवदनिष्टाननुबन्धिकृतिसाध्यत्वज्ञानं तथेत्यन्ये। ननु सुख-

कमनुगतमुद्देश्यत्वं पुरुषार्थपदवेदनीयं धर्म्मान्तरमस्ति अनुगतकार्य्यस्यानुगतकारणनियम्यत्वात्। तदेव दुःख-तत्साधनव्यावृत्तं सुख-तत्साधनादौ चिकीर्षाप्रयोजकमिति। न च दुःखविरोधित्वमेव तथास्तीति वाच्यं। सहानवस्थाननियमविरोधस्यासम्भवात्, बध्य-घातक-

शेषः, तेन इष्टसाधनताद्यज्ञाने न प्रवृत्तिरिति ध्येयं। 'इच्छा-प्रयोजकमिति ज्ञायमानं सदिच्छाप्रयोजकमित्यर्थः, 'उद्देश्यत्वमिति तत्तत्पुरुषीयोद्देश्यत्वमित्यर्थः, 'पुरुषार्थपदवेदनीयमिति पुरुषार्थ-पदप्रतिपाद्यमित्यर्थः, 'धर्म्मान्तरं' पदार्थान्तरं, 'अनुगतकार्य्यस्येति तत्तत्पुरुषेच्छासामान्यलक्षणानुगतकार्य्यस्येत्यर्थः। 'तदेवेति, ज्ञायमानं सत् कृतिसाध्यताज्ञानसहितमिति शेषः, 'दुःख-तत्साधनव्यावृत्तं' दुःखत्वेन दुःखसाधनत्वेन च ज्ञाताद्व्यावृत्तं, 'चिकीर्षाप्रयोजकमिति, अतएव चैत्यवन्दन-विषभक्षणादौ सञ्जातबाधदशायां न प्रवृत्तिस्त-दानीमिष्टसाधनत्वादिज्ञानाभावेनोद्देश्यत्वाभावात् तज्ज्ञानस्यासम्भ-वादिति भावः। उद्देश्यत्वञ्च कारणीभूतेष्टसाधनत्वादिज्ञाननाशनाश्यं तेन इष्टसाधनत्वादिज्ञाननाशे तज्ज्ञानमात्रान्नेच्छेति मन्तव्यं(१)। 'तथास्तीति इच्छाप्रयोजकमस्तीत्यर्थः। 'असम्भवादिति, सुखादेरपि

(१) इति द्रष्टव्यमिति ग०।

दुःखयोः स्वसाक्षात्कारमात्रनिवर्त्यत्वात्तयोर्बध्य-घातकभावो न प्रश्नास्पद-

भावस्यैकसमये समानाधिकरण्याभावस्य च यत्नादि-साधारण्यादिति। तन्न। तदज्ञानेऽपि सुखत्वज्ञानादिच्छोत्पत्तेः, न हि सुखत्वे ज्ञाते धर्मान्तरज्ञानं विना नेच्छेति, तथात्वे स्वतः प्रयोजनत्वान्यापत्तेः, तदेव हि स्वतः प्रयोजनं यदवगतं सत् स्ववृत्तितयेष्यते। किञ्चा-

---

दुःखसमानाधिकरणत्वादिति भावः। 'एकसमय इति एकदेशकालावच्छेदेनेत्यर्थः, तेन शिरः-पादावच्छेदेन एकक्षणे एकत्रात्मनि सुख-दुःखोत्पादेऽपि न क्षतिः, 'सामानाधिकरण्याभावस्येति एकस्मिन्नधिकरणे अनुत्पद्यमानस्येत्यर्थः, अन्यथा सुख-दुःखयोरपि एकस्मिन्नधिकरणे एकक्षणावस्थानादसङ्गतेः, 'यत्नादीति, इदमुपलक्षणं सुखसाधनाव्याप्तिरपि द्रष्टव्या। 'यदवगतमिति येन रूपेण ज्ञाने सत्यसति प्रतिबन्धकेऽवश्यं तेन रूपेण इच्छा भवति तत् तेन रूपेण ज्ञातं स्वतः प्रयोजनमित्यर्थः,(१) 'स्ववृत्तितयेति स्वरूपकथनं

---

(१) येन रूपेण ज्ञाने सत्यसति प्रतिबन्धकेऽप्यवश्यं तेन रूपेण इच्छा भवति तद्वत्ता स्वतः प्रयोजनत्वमित्यर्थ इति ग० ।

---

मपीति विरोधपदार्थमाह, 'एकेति, 'यत्नेति, यत्नविशेषो बोध्यः, स्वरूपसतस्तथात्वेऽतिप्रसङ्ग इति ज्ञातस्यैव तथात्वं वाच्यमेवं सत्याह, 'तदज्ञानेऽपीति, 'यदवगतमिति येन रूपेण ज्ञानं यदिच्छाप्रयोजकमित्यर्थः, पाकादिकन्तु पाकत्वादिना ज्ञातं न तथा किन्त्विष्टसाधनत्वेनेति भावः। नन्वेवं भोगोऽपि स्वतः पुरुषार्थः स्यादिति चेत्, इष्टापत्तिरित्येके। भोगे

सुगतधर्म्मकल्पनापि कारणे । न च सुखादि इच्छा-कारणं अनागतत्वात्, किन्तु तदवगमः, तर्हि सुखा-दिज्ञाने तत् स्वरूपसद्देवेच्छाप्रयोजकमस्त्विति चेत्,

---

बलवदनिष्टाननुबन्धीष्टसाधनत्वेन ज्ञानेऽसति प्रतिबन्धकेऽवश्यमि-च्छोदयेऽपि इष्टसाधनत्वस्य तत्राप्रकारत्वात्[१] न तेन रूपेण यागा-दीनां स्वतः प्रयोजनत्वं भोगस्याप्येवंरूपत्वे तस्यापि तत्त्वमिति भावः । नन्वन्येच्छानधीनेच्छाविषयतावच्छेदकधर्म्मवत्त्वं स्वतः पुरु-षार्थत्वमस्त्वित्यत आह, 'किन्त्विति । 'न च सुखादीति लुप्त-प्रथमान्तं । शङ्कते, 'तर्हीति, 'सुखादिज्ञान इति, 'आदिना इच्छाविषयान्तरपरिग्रहः, सुखत्व-दुःखाभावत्व-बलवदनिष्टाननुब-न्धित्वे सतीष्टसाधनत्वज्ञानसमानकालीने इति शेषः, तेन सज्ज्ञा-तबाधस्य विषभक्षणादिव्युदासः । तद्धर्म्मस्य नित्यत्वे समवेतत्वे च जातित्वापत्त्या साक्षात्कारत्वादिना सङ्करप्रसङ्गात् जन्यमेव तत् वाच्यं तज्जनने च तादृशसुखादिज्ञानानां प्रत्येककारणत्वे व्यभिचा-राद्न्यतमत्वेन तृणारणिमण्यादेरिव एकशक्तिमत्त्वेन वा तादृ-शसुखादिज्ञानानां हेतुत्वं वाच्यं तथाच इच्छां प्रत्येव तादृश-सुखादिज्ञानानां तेन रूपेण हेतुत्वमस्तु किं धर्म्मान्तरकल्पनयेति

---

(१) तत्र प्रकारत्वानभ्युपगमादिति ग० ।

---

इच्छा नास्त्येव इत्यन्ये । तद्भिन्नत्वेन विशेषणादित्यपरे । 'तर्हीति अनुगत-

न, यथा ह्युद्देश्यत्वं सुखज्ञानादिषूत्पद्यते अन्यतरत्वात् तृणारणि-मणिन्यायाद्वा तथैवेच्छैव जायतां, कृति-

---

परिहरति, 'यथा हीति, 'अन्यतमत्वादिति पाठः, 'अन्यतरत्वादिति पाठस्तु प्रामादिकः, तद्धर्मस्य बहुतरनिष्ठत्वेनान्यतरत्वेन हेतुत्वे व्यभिचारात्, 'तथैवेच्छेति धर्मान्तर-तत्कार्य्य-कारणभावादिकल्पने गौरवादिति भावः। न च तज्जात्यतिरिक्तमित्यमखण्डं धर्मान्तर-मस्त्विति वाच्यं। तथापि तस्येच्छां प्रति कार्य्य-कारणभावकल्पन-मपेक्ष्य विषयज्ञानविधया क्लृप्तकारणभावेषु सुखादिज्ञानेष्वेव इष्ट-साधनत्वादिज्ञानविरहकालीनसुखादिज्ञानव्यावृत्तधर्मान्तरस्य का-रणतावच्छेदकत्वेन कल्पयितुमुचितत्वादिति हृदयं[१]। ननु कृति-साध्यत्वप्रकारकेच्छायाश्चिकीर्षात्वे तव नये कलञ्जभक्षणप्रागभावे निषेधापूर्व्वरूपफलजनके संवादिचिकीर्षाधीना कथं प्रवृत्तिः प्राग-भावस्य कृतिपूर्व्वमपि सत्त्वेन कृतिसाध्यत्वस्य तत्र बाधादित्यत-

---

(१) इति ध्येयमिति ग०।

---

त्वेनावच्छेदकतया तत्प्रयोजकमित्यर्थः, 'अन्यतरत्वादिति। यद्यपि बहूनां प्रक्रान्तत्वादन्यतमत्वादित्यर्हति तथापि द्वौ द्वावभिप्रेत्य तदुक्तं "तेषां मोहः पापीयानितिवदिति भावः। 'तृणेति एकशक्तिमत्त्वादित्यर्थः, एत-च्चोपलक्षणं सुखादेर्जन्यधर्म्मानाश्रयत्वात् असम्भव इत्यपि बोध्यं। यद्यपि नित्यधर्म्मपक्षे न दोषस्तथापि तादृशपदार्थे प्रमाणमेव नास्तीति तात्पर्य्यं। नन्वेवं दुःखानुत्पादार्थितया प्रायश्चित्ते प्रवृत्तिर्न स्यात् अनुत्पादस्य प्रागभाव-

**साध्यत्वञ्च कृतौ सत्यां अग्रिमक्षणे स्वरूपं न कृतिं विना, क्षेमसाधारणञ्चैतत्। कृतिसाध्यत्वञ्च न कृतेः पूर्वं। ननु कृतौ नष्टायां सन्नपि धर्म्मो न कार्य्यः तथाच**

आह, 'कृतिसाध्यत्वञ्चेति, 'कृतौ सत्यां' अस्मिन् क्षणे कृतौ सत्यां, 'अग्रिमक्षणे' एतदग्रिमक्षणे, 'स्वरूपं' साध्यतयाभिमतस्य स्वरूपं, 'न कृतिं विना' नास्मिन्क्षणे कृतिं विना, तदग्रिमक्षणे तस्य स्वरूपमित्यनुषज्यते, कृत्यधीनसमयसम्बन्धवत्त्वमिति तु समुदयार्थः। अधीनत्वञ्च अस्यैतत्क्षणसम्बन्धोऽस्याधीन इति प्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेष इति भावः। एतच्च प्रागभावेऽप्यस्तीति दर्शयति, 'क्षेमेति, एतच्च क्षेमसाधारणमिति योजनीयं, कृतिपूर्व्वं वर्त्तमानो यः कलञ्जभक्षणादिप्रागभावस्तत्साधारणमित्यर्थः। नन्वेवं कृतेः पूर्व्वमपि तत्र कृतिसाध्यत्वव्यवहारः स्यादित्यत आह, 'कृतिसाध्यत्वञ्चेति, तथाच धर्म्मिणः पूर्व्वं सत्त्वेऽपि धर्म्मस्य तदानीमभावान्न तत्कालावच्छेदेन तद्व्यवहार इति भावः। 'नन्विति, एतादृशस्य कृतिसाध्यत्वरूपत्वे इति शेषः, 'सन्नपि धर्म्मोति स्वर्गादेरव्यवहितपूर्व्वं

---

रूपत्वेन कृत्यसाध्यत्वादित्यत आह, 'कृतिसाध्यत्वञ्चेति। 'क्षेमं' दुःखप्रागभावादिकं, एतच्च प्रत्यक्षप्रकाशे विपञ्चितं। ननु यदि कृत्यग्रिमक्षणघटितं कृतिसाध्यत्वं तदा कृतिपूर्व्वं कृतिकाले च तदभावात् पाकादौ कृतिसाध्यत्वव्यवहारो न स्यादित्यत आह, 'न कृतेः पूर्व्वमिति एतच्चोपलक्षणं कृतिकालेऽपि द्रष्टव्यं, तथाचोक्तकृतिसाध्यत्वं तदा नास्त्येवेति तत्तदा न व्यवह्रियत एव किन्तु कृत्यर्हत्वं कृतिजननस्वरूपयोग्यत्वं व्यवह्रियत इति भावः। कृतेर्विशेषणत्वमादाय शङ्कते, 'नन्विति, यद्यपि नैयायिकमतसाधा-

कथं कार्य्योऽपूर्व्वं कामिनोऽन्वयः क्षणिकत्वेन क्रियातुल्यत्वादिति चेत्, न, यद्वृत्तिकाम्यसाधनत्वं तच्च कार्य्यता-

---

विद्यमानोऽप्यपूर्व्वरूपो धर्म्मोत्यर्थः, 'न कार्य्यः' न यथोक्तकृतिसाध्यताविशिष्टः, कृत्यधीनसमयसम्बन्धस्यासत्त्वएव सत्त्वादिति भावः। 'कामिनोऽन्वय इति स्वर्गकामो यजेतेत्यादौ यागविषयकं स्वर्गकामकार्य्यमिति कामिकार्य्यत्वान्वयबोध इत्यर्थः, 'क्षणिकत्वेन' विशिष्टस्य फलाव्यवहितपूर्व्वमसत्त्वेन, 'क्रियातुल्यत्वादिति यथा यागादावस्थिरत्वेन साक्षात्साधनत्वस्य बाधितत्वात्परम्पराघटकस्य चानुपस्थितेः स्वर्गरूपेष्टसाधनत्वज्ञानं न सम्भवति तथा कृतिसाध्यत्वविशिष्टापूर्व्वेऽपि साक्षात्साधनत्वबाधात् स्वर्गसाधनत्वज्ञानासम्भवादित्यर्थः,(१) कामिकार्य्यतान्वयबोधे च भवन्मते कृतिसाध्यत्वविशिष्टेष्टसाधनत्वस्यान्वयप्रयोजकरूपतया योग्यतात्वादिति भावः। तस्मात् कृतिजन्यतावच्छेदकावच्छिन्नत्वमेव कृतिसाध्यत्वं वाच्यं तच्च न प्रागभाव इति हृदयं। काम्यसाधनत्वमात्रं कामिकार्य्यतान्वयबुद्धिप्रयोजकं, न तु कार्य्यताविशिष्टीभूय काम्यसाधनत्वमिति समाधत्ते, 'यद्वृत्तीति, 'तच्च कार्य्यताबुद्धेरिति कर्म्मणि षष्ठी

---

(१) विशिष्टस्वर्गसाधनताज्ञानासम्भवादित्यर्थ इति क०।

---

रणमिदं तथापि ग्रन्थमात्रमेतदित्येके। तटस्थग्रन्थयमित्यपरे। उपलक्षणत्वमालम्ब्य परिहरति, 'यद्वृत्तीति, 'न त्विति, गौरवादिति भावः। न प्रत्यक्षेण बोध्येति शेषः। 'पाको मत्कृतिसाध्य इति इदानीं पाकः स्वेच्छाधीनमत्कृतिसाध्य इति बोध्यं, तेन प्रवर्त्तकं ज्ञानमुत्पाद्यते। नन्विदानीं मत्-

बुद्धेः प्रयोजकत्वात् न तु कार्य्यताविशिष्टस्य काम्यसाधनतेति व्याप्तिः। ननु पाकादौ कृतिसाध्यताज्ञानं न प्रत्यक्षेण कृत्यनन्तरं पाके सति कृतिसाध्यताज्ञानं तस्मिन् सति कृतिरित्यन्योन्याश्रयात् कृतिसाध्यतोत्तीर्णे चिकीर्षा-कृत्योरसम्भवाच्चेति चेत्, न, पाको

---

तत्र कामिकार्य्यतान्वयबुद्धिं प्रति विधेर्हेतुत्वादित्यर्थः, 'काम्यसाधनतेति कामिकार्य्यतान्वयबुद्धिप्रयोजिकेति विभक्तिविपरिणामेनानुषज्यते, 'इति व्याप्तिः' इत्यभ्युपगमः। 'पाके सतीति तदैव विशेष्येन्द्रियसन्निकर्षसम्भवादिति भावः। 'कृतिसाध्यताज्ञानं' स्वकृतिसाध्यताप्रत्यक्षं। नन्वन्यगोचरकृत्या नान्तरीयकतया उत्पन्ने पाके कृतिसाध्यताज्ञानं भविष्यतीति अन्यगोचरकृतौ तन्निष्ठकृतिसाध्यताप्रत्यक्षस्याहेतुत्वेन तत्रान्योन्याश्रयाभावादित्यत आह, 'कृतिसाध्यतोत्तीर्ण-इति कृतित उत्पन्नपाकादावित्यर्थः, तत्र कृतिसाध्यताज्ञानसम्भवेऽपि

---

कृतिसाध्यत्वं न प्रसिद्धं एतदनुमानावतारकाले अनुमानकर्त्ता इदानींपदार्थतया अभिमतेन कालेन विशिष्टस्य साध्यस्य क्वचिदप्यग्रहादिति चेत्, भ्रान्तोऽसि, न ह्यीदानींपदार्थस्य व्यापकतावच्छेदकप्रविष्टत्वेनानुमितिविषयत्वमनुमन्यामहे, किन्तु यथा यत्र हेतुस्तत्र साध्यमिति दैशिकव्याप्त्या यत्र देशे हेतुग्रहः तद्देशीयत्वं साध्यस्य पक्षधर्म्मताबलात् सिध्यति तथा यदा हेतुस्तदा साध्यमिति कालिकव्याप्त्या यत्र काले हेतुग्रहस्तत्कालीनत्वं साध्यस्य सिध्यति पक्षधर्म्मताबलादेव न त्वन्यतरस्यापि साध्यकोटिप्रवेशः, प्रकृतेऽपि व्याप्तिप्रदर्शकेऽग्रिमग्रन्थे 'यदा तदेति यदोपादानात् कालिकव्याप्तिरभिमता, तथाच तत्कालावच्छिन्नपाकस्य पक्षत्वपर्य्यवसानात् पक्ष-

मत्कृतिसाध्यः मत्कृतिं विना असत्त्वे सति मदिष्ट-

चिकीर्षा-कृत्योरसम्भवात् सिद्धत्वधियः प्रतिबन्धिकायाः सत्त्वादि-त्यर्थः,(१) तथाच यत्र चिकीर्षाधीनकृतिस्तत्र कृतिसाध्यताप्रत्यक्षम-न्योन्याश्रयग्रस्तमेवेति भावः। 'मत्कृतीति इदानीन्तनस्वेच्छाधीन-मत्प्रवृत्तिसाध्य इत्यर्थः, पुरुषान्तरीयप्रवृत्तिसाध्यताज्ञानेऽप्यप्रवृत्तेः स्वप्रवृत्तिसाध्यताज्ञानमेव प्रवर्त्तकमतस्तत्सम्पत्तये 'मदिति, बाल्य-दशायां भावियौवराज्ये प्रवृत्तिवारणाय एतत्कालीनप्रवृत्तिसाध्य-ताज्ञानमेव प्रवर्त्तकमतस्तत्सम्पत्तये इदानीन्तनेति प्रवृत्तिविशेषणं, पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वाच्च परकृतपाके

(१) सत्त्वादिति भाव इति ग०।

धर्म्मितावलादेव तल्लाभ इति नोक्तदोषः। नन्वेवं एतत्काले पाकः कृतिसाध्य-इति ज्ञानेऽपि इदानीन्तनी या मत्कृतिः तत्साध्यताज्ञानं यत् प्रवर्त्तकं तन्न स्यादिति चेत्, न, आद्यस्यैव प्रवर्त्तकत्वात् अन्त्यस्य तथात्वे इदानीन्तनत्वस्य कृतिविशेषणत्वेन साध्यप्रवेशे 'यस्येत्याद्यग्रिमोदाहरणस्यान्यथाकारत्वापत्तेः। नन्वेवमिदानीन्तनकृत्या चिरकालसाध्ये भाविनि राज्यादौ प्रवृत्तिर्न स्यात् एतत्काले कृतिसाध्यमिति ज्ञानाभावादिति चेत्, न, तत्र हि तदुपाय-देवताराधनादौ प्रवर्त्तते तत्र च तज्ज्ञानमक्षतमेव, अतएव यत्र तदुपायेन तादृशं ज्ञानं तत्र तदा न प्रवर्त्तते एव। केचित्तु व्याप्तावपि न कालप्रवेश-स्तदानीं कृतिसाध्यताधीस्तु वर्त्तमानकालस्य पक्षतावच्छेदकत्वादयगानुमिता-विवेत्याहुः। अन्ये तु इदानींकालस्य साध्यप्रवेश एव तथाच तत्प्रवेशो हेतावपि। न चैवं साध्याप्रसिद्धिरिति वाच्यं। पूर्व्वमिदानीं मत्कृतिसाध्य-इति क्वचिदनुमितौ जातायां तत्र व्याप्तिग्रहे जाते प्रकृतानुमानकाले पूर्व्वा-प्रसिद्धस्य कालविशेषस्य विशेषणतयैव पूर्व्वसिद्धसाध्यसाधारण्येन व्यापकता-

साधनत्वात् दैवाद्यनधीनत्वे सति मदिष्टसाधनत्वाद्वा

---

स्वीयकालान्तरकृतपाके वा अंशतोबाधः, जीवनयोनिकृत्यादिसाध्यताज्ञाने प्रवृत्त्यसाध्यताज्ञाने च प्रवृत्तेरनुदयात् प्रवृत्तित्वेन प्रवृत्तिसाध्यताज्ञानमेव प्रवर्त्तकमतस्तत्सम्पत्तये कृतित्वं विहाय प्रवृत्तित्वेन प्रवेशः, अज्ञातबाधदशायां चैत्यवन्दनादौ प्रवृत्तिवारणाय इष्टसाधनताज्ञानजन्यकृतिसाध्यताज्ञानस्यैव प्रवर्त्तकतया तल्लौलभ्याय

---

वच्छेदकरूपेण सिद्धिसम्भवात् विशिष्टवैशिष्ट्यज्ञाने विशेषणतावच्छेदकप्रकारकज्ञानस्यैव तन्मते हेतुत्वात् न्यायमते सामान्यलक्षणया पर्व्वतीयवह्निभानवत् कालविशेषस्यापि भानाच्च। न च पूर्व्वमिदानीम्पदार्थस्यापि भातस्याधुनेदानीम्पदार्थस्यैवैकरूपाभावात् कथं पूर्व्वसाध्यसाधारणमेकं व्यापकतावच्छेदकं स्यादिति वाच्यं। इदानीम्पदस्य हि प्रवृत्तिनिमित्तमनुगतमवश्यं वाच्यं अन्यथा तस्य नानार्थतापत्तेः तथाच तदेवैकमनुगतं व्यापकतावच्छेदकं स्यात्, अन्यथा पर्व्वतोऽयमिदानीन्तनधूमवत्त्वात् इत्यनुमितिरपि न स्यात्। अतएवेदानीं मत्कृतिसाध्य इति शाब्दबोधोऽपि अन्यथाननुगमेन सङ्केताग्रहात् तदनुपपत्तेरित्याहुः। तच्चिन्त्यं, 'इदानीमग्रिमपदार्थयोर्नानार्थत्वादननुगमेन व्याप्त्यग्रहादिति पूर्व्वग्रन्थविरोधात्। पाके कृतिसाध्यत्वं सिध्यत् सिद्धे बाधादित्यग्रिमग्रन्थविरोधाच्च, इदानीन्त्वस्य पूर्व्वकालसाधारणत्वेन तत्रापीदानीं कृतिसाध्यत्वस्याबाधात् अन्यथाननुगमस्यैव वज्रलेपायमानत्वात्। साध्ये हेतौ च कालप्रवेशे 'यदा तदेति कालिकव्याप्त्युपदर्शनविरोधाच्च कालस्याधेयकोटिप्रविष्टत्वेन कालेऽधिकरणे हेतु-साध्यसामानाधिकरण्याग्रहात् अन्यथा दैशिकव्याप्तावपि तत्तद्देशीयत्वस्य साध्याद्यन्तर्भावापत्तेः, यच्चोक्तं पूर्व्वमिदानीं मत्कृतिसाध्य इति क्वचिदनुमितौ व्याप्तिग्रह इत्यादि, तन्न, तत्रापि साध्याप्रसिद्ध्या तादृशानुमित्यसम्भवात्।

ष्टेताविष्टसाधनताप्रवेशस्यावश्यकत्वेन तत्सार्थक्याय स्वेच्छाधीनेति स्वविषयकेच्छाधीनेत्यर्थः। यत्तु भ्रमे प्रवृत्तिवारणाय स्वेच्छाधीना या प्रवृत्तिस्तत्साध्यताज्ञानमेव प्रवर्त्तकं अतः स्वेच्छाधीनेति स्वविषयकेच्छाधीनेत्यर्थकं इति, तन्तुच्छं, भ्रमे प्रवृत्तिवारणाय स्वेच्छाधीनत्वस्य स्वरूपसत एव(१) कारणतावच्छेदकतया तज्ज्ञानस्यानुपयुक्तत्वात्तदर्थं स्वप्रकारकेच्छाधीनत्वस्यैव(२) प्रवृत्तिविशेषणत्वाच्च, स्वपदं

---

(१) अन्यथा स्वेच्छाधीनत्वस्य ज्ञानविषयतया कारणतावच्छेदकत्वे भोजनेच्छायां स्वविषयकत्वभ्रममादाय भ्रमे प्रवृत्त्यापत्तेर्दुर्वारत्वमिति भावः।

(२) भ्रमे प्रवृत्तिवारणार्थं स्वप्रकारकेच्छाधीनत्वं कारणतावच्छेदककोटौ निवेशितं प्रागेवेति भावः।

---

यदि चोक्तगत्या कालिकव्याप्त्या तत्रानुमितिस्तदा प्रकृतेऽपि तदस्तु इदानीम्पदे च कालशक्तौ शक्तिग्रहसहकारितया स्वरूपसदेवोच्चारणकालत्वमन्यदा धीनियामकं यथाहमादिपदे उच्चारयितृत्वादिकं नियमतस्तस्यैव बोधनादतो न शाब्दबोधानुपपत्तिः। न च तस्य नानार्थता तद्वदेव, अतएवानुमाने शब्दस्वभावोपन्यासस्याप्रयोजकत्वादिति ग्रन्थकृता प्रागुक्तं। इदानीं वह्निमान् इत्यनुमितिरपि कालिकव्याप्तिग्रहे सत्युक्तगत्यैव यत्र एतत्कालीनधूमस्तत्र एतत्कालीनवह्निरिति विशेषकालघटितहेतु-साध्ययोर्दैशिकव्याप्तिग्रहे क्वचिदन्यथापि। न च प्रकृतेऽपि तथा व्याप्तिरस्त्विति वाच्यं। सर्व्वत्र तथा व्याप्त्यग्रहात् तथा सत्यतीतयागादौ व्यभिचारप्रसङ्गाभावेनाग्रे तन्निरासस्यासङ्गतत्वापाताच्चेति दिक्। 'मत्कृतिं विनेति इच्छाधीनमत्कृतिं विनेत्यर्थः, तेन प्राणपञ्चकसञ्चारे न व्यभिचारः, सत्यन्तं वृष्टौ व्यभिचारवारणाय। 'मत्कृतिं विनेत्यत्र मत्पदं परकृते मदिष्टसाधने व्यभिचारवारणाय। सत्यन्तमात्रोपादाने भ्रमे व्यभिचारादुत्तरप्रतीकं। 'मदिष्टेत्यत्र मत्पदं तत्रैव

प्रवृत्तिविषयतावच्छेदकधर्म्मपरं । 'मत्कृतिं विनेति, वृष्ट्यादौ व्यभिचारवारणाय सत्यन्तं इदानीन्तनमत्प्रवृत्तिव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वे सतीत्यर्थकं, प्रयुक्तत्वञ्च कारणाभावात् कार्य्याभाव इति प्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेषः, साध्ये इदानीन्तनत्वस्य प्रवृत्तिविशेषणतया(१) भावियौवराज्ये व्यभिचारवारणाय इदानीन्तनेति प्रवृत्तिविशेषणं, इदानीन्तनमत्प्रवृत्तिव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वञ्च इदानीन्तनमत्कृतिव्यक्तिर्यस्य(२) फलोपधायिका तत्रैव वर्त्तते, न तु तत्स्वरूपयोग्यमात्रे तेन न तद्दोषतादवस्थ्यं, प्रवृत्ति-

(१) इदानीन्तनप्रवृत्तिघटितसाध्यस्यैव तत्रासत्त्वं न तु तदघटितस्येति [भावः ।

(२) यस्य पाकादिरूपफलस्य ।

व्यभिचारवारणाय, तस्यापि मदीयश्रमार्थि-मदीयशत्रोरिष्टसाधनत्वात् । ननु श्रमवदन्येच्छाधीनमत्कृतिसाध्ये मदिष्टसाधने जलसंयोगादौ व्यभिचारः । न च स्वेच्छाधीनमत्कृतिं विनेति विवक्षितं, तथा सति तत एव श्रमे व्यभिचारवारणे मदिष्टेत्यस्य वैयर्थ्यापत्तेरिति चेत्, न, अन्येच्छाधीनमत्कृतिसाध्य-मदिष्टसाधनान्यत्वे सतीत्यस्यापि विशेषणत्वात् । यद्यप्यन्येच्छाधीनमत्कृतिसाध्यान्यत्वे सति इत्येव कृते श्रमेऽपि व्यभिचारवारणादुत्तरप्रतीकं व्यर्थमेव तथापि तस्य हेत्वन्तरतया प्रकृते न दोष इति ध्येयं । ननु वस्तुतो यद्बलवदनिष्टाननुबन्ध्येव तदनुबन्धित्वेन, मत्कृतिं विना सदैव तां विना असत्त्वेन, मदिष्टसाधनमेव मदिष्टासाधनत्वेन भ्रमविषयस्तदा तत्र वस्तुतो निरुक्तहेतुरस्ति कृतिसाध्यत्वं नास्तीति कालिकव्याप्तौ व्यभिचारात् । न च तत्त्वेन ज्ञायमानत्वं प्रकृतहेत्वर्थः, तथा तत्र दोषान्नास्तीति वाच्यं । तत्त्वेन ज्ञायमानेऽपि निगड़निस्खलदेहस्यामवातजड़ीकृतकलेवरस्य वा क्रियानुत्पादेन व्यभिचारतादवस्थ्यादिति चेत्, न, उक्तभ्रमादेव प्रवृत्तिप्रतिबन्धे तद्व्यापार-

साध्यत्वस्य साध्यतया जीवनयोनिकृतिसाध्ये प्राणपञ्चकसञ्चारे व्यभिचारवारणाय कृतित्वं विहाय प्रवृत्तित्वेन प्रवेशः। न चेदं प्राग्दुर्ग्रहं तादृशप्रवृत्तेरसन्निकृष्टत्वात् यत्नाज्ञां सामान्यतोव्याप्तिस्थले पक्षधर्म्मताबललभ्यसाध्यप्रसिद्धेरनङ्गत्वेऽपि हेतुतावच्छेदकरूपेण हेतुप्रसिद्धेरावश्यकत्वादिति[१] वाच्यं। अनायत्या शब्दादिना कथञ्चित् प्रसिद्धिकल्पनात् साध्ये स्वेच्छाधीनत्वस्य प्रवेशात् हेतौ च तदप्रवेशादन्यविषयकप्रवृत्त्या नान्तरीयकतयोत्पन्ने तृप्त-भोजनादौ व्यभिचार इत्यतो विशेष्यदलं, तदानीन्तनमदिच्छाविषयसाधनत्वं तदर्थः, यथोक्तभोजनादिषु न तथा तत्फले कालान्तरे इच्छा-

(१) सामान्यव्याप्तिस्थले प्रकृतसाधनान्यसाधनसजातीये प्रकृतसाध्यान्यसाध्यसजातीयव्याप्तिमहसहकृतस्य पक्षे प्रकृतसाधनवत्ताज्ञानस्यैव हेतुत्वेन हेतुज्ञानस्यापेक्षितत्वादिति भावः।

स्यानिर्व्यूढतया तेनेष्टाजननादिष्टसाधनत्वस्यैव तत्राभावेन हेत्वसत्त्वात् 'असिद्धस्येत्याद्यग्रिमग्रन्थपर्य्यालोचनया साधनपदस्य फलोपहितपरत्वलाभात्, अतएव सम्प्रति मदिष्टसाधनतायोग्ये चिरभाविपाकादौ न व्यभिचारः। न चेष्टसाधनत्वस्य कृतिं विनाऽसत्त्वस्य सिद्धासिद्धधर्म्मतया विरोधादेकदा एकधर्म्मिगतत्वेन भानं न स्यादिति वाच्यं। एकत्र स्थूलकाले द्वयोरवच्छेदभेदमादाय तद्ग्रहात्। नन्वेवमिष्टसाधनत्वेनैव सामञ्जस्ये किं बलवदनिष्टाननुबन्धित्वोपादानेन। न च तदनुपादेयमेवेति वाच्यं। 'बलवदनिष्टाननुबन्धित्वश्चेत्यग्रिमग्रन्थविरोधादिति चेत्, न, बलवदनिष्टाननुबन्धित्वस्य साध्येऽपि विवक्षिततया भ्रमकृते मधु-विषसम्पृक्तान्नभोजने व्यभिचारवारकत्वेन तदुपयोगात्। न च साध्ये तदुपादानं विफलमिति वाच्यं। स्वेच्छाधीनकृतिसाध्यत्वेन ज्ञायमाने मधु-विषसम्पृक्तान्नभोजने बलवदनिष्टजनकत्वग्रहदशायां न

सत्त्वेऽपि तदा तत्पुरुषस्येच्छाविरहात् पचतावच्छेदकसामानाधिकरण्येन हेतुमत्ताज्ञानादनुमितिरतो न भागासिद्धिर्दोषाय। नन्वेवमपि आनुषङ्गिकेच्छाविषयसुखसाधने पिष्टकादिमध्यस्थितमीनभोजनादौ नान्तरीयके व्यभिचारो दुर्व्वारस्तत्र विशेष्यदलस्यापि सत्त्वात् स्वेच्छाधीनत्वघटितसाध्यस्य चासत्त्वात्। न च फलेच्छासत्त्वे तद्विषयकेच्छाधीनकृतेरावश्यकत्वात् तत्र तादृशसाध्यमप्यस्तीति वाच्यं। फलेच्छासत्त्वेऽपि तत्साधनताज्ञानाभावादुपादानप्रत्यक्षस्य कृतिहेतुतया तदभावाच्च मीनभोजनादौ कृत्युत्पादासम्भवात्। न च हेतावपि स्वविषयकेच्छाधीनत्वेन प्रवृत्तिर्विशेषणीया अन्येच्छाधीन-मत्कृतिसाध्यान्यत्वे सतीत्यनेन वा हेतुर्विशेषणीय इति वाच्यं। विशेष्यदलवैयर्थ्यापत्तेः। न च धूमप्रागभाव-धूमविशिष्टप्रमेयत्वयोरिव धर्म्मिभेदान्न वैयर्थ्यमिति वाच्यं। तथापि साधनताघटकपूर्व्ववर्त्तित्वादेरेव सार्थकत्वेनान्यस्य वैयर्थ्यात् आनुषङ्गिकेच्छाविषयसाधने नान्तरीयकमधु-विषसम्पृक्तान्नभोजने व्यभिचारवारणाय वक्ष्यमाणबलवदनिष्टाननुबन्धित्वविशेषणवैयर्थ्यापत्तेश्च। न च तन्मये बलवदनिष्टाननुबन्धीष्टसाधनतालिङ्गककृतिसाध्यताज्ञानस्य प्रवृत्ति-

---

प्रवृत्तिरिति तद्विषयत्वेनापि तस्य प्रवर्त्तकत्वात्। न च तावता तज्ज्ञानाभावहेतुतास्त्विति वाच्यं। तदभावकारणत्वे गौरवाज्जनकज्ञानं विघटयत एव ज्ञानस्य प्रतिबन्धकत्वादत एव न्यायनयेऽपि तद्विषयतया ज्ञानस्य प्रवर्त्तकत्वं। अन्ये तु सञ्जातबाधस्य मधु-विषसम्पृक्तान्नभोजने कृतेरनुत्पादात् यथाश्रुतसाध्ये व्यभिचारात्तद्वारणायैव तद्विशेषणमिति वदन्ति, तच्चिन्त्यं, तदा तस्यानिष्पन्नत्वेनेष्टाजनकतया इष्टसाधनत्वस्याभावेन तत एव तद्वारणात्

हेतुतया तत्सम्पत्तये हेतौ तदुभयोपादानमिति वाच्यं। तथापि व्याप्तिग्रहानुपयुक्तत्वेन व्यर्थविशेषणताताद्वस्थ्यादिति, मैवं, अन्येच्छाधीनकृतिसाध्यं सद्बलवदनिष्टाननुबन्धित्वे सतीदानीन्तनमदिच्छाविषयसाधनं यत् तदन्यत्वे सतीत्यनेन हेतुविशेषणात् अतो न यथोक्तनान्तरीयकमौनभोजनादौ व्यभिचारः, यथोक्तनान्तरीयकतृप्तभोजनादेर्यथोक्तनान्तरीयकमधु-विषसम्पृक्तान्नभोजनादेरपि तादृशविशिष्टान्यत्वेन तद्वारकतयैव विशेष्यदल-बलवदनिष्टाननुबन्धित्वदलयोर्न वैयर्थ्यं। न च प्रतियोगिकोटौ बलवदनिष्टाननुबन्धित्वेष्टसाधनत्वयोः कथमुपादानमिति वाच्यं। बलवदनिष्टाननुबन्धीष्टसाधनतालिङ्गककृतिसाध्यताज्ञानस्य प्रवर्त्तकत्वेन हेतौ तदुभयोपादानस्यावश्यकतया तत्सार्थक्याय तदुपादानात् अखण्डाभावघटकतया च वैयर्थ्याभावादिति गुरुचरणाः।

---

निष्पन्नत्वे स्वेच्छाधीनकृतिसाध्यत्वस्यापि तत्र सत्त्वाज्जीवनयोनिकृतेस्तदनुत्पत्तेः, अन्यथा बलवदनिष्टाननुबन्धिनि भोजनादौ तदनुबन्धित्वभ्रमदशायां कृतेरनुत्पादेन तद्विशेषणादाने व्यभिचारस्य वज्रलेपत्वादिति सङ्क्षेपः। यत्तु पिष्टकादिमध्यस्थितविषभक्षणे दृष्टेष्टसाधने स्वेच्छाधीनकृत्यसाध्ये यथाश्रुते व्यभिचार इति तद्विशेषणमिति, तत्तुच्छं तन्मध्यस्थितमीनादिभोजने तथापि व्यभिचारात्। ‘दैवादीति, आदिपदेन परकृत्यादिपरिग्रहः, तदनधीनत्वञ्च तदनधीनोत्पत्तिकत्वं, तेन न नित्येष्टसाधने व्यभिचारः, यद्यपि पाकस्याप्यदृष्टजन्यतया दैवाधीनत्वमसिद्धं तथापि इच्छाधीनकृत्यसमवहितसामग्र्यनधीनोत्पत्तिकत्वे सतीत्यत्र तात्पर्य्यं, एतच्च वृष्टौ व्यभिचारवारणाय, अन्यच्च सर्व्वं पर्व्वोक्तं बोध्यं इति प्रकाशः।

अन्ये तु यस्मिन् काले नान्तरीयककृतिसाध्यस्य फलेनेच्छा तादृशकाल एव इष्टसाधनताघटकीभूतेच्छाविशेषणत्वेनोपादेयः, यद्वा यस्य पुरुषस्य नान्तरीयककृतिसाध्यस्य फलेनेच्छा स एव मत्पदेनाभिधेयः, तथाच हेत्वभावादेव नान्तरीयकमीनभोजनादौ न व्यभिचारः । न च तथापि तादृशपुरुषस्य तादृशकाले च प्रवर्त्तकज्ञानानुपपत्तिर्यथोक्तव्यभिचारादिति वाच्यं । तत्र स्वविषयकेच्छाधीनतदातनमत्प्रवृत्तिव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वमात्रस्यैव लिङ्गत्वात्[१] इच्छायां स्वविषयकत्वान्तर्भावादेव नान्तरीयके व्यभिचाराभावात्, साध्ये स्वविषयकेच्छाधीनत्वमप्रवेश्य तदातनमत्प्रवृत्तिव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वमात्रस्यैव वा तत्र लिङ्गत्वात् । अथेष्टसाधनताज्ञानजन्यकार्य्यताज्ञानस्यैव काम्ये प्रवर्त्तकत्वात् तत्र उक्तहेतुना कार्य्यताज्ञानात् प्रवृत्तिरनुपपन्ना । न च तन्मये इष्टसाधनताज्ञानजन्यत्वपर्य्यन्तं नापेक्षितं किन्तु कामनाज्ञानजन्यत्वं तच्चेच्छाया लिङ्गे प्रवेशादेव सम्भवतीति वाच्यं । तथा सति इष्टासाधनत्वज्ञानेऽपि उक्तहेतुना कार्य्यताज्ञाने प्रवृत्त्यापत्तेरिति चेत्, न, उक्तयुक्त्या स्वविशेषणवत्ताप्रतिसन्धानजन्यपदेन तादृशप्रतिसन्धानविशिष्टस्यैवाभिहितत्वात् हेत्वन्तरजन्यकार्य्यताज्ञानस्यापि कथञ्चित्तादृशत्वसम्भवेन प्रवर्त्तकत्वात् वक्ष्यमाणसामान्यमुखव्याप्तौ च तत्तत्कालातिरिक्तत्वेन कालः तत्तत्पुरुषातिरिक्तत्वेन पुरुषो वा विशेषणीयः तेन न तदसङ्गतिरपीति प्राञ्चः ।

(१) तत्र स्वविषयकेच्छाधीनत्वं प्रवेश्य तदानीन्तनमत्प्रवृत्तिव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वमात्रस्यैव लिङ्गत्वादिति क० ।

मद्भोजनवदित्यनुमानात् स्वकृतिसाध्यताज्ञानं यस्य* य-

केचित्तु हेतावपि स्वविषयकेच्छाधीनत्वेन प्रवृत्तिर्विशेषणीया साध्य एव वा स्वविषयकेच्छाधीनत्वेन प्रवृत्तिर्न विशेषणीया तेन नान्तरीयकमौनभोजनादौ न व्यभिचारः। न चैवं विशेष्यदलादि-वैयर्थ्यमिति वाच्यं। तस्य हेतुप्रविष्टत्वात् किन्तूक्तक्रमेण बलवद-निष्टाननुबन्धीष्टसाधनताज्ञानविशिष्टस्यैव कार्य्यताज्ञानस्य प्रवर्त्तक-तया तज्ज्ञानावश्यकत्वप्रदर्शनाय तदभिधानात्। अस्तु वा हेतुप्रवेश-स्तथापि न क्षतिः परार्थं हि नेदमनुमानं किन्तु प्रवृत्तिप्रयोजकीभूतं स्वार्थमेवेति व्यर्थविशेषणत्वादेरदोषत्वात्[१] प्रयोजनन्तु बलवदनि-ष्टाननुबन्धीष्टसाधनताज्ञानविशिष्टत्वसम्पत्तिरेवेत्याहुः। तदसत्, बलवदनिष्टाजनकत्वस्य लिङ्गविशेषणं तेन 'मधु-विषसम्पृक्तान्नभोजने न व्यभिचार इत्युत्तरग्रन्थासङ्गतेः यथाश्रुतेऽपि व्यभिचाराभावा-दिति सङ्क्षेपः।

'दैवेति, वृष्ट्यादौ व्यभिचारवारणाय सत्यन्तं, इदानीन्तन-मत्प्रवृत्त्यघटितसामग्र्यजन्यत्वे सति जन्यत्वं तदर्थः, तेन पाकादेरप्य-दृष्टाधीनत्वान्नासिद्धिर्न वा नित्ये इष्टसाधने आत्मादौ व्यभिचारः, अन्यत् सर्व्वं पूर्व्ववत्। तत्तत्काल-तत्तत्पुरुषस्य साध्य-हेतुघटकतया साध्यस्य स्वत्वघटिततया च विशेषतो व्याप्तिग्रहस्थलाभावात् यत्तद्भ्यां सामान्यतो व्याप्तिमाह, 'यस्येति, 'यदा तदेति इत्यन्वयि यदा-

(१) व्यर्थविशेष्यत्वादेरदोषत्वादिति क०, ग०।

* 'यस्येति एतच्चोपलक्षणं अग्रिमहेतावपि एवमेव योज्यमिति भावः।

दिष्टसाधनं यत्कृतिं विना यदा न सम्भवति तत् तदा तत्कृतिसाध्यं इति व्याप्तेः । असिद्धस्येष्टसाधनत्वाभावात्, बलवदनिष्टाननुबन्धित्वञ्च लिङ्गविशेषणं तेन न मधु-विषसंम्पृक्तान्नभोजने व्यभिचारः । अतीतपाके च

---

तत-तदातनेत्यर्थः, तथाच यस्य यत् मत्कालीनेच्छाविषयसाधनं यदातनेच्छाधीनयत्प्रवृत्तिं विना न सिध्यति तत् तदातनस्वेच्छाधीनतत्प्रवृत्तिसाध्यमिति व्याप्त्यर्थः,(१) । नन्वलीकस्याप्यभावाधिकरणत्वाभ्युपगन्तृनये अलीके व्यभिचारस्तत्र प्रवृत्तिसाध्यत्वाभावादित्यत आह, 'असिद्धस्येति अलीकस्येत्यर्थः, 'इष्टसाधनत्वाभावादिति, सत्यन्तदलाभावाच्चेत्यपि बोध्यं । तथाचालीकस्याप्यभावाधिकरणत्वाभ्युपगन्तृनये तत्र साध्याभावाधिकरणत्वसत्त्वेऽपि हेतोरसत्त्वादेव न व्यभिचार इति भावः । 'बलवदिति इदानीन्तनमदीयबलवद्द्वेषविषयदुःखाजनकत्वञ्चेत्यर्थः, 'मधु-विषसम्पृक्तान्नभोजन इति इदानीं मरणजन्यदुःखे बलवद्द्वेषवतः पुरुषस्यान्यविषयकेच्छाधीनप्रवृत्तिसाध्ये नान्तरीयकमधु-विषसम्पृक्तान्नभोजने तदातनेच्छाविषयमधुभोजन-

---

(१) यत् यत्कालीनयत्प्रवृत्तिव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वविशिष्टयदातनयदिच्छाविषयसाधनं भवति तत् स्वेच्छाधीनतत्कालीनतत्प्रवृत्तिसाध्यं भवतीति पर्य्यवसितोऽर्थः ।

अप्रयोजकत्वमाशङ्क्याह, असिद्धस्येति तथाचेष्टसाधनत्वदर्शनादेव सिद्धत्वसिद्धे विशेषनिषेधात् परिशिष्टकृतिसाध्यत्वं पर्य्यवस्यति इत्यर्थः, 'सामा-

कृतिसाध्यतोत्तीर्णे न व्यभिचारः सामान्यतस्तस्यापि कृतिसाध्यत्वात्, अतीततादृशायाञ्चातीतौदनेच्छाविरहेणेष्टसाधनत्वाभावात्। अतएव निदाघदूनदेहोवर्षति वारिदे तोयदात्तोयलाभसम्भावनायां वा सरोऽवगाहने न प्रवर्त्तते इष्टसन्तापशान्तिसाधनतोयसम्बन्धस्य

---

जन्यसुखसाधने इत्यर्थः, तस्य स्वविषयकेच्छाधीनप्रवृत्तिसाध्यत्वाभावादिति भावः। 'भोजनं' गलाधःसंयोगजनकक्रिया, फलावच्छिन्नव्यापारस्यैव धात्वर्थत्वात्। 'कृतिसाध्यतोत्तीर्णे इति वर्त्तमानपाक इत्यर्थः, यत्तद्गर्भसामान्यव्याप्तौ व्यभिचारः विशिष्य इदानीन्तनत्वघटितविशेषव्याप्तौ वा, आद्ये 'सामान्यत इति तस्यापि सामान्यतः स्वकृतिसाध्यत्वात् यदातनप्रवृत्तिव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वं यत्र वर्त्तते तदातनप्रवृत्तिसाध्यत्वस्यापि तत्र सत्त्वादिति यावत्। द्वितीये 'अतीतेति, 'इष्टसाधनत्वाभावादिति इदानीन्तनेच्छाविषयसाधनत्वाभावादित्यर्थः, इदमुपलक्षणं एतत्कालीनप्रवृत्तिघटित सत्यन्ताभावादित्यपि द्रष्टव्यं। 'अतएवेति यत एव इदानीन्तनमत्प्रवृत्तिं विना असत्त्वे सतीति विशेषणमतएवेत्यर्थः, 'सरोऽवगाहने' दूरस्थसरोवृत्तितोयसम्बन्धे, 'निदाघदूनदेह इति इष्टसाधनत्व-

---

न्यत इति यदा हेतुरस्ति तदा साध्यमपीति कालगर्भव्याप्तौ न व्यभिचार इत्यर्थः, यदा चातीतदशायां साध्यासत्त्वं तदा हेत्वभावादेव न व्यभिचार इति। 'अतीतेति, मत्कृतिं विनाऽसत्त्वमपि नास्तीत्यपि बोध्यं। मत्कृतिं विना

स्वकृतिं विनापि सिद्धिप्रतिसन्धानेन लिङ्गाभावेन स्वकृतिसाध्यत्वज्ञानाभावात्। यदा च मत्कृतिं विना न सम्भवतीति प्रतिसन्धत्ते तदा प्रवर्त्तते।

यस्य सन्तापशान्तिमात्रमिष्टं स सरोऽवगाहनस्येष्टसाधनत्वमेव न प्रतिसन्धत्ते उपस्थितवृष्टितोऽपि तत्सम्भवादिति कश्चित्, तन्न, तोयसम्बन्धत्वेन सन्ताप-

सम्पत्तये, 'लिङ्गाभावेन' लिङ्गविशेषणसत्यन्तनिश्चयाभावेन, इदमुपलक्षणं बलवदित्यादिविशेषणनिश्चयाभावेनेत्यपि बोध्यं[१]। 'मत्कृतिं विना' इदानीन्तनमत्प्रवृत्तिं विना।

विशेष्यभागज्ञानाभावादेव न तत्र कृतिसाध्यत्वज्ञानमित्येकदेशिमतमुपन्यस्य दूषयति, 'यस्येति, 'उपस्थितेति, तथाच व्यभिचारान्न कारणत्वप्रतिसन्धानमिति भावः। 'तोयसम्बन्धत्वेनेति न तु तत्तत्तोयसम्बन्धत्वेन येन व्यभिचारः स्यादिति भावः।

केचित्तु इदानीन्तनमत्प्रवृत्तिं विना असत्त्वे सतीदानीन्तनमत्प्रवृत्तिसाध्यसाधनत्वं कृतिसाध्यत्वानुमाने लिङ्गं तावतापि नान्तरीयकदुःखभोजने व्यभिचारवारणात् तत्फले तदानीमिच्छाविरहेण

(१) सरसो दूरस्थत्वात् तद्वृत्तितोयसम्बन्धजन्यसुखे बलवद्द्वेषो भवतीति भावः।

असत्त्वे सतीत्यस्य प्रयोजकत्वमाह, 'अतएवेति, विशेष्यभागाप्रतिसन्धानादेव। तत्र लिङ्गाप्रतिसन्धानमित्येकदेशिमतमुपन्यस्य दूषयति, 'यस्येति, 'तोयेति तोयविशेषसम्बन्धेनेत्यर्थः, स्वैकदेशिमतं दूषयति, 'कार्य्येति कृति-

शान्तिसाधनत्वं तस्य च सरोऽवगाहनेऽपि सत्त्वात् अन्यथा दृष्टिरपि तत्साधनं न स्यात् सरोऽवगाहनादपि तत्सिद्धेः ।

कार्य्यसाधनत्वञ्च कृतिसाध्यत्वे न लिङ्गं पाकादिवदोदनादेरपि[१]प्रवृत्तेः पूर्व्वं कृतिसाध्यत्वज्ञाने हेत्वभावात् ।

---

तदानीन्तनप्रवृत्तिसाध्यत्वस्यापि विरहादिति प्रलपन्ति, तन्मतमुपन्यस्य दूषयति, 'कार्य्येति, 'कार्य्यसाधनत्वं' सत्यन्तसहितमिदानीन्तनमत्प्रवृत्तिसाध्यसाधनत्वं, 'हेत्वभावादिति, इदमुपलक्षणं नान्तरीयकत्वप्रभोजनजन्यफले तदानीमिच्छाविरहेऽपि नान्तरीयकविधया अन्यगोचरप्रवृत्तिसाध्यत्वस्यैव तत्र सत्त्वेन तद्भोजने व्यभिचारस्य दुर्व्वारत्वात् "प्रक्षालनाद्धीतिन्यायेन साध्ये स्वविषयकेच्छाधीनत्वं प्रवेश्य हेतौ तत्प्रवेशस्यान्याय्यत्वात्[२] इष्टसाधनताज्ञानजन्यत्वस्य[३] तावताप्यनिर्व्वाहाच्चेत्यपि बोध्यं ।

---

(१) पाकादाविव भोजनादावपीति ग० ।

(२) कृतिसाध्यसाधनत्वप्रवेशस्यान्याय्यत्वादित्यर्थः ।

(३) ननु तवापि साध्ये स्वविषयकेच्छाधीनत्वं प्रवेश्य इष्टसाधनत्वं साध्ये प्रवेशितमिति तुल्यमित्यत आह, इष्टसाधनत्वेति ।

---

साध्येत्यर्थः, ननु सामग्र्येव मानमत आह, 'प्रवृत्तीति, तथाच सामग्र्येव नेति भावः । 'तत्प्रकारकेति, यद्यपि गुरुमते शुक्तिविशेष्यकरजतत्वप्रकारकेच्छाया अतथाभूतज्ञानसाध्यतया व्यभिचारस्तथापि या यत्प्रकारिकेच्छा सा तत्प्रकारकज्ञानव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगिनीति नियमोऽस्ति च भेदाग्रहहेतुतावाच्छेदकतया रजतत्वप्रकारकज्ञानं

नन्वेवं[१] लिङ्गज्ञानमेव प्रवर्त्तकं अस्तु प्राथमिकत्वात् आवश्यकत्वाच्च। न च लाघवात् कृतिसाध्यत्वज्ञानं तथा, कृतिसाध्यतानुमितौ तदा मानाभावेन युगपदुपस्थित्यभावात् प्रवृत्तिसामग्य्रा नुमितिप्रतिब-

---

'लिङ्गज्ञानं' कृतिसाध्यत्वानुमापकलिङ्गज्ञानं, तथाच इष्टसाधनताज्ञानं प्रवर्त्तकमायातमिति भावः। 'प्राथमिकत्वादिति, यद्यपि प्राथमिकत्वं[१] न तर्कः किन्तु प्रथमोपस्थितत्वमेव, तथापि तन्मते ज्ञानस्य स्वप्रकाशतया प्राथमिकत्वे प्रथमोपस्थितत्वमपीति भावः। स्वमते हेतुमाह, 'आवश्यकत्वादिति अवश्यक्लृप्तनियतपूर्व्ववर्त्तिताकत्वादित्यर्थः, तथाच क्लृप्तनियतपूर्व्ववर्त्तिताकस्यानन्यथासिद्धत्वमात्रं कल्पनीयमिति लाघवमिति भावः। 'लाघवादिति अवच्छेदकलाघवादित्यर्थः, 'तथा' प्रवर्त्तकं, यद्यपि इष्टसाधनतालिङ्गककृतिसाध्यताज्ञानस्य हेतुत्वे कावच्छेदकलाघवं, तथापि प्रवृत्तित्वावच्छिन्ने प्रवृत्तिसाध्यताज्ञानत्वेन हेतुत्वमिति मताभिप्रायेणेदं, 'तदा' प्रवृत्तिपूर्व्वं, 'युगपदुपस्थित्यभावादिति प्रवृत्तिपूर्व्वमुभयवादिसिद्धत्वाभावादित्यर्थः। ननु अनुमितिसामग्य्रेव मानमित्यत आह, 'प्रवृत्तिसामग्य्रेति तथाचानुमितिसामग्य्रेव नास्तीति भावः[२]। यद्यपि यत्र परामर्शकाले नोपादानप्रत्यक्षं तत्रैव न प्रवृत्तिसामग्री, तथाप्यत्र

(१) एतच्च नैयायिकेनाशङ्कितं

(१) प्राथमिकत्वं प्रथमोत्पत्तिकत्वं, न तर्क इत्यत्र न तत्त्वमिति पाठान्तरं

(२) प्रतिबन्धकाभावस्यापि सामग्रीघटकत्वादिति भावः।

न्याश्चेति चेत्, न, लिङ्गज्ञाने कृतिसाध्यत्वाप्रकाशे तत्प्रकारकचिकीर्षायां तस्याहेतुत्वात्। अतएव लिङ्गान्तरज्ञानमपि न प्रवर्त्तकं। ननु पाकादिः कृतः क्रियमाणोवा न पक्षः तस्य कृतिसाध्यत्वे बाधात्, नाप्यनागतः, भाविपाके मानाभावेनाश्रयासिद्धेः, पाकत्वं

---

प्रवृत्तिपदं चिकीर्षापरं, चिकीर्षां प्रति च नोपादानप्रत्यक्षं कारणं मानाभावादिति भावः। 'कृतिसाध्यत्वाप्रकाशे इति कृतिसाध्यत्वाविषयक इत्यर्थः, 'तस्याहेतुत्वादिति तस्य हेतुत्वासम्भवादित्यर्थः, तत्प्रकारकसंवादीच्छायास्तत्प्रकारकज्ञानजन्यत्वनियमेन कृतिसाध्यताज्ञानस्य चिकीर्षाहेतुत्वावश्यकत्वादिति भावः। 'अतएव' चिकीर्षायां तस्य हेतुत्वासम्भवादेव, 'लिङ्गान्तरज्ञानं' नित्यस्थले ग्रैवादिमत्त्वज्ञानं, 'तस्य कृतिसाध्यत्व इति तस्येदानीन्तनकृतिसाध्यत्व इत्यर्थः, 'मानाभावेन' तदा मानाभावेन,[१] परैः सामान्यप्रत्यासत्तेरनभ्युपगमादिति भावः। 'आश्रयासिद्धेरिति आश्रयस्य पक्षत्वेनाभिमतस्य भविष्यत्पाकस्यानिश्चयादित्यर्थः, तथाच तत्पक्षकानुमितिं प्रति तज्ज्ञानस्य

---

(१) भविष्यत्पाकेऽपि कालान्तरे चक्षुःसंयोगादिसत्त्वान्मानाभावेनेत्यसङ्गतमतः पूरणसम्बलितार्थमाह, तदा मानाभावेनेति।

---

तत्रापि प्रयोजकमिति भावः। 'अतएवेति, तत्रापि कृतिसाध्यत्वाप्रकाशादन्यथा सिद्धसाधनापत्तेरिति भावः। 'बाधादिति कालिकव्याप्त्या पक्षधर्म्मताबलात् तत्काले कृतिसाध्यत्वं सिध्यति एतच्च तत्र बाधितमित्यर्थः,

भविष्यद्वृत्ति सामान्यत्वात् गोत्ववत् इति मानमिति चेत्, न, मानाभावेन गोत्वेऽपि तस्याप्रसिद्धेः । पाक-मात्रं पक्ष इति चेत्, न, मात्रार्थो यदि पाकत्वं तदा बाधोलिङ्गासिद्धिश्च । सर्व्वपाकपरत्वे च तस्य सिद्धभागे बाधोऽनागतभागे चाश्रयासिद्धिः । वर्त्तमानाद्युदासीनः

---

हेतुतया तज्ज्ञानं विना कथं तत्पचकानुमितिरिति भावः । 'भविष्यदिति एतत्कालीनप्रागभावप्रतियोगिवृत्तीत्यर्थः, न तु प्रागभावप्रतियोगिवृत्तित्वमात्रं[१] यदा कदाचिद्वर्त्तमानप्रागभावप्रति-योगिवृत्तितया सिद्धसाधनापत्तेः, 'सामान्यत्वादिति, यद्यपि सामा-न्यत्वं जातित्वं तच्चात्म-मनस्त्वादौ अतीतचैत्रादिमात्रवृत्तिचैत्रत्वादि-जातौ च व्यभिचारि समानकालीनानेकानित्यसमवेतत्वे सतीत्यनेन विशेषितेऽपि कुलालविशेषादिजन्यतावच्छेदकातीतघटादिमात्रवृ-त्तिजातौ व्यभिचारि, तथापि स्वाश्रयध्वंसव्याप्यप्रागभावप्रतियोगि-वृत्तिधर्म्मत्वादित्यर्थः, 'यदि पाकत्वमिति, पाको मीयते इतर-भिन्नत्वेन प्रतीयतेऽनेनेति व्युत्पत्त्येति भावः । 'तस्य' पाकस्य, निर्द्धा-रणे षष्ठी[२] । 'वर्त्तमानाद्युदासीन इति वर्त्तमानत्वादिकं पक्षता-

---

(१) न तु वर्त्तमानप्रागभावप्रतियोगित्वमात्रमिति ख० ।

(२) तन्मध्ये यः सिद्धभागस्तत्रेत्यर्थः ।

---

'अप्रसिद्धेरिति, एतच्चोपलक्षणं आत्मत्व-चैत्रत्वादौ व्यभिचारोऽपि बोध्यः । 'वर्त्तमानेति विशिष्य यदि पक्षः क्रियते तदेव दूषणावकाशो नान्यथेत्यभि-

पाकः पक्षः पाकसामान्ये च कृतिसाध्यत्वं न बाधितमित्यपि न, सिद्धस्य पक्षत्वं नासिद्धस्येत्यनुमितेः सिद्धविषयत्वे बाधात् भिन्नविषयत्वे वा सिद्धविषयेच्छाप्रवृत्त्याद्यनुत्पादकत्वाच्च। कृत-क्रियमाणसाधारणकृतिसाध्यत्वज्ञानादेवासिद्धविषया चिकीर्षा कृतिश्चोत्पद्यते, अनन्यगतिकत्वेन तथाकारणस्वभावकल्पनादिति चेत्,

---

वच्छेदकेऽनिवेशस्येत्यर्थः, 'पाकः' पाकत्वेनैव पाकः, 'पाकसामान्ये' पाकत्वावच्छिन्ने, तत्तत्पाकत्वरूपेणैव सिद्धपाके बाधज्ञानात् तथाच पाकत्वरूपेण पाके बाधज्ञानाभावात् पाकत्वावच्छिन्नपाकपचिकीर्वानुमितिरिति भावः। 'सिद्धस्य' ज्ञातस्य, 'अनुमितेः' उक्तानुमितेः, 'सिद्धविषयत्वे' पाकत्वरूपेण सिद्धपाकविशेष्यकत्वे, 'बाधात्' बाधितविषयकत्वप्रसङ्गात् अन्यथाख्यातित्वप्रसङ्गादिति यावत्, अन्यथाख्यात्यभ्युपगमे दूषणमाह, 'भिन्नविषयत्व इति सिद्धमात्रविशेष्यकत्वे इत्यर्थः, 'अनुत्पादकत्वादिति समानविशेष्यत्वेनैव तेषां कार्य्य-कारणभावादिति भावः। शङ्कते, 'कृत-क्रियमाणसाधारणेति इदानीन्तनत्वाद्यविषयकस्वप्रवृत्तिसाध्यताज्ञानादेवेत्यर्थः, तथाच प्रवृत्तिसाध्यत्वमात्रं साध्यमतो नान्यथाख्यातिरिति भावः। ननु तथापि अन्यविषयकज्ञाने कथमन्यत्र चिकीर्षा स्यादित्यत आह, 'अनन्येति,

---

मानः, सामान्यस्य यावद्विशेषनियतत्वादसिद्धस्याज्ञानात् सामान्येन रूपेण सिद्धस्यैव पक्षत्वादुक्तदोषतादवस्थ्यमित्याह, 'सिद्धस्येति, 'कृतेति, यद्यपि ज्ञानादेः समानविषयत्वं प्रागुक्तं तथापि भिन्नवादिमतेनेदं। 'यादृशमिति

तर्हि यादृशं कृतिसाध्यत्वं चिकीर्षायां प्रकारः तादृशं ज्ञाने नास्तीत्यन्यप्रकारकज्ञानादेव चिकीर्षा स्यात् । तथाच लिङ्गज्ञानमेव प्रवृत्तिहेतुरस्तु प्राथमिकत्वात् ।

यत्तु स्मृतपाके कृतिसाध्यत्वासंसर्गाग्रहात्प्रवृत्तिः स

---

'तथाकारणस्वभावेति समानप्रकारकत्वेन कार्य्य-कारणभावकल्पनादित्यर्थः, 'तादृशमिति इदानीन्तनमत्प्रवृत्त्युत्तरभविष्यत्त्वरूपमित्यर्थः, 'नास्ति' विषयो न भवति।

'स्मृतपाके' पाकत्वरूपेण स्मृते सिद्धपाके, 'कृतिसाध्यत्वासंसर्गाग्रहादिति इदानीन्तनमत्प्रवृत्तिसाध्यत्वासंसर्गाग्रहादित्यर्थः, स्मरणात्मकेदानीन्तनमत्प्रवृत्तिसाध्यत्वग्रहसत्त्वादिति शेषः, तथाचानुमानाभावेऽपि न क्षतिरिति भावः। न चैवं तत्प्रकारकसंवादीच्छायास्तत्प्रकारकज्ञानजन्यत्वनियमभङ्ग इति[१] वाच्यं। यत्त्वतत्त्वादेरननुगमात् कृतिसाध्यत्वातिरिक्तस्थल एव तथा नियमात् । न चैवं लिङ्गज्ञानमेव प्रवर्त्तकमस्त्विति[२] वाच्यं । सर्व्वत्र प्रवृत्तिपूर्व्वमनुमानानभ्युपगमेन लिङ्गज्ञानस्य पूर्व्ववर्त्तिताया एवासिद्धेरिति भावः। ननु कृतिसाध्यत्वासंसर्गाग्रहस्य प्रवर्त्तकत्वे सञ्जातबाधदशायां

---

(१) या यत्प्रकारिकेच्छा सा तत्प्रकारकज्ञानजन्येति नियमभङ्ग इत्यर्थः ।

(२) प्रवृत्तिसाध्यतास्थले तादृशनियमसत्त्वाभिप्रायेणैव लिङ्गज्ञानस्य प्रवर्त्तकत्वं निराकृतमिति भावः ।

---

कृत्यनन्तरं भविष्यत्तारूपमित्येके, इदानीं कृतिसाध्यत्वरूपमित्यन्ये, 'सिद्धत्वेन' सिद्धत्वज्ञानेनेत्यर्थः ।

चासंसर्गाग्रहः इष्टसाधनताग्रहादिति। तन्न, स्मृत-पाकस्य सिद्धत्वेन तत्र कार्य्यत्वासंसर्गग्रहेऽनुमान-

---

चैत्यवन्दनादौ कथं प्रवृत्तिवारणमित्यत आह, 'स चेति, 'इष्टसाधनताग्रहादिति इष्टसाधनताज्ञानाधीनः स न प्रवृत्तिहेतुरित्यर्थः, अधीनत्वञ्च एककालावच्छेदेनैकात्मवृत्तित्वं चणद्वयसाधारणाव्यवहारोत्तरकालावच्छेदेनैकात्मवृत्तित्वं वा। न चैवं असंसर्गाग्रहस्याभावरूपतया अनादित्वेन चिरकालीनेष्टसाधनताज्ञानमादायातिप्रसङ्गः[१] समानप्रकारकसाधनत्वज्ञानस्य इच्छाविरोधितया इष्टसाधनताज्ञानविशिष्टस्य पूर्व्वसत्तायास्तन्मतेऽनपेक्षितत्वादिति वाच्यं। गुरुनयेऽभावस्याधिकरणज्ञानरूपतया असंसर्गाग्रहस्याप्युत्पादाशुविनाशशालित्वादिति भावः।

केचित्तु ननु सञ्जातबाधदशायां चैत्यवन्दनादौ प्रवृत्तिवारणाय इष्टसाधनताज्ञानजन्यकृतिसाध्यताज्ञानस्यैव प्रवर्त्तकतया कथं स्मरणात्मकेदानीन्तनमत्प्रवृत्तिसाध्यत्वादिज्ञानसहकृततदसंसर्गाग्रहात्प्रवृत्तिरित्यत आह, 'स चेति, 'असंसर्गाग्रहः' अगृहीतासंसर्गक इदानीन्तनमत्प्रवृत्तिसाध्यत्वग्रहः, 'इष्टसाधनताग्रहादिति तद्रूपोद्बोधकादित्यर्थः, तथाच स्मरणात्मकतज्ज्ञानमप्युद्बोधकविषयेष्टसाधनताज्ञानजन्यमिति भाव इति व्याचक्रुः।

'सिद्धत्वेन' सिद्धत्वरूपविशेषदर्शनेन, 'कार्य्यत्वासंसर्गग्रहे' इदानीन्तनमत्प्रवृत्तिसाध्यत्वासंसर्गग्रहे, 'अनुमानबाधादिति इदानीन्त-

---

(१) सञ्जातबाधदशायां चैत्यवन्दनादौ प्रवृत्तिप्रसङ्ग इत्यर्थः।

बाधात्। सृतपाकस्य सिद्धत्वं तदा न गृह्यते इति चेत्, तर्हि सृतपाकस्य सिद्धत्वग्रहे ओदनार्थी पाके न प्रवर्त्तेत सिद्धौदनोऽपि पाके तृप्तोऽपि भोजने प्रवर्त्तेत, तत्र पाकादौ सिद्धत्वग्रहात्तदसंसर्गग्रह इति चेत्तुल्यं। अपि च सृतपाके कार्य्यत्वासंसर्गाद्विद्यमाना-

---

नमत्प्रवृत्तिसाध्यत्वासंसर्गाग्रहविरहादित्यर्थः। 'सिद्धत्वग्रहे' सिद्धत्वग्रहदशायां, 'पाके' पाकान्तरे, 'सिद्धौदनोऽपि' सिद्धौदनमात्रकोऽपि, सिद्धपाकातिरिक्तपाकरहितोऽपीति यावत्, ओदनकाम इति शेषः, 'तृप्तोऽपि' सिद्धभोजनातिरिक्तभोजनरहितोऽपि, तृप्तिकाम-इति शेषः, 'प्रवर्त्तेत' इयन्त एव पाका इयन्त्येव भोजनानि इत्यवधारणदशायां प्रवर्त्तेत, 'पाकादौ' सिद्धपाकादौ, 'सिद्धत्वग्रहात्' सिद्धत्वरूपविशेषदर्शनात्, 'तुल्यमिति असिद्धपाकादिसत्त्वस्थलेऽपि सिद्धत्वरूपविशेषदर्शनात् सिद्धपाकादौ तदसंसर्गज्ञानं तुल्यमित्यर्थः। ननु किञ्चित्पाकादेरसिद्धत्वस्थले सिद्धपाके तत्तत्पाकत्वरूपेण तादृ-

---

'तर्हीति, तत्र कार्य्यत्वासंसर्गग्रहादिति भावः। तथापि यदि न तद्ग्रहस्तत्राह, 'सिद्धौदनोऽपीति, ननु विशेषरूपेणासंसर्गग्रहेऽपि सामान्येन रूपेणासंसर्गाग्रहः स्यादित्यस्वेराह, 'अपि चेति, विद्यमानासंसर्गाग्रहे हेतुमाह, 'कार्य्यत्वेति। 'किञ्चेति, यद्यप्यत्रेष्टापत्तिः समानप्रकारकतया च नातिप्रसङ्गस्तथापि समानविषयके हेतौ सम्भवति भिन्नविषयको न कल्प्यते इति भावः। 'अत्रेति प्राभाकराभिप्रायं ब्रूम इत्यर्थः, 'पक्षतेति, पक्षतावच्छेदकधर्म्मावच्छिन्नधर्म्मिज्ञानस्यैव पक्षज्ञानत्वान्नाश्रयासिद्धिरिति भावः। नन्वेवं पक्षधर्म्मताज्ञानस्यानुमितिहेतोरनुपपत्तिः अप्रसिद्धस्यैव पक्षस्यानुमितिविषयताभ्युप-

ग्रप्रवृत्तिसाध्यत्वासंसर्गग्रहसत्त्वेऽपि पाकत्वरूपेण तदसंसर्गाग्रहसत्त्वात् तेन रूपेण प्रवृत्तिर्नानुपपन्ना पाकत्वरूपेणैव सिद्धत्वज्ञाने तु प्रवृत्तिरेवासिद्धा इयन्त एव पाकादित्यवधारणदशायाञ्च पाकत्वरूपेणैव तदसंसर्गग्रहाच्च प्रवृत्तिः फलबलेन तथैव कल्पनात्। न चैवं सिद्धपाके सामान्यतः[१] तदसंसर्गाग्रहादसिद्धपाक इव नियमतः सिद्धपाकेऽपि सामान्यत इच्छा-प्रवृत्त्यापत्तिरिति वाच्यं। असिद्धविषयत्वस्य कार्य्यतावच्छेदकतया सिद्धे तयोरनुत्पत्तेरित्यस्वरसादाह, 'अपि चेति, 'कार्य्यत्वासंसर्गात्' इदानीन्तनमत्प्रवृत्तिसाध्यत्वासंसर्गस्य विद्यमानत्वात्, 'विद्यमानासंसर्गाग्रहादिति कारणीभूतज्ञानविषये धर्म्मिणि विद्यमानो यः कृतिसाध्यत्वासंसर्गस्तस्याग्रहा-

(१) सामान्यधर्म्मप्रकारेणेत्यर्थः।

---

गमेन पूर्वं तद्वृत्तितया हेतोरग्रहात्। न च पक्षधर्म्मताज्ञानमहेतुरेव परस्य अतएव तदुपदर्शक उपनयोऽपि न तेनेष्यत इति वाच्यं। तस्य हेतुवचनेनैव लाभादत एव व्याप्यतावच्छेदकप्रकारकपक्षधर्म्मताज्ञानं तत्प्रकारकव्याप्तिस्मरणे तस्य परामर्श इति चेत्, अत्र वदन्ति, पक्षसाकाङ्क्षीभूयोपस्थितस्य हेतोरसंसर्गाग्रह एव तस्यानुमितिहेतुत्वाभिमतः, अस्ति च पाकत्वावच्छेदेन प्रकृतहेतोरसंसर्गाग्रहः सिद्धपाके तदसंसर्गग्रहेऽपि पाकतावच्छेदेन तदभावात् अन्यथा पाको न मदिष्टसाधनमित्याद्यभिलापोऽपि स्यात् एवञ्च यदवच्छेदेन हेतोरसंसर्गाग्रहस्तद्धर्म्मावच्छिन्नविषयानुमितिर्भवतीत्येव सकलसाधारणं भवति प्रकृते पाकत्वं, 'तथेति तदवच्छिन्नानागतपाकविषयानुमितिः, इयांस्तु विशेषो यत्राविद्यमानस्य लिङ्गासंसर्गस्याग्रहस्तत्रानुमितिः प्रमा यत्र विद्यमानस्य लिङ्गासंसर्गस्याग्रहस्तत्रासंसर्गाग्रहजन्यलैङ्गिकासंसर्गाग्रहमात्रं। न च भिन्नप्रकारकविरोधिज्ञानस्याप्रतिबन्धकत्वात् सिद्धपाकत्वेन कृति-

संसर्गाग्रहादिसंवादिनी प्रवृत्तिः स्यात्। किञ्चैवं सिद्ध-पाकज्ञानादज्ञातेऽसिद्धे पाके इच्छा-प्रवृत्ती स्यातामि-

दित्यर्थः, 'विसंवादिनी' कृत्यसाध्यविषयिणी, कारणीभूतज्ञानवि-षये धर्म्मिण्यविद्यमान-विद्यमानयोः कृतिसाध्यत्वासंसर्गयोरग्रहस्यैव प्रवृत्तेः कृतिसाध्यत्व-तदभाववद्विषयकत्वे[१] प्रयोजकत्वादिति भावः। ननु प्रवृत्तिविषये कृतिसाध्यत्वासंसर्गस्याविद्यमानत्व-विद्यमानत्वमेव प्रवृत्तेः कृतिसाध्यत्व-तदभाववद्विषयकत्वे प्रयोजकं, न तु कारणी-भूतज्ञानविषये तदविद्यमानत्वादिकमित्यरुचेराह, 'किञ्चेति, 'सिद्ध-पाकज्ञानात्' सिद्धपाकज्ञानादेव, 'इच्छा-प्रवृत्ती' संवादीच्छा-प्रवृत्ती,

(१) द्वन्द्वात् पर इति न्यायात् कृतिसाध्यत्ववद्विषयकत्वे तदभाववद्विषय-कत्वे चेत्यर्थः।

साध्यत्वासंसर्गे गृहीतेऽपि पाकत्वेन सिद्धपाकस्यानुमितौ भानमस्तीति वाच्यं। असदसंसर्गाग्रहस्य प्रमानुमितौ कारणत्वेन कलमबीजस्य यवाङ्कुर-इव भ्रमानुमितावसामर्थ्यात् सिद्धपाकविषयत्वेऽनुमितेर्भ्रमत्वौचित्यात्। नन्वेवं यत्र सन्निकृष्टे पर्वते धूमासंसर्गोऽगृहीतेऽपि व्यवहिते धूमवति तदग्रहात् पर्वतत्वावच्छेदेन स न गृहीत इति यथोक्तसामग्रीसत्त्वादसन्नि-कृष्टपर्वतविषयानुमितिः स्यादिति चेत्, न, तत्र साकाङ्क्षीभूय हेतोरभावात् घट-घटत्वे इत्यादि समूहालम्बनवैलक्षण्येनायं घट इत्यत्र यथा साकाङ्क्षीभूय घटत्वभानं तथेहापि लिङ्गभानं विवक्षितमिति। तच्चिन्त्यं, पक्षसाकाङ्क्षी-भूयोपस्थितत्वं किं पक्षवृत्तितयोपस्थितत्वमुत पक्षेण सममगृहीतासंसर्गी-भूयोपस्थितत्वमन्यद्वा, नाद्यः प्रकृतेऽनागतस्य पक्षत्वेन तदभावात् अन्यथा असंसर्गाग्रहहेतुत्वोपवर्णनानुपपत्तेः, न द्वितीयः असन्निकृष्टपर्वतविषयानुमि-

'स्यातामिति पराभ्युपगते स्यातामित्यर्थः, तथाच पाकत्वादिप्रकार-कसंवादीच्छा-प्रवृत्ती प्रति पाकत्वादिप्रकारकज्ञानस्य समानविशेष्य-कत्वेन कार्य्य-कारणभाव इति भावः। यद्यपि उक्तनियमबलात्[1] पाकत्वादिप्रकारकसंवादीच्छां प्रति पाकत्वादिप्रकारकज्ञानस्य हेतु-त्वेऽपि तन्नये तस्य समानविशेष्यत्वप्रत्यासत्त्या हेतुत्वे मानाभावः लाघवात् समवायघटितसामानाधिकरण्यप्रत्यासत्त्या पाकत्वादि-प्रकारकेच्छां प्रति पाकत्वादिप्रकारकज्ञानत्वेनैव हेतुत्वसम्भवात्। न चैवं पाकत्वादिप्रकारकपाकज्ञाने तद्रूपेण पाकेच्छोत्पत्तिदशायां नियमतः पाकत्वादिप्रकारकघटादीच्छाप्रसङ्गः विनिगमकाभावात् गुरुनये दण्डादिप्रकारकज्ञानं विनापि जायमानायां दण्डादि-प्रकारकविसंवादीच्छायां व्यभिचारस्य दण्डादिप्रकारकेच्छायामपि

(१) या यत्प्रकारिकेच्छेत्यादिनियमबलादित्यर्थः।

त्यापत्तेः, नान्त्यः तदनिरुक्तेः। किञ्चासंसर्गाग्रहस्यानुमितिसामग्रीत्वे हेत्वभा-वेन अन्यथाख्यातिनिराकरणं तस्य न स्यात् असंसर्गाग्रहद्वैविध्येनानुमिति-द्वैविध्यसम्भवात् अतएव प्राभाकरैः प्रागुक्तं, न च शब्दानुमानाभासात् सा यो-ग्यतादिमत्तया शब्दस्य लिङ्गवत्तया पक्षस्य ज्ञानाच्छाब्दानुमितौ, न चाभासे तज्ज्ञानं सम्भवति हेत्वभावादेवेति। अपि च लाघवात् पक्षे लिङ्गसंसर्गाग्रहस्यै-वानुमितिहेतुत्वं, एतेन पाकत्वं मदिष्टसाधनत्वसमानाधिकरणमिति प्रकारेण वस्तुगत्यानागतं पाकं वैशिष्ट्यकोटावन्तर्भाव्य प्रत्यक्षेण गृह्यते इति तद्ग्रह-एव पक्षधर्म्मताग्रहो विवक्षितः। न चैवं पक्षधर्म्मताग्रह एवानागतस्य पाकस्य विषयत्वादप्रसिद्ध एव पाकः पक्षधर्म्मताबलात् सिध्यति इत्यग्रिमग्रन्थवि-रोध इति वाच्यं। विशेष्यतया स्वातन्त्र्येण ततस्तत्सिद्धिरित्यभिप्रायात्। न च समानाधिकरणमित्यत्राधिकरणं विशेषणमतस्तदुपस्थितिं विना कथं विशिष्ट-

उक्तनियमबलेन दण्डादिप्रकारकज्ञानस्य हेतुत्वावश्यकत्वादिति वाच्यं । तत्प्रकारकसंवादीच्छाया एव तत्प्रकारकज्ञानजन्यत्वनियमेन पाकत्ववद्विशेष्यकत्व-दण्डवद्विशेष्यकत्वादिरूपस्य संवादित्वस्यापि कार्य्यतावच्छेदके निवेशात् । न च तथापि पाकत्वप्रकारकघटादिभ्रमात् पाकत्वप्रकारकपाकेच्छापत्तिरिति वाच्यं । परैः भ्रमानभ्युपगमात् तदभ्युपगमे च पाकत्वादिमद्विशेष्यकत्वादिरूपसंवादित्वं कारणतावच्छेदकेऽपि प्रवेशनीयं घटत्वादिप्रकारक-यत्किञ्चिद्घटादिज्ञानात् घटत्वादिरूपेण घटाद्यन्तरे इच्छोत्पत्तेश्च प्रकृतवदिष्टत्वात्, तथाप्युक्तनियमबलात् पाकत्वादिप्रकारकेच्छां प्रति पाकत्वादिप्रकारकज्ञानस्य हेतुत्वे ध्रुवे उक्तातिप्रसङ्ग-व्यभिचारयोर्वारणाय पाकत्वप्रकारक-तत्तत्पाकविशेष्यकज्ञानत्वेन पाकत्वप्रकारक-तत्तत्पा-

---

धीरिति वाच्यं । गुरुनये विशेषणतावच्छेदकप्रकारकविशेषणान्तरबोधादेव विशिष्टवैशिष्ट्यबोधेऽपूर्वविशेषणविषयत्वस्वीकारादित्यपास्तं । असन्निकृष्टपर्वतविषयानुमित्यापत्तेः तत्रापि पर्वतत्वं धूमसमानाधिकरणमिति प्रकारेणासन्निकृष्टं पर्वतं वैशिष्ट्यकोटावन्तर्भाव्य पक्षधर्म्मताग्रहसम्भवात् । अन्ये तु सिद्ध एव पाके पाकत्वावच्छेदेन पक्षधर्म्मताज्ञानं समानप्रकारकज्ञानस्यैव विरोधितया विशेषतो व्यतिरेकग्रहेऽपि सामान्यतोऽन्वयधीसम्भवात् असंसर्गाग्रहवत् । न चैवं पक्षधर्म्मताभ्रमादनुमितिभ्रमापत्त्या विसंवादिप्रवृत्त्यापत्तिः पाकत्वाधिकरणाधिकरणत्वलक्षणपरम्परासम्बन्धस्य विद्यमानस्यैव विषयीकरणेन प्रतीतेरभ्रान्तत्वात् । अतएव चैकाकारमपि लोहितः स्फटिक इत्यादिज्ञानं संसर्गभेदेन प्रमा अप्रमा चेति सर्वदर्शनसिद्धान्तविषयाबाधेन पक्षधर्म्मताभ्रमेऽप्यनुमितिप्रमात्वाच्च । न चैवं साध्यभानमपि परम्परासम्बन्धेन सिद्धपाकविषयकमेवास्तु तत् कुतोऽनागतलाभ इति वाच्यं । यत्सम्बन्धपुर-

कविशेष्यकेच्छात्वेन कार्य्य-कारणभावः समवायघटितसामानाधिकरण्यं प्रत्यासत्तिः। यद्वा तत्पुरुषीयपाकत्वप्रकारकज्ञानत्वेन तत्पुरुषीयपाकत्वप्रकारकेच्छात्वेन पाकत्ववद्वृत्तिविशेष्यत्वं प्रत्यासत्तिः इत्यादिक्रमेणैव कार्य्य-कारणभावः कल्प्यते, न तु समवायघटितसमानाधिकरण्यप्रत्यासत्त्या पाकत्वप्रकारकज्ञानत्व-पाकत्वप्रकारकपाकत्वाश्रयविशेष्यकेच्छात्वादिना, भिन्नविशेष्यकज्ञानव्यावृत्तकारणत्वे सम्भवति तत्साधारणकारणत्वकल्पनानुदयेन लाघवस्याप्यकिञ्चित्करत्वात्, अन्यथा जितं कृतीष्टसाधनताज्ञानहेतुत्ववादिनेत्यभिप्रायः। यद्यप्ययं पाकः पाकपूर्व्ववर्त्ती पाकत्वात्, अयं कालः पाकप्रागभाववान् सृष्टिकालत्वात्, अयं प्रागभावः पाकप्रतियोगिकः पाकेतराप्रतियोगिकत्वे सत्यभावत्वात्[१] इत्यनुमानात् पाकः प्रमेय इत्यादौ

(१) तत्प्रकारक-तद्विशेष्यकप्रवृत्तिं प्रति तत्प्रकारक-तद्विशेष्यकज्ञानस्य हेतुत्वादिति भावः।

---

त्कारेण हि व्याप्तिज्ञाने सामानाधिकरण्यप्रतियोगितया साध्यं विषयस्तद्व्याप्तिधीजन्यायामनुमितौ तेनैव सम्बन्धेन पक्षे साध्यं भासतेऽन्यथानुमितौ सम्बन्धभाने नियमो न स्यात् प्रकृते च कृतिसाध्यत्वेन साक्षात्सम्बन्धेन व्याप्तिर्गृहीतेति कथं तत्परम्परासम्बन्धोऽनुमितिविषयस्तथा च सिद्धे बाध एवेत्यनागतसिद्धिः। न च परम्परासम्बन्धघटकानागतव्यक्तेरभाने दोषतादवस्थ्यमिति वाच्यं। वैशिष्ट्यस्याज्ञातस्यैव विशिष्टज्ञानविषयत्वाभ्युपगमादिति वदन्ति। तदपि चिन्त्यं, तन्मते हेतोरपि कालघटिततयाऽप्रसिद्धत्वेन परम्परासम्बन्धेनापि तद्विशिष्टबुद्ध्यसम्भवात् विशेषणतावच्छेदकप्रकारकज्ञानं विना विशिष्टवैशिष्ट्यबोधासम्भवात्। किञ्चैवमसन्निकृष्टपर्वतानुमित्यापत्तिर्दुर्वारा तत्रापि सन्निकृष्टे पर्वते धूमाभावग्रहेऽपि पर्वतत्वाधिकरणाधिकरणत्वपर-

ति। अत्र ब्रूमः। पाके कृतिसाध्यत्वं सिद्धवत् सिद्धे बाधात् अनागतपाकमादाय सिध्यति। पक्षतावच्छे-

---

पाकादिपदाच्च अनागतपाकस्यापि ज्ञानं सम्भवति परनये पक्षधर्म्मतावललभ्यसाध्यव्यक्तिप्रसिद्धेः योग्यतावललभ्यसाध्यव्यक्त्युपस्थितेश्चानुमिति-शाब्दबोधयोरनङ्गत्वात्, तथापि यस्य न तादृशानुमानाद्यवतारस्तस्य प्रवर्त्तकज्ञानप्रकारमाह, 'अत्र ब्रूम इति, 'पाके' पाकत्वविशिष्टे, 'सिद्धे बाधात्' सिद्ध एव बाधज्ञानात्, अनागतपाके बाधज्ञानविरहादिति यावत्, 'अनागतपाकमिति अज्ञातमप्यनागतपाकमित्यर्थः, 'सिद्धे बाधादिति यथाश्रुतन्तु न सङ्गच्छते पाकत्वरूपेण अनागतपाकभाने सिद्धे बाधज्ञानस्यानुपयोगात्। न चानागतपाकमात्रविशेष्यकज्ञानार्थं तदुपयोग इति वाच्यं। तन्मात्रविशेष्यकज्ञानाभावेऽपि क्षतिविरहात्। किञ्च सिद्धे बाधज्ञानं तत्तत्पाकत्वेन पाकत्वेन वा, नाद्यः, तत्सत्त्वेऽपि पाकत्वेन सिद्धपाकज्ञानसम्भवात्, न द्वितीयः नव्यमते भिन्नधर्म्मिकस्यापि समानधर्म्मि-

म्परासम्बन्धेन धूमविशिष्टप्रत्ययसम्भवात्। नचेष्टापत्तिः, तदा तत्र वह्न्यर्थिप्रवृत्त्यापत्तेः। अथ यत्सम्बन्धपुरस्कारेण व्याप्तिग्रहे सामानाधिकरण्यप्रतियोगितया हेतुभानं तेन सम्बन्धेन पक्षधर्म्मताज्ञानमनुमितिप्रयोजकमन्यथातिप्रसङ्गात् धूमे च संयोगरूपसाक्षात्सम्बन्धस्तथा तथाच परम्परासम्बन्धेन तज्ज्ञानमकिञ्चित्करमिति चेत्, हन्तैवं प्रकृतेऽपि हेतुसाक्षात्सम्बन्धपुरस्कारेण व्याप्तिग्रह इति परम्परासम्बन्धेन तज्ज्ञानमकिञ्चित्करमिति तुल्यं। अपि च सिद्धपाके परम्परासम्बन्धेन यदि हेतुभानं तदा समानप्रकारकज्ञानस्यैव विरोधित्वमित्यभिधानं व्यर्थं सिद्धपाकत्वावच्छेदेनापि परम्परासम्बन्धेन

दकधर्म्मसामानाधिकरण्यं साध्यमानस्य लिङ्गेन सिद्ध्यतीत्यनुमाने क्लृप्तत्वात् यथा प्रसिद्धवह्निबाधेऽपि वह्निमात्रं न बाधितं इत्यप्रसिद्धोऽपि वह्निः सिध्यति तथा प्रसिद्धपाके कृतिसाध्यत्वबाधेऽपि पाकमात्रे न बाधित-

---

तावच्छेदककबाधज्ञानस्य प्रतिबन्धकतया तत्सत्त्वे पाकत्वेनानागतपाकभानस्याप्यसम्भवादिति ध्येयं। ननु पक्षतावच्छेदकरूपेण तदुपस्थितिं विना कथं तत्रानुमितिरित्यत आह, 'पक्षेति पक्षतावच्छेदकविशिष्टवैशिष्ट्यमित्यर्थः, 'साध्यमानस्य' साध्यतावच्छेदकावच्छिन्नस्य, 'इत्यनुमाने क्लृप्तत्वादिति इत्यस्यैव अनुमानक्लृप्तत्वादित्यर्थः, न तु पक्षतावच्छेदकरूपेणोपस्थिते साध्यतावच्छेदकरूपेणोपस्थितस्य वैशिष्ट्यं सिद्ध्यतीति क्लृप्तमिति भावः। इदञ्च 'यथेत्यादौ हेतुः, 'पाकमात्रे' पाकत्वावच्छिन्ने, तथाच पक्षतावच्छेदकप्रकारकज्ञानमेवानुमितिहेतुः न तु तत्पक्षकानुमितौ तज्ज्ञानमिति भावः। ननु तथापि कुत्र हेतुमत्तापरामर्शः सिद्धे इदानीन्तनत्वघटितहेतोर्बाधात् अनागते

---

हेतुग्रहसम्भवात् तत्सम्बन्धावच्छिन्नतदभावग्रहस्यैव तत्सम्बन्धविषयकतज्ज्ञानविरोधित्वात्। अतएव साक्षात्सम्बन्धावच्छिन्नलौहित्याभावनिश्चयेऽपि परम्परासम्बन्धविषयकं लोहितः स्फटिकइत्यादि ज्ञानं सर्व्वसिद्धं तस्मादप्रसिद्धपाकसिद्धिरिति चिन्ता। यत्तु सुखत्वप्रकारकसिद्धसुखज्ञानादिच्छास्वाभाव्यादनागते सुखे इच्छासमानप्रकारकत्वस्यैव तन्मते नियामकत्वात् ततस्तदिच्छाग्राहिणा मनसा तद्विशेषणतया अनागतसुखज्ञानं ततस्तत्पक्षकभोजनसाध्यत्वानुमित्या पक्षधर्म्मताबलादनागतभोजनसिद्धौ तत्पक्षकौदनसाध्यत्वानुमानानन्तरं तत्पक्षकपाकसाध्यत्वानुमानेनोक्तरीत्यानागत-

च ज्ञातुमशक्यत्वात् तदिन्द्रियसन्निकर्षविरहात्। न चायं पाकः पाकप्रागभावकालीनः पाकत्वात् अयं कालः पाकप्रागभाववान् कालत्वात् इत्याद्यनुमित्या पक्षधर्मताबलादनागतपाकसिद्धौ तत्रैव हेतुमत्ताग्रहसम्भव इति वाच्यं। तस्य ज्ञानेऽपि तत्र लिङ्गवैशिष्ट्य-ग्रहासम्भवात् परैर्ज्ञानस्य प्रत्यासत्तित्वानभ्युपगमात् 'अज्ञातमप्यनागतं पाकमादाय सिद्ध्यतीति मूलोक्तासङ्गतेश्च पक्षधर्मताज्ञानानुरोधे-नानागतपाकज्ञानस्यावश्यकत्वात्। अथ सिद्धपाके तत्तत्पाकत्वेन हेतोर्बाधग्रहेऽपि पाकत्वप्रकारेण तत्रैव हेतुमत्त्वज्ञानं स्यात् समान-प्रकारकज्ञानस्यैव विरोधित्वात्। न चैवमनुमितिरपि सिद्ध एव स्यात् न त्वनागतपाके तथाच तज्ज्ञानाभावेन तत्र प्रवृत्तिर्न स्यादिति[१] वाच्यं। समानप्रकारकहेतुमत्ताज्ञानस्यैव अनुमिति-

(१) तत्प्रकारक-तद्विशेष्यकप्रवृत्तिं प्रति तत्प्रकारक-तद्विशेष्यकज्ञानस्य हेतुत्वादिति भावः।

---

पाकसिद्धौ कृतिसाध्यत्वानुमानं। यद्वा इष्टसाधनत्वहेतुत्वानुरोधेन तादृश-सुखोपस्थित्यावश्यकत्वे तत्सुखं पाकसाध्यौदनसाध्यभोजनसाध्यमित्यनुमित्या एकदैवावच्छेदकतया अनागतपाकादिभानमिति तच्चिन्त्यं, ज्ञानस्याप्रत्यास-त्तित्ववादिनां गुरूणामिच्छाप्रत्यासत्तित्वानभ्युपगमात् न्यायनयेऽपि तदनङ्गी-कारात् कथं तर्हि सुखमिच्छामीति धीः। न च गुरूणां विशिष्टवैशिष्ट्य-निर्व्वाहाय विशेषणतावच्छेदकधीध्रौव्ये तत एव तदुत्पत्तिरिति वाच्यं। विशेषणतावच्छेदकज्ञानेन हि नेच्छाविषयो विषयीकृत इति सिद्धसुखविषयं सुखमिच्छामीति ज्ञानं स्यान्न त्विच्छाविषयसुखविषयं तथात्वे वा अन्यथा-ख्यात्यापत्तेरिति चेत्, पाककृतौ मानसप्रत्यक्षायां पाकस्यैवेति तदभिधाना-

हेतुतया सिद्धवदसिद्धेऽप्यनुमित्युत्पत्तौ बाधकाभावात् सामग्र्या-अविशिष्टत्वात्। न च समानप्रकारकहेतुमत्तापरामर्शस्यैवानुमिति-हेतुत्वे द्रव्यत्वरूपेण पर्व्वते वह्निव्याप्यधूमवत्तापरामर्शात् द्रव्यत्वरूपेण ह्रदादौ वह्नेरनुमित्यापत्तिः इष्टापत्तावन्यथाख्यातिस्वीकारापत्ति-रिति वाच्यं। द्रव्यत्वादिप्रकारकपरामर्शस्य हि द्रव्यत्वादिप्रकार-कतत्तद्व्यक्तिपक्षकानुमितित्वं कार्य्यतावच्छेदकं तत्तद्व्यक्तिभेदेनानन्त-कार्य्य-कारणभावस्य समानविषयकत्वेन हेतुत्ववादिनामपि समान-त्वात् कारणतावच्छेदकेऽपि तन्मते तत्तद्व्यक्तिप्रवेशस्य पुनरधिकत्वात् प्रामाणिकतया अनन्तकार्य्य-कारणभावस्याप्यदोषत्वाच्च तथाच ह्रदा-दिव्यक्त्यन्तर्भावेन तन्मये कार्य्य-कारणभावस्याकल्पनादेव द्रव्यत्वादि-रूपेण ह्रदादौ न वह्न्यनुमितिरिति चेत्, न, पाकत्वरूपेणापि सिद्धपाके हेतोर्बाधग्रहे प्रवृत्तिविलयापत्तेः तत्र सामान्यरूपेणापि

---

दिच्छायां न विषयविशिष्टानुभव इच्छा-कृत्योस्तुल्यत्वात्, किन्तु तटस्थ-विशेषणतावच्छेदकज्ञानोपस्थितसिद्धसुखासंसर्गाग्रहमात्रमिति नेच्छाप्रत्या-सत्तिरतो नोक्तप्रकारः। न्यायनये तटस्थविशेषणज्ञानोपस्थितासिद्धसुखा-संसर्गाग्रहात्तथा धीः। अस्तु वा ज्ञानलक्षणा प्रत्यासत्तिरित्यत्र ज्ञानपदस्य सविषयपरतया इच्छादिकमपि प्रत्यासत्तिः, गुरूणान्तु न तथा अपसिद्धा-न्तादिति। वयन्तु ब्रूमः, मीमांसकानां नैयायिकानां वा अनागतगोचरं ज्ञानमस्त्येवाविवादं, भविष्यति पाको भविष्यति वृष्टिरित्यनुभवात् तदुपायः सामान्यलक्षणा वानुमानं वा तदप्यतीतानागतविषयकव्याप्तिज्ञानजन्यं प्रसिद्धमात्रविषयकव्याप्तिग्रहजन्यं वेति विवादः, एवञ्च वर्त्तमानः पाकः पाकपूर्व्ववर्त्ती पाकत्वादथ वा वर्त्तमानदिनं पाकप्रागभाववदित्यादिना पक्ष-धर्म्मताबलादनागतपाकसिद्धौ कृतिसाध्यत्वानुमानं। न च चरमपाकादौ

**मित्यप्रसिद्धं पाकमादाय तत्सिध्यति, अप्रसिद्धयोः पक्ष-साध्ययोः सिद्धावविशेषात्, तस्मात् असिद्धस्य क्वचित्**

परामर्शासम्भवात्[१] सिद्धपाके इदानीन्तनत्वघटितहेतुमत्ताज्ञाना-भ्युपगमेऽन्यथाख्यात्यापत्तेश्च। किञ्च यत्र सिद्धपाकोऽपि न सन्नि-कृष्टस्तत्र सिद्धपाकेऽपि परामर्शासम्भवात् प्रवृत्तिविलयापत्तेरिति। मैवं, तन्मते हि पक्षतावच्छेदकप्रकारकज्ञानं पक्षतावच्छेदकाव-च्छिन्नसाकाङ्क्षीभूय हेतुतावच्छेदकरूपेण साध्यव्याप्यतयोपस्थितस्य हेतोः पक्षतावच्छेदकरूपेणासंसर्गाग्रहस्य[२] पक्षतावच्छेदकरूपेण पक्ष-

(१) समानप्रकारकबाधनिश्चयस्य सत्त्वादिति भावः।

(२) पक्षतावच्छेदकरूपेण यो बाधनिश्चयस्तदभावस्येत्यर्थः।

व्यभिचारः, परेषां महाप्रलयानङ्गीकारेण चरमत्वासिद्धेः तद्विशेषस्य वा हेतुत्वं अन्यथा न्यायनयेऽपि तदनुमानं न स्यात् सामान्यलक्षणा च यद्यस्ति तदोभयत्र मते नास्ति चेत्तदाप्युभयत्र, न ह्यभ्युपगमाधीनं तस्याबोधकत्वं, एवञ्च कथञ्चिदनागतसुखानुमितौ तत्र भोजनसाध्यत्वाद्यनुमित्याप्यनागतभोजना-दिसिद्धौ न कोऽपि दोषः अन्यथैतत्सन्ध्यायामहं कृतिसाध्यसन्ध्यावन्दन-इत्याद्यनुमितावप्यनागतसन्ध्यावन्दनभानं न स्यात्, यदि च विशेषणतावच्छेद-कज्ञानादपूर्व्वसिद्धिः समानप्रकारकत्वेनेति मन्यसे तदा तुल्यं, एवञ्चानागत-ज्ञानसम्भवे पक्षधर्म्मताग्रहसम्भवादसंसर्गाग्रहाद्यनुमितिसामग्र्यन्तरकल्पन-मप्रामाणिकमित्यप्रसिद्धमित्यसङ्गतमेवेति संक्षेपः। 'प्रतिद्धपाक इति, यद्यपि तथाभूतं साध्यं न तत्र बाधितं, तथापि कालिकव्याप्त्या तदा कृतिसाध्यत्वा-नुमितौ बाधः, अतएव तदा तत्र पक्षधर्म्मताग्रहानुपपत्तिरपीति भावः। 'तस्मादिति, 'असिद्धस्य' पर्व्वतीयवह्नेः, 'सिद्धस्य' गोत्वादेः, तृतीयमुदाहरणं प्रकृतमेव बोध्यं इति प्रकाशः।

तावच्छेदकाश्रयेऽनुमितौ हेतुर्न तु विशिष्टपरामर्शः प्रकृतान्यथानुपपत्त्या गौरवस्यापि स्वीकारात्, समूहालम्बनवारणाय पक्षतावच्छेजकावच्छिन्नसाकाङ्क्षीभूयेत्युपस्थितिविशेषणं, आकाङ्क्षा च तन्मते समूहालम्बनव्यावृत्तमुपस्थितिनिष्ठं पदार्थान्तरं, तच्चासंसर्गग्रहकालीनोपस्थितावपि तैरुपेयते नातोऽसंसर्गग्रहोपादानवैयर्थ्यं। न चैवं पर्व्वतत्वरूपेण एकस्मिन् पर्व्वते वह्निव्याप्यधूमासंसर्गग्रहे पर्व्वतत्वरूपेण व्यक्त्यन्तरेऽप्यनुमितिर्न स्यादिति वाच्यं। भिन्नधर्म्मिकस्यापि समानधर्म्मितावच्छेदककासंसर्गग्रहस्य प्रतिबन्धकतया विशिष्टपरामर्शाभावेन नैयायिकैरपि तत्रानुमित्यनभ्युपगमात्। अस्तु वा पक्षतावच्छेदकप्रकारकज्ञानं तद्व्यक्तिसाकाङ्क्षीभूय हेतुतावच्छेदकरूपेण साध्यव्याप्यतया उपस्थितस्य हेतोः पक्षतावच्छेदकरूपेण तद्व्यक्तावसंसर्गाग्रहस्य पक्षतावच्छेदकरूपेण तद्व्यक्तावनुमितौ हेतुः, तेन भिन्नधर्म्मिकासंसर्गग्रहस्याप्रतिबन्धकत्वेऽपि न क्षतिः। न चैवं सामग्र्यभावेनान्यथाख्यातिनिराकरणमसङ्गतं स्यात् ह्रदेऽप्येतादृशवह्न्याद्यनुमितिसामग्रीसम्भवादिति वाच्यं। पक्षतावच्छेदकभेदेन साध्यतावच्छेदकसम्बन्धादिभेदेन च कार्य्य-कारणभावभेदात् ह्रदत्वाद्यवच्छिन्नपक्षकसंयोगसंसर्गकवह्न्यनुमितेः परनयेऽस्वीकृततया तदन्तर्भावेन कार्य्य-कारणभावकल्पनाविरहादेव तन्नये ह्रदादौ वह्न्याद्यनुमित्यनुत्पत्तेः। न च तथापि ह्रदादौ द्रव्यत्वादिपक्षतावच्छेदकवह्न्याद्यनुमितिप्रसङ्गो दुर्व्वारः द्रव्यत्वादिपक्षतावच्छेदककपर्व्वतादिपक्षकवह्न्यनुमित्यनुरोधेन तदन्तर्भावेन कार्य्य-कारणभावस्यावश्यकदिति वाच्यं। उक्तक्रमेण पक्षतावच्छेदकावच्छिन्नतत्तद्व्यक्तिपक्षका-

नुमितित्वस्यैव कार्य्यतावच्छेदकतया तदतिप्रसङ्गस्यापि निरासात् । यद्वा वह्निविशिष्टबुद्धिं प्रति वह्निमत्त्वेनैव कारणत्वाभ्युपगमादिति[१] न काप्यनुपपत्तिः ।

मिश्रास्तु सिद्धपाके साक्षात्सम्बन्धेन हेतोर्बाधेऽप्येककालीनत्वादिरूपयथाकथञ्चित्सम्बन्धेन पाकत्वप्रकारेण सिद्धपाके हेतुमत्ताज्ञानादेवासिद्धपाकेऽनुमितिर्हेतुमत्तापरामर्शस्यानायत्या समानप्रकारतामात्रेणैवानुमितौ हेतुत्वात्, न तु समानविषयत्वेनापि प्रकृतानुपपत्तेः द्रव्यत्वरूपेण पर्व्वते वह्निव्याप्यधूमवत्तापरामर्शात् द्रव्यत्वरूपेण ह्रदे वह्न्यनुमित्यापत्तेश्चोक्तक्रमेणैव निरासात् । न च येन सम्बन्धेन हेतोर्व्याप्यता गृह्यते तेन सम्बन्धेन पक्षधर्म्मताज्ञानस्यानुमितिहेतुतया कथमेककालीनत्वादिसम्बन्धेन पक्षधर्म्मताज्ञानादनुमितिः तत्सम्बन्धस्य सिद्धपाके सत्त्वात्तेन सम्बन्धेन हेतोर्व्यभिचारितया साक्षात्सम्बन्धेनैव हेतोर्व्याप्यत्वग्रहादिति वाच्यं । गुरुनये येन केनापि सम्बन्धेन पक्षधर्म्मताज्ञानस्यैवानुमितिहेतुत्वात् व्याप्यताघटकसंयोगसम्बन्धेन धूमस्य पर्व्वते बाधग्रहेऽपि कालिकादिसम्बन्धेन पर्व्वते वह्निव्याप्यधूमवत्तापरामर्शादनुमितेरिष्टत्वात् । न चैवं संयोगेन धूमे वह्निव्याप्यत्वज्ञाने समवायेन तस्य धूमावयवे परामर्शे बाधानवतारदशायां धूमावयवेऽपि संयोगेन वह्न्यनुमित्यापत्तेर्बाधदशायामपक्षधर्म्मो हेतुरनैकान्तिको वेतिन्यायेन भ्रमानुमितेर्व्याप्तिपक्षधर्म्मतान्यतरांशे भ्रमजन्यत्वनियमादन्यथाख्यात्यापत्तेश्च तच्चेष्टापत्तेरसम्भवादिति वाच्यं । पक्षतावच्छेदकभेदेन साध्यतावच्छेदकसम्ब-

(१) यद्वेत्यादिः पाठः क०-ग०-घ० पुस्तकेषु नास्ति ।

सिद्धे सिद्धे सिद्धस्य च क्वचित्। अप्रसिद्धस्य चासिद्धे

---

न्धभेदेन चानुमिति-परामर्शयोः कार्य्य-कारणभावभेदादेवोक्तक्रमेण[१] तन्निरासात्। न च भिन्नधर्म्मिकस्यापि परामर्शस्य हेतुत्वे गौरवात् लाघवात् समानविशेष्यतावच्छेदकत्वप्रत्यासत्त्या हेतुत्वस्यैवोचितत्वेन पक्षतावच्छेदकभेदेन न कार्य्य कारणभावभेद इति वाच्यं। अन्यथाख्यात्यापत्तिभयेन गौरवस्यापि स्वीकारात् समानविशेष्यतावच्छेदकत्वप्रत्यासत्त्या हेतुत्वेऽप्रामाण्यज्ञानाभाववैशिष्ट्यस्यापि निवेशकुमशक्यत्वाच्चेत्याहुः। तदसत्, व्याप्यताघटकसम्बन्धेन पक्षे बाधग्रहदशायां सम्बन्धान्तरेण हेतुमत्ताज्ञानादनुमितिस्वीकारेऽनुभवविरोधापत्तेः यत्र सिद्धपाकोऽपि न सन्निकृष्टस्तत्र यत्किञ्चित्सम्बन्धेनापि पक्षधर्म्मताज्ञानासम्भवाच्च। किञ्च हेतोरयोग्यघटितत्वेन भाविप्रवृत्तिघटितत्वेन च परम्परासम्बन्धेनापि[२] सिद्धपाके कथं तद्विशिष्टप्रत्यक्षं स्यात् उपनीतभानस्य परैरनभ्युपगमात् पाकत्वेन हेतुना सिद्धपाके परम्परासम्बन्धेन तद्वत्तानुमानस्य सर्व्वत्रावश्यकत्वे मानाभावादिति समासः।

'असिद्धस्य क्वचित्सिद्ध इति, यथा पर्व्वतो वह्निमान् धूमादित्यादौ सिद्धे पर्व्वतेऽसिद्धस्य पर्व्वतीयवह्नेः सिद्धिरिति भावः। 'सिद्धे

---

(१) धूमावयवत्वावच्छिन्नपक्षक-संयोगसंसर्गक-वह्न्यनुमितेस्तन्मतेऽलीकतया तदन्तर्भावेन कार्य्य-कारणभावाकल्पनादेव तन्नये न तादृशानुमित्यापत्तिरित्युक्तक्रम इत्यर्थः।

(२) तदधिकरणकालवृत्तित्वादिरूपसमानकालीनत्वादिसम्बन्धेनापीत्यर्थः।

सिद्धिस्तेनानुमा त्रिधा ॥ अन्यथा* कृतिसाध्येष्टसाधनतापक्षेऽपि पाकादौ कृतिसाध्यत्वं कथमवगम्येत। किञ्च तवापीष्टसाधनताज्ञानात् कथं दृष्ट्यादाविच्छा सिद्ध-

सिद्धस्य च क्वचिदिति, यथायं गौः सास्नावत्त्वादित्यादौ सिद्धे पुरोवर्त्तिनि सिद्धस्य गोत्वस्य सिद्धिरिति भावः। 'अप्रसिद्धस्य चासिद्ध इति, यथा प्रकृतेऽसिद्धेऽनागतपाकेऽप्रसिद्धस्य उक्तसाध्यस्य सिद्धिरिति भावः। इदमुपलक्षणं अप्रसिद्धे सिद्धस्य च क्वचित् सिद्धिः यथा इदानीं देवदत्तगृहं देवदत्तवत् देवदत्तगृहत्वादित्यादौ ज्ञातेषु देवदत्तगृहेषु पक्षतावच्छेदकैतत्क्षणावच्छेदेन देवदत्तस्य बाधात्तत्रैव एतत्क्षणावच्छिन्नत्वविशिष्टदेवदत्तत्वप्रकारेण एतत्क्षणावच्छिन्नाधिकरणतासम्बन्धेन वा देवदत्तस्यानुमित्यभ्युपगमेऽन्यथाख्यात्यापत्त्या तदितरेष्वेवाज्ञातदेवदत्तगृहादिषु तेन प्रकारेण तेन सम्बन्धेन वा सिद्धस्य देवदत्तस्यानुमितिरिति चतुर्थप्रकारोऽपि द्रष्टव्यः। न्यायनये तु प्रकारद्वयमेव तृतीयप्रकारस्तु नास्ति सामान्यलक्षणया सर्व्वत्र सिद्ध एव साध्यसिद्धेरिति द्रष्टव्यं। 'अन्यथा' उक्तप्रणाल्या अनागतपाके कृतिसाध्यत्वज्ञानानभ्युपगमे, 'कृतिसाध्येष्टसाधनतापक्षेऽपीति कृतिसाध्यत्वेष्टसाधनत्वज्ञानयोर्हेतुतापक्षेऽपीत्यर्थः,

* 'अन्यथेति, सामान्यलक्षणा नास्तीत्यभिमानः। यदि कृत्यसाध्यताज्ञानं प्रतिबन्धकं इष्टसाधनताज्ञानमेव प्रवर्त्तकमिति ब्रूयात् तत्राह, 'किञ्चेति। 'तर्हीति। यद्यपि सिद्धपाकविषयकं कृतिसाध्यत्वप्रकारकज्ञानं नेच्छाप्रकारीभूतकृत्यनन्तरभविष्यत्ताद्रूपकृतिसाध्यत्वप्रकारकमिति तद्भिन्नप्रकारक-

त्वस्येच्छाविरोधित्वात् अनागतस्य ज्ञातुमशक्यत्वात्। अतएव सिद्धासिद्धविषयत्वनिरासेन सुखादिज्ञानात् फलेऽपि नेच्छेति न वृष्ट्यादाविष्टसाधनतापि। न च वृष्ट्यादिसाध्येष्टज्ञानात् वृष्ट्यादाविच्छा, इच्छायाः सिद्धासिद्धवृष्ट्यादितत्फलविषयत्वविकल्पग्रासात्। अथ सामान्यलक्षणप्रत्यासत्त्या वृष्ट्यादित्वेन सुखादित्वेन च सिद्धासिद्धवृष्ट्यादि-तत्फलविषयकं ज्ञानमुत्पन्नं तेन सिद्धं विरोधिनं त्यक्त्वा असिद्धविषयेच्छोत्पद्यते, यदि च सामान्यलक्षणा नास्ति तदा येन रूपेणेष्टसाधनत्वग्रहः तेन रूपेण ज्ञाते सिद्धे वेच्छोत्पद्यते, अन्वयव्यतिरेकाभ्यां तादृशज्ञानस्य तादृशेच्छाजनकत्वावधा-

---

'पाकादौ' अनागतपाकादौ। 'सिद्धासिद्धेति उक्तक्रमेण इच्छायाः सिद्धासिद्धविषयत्वनिरासेन इत्यर्थः, अतएव साध्येष्टकत्वज्ञानमिच्छाहेतुरिति मतान्तरमपि न सम्भवतीत्याह, 'न चेति न वेत्यर्थः, 'सिद्धासिद्धेति तत्फलेऽप्यन्वितं, 'ग्रामादिति सिद्धे सिद्धत्वज्ञानस्य विरोधित्वेनासिद्धस्य च ज्ञानाभावेन इच्छाविषयत्वासम्भवादिति भावः। 'नास्ति' प्रत्यासत्तिर्न भवति, 'तादृशज्ञानस्य' भिन्नविशेष्यकस्यापि तत्प्रकारकज्ञानस्य, 'तादृशेच्छेति तत्प्रकारकेच्छेत्यर्थः, 'पाक-

---

तया तस्येच्छाजनकत्वानुपपत्तिरन्यथा अप्रसिद्धपाकविशेष्यककृतिसाध्यतानुसरणमनर्थकं। तथापि चिकीर्षा च कालासम्भिन्नविषया न तु भाविनं

रणात् सुखेच्छायामप्येवं इति चेत्, तर्हि ममापि पाकत्वावच्छेदेन कृतिसाध्यताज्ञानादनागते चिकीर्षा तच्च ज्ञानं सकलपाकविषयं सन्निकृष्टपाकविषयं वेत्यन्यदेतत्। बालस्य व्याप्त्याद्यग्रहेणाद्या प्रवृत्तिर्जीवनादृष्टोद्बोधितजन्मान्तरसंस्कारजन्यात् स्तनपानं कार्य्यमिति स्मरणात् तवापीष्टसाधनतास्मरणात् तच्च

---

त्वावच्छेदेनेति पाकत्वप्रकारेणेत्यर्थः, 'कृतिसाध्यताज्ञानात्' इदानीन्तनमत्कृतिसाध्यत्वासंसर्गाग्रहात्, यथाश्रुते सामान्यतः कृतिसाध्यत्वज्ञानं न प्रवर्त्तकं किन्तु इदानीन्तनमत्कृतिसाध्यत्वज्ञानमेव तच्च पाकत्वप्रकारेण सिद्धपाके भविष्यति असिद्धपाके वा, नाद्यः अन्यथाख्यात्यापत्तेः, नान्त्यः असम्भवादित्यसङ्गत्यापत्तेः, 'तच्च ज्ञानं' तच्चासंसर्गाग्रहसहितं ज्ञानं, 'सकलेति, सिद्धपाके तत्तत्पाकत्वरूपेण विशेषदर्शनात् तदसंसर्गग्रहसत्त्वेऽपि सामान्यतोऽसंसर्गाग्रहसत्त्वे बाधकाभावात् तद्धर्म्मावच्छेदेन विद्यमानासंसर्गस्याग्रह एव विसंवादिप्रवृत्तिहेतुरिति नात्र विसंवादिप्रवृत्तिरिति भावः। नन्वेवं बालस्य स्तनपाने कथं प्रथमा प्रवृत्तिस्तस्य व्याप्त्यादिज्ञानाभावेन स्तनपाने कृतिसाध्यत्वज्ञानासम्भवात् इत्यत आह, 'बालस्येति, 'स्मरणादिति। न च स्मरणे सिद्धस्तनपानमेव विषयः न त्वनागतस्तनपानं तस्य

---

कृत्यासाधयामीत्याकारेति मतेनेदं बोध्यं। 'स्तनपानमिति, स्मरणस्य स्वविशेषणवत्त्वप्रतिसन्धानजन्यत्वाभावात् ततः कथं प्रवृत्तिरित्यत्रोक्तमधस्तात् इति प्रकाशः।

पूर्वजन्मनि कृतिसाध्यत्वेनाननुभवात् तथाच तस्मात् कथमनागत-स्तनपाने प्रवृत्तिरिति वाच्यं। पूर्वजन्मनि स्तनपानेऽनुमानात् कृति-साध्यत्वं सिद्धादृक्क्रमेणानागतस्तनपानेऽपि तत्सिद्धेः। ननु तथापि तादृशस्मरणं कथं प्रवर्त्तकं कृताविदानीन्तनत्वान्तर्भावेन ज्ञानस्यैव प्रवर्त्तकत्वात् स्मरणस्य च पूर्वाननुभूतेदानीन्तनत्वविषयत्वासम्भवात्, किञ्चेष्टसाधनताज्ञानजन्यं कार्य्यताज्ञानमेव प्रवर्त्तकं, न च स्मरणं तज्जन्यं। न च तज्जन्यत्वं तत्प्रयोज्यत्वं स्मरणमपि जन्मान्तरीयकार्य्य-तानुभवद्वारा तत्प्रयोज्यमिति वाच्यं। तथा सति सञ्जातबाध-स्यापि कालान्तरानुभूतकार्य्यतास्मरणाच्चैत्यवन्दनादौ प्रवृत्त्यापत्तेः, तृप्तस्यापि कालान्तरानुभूतकृतिसाध्यतास्मरणाद्भोजने प्रवृत्त्यापत्ते-श्चेति, मैवं, कृतावुपस्थितेदानीन्तनत्वासंसर्गाग्रहसहकृतस्वप्रवृत्तिसा-ध्यताज्ञानस्यैव परनये प्रवृत्तिहेतुत्वात् तच्च प्रकृतेऽप्यस्ति तन्मते ज्ञानमात्रस्यैव स्वोत्पत्तिकालविषयत्वनियमेन ज्ञानसामान्यसामग्री-मर्य्यादया उपस्थितस्य इदानीन्तनत्वस्य कृतावसंसर्गाग्रहात् केवल-कृतिसाध्यतास्मरणाच्च, न वा द्वितीयोऽपि दोषः, इष्टसाधनताज्ञान-जन्यपदेन प्रवृत्तिविषयतावच्छेदकावच्छिन्नागृहीतासंसर्गकेष्टसाधन-ताज्ञानविशिष्टत्वस्य विवक्षितत्वात्, वैशिष्ट्यञ्च एकक्षणावच्छेदेन एकात्मवृत्तित्वं तच्च प्रकृतेऽप्यस्ति बालस्य जन्मान्तरानुभूतस्तनपाननिष्ठ-सुखविशेषसाधनतास्मरणसत्त्वेन तत्सुखविशेषे इदानीमिच्छासत्त्वेन च स्वरूपसदिदानीन्तनेच्छाविषयसाधनताज्ञानस्य सत्त्वादिति भावः।

केचित्तु तत्कालीन-तत्पुरुषीयप्रवृत्तिं प्रति तदानीन्तनतत्-पुरुषीयप्रवृत्तिसाध्यताधीः तादृशप्रवृत्तिसाध्यत्वप्रकारकेच्छा च हेतु-

प्रवृत्तिः अनन्यगतिकत्वात्। न च जन्मान्तरेऽपि पर्य्य-

---

रिति कालभेदेन पुरुषभेदेन च प्रवृत्तिं प्रति चिकीर्षा-कृति-साध्यताज्ञानयोः कार्य्य-कारणभावभेदादाद्यप्रवृत्तिस्थले चिकीर्षायां कृतिसाध्यताज्ञाने च कृताविदानीन्तनत्वविशेषणं नोपादेयं गौरवान्मानाभावाच्च किन्तु तत्कालीनस्तनपानगोचरप्रवृत्तौ स्वकृतिसाध्यताज्ञानं तत्प्रकारकेच्छा च हेतुर्लाघवात्, एवं तत्कालीन-तत्पुरुषीयस्तनपानगोचरप्रवृत्तिं प्रति कृतिसाध्यताज्ञानस्य कारणतायामिष्टसाधनताज्ञानजन्यत्वमिष्टसाधनताज्ञानविशिष्टत्वं वा विशेषणमपि कृतिसाध्यताज्ञाने नोपादेयं मानाभावाद्गौरवाच्च, तथाच बालकस्य इष्टसाधनताज्ञानाभावेऽपि न क्षतिः। न चैवं चिकीर्षास्थलेऽपि तत्कालीन-तत्पुरुषीयचिकीर्षां प्रति तत्कालीन-तत्पुरुषीयेच्छाविषयसाधनताज्ञानजन्यकृतिसाध्यताबुद्धेरेव[१] हेतुत्वात् इष्टसाधनताज्ञानं विना कथं तत्र चिकीर्षेति वाच्यं। चिकीर्षास्थलेऽपि तत्कालीन-तत्पुरुषीयचिकीर्षां प्रति तत्कालीन-तत्पुरुषीयकृतिसाध्यताज्ञानं हेतुरिति कालभेदेन पुरुषभेदेन च कार्य्य-कारणभावभेदादाद्यचिकीर्षास्थले इदानीन्त्वस्य जन्यान्तस्याप्यनुपादेयत्वात्[२]। न चैवं ज्ञानमात्रमेव तत्र हेतुरस्तु किं कृतिसाध्यतास्मरणकल्पनेन इति वाच्यं। प्रवृत्तिसामान्यं प्रति सामान्यतः प्रवृत्ति-

---

(१) न च तथापि चिकीर्षां प्रति तादृशज्ञानजन्यकृतिसाध्यताज्ञानस्यैवेति ख०, ग०।

(२) तादृशविशेषणस्यानुपादेयत्वादिति ख०।

नुयोगः। जन्मधारायाअनादित्वात् प्रत्यक्षानुमान-मूलकत्वाच्च नान्धपरम्परा। वस्तुतस्तु* शुष्ककण्ठतया बालो दुःखमनुभवन् विरोधितया सुखं स्मरति, ततः

---

साध्यताबुद्धेर्हेतुत्वात्। न च फलेच्छायाः चिकीर्षां प्रति पृथगेव हेतुत्वादिष्टसाधनतालिङ्गकक्कृतिसाध्यताज्ञानस्य चिकीर्षां प्रति कालाद्यन्तर्भावेन न कार्य्य-कारणभाव इति वाच्यं। तत्कालीन-तत्पुरुषीयेच्छात्वेन फलेच्छा कारणतावच्छेदिकैव न तु पृथक्कारणमिति प्राचीननैयायिकस्येव मीमांसकस्यापि सिद्धान्तादिति प्राञ्चः।

'तवापीति, 'तव' नैयायिकस्य, 'इष्टसाधनत्वस्मरणात्' कृतिसाध्यताविशिष्टेष्टसाधनतास्मरणात्, न तु व्याप्तिस्मरणस्य कल्पनं गौरवग्रस्तत्वादिति भावः। ननु जन्मान्तरेऽपि स्तनपाने कथं प्रथमं कार्य्यताज्ञानमित्यत आह, 'जन्मान्तरेऽपीति, 'जन्मधारायाइति, तथाच तत्रापि जन्मान्तरानुभूतकार्य्यत्वस्मृतिरेव मूलमिति भावः। नन्वाद्यप्रवृत्तेः सर्व्वत्रैव स्मरणमूलकत्वे प्रमाणामूलकत्वप्रसङ्गः स्मरणस्यानुभवान्यत्वेनाप्रमाणत्वादित्यत आह, 'प्रत्यक्षेति स्मरणस्य प्रत्यक्षानुमानमूलकत्वादित्यर्थः, प्रत्यक्षन्तु आद्यप्रवृत्त्यनन्तरं स्तनपाने सति बोध्यं। 'नान्धपरम्परा' न प्रमाणामूलकता। वस्तुतस्तु प्रवर्त्तकतया तवाभिमतमिष्टसाधनताज्ञानमेवाद्यप्रवृत्तौ व्यभिचारीत्याह, 'वस्तुतस्त्विति, 'विरोधितया' द्वेषविरोधिविषयतया इच्छाविषय-

---

* नन्विष्टसाधनतास्मरणमेवा कथं तत्र न प्रवर्त्तकमिति विनिगमकमाह, 'वस्तुतस्त्विति। 'विरोधितयेति, विरोध एव सम्बन्धः

सुखत्वज्ञानात् सुखवृत्तिकार्य्यत्वं सुखवृत्तितया, अन्तर-ङ्गत्वात् न तु स्तनपानमिष्टसाधनमिति स्मरणं, सुखा-वृत्तित्वेन वहिरङ्गत्वात् सुखकार्य्यत्वञ्च स्तनपानद्वारा जन्मान्तरानुभूतमिति कार्य्यत्वस्मरणे स्तनपानमपि

---

तयेति यावत्, 'सुखत्वज्ञानात्' सुखत्वप्रकारकसुखज्ञानात्, 'सुख-वृत्तिकार्य्यत्वं' सुखनिष्ठकृतिसाध्यत्वं, 'स्मरतीत्यनुषज्यते, 'अन्तरङ्गत्वात्' उपस्थिते साक्षात्सम्बद्धत्वात्, 'न त्विति न तु प्रवर्त्तकतया नैया-यिकाभिमतं स्तनपानत्वावच्छिन्नविशेष्यकं स्तनपानमिष्टसाधनमिति स्मरणमित्यर्थः, 'सुखावृत्तित्वेनेति, इष्टसाधनत्वविशिष्टस्तनपानस्येति शेषः, 'वहिरङ्गत्वात्' उपस्थिते साक्षादसम्बद्धत्वात्। नन्वेवं स्तनपाने कथं प्रवृत्तिः सुखे कृतिजन्यत्वस्मरणेऽपि वहिरङ्गतया स्तनपाने कृति-साध्यत्वास्मरणादित्यत आह, 'सुखकार्य्यत्वञ्चेति सुखनिष्ठकृतिजन्य-त्वञ्चेत्यर्थः, 'स्तनपानद्वारेति स्तनपाननिष्ठकृतिसाध्यत्वान्तर्भावेनेत्यर्थः, सुखस्य हि स्तनपानद्वारैव कृतिजन्यत्वं न तु साक्षात्, स्तनपानद्वारा कृतिजन्यत्वञ्च कृतिनिष्ठान्यथासिद्धनिरूपकत्वे सति कृतिसाध्यस्तन-पाननिष्ठकारणतानिरूपकत्वं लाघवादतः सुखनिष्ठकृतिजन्यत्वस्य स्तनपाननिष्ठत्वेनसाधारणकृतिसाध्यताघटितत्वादिति भावः। 'कार्य्य-त्वस्मरणे' सुखनिष्ठकृतिजन्यत्वस्मरणे, 'स्तनपानमपीति स्तनपाननिष्ठ-

संस्कारोद्बोधक इति भावः। 'अन्तरङ्गत्वात्' साक्षात् सम्बद्धत्वात्, 'वहि-रङ्गत्वात्' व्यवहितसम्बद्धत्वात्। नन्वेवमपि स्तनपानकार्य्यत्वं न स्मृतं प्रवृत्ति-प्रयोजकञ्च तदित्याह 'सुखेति, 'कार्य्यत्वस्मरणे' सुखकार्य्यत्वस्मरणे, 'स्तनपान-

विषयः तेन स्तनपाने कार्य्यत्वज्ञानादेव प्रवृत्तिः, इष्टसाधनताज्ञानस्य तदानीं सामग्र्यभावात् एवञ्चाद्यप्रवृत्तौ

कृतिसाध्यत्वमपीत्यर्थः, 'कार्य्यताज्ञानादेवेति प्रवृत्तिविषयतावच्छेदकस्तनपानत्वावच्छिन्नागृहीतासंसर्गकसुखविशेषात्मकेष्टसाधनतास्मरणविशिष्टात् कृतिसाध्यतास्मरणादेवेत्यर्थः, 'प्रवृत्तिः' आद्यप्रवृत्तिः। न च सुखीयकृतिजन्यत्वस्मरणे सिद्धस्तनपानमेव विषयः न त्वनागतस्तनपानं तस्य प्रागननुभवादिति कथमनागतस्तनपाने तस्मात् प्रवृत्तिरिति वाच्यं। परनये विशेषणतावच्छेदकतावच्छेदकरूपेण यत्किञ्चिद्विशेषणतावच्छेदकप्रकारकज्ञानस्यैव एकधर्मावच्छिन्ननानाविशेषणतावच्छेदकविशिष्टवैशिष्ट्यबोधहेतुतया व्यापकतावच्छेदकतावच्छेदकरूपेण यत्किञ्चिद्व्यापकतावच्छेदकप्रकारकज्ञानस्यैव एकधर्मावच्छिन्ननानाविधेयतावच्छेदककानुमितिहेतुतया च अज्ञातस्याप्यनागतस्तनपानस्य जन्मान्तरीयसुखनिष्ठनिरूकृतत्कृतिजन्यत्वानुमितौ विधेयतावच्छेदकतया भानसद्भावात् समानप्रकारतामात्रेण कृतिसाध्यताज्ञानस्य हेतुतामते सिद्धगोचरज्ञानादेवासिद्धे इच्छा-प्रवृत्त्योरुपपत्तेश्चेति भावः। 'इष्टसाधनताज्ञानस्येति प्रवर्त्तकतया नैयायिकाभिमतस्य प्रवृत्तिविषयस्तनपानमुख्यविशेष्यकेष्टसाधनताज्ञानस्येत्यर्थः, सुखीयनिरूकृतकृतिजन्यतास्मरणे स्तनपानस्य सुखात्मकेष्टसाधनतांशे विशेषणतयैव भानादिति भावः। यथाश्रुतन्तु न सङ्गच्छते सुखीयनिरूकृतकृतिजन्यतास्मरणे तद्घटकतया स्तनपाननिष्ठकृतिसा-

---

मपीति, कार्य्यत्वेनेति शेषः। 'तदानीमिति सुखकार्य्यत्वस्मरणसमय इत्यर्थः।

कार्य्यत्वज्ञानं प्रयोजकं क्लृप्तमित्यग्रेऽपि तदेव प्रवर्त्तकं क्लृप्तत्वात्।

नवीनास्तु ममेदं कृतिसाध्यमिति ज्ञानं न प्रवर्त्तकं अनागतविषये प्रत्यक्षानुमानयोरसम्भवात्, किन्तु

---

ध्यत्ववत् स्तनपाननिष्ठसुखसाधनत्वस्यापि भानात् अन्यथा प्रवृत्ति-विषयाऽगृहीतासंसर्गकेष्टसाधनताज्ञानविशिष्टकृतिसाध्यताज्ञानाभावा-न्मीमांसकनयेऽपि प्रवृत्त्यसम्भवादिति ध्येयं। 'कार्य्यत्वज्ञानं' कार्य्य-त्वज्ञानमेव, 'अग्रेऽपि' अनाद्यप्रवृत्तावपि, 'तदेवेति कृतिसाध्यता-ज्ञानमेव, नेष्टसाधनताज्ञानमक्लृप्तत्वादिति भावः। एतच्चापातत: सुखीयकृतिजन्यताघटकतया स्तनपाननिष्ठकृतिसाध्यत्वस्मृतेः स्तन-पाननिष्ठसुखसाधनताविषयकत्वेन चिकीर्षाजनकत्वासम्भवात्, परनये साधनत्वज्ञानस्येच्छाविरोधित्वात् पृथक्स्तननिष्ठकृतिसाध्यत्वस्मरणा-भ्युपगमे च किमपराद्धं पृथक्स्तनपानविशेष्यकेष्टसाधनतास्मृत्या। न चेच्छाविषयविशेष्यकसाधनताज्ञानमेवेच्छाविरोधीति वाच्यं। तथा सति साधनताभ्रमस्येच्छायामविरोधित्वापत्तेरिति ध्येयं।

'ज्ञानं न प्रवर्त्तकमिति अनागतविशेष्यकं मदंशान्तर्भावेन ज्ञानं न प्रवर्त्तकमित्यर्थः, 'प्रत्यक्षेति, सामान्यलक्षणानङ्गीकारात् न

---

'नवीनास्त्विति, इष्टसाधनताज्ञानस्यैव प्रयोजकत्वाभ्युपगमेन विषभक्षणवत् तृप्तभोजनस्यापि व्यवच्छेदे तद्व्यवच्छेदाय कामनाज्ञानस्याप्यधिकस्य प्रयो-जकत्वाभ्युपगमो नवीनत्वे वीजं। न चेष्टसाधनताज्ञानं तत्रास्त्येव तृप्तिसाध-नतायास्तत्राप्यक्षतत्वादिति वाच्यं। न हि यदा कदाचिदिच्छाविषयीभूत-

यादृशस्य पुरुषस्य कृतिसाध्यं यद्दृष्टं तादृशत्वमात्मनः प्रतिसन्धाय तत्र प्रवर्त्तते, तथाह्योदनकामस्य तत्-साधनताज्ञानवतश्च तण्डुलाद्युपकरणवतः पाकः कृति-साध्यः अहमपि च तादृश इति ज्ञानात् पाके प्रवर्त्तते। एवञ्चान्यकृतपाके[१] कृतिसाध्यताज्ञानं आत्मनः पाके कृतिसाध्यत्वप्रयोजकविशेषणवत्त्वज्ञानञ्च प्रवर्त्तकं। अ-न्यत्रापि प्रवृत्तिरेवमेवेत्यनादिरितैव। अतएव सञ्ज्ञात-बाधश्चैत्यवन्दने विषभक्षणे च न प्रवर्त्तते इष्टसाधनता-ज्ञानवतो हि तत् कृतिसाध्यं। न च सञ्ज्ञातबाध-

प्रत्यक्षं नानुमानं पक्षापरिचयादिति भावः। 'अन्यकृतपाक इति, पाकत्वप्रकारेणेति शेषः। 'कृतिसाध्यताज्ञानमिति कृतित्वेन परकीय-कृतिसाध्यताज्ञानमित्यर्थः। इदमुपलक्षणं परस्य ओदनकामना-बलवदनिष्टाननुबन्धीष्टसाधनताज्ञानयोः ज्ञानमित्यपि बोध्यं। 'पाके कृतिसाध्यत्वेति पाकनिष्ठकृतिसाध्यत्वेत्यर्थः, 'विशेषणवत्त्वज्ञानमिति, तच्च विशेषणं ओदनकामनावत्त्वमेव पाकत्वप्रकारकबलवदनिष्टाननु-बन्धीष्टसाधनताज्ञानञ्चेति भावः। 'अन्यत्रापीति अन्यकृतपाकेऽपी-त्यर्थः, 'प्रवृत्तिः' अन्यस्य प्रवृत्तिः, 'सञ्ज्ञातबाध इति इष्टासाधनत्व-

(१) अन्यकृतिसाध्ये पाक इति क०।

पालसाधनत्वं तत् किन्तु विद्यमानेच्छाविषयीभूतसाधनत्वं तच्च तदानीं तृप्तिकामनाविरहेण नास्त्येवेत्याहुः। वस्तुतोऽग्रे वक्ष्यमाणं गौरवादिकमेव

स्तच इष्टसाधनताज्ञानवान्। एवं तृप्तीच्छावतोऽपि भोजनं कृतिसाध्यं तृप्तश्च न तृप्तीच्छावत्त्वमात्मन्य-वैतीति न भोजने प्रवर्त्तते।

अतिनवीनास्तु यादृशस्येत्यादौ अविगीतत्वं तत्-कृतौ विशेषणमाहुः। सञ्जातबाधस्तु विषभक्षणं चैत्य-

---

बलवदनिष्टजनकत्वज्ञानवानित्यर्थः, 'इष्टसाधनताज्ञानवतः' बलवद्-निष्टाननुबन्धीष्टसाधनताज्ञानवतः, 'तत्' चैत्यवन्दन-विषभक्षणादि, 'इष्टसाधनताज्ञानवान्' बलवदनिष्टाननुबन्धीष्टसाधनताज्ञानवान्, आत्मनस्तद्वत्त्वं प्रतिसन्धत्तीति शेषः विषयबाधादिति भावः[१]। 'तृप्तीच्छावतः' वर्त्तमानतृप्तीच्छावतः, 'तृप्तीच्छावत्त्वं' वर्त्तमानतृप्ती-च्छावत्त्वं, अत्र स्फुटतरोऽस्वरसः सिद्धान्तग्रन्थे स्वयमेव प्रकटयिष्यते[२] इति मन्तव्यं।

'अविगीतत्वमिति बलवदनिष्टाननुबन्धीष्टसाधनत्वमित्यर्थः, तच्च स्वजन्येष्टोत्पत्त्यनान्तरीयकदुःखाजनकत्वं तेन चैत्यवन्दनस्यापि निरासः

(१) विरोधादिति भाव इति क०।

(२) विवेचयिष्यत इति क०।

---

नवीनत्वे वीजं। 'अतिनवीनास्त्विति, अत्रापि यथा तृप्तस्य भोजने अविगीत-कृतिसाध्येऽपि तृप्तौ कामनाविरहेणेष्टसाधनत्वज्ञानाभावान्न प्रवृत्तिस्तथैव विषभक्षण-चैत्यवन्दनयोरप्यप्रवृत्तिसम्भवात् अविगीतविशेषणवैयर्थ्यमेवेत्यति-नवीनत्वे वीजं। इयानेव विशेषो यदेकत्र फलेच्छाविरहादिष्टसाधनताज्ञान-

वन्दनञ्च विगीतकृतिताध्यत्वेनैव जानातीति तत्र न प्रवर्त्तते।

प्रवृत्तिविषयश्च सामान्यतः कालासम्भिन्नः पाकादिर्ज्ञायते, प्रवृत्तिमहिम्ना चानागतपाकसिद्धिः, चि-

---

तज्जन्येष्टाभावादिति भावः। 'विगीतकृतीति यथोक्ताविगीतभिन्नपरकीयकृतीत्यर्थः, बलवदनिष्टाननुबन्धित्वज्ञानस्य कृतिसाध्यत्वप्रयोजकतया यादृशेत्यनेनैव पृथक्सञ्जातबाधवारणात्[१] तद्विशेषणं व्यर्थमित्यस्वरसोऽतिनवीनत्वेन सूचितः।

ननु भवन्मते उक्तदिशा भाविपाकस्य ज्ञानेऽपि न भाविपाकत्वेन ज्ञानमिति कथं तत्र प्रवृत्तिरित्यत आह, 'प्रवृत्तीति कालासम्भिन्नः सन्[२] प्रवृत्तिविषयः, 'पाकादिः' भाविपाकत्वाद्यप्रकारेण प्रवृत्तिविषयीभूतः पाकादिः, 'सामान्यतः' पाकत्वादिप्रकारेण, 'ज्ञायते' इत्यन्वयः, 'प्रवृत्तिमहिम्ना च' प्रवृत्तिस्वाभाव्याच्च, 'अनागतपाकसिद्धिः' अनागतपाकमात्रविषयकत्वसिद्धिः, तथाच भाविपाक-

(१) यादृशपदेनैव विगीतत्वस्यापि लाभादिति क०।

(२) भविष्यत्कालावच्छिन्नः सन्नित्यर्थः।

---

विरहोऽन्यत्र तु तत्साधनताविरहादिति। नन्वनागते प्रवृत्तिस्तथापि न स्यात् अनागताज्ञानादित्यत आह, 'प्रवृत्तीति पाकत्वेन रूपेण सिद्धपाकज्ञानादेव समानप्रकारकतया प्रवृत्तिस्वाभाव्यादनागतपाकसिद्धिरित्यर्थः,

कीर्षा च कालासम्भिन्नविषया न तु भाविनं कृत्या साधयामीत्याकारैवेति ।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ शब्दाख्यतुरीयखण्डे विधिवादपूर्व्वपक्षः ॥

---

त्वादिप्रकारकज्ञानं(१) नोपयुक्तमिति भावः । ननु प्रवृत्त्यर्थं तादृशज्ञानं मा म्टग्यतां चिकीर्षा तु तादृशज्ञानं विना कथं स्यादित्यत आह, 'चिकीर्षा चेति चिकीर्षापीत्यर्थः, तथाच तत्रापि तादृशज्ञानं नापेक्षितमिति भावः ।

इति श्रीमथुरानाथ-तर्कवागीशविरचिते तत्त्वचिन्तामणिरहस्ये शब्दाख्यतुरीयखण्डरहस्ये विधिवादपूर्व्वपक्षरहस्यं ॥

---

(१) भाविपाकमात्रविषयकत्वादिप्रकारकज्ञानमिति क० ।

---

'चिकीर्षा चेति, 'न तु भाविनमिति, तत्प्रकारकज्ञानासम्भवात् इति भावः इति प्रकाशः ।

# विधिवादसिद्धान्तः ।

अत्रोच्यते । विषभक्षणादिव्यावृत्तं* कृतिसाध्यत्वज्ञाने इष्टसाधनत्वं विषयतयावच्छेदकं लाघवात्, न तु स्वविशेषणवत्ताप्रतिसन्धानजन्यत्वं गौरवात् । न च

## विधिवादसिद्धान्तरहस्यं ।

'विषभक्षणादीति, 'आदिना चैत्यवन्दनादिपरिग्रहः, 'इष्टसाधनत्वमिति बलवदनिष्टाननुबन्धित्वे सतीष्टसाधनत्वमित्यर्थः, 'अवच्छेदकं' उपायचिकीर्षाकारणतावच्छेदकं, 'न त्विति न तु बलवदनिष्टाननुबन्धित्वे सतीष्टसाधनताज्ञानविशिष्टत्वमित्यर्थः, 'गौरवादिति एककालावच्छेदेन एकात्मवृत्तित्वरूपवैशिष्ट्यप्रवेशे ज्ञानत्वस्य वारद्वयप्रवेशे उभयत्र प्रवृत्तिविषयविशेष्यकत्वावच्छिन्नत्वस्य प्रवेशे च(१) गौर-

(१) एककालावच्छेदेनैकात्मवृत्तित्वरूपवैशिष्ट्यप्रवेशेन ज्ञानस्य ज्ञानत्वस्य च द्वयप्रवेशेन उभयत्र प्रवृत्तिविषयविशेष्यकत्वावच्छिन्नत्वस्य च प्रवेशेन चेति ख० ।

* 'विषेति, आदिपदग्राह्यं चैत्यवन्दनादि । न चोभयसिद्धतया तत्प्रतिसन्धानजन्यत्वमेवावच्छेदकं न त्विष्टसाधनत्वविषयकत्वं कल्पनीयत्वादेवञ्च युगपदुपस्थितभावेन लाघवावतारोऽपीति वाच्यं । यत्र शब्दादनुमानाद्वा दैवादिष्टसाधनत्वोपस्थितिस्तत्र तदवतारसम्भवात्, 'गौरवादिति । न च साधनत्वस्य

सिद्धासिद्धावस्थयोः साध्यत्व-साधनत्वयोर्विरोधः, निर्विशेषितयोस्तयोरविरोधात् । पाकोऽसिद्धः साध्यः सिद्धः साधनञ्चेत्यनुभवात् । तदा साध्यत्वं हि तदा साधन-

---

वादित्यर्थः । न चैवं पृथगिष्टसाधनताज्ञानसत्त्वे तद्विषयककार्य्यताज्ञानात् चिकीर्षा न स्यादिति वाच्यं । इच्छा-तद्विषयसाधनताज्ञानकृतिसाध्यताज्ञानानां त्रयाणामेकदावस्थानासम्भवेन सर्व्वत्र समूहालम्बनस्यैव हेतुत्वात् लाघवात्तेन रूपेण कारणत्वकल्पने क्वचित् समूहालम्बनकल्पनायाः फलमुखत्वेनादोषत्वाच्चेति भावः । ननु कृतिसाध्यत्वकालान्तरभाविस्वर्गादिसाधनत्वयोर्विरोधेन कथमेकत्र युगपत्तयोर्ग्रह इत्यत आह, 'न चेति, 'सिद्धासिद्धावस्थयोः' वर्त्तमानकृतिसाध्यत्वकालान्तरभाविस्वर्गादिसाधनत्वयोः, 'विरोधः' एकाधिकरणावृत्तित्वमित्यर्थः, यथायोगमन्वयः, 'निर्विशेषितयोः' एककालाविशेषितयोः, साध्यत्व-साधनत्वावच्छेदकयोः सिद्धत्वासिद्धत्वयोरप्यविशेषितयोर्न विरोध इति दर्शयितुं 'असिद्धः सिद्ध इत्युक्तं । ननु तर्हि कीदृशयोस्तयोर्विरोध इत्यत आह, 'तदेति तत्कालावच्छिन्नं कृतिसाध्यत्वं, तत्कालावच्छिन्नस्य कालान्तरभाविस्वर्गादिसाधनत्वस्य विरोधीत्यर्थः, एतच्च कृत्यधीनसमयसम्बन्धवत्त्वं साध्यत्वं फलोपधानरूपं साधनत्वमभिप्रेत्य, कार्य्यतावच्छेदकधर्मवत्त्वरूपसाध्यत्वस्य कारणतावच्छेदक-

---

नियमानन्यथासिद्धिघटिततया गौरवं तुल्यमिति वाच्यं । तज्जन्यत्वस्यापि तत्कारणत्वपर्य्यवसन्नतया तत्प्रवेशस्य तुल्यत्वे स्वविशेषणत्यधिकभागप्रवेशेन गौरवात् । यदि चाद्यप्रवृत्तौ सामग्र्यन्तरं तदा तदपि गौरवं बोध्यं, यद्यपि

त्वस्य विरोधि नियमतस्तेनैव तस्य प्रतिक्षेपेण सहा-
नवस्थाननियमात्, न तु साधनत्वस्यान्यदा साधनत्वस्य
वा, तयोरप्रतिक्षेपात्। अन्यदा साधनत्वेऽपि साधनत्व-
मस्त्येव सामान्याभावे विशेषाभावप्रसङ्गात्। एवन्तदा

---

धर्मवत्त्वरूपसाधनत्वेन एककालावच्छेदेनाप्यविरोधादिति द्रष्टव्यं[१]। विरोधमुपपादयति, 'नियमत इति, 'तेनैव' तत्कालावच्छिन्न-कृतिसाध्यत्वेनैव, 'तस्य प्रतिक्षेपेणेति तत्कालावच्छिन्नस्वर्गादिसाधन-त्वाभावस्य व्याप्यत्वानुभवेनेत्यर्थः, 'सहानवस्थाननियमात्' तत्रैव तत्सहानवस्थाननियमादित्यर्थः। 'साधनत्वस्य' साधनत्वसामान्यस्य, 'अन्यदा साधनत्वस्य वेति, 'तदा सिद्धत्वं विरोधीत्यनुषज्यते, 'अप्रतिक्षेपात्' परस्पराभावव्याप्यत्वात्। ननु तत्कालीनसाध्यत्व-स्यान्यदा साधनत्वाविरोधित्वेऽपि साधनत्वसामान्यस्य विरोधित्व-मस्त्येवेत्यत आह, 'अन्यदेति, 'सामान्याभावे' साधनत्वसामान्यस्याभावे, 'विशेषस्यान्यदा साधनत्वस्याभावप्रसङ्गादित्यर्थः। साध्यत्व-साधनत्वाव-च्छेदकयोः सिद्धत्वासिद्धत्वयोरपि कीदृशयोर्विरोधस्तदाह, 'एवमिति,

---

(१) इत्यपि बोध्यमिति क०।

---

तज्जन्यत्वं प्रवर्त्तकज्ञाने न विषय इति गौरवं न, तथापि कारणताग्राहकेणा-वच्छेदकतया तदवश्यं ग्रहीतव्यमिति गो[illegible]रो बोध्यः। ननु विरोधादि-ष्टसाधनत्वविषयकत्वं न कुत्रापीति न युगपदुपस्थितिरित्याशङ्कां निराकरोति, 'न चेति, 'सामान्याभावे' साधनत्वसामान्याभावे, 'विशेषस्यान्यदासाधन-

असिद्धत्वस्य तदा सिद्धत्वं विरोधि नियमतस्तस्यैव प्रतिक्षेपात्, न तु सिद्धत्वमात्रं, अन्यदापि तत्र सिद्धत्वाभावप्रसङ्गात्, निर्विशेषितयोर्विरोधे च सिद्धत्वासिद्धत्वयोश्चान्यतरदेव पाकादौ स्यान्न तु समयभेदेऽप्युभयं। न च तदा कृतिसाध्यत्वे सति तदिष्टसाधनत्वज्ञानं प्रवर्त्तकं, अतएव वाजपेयेन यजेतेत्यत्र यागस्य करणा-

---

'नियमत इति, तदधिकरण इति शेषः, 'प्रतिक्षेपात्' अभावात्। दूषणान्तरमाह, 'निर्विशेषितयोरिति। नन्वेवमपि तदा कृतिसाध्यत्व-तदिष्टसाधनत्वयोर्विरोधस्य त्वयाप्यभ्युपगतत्वात् तदुभयविषयकैकज्ञानासम्भवात् कथं प्रवृत्तिरित्यत आह, 'न चेति, 'तदाद्वयं साध्यत्वसाधनत्वान्वितं। ननु साध्यत्व-साधनत्वयोः सामान्यतश्चेन्न विरोधस्तदा 'वाजपेयेन यजेतेत्यत्र 'वाजं' अन्नं, 'पेयं' पानयोग्यं, तृतीयार्थोजन्यत्वं[१] इत्युक्तौ वाजपेयजन्यत्वेनोपस्थिते यागे विध्यर्थस्येष्टसाधनत्वस्य विरोधात् प्रतीत्यनुपपत्त्या वाजपेयेति कर्म्मनाम तृतीया चाभेदार्थिकेति कल्प्यते तन्न स्यादित्यत आह, 'अतएवेति एककालावच्छेदेन तयो-

---

(१) तृतीया च अन्यत्वार्थिकेति ख०।

---

त्वस्याभावप्रसङ्गादित्यर्थः, यादृशस्य ज्ञानं विरोधादसम्भवि तादृशं न प्रवर्त्तकत्वेनाभ्युपेयमेवेत्याह, 'न चेति, 'अतएवेति एककालीनसाध्य-साधनत्वविरोधादेव, तत्र वाजपेयपदस्य यागरूपकर्म्मनामधेयत्वं कल्प्यते, अन्यथा वाजपेयसाध्यत्वेनोपस्थिते यागे लिङादिना इष्टसाधनत्वान्वयबोधापत्तौ

वस्थायां सिद्धत्वेन न वाजपेयस्य साध्यता एकदा तयो-
र्विरोधादिति कर्म्मनामधेयत्वं, न तु करणस्य सिद्धत्वेन साध्यत्वविरोधः यागस्वरूपे तयोः सत्त्वात्।

विरोधादेवेत्यर्थः, 'करणावस्थायां' इष्टोपधायकतादशायां, 'करणस्य' यागस्य, 'साध्यत्वविरोधः' सामान्यतः साध्यत्वविरोधः। न च एककालावच्छेदेन तयोर्विरोधादेककालावच्छेदेन तयोरेकत्र प्रतीतिर्मास्तु अवच्छेदकविनिर्म्मोके तयोरेकत्र प्रतीतौ च विरोधाभावात् कथं कर्म्मनामधेयत्वमिति वाच्यं। विशिष्टाधिकरणकवैशिष्ट्यबोधे विशेष्यतावच्छेदकसमानकालीनत्वस्य विधेयसंसर्गमर्य्यादया भाननियमाद्वाजपेयजन्यत्वविशिष्टेष्टसाधनत्वान्वयासम्भवात् एककालावच्छेदेन तयोर्विरोधात् वेदे च विशिष्टवैशिष्ट्यबोधे सम्भवति तत्परित्यागानौचित्यस्य सकलवैदिकसम्प्रदायसिद्धत्वात्। न चैवं 'सोमेन यजेतेत्यत्रापि उक्तयुक्त्या कर्म्मनामधेयता स्यादिति वाच्यं। तत्र द्रव्याकाङ्क्षानिवर्त्तकप्रमाणाभावेन औत्सर्गिकस्यापि विशिष्टवैशिष्ट्यबोधस्य त्यागात्, अत्र तु प्रकृतिवद्विकृतिरिति न्यायेन सोमीय-

विरोधः स्यात् एकविशेषणावच्छिन्ने विशेष्ये विशेषणान्तरबोधस्यैव विशिष्टवैशिष्ट्याधीत्वेन तत्र विशेषणयोरेककालताभाननियमात्, अतएव गन्धप्रागभावाच्छिन्ना पृथिवी गन्धवतीत्यत्र बाधइत्युक्तं, तथाच तृतीयया करणत्वाभिधाने वाजपेयनामकयाग इष्टसाधनं करणञ्चेत्यन्वयः, प्रयोगसाधुरेव तृतीयेत्यन्ये। ननु वाजपेयनाम्ना यागस्य वाच्य-वाचकभाव एवान्वयो वाच्यत्वद्बोधनञ्च न वाजपेयपदोपस्थितिं विना अन्वयप्रतियोग्यनुपस्थितावन्वय-

द्रव्यान्वयेनैव द्रव्याकाङ्क्षानिवृत्तेरिति भावः । इदमापाततः विधेये विशेष्यतावच्छेदकसमानकालीनत्वं विषयीकृत्यैव विशिष्टवैशिष्ट्य-बोधोजायते न तु तदविषयीकृत्येति नियमाभावात्, किन्तु यत्र विशेष्यतावच्छेदकसमानकालीनत्वं न विधेये बाधितं तत्र तदवश्यं भासते इति नियमः, तथाच प्रकृते बाधात् तदविषयीकृत्यापि विशिष्टवैशिष्ट्यबोधे बाधकाभावात्[१] । न च वाजपेयपदस्य द्रव्यपरत्वे द्रव्याकाङ्क्षाविरहात् तस्य विध्यन्तरानुपपत्तिरिति वाच्यं । वाज-पेययागे स्वतन्त्रद्रव्यविधेरभावात् किन्तु प्रकृतिवद्विकृतिरिति न्या-यात् सोमीयद्रव्यस्यैवान्वयः । न च वाजपेयपदस्य द्रव्यपरत्वे प्रकृति-वद्विकृतिरिति न्यायात् सोमस्यापि द्रव्यत्वेन प्राप्तौ व्रीहि-यववद्वि-कल्पापत्तिः वाक्यभेदश्च आपद्येत इति वाच्यं । विकृतौ साक्षाद्द्रव्यविधौ प्रकृतिवदिति न्यायस्यानवतारात् द्रव्यस्य लब्धत्वेन निराकाङ्क्षत्वात्,

(१) विशिष्टवैशिष्ट्यबोधसम्भवादिति ख० ।

बोधाभावात् तदुपस्थितिर्न तत्पदेन शक्त्या तस्य यागरूपार्थशक्तत्वात् स्वपरत्वे लक्षणाभ्युपगमाच्च, न लक्षणया तदा तत्र शक्यग्रहे स्वशक्य सम्बन्धित्वेन स्वस्याग्रहादिति चेत्, न, वाजपेयपदस्य सामान्यतः क्वचि-च्छक्तिग्रहे तदग्रहसम्भवात् शक्तिभ्रमेण स्वोपस्थितिसम्भवाच्च, अतएव वक्ष्यति स्वार्थसम्बन्धाग्रहे स्वरूपोपस्थितिः शक्तिभ्रमादिति । ननु यदि विशिष्टवैशिष्ट्यबोधे तुल्यकालताभानं तदा वह्निना पचेतेत्यत्रापि वह्नि-साध्यत्वेष्टसाधनत्वयोर्युगपद्भानं न स्यादिति चेत्, न, तत्र वह्निसाध्यत्वस्यो-पलक्षणत्वेनैकस्य द्वयमित्यन्वयात् । न चात्रापि तथैवास्त्विति वाच्यं । विशे-षणत्वे सम्भवति उपलक्षणत्वस्य अन्याय्यत्वादिति वदन्ति ।

अथ विरुद्धयोरवच्छेदभेदमादाय एकत्र प्रतीतिः स्यात्। न च कृतिसाध्यत्वेष्टसाधनत्वयोः समयभेदमादायैकत्र प्रतीतिरस्ति, तथा लिङ्गाभावादिति चेत्, न, साध्यत्व-साधनत्वयोरविरोधस्योक्तत्वात्, एवं सिद्धत्वा-

---

परमार्थतस्तु वेदे कर्म्मनामधेयत्वे सम्भवति द्रव्यनामधेयत्वं न कल्प्यते इति नियमस्य सकलवैदिकसम्प्रदायसिद्धस्य भङ्गप्रसङ्गादेव कर्म्म-नामधेयत्वं, तदनादरे च सकलशिष्टव्यवहारविलोपापत्तेरित्येव तत्त्वं।

केचित्तु वेदे विधेयनिष्ठविशेष्यतावच्छेदकसमानकालीनत्वाव-गाहिविशिष्टवैशिष्ट्यबोधे सम्भवति तत्त्यागानौचित्यस्य सकलवैदिक-सम्प्रदायसिद्धत्वात् कर्म्मनामधेयत्वमित्यप्याहुः। तदसत्, विषयित्व-रूपस्य जन्यतावच्छेदकधर्म्मवत्त्वरूपस्य वा जन्यत्वस्य तृतीयार्थतया द्रव्यनामधेयत्वेऽपि विशिष्टवैशिष्ट्यबोधसम्भवात् तादृशजन्यत्वेन समं साधनत्वस्य विरोधाभावात्।

'अथेति, विरुद्धयोरवच्छेदकभेदमन्तर्भाव्यैव एकत्राधिकरणे युग-पदव्यवधानेन वा प्रतीतिरिति नियमादिति भावः। 'अस्ति' सम्भवति, 'तथा लिङ्गाभावादिति अवच्छेदकभेदमन्तर्भाव्यतदुभयसाध्यकानु-मितिजनकलिङ्गाभावादित्यर्थः। मम तु इदानीं मत्कृतिसाध्यत्वं साध्यं अग्रे मदिष्टसाधनत्वं हेतुरिति समयभेदमादायैव तयोरेकत्र क्रमेण प्रतीतिरिति भावः। 'अविरोधस्येति कालभेदेन एकधर्म्म-

---

'साध्यत्वसाधनत्वयोरिति, यद्यपि साध्यत्व-साधनत्वयोर्द्रव्यत्व-पृथिवीत्ववदवि-रोधे एकसमयावच्छेदेनापि प्रतीत्यापत्तिरिति संयोग-तदभाववदवच्छेदभेद-मादाय विरोधो वाच्यस्तथाच तद्वदेवावच्छेदभेदमादायैव प्रतीतिः स्यादिति

सिद्धत्वयोर्भावाभावरूपत्वेऽपि न विरोधः एकधर्म्मिग-तत्वेन मानसिद्धत्वात् । तस्मात् संयोग-तदभावयोरिव येन प्रकारेण ययोर्विरोधः तेन तयोरेकधर्म्मिगतत्वं न प्रतीयते, न तु रूपान्तरेणापीति । अपि च यदि साध्यत्व-साधनत्वयोर्विरोधस्तदा तवापीष्टसाधनत्वेन

---

वृत्तित्वरूपविरोधाभावस्येत्यर्थः । 'भावाभावेति, आद्यक्षणसम्बन्धित्व-मसिद्धत्वं, तद्ध्वंसावच्छिन्नकालसम्बन्धित्वं सिद्धत्वमिति भावः । नन्वेक-धर्म्म्यवृत्तित्वरूपविरोधाभावेऽपि एककालावच्छेदेन एकधर्म्म्यवृत्ति-त्वरूपो विरोधोऽस्त्येवेत्युक्तं दूषणमुपसंहारव्याजेन प्रकारान्तरेण परिहरति, 'तस्मादिति, 'येन प्रकारेण' यदवच्छेदेन, 'विरोधः' एकधर्म्म्यवृत्तित्वं, 'तेन' तदवच्छेदेन, 'न तु रूपान्तरेणापि' न त्ववच्छेदकान्तरेणैव, अवच्छेदकभेदमादायैवेति यावत्, 'प्रतीयत' इत्यनुषज्यते । न च घटादौ सिद्धत्वासिद्धत्वग्रहः अवच्छेदकग्रहं विनानुपपन्नः अवच्छेद्यग्रहे अवच्छेदकग्रहस्य हेतुत्वात् तथाच कालस्वरूपावच्छेदकग्रहाभावेन स न स्यादिति वाच्यं । चमरेणौ गौरालोकसंयोग-तदभावयोः प्रत्यक्षे व्यभिचारादिति, तथाच यत्रावच्छेदकग्रहसामग्री नास्ति तत्रावच्छेदकग्रहं विनाप्यवच्छेद्य-ग्रहः, अतएव प्रत्यक्षेणावच्छेद्यग्रहे प्रायशोऽवच्छेदकग्रहः तदानीं

---

शङ्का न यद्यप्युतेनोत्तरेण परिहर्त्तुं शक्यते, तथापि प्रत्यक्षप्रतीतौ सामग्री-समाजमहिम्नावच्छेदकग्रहनियमेऽपि शाब्दादिप्रतीतौ न भिन्नावच्छेदेना-

कार्य्यसाधनत्वेन वा कार्य्यत्वं नानुमीयेत हेतु-साध्ययोर्विरोधेन सामानाधिकरण्याभावेन व्याप्त्यसिद्धेः पक्षे साध्य-साधनयोरन्यतरसत्त्वे बाधासिद्ध्योरन्यतरप्रसङ्गाच्च। न च वाच्यमिदानीं मत्कृतिसाध्यत्वं साध्यमग्रे मदिष्टसाधनत्वं हेतुः दैवाद्यनधीनत्वे सति यदग्रे मदिष्टसाधनं तदिदानीं मत्कृतिसाध्यमिति व्याप्तिः, तथाच समयभेदमादाय साध्यत्व-साधनत्वयोरवगम इति, इदानीमग्रिमपदार्थयोर्नानात्वादनुगतरूपाभावेन व्याप्तेरग्रहात्, पाकन्यायेनान्यत्रापि तत्तत्समया-

---

तद्ग्रहसामग्र्याः समवधानादिति भावः। निर्विशेषितयोः साध्यत्वसाधनत्वयोर्विरोधे पाकोऽसिद्ध इत्यादिना अनुभवं बाधकमुक्त्वा दूषणान्तरमप्याह, 'अपि चेति, 'कार्य्यसाधनत्वेनेति प्राग्दूषितैकदेशिमतेन, 'बाधासिद्ध्योरिति साध्यसत्त्वे हेतोरभावात् स्वरूपासिद्धिः हेतुसत्त्वे साध्यासत्त्वाद्बाध इत्यर्थः। ननु विरुद्धयोरवच्छेदकभेदमन्तर्भाव्यैव एकत्राधिकरणे युगपदव्यवधानेन वा प्रतीतिरिति नियमे दूषणान्तरमाह, 'न च वाच्यमिति न वा वाच्यमित्यर्थः, 'अग्रे मदिष्टसाधनत्वं हेतुरिति दैवाद्यनधीनत्वे सति अग्रे मदिष्टसाधनत्वं हेतुरित्यर्थः, 'अवगम इति एकत्र क्रमेणावगम इत्यर्थः, 'व्याप्तेरग्रहादिति तथाच विरुद्धयोरवच्छेदकभेदमादायैव एकत्र प्रतीतिरिति

---

वच्छेद्यग्रहनियमः, अतएव वृक्षः संयोगवान् तदभाववांश्चेति शब्दादुभयधीरनुभवसिद्धेत्यत्र तात्पर्य्यं। एकदेशिमतमाह, 'कार्य्यसाधनत्वेन वेति।

न्तर्भावेन साध्यत्व-साधनत्वयोरप्रतीतिः, प्रतीतौ वा ममापीदानीं कृतिसाध्यत्वे सत्यग्रे इष्टसाधनमिति ज्ञानं प्रवर्त्तकमस्तु। न च पाके साध्येष्टकत्वेन* कृतिसाध्यत्व-मनुमेयं, असिद्धावस्थावतो हि पाकादिष्टानुत्पत्तेः

---

नियमे तवापि कृतिसाध्यत्वेष्टसाधनत्वयोः साध्य-हेतुभूतयोः क्रमेणैकत्र प्रतीतिर्न स्यादवच्छेदकान्तर्भावेन साध्य-हेतुकरणासम्भवादिति भावः। ननु पाककालीनस्तथाविधोऽन्योऽस्तु दृष्टान्तः तथाच पाकाधिकरणकाल एव विशिष्टव्याप्तौ प्रविष्ट इत्यत आह, 'पाकन्यायेनेति। नन्विदानीमन्तर्भावस्य उभयमतेऽप्यविशेषात् तुल्योऽयमनुयोग-इत्यत आह, 'प्रतीतौ वेति, 'ज्ञानमिति, संशयसाधारणमिति शेषः, तेन 'तथा लिङ्गाभावादिति पूर्व्वोक्तपूर्व्वपक्षनिरासः। ननु निर्विशेषितयोरेव साध्यत्व-साधनत्वयोर्विरोधादिष्टसाधनत्वं न हेतुः कार्य्यत्वज्ञाने किन्तु साध्येष्टकत्वं, तथाच न व्याप्यत्वासिद्धिर्न वा बाधासिद्ध्योरन्यतरावकाशः(१) इत्याशङ्कते, 'न चेति, साध्येष्टकत्व-ज्ञानजन्यकृतिसाध्यताज्ञानमेव च काम्ये प्रवर्त्तकमिति भावः। 'इष्टानुत्पत्तेरिति, तत्साध्यकत्वस्य(२) तन्निष्ठसिद्धत्वघटितत्वादिति शेषः।

---

(१) बाधासिद्ध्योरन्यतरप्रसङ्ग इति ख०, ग०।

(२) तन्निष्ठसिद्धत्वव्याप्यसाधनताकेष्टकत्वस्येत्यर्थः।

---

* 'साध्ये-ष्टकत्वेनेति, तथाच नोक्तविरोध इत्यभिमानः, 'तद्धीति, इच्छाकारणसुखत्वज्ञानादेरिच्छाकारणत्वमात्रस्य लघुत्वादिति भावः। एवञ्च

पाकस्य सिद्धत्वमवगम्य तत्साध्यत्वमिष्टस्यावगन्तव्यमसिद्धत्वञ्चावगम्य कृतिसाध्यत्वमिति सिद्धत्वासिद्धत्वयोर्व्विरोधोऽत्रापि दुर्व्वारः। अपि च स्वविशेषणधीजन्यकार्य्यताज्ञानाभावात् सुखे कथं चिकीर्षा, न हि कृतिसाध्यताज्ञानमात्रात् सा, सञ्ज्ञातबाधस्य विषभक्षणादौ चिकीर्षाप्रसङ्गात्। अथोपायचिकीर्षायां तत्कारणं इच्छाकारणसुखत्वज्ञाने कृतिसाध्यत्वं यदा विषयस्तदा सुखे चिकीर्षा नो चेदिच्छामात्रमिति द्वयमेव चिकीर्षाहेतुरिति चेत्, तर्हीच्छाहेतुज्ञाने यदा कृतिसाध्यत्वं भासते तदा चिकीर्षा नो चेदिच्छामात्र-

---

यथाश्रुते 'सिद्धत्वमवगम्येत्यसङ्गतेः व्याप्यबुद्धिं प्रति व्यापकबुद्धेरहेतुत्वात्। 'अथेति, तत्रापि उपायचिकीर्षां प्रत्येव कृतिसाध्यताविषयकेष्टसाधनताज्ञानस्य हेतुत्वादिति भावः। 'द्वयमेवेति उपायचिकीर्षां प्रति तादृशधीजन्यकृतिसाध्यताज्ञानत्वेन स्वतःसुन्दरचिकीर्षां प्रति[१] कृतिसाध्यत्वप्रकारकेच्छाजनकज्ञानत्वेन हेतुत्वमित्यर्थः, 'तर्हीति लाघवाच्चिकीर्षामात्र एव कृतिसाध्यत्वप्रकारकेच्छाजनकज्ञानत्वेन हेतुता आस्तामित्यर्थः। नन्वेतावतापि कथमिष्टसाधनता-

(१) अन्येच्छानधीनेच्छाविषयत्वं स्वतःसुन्दरत्वं

फलेच्छायां फलज्ञानमुपायेच्छायामिष्टसाधनताज्ञानं कारणमिति सामग्रीभेद एव, परेणापि तत्र तद्भेदाङ्गीकारात् फलसाधारणचिकीर्षासामान्ये

मित्येव सुख-तदुपायचिकीर्षाकारणमस्तु लाघवात्, सुखत्वज्ञानवदिष्टसाधनताज्ञानस्यापीच्छाकारणत्वात् । अतएव पाके इष्टसाधनताज्ञाने कृतिसाध्यत्वं विषय इति तत्र चिकीर्षा न तु इष्ट्यादिज्ञाने तद्विषयत्वमितीच्छामात्रं, सुखचिकीर्षायामिच्छाकारणज्ञाने कृतिसाध्यताविषयके चिकीर्षाजनकत्वावधारणात् । अन्यथा तत्र

---

बुद्धेर्हेतुत्वमित्यत आह, 'सुखत्वेति, इदञ्च स्वमतावष्टम्भेनोक्तं। 'सुखचिकीर्षायामिति सुखचिकीर्षास्थले इत्यर्थः, 'चिकीर्षाजनकत्वेति सामान्यतश्चिकीर्षामात्रं प्रत्येव जनकत्वावधारणादित्यर्थः । 'अन्यथा' कृतिसाध्यत्वविषयकेच्छाकारणज्ञानाभावे, 'तत्र' सुखे, तवमतेऽपीति शेषः, पूर्व्वमते उपायचिकीर्षात्वं कार्य्यतावच्छेदकं, इष्टसाधनताप्रकारककृतिसाध्यताज्ञानत्वं कारणतावच्छेदकं, 'अपि चेत्यादिमध्यमते च सामान्यतश्चिकीर्षात्वं जन्यतावच्छेदकं कृतिसाध्यत्वप्रकारकेच्छाजनकज्ञानत्वं कारणतावच्छेदकमित्युक्तमिदानीन्तूपायचिकीर्षायां कृतिसाध्यताप्रकारकज्ञानत्वेन इष्टसाधनताज्ञानत्वेन च पृथक् पृथगेव हेतुत्वं परन्तु इष्टसाधनताज्ञानस्य कार्य्यतावच्छेदकमुपायेच्छात्वं कृतिसाध्यताप्रकारकज्ञानस्य कार्य्यतावच्छेदकमुपायचिकीर्षात्व-सुखचिकीर्षात्वादिकं । कारणसमाजादुपायचिकीर्षात्मकवि-

---

च कृतिसाध्यत्वप्रकारेच्छाजनकज्ञानहेतुतेति सामग्र्यैक्यमिति लाघवमित्यत्र तात्पर्य्यं । 'उपायचिकीर्षेति इष्टोपायत्वज्ञानविषयीभवद्गोचरजन्य-

चिकीर्षानुत्पत्तेः। वस्तुतस्तूपायचिकीर्षा इष्टसाधनता-

---

विशिष्टकार्य्योत्पत्तिरिति निष्कृष्टमतमाह, 'वस्तुतस्त्विति, 'इष्ट-साधनताज्ञानसाध्येति इष्टसाधनताज्ञानत्वावच्छिन्नकारणताप्रतियोगिककार्य्यताश्रय इत्यर्थः। न चैवं कार्य्य-कारणभावद्वयापत्त्या प्रथममतमेव सम्यगिति वाच्यं। तस्मिन् मतेऽपि कृतिसाध्यत्वाप्रकारकोपायेच्छानुरोधेन उपायेच्छात्वावच्छिन्नं प्रति इष्टसाधनताज्ञानस्य पृथक्हेतुताया आवश्यकत्वात् उपायचिकीर्षाकारणतावच्छेदककोटाविष्टसाधनताविषयकत्वप्रवेशे च गौरवं वैयर्थ्यञ्च पुनरधिकमिति। न च तस्मिन्मते इष्टसाधनताज्ञानत्वेन क्लृप्ताया-उपायेच्छासामान्यकारणताया एव कृतिसाध्यत्वरूपावच्छेदकवृत्तिः(१) कल्प्यते इति लाघवं कृतिसाध्यताज्ञानत्वेन पृथक्हेतुत्वे चातिरिक्तं कारणत्वं तदवच्छेदकञ्च कल्पनीयमतो गौरवमिति वाच्यं। अवच्छेदकभेदेन कारणताभेदस्यावश्यकत्वात्, अतएव 'अपि चेत्यादि-मध्यमतमपि प्रत्युक्तं, कृतिसाध्यत्वाप्रकारकोपाय-सुखादीच्छानुरोधेन उपायेच्छात्वाद्यवच्छिन्नं प्रति इष्टसाधनताज्ञानत्वेन सुखेच्छात्वाद्यवच्छिन्नं प्रति सुखत्वादिज्ञानत्वेन पृथक्हेतुताया आवश्यकत्वात् चिकीर्षायाः कारणतावच्छेदककोटाविच्छाजनकत्वप्रवेशे गौरवाद्-व्यर्थत्वाच्च। नन्वेवं मीमांसकनये उपायोद्देश्यकेच्छां प्रतीष्टसाधनताज्ञानविशिष्टकृतिसाध्यताज्ञानत्वेन हेतुत्वात् कार्य्य-कारणभावैक्यं तत्र च कार्य्य-कारणभावद्वयमिति गौरवं। न च तन्मतेऽपि कृति-

---

(१) कृतिसाध्यत्वप्रकारकत्वरूपावच्छेदकवृत्तिरिति क०।

शानसाध्या उपायेच्छात्वात् वृष्टीच्छावत् । न च भोग-चिकीर्षावत्तेन विनापि स्यादित्यप्रयोजकत्वं, उपा-

साध्यत्वाप्रकारकोपायेच्छानुरोधेन उपायोद्देश्यकेच्छात्वावच्छिन्नं प्रति इष्टसाधनताज्ञानत्वेन पृथक्हेतुताया आवश्यकत्वात् कार्य्य-कारण-भावद्वयमावश्यकमिति वाच्यं । तैः कृतिसाध्यत्वाप्रकारकोपायोद्देश्यकेच्छानभ्युपगमात् वृष्टिसाध्यं सुखं भवत्वितीच्छैव विशेषणतया सुखत्वमिव वृष्टिमपि विषयीकरोतीत्येव तस्य सिद्धान्तादिति चेत्, न, पाको भवतु वृष्टिर्भवतु इत्यादिकृतिसाध्यत्वाप्रकारको-पायोद्देश्यकेच्छाया अनुभवसिद्धत्वेनापलापासम्भवात् इष्टसाधनता-ज्ञान-कृतिसाध्यताज्ञानयोर्विशेष्य-विशेषणभावे विनिगमकाभावेन कार्य्य-कारणभावद्वयस्यावश्यकत्वाच्च अवच्छेदकगौरवं पुनरधिकं । न च तत्प्रकारकेच्छां प्रति तत्प्रकारकज्ञानस्य हेतुत्वनियमात् कृतिसाध्यताप्रकारकज्ञानस्य कारणत्वावश्यकत्वमेव विशेष्य-विशेषण-भावे विनिगमकमिति वाच्यं । यत्त-तत्त्वयोरननुगतत्वात् चिकीर्षां प्रति कृतिसाध्यत्वप्रकारकज्ञानस्याहेतुत्वेऽपि क्षतिविरहादिति भावः । 'वृष्टीच्छावदिति वृष्टिर्भवत्वितीच्छावदित्यर्थः, इदमुपलक्षणं कृति-साध्यत्वाप्रकारकपाकादीच्छापि दृष्टान्तो बोध्यः, अयञ्च प्रसाध्याङ्को-दृष्टान्तः[१] परेण वृष्टिर्भवतु पाको भवत्वितीच्छानभ्युपगमात्, वृष्टि-साध्यं सुखं भवत्वितीच्छायान्तु सुखत्वरूपेण वृष्टिसाध्यत्वज्ञानस्यैव

(१) उभयवाद्यसिद्धो दृष्टान्त इत्यर्थः ।

चिकीर्षेत्यर्थः, एवं हेतावपि बोध्यं । 'वृष्टीच्छावदिति स्वमतावष्टम्भेन

येच्छायास्तदन्वय-व्यतिरेकानुविधानात् दृष्टेश्च स्वतोऽसुन्दरत्वेनेच्छानुत्पत्तेः अनुगतोपायेच्छायां अनुगतस्य प्रयोजकत्वे सम्भवति बाधकं विना त्यागायोगाच्च। न च चिकीर्षान्यत्वे सति उपायेच्छात्वं इच्छात्वं वा तज्जन्यत्वे प्रयोजकं, गौरवात् सुखेच्छायां तदभावाच्च। एवञ्चोपायचिकीर्षायामिष्टसाधनत्वज्ञाने ध्रुवेऽतिप्रसङ्गवारणार्थं कृतिसाध्यत्वनिर्व्वाहार्थञ्च कृतिसाध्यत्व-

---

हेतुत्वं न त्विष्टसाधनताज्ञानस्येत्यवधेयं। 'तेन विना' इष्टसाधनताज्ञानेन विना, अन्वयाद्यनुविधानमेव विवृणोति, 'वृष्टेरिति, 'स्वतोऽसुन्दरत्वेन' सुखादिभिन्नत्वेन, इष्टसाधनताज्ञानं विनेति शेषः। 'इच्छात्वं वेति, अत्रापि चिकीर्षान्यत्वे सतीति सम्बध्यते, 'तज्जन्यत्वे' इष्टसाधनताज्ञानजन्यत्वे, 'प्रयोजकं' अवच्छेदकं, क्रमेण दूषयति, 'गौरवादित्यादिना, 'उपायचिकीर्षायामिति, उपायेच्छात्वलक्षणकार्य्यतावच्छेदकसत्त्वादिति शेषः, 'ध्रुवे' सामान्यकारणे ध्रुवे, 'अतिप्रसङ्गवारणार्थमिति कृत्यसाध्यताज्ञानदशायामपि वृष्ट्यादौ चिकीर्षाप्रसङ्गवारणार्थमित्यर्थः, 'निर्व्वाहार्थञ्चेति, तत्प्रकारकेच्छायास्तत्प्रका-

---

आद्ये दोषमाह, 'गौरवादिति, अन्त्ये तमाह, 'सुखेच्छायामिति, 'अतिप्रसङ्गो वृष्ट्यादौ, 'निर्व्वाहार्थमिति। ननु यदि जनकज्ञानप्रकारस्यैवेच्छायां प्रकारत्वं तदा फलेच्छायां कथं स्ववृत्तित्वं प्रकारः स्यात्, न हि स्ववृत्तित्वेन ज्ञातमेव सुखादि स्ववृत्तित्वेनेष्यते, सर्व्वत्र तथा सामग्रीविरहाद्यत्रापि स्ववृत्तित्वबाधावतारस्तत्रापि दुर्लभवस्तुनि स्ववृत्तित्वप्रकारकेच्छानुभवाच्च। न च

मपि विषयतयावच्छेदकमस्तु न तु तद्विहाय तन्मात्रं, क्लृप्तकारणं विना कार्य्यानुपपत्तेः। अतएव स्तनपान-प्रवृत्तावप्युपायेच्छाकारणत्वेन गृहीतस्येष्टसाधनत्व-ज्ञानस्यापि कल्पनं दृष्टानुरोधित्वात् कल्पनायाः। ननु साधनत्वमिच्छाविरोधि तस्य सिद्धधर्म्मत्वात्

---

रकज्ञानजन्यत्वनियमादिति भावः। 'विषयतया' ज्ञानविषयतया, 'अवच्छेदकमस्त्विति स्वातन्त्र्येण चिकीर्षात्वावच्छिन्नं प्रति कारणता-वच्छेदकमस्त्वित्यर्थः, चिकीर्षात्वावच्छिन्नं प्रति कृतिसाध्यताज्ञान-त्वेनापि हेतुत्वमस्त्विति फलितार्थः, 'तद्विहाय' कृतिसाध्यता-ज्ञानं विहाय, 'तन्मात्रं' इष्टसाधनताज्ञानमात्रं, चिकीर्षोपधायक-मिति शेषः। 'स्तनपानप्रवृत्तावपि' तत्स्थलेऽपि, 'दृष्टानुरोधित्वा-दिति क्लृप्तकार्य्य-कारणभावानुरोधित्वात्, 'कल्पनाया इति कारण-कल्पनाया इत्यर्थः। 'साधनत्वं' साधनत्वज्ञानं, 'इच्छाविरोधि' उद्दे-

---

स्ववृत्तित्वमिच्छायां प्रकार एव नेति वाच्यं। अनुभवविरोधात् 'स्ववृत्ति-तयेष्यत इति पूर्व्वग्रन्थस्य तत्र साक्षित्वात्। न च क्वाचित्को धर्म्मोऽसा-धारणसामग्रीसापेक्षः स्ववृत्तित्वप्रकारकत्वन्तु सार्व्वत्रिकमिति सामान्य-सामग्रीनिर्व्वाह्यमेवेति वाच्यं। कारुणिकस्य परदुःखप्रहरणेच्छायां स्ववृत्ति-त्वस्याप्रकारत्वेन तस्यापि क्वाचित्कत्वात्, अतएव निरुपधिपरदुःखप्रह-रणेच्छा कृपेत्युच्यते, तस्मात् तत्र समाधानं चिन्त्यं। 'तद्विहाय' इष्टसाधन-त्वं विहाय, 'तन्मात्रं' कृतिसाध्यत्वमात्रं। बालस्येत्यादि दूषयति, 'अत-एवेति। 'दृष्टेति, तथाच सुखावृत्तित्वेन बहिरङ्गस्यापीष्टसाधनत्वस्य स्मरणं कल्प्यत इति भावः।

इच्छादौ तत्साध्येष्टज्ञानादिच्छेति चेत्, न, निर्व्विशेषितयोः सिद्धत्वासिद्धत्वयोरविरोधेनेच्छासाधनत्वयोर-

---

ज्ञाताख्यविषयतया इच्छोत्पत्तौ विरोधि, 'सिद्धधर्म्मत्वात्' असिद्धत्वविरोधिनः सिद्धत्वस्य व्याप्यत्वात्, तथाच विरोधिव्याप्यवत्त्वज्ञानविधया इच्छाजनकीभूतासिद्धत्वज्ञानविघटकत्वेन इच्छाविरोधित्वमिति भावः। 'सिद्धत्वं अस्तित्वं वर्त्तमानकालसम्बन्धित्वमिति यावत्, असिद्धत्वं वर्त्तमानप्रागभावप्रतियोगित्वमिति मन्तव्यं। नन्वेवमिष्टसाधनताज्ञानादृष्ट्यादौ कथमिच्छेत्यत आह, 'वृष्ट्यादाविति, 'तत्साध्येष्टज्ञानादिति सुखादौ वृष्टिसाध्यताज्ञानादित्यर्थः, वृष्टिसाध्यं सुखं भवत्वितीच्छयामेव सुखत्ववद्वृष्टेरपि विषयीकरणात् स्वातन्त्र्येण वृष्टिर्भवत्वितीच्छायास्त्वसिद्धत्वादिति भावः। असिद्धत्वज्ञानस्येच्छाहेतुत्वमभ्युपेत्य समाधत्ते, 'निर्विशेषितयोरिति, 'सिद्धत्वासिद्धत्वयोरिति वर्त्तमानत्वविशेषितप्रागुक्तसिद्धत्वासिद्धत्वयोरित्यर्थः, वर्त्तमानप्रागभावप्रतियोगित्व-वर्त्तमानकालसम्बन्धित्वयोरेव परस्परं विरुद्धत्वादिति भावः। 'इच्छासाधनत्वयोः' इच्छासाधनत्व-

---

अत्र सम्प्रदायविदो नेष्टसाधनताज्ञानं प्रवर्त्तकं विषयत्वात् किन्तु तज्जन्या इष्टसाधनतानुमितिः प्रवर्त्तिकेति वदन्ति। नवीनास्तु सर्व्वं सामान्यलक्षणाप्रत्यासत्तिजन्यं सर्व्वस्य स्वकृतिसाध्यताज्ञाने सति तन्मात्रविषयिनी कृतिसाध्येष्टसाधनतानुमितिरेतत्तल्पनप्रानविषयिनीति तज्जन्यस्मरणमपि एतत्तल्पनपानगोचरमिति वदन्ति। 'दृष्टेति, तथाच सुखादृत्तित्वेन बहिरङ्गस्यापीष्टसाधनत्वस्य स्मरणं कल्पत इति भावः। तर्हि कथं वृष्ट्यादाविच्छेत्यत आह, 'वृष्ट्यादाविति।

विरोधात् । तदाऽसिद्धत्वं तदा सिद्धत्वञ्च नेच्छासाधनत्वयोः प्रयोजकमिति तथा न ज्ञायत एव ।

यत्तु तत्साध्येष्टज्ञानाद्दृष्ट्यादाविच्छेति, तत्तुच्छं, असिद्धावस्थाद्दृष्ट्यादेरिष्टानुत्पत्तेस्तस्यावश्यं सिद्धत्वमवगन्तव्यमिच्छानुरोधित्वाच्चासिद्धत्वमिति, तत्रापि विरोध एव। दृष्टौ सत्यामिष्टं तया विना नेत्यन्वय-व्यति-

---

ज्ञानयोः, 'अविरोधादिति, साधनत्वस्यासिद्धत्वविरोधित्वाप्यत्वाभावेन तज्ज्ञानस्य कारणीभूतासिद्धत्वज्ञानाविघटकत्वादिति भावः। ननु तथापि वर्त्तमानप्रागभावप्रतियोगित्वरूपासिद्धत्वं वर्त्तमानकालसम्बन्धित्वरूपं वर्त्तमानत्वविशेषितसिद्धत्वञ्च परस्परं विरुद्धमेव तदुभयोरेकत्र ग्रहः कथं स्यात् तयोरज्ञाने च इच्छासाधनत्वज्ञानयोरसम्भवादित्यत आह, 'तदेति, 'तदाऽसिद्धत्वं' वर्त्तमानप्रागभावप्रतियोगित्वं, 'तदा सिद्धत्वं' वर्त्तमानकालसम्बन्धित्वं, 'इच्छासाधनत्वयोः' इच्छासाधनत्वज्ञानयोः, 'प्रयोजकं' ज्ञानविषयतया प्रयोजकं, इदन्त्वासिद्धत्वज्ञानं नेच्छाहेतुः किन्तु तत्कालीनसिद्धत्वज्ञानमेव प्रतिबन्धकमिति स्वमतानुसारेणोक्तं ।

'असिद्धावस्थात्' अविद्यमानात्, 'तस्येति, इष्टे तत्साध्यताज्ञानदशायामिति शेषः । 'असिद्धत्वमिति, 'अवगन्तव्यमित्यनुषज्यते, जनकीभूतमित्यादिनियमात् सिद्धत्वज्ञानप्रतिबन्धकत्वात् असिद्धत्वज्ञानस्यापि तत्रेच्छाहेतुत्वादिति भावः । 'तत्रापि' सुखादिनिष्ठदृष्टिसाध्यताज्ञानेऽपि, 'विरोध एव' दृष्टीच्छाजनकत्वविरोध एव,

रेकग्रहस्य वृष्टिसिद्धत्वमादाय वृष्टिनिरूपितेष्टसाध्यकत्वग्राहकत्वात्। किञ्च चिकीर्षाजन्यकृतिसाध्यं मण्डलीकरणमित्यर्थप्रतिपादकं 'मण्डलीं कुर्य्यादिति वाक्यं प्रमाणं स्यात्* विषयाबाधात्। एतेन नवीनमत-

---

तव नये इति शेषः। ननु सिद्धावस्थवृष्ट्यादेः सुखाद्यनुत्पत्तेः तदुत्पत्तिदशायां तस्य वास्तविकं सिद्धत्वमपेक्षितमस्तु सुखादौ तत्साध्यताज्ञाने तन्निष्ठसिद्धत्वज्ञानञ्च कुतोऽपेक्षितमित्यत आह, 'वृष्टौ सत्यामिति, 'सिद्धत्वमादाय' सिद्धत्वं विषयीकृत्य, सत्तायाः क्षणसम्बन्धित्वघटितत्वादिति भावः। 'इष्टसाध्यकत्वेति सुखादिनिष्ठसाध्यतेत्यर्थः। नन्विदमयुक्तं सिद्धत्वज्ञानसत्त्वेऽपि वृष्टिसाध्यं सुखं भवत्वितीच्छायां सुखत्ववद्विशेषणतया वृष्टेरपि विषयत्वसम्भवात् तदुद्देश्यकेच्छां प्रत्येव तन्निष्ठसिद्धत्वज्ञानस्य विरोधित्वात् वृष्टिसाध्यं सुखं भवत्वित्यत्र वृष्टेरनुद्देश्यत्वादिति चेत्, न, वृष्टिर्भवत्वित्याकारकवृष्ट्युद्देश्यकेच्छाया अप्यनुभवसिद्धत्वादिति भावः। 'चिकीर्षाजन्यकृतीति प्रवृत्त्याख्यकृतीत्यर्थः। 'विषयाबाधादिति तन्मते कृतिसाध्यताज्ञानमात्रस्य प्रवर्त्तकतया कृतिसाध्यत्वमात्रस्यैव विध्यर्थत्वात् तस्य च प्रकृतेऽबाधितत्वादित्यर्थः। इदमापाततः प्रमाणत्वस्य तत्तद्विषयघटिततया कृतिसाध्यत्वघटितप्रामाण्यापादने इष्टापत्तेः इष्टसाधनत्वघटितप्रामाण्यापादने चापादकाभावात्। एतेन

---

* 'प्रमाणं स्यादिति, यद्यप्यत्र परस्येष्टापत्तिः स्वर्गकामादिपदसमभिव्याहृतस्य स्वर्गकामनियोज्यान्वयबोधेनाप्रामाण्येऽपि तदसमभिव्याहृतस्य विष-

मप्यपास्तं, परस्य हि कृतिसाध्यत्वौदनकामनावत्त्वेष्ट-साधनताज्ञानानां ज्ञानं तथा आत्मन ओदनकामना-वत्त्वेष्टसाधनताज्ञानस्य ज्ञानं न प्रवृत्तिकारणं गौरवात्, किन्तु मत्कृतिसाध्यत्वे सति मदिष्टसाधनताज्ञानमेव लाघवात्, यथा च साध्यत्व-साधनत्वयोरविरोधः

---

प्रमाणत्वं भ्रमभिन्नज्ञानजनकत्वमित्यपि प्रत्युक्तं, भ्रमत्वस्यापि तत्त-द्विषयघटिततयोक्तविकल्पग्रासात्। न च प्रमाणं स्यात् प्रमाणत्व-व्यवहारविषयः स्यादित्यर्थ इति वाच्यं। सामान्यतः प्रमाणव्यव-हारविषयत्वापादने इष्टापत्तेः कृतिसाध्यत्वांशे प्रमाणत्वस्य तवापि सम्मतत्वात् आंशिकप्रमाणव्यवहारविषयत्वापादने च कृतिसाध्यत्वेष्ट-साधनत्वविकल्पग्रासात् उक्तदोषद्वयापत्तेः। न च प्रमाणं स्यात् प्रवर्त्तकं स्यादित्यर्थ इति वाच्यं। इष्टसाधनताज्ञानजन्यकृतिसाध्य-ताज्ञानस्य प्रवर्त्तकतया तदभावादेव प्रवर्त्तकत्वासम्भवादिति ध्येयं। 'परस्य कृतिसाध्यत्वेति पाकत्वप्रकारेण परकृतपाके कृतिसाध्यत्वप्रकारेण परकीयकृतिसाध्यत्वस्येत्यर्थः, 'ओदनकामनावत्त्वेति परनिष्ठौदन-कामनावत्त्वस्येत्यर्थः, 'इष्टसाधनत्वज्ञानेति परकीयेष्टसाधनताज्ञान-स्येत्यर्थः, 'ज्ञानमिति, 'न प्रवृत्तिकारणमित्यनेनान्वितं, 'ज्ञानस्य ज्ञान-मिति ज्ञानस्य ज्ञानञ्चेत्यर्थः, चकारपूरणात्। 'किन्त्विति, अना-

---

याबाधेन प्रामाण्यात् यथास्मन्मये मण्डलीं कुर्य्यादित्यस्याप्रामाण्येऽपि कुर्य्या-दित्यस्य प्रामाण्यं, तथापि पूर्व्वोक्तदोष एव तात्पर्य्यं। व्यभिचारमप्याह,

अनागतस्य पाकादेः कृतिसाध्यताज्ञानञ्च तथोपपादितमेव किञ्च परकृतिसाध्यत्वमज्ञात्वापि स्वकृतिसाध्येष्टसाधनताज्ञानात् स्वकल्पितलिप्यादौ यौवने कामोद्रेकात् सम्भोगादौ प्रवृत्तेश्च तदेव प्रवर्त्तकम्। वस्तुतस्तु सिद्धविषयककृतिसाध्यताज्ञानात् कथं कृत्या साधयामीतीच्छा सिद्धे इच्छाविरहात् असिद्धस्याज्ञानात्। अथ सिद्धविषयादेव कृतिसाध्यताज्ञानात् असिद्धविषया कृतिसाध्यत्वेनेच्छा जायते इच्छाया असिद्ध-

गतपाकविशेष्यकेति शेषः। 'कृतिसाध्यताज्ञानञ्चेति स्वकृतिसाध्यताज्ञानञ्चेत्यर्थः। 'तदेवेति स्वकृतिसाध्यत्वेष्टसाधनत्वज्ञानमेवेत्यर्थः, इदमुपलक्षणं स्वकृत्यसाध्यताज्ञानदशायामपि कृतिसाध्यत्वेन परकीयकृतिसाध्यताज्ञानात् प्रवृत्त्यापत्तेश्चेत्यपि द्रष्टव्यं। 'सिद्धविषयकेति, परकृतसिद्धपाकविषयकेत्यर्थः, 'कृतिसाध्यताज्ञानात्' कृतित्वेन परकीयकृतिसाध्यताज्ञानात्, 'सिद्ध इति, परकृतपाक इति शेषः, 'असिद्धस्य च' कर्त्तव्यानागतपाकस्य च, 'अज्ञानात्' कृतिसाध्यत्वेनाज्ञानात्। इदमुपलक्षणं यदंशस्याज्ञानं तस्येच्छायां प्रकारत्वासम्भवाच्चेत्यपि द्रष्टव्यं। 'सिद्धविषयात्' परकृतसिद्धपाकविषयात्, 'कृतिसाध्यताज्ञानात्' कृतित्वेन परकीयकृतिसाध्यताज्ञानात्, 'कृतिसाध्यत्वेन' स्वकृतिसाध्यत्वेन, 'असिद्धविषयत्वेति, बाधकाभावे मदंशविषयत्व-

'किञ्चेति, एवञ्चेत्यादिदूषयति, 'वस्तुतस्त्विति। नन्वेवमपि गौरवं विपरीतयत्नाह, 'अस्तु चैवमिति, बलवदनिष्टाजनकत्वज्ञानस्य त्वयापि प्रवर्त्तकत्वेनाभ्युपेयं

विषयत्वस्वभावत्वादेकप्रकारकत्वेन ज्ञान-चिकीर्षयोः कार्य्य-कारणभावो न त्वेकविषयत्वे सति गौरवात्, इच्छाया अनागतविषयत्वात् तस्य चाज्ञानात् तथात्व-दर्शनात् सुखादीच्छायामप्येवमिति चेत्, न, असिद्ध-विषयेच्छानुरोधेनानागतज्ञानोपायस्य दर्शितत्वात्। अस्तु चैवं, तथापि कृतिसाध्यताज्ञाने इष्टसाधनत्वमेव व्यावर्त्तकमस्तु स्व-परकीयेष्टसाधनताज्ञान-फलका-मनाज्ञानापेक्षया लघुत्वात् इष्टसाधनताज्ञानज्ञानस्य फलकामनाज्ञानस्य च हेतुत्वे मानाभावाच्च।

---

स्वभावाच्चेत्यपि बोध्यं। हेत्वन्तरमाह, 'इच्छाया इति, 'अज्ञानात्' ज्ञानासम्भवात्, 'तथात्वदर्शनात्' समानप्रकारकत्वेनैव कार्य्य-कारण-भावकल्पनात्। 'अनागतज्ञानेति अनागते कृतिसाध्यताज्ञानेत्यर्थः। 'कृतिसाध्यताज्ञान इति पाकत्वप्रकारेण परकृतपाकविशेष्यके कृति-त्वरूपेण परकीयकृतिसाध्यताज्ञान एवेत्यर्थः, 'व्यावर्त्तकं' विशेषणं, 'अस्त्वित्यभ्युपगमवादः, 'स्व-परकीयेति स्व-परकीयेष्टसाधनताज्ञान-स्व-परकीयफलकामनयोर्ज्ञानापेक्षयेत्यर्थः,।

'नव्याः' प्राभाकरनव्याः, स्वकृतिसाध्यताज्ञानमेवेत्येवकारेण बलवदनिष्टाननुबन्धीष्टसाधनतालिङ्गकत्वस्य व्यवच्छेदः प्रवृत्तिसाध्य-

---

स्वनभ्युपगमे वा ततोऽप्यस्य गुरुत्वात्। यद्वा एतदस्वरसादाह, 'ज्ञानज्ञानस्येति, एतेनातिनवीनमतमप्यपास्तं। 'नव्याः' प्राभाकरनव्याः, 'इष्टत्वेति, इष्टसाधन-

नव्यास्तु स्वकृतिसाध्यताज्ञानमेव प्रवर्त्तकं तेन स्वकृत्यसाध्ये वृष्ट्यादौ कारीर्य्याञ्च कृषीबलस्य न प्रवृत्तिः। न च सञ्जातबाधस्य विषभक्षणे प्रवृत्तिप्रसङ्गः, स्वकृतिसाध्यताज्ञानविषये इष्टत्वस्य स्वरूपसतः प्रवृत्तौ सहकारित्वात्। न च सञ्जातबाधस्य विषभक्षणादाविच्छास्ति, इष्टसाधनत्वेनाज्ञानात् अतीतभोजनेऽप्यत एव न प्रवर्त्तते तृप्तेः सिद्धतया इच्छाविरहेण भोजने

---

ताज्ञानस्य प्रवर्त्तकत्वादेव वृष्ट्यादौ प्रवृत्तिवारणसम्भवात् स्वांशप्रवेशस्य प्रयोजनं तत्र नास्तीत्यत उक्तं 'कारीर्य्याञ्चेति,[१]। 'सञ्जातबाधस्येति गृहीतबलवदनिष्टानुबन्धित्वकस्य पुरुषस्येत्यर्थः। इदमुपलक्षणं अगृहीतेष्टसाधनत्वकस्य चैत्यवन्दनादौ प्रवृत्तिप्रसङ्ग इत्यपि बोध्यं। 'इष्टत्वस्य' इच्छायाः, 'प्रवृत्ताविति, चिकीर्षायाञ्चेत्यपि बोध्यं। इष्टसाधनताज्ञानमपेक्ष्य लाघवादिति भावः। 'विषभक्षणादावित्यादिना चैत्यवन्दनादिपरिग्रहः, 'इष्टसाधनत्वेनेति, बलवदनिष्टाननुबन्धीष्टसाधनत्वेनेत्यर्थः, तथाच चिकीर्षादिकारणीभूतेच्छां प्रति इष्टसाधनत्वादिज्ञानं हेतुरिति भावः। 'अतएव' इष्टत्वाभावादेव, 'तदुपाधिकेति इष्टसाधनताज्ञानाधीनेत्यर्थः। इद-

---

(१) अवग्रहनिवर्त्तकयज्ञविशेषः कारीरीपदेनोच्यते।

---

त्वप्रकारकेच्छायाः सहकारित्वमिति भावः। तेन सुखत्वप्रकारककृति-

तदुपाधिकेष्टत्वाभावादतीतत्वप्राविच्छा नास्तीति तत्-साधनेऽपीष्टत्वाभावादेव न प्रवृत्तिः। न चैवं पाके न प्रवर्त्तेत तस्य स्वरसतइष्टत्वाभावादिति वाच्यं। इष्टसा-धनत्वज्ञानेन तस्यापीष्टत्वात्। हन्तैवं प्राथमिकत्वा-दिष्टत्वाथमवश्यापेक्षणीयत्वाच्च कृतिसाध्यत्वे सतीष्टसा-धनताज्ञानमेव चिकीर्षाकारणमस्त्विति चेत्, न, इष्टसाधनत्वाभावेऽपि भोगे चिकीर्षासत्त्वात् तस्यां स्वकृतिसाध्यत्वज्ञाने सतीष्टत्वमेव कारणं न त्विष्टसा-धनत्वं व्यभिचारात्। पाकादौ तदन्वय-व्यतिरेकाव-

मुपलक्षणं भोजनस्य सिद्धत्वादपि तदिच्छाविषयत्वासम्भवादिति मन्तव्यं। 'तत्साधनेऽपीति तत्स्वरूपायोग्ये भाविभोजनेऽपीत्यर्थः, अतो न पौनरुक्त्यं। 'स्वरसत इति इष्टसाधनताज्ञानं विना इष्ट-त्वासम्भवादित्यर्थः। 'इष्टसाधनताज्ञानेनेति ओदनादिरूपेष्टसाधन-ताज्ञानेनेत्यर्थः। 'चिकीर्षाकारणमिति चिकीर्षायां प्रवृत्तौ च कारणमित्यर्थः[१]। 'इष्टसाधनत्वाभावेऽपि' इष्टसाधनत्वज्ञानाभावे-ऽपि, 'तस्यां' चिकीर्षायां, 'न त्विष्टसाधनत्वं' न त्विष्टसाधनत्वज्ञानं, 'व्यभिचारात्' नियतपूर्ववर्त्तित्वाभावात्। न चोपायवृत्तिविशेष्य-

(१) समानविशेष्यतावच्छेदकताप्रत्यासत्त्या चिकीर्षात्वावच्छिन्नं प्रति प्रवृ-त्तित्वावच्छिन्नञ्च प्रति कारणमित्यर्थ इति ग०।

साध्यताज्ञानजन्येच्छाविषयवदनेन व्यभिचार इति बोध्यं। 'अतीतत्वप्राविति,

पीष्टत्वोपक्षीणौ, एवं भोगेऽपि प्रवर्त्तेतेति चेत्, न, इष्टसाधनतापक्षेऽपि मुक्तिरूपेष्टसाधने सुखे प्रवर्त्तेतेति तुल्यं। सुखे चिकीर्षा भवत्येव कृतिस्तु न भवति कृतेः

---

तावच्छेदकत्वं प्रत्यासत्तिः उपायत्वञ्च सुख-दुःखाभाव तदनुभवेतरत्वमिति वाच्यं। गौरवात् इच्छेष्टसाधनताज्ञानयोः कार्य्य-कारणभावे उपायत्वप्रवेशस्योभयसम्मतत्वात् कृतिसाध्यत्वाप्रकारकत्वच्छादौच्छानुरोधेन इच्छां प्रति इष्टसाधनताज्ञानस्य पृथक्हेतुतायाश्च तव मतेऽप्यावश्यकत्वादिति[१] भावः। 'तदन्वय-व्यतिरेकौ' इष्टसाधनताज्ञानान्वय-व्यतिरेकौ, 'एवं' प्रवृत्ताविष्टसाधनताज्ञानस्यानपेक्षणीयत्वे, 'भोगेऽपीति, 'भोगः' सुख-दुःखाभावसाक्षात्कारः, तस्य स्वत एव इष्टत्वात् शरीरादेश्च तदुपादानत्वसम्भवादिति भावः। 'सुखे प्रवर्त्तेतेति सुखत्वरूपेण सुखे प्रवर्त्तेतेत्यर्थः। न चेष्टापत्तिः, तस्य तेन रूपेण साध्यत्वाख्यप्रवृत्तिविषयत्वे मानाभावादिति भावः। 'सुख इति, सुखत्वरूपेणेति शेषः। 'सिद्धवृत्तीति सिद्धकारणकासिद्धक्रियावृत्तिधर्म्मप्रकारकत्वनियमादित्यर्थः, सुखत्वनिष्ठप्रकारत्वान्तर्भावेन कृतिसाध्यताज्ञान-चिकीर्षयोः प्रवृत्तिकारणत्वाभावादिति

---

(१) न्यायमतेऽप्यावश्यकत्वादितीति ख०, ग०।

---

पूर्व्वं दृष्टेर्वर्त्तमानत्वमभिमतमिदानीमतीतत्वमिति न पूर्व्वाभेदः, 'तुल्यमिति, वस्तुतः स्वेच्छाधीनकृतिसाध्यताज्ञानाभावान्न तत्र कृतिरिति भावः। 'इष्टसाधनतेति, न हि चिकीर्षान्योपायेच्छात्वं तज्जन्यतावच्छेदकं, गौरवादिति

सिद्धत्त्वसिद्धक्रियाविषयत्वनियमादिति चेत्तुल्यं। तस्मात् स्वकृतिसाध्यत्वं विधिरिष्टत्वं सहकारीति, मैवं, इष्टसाधनताज्ञानस्योपायेच्छायां हेतुत्वावधारणात्तस्यास्तज्जन्यत्वनियमादिच्छायाः स्वविषयेच्छानुत्पादक-

---

शेषः। सिद्धकारणकेति च उपादानप्रत्यक्षसत्त्वसम्पत्तये, 'तुल्यमिति भोगस्यापि क्रियात्वाभावेन भोगत्वनिष्ठप्रकारत्वान्तर्भावेनापि कृतिसाध्यताज्ञान-चिकीर्षयोः प्रवृत्तिकारणत्वाभावादेव न प्रवृत्तिरित्यर्थः, क्रियात्वञ्च दुःख-तदभाव-सुखभोग-परमापूर्व्वाद्यन्यत्वं, 'स्वकृतिसाध्यत्वमिति स्वकृतिसाध्यत्वमेवेत्यर्थः, 'विधिः' प्रवर्त्तकज्ञानविषयः, त्वयाप्युपायस्येष्टत्वे इष्टसाधनताज्ञानं कारणमभ्युपगम्यते इति तस्य कारणत्वे कल्प्यमाने लाघवादुपायेच्छात्वावच्छिन्नं प्रत्येव कल्पनात् उपायचिकीर्षायामपि तज्जन्यत्वं दुर्व्वारं, न हि ममापि उपायचिकीर्षात्वेन तज्जन्यत्वं, चिकीर्षात्वस्यार्थत्रयसिद्धत्वादिति समाधत्ते, 'इष्टेति, 'उपायेच्छायां' उपायेच्छात्वावच्छिन्ने, 'तस्याः' उपायचिकीर्षायाः, 'तज्जन्यत्वनियमादिति, तथाच इष्टसाधनताज्ञान-कृतिसाध्यताज्ञानादेव उपायचिकीर्षासम्भवे किमवान्तरेच्छाकल्पनेनेति भावः। ननु तथापि प्राथमिकन्यायमतापेक्षया नव्यमतं सम्यगेवेत्यत आह, 'इच्छाया इति, फलेच्छाया उपायेच्छाहेतुत्वेन तत्र व्यभिचारवारणाय 'स्वविषयेति स्वविषयविषयकेत्यर्थः, स्वसमाना-

---

भावः। कृतिसाध्यत्वप्रकारकेच्छाजनकज्ञानत्वेन चिकीर्षाहेतुत्वमिति नोक्तव्यभिचारः। 'इच्छाया इति, भाष्यादौ तथा व्यवस्थापितत्वेन तथैव सिद्धान्ता-

त्वनियमाच्च। ननु सिद्धौदनः कुतः पाके न प्रवर्त्तते, ओदनमात्रस्य सिद्धत्वेनेष्टत्वाभावात्। अतएवातीत-भोजनादौ न प्रवर्त्तते अतीततृष्णादाविच्छाविरहात्। ननु सामुद्रिकविदाख्याते भावियौवराज्ये भोगसाधने स्वकृतिसाध्यत्वे सतीष्टसाधनत्वज्ञानात् कुतो न प्रवर्त्तते,

---

धिकरणेत्यपि बोध्यं, तेन नेश्वरेच्छायां व्यभिचारः। यद्यपि मणि-कृन्मते फलेच्छा नोपायेच्छाहेतुः किन्तु इष्टसाधनत्वज्ञानस्य हेतु-तायां अवच्छेदिकैवेति व्यर्थं विशेषणं, तथापि यन्नये फलेच्छायाः कारणतावच्छेदकत्वे तत्कालीन-तत्पुरुषीयत्वविशेषणस्यावश्यकत्वेना-ननुगमात् फलेच्छा न कारणतावच्छेदिका परन्तु कारणमेव तन्नयेनेदं। इदमापाततः तावता चिकीर्षां प्रति तद्धेतुतास्तु न तु प्रवृत्तावपि चिकीर्षयैवान्यथासिद्धत्वात्। न च व्यापारेण व्या-

---

दिति भावः। वस्तुतः पाकादाविष्टसाधनताज्ञानादिच्छोत्पत्तिसमये तद्धेतो-रेवेतिन्यायाच्चिकीर्षैव जायते तज्ज्ञाने कृतिसाध्यत्वप्रकारकत्वसम्भवात् न त्वन्तरापीच्छान्तरकल्पनं गौरवान्मानाभावाच्च। अपिच कृतिसाध्यत्वज्ञाने प्रवृत्तिहेतुतया व्यवस्थितेऽतिप्रसङ्गवारणार्थमिष्टसाधनत्वं तत्र विषयतयाव-च्छेदकमात्रं कल्प्यते न तु कारणान्तरं गौरवात् यथा इष्टपुरोवर्त्तिज्ञाने वैशिष्ट्यमेवावच्छेदकं कल्प्यते न तु भेदाग्रहहेतुत्वादिकमिति भावः। स्व-रूपसदिष्टत्ववादी पृच्छति, 'नन्विति, तथाच तत्रेष्टत्वाभावात् प्रवृत्त्यभाव-इति तदेव हेतुरिति भावः। उत्तरं 'ओदनेति, तथाचेष्टसाधनत्वज्ञानाभा-वादेव तत्र तदभावादिति भावः। 'असिद्धत्वादिति, राज्ये न प्रवर्त्तत इति

भाविराज्यस्यासिद्धत्वात् प्रवृत्तेः सिद्धविषयत्वनियमात्

---

पारी नान्यथासिद्ध इति वाच्यं। तद्व्यापारत्वस्यैवासिद्धेः। न चैवं कृतिसाध्यताज्ञानस्य उपादाननिष्ठचिकीर्षाविषयसाधनताज्ञानस्य च प्रवृत्तिहेतुत्वे मानाभाव इति वाच्यं। इष्टापत्तेः ज्ञानं कृतिकारण-मिति सिद्धान्तस्य उपादानप्रत्यक्षमादायैवोपपत्तेः। इदं पुनरवधेयं यदि भोगादिरूपेष्टसाधनताज्ञानदशायां सुखादौ साध्यतया प्रवृत्तिः प्रामाणिकी तदा पुनरिष्टसाधनताज्ञानस्य प्रवृत्तिहेतुत्वमावश्यकं अन्यथा इष्टसाधनत्वाज्ञानदशायामपि[१] साध्यतया तत्र प्रवृत्तिप्रस-ङ्गात् तस्य स्वतएव चिकीर्षाविषयत्वात् कृतिसाध्यताज्ञानन्तु न हेतुरेव चिकीर्षयान्यथासिद्धत्वादिति। 'कुत इति, ओदनसाधनत्व-ज्ञानस्य कृतिसाध्यताज्ञानस्य च सत्त्वादिति भावः। परिहरति, 'ओदनमात्रस्येति, 'इष्टत्वाभावादिति, इष्टसाधनताज्ञानविरहादिति शेषः। 'इच्छाविरहादिति इच्छाविरहेण इष्टसाधनताज्ञानविरहा-दित्यर्थः, तथाच फलेच्छाभावेन चिकीर्षाविरहान्न प्रवृत्तिरिति भावः। 'भावियौवराज्य इति भाविराजसिंहासनारोहणविशेषे इत्यर्थः, 'न प्रवर्त्तते' न बाल्ये प्रवर्त्तते। भ्रान्तः समाधत्ते, 'भा-विराज्यस्येति, 'राज्योपायेति राज्योपायत्वेन राज्योपायापरिचया-देत्यर्थः, न प्रवृत्तिरिति शेषः। ननु तथापि राज्योपाये देवता-राधनादौ प्रवृत्तिः स्यात् तदुपायस्य पुण्यादेर्ज्ञानसत्त्वात् कृतिसाध्यत्वे

---

(१) इष्टासाधनताज्ञानदशायामपीति क०।

राज्योपायापरिचयाच्च। तत्परिचये च प्रवर्त्तत एव देवताराधनादाविति चेत्, न, सिद्धे चिकीर्षाविरहेण यागादावप्यप्रवृत्तिप्रसङ्गात् देवताराधनादेरप्यसिद्धत्वेन तत्राप्यप्रवृत्तिप्रसङ्गाच्च। किञ्च राज्योपायापरिचये तत्र मा प्रवर्त्तिष्ट स्वकृतिसाध्येष्टसाधनत्वेन ज्ञाते राज्ये प्रवृत्तिप्रसङ्गे किमायातं। न हि कृतिसाध्येष्टसाधनत्वेन ज्ञानेऽपि तदुपायज्ञानं तत्र प्रवर्त्तकं, गौरवात् भिन्नविषयत्वाच्चेति चेत्, मैवं, यौवने हि तावत्

---

कृतीष्टसाधनताज्ञानसत्त्वाच्चेत्यत आह, 'तत्परिचये चेति कृतिसाध्यत्वेष्टसाधनत्वोपायानां परिचये चेत्यर्थः। भ्रमं निराकरोति, 'सिद्धे चिकीर्षाविरहेणेति, असिद्धस्य च प्रवृत्त्यविषयत्वनियमेनेति शेषः। तव प्रवृत्तेः सिद्धविषयत्वनियमेऽपि चिकीर्षाया असिद्धविषयत्वनियमस्य त्वयाप्यभ्युपगमादिति भावः। 'देवताराधनादेरिति, तस्मादुपादानताख्यप्रवृत्तिविषयत्वस्यैव सिद्धवृत्तित्वनियमो न तु साध्यताख्यप्रवृत्तिविषयतायाः तस्या अप्रसिद्धमात्रवृत्तित्वात् इत्यवश्यं स्वीकरणीयमिति भावियौवराज्ये साध्यतया प्रवृत्तिर्नानुपपन्नेति भावः। द्वितीयहेतुं[१] निराकरोति, 'किञ्चेति, 'तत्र मा प्रवर्त्तिष्टेति राज्योपायत्वेन राज्योपाये मा प्रवर्त्तिष्टेत्यर्थः, 'प्रवृत्तिप्रसङ्गे' साध्यतया प्रवृत्तिप्रसङ्गे, 'न हीति, इदमापाततः उपादाननिष्ठप्रवृत्तिविषयसाधनताज्ञानस्यापि प्रवृत्तिप्रयोजकतया राज्योपायत्वरूपेण

---

(१) द्वितीयभ्रमहेतुमिति क०।

प्रवर्त्तत एव राज्ये, बाल्ये तु राज्योपायमकृत्वा मत्-कृत्येदानीं राज्यं न सिध्यतीति स्वकृत्यसाध्यताज्ञाना-देव न प्रवर्त्तते यथा तण्डुलं विना पाके स्वकृत्य-साध्यताज्ञानात्, राज्योपाये तु स्वकृतिसाध्येष्टसाधन-त्वेन ज्ञाते देवताराधनादौ प्रवर्त्तत एव। अतएव

---

राज्योपायज्ञानं विना राज्ये प्रवृत्त्यसम्भवात् परन्तु राज्योपायत्वेन राज्योपायस्य सिंहासनादेः प्रत्यक्षदशायामेव भाविराज्ये प्रवृत्त्या-पत्तिर्द्रष्टव्या। 'मत्कृत्येदानीमिति इदानीन्तनमत्कृत्येत्यन्वयः, 'स्वकृत्य-साध्यताज्ञानादिति इदानीन्तनस्वकृत्यसाध्यताज्ञानादित्यर्थः, तथाच तत्कालीन-तत्पुरुषीयप्रवृत्तिं प्रति तत्कालीन-तत्पुरुषीयप्रवृत्ति-साध्यताज्ञानं हेतुरिति भावः। 'तण्डुलं विना' तण्डुलविरहदशायां, 'स्वकृत्यसाध्यताज्ञानात्' इदानीन्तनस्वकृत्यसाध्यताज्ञानात्, 'पाक' इति, 'न प्रवर्त्तते' इत्यनुषज्यते। ननु तथापि राज्योपाये देवता-राधनादौ तदानीं प्रवृत्तिर्न स्यात् इत्यत आह, 'राज्योपाये त्विति, 'स्वकृतीति इदानीन्तनस्वकृतीत्यर्थः। ननु व्रीह्यवघात-पुरोडाश-याग-परमापूर्व्वेषु युगपत् कुतो न प्रवर्त्तते स्वकृतिसाध्यत्वे सतीष्टसाधनताज्ञानस्याविशेषादित्यत आह, 'अतएवेति इदानीन्त-

---

शेषः। 'अपरिचयाच्च', राज्योपाये न प्रवर्त्तत इति शेषः। 'सिद्ध इति, तथाच अनन्यगत्या असिद्ध एव प्रवृत्तिरभ्युपेया एवञ्च राज्ये प्रवर्त्ततैवेत्यर्थः, 'इदानीमिति इदानीं मत्कृतिसाध्यत्वज्ञानस्य प्रवर्त्तकस्याभावाच्च तदा

व्रीह्यवघातमकृत्वा पुरोडाशस्तमकृत्वा यागस्तमकृत्वा-ऽपूर्व्वं साधयितुं न शक्यत इति क्रमशोऽवघातादौ प्रवर्त्तते न युगपत् सिद्धवृत्त्यसिद्धक्रियाविषयस्वभावत्वात् प्रवृत्तेः यागानन्तरञ्च नापूर्व्वे प्रवर्त्तते। कृत्यन्तरं विनैव यागकृतितस्तत्सम्भवात्। इष्टसाधने चेष्टो-

---

नत्वस्य स्वकृतिविशेषणत्वादेवेत्यर्थः, 'व्रीह्यवघातमकृत्वा मत्कृत्येति व्रीह्यवघातकृत्यनुत्तरकालीनमत्कृत्येत्यर्थः, एवं 'मत्कृत्येत्यनुषज्य सर्व्वत्र व्याख्येयं, 'न शक्यत इतीति, ज्ञानादिति[१] शेषः। तथाच सर्व्वत्र एकदा इदानीन्तनस्वकृतिसाध्यताज्ञानं नास्तीति भावः। 'क्रमशः' क्रमश एव, 'अवघातादौ' अवघात-पुरोडाश-यागेषु, 'न युगपदिति न युगपदवघात-पुरोडाश-याग-परमापूर्व्वेषु चतुर्षु प्रवर्त्तत इत्यर्थः। ननु यथा क्रमशस्त्रिषु प्रवर्त्तते तथा परमापूर्व्वे कथं न प्रवर्त्तते इत्यत आह, 'सिद्धवृत्तीति, 'नापूर्व्वे प्रवर्त्तत इत्यन्तमेको ग्रन्थः, सिद्धकारणकासिद्धक्रियासाध्यकस्वभावत्वादित्यर्थः, साध्यत्वं विषयताविशेषः, तेन सिद्धस्य हविरादेरुपादानताख्यप्रवृत्तिविषयताशा-

---

(१) केवलमत्कृतिसाध्यताज्ञानादितीति ख०।

---

प्रवृत्तिरित्यर्थः, तर्हि राज्योपायमेव करोत्वित्यत आह, 'राज्येति, अन्यदा कृतिसाध्यत्वादिना न जानात्येवेति न प्रवर्त्तते अन्यथा तवाप्रतीकारादिति भावः। 'सिद्धेति तथाच यागाद्यर्थितया पुरोडाशादौ प्रवृत्तिस्तत्सिद्ध्यनन्तरमेवेत्यर्थः। नन्वेवमपि सञ्जातबाधोऽपि सविषान्नभक्षणे प्रवर्त्तेत तस्यापि तृप्तिरूपेष्टसाधनत्वात् कृतिसाध्यत्वाच्चेत्यत आह, 'इष्टसाधने चेति।

त्वेऽपि न दोषः, उपादानप्रत्यक्षसम्पत्तये सिद्धकारणकेति, 'नापूर्व्वे प्रवर्त्तते इति, तस्य क्रियात्वाभावादपूर्व्वादिभिन्नत्वस्य तत्त्वादिति भावः। ननु यागानन्तरमपूर्व्वे प्रवृत्त्यभावे कथमपूर्व्वोत्पत्तिरित्यत आह, 'कृत्यन्तरमिति। ननु तद्धर्म्मप्रकारक-तत्पुरुषीयप्रवृत्तौ तद्धर्म्मधर्म्मितावच्छेदकक-तत्पुरुषीयप्रवृत्तिसाध्यताज्ञानमेव हेतुरस्तु किं कार्य्य-कारणभावे उभयदिशि तत्कालीनत्वेन प्रवृत्तिविशेषणेन भावियौवराज्येऽपि बाल्यदशायां कस्यचित् प्रवृत्तेः। न च तदनुपादाने यस्य बालस्य भावियौवराज्यं मम कृतिसाध्यमपि नेदानीं मत्कृतिसाध्यमिति ज्ञानं तस्यापि बाल्यदशायां भावियौवराज्ये प्रवृत्त्यापत्तिरिति वाच्यं। तत्पुरुषीयराज्यत्वप्रकारकप्रवृत्तेः यौवनादिकालीनातिरिक्ताया अलीकतया तत्तत्कालीनप्रवृत्तित्वावच्छिन्नं प्रति कारणीभूतस्य तत्तत्कालस्य विरहादेव बाल्यदशायां तत्पुरुषीयराज्यत्वप्रकारकप्रवृत्त्यापादनासम्भवात् तत्कालीनत्वेन प्रवृत्तिविशेषणेऽपि वक्ष्यमाणयुक्त्या तत्तत्कालीनप्रवृत्तित्वावच्छिन्नं प्रति

---

न च केवलसुखजनके प्रतियोग्यप्रसिद्ध्या तदधिकदुःखाजनकत्वमप्रसिद्धमिति वाच्यं। नञ्व्यत्यासेन इष्टोत्पत्त्यनान्तरीयकदुःखाजनकत्वस्य विवक्षितत्वात्। वस्तुतस्तु इष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखजनकं प्रसिद्धं तदन्यत्वं विवक्षितमिति नोक्तदोषः। नचाजनकत्वं जनकत्वात्यन्ताभाव-जनकान्योन्याभावरूपतयाऽभिन्नं तथा च मिलितज्ञानहेतुतायां गौरवमननुभवश्च प्रत्येकज्ञानेऽपि फलसिद्धेश्च प्रत्येकहेतुतायामननुगम इति वाच्यं। प्रत्येकहेतुत्वेऽपि तादृशदुःखजनकत्वज्ञानविरोधिज्ञानत्वेनानुगमादित्याशयः। ननु नान्तरीयकत्वमिष्टहेतुक्रियाजन्यत्वं, व्याप्यत्वं वा, तदपि दैशिकं, कालिकं वा, इष्टनियत-

तत्तत्कालत्वेन हेतुत्वावश्यकत्वात्। न च कृतिसाध्यताज्ञान-प्रवृत्त्योर्न विशेष्यतावच्छेदकमन्तर्भाव्य समवायघटितसामानाधिकरण्यप्रत्यासत्त्या हेतु-हेतुमद्भावः किन्तु तत्पुरुषीयकृतिसाध्यताप्रकारक-तत्पुरुषीयज्ञानत्वेन कारणता तत्पुरुषीयप्रवृत्तित्वेन कार्य्यता यत्र साध्यत्वाख्यविशेष्यतानिरूपितप्रकारतासम्बन्धेन तत्पुरुषीयप्रवृत्तिः तत्र विशेष्यतावच्छेदकत्वसम्बन्धेन तादृशज्ञानमिति प्रकारता-विशेष्यतावच्छेदकत्वोभयघटितसामानाधिकरण्यं प्रत्यासत्तिरेवमिष्टसाधनताज्ञान-प्रवृत्त्योरपि विशेष्यतावच्छेदकमन्तर्भाव्य समवायघटितसामानाधिकरण्यप्रत्यासत्त्या न हेतु-हेतुमद्भावः किन्तु तत्साधनत्वप्रकारकतत्पुरुषीयज्ञानत्वेन कारणता तत्पुरुषीयतदर्थप्रवृत्तित्वेन कार्य्यता यत्र तदर्थिताप्रतियोगिकसाध्यतानिरूपितप्रकारतासम्बन्धेन तदर्थिप्रवृत्तिः तत्र विशेष्यतावच्छेदकतासम्बन्धेन तत्साधनत्वप्रकारकतत्पुरुषीयज्ञानमिति तदर्थिताप्रतियोगिकसाध्यतानिरूपितप्रकारता विशेष्यतावच्छेदकतोभयघटितसामानाधिकरण्यं प्रत्यासत्तिः

---

पूर्व्वकालीनत्वं वा, नाद्यः अगम्यागमनादावपि प्रवृत्त्यापत्तेः नरकस्येष्टहेतुक्रियाजन्यत्वेन तदधिकत्वाभावात्, न द्वितीयः तत एव तन्नरकस्य तदिष्टोत्पत्तिनियतत्वात् तयोरेकात्मवृत्तित्वात्, न तृतीयः इष्टोत्पत्तिपूर्वकालीनश्रमजनके पाकादावप्रवृत्तिप्रसङ्गात्, नापि चतुर्थः उत्कटानिष्टपूर्वकं किञ्चिदिष्टजनकत्वेन ज्ञायमानेऽपि प्रवृत्त्यापत्तेः। अत्र वदन्ति इदानीन्तनबलवद्द्वेषविषयदुःखाजनकत्वे अस्य तात्पर्य्यं, द्वेषे च बलवत्त्वं उत्कटत्वं जातिविशेषः, अत एव रागान्धस्य यदा नरकादौ न तादृशो द्वेषः तदा तद्धेतावपि प्रवृत्तिरन्यदा निवृत्तिः। न च द्वेषे बलवत्त्वमधिकं, दुःखमात्रस्यैव द्वेषविषयत्वेन पाकादाव-

*तथाच तत्कालीनत्वेन कृत्यविशेषणे पाको मदीयेदानीन्तनकृति-*साध्य इष्टसाधनञ्च राज्यं मदीयकृतिसाध्यमिष्टसाधनञ्च भवति न त्विदानीन्तनमत्कृतिसाध्यमिति समूहालम्बनज्ञानदशायां पाकत्व-इव राज्यत्वेऽपि प्रकारतासम्बन्धेन तत्पुरुषीयप्रवृत्त्यापत्तिः पाकत्व-प्रकारकप्रवृत्त्यनुरोधेनैव तत्कालस्यापेतत्पुरुषीयप्रवृत्तौ हेतुत्वा-दिति वाच्यं। प्रकारता-विशेष्यतावच्छेदकतोभयघटितसामाना-धिकरण्यप्रत्यासत्त्या कृतिसाध्यत्वेष्टसाधनताज्ञानयोः प्रवृत्तिहेतुत्वे मानाभावात् उक्तापत्तेरेव बाधकत्वाच्च उक्तापत्तिवारणान्यथानु-पपत्त्या विशेष्यतावच्छेदकमन्तर्भाव्य समवायघटितसामानाधिक-रण्यप्रत्यासत्त्यैव तयोः प्रवृत्तिहेतुताया युक्तत्वात्। न च समवा-यघटितसामानाधिकरण्यप्रत्यासत्त्या स्वकृतिसाध्यत्वेष्टसाधनत्वज्ञानयोः कार्य्य-कारणभावे प्रवृत्तिप्रकारीभूतधर्म्मभेदेनानन्तकार्य्य-कारणभा-वापत्त्या तदपेक्ष्य प्रकारता-विशेष्यतावच्छेदकत्वोभयघटितसामाना-धिकरण्यप्रत्यासत्त्या तयोः प्रवृत्तिकारणत्वकल्पनमेव लघ्विति वाच्यं। तादृशप्रत्यासत्त्या तयोः कारणत्वे उक्तापत्तिवारणाय तत्कालीन-त्वस्य कृतिविशेषणत्वावश्यकत्वे विभिन्नकालीनप्रवृत्तिव्यक्तिभेदेना-नन्तकार्य्य-कारणभावापत्त्या तदपेक्ष्य प्रवृत्तिप्रकारभेदेन समवा-

प्रवृत्तिप्रसङ्गात् योगिनामपि सुख-दुःखयोराग-द्वेषसम्भवात् अन्यथा प्रवृत्ति-निवृत्त्योरसम्भवापत्तेः। न चाशक्त इत्यादिविरोधः, अस्मदादिसाधारणोत्कट-राग-द्वेषविरहपरत्वादिति। अत्रेदं चिन्त्यं एवं हि न कलञ्जं भक्षयेदित्यत्र विशिष्टनिषेधस्य विशेषणनिषेधपर्य्यवसायितया कलञ्जभक्षणमुतकटद्वेष-विषयदुःखसाधनमित्यन्वयबोधः स्यात् तथाच यस्य रागान्धस्य तद्दुःखे

यघटितसामानाधिकरण्यप्रत्यासत्त्या तयोः प्रवृत्तिहेतुत्वस्यैव लघुत्वादिति। नैवं। यथा हि स्मृतिस्थले गुरुणापि प्रकारान्तरेण योऽतिप्रसङ्गो वारयितुं शक्यः स न उद्बोधककारणतया वार्य्यते इति नियमः तथा गुरुणापि प्रकारान्तरेण यदतिप्रसङ्गो वारयितुं शक्यः स तत्तत्कालादिकारणत्वेनावश्यकेनापि न निवार्य्यते इति नियमः। अन्यथा स्वकृतिसाध्यतेष्टसाधनत्वज्ञानादेरपि हेतुत्वविलोपापत्तेः कृतिसाध्यतेष्टसाधनत्वादिबाधज्ञानदशायां प्रवृत्त्यापादनस्य उक्तरीत्या कालकारणतयैव वारणसम्भवात् कृतिसाध्यताज्ञानादेरहेतुत्वे प्रकारतासम्बन्धस्य कार्य्यतानवच्छेदकतया प्रकारतासम्बन्धेनाप्यापादानासम्भवात् प्रकारतासम्बन्धेनोत्पत्तिनियमस्यापि कालकारणतयैव निर्व्वाहसम्भवात् तस्मात् सामान्यतः स्वकृतिसाध्यताज्ञानसत्त्वेऽपि तत्कालीनस्वकृतिसाध्यताज्ञानासत्त्वेन[१] तत्काले प्रवृत्त्यभावात्[२] तत्कालीन-तत्पुरुषीयप्रवृत्तिं प्रति तत्कालीन-तत्पुरुषीयकृतिसाध्यत्वस्य तादृूप्येण ज्ञानं कारणमावश्यकं कार्य्य-कारणभावस्तु तत्कालीन-तत्पुरुषीयप्रवृत्तित्वेन तत्कालीनतत्-

(१) तत्कालीनस्वकृत्यसाध्यताज्ञानसत्त्वेनेति क०।

(२) प्रवृत्त्यसम्भवादिति ख०।

नोत्कटद्वेषस्तं प्रति तद्वेदस्याप्रामाण्यं स्यात् विषयबाधात् एवञ्च स एव वेदः कञ्चित् प्रति प्रमाणं कञ्चित्प्रति अप्रमाणमिति महद्वैशसं, एवञ्च यजेतेत्यादेरपि तथात्वं स्यात्। यदि च तदनन्तर्भावः तदापि यत्किञ्चिद्द्वेषविषयत्वं सकलद्वेषविषयत्वं वा, आद्ये यजेतेत्यादौ बाधापत्तिः बहुवित्तव्ययायाससाध्ययागजन्यदुःखेऽपि कस्यचित्पापशङ्कादेरुत्कटद्वेषसम्भवात्। अन्त्ये न कलञ्जं

पुरुषीयप्रवृत्तिसाध्यताप्रकारक-तत्पुरुषीयज्ञानत्वेन यत्र साध्यत्वाख्यविशेष्यतानिरूपितप्रकारतासम्बन्धेन तादृशप्रवृत्तिस्तत्र विशेष्यतावच्छेदकतासम्बन्धेन तादृशज्ञानमिति सामानाधिकरण्यं प्रत्यासत्तिः, तत्कालीन-तत्पुरुषीयप्रवृत्तिसाध्यताप्रकारकपुरुषान्तरीयज्ञानादपि निरुक्तप्रकारतासम्बन्धेन तत्कालीन-तत्पुरुषीयप्रवृत्त्यापत्तिवारणाय तत्पुरुषीयत्वं ज्ञानस्यापि विशेषणं, तत्तत्कालीनप्रवृत्तित्वावच्छिन्नं प्रति तत्तत्कालत्वेनापि पृथक्कारणत्वं तेन वर्त्तमानकाले भावि-भूतकालीनकृतिसाध्यताप्रकारकज्ञानात् न वर्त्तमानकाले भावि-भूतकालीनप्रवृत्त्यापत्तिः। न च तद्वारणाय तत्पुरुषीयत्ववत् तत्कालीनत्वेनापि ज्ञानं विशेष्यतां किं तत्कालस्य पृथक्कारणत्वेनेति वाच्यं। प्रतिपुरुषं कृतिसाध्यताज्ञानानां कार्य्यकारणभावेषु ज्ञानविशेषणतया तत्प्रवेशमपेक्ष्य सर्वपुरुषीयतत्कालीनप्रवृत्तिसाधारणातिरिक्तैककार्य्य-कारणभावकल्पनाया एव लघुत्वात्। न च तथापि तत्कालीनकृतिसाध्यताज्ञानाभावदशायां भाविराज्ये ततत्कालीनप्रवृत्तिर्मास्तु इष्टसाधनताज्ञानरूपसामान्यकार्य्य-कारणभावमर्य्यादया प्रवृत्तिसामान्यापत्तिर्दुर्व्वारैवेति वाच्यं।

---

भक्षयेदित्यादेरप्रामाण्यापत्तिः, यच्चोक्तमुत्कटत्वं जातिविशेष इति तदपि चिन्त्यं, उत्कटानुत्कटनानादुःखविषयकसमूहालम्बनाद्यत्र तदुभयगोचरो-द्वेषः एकांशे उत्कटोऽपरांशेऽनुतकटस्तत्र कथं तज्जातिरव्याप्यवृत्तित्वात्। न च तत्र द्वेषद्वयं, ज्ञानादेरपि समूहालम्बनत्वोच्छेदापत्तेः सामग्रीयौगपद्यात् क्रमविनिगमकाभावाच्च। यदि तत्र तथा तदा तत्रापि तुल्यं, यदि च तत्र तस्योपाधित्वं तदाननुगमः तद्वदेवान्यत्रापि तस्योपाधितापत्तिश्च।

तत्कालीन-तत्पुरुषीयप्रवृत्त्यतिरिक्तस्य प्रवृत्तिसामान्यस्यालीकतया यावद्विशेषसामग्रीबाधेनैव सामान्यबाधात्(१)। न च एकस्मिन् काले एकस्य पुरुषस्य नानाप्रवृत्तिविरहात् तत्तद्व्यक्तिविश्रान्त एवायं कार्य्य-कारणभावः तथाचानेन कथं सामान्यकार्य्यापत्तिवारणं तत्तद्व्यक्तिविश्रान्तकार्य्य-कारणभावेनापि सामान्यकार्य्यातिप्रसङ्गवारणाभ्युपगमे तत्तत्प्रवृत्तिव्यक्तित्वावच्छिन्नं प्रति तत्तज्ज्ञानव्यक्तित्वेनैव हेतुतास्तु लाघवात् किं तत्तद्व्यक्तिविश्रान्तगुरुतरधर्म्मस्यावच्छेदकत्वानुसरणेनेति वाच्यं। एतदनुरोधेनैव सर्वत्र धारावाहिकप्रवृत्तिद्वयाभ्युपगमात् प्रवृत्तिविशेषणीभूततत्तत्कालपदञ्च चणद्वयसाधारणतत्तत्कालपरं तथाच प्रवृत्तिद्वयसाधारण एवायं कार्य्य-कारणभावः। नचोपादानप्रत्यचस्य साचात् प्रवृत्तिहेतुतया कथं सर्व्वत्र धारावाहिकप्रवृत्तिद्वयोत्पत्तिः प्राथमिकप्रवृत्त्युत्पत्तिकाल एव उपादानप्रत्यचेच्छयोरन्यतरस्य विनाशादिति वाच्यं। उपादानप्रत्यचस्याप्युपादानेच्छाद्वारैव हेतुत्वाभ्युपगमात् साचात्साधनत्वप्रवादस्तु लौकिकविषयत्वावच्छिन्नकारणत्वनिबन्धनः।

---

(१) प्रवृत्तिसामान्यबाधादिति क०, प्रवृत्तिसामान्यवारणादिति ग०।

---

अतएवोत्कटकोटिके संशयेऽपि तन्न जातिरित्युक्तं, अस्तु वा उत्कटत्वं जातिस्तथापि शब्दवद्देवदत्तादिकारणविशेषप्रयोज्यं द्वेषे वैजात्यमावश्यकमिति तत्शङ्करापत्त्या द्वेषनिष्ठमुत्कटत्वं जातिस्तथापि शब्दवद्देवदत्तादिकारणविशेषप्रयोज्यं द्वेषे वैजात्यमावश्यकमिति तत्शङ्करापत्त्या द्वेषनिष्ठमुत्कटत्वं अनेकं वाच्यं। तथाच तदननुगमेन ज्ञानाननुगमात् प्रवृत्त्यननुगमः लिङ्गादिपदशक्ति-

यत्तु तत्तत्कालीन-तत्तत्पुरुषीयतत्तद्धर्मावच्छिन्नसाध्यकप्रवृत्तित्वावच्छिन्नं प्रति तत्तद्धर्मावच्छिन्नविशेष्यक-तत्तत्कालीन-तत्तत्पुरुषीयकृतिसाध्यताप्रकारकज्ञानत्वेन कार्य्य-कारणभावः समवायघटितसामानाधिकरण्यं प्रत्यासत्तिः बाल्यकालीनराज्यत्वावच्छिन्नसाध्यकतत्पुरुषीयप्रवृत्तेरलीकतया तत्कालान्तर्भावेन तदवच्छिन्नसाध्यकतत्पुरुषीयप्रवृत्तिं प्रति तत्पुरुषीयकृतिसाध्यताज्ञानस्य कार्य्यकारणभावाकल्पनेन यावद्विशेषसामग्रीबाधेनैव तदानीमिष्टसाधनताज्ञानादिरूपसामान्यसामग्रीसत्त्वेऽपि न तदवच्छिन्नसाध्यकतत्पुरुषीयप्रवृत्त्यापत्तिः तत्तत्कालीनप्रवृत्तित्वावच्छिन्नं प्रति तत्तत्कालत्वेन पृथक्हेतुत्वादेव बाल्यदशायां राज्यत्वधर्म्मितावच्छेदकयौवनकालीनस्वप्रवृत्तिसाध्यत्वप्रकारकज्ञानसत्त्वेऽपि न राज्यत्वावच्छिन्नसाध्यकयौवनकालीनप्रवृत्त्यापत्तिः। न चैवं तत्तत्काल-तत्तत्पुरुष-तत्तत्प्रकारमन्तर्भाव्य कृतिसाध्यताज्ञानस्य हेतुत्वकल्पनायां किं फलमिति वाच्यं । तत्तद्धर्म्मितावच्छेदककस्वकृतिसाध्यत्वप्रकारकज्ञानसामान्यविरहदशायां तादृशज्ञानसत्त्वेऽपि प्रकृतकालमन्तर्भाव्य(१) तद्धर्म्मितावच्छेदकक-स्वकृतिसाध्यत्वबाधनिश्चयदशायां वा इष्टसाध-

(१) राज्यत्वावच्छिन्नसाध्यकयौवनकालीनप्रवृत्तिकालमन्तर्भाव्येति ग० ।

ग्रहानुपपत्तिश्च। किं वा जनकत्वस्यान्योन्यात्यन्ताभावगर्भतयाननुगमेन शक्तिग्रहानुपपत्तिः । न च जनकत्वे विरोधित्वमनुगतमिति वाच्यं । तत्प्रकारकज्ञानस्याप्रवर्त्तकत्वेन तत्र शक्तिग्रहकल्पनानर्हत्वात्, अपिच सविषान्नभोजनजन्यसुखेच्छाविरहेणेष्टसाधनत्वाभावादेवातिप्रसङ्गवारणे किमुक्तविशेषणेन ।

नताज्ञानादिरूपसामान्यसामग्रीमर्य्यादया तत्प्रकारक-तत्पुरुषीय-प्रवृत्तिसामान्यापत्तिवारणस्यैव तत्फलत्वात् इष्टसाधनताज्ञानादेरपि समवायघटितसामानाधिकरण्यप्रत्यासत्त्यैव हेतुत्वात् तदापत्तेरप्युक्त-रीत्या तत्तत्कालकारणतया वारणसम्भवेऽपि कालादिकारणतया कारणान्तरस्य नान्यथासिद्धिरिति नियमात्, एवं तत्तत्पुरुषीय-प्रवृत्तित्वावच्छिन्नं प्रति तत्तत्पुरुषत्वेनापि पृथक्कारणत्वमुपेयं तेन न तत्पुरुषीयकृतिसाध्यताप्रकारकज्ञानवति पुरुषान्तरे सम-वायसम्बन्धेन तत्पुरुषीयप्रवृत्त्यापत्तिः। न च तादृशकृतिसाध्यता-प्रकारकतत्तत्पुरुषीयज्ञानत्वेनैव हेतुत्वमुपेयतां किं तत्तत्पुरुषाणां पृथक्कारणत्वेनेति वाच्यं। प्रतिकालं तत्तत्पुरुषीयकृतिसाध्यता-ज्ञानानां कार्य्य-कारणभावेषु ज्ञानविशेषणतया तत्तत्पुरुषप्रवेशम-पेक्ष्य सर्व्वकालीनतत्पुरुषीयप्रवृत्तिसाधारणातिरिक्तैकतत्पुरुषका-रणताकल्पनाया एव लघुत्वात्। वस्तुतस्तु तत्तत्पुरुषीयप्रवृत्तित्वाव-च्छिन्नं प्रति तत्तत्पुरुषत्वेनापि न पृथक्हेतुत्वं कल्पनीयं संयोगो-त्तरदेशयोः कार्य्य-कारणभावस्थले सामान्यतस्तत्तद्व्यक्तिसमवेतत्वाव-च्छिन्नं प्रति तत्तद्व्यक्तित्वेन समवायिकारणत्वस्य क्लृप्तत्वादेव पुरुषा-

---

ननु यदि विषभक्षणजन्यदुःखासम्भिन्नसुखत्वेन तत्रेच्छा तदा तस्य स्वतः पुरुषार्थत्वं भज्येत इच्छोत्पत्तौ दुःखासम्भेदापेक्षणादिति चेत्, अस्तु ताव-देवं, तथाप्युत्कटेच्छाविषयसाधनताज्ञानं प्रवर्त्तकमस्तु तदभावादेव तत्राति-प्रसङ्गनिरासे किमुक्तविशेषणेन तज्जन्यदुःखे द्वेषौत्कट्येन रागौत्कट्या-भावात्। यदि कलञ्जभक्षणसुखे कस्यचिद्रागौत्कट्यसम्भवेन निषेधानुपपत्त्या तन्न विध्यर्थस्तदा तवापि तुल्यं। एतेनासद्विषयताविषयदुःखाजनकत्वं तद्विव-

न्तरे तत्पुरुषीयप्रवृत्तेर्व्वारणासम्भवात्(१)। न चैवंरूपेण कृतिसाध्यता-ज्ञानस्य कार्य्य-कारणभावे किमिष्टसाधनताज्ञानस्य प्रवृत्तिहेतुत्वेन इष्टसाधनताज्ञानविरहकालमन्तर्भाव्य तत्तत्प्रकारक-तत्तत्पुरुषीय-प्रवृत्तिं प्रति तद्धर्म्मितावच्छेदकक-तत्पुरुषीयकृतिसाध्यताज्ञानस्य हेतुत्वाकल्पनादेव इष्टसाधनताज्ञानविरहदशायां तत्प्रकारकतत्पुरु-षीयप्रवृत्त्यापादनासम्भवादिति वाच्यं। इष्टसाधनताज्ञानविरहदशायां यागोमे भवतु इतीच्छावारणाय लाघवादुपायेच्छासामान्यं प्रतीष्ट-साधनताज्ञानस्य हेतुत्वे आवश्यके प्रवृत्तिं प्रत्यपि तद्धेतुत्वावश्य-कत्वात् व्यापारेण व्यापारिणोऽन्यथासिद्धिविरहादन्यथा प्रागुक्तम-तेऽपीष्टसाधनताज्ञानस्य प्रवृत्त्यहेतुतापत्तेरिच्छाया अन्यथासिद्धत्वा-दिति । तन्न । एकस्यामेव समूहालम्बनप्रवृत्तिव्यक्तौ प्रकारभेदेन बहुतरकार्य्य-कारणभावापत्तेः तत्तद्धर्म्मप्रकारकत्वस्य कार्य्यतावच्छे-दककोटिप्रवेशे गौरवापत्तेश्चेति सिद्धान्तानुयायिनः । तच्चिन्त्यं, एकस्मिन्नेव काले समनियतानन्तकालोपाधिसत्त्वादिनिगमनाविर-

(१) वस्तुतस्तु तत्तत्पुरुषीयप्रवृत्तित्वावच्छिन्नं प्रति तत्तत्पुरुषीयकृतिसा-ध्यत्वप्रकारकतत्तत्पुरुषीयज्ञानत्वेन हेतुत्वं वाच्यं तेन पुरुषान्तरीयकृ-तिसाध्यताज्ञानवति पुरुषे प्रवृत्तिवारणासम्भवादिति ग० ।

च्छितमिति परास्तं । उक्तरीत्या निषेधाद्यनुपपत्तेः द्वेषातिरिक्ताया असद्धि-ष्णुताया निर्व्वक्तुमशक्यत्वाच्चेति । वयन्तु ब्रूमः । एकत्रापि विषये पुरुषभेद-समयभेदाभ्यां द्वेषेच्छयोरौत्कट्यवशादप्रवृत्ति-प्रवृत्ती इत्यनुभवसिद्धं । एव-ञ्चोत्कटद्वेषविषयदुःखजनकत्वज्ञानं प्रवृत्तिप्रतिबन्धकमिति नोक्तस्थले प्रवृ-त्त्यापत्तिः, न तु तदभावज्ञानं कारणं, तथाच तदननुगमत्वेऽप्यदोषः प्रतिबन्ध-काननुगमस्यादोषत्वात्, निवृत्तिसामग्रीत्वेन सत्प्रतिपक्षवत् साक्षादेव प्रति-

हेण प्रतिपुरुषं प्रतिकालं कालोपाधिभेदाद्गुरुतरानन्तकार्य्य-कारणभावापत्तेः[१] सर्व्वत्र धारावाहिकप्रवृत्तिद्वयकल्पने उपादानप्रत्यक्षस्येच्छासम्बन्धेन कारणत्वकल्पने च गौरवापत्तेः तत्तत्कालीनतत्तत्प्रवृत्तित्वावच्छिन्नं प्रति तत्तत्कालस्य कार्य्य-कारणभावेष्वप्युक्तरीत्या समनियतकालोपाधिभेदेनानन्तकार्य्य-कारणभावप्रसङ्गाच्च ।

स्वतन्त्रास्तु सामान्यतः स्वकृतिसाध्यत्वप्रकारकज्ञान-चिकीर्षयोरेव प्रवृत्तिहेतुत्वं न तु तत्तत्कालीनत्वेन प्रवृत्तिर्विशेषणीया । न चैवं तत्तत्कालीनप्रवृत्त्यसाध्यताज्ञानेऽपि सामान्यतः स्वकृतिसाध्यत्वप्रकारकज्ञानाद्भाविराज्यादौ प्रवृत्त्यापत्तिरिति वाच्यं । प्रकारतासम्बन्धेन तत्पुरुषीयप्रवृत्तित्वावच्छिन्नोत्पत्तिं प्रति तत्पुरुषीयचिकीर्षात्वावच्छिन्नं प्रति वा सामान्यतः स्वकृतिसाध्यत्वेष्टसाधनत्वज्ञानकालीनानां भाविराज्यत्वादिधर्म्मितावच्छेदकक-तत्तत्कालीनकृतिसाध्यत्वाभावप्रकारकज्ञानव्यक्तीनां तत्तज्ज्ञानव्यक्तित्वेन भाविराज्यत्वादिवृत्तिविशेष्यतावच्छेदकतासम्बन्धेन प्रतिबन्धकत्वात् प्रतिबन्धकाभावकूटश्च कारणं राज्यमिदानीं मत्कृतिसाध्यं पाकश्चिदानीं मत्कृतिसाध्य इति समूहालम्बनज्ञानाद्राज्यत्व इव पाकत्वेऽपि तत्तत्-

(१) प्रतिपुरुषमन्तर्भाव्यानन्तकार्य्य-कारणभावापत्तेरिति ग० ।

---

बन्धकतया जनकज्ञानाविरोधिनः कथं प्रतिबन्धकत्वमिति शङ्कापि न, साक्षादविरोधिन एव ज्ञानस्य जनकज्ञानविघटकतया प्रतिबन्धकत्वात् । अतएवासत्प्रतिपतिपक्षितत्वज्ञानमपि नानुमितौ हेतुः तथाच तस्य विध्यर्थाप्रवेशान्नोक्तदोषः, उत्कटत्वं जातिरुपाधिर्वेत्यन्यदेतत् । अस्तु वा तदभावज्ञानमपि हेतुः तदीयोत्कटद्वेषविषयदुःखाजनकत्वज्ञानस्य तदीयप्रवृत्तौ विशेष-

पुरुषीयप्रवृत्त्यभावापत्तिवारणाय वृत्त्यन्तं विशेष्यतावच्छेदकताविशेषणं तद्वारणाय तत्तत्कालीन-स्वकृतिसाध्यत्वाभावनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकत्वं वा सम्बन्धोवाच्यः । न च तादृशाभावप्रकारकतत्तज्ज्ञानव्यक्तीनां तत्तज्ज्ञानव्यक्तित्वेन भाविराज्यत्वादिप्रकारकप्रवृत्तित्वावच्छिन्नं प्रति समवायघटितसामानाधिकरण्यप्रत्यासत्त्यैव प्रतिबन्धकत्वमुपेयतामिति वाच्यं । तथासति स्वकृतिसाध्यत्वज्ञानेष्टसाधनताज्ञानयोर्विशेष्यतावच्छेदकताप्रत्यासत्त्या हेतुतया तत्तज्ज्ञानव्यक्तिसत्त्वेऽपि तन्मर्य्यादया[१] प्रकारतासम्बन्धेन तत्पुरुषीयप्रवृत्त्यापत्तेर्दुर्व्वारत्वात् । न चैवं सामान्यतः स्वकृतिसाध्यत्वेष्टसाधनताज्ञानादिविरहदशायामपि तत्तत्कालीन-तत्तज्ज्ञानव्यक्तिरेव प्रतिबन्धिकास्तु[२] किं सामान्यतः स्वप्रवृत्तिसाध्यत्वेष्टसाधनत्वज्ञानादेरपि हेतुत्वाभ्युपगमेनेति वाच्यं । सामान्यतः स्वकृतिसाध्यत्वेष्टसाधनत्वज्ञानविरहकालीनज्ञानव्यक्तीनामनन्तप्रतिबन्धकताकल्पनामपेक्ष्य तादृशज्ञानादेः सामान्यतः कारणत्वस्यैव युक्तत्वादिति प्राहुः ।

---

(१) सामान्यसामग्रीमर्य्यादयेति ग० ।

(२) सामान्यतः स्वकृतिसाध्यत्वेष्टसाधनत्वज्ञानविरहकालीनज्ञानव्यक्तीनामेव प्रवृत्तिप्रतिबन्धकताऽस्त्विति ग० ।

---

सामग्रीत्वाज्ञानानुगमः अन्यथा मदिष्टसाधनताज्ञानस्य प्रवर्त्तकत्वे तवापि अननुगमापत्तेः । न चैवं तस्यापि विध्यर्थप्रवेशे पूर्व्वदोषापत्तिरिति वाच्यं । न हि यावद्विषयत्वेन ज्ञानस्य प्रवर्त्तकत्वं तावानवश्यं विध्यर्थः तादृशस्यापीदानींकालस्य मदंशस्य वा तथात्वात् । यदि च बाधकात्तस्य तदनन्तर्भावः तदोक्तनिषेधा-

त्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वं विशेषणं,

---

ननु वर्त्तमानखकृतिसाध्यत्व-स्वमिविशेषरूपेष्टसाधनत्वयोः समूहालम्बनज्ञानस्य केवलमधुभोजन-मधुविषसम्पृक्तान्नभोजनयोरुभयत्राविशिष्टत्वेऽपि कस्यचित्पुरुषस्य मधुभोजनत्व एव प्रकारतया प्रवृत्तिर्न तु मधु-विषसम्पृक्तान्नभोजनत्वे इत्यत्र किं बीजमित्यत आह, 'इष्टसाधने चेति प्रवृत्त्युपधायकेष्टसाधनताज्ञाने चेत्यर्थः, 'इष्टोत्पत्तीति स्वजन्येष्टोत्पत्तीत्यर्थः, स्वं प्रवृत्तिविषयः, तथाच स्वजन्येष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वप्रकारकेष्टसाधनताज्ञानं कारणमित्यर्थः, 'अधिकत्वं भिन्नत्वं, मधु-विषसम्पृक्तान्नभोजने च तादृशदुःखाजनकत्वज्ञानविरहादेव न कस्यचित्प्रवृत्तिः यस्य तु तादृशदुःखाजनकत्वज्ञानमस्ति स प्रवर्त्तत एवेति। नन्वेवं स्वर्गिणां केवलसुखजनके कर्म्मणि प्रवृत्त्यनुपपत्तिः स्वजन्येष्टोत्पत्तिनान्तरीयकदुःखाप्रसिद्धा तद्भिन्नदुःखाजनकत्वज्ञानासम्भवात्। न च तत्रापि खण्डशः प्रसिद्धा भ्रमरूपतज्ज्ञानसम्भव इति वाच्यं। विशेषदर्शनेऽपि तत्र प्रवृत्त्युत्पत्तेः। न च स्वजन्येष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकं यत्तदन्यत्वमित्यर्थः, स्वपदं भेदप्रतियोगिपरं, तथाच केवलसुखजनकेऽपि कर्म्मणि नाप्रसिद्धिः[१] तादृशदुःखजनकत्वस्याग-

---

(१) स च केवलदुःखाजनकेऽपि नाप्रसिद्ध इति पा०।

---

नुपपत्त्यादिबाधकादस्यापि तथात्वं। अतएव श्येनेनाभिचरन् यजेतेत्यत्रापि विधिप्रवृत्तिरप्रत्यूहा उत्कटेच्छाविषयसाधनताज्ञानमेव वा हेतुरतो नातिप्रसङ्गः। अतएव राग-द्वेषयोरुत्कटत्वेन प्रवृत्तिरित्यग्रे विभावयिष्यति। यद्यप्ये-

म्यागमनादावेव प्रसिद्धत्वात् स्वजन्येष्टोत्पत्त्यनान्तरीयकदुःखाजनकत्वं वा तदर्थः, स्वपदं प्रकृतकर्म्मपरं, नातो भेदकूटप्रवेशे गौरवं चैत्यव-न्दनादाविष्टसाधनताभ्रमेणैव प्रवृत्त्या विशिष्टस्याप्रसिद्धत्वेऽपि इष्टे स्वजन्यत्वभ्रमादेव प्रवृत्तेः सम्भवादिति वाच्यं । तथापि नान्तरीय-कत्वं व्याप्यत्वं व्यापकत्वं वा, व्याप्तिरपि कालिकी दैशिकी वा, व्यापकत्वमपि कालिकं दैशिकं वा, आद्ये अगम्यागमनादौ नरकसा-धनताज्ञानवतोरागिणः प्रवृत्तिर्न स्यात् तज्जन्यदुःखेन समं कालि-कव्याप्त्यभावात्, द्वितीये आस्तिकस्याप्यगम्यागमने प्रवृत्तिप्रसङ्गः तज्जन्यनरकस्य दैशिकतया तज्जन्येष्टोत्पत्तिव्याप्यत्वात्, तृतीये प्रथम-पक्षोक्तदोषानिवृत्तिः, चतुर्थे द्वितीयपक्षोक्तदोषानिवृत्तिः अग-म्यागमनजन्यनरकदुःखस्य दैशिकतया तज्जन्येष्टोत्पत्तिव्यापकत्वात् । न च कृतप्रायश्चित्तादेर्नरकानुत्पत्त्या न व्यापकत्वमिति वाच्यं । तथासति प्रथमपक्षोक्तदोषानिवृत्तेः । नापि नियतपूर्व्ववर्त्तित्वं, इष्टो-त्पत्तिनियतपूर्व्ववर्त्तिबहुतरदुःखजनकसुखलेशमात्रजनके[1] दूरगम-नादावपि प्रवृत्त्यापत्तेः । किञ्च तादृशदुःखजनकत्वं न तत्स्वरूपयो-ग्यता, भोगिनां[2] भोगार्थमगम्यागमनादावप्रवृत्तिप्रसङ्गात् । न च

(१) प्रचुरतरोत्तरदुःखराशिबीजतया ज्ञायमाने सुखलवमात्रजनके इति ग०, घ० ।

(२) योगिनामिति घ० ।

---

वमपि न कलञ्जमित्यादौ निषेधान्वयानुपपत्तिरेव इष्टसाधनत्व कृतिसाध्यत्व-योर्निषेधानन्वयात् । तथापि पुरुषभेद-समयभेदाभ्यामेकत्र प्रवृत्त्योरन्यथोप-पादयितुमशक्यतयोक्तस्य प्रवर्त्तकत्वे तत्र च निषेधान्वयानुपपत्त्या नञोऽसुरा-

तत्फलोपधानं, प्राक् दुर्निरूप्यत्वादिति, मैवं, अधिकदुःखान्तपदेन बलवद्द्वेषविषयस्य विवक्षणात् तथाच बलवद्द्वेषविषयाजनकत्वज्ञानं हेतुः, अत एवाग्रिमसकलग्रन्थोऽपि साधु सङ्गच्छते। जनकत्वञ्च स्वरूपयोग्यत्वं, बलवत्त्वञ्च द्वेषनिष्ठोऽनुभवसिद्धो जातिविशेषः। नचोत्कटानुत्कटदुःखद्वयगोचरसमूहालम्बनद्वेषे बलवत्त्वस्यांशिकतया जातित्वानुपपत्तिरिति वाच्यं। बलवत्त्वस्यान्यस्य निर्वक्तुमशक्यत्वात् तच्च युगपत्क्रमेण वा उत्कटानुत्कटत्वेषद्वयोपगमात् यत्नयौगपद्यवद्द्वेषयौगपद्येऽपि क्षतिविरहात्। न च क्रमभावित्वनये पौर्व्वापर्य्ये विनिगमकाभाव इति वाच्यं। वक्ष्यमाणबलवद्द्वेषसामग्रीविरहेणानुत्कटद्वेषोत्पत्तिसमये बलवद्द्वेषोत्पत्त्यसम्भवात्। न चैवं रागान्धस्यागम्यागमनादौ प्रवृत्तिर्न स्यात् तज्जन्यनरकस्य कालान्तरे तत्पुरुषस्य तत्काले च पुरुषान्तरस्य तादृशद्वेषविषयत्वादिति वाच्यं। वस्तुगत्या तत्कालीन-तत्पुरुषीयबलवद्द्वेषविषयतावच्छेदकोयोयोधर्म्मस्तदवच्छिन्नजनकत्वाभावकूटविषयकज्ञानस्य तत्कालीन-तत्पुरुषीयचिकीर्षादौ हेतुत्वात्, कारणदिशि तत्कालपदं चिकीर्षादिपूर्वकालपरं, कार्य्यदिशि च तत्कालपदं चिकीर्षाद्युत्पत्तिकालपरं, कार्य्यकारणभावस्तु प्रागुक्तरीत्या तत्कालीन-तत्पुरुषीयप्रवृत्तिसाध्यताज्ञान-प्रवृत्त्योः कार्य्य-कारणभाववन्निर्वाच्यः। न चैकस्मिन्नेव विषये

विद्यावत् पर्य्युदासलक्षणया विरोध्यनिष्टसाधनत्वपरत्वमस्तु। न च व्युत्पत्तिविरोधः, स्वर्गकामो यजेतेत्यत्र स्वर्गकामस्य यागविषयकं कार्य्यं याग इष्टसाधनञ्चेति षष्ठ्यर्थमन्तर्भाव्यान्वयबोधेन विधिवाक्ये व्युत्पत्त्यन्तरकल्पनवन्निषेधकवाक्येऽप्यनन्यगत्या तत्कल्पनात् सुविभक्तौ लक्षणाया असम्भवात्। अस्तु वा

**न तु तज्ज्ञानाभावः कारणं, किन्तु तदेव विषयतया**

कस्यचित्पुरुषस्य बलवद्द्वेषः कस्यचिच्च न, एकस्यैव पुरुषस्य कदाचिद्बलवद्द्वेषः कदाचिच्च नेत्यत्र किं नियामकमिति वाच्यं । प्रत्यक्षं प्रति दोषविशेषस्यैव बलवद्द्वेषेतरद्वेषोपधानकालीनज्ञानादिव्यक्तीनामेव समवायघटितसामानाधिकरण्यप्रत्यासत्त्या तत्तद्विषयकबलवद्द्वेषं प्रति प्रतिबन्धकत्वकल्पनात् । न चैवं यत्र प्रवृत्तिपूर्व्वं वर्त्तमानपुरुषस्य कुत्रापि विषये बलवद्द्वेषोनास्ति तत्र तत्कालीन-तत्पुरुषीयबलवद्द्वेषविषयाजनकत्वस्याप्रसिद्ध्या तज्ज्ञानाभावेन प्रवृत्तिर्न स्यादिति वाच्यं। कालभेदेन पुरुषभेदेन च कार्य्य-कारणभावभेदाद्द्वेषाप्रसिद्धिकालीनतत्पुरुषीयप्रवृत्तौ तत्कालीन-तत्पुरुषीयबलवद्द्वेषविषयाजनकत्वज्ञानस्याहेतुत्वादिति भावः । अत्र तादृशाजनकत्वज्ञानं न हेतुः किन्तु तद्धेतोरेवेति न्यायात्तादृशद्वेषविषयतावच्छेदकोयोयोधर्म्मस्तदवच्छिन्नजनकत्वज्ञानाभावकूट एव हेतुरिति केचिदाहुस्तन्मतमुपन्यस्य दूषयति, 'न त्विति, 'तज्ज्ञानाभावः' तादृशद्वेषविषयजनकत्वज्ञानाभावकूटः, 'तदेव' तादृशद्वेषविषयाजनकत्वमेव, 'लाघवादिति कार्य्य-कारणभावैक्यलाघवादित्यर्थः । तादृशद्वेषविषयजनकत्व-तदभावयोरेवानुपस्थितिदशायामपि केवलेष्टसाधनतादिज्ञानात् प्रवृत्त्यनुत्पादस्यानुभवसिद्धतया तादृश-

---

निषेधानुपपत्त्या आप्ताभिप्राय एव विध्यर्थः । अतएव कुसुमाञ्जलौ तथैवोक्तं, प्रवर्त्तकन्तूक्तमेवेति सहृदयैराकलनीयं, एवञ्च प्रकृतग्रन्थसङ्गतिश्चिन्त्येति दिक् ।

कारणतावच्छेदकं लाघवात्* तेन मधु-विषसम्पृक्तान्न-

द्वेषविषयजनकत्वाभावज्ञानस्य[१] कारणतावश्यकतया तादृशद्वेषविषयजनकत्वज्ञानाभावस्यापि कारणत्वे कार्य्य-कारणभावद्वयापत्तेरिति भावः।

केचित्तु 'कारणतावच्छेदकमिति इष्टसाधनताज्ञाननिष्ठकारणतायामवच्छेदकमित्यर्थः, तथाच तादृशद्वेषविषयाजनकत्वविषयकेष्टसाधनताज्ञानत्वेन हेतुत्वं तादृशद्वेषविषयाजनकत्वनिरूपितविशेष्यतावच्छेदकत्वं इष्टसाधनतानिरूपितविशेष्यतावच्छेदकत्वञ्च द्वयमेव एकत्र द्वयमिति न्यायेन कारणतावच्छेदकसम्बन्धः कार्य्यतावच्छेदकसम्बन्धस्य प्रकारत्वमेवेति भावः। 'लाघवादिति कार्य्य-कारणभावैक्यलाघवादित्यर्थः, तादृशद्वेषविषयजनकत्वज्ञानाभावस्य हेतुत्वे इष्टसाधनताज्ञानस्य पृथक्कारणतया कार्य्य-कारणभावद्वयापत्तेः। न च तवापि तादृशद्वेषविषयाजनकत्वेष्टसाधनत्वयोर्विशेष्य-विशेषणभावे विनिगमकाभावेन गुरुतरकार्य्य-कारणभावद्वयं दुर्वारमिति वाच्यं। एकत्र द्वयमिति न्यायेन परस्पराविशिष्टानामेव तादृशद्वेषविषयाजनकत्वेष्टसाधनत्व-ज्ञानत्वानां त्रयाणां ज्ञाननिष्ठतया अवच्छेदकत्वात्, अवच्छेदकता तु व्यासज्यवृत्तिः। वस्तुतस्तु ज्ञानत्वेनैव हेतुत्वं, न तु तादृशद्वेषविषयाजनकत्वेष्टसाधनत्वयोर्विषयतासम्बन्धेन

(१) तादृशद्वेषविषयाजनकत्वज्ञानस्येति क०।

* 'लाघवादिति इष्टसाधनताज्ञानेऽवच्छेदकमात्रं कल्प्यते न त्वभावरूपकारणान्तरं गौरवादित्यर्थः। 'अन्यथा वेति प्रवर्त्तकज्ञाने तदपि वा विषतया अवच्छेदकमित्यर्थः।

कारणतावच्छेदके प्रवेश; यथोक्तविशेष्यतावच्छेदकताद्वयस्य कारणतावच्छेदकसम्बन्धत्वादेवातिप्रसङ्गविरहात्, 'विषयतया कारणतावच्छेदकमित्यस्य मूलस्य विशेष्यतानिरूपकतया सम्बन्धघटकीभूय कारणतावच्छेदकमित्यर्थः। न चैवं समूहालम्बनज्ञानस्यैव हेतुत्वे पृथक् तादृकद्वेषविषयाजनकत्वज्ञानसत्त्वे तद्विषयकेष्टसाधनताज्ञानात् प्रवृत्तिर्न स्यादिति वाच्यं। दृष्टत्वात् फलेच्छा-फलसाधनताज्ञान-तादृशद्वेषविषयाजनकत्वज्ञानानां युगपच्चिकीर्षापूर्व्वमवस्थानासम्भवेन सर्व्वत्र समूहालम्बनज्ञानस्यैव फलोपधायकत्वादिति भावइत्याहुः। तदसत्, कालभेदेन तादृशद्वेषविषयाजनकत्वज्ञानानां अनन्तकार्य्य-कारणभावेषु इष्टसाधनताप्रवेशमपेक्ष्य पृथगिष्टसाधनताज्ञानस्य सर्व्वकालसाधारणातिरिक्तैककार्य्य-कारणभावकल्पनाया एव लघुत्वात्।

अन्ये तु 'लाघवात्' कारणतावच्छेदकशरीरलाघवात्, अप्रामाण्यनिश्चयानास्कन्दिततादृशद्वेषविषयजनकत्वज्ञानाभावत्वापेक्षया अप्रामाण्यज्ञानानास्कन्दिततादृशद्वेषविषयाजनकत्वनिश्चयत्वस्य लघुत्वात् अप्रामाण्यनिश्चयत्वस्य बहुपदार्थघटितत्वात्। न च तादृशद्वेषविषयाजनकत्वज्ञानस्य हेतुत्वेऽपि तन्निष्ठाप्रामाण्यज्ञानाभावानां पृथगेव हेतुत्वमवश्यमुपेयं अनुमितौ परामर्शनिष्ठाप्रामाण्यग्रहवत् तथाच तत्तदप्रामाण्यज्ञानाभावानामनन्तकारणभावकल्पनामपेक्ष्याप्रामाण्यनिश्चयाभावविशिष्ट-तादृशद्वेषविषयजनकत्वज्ञानाभावरूपस्य विशिष्टाभावस्य हेतुत्वकल्पनाया एव युक्तत्वादिति वाच्यं। यदि तादृशद्वेषविषयाजनकत्वज्ञानेऽप्रामाण्यज्ञानसत्त्वदशायां प्रवृत्त्यनुत्पा-

दोऽनुभवसिद्धस्तदा तन्निष्ठाप्रामाण्यज्ञानाभावानां पृथक् हेतुताया-स्तवाप्यावश्यकत्वात् अप्रामाण्यनिश्चयाभावविशिष्टतादृशद्वेषविषयजन-कत्वज्ञानाभावत्वेन गुरुतरधर्म्मेण कारणत्वकल्पनस्य च पुनरधिक-त्वात्। यदि च तदानीं प्रवृत्त्यनुत्पादो नानुभवसिद्धस्तदा ममापि तन्निष्ठाप्रामाण्यग्रहाभावानां पृथक् हेतुताया अनावश्यकत्वादिति भाव इति प्राहुः[1]।

'मधु-विषेति वर्त्तमानस्वकृतिसाध्यत्व-तृप्तिविशेषरूपेष्टसाधनत्वयोः समूहालम्बनज्ञानस्याविशिष्टत्वेऽपि केवलमधुभोजनत्वरूपेण प्रवृत्ति-दशायां मधु-विषसम्पृक्तान्नभोजनत्वरूपेण कस्यचित् पुरुषस्य न प्रवृत्तिरित्यर्थः। ननु तत्पुरुषीयमधु-विषसम्पृक्तान्नभोजननिष्ठ-कृतिसाध्यताज्ञानस्य तत्कालमन्तर्भाव्य तत्पुरुषीयमधु-विषसम्पृ-क्तान्नभोजनत्वप्रकारकप्रवृत्तिं प्रति कारणत्वाकल्पनादेव न प्रवृत्ति-सम्भवः किं तादृशाजनकत्वज्ञानस्य प्रवृत्तिहेतुत्वकल्पनेन तत्तत्काल-भेदेन बलवद्द्वेषविषयदुःखाजनकत्वज्ञानस्यानन्तकारणत्वकल्पनामपेक्ष्य समवायघटितसामानाधिकरण्यप्रत्यासत्त्या विशेष्यतावच्छेदकमन्त-र्भाव्य वर्त्तमानस्वकृतिसाध्यत्वेष्टसाधनत्वज्ञानयोः कारणत्वकल्पनस्यैव युक्तत्वादिति चेत्, न, तथापि तादृशदुःखजनकत्वज्ञानदशायां इष्ट-साधनताज्ञानसत्त्वेऽपि मधु-विषसम्पृक्तान्नभोजनं मम जायतामि-त्याकारकेच्छावारणाय इच्छां प्रति तद्धेतुत्वे आवश्यके प्रवृत्तिहेतु-त्वस्याप्यर्थसिद्धत्वात् व्यापारेण व्यापारिणोऽन्यथासिद्ध्यभावादन्यथेष्ट-साधनताज्ञानादेरप्युक्तरीत्या प्रवृत्त्यहेतुत्वप्रसङ्गादिति भावः। नन्वेवं

(१) अनावश्यकत्वादिति वदन्तीति ख०, ग०।

भोजने न प्रवृत्तिः, परेणापि प्रवृत्तिपूर्व्वं लिङ्गविशेषण-त्वेन अन्यथा वा तज्ज्ञानविनियोगस्वीकारात् । एव-ञ्चाल्पायाससाध्यादिष्टोत्पत्तिसम्भवे[१] बह्वायाससाध्ये*

यद्येतज्ज्ञानं विनापि केवलेष्टसाधनतालिङ्कक्कतिसाध्यताज्ञानात् परेण प्रवृत्तिः स्वीक्रियते तत्र भवन्मते प्रवृत्त्यपलापापत्तिरित्यत-आह, 'परेणापीति, 'अन्यथा वेति लिङ्गविशेष्यत्वेन वेत्यर्थः, विशे-षण-विशेष्यभावस्य कामचारत्वादिति भावः । 'विनियोगः' उप-योगिता[२] । नन्वेवमल्पायाससाध्यसन्निहितसरोऽवगाहनादितः[३] पिपासानिवृत्तिसम्भवज्ञाने[४] बह्वायाससाध्ये दूरस्थसरोऽवगाहनादौ प्रवृत्तिर्न स्यात् तदानीं तज्जन्यनान्तरीयकदुःखे बलवद्द्वेषनियमा-दित्यत्रेष्टापत्तिमाह, 'एवञ्चेति, 'सम्भवे' सम्भवज्ञाने, 'बह्वायाससाध्ये' समफले बह्वायाससाध्ये, इदमापाततः तदानीं तज्जन्यनान्तरीयक-दुःखे बलवद्द्वेषनियमे मानाभावेन कदाचित् कस्यचित् अल्पायास-साध्यादिष्टोत्पत्तिसम्भवज्ञानेऽपि बह्वायाससाध्ये प्रवृत्तिसम्भवादेवमग्रे-ऽपीति ध्येयं । नन्वल्पायाससाध्यगङ्गास्नानादितः स्वर्गसम्भवज्ञानेऽपि

(१) अल्पायाससाध्यादेव स्वर्गसिद्धिसम्भव इति क० ।

(२) विनियोगः उपयोगिता आवश्यकता वेति ग० ।

(३) अल्पायाससाध्यकूपावगाहनादित इति क० ।

(४) अल्पायाससाध्यसन्निहितसरोऽवगाहनादितो निदाघनिवृत्तिसम्भव-ज्ञान इति ग० ।

* 'बह्वायासेति, तज्जन्यदुःखस्योत्कटद्वेषविषयत्वादिति भावः ।

**न प्रवृत्तिः। अतएव श्रुतस्वर्गफलकत्वेऽपि बहुवित्त-व्ययायाससाध्ये ज्योतिष्टोमादौ फलभूमा कल्प्यते**

बह्वायाससाध्ये अग्निष्टोमादौ प्रवृत्तिर्न स्यात् तदानीं तज्जन्यनान्त-रीयकदुःखे बलवद्द्वेषसम्भवात् अत आह, 'अतएवेति। केचित्तु तादृशाजनकत्वज्ञानस्य प्रवर्त्तकत्वे युक्त्यन्तरमाह, 'अतएवेतीत्याहुः। बलवद्द्वेषविषयाजनकत्वज्ञानस्य प्रवर्त्तकत्वादेवेत्यर्थः, 'श्रुतस्वर्गफलकत्वेऽपीति श्रुतस्वर्गफलकत्वस्याविशिष्टत्वेऽपीत्यर्थः, 'फलभूमेति अल्पाया-ससाध्यज्योतिष्टोमादिजन्यस्वर्गव्यावृत्तज्योतिष्टोमादिसामान्यजन्य-तावच्छेदकवैजात्यव्याप्यमुत्कर्षरूपस्वर्गनिष्ठवैजात्यान्तरं कल्प्यते इत्य-र्थः, न तु स्वल्पायाससाध्यज्योतिष्टोमादिजन्यफलापेक्षया फलनिष्ठं बहुतरकालव्यापित्वरूपं सङ्ख्याधिक्यरूपं वा बाहुल्यं कल्प्यते इत्यर्थः, ज्योतिष्टोमादिस्थले फलनिष्ठवैजात्यकल्पनयैव वक्ष्यमाणदोषनिरास-सम्भवे निरुक्तफलबाहुल्यकल्पने गौरवान्मानाभावाच्च किन्तु यत्र वैजात्यकल्पनं न सम्भवति तत्रैव बहुकालव्यापित्वादिरूपं बाहुल्यं कल्प्यते यथैकसुवर्णदानादौ तत्फलनिष्ठवैजात्यकल्पने शतसुवर्णदान-जन्यफलेऽप्येकसुवर्णदानजन्यतावच्छेदकजातिप्रसक्तावेकत्रानन्तजातिस-त्त्वस्यानन्तप्रतिबध्य-प्रतिबन्धकभावस्य वा कल्पनापत्तेः, अपूर्व्वं च शतसुवर्णदानादिजन्यत्वमेव तादृशफलजनकतावच्छेदकमतो नोक्त-प्रणाल्या अपूर्व्वेऽपि तद्दोषतादवस्थ्यमिति मन्तव्यं। तादृशाजनक-त्वज्ञानस्य हेतुत्वे एव कथं तत्कल्पनं तदाह, 'अन्यथेति, यदि न

---

'फलेति, तथाच फलाधिक्यात्तज्जन्यदुःखे तादृशो न द्वेष इति भावः।

**अन्यथाल्पायाससाध्यादेव स्वर्गसिद्धिसम्भवे तत्राप्रवृत्तौ अननुष्ठानलक्षणमप्रामाण्यं तद्विधेः स्यात् ।**

---

तत्कल्पनीयं किन्तु ज्योतिष्टोमत्वेन विजातीयस्वर्गत्वेन सामान्यकार्य्य-कारणभाव एवाभ्युपगम्यः बृहज्ज्योतिष्टोमे फलभूमाकल्पनेऽपि स्वल्प-ज्योतिष्टोमानुरोधेन तादृशसामान्यकार्य्य-कारणभावस्यावश्यकत्वात् स्वल्पज्योतिष्टोमजन्यतावच्छेदकरूपजात्यन्तरकल्पने गौरवात् तदे-त्यर्थः, 'अल्पायाससाध्यादेवेति, ज्योतिष्टोमादिति शेषः,'स्वर्गसिद्धिस-म्भव इति सामान्यजात्यवच्छिन्नस्वर्गोत्पत्तिसम्भवज्ञानदशायामित्यर्थः, 'तत्र' बहुवित्तव्ययायाससाध्यज्योतिष्टोमे, 'अप्रवृत्तौ' प्रवृत्त्यसम्भवे, स्व-ल्पव्ययायाससाध्यादेव इच्छाविषयतावच्छेदकबह्वायाससाध्यजन्यताव-च्छेदकधर्म्मावच्छिन्नोत्पत्तिसम्भवज्ञाने बहुवित्तव्ययायाससाध्यजन्यना-न्तरीयकदुःखेऽवश्यं बलवद्द्वेषोत्पत्तेरित्यभिमानः। 'अननुष्ठानलक्षण-मिति तत्कालीनप्रवृत्त्यजनकत्वरूपमित्यर्थः, 'तद्विधेः' बृहज्ज्योति-ष्टोमबोधकविधेः, स्वर्गनिष्ठोत्कर्षाख्यवैजात्यस्य तज्जन्यतावच्छेदक-त्वकल्पने च तादृशवैजात्यस्यैव तदानीमिच्छाविषयतावच्छेदकतया तदाश्रयस्य स्वल्पायायाससाध्यादुत्पत्तिसम्भवज्ञानाभावान्न तज्जन्यदुःखे बलवद्द्वेष इति भावः ।

प्राञ्चस्तु 'अननुष्ठानलक्षणमिति कृतिसाध्यत्वाभाववति कृति-साध्यत्वप्रकारकत्वरूपमित्यर्थः, कृतिसाध्यत्वस्य विध्यर्थत्वात् तस्य च तत्र बाधादिति भाव इत्याहुः। तदसत्, स्वल्पायाससाध्याज्ज्यो-तिष्टोमात् स्वर्गोत्पत्तिसम्भवज्ञानविरहदशायामेव तत्र प्रवृत्तिसम्भ-

बलवदनिष्टाननुबन्धित्वञ्च न विशेषणं बहुवित्तव्ययायाससाध्यबहुतरदुःखस्याप्यबलवत्त्वं क्वचिदल्पदुःखस्यापि बलवत्त्वं इत्यनुगतस्य तस्याभावात्। न चेष्टापेक्षयानिष्टस्याधिकत्वं बलवत्त्वं। तस्याप्युक्तातिरिक्त-

---

वेन तद्बोधकविधेस्तादृशाप्रामाण्यासम्भवात् सामान्यतः कृतिसाध्यत्वस्यैव विध्यर्थत्वादिति मन्तव्यं।

बलवद्दुःखाजनकत्वविषयकमिष्टसाधनताज्ञानं कारणम् अतस्तदभावादेव मधु-विषसम्पृक्तान्नभोजने कस्यचित् पुरुषस्य न प्रवृत्तिरिति केचिद्वदन्ति, तन्मतमुपन्यस्य दूषयति, 'बलवदिति, 'अनिष्टपदं दुःखपरं, 'अबलवत्त्वमिति कदाचिदबलवत्त्वमित्यर्थः, अन्यथा कदाचिदपि तत्र बहुतरदुःखजनकत्वज्ञानदशायां प्रवृत्तिर्न स्यादिति भावः। 'क्वचिदिति, काल इति शेषः, अन्यथा तज्जनकत्वेन ज्ञाते कर्म्मण्यालस्यदशायामप्रवृत्तिर्न स्यादिति भावः। 'अनुगतस्य तस्येति अनुगतस्य तस्य दुःखनिष्ठबलवत्त्वस्येत्यर्थः, कादाचित्कत्वेन तस्य जातित्वासम्भवादिति भावः। 'अनिष्टस्य' दुःखस्य, 'तस्यापीति आधिक्यस्यापीत्यर्थः, 'उक्तातिरिक्तस्य' स्वजन्येष्टोत्पत्त्यनान्तरीयकत्वातिरिक्तस्य बलवद्द्वेषविषयत्वातिरिक्तस्येति यावत्। न च दुःखे बलवत्त्वाख्या जातिविशेषा एव ते च नरकादिदुःखवृत्तयः न तु नान्तरीयकदुःखादिवृत्तयः[1] रागान्धानाञ्च ते जातिविशेषास्तत्र

(१) न तु नान्तरीयकश्रमादिवृत्तय इति क०, घ०।

स्यानुगमात्। आस्तिकस्य* निषिद्धत्वेन ज्ञातेऽपि प्रवृत्तिः राग-द्वेषयोरुत्कटत्वेन नरकसाधनत्वज्ञान-तिरोधानात्। ननु न कलञ्जं भक्षयेदित्यत्र विध्यर्थे-

नोपस्थिता इति[१] तदवच्छिन्नदुःखाजनकत्वभ्रमात् अगम्यागमनादौ ते प्रवर्त्तन्ते अलसादीनाञ्च यागादिनान्तरीयकदुःखे तज्जातीयत्वभ्रमादप्रवृत्तिरिति वाच्यं। विनिगमकाभावात् नान्तरीयकभ्रमादावेव तज्जातयोनरकादिदुःखे च तद्भ्रम इत्यस्यापि सुवचत्वात्। न च न कलञ्जं भक्षयेदगम्यां न गच्छेदित्यादिनिषेधविधिभिर्यत्र बलवद्दुःखाजनकत्वाभावोबोध्यते तज्जन्यदुःख एव ते वर्त्तन्ते अन्यत्र च तद्भ्रम इति वाच्यं। निषेधविधेर्बलवत्त्वावच्छिन्नदुःखाजनकत्वाभावबोधकत्व एव मानाभावादिति भावः। ननु बलवद्-द्वेषविषयदुःखाजनकत्वज्ञानस्य हेतुत्वे व्यास-वशिष्ठादेर्नरकजनकत्वेन ज्ञातेऽप्यगम्यागमनादौ कथं प्रवृत्तिः बलवद्द्वेषविषयदुःखाजनकत्व-ज्ञानविरहादित्यत आह, 'आस्तिकस्येति निषेधविधावप्रामाण्यज्ञान-शून्यस्य व्यास-वशिष्ठादेरित्यर्थः, 'निषिद्धत्वेन' नरकजनकत्वेन, 'ज्ञातेऽप्यगम्यागमनादौ, 'राग-द्वेषयोरिति अगम्यागमनजन्यसुख-तदभाव-गोचरराग-द्वेषयोरुत्कटत्वेनेत्यर्थः, तज्जन्यनरकस्य तदानीं बलवद्-द्वेषाविषयतयेति शेषः, 'तिरोधानादिति सतोऽपि तस्याकिञ्चित्-करत्वादित्यर्थः।

(१) तद्वृत्तित्वेन नोपस्थिता इतीति ख०।

* 'अस्तिकस्येति, यद्यपि नरकसाधनत्वज्ञानेऽपि रागौत्कट्यात् प्रवृत्ति-

अत्र नव्याः तत्तत्कालीन-तत्तत्पुरुषीयेच्छादौ तत्तत्कालीन-तत्तत्पुरुषीयबलवद्द्वेषविषयाजनकत्वज्ञानं न हेतुः कालभेदेन पुरुष-भेदेन चानन्तकार्य्य-कारणभावप्रसङ्गात् मानाभावाच्च, न हीष्टसा-धनताज्ञानवत्तद्विलम्बेन क्वचिदिच्छाविलम्बः। न च यदा नरकादौ बलवद्द्वेषो नरकसाधनत्वज्ञानञ्चाप्यगम्यागमनादौ तदा तत्रेच्छा-वारणार्थं तद्धेतुत्वमावश्यकमिति वाच्यं। यत्रादौ नरके बलवद्-द्वेषस्ततः सुखेच्छा ततः सुखसाधनत्व-नरकसाधनत्वविषयकमेकं ज्ञानं तत्र तादृशसमूहालम्बनोत्पत्तिसमये[(१)] बलवद्द्वेषनाशात् इच्छादेः सम्भवेनापादनासम्भवात् यत्र चादौ सुखेच्छा ततो नरके बलवद्-द्वेषस्ततः सुखसाधनत्व-नरकसाधनत्वविषयकमेकं ज्ञानं तत्र तज्-ज्ञानोत्पत्तिसमये फलेच्छानाशादेवेच्छाद्यनुत्पत्तिसम्भवेन तद्धेतुत्वे मानाभावात् यत्र वा आदौ तादृशसमूहालम्बनमेकं ज्ञानं ततः क्रमेण फलेच्छा-नरकद्वेषौ तत्र फलसाधनताज्ञाननाशादेव इच्छाया अनु-त्पत्तेः। किञ्च तत्कालीन-तत्पुरुषीयेच्छादिकं प्रति तत्कालीन-तत्पुरुषीय-बलवद्द्वेषविषयाजनकत्वज्ञानस्य हेतुत्वे याग-पाकादौ क्वापि चिकीर्षादिकं न स्यात् चिकीर्षादिपूर्वं द्वेष-फलेच्छा-तादृ-शाजनकत्व-फलसाधनत्वोभयविषयकज्ञानानान्त्रयाणां अन्यतमस्यावश्यं नाशात् तत्कालीन-तत्पुरुषीयबलवद्द्वेष तत्कालीन-तत्पुरुषीयफले-

(१) ज्ञानोत्पत्तिसमय इति ख०, ग०, घ०।

रनुभवसिद्धा तथापि तन्नरके नोत्कटद्वेष इति तात्पर्य्यं, अतएव वैराग्य-दशायां तत्रोत्कटद्वेषमात्तस्यैव निवृत्तिरिति।

च्छयोः कारणतावच्छेदककोटिप्रविष्टत्वेन तयोरप्यव्यवहितपूर्वसत्तायाअपेक्षितत्वात् । न च तत्कालीनबलवद्द्वेषविषयेत्यत्र तत्कालपदमिच्छापूर्वक्षणत्रयात्मकस्थूलकालपरं तथाच द्वेषस्याव्यवहितपूर्वमसत्त्वेऽपि न क्षतिरिति वाच्यं । तस्य हेतुत्वे मानाभावात् बलवद्द्वेषनाशाव्यवहितक्षणे बाधकाभावेन इच्छोत्पत्तेः स्वीकारात् अन्यथा बलवद्द्वेषनाशे सति त्रि-चतुः-पञ्चादिक्षणानन्तरमपि नेच्छा जायते इत्यस्यापि सुवचत्वात् विशिष्य क्षणनिर्णयस्य सर्वज्ञमात्रसाध्यत्वात् । न च तथापि यत्रादावपेक्षाबुद्ध्यात्मकनरकसाधनत्व-सुखसाधनत्वविषयकसमूहालम्बनज्ञानं ततः क्रमेण नरके बलवद्द्वेषः सुखेच्छा तत्रापेक्षाबुद्धेः क्षणत्रयावस्थायितया चतुर्थक्षणे इच्छावारणाय तद्धेतुत्वमावश्यकमिति वाच्यं । तत्र तृतीयक्षणे[१] द्वित्वादिसाक्षात्कारानुत्पत्त्या तदपेक्षाबुद्धेः क्षणत्रयावस्थायित्वासम्भवात् । न च तथापि यत्र युगपत्सुखेच्छा-नरकबलवद्द्वेषौ ततो नरकसाधनत्व-सुखसाधनत्वविषयकसमूहालम्बनमेकं ज्ञानं तत्रेच्छावारणाय तद्धेतुत्वमावश्यकमिति वाच्यं । द्वेषेच्छयोर्यौगपद्याभावात् । न च तथापि यदि तृतीयक्षणे द्वित्वादेः साक्षात्कारानुत्पादेऽपि तदुपधायकापेक्षाबुद्धेः क्षणत्रयावस्थायित्वं द्वेषेच्छयोर्यौगपद्यं वा अभ्युपगम्यते तदा तद्धेतुत्वमावश्यकमिति वाच्यं । तदापि तस्य हेतुत्वे मानाभावात् किन्तु तादृशस्वत्वविशेषीयतत्तत्समूहालम्बनज्ञानव्यक्तिरेव तादृशदुःखजनकत्वनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकताप्रत्यासत्त्या प्रकारतासम्बन्धेन तत्पुरुषीयेच्छात्वावच्छिन्नोत्पत्तिं प्रति प्रतिबन्धिका एकस्मिन्नेव

(१) द्वित्वोत्पत्तितृतीयक्षण इत्यर्थः ।

काले समनियतानन्तकालोपाधिसत्त्वादिनिगमनाविरहेण प्रतिपुरुषं प्रतिकालं कालोपाधिभेदाद्गुरुतरानन्तकार्य्य-कारणभावकल्पनामपेक्ष्य कतिपयज्ञानव्यक्तीनां तत्तद्व्यक्तित्वेन प्रतिबन्धकताकल्पनस्यैव लघुत्वादित्याहुः ।

अन्ये तु तादृशस्थलविशेषे इच्छावारणाय लाघवात् समानप्रकारताप्रत्यासत्त्या बलवद्द्वेष एव कार्य्यकालवर्त्तित्वेन इच्छाप्रतिबन्धकः फलगोचरबलवद्द्वेष-तद्विषयसाधनताज्ञानयोः सत्त्वे उपायगोचरबलवद्द्वेषस्यावश्यकत्वात् । न चैवं सुखत्वादिप्रकारेण सुखादौ बलवद्द्वेषविषयदुःखजनकत्वभ्रमदशायां सुखत्वादिप्रकारेण सुखादाविच्छापत्तिः सुख-दुःखाभावयोः द्वेषस्वरूपायोग्यतया कार्य्यसहवर्त्तित्वेन बलवद्द्वेषस्य तत्र प्रतिबन्धकत्वासम्भवादिति वाच्यं । इष्टत्वात् प्राचीनैरपि बलवद्द्वेषविषयदुःखाजनकत्वज्ञानस्य उपायेच्छां प्रत्येव हेतुत्वाभ्युपगमेन तदानीं सुखत्वादिप्रकारकेच्छाया इष्टत्वात् सामान्यतो विशेष्यतावच्छेदकत्वप्रत्यासत्त्यैव बलवद्द्विष्टसाधनत्वज्ञानस्य बलवद्द्वेषं प्रति हेतुत्वेन सुख-दुःखाभावयोरपि बलवद्द्वेषसम्भवाच्चेति प्राहुः ।

केचित्तु बलवद्द्वेषोऽपि न प्रतिबन्धकः अतिरिक्तप्रतिबध्य-प्रतिबन्धकभावकल्पने गौरवात् किन्तु नान्तरीयकदुःख-बलवद्द्वेषकालीनसुखेच्छाव्यावृत्तं सुखेच्छानिष्ठमेव उपायेच्छाजनकतावच्छेदकं वैजात्यं कल्प्यते तदवच्छिन्नोत्पत्तिनियमश्च प्रागुक्तरीत्या बलवद्द्वेषोत्पत्तिनियमवदुपपादनीयः(१) । न चैवं यत्र फलद्वयगोचरसमूहा-

(१) विजातीयेच्छेतरेच्छोपधानकालीनज्ञानादिव्यक्तीनां विजातीयेच्छां प्रति प्रतिबन्धत्वकल्पनादित्यधिकः पाठः क-चिह्नितपुस्तके वर्त्तते इति ।

**निषेधानुपपत्तिः* तद्भक्षणस्य तृप्तिरूपेष्टसाधनत्वात् ।**

---

सम्बन्धेच्छानन्तरमेकस्य फलस्य साधन एव चिकीर्षा तत्र नान्तरीयकदुःखे बलवद्द्वेषनिबन्धनोऽन्यस्य फलस्य साधने चिकीर्षानुत्पादो न स्यात् जातेरांशिकत्वाभावादिति वाच्यं । तत्र युगपदिच्छाद्वयाभ्युपगमात् यत्नयौगपद्यवत् तद्यौगपद्येऽपि च्चतिविरहात् बलवद्द्वेषस्य प्रतिबन्धकत्वेऽपि बलवत्त्वस्य जातित्वान्यथानुपपत्त्या द्वेषद्वययौगपद्यस्योक्तरीत्या अवश्याभ्युपेयत्वात् । न चोपायेच्छां प्रत्येव फलेच्छा हेतुर्न तु सुखत्वादिप्रकारकेच्छायां तथाच बलवद्द्वेषस्य कार्य्यसहवर्त्तित्वेनाप्रतिबन्धकत्वे सुखत्वादिप्रकारेण सुखादौ बलवद्द्वेषविषयदुःखजनकत्वभ्रमदशायां सुखत्वादिप्रकारेण तदिच्छापत्तिरिति वाच्यं । इष्टत्वात् सुखत्वादिव्यावृत्तविशेष्यतावच्छेदकताप्रत्यासत्त्या द्विष्टसाधनताज्ञानस्य द्वेषं प्रति हेतुतया च बलवद्द्विष्टसाधनताज्ञानसत्त्वेऽपि न तदानीं तेन रूपेण बलद्द्वेषोत्पत्तिः । अतएव सुखत्वादेर्द्वेषविषयतावच्छेदकत्वस्वरूपायोग्यत्वप्रवाद इत्याहुः ।

'न कलञ्जमिति विषाक्तवाणहतमृग-पक्ष्यन्यतरमांसस्य कलञ्जेतिसंज्ञा, 'विध्यर्थनिषेधानुपपत्तिरिति इष्टसाधनत्वरूपविध्यर्थनिषेधानुपपत्तिरित्यर्थः,[१] 'तद्भक्षणस्येति । अथ मीमांसकमतवत् नञर्थेऽभावे विध्यर्थेष्टसाधनत्वान्वयस्तथाच कलञ्जभक्षणाभाव इष्टसाधन-

---

(१) विध्यर्थनिषेधप्रमापकत्वानुपपत्तिरित्यर्थ इति ख०, ग०, घ० ।

---

* 'विध्यर्थेति, यद्यपि नायं विधिः कलञ्जभक्षणस्य रागप्राप्तत्वादेकत्वेव

# न चासुराविद्यादिवत् पर्य्युदासलक्षणया विरोध्य-

मित्यन्वयः, विध्यर्थस्य इष्टसाधनत्वस्य क्षेमसाधारणतया(१) तस्य प्रत्यवायपरीहाररूपेष्टसाधनत्वात्। न चैवं प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तिभङ्गः विध्यर्थस्येष्टसाधनत्वस्य नञर्थ एवान्वयादिति वाच्यं। साक्षात्परम्परासाधारणप्रकृत्यर्थान्वितत्वस्य तथाप्यनपायात् विध्यर्थस्येष्टसाधनत्वस्य प्रकृत्यर्थानन्वितत्वेऽपि कृतिसाध्यत्वरूपतदर्थमादायैव तद्व्युत्पत्त्युपपत्तेः कलञ्जभक्षणं कृतिसाध्यं तदभावश्च इष्टसाधनमित्यन्वयबोधस्वीकारात्। न हि प्रत्ययानां यावत्स्वार्थे प्रकृत्यर्थान्वितत्वनियमः, अन्यथा वक्ष्यमाणसिद्धान्तेऽप्यगतेः विध्यर्थस्य बलवद्द्वेषविषयदुःखाजनकत्वस्य प्रतियोगितया नञर्थ एवान्वयादिति चेत्, न, तथा सति विध्यर्थस्येष्टसाधनत्वस्याश्रयतासम्बन्धेनान्वयोभवनस्योपस्थापकपदसमभिव्याहृतप्रकृत्यर्थ एवान्वेतीति व्युत्पत्तिभङ्गापत्तेरिति भावः। 'असुराविद्यादिवदिति, 'असुराविद्येत्यत्र यथा नञः सुरविरोधिनि विद्याविरोधिनि च लक्षणा तथेत्यर्थः, 'पर्य्युदासलक्षणयेति इच्छाविरोधिनि लक्षणयेत्यर्थः, तस्य चाभेदेन लक्षणया विध्यर्थस्य नरकसाधनत्वस्य एकदेशे नरकेऽन्विततयेति शेषः, 'विरोध्यनिष्टेति इच्छाविरोधिनरकेत्यर्थः, विरोधित्वं प्रतिबन्धकत्वं तादात्म्यसम्बन्धेन दुःखस्येच्छाप्रतिबन्धकत्वा-

(१) योग-क्षेमसाधारणतयेति घ॰

विधि-निषेधानुपपत्तेश्च, तथापि निषेधकोऽनुपस्थापको विधिप्रतिरूपकोऽयं

निष्टसाधनत्वबोधनं, नञोऽसमस्तत्वात् क्रियासङ्गतत्वेन प्रतिषेधवाचकत्वव्युत्पत्तेश्चेति चेत्, न, विशेष्यवति विशिष्टनिषेधस्य सविशेषणे हीति न्यायेन विशेषणनि-

---

दिति भावः। 'असमस्तत्वादिति, असमस्तस्य तु नञोविरोधिनि लक्षणायाः क्वाप्यदृष्टत्वादिति भावः। 'क्रियेति आख्यातरूपेत्यर्थः. तेन नेदं गमनमित्यादौ न व्यभिचारः। बलवद्द्वेषविषयाजनकत्व-विशिष्टेष्टसाधनत्वं विध्यर्थ इत्यभिप्रायेण समाधत्ते, 'विशेष्यवतीति, 'विशिष्टनिषेधस्य' विशिष्टनिषेधबोधकवाक्यस्य, 'सविशेषणे हीति सविशेषणे हि विधि-निषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाधे इति न्यायेनेत्यर्थः, 'सविशेषणे' विशिष्टे, 'विशेषणनिषेधपर्य्यवसायितया' विशेषणान्वितत्वेन निषेधबोधकतया, इतरविशेषणत्वेनोपस्थितस्यान्यत्र विशेषणत्वेन नान्वय इति व्युत्पत्तेरत्र सङ्कोचादिति भावः। 'इष्टोत्पत्तीति स्वजन्येष्टोत्पत्त्यनान्तरीयकदुःखाजनकत्वाभाववदित्यर्थः, स्वजन्येष्टोत्पत्त्यनान्तरीयकत्वञ्च बलवद्द्वेषविषयत्वं।

मिश्रानुयायिनस्तु 'विशिष्टनिषेधस्य' विशिष्टाभावस्य, 'सविशेषणे हीति, 'सविशेषणं' विशेष्यं, तत्सत्त्वे हि विशिष्टाभावो विशे-

---

भक्षयेदिति शब्दः प्रवर्त्तकज्ञानजनकस्यैव विधित्वादिति बोध्यं। 'नञ-इति, यद्यपि व्यासेऽपि न घटः पट इत्यादौ लक्षणाभ्युपगमादसमस्तनञो-ऽपि पर्य्युदासलक्षणा तथापि विरोधिपरत्वं समस्तस्यैव व्यासे तु तद्भिन्नत्व-मात्रबोधनात्। न चात्रापि तथैवास्त्विति वाच्यं। तथा सतीष्टसाधन-भिन्नत्वज्ञानेऽपि नरकरूपानिष्टसाधनत्वज्ञानानुदयादिति भावः। केचित्तु सर्व्वास्वरसादाह, 'क्रियेति, 'विशेष्यवतीति, एतच्चातिरिक्तविशिष्टाभावा-

षेधपर्य्यवसायितया कलञ्जभक्षणमिष्टोत्पत्तिनान्तरीयकदुःखातिरिक्तदुःखसाधनमिति न कलञ्जं भक्षयेदित्यनेन बोधनात्। इष्टसाधनतावाचकस्य विधेः सामा-

---

षणाभावकृत इति न्यायेनेत्यर्थः, 'विशेषणनिषेधपर्य्यवसायितया' विशेषणाभावव्याप्यतया, 'बोधनादिति विशिष्टाभावरूपलिङ्गोपस्थितिद्वारा बोधनादित्यर्थः, इत्याहुः।

अत्र नव्याः बलवद्द्वेषविषयदुःखाजनकत्वस्येष्टसाधनत्वविशेषणत्वेन स्वातन्त्र्येण वा न विध्यर्थत्वसम्भवः यागादिजन्यनान्तरीयकदुःखस्यापि यदा कदाचित् यस्य कस्यचित् बलवद्द्वेषविषयतया सर्व्वेषामेव विधीनां अप्रामाण्यापत्तेः न कलञ्जं भक्षयेदित्यादिनिषेधविधिवन्नाश्वमेधेन यजेतेत्यादिनिषेधविधेरपि प्रामाण्यापत्तेः। न चाश्वमेधादौ यदा यः पुरुषः प्रवर्त्तते तत्तत्कालीन-तत्तत्पुरुषीयबलवद्द्वेषविषयदुःखाजनकत्वमेव विध्यर्थ इति वाच्यं। कालभेदेन पुरुषभेदेन चानन्तशक्तिकल्पनापत्तेः विशिष्य तत्तत्काल-तत्तत्पुरुषाणां ज्ञातुमशक्यत्वेन कालविशेष-पुरुषविशेषान्तर्भावेन विधिशक्तिग्रहासम्भवाच्च नाश्वमेधेन यजेतेत्यादिनिषेधविधिवन्न कलञ्जं भक्षयेदिति निषेधविधेरप्रमाण्यापत्तेश्च तत्र यदा यः पुरुषः प्रवर्त्तते तत्कालीन-तत्पुरुषीयबलवद्द्वेषविषयाजनकत्वस्य तत्रापि सत्त्वात्। न च मास्तु तादृश-

---

नभ्युपगमेन बोध्यं। वस्तुतो विशिष्टनिषेधसिद्धौ ततोऽनुमानाद्विशेषणाभावसिद्धिरिति ध्येयं। तदननुबन्धित्वस्य विध्यर्थानन्तर्भावेऽपि यो निषेधान्वयमुपपादयति तन्मतमुपन्यस्य निराकरोति, 'इत्थेति। मीमांसकाः प्राहुरिते,

न्यतो निषेधानुपपत्तेर्बलवदनिष्टाननुबन्धीष्टसाधनत्वविशेषनिषेधतात्पर्य्यं, तथाचाशक्यविशेषनिषेधपरत्वं नञ इति कश्चित्। तन्न। यथा ह्ययोग्यतया सच्छिद्रं विहाय घटत्वेन तदितरान्वयो न तु छिद्रेतरत्वेन युग-

---

दुःखाजनकत्वं विध्यर्थः किन्तु निषेधविधेः प्रामाण्यान्यथानुपपत्त्या पापाजनकत्वेऽपि विधिशक्तिस्तदभाव एव निषेधविधौ नञा बोध्यते इति वाच्यं। तथापि न विषं भक्षयेदित्यादिलौकिकनिषेधविधेर-प्रमाण्यापत्तेर्दुर्वारत्वादिति न किञ्चिदेतत्। वस्तुतस्तु निषेधविधौ यत्र यदनिष्टं प्रमाणान्तरसिद्धं तदजनकत्वे विधिप्रत्ययस्य लक्षणा तच्च यथासम्भवं क्वचित्पापाजनकत्वं क्वचिन्मरणाद्यजनकत्वञ्च तस्यैवाभावो नञा बोध्यते इत्येव तत्त्वमिति प्राहुः।

तादृशदुःखाजनकत्वं न विध्यर्थ इति मतेनाह, 'इष्टसाधनतेति, 'सामान्यत इति कलञ्जभक्षणे इष्टसाधनतासामान्यस्य निषेधानुपपत्तेरित्यर्थः, 'बलवदनिष्टेति बलवद्द्वेषविषयाजनकत्वविशिष्टेष्टसाधनतेत्यर्थः, 'अशक्येति विधिप्रत्ययाशक्यस्यापि तादृशाजनकत्वरूपविशेषणस्य निषेधबोधकत्वमित्यर्थः। 'यथा हीति, घटेन जलमाहरेत्यत्रेति शेषः, 'न तु छिद्रेतरत्वेनेति न तु उद्देश्य-विधेयभावेन घटे तादात्म्यसम्बन्धेन छिद्रेतरप्रकारेणान्वय इत्यर्थः, छिद्रेतरोपस्थापकपदाभावादिति भावः। ननु घटपदादेव शक्त्या घटस्य लक्षणया च छिद्रेतरस्योपस्थितिः स्यादित्यत आह, 'युगपदिति युगपदेकस्य पदस्य वृत्तिद्वयजन्यपदार्थोपस्थितिद्वारा शाब्दबोधजनक-

प्रवृत्तिद्वयविरोधात् तथाचापि बलवदनिष्टाननुबन्धित्वेनानुपस्थितौ[१] कथं तन्निषेधः। श्येनेनाभिचरन् यजेतेत्यत्र कथं विधिप्रवृत्तिः हिंसाया बलवदनिष्टानु-

त्वविरहादित्यर्थः, 'तथाचापीति, विधिप्रत्ययादिति शेषः, 'बलवदनिष्टाननुबन्धित्वेनेति तत्प्रकारेणेत्यर्थः, 'अनुपस्थितौ' इष्टसाधनत्वानुपस्थितौ, 'तन्निषेधः' तस्य निषेधेऽन्वयः, तदुपस्थापकपदाभावादिति भावः। शङ्कते, 'श्येनेनेति, 'अभिचरन्' बधं कामयन् श्येनेन यजेतेत्यर्थः, श्येनेनेति कर्मनामधेयं, 'अभिचारो बधः' बधो हिंसा न तु मरणं, अग्रिमसकलग्रन्थासङ्गतेः, 'विधिप्रवृत्तिः' विधेः प्रामाण्यं, 'बलवदनिष्टेति बलवद्द्वेषविषयसाधनत्वादित्यर्थः, तथाच बलवद्द्वेषविषयसाधनत्वेन हिंसाया एव बलवद्द्वेषविषयत्वात् तत्साधनीभूतस्य श्येनस्यापि बलवद्द्वेषविषयसाधनत्वेन विध्यर्थस्य बाधितत्वान्न प्रामाण्यसम्भव इति भावः। न च मा हिंस्यात् सर्वा भूतानीत्यस्य यज्ञीयपश्वालम्भनानुरोधेन वैधहिंसेतरहिंसापरत्वस्यावश्यकत्वात् श्येनजन्यहिंसापि बलवदनिष्टासाधनमिति वाच्यं।

(१) बलवदनिष्टाननुबन्धित्वेन नोपस्थितिरितीति क०।

'श्येनेनेति, अभिचारस्य हिंसात्वेन न हिंस्यात् सर्व्वा भूतानि इत्यनेन निषिद्धत्वादित्यर्थः। न चाग्नीषोमीयपशुहिंसावदियमप्यनिषिद्धा शब्दबोधितत्वादिति वाच्यं। न हिंस्यादित्यस्य रागप्राप्तहिंसानिषेधपरत्वात् श्येनेन हिंसायाश्च रागप्राप्तत्वात् अग्नीषोमीयपश्वालम्बनस्य च क्रत्वर्थत्वेन वैधत्वा-

बन्धित्वात् इति चेत्, न, तत्र कृतिसाध्यत्वे सतीष्टसाधनत्वमेव योग्यतयान्वेति न तु बलवदनिष्टाननुबन्धित्वमपि अयोग्यत्वात् । निन्दार्थवादेन प्रायश्चित्तोप-

श्येनजन्यहिंसाया वैधत्वविरहात् श्येनेष्टिस्तु विधीयते न तु वैरिबधः तस्य फलत्वात्, यज्ञीयपश्वालम्भनन्तु वैधं अग्नीषोमीयं पशुमालभेत वायव्यं छागलमालभेतेत्याद्यङ्गविधिश्रुतेः । न च तस्य वैधत्वाभावेऽपि श्येनविधेः प्रामाण्यान्यथानुपपत्त्या निषेधविधेस्तदितरपरत्वमिति वाच्यं । श्येनाद्यभिचारजन्यहिंसाया अपि नरकसाधनत्वश्रुतेः ।

साङ्ख्यमतानुयायिनस्तु वैधावैधसाधारणी सर्व्वैव हिंसा अनिष्टहेतुः मा हिंस्यादित्यत्र सङ्कोचे मानाभावात् नरकविशेषं प्रति हिंसायाः कार्य्य-कारणभावे लाघवाच्च यज्ञीयपश्वालम्भनादेस्तु दृष्टानिष्टोभयजनकत्वमेव तत्रानिष्टकल्पनायास्तु फलमुखत्वेनादोषत्वात् । अतएवाङ्गहिंसाया अपि लघुतरप्रायश्चित्तं । न चैवं अग्नीषोमीयं पशुमालभेतेत्यादिविधेरप्रामाण्यापत्तिः तेन बलवद्द्वेषविषयाननुबन्धित्वबोधनादिति वाच्यं । श्येनविधिवत्समाधास्यमानत्वात् उक्तक्रमेण बलवदनिष्टाजनकत्वस्य विध्यर्थत्वाभावाच्चेति प्राहुः ।

'अयोग्यत्वादिति विशेष्य-विशेषणभावे विनिगमनाविरहात् वैशि-

दित्याहुः । 'अयोग्यत्वादिति, ननु पदार्थः पदार्थेनान्वेतीति व्युत्पत्तेः कथं तदेकदेशेनेष्टसाधनत्वमात्रेण अन्वय इति चेत्, न, गौरनित्य इत्यत्र विशेषणानन्वयेऽपि विशेष्यमात्रेणान्वयस्य दर्शनात् विशेष्यस्य अयोग्यत्वे विशेषणस्य विशेष्यान्विततया निराकाङ्क्षत्वादपरपदार्थेन नामान्वयो भवति तथा

देश्येन च हिंसाया बलवदनिष्टानुबन्धित्वावगमात्। अतएव विहितेऽपि श्येने विगानान्न तात्त्विकप्रवृत्तिः। राग-द्वेषयोरुत्कटत्वेनानिष्टानुबन्ध्यंशस्य तिरस्कारात् कस्यचित् प्रवृत्तिरित्येके। अन्ये त्वभिचारस्य वैरिबध-

---

ध्यांशेऽपि शक्तिविषयत्वकल्पने गौरवाच्च कृतिसाध्येष्टसाधनत्व-बलवद्-द्वेषविषयाजनकत्वेषु प्रत्येकमेव शक्तिरिति भावः। अयोग्यत्वमेवोपपादयति, निन्दार्थेति, 'हिंसाया इति, हिंसाया बलवद्द्वेषविषयसाधनत्वे च तत्साधनीभूतस्य श्येनस्य सुतरां बलवद्द्वेषविषयसाधनत्वात् बलवद्द्वेषविषयसाधनत्वेन हिंसाया एव बलवद्द्वेषविषयत्वादिति भावः। 'अतएव' हिंसाया बलवदनिष्टजनकत्वादेव, 'विहिते' इष्टसाधनत्वेन वेदबोधिते, 'विगानात्' बलवद्द्वेषविषयहिंसासाधनताज्ञानात्, 'तात्त्विकेति हिंसाजन्यनरकदुःखे बलवद्द्वेषवत इत्यर्थः। 'राग-द्वेषयोरिति शत्रु-तद्बधगोचरद्वेष-रागयोरित्यर्थः, 'अनिष्टाननुबन्ध्यंशस्य' हिंसाजन्यनरकस्य, 'तिरस्कारात्' बलवद्द्वेषविरहात्, 'इत्येक इति।

केचित्तु अत्र श्येनत्वसामानाधिकरण्येन बलवदनिष्टाननुबन्धित्वस्यान्वयाच्च विधेरप्रामाण्यं आततायिवैरिबधफलकस्य श्येनस्य बलवदनिष्टाजनकत्वादिति समादधिरे।

---

गौर्नित्या इत्यादौ। अतएव तत्र स्वतन्त्रोपस्थितये लक्षणा निराकाङ्क्षत्वमूलकमेव पदार्थः पदार्थेनान्वेतीत्यपि। नन्विष्टसाधनत्वं विशेष्यं बलवदनिष्टाननुबन्धित्वं विशेषणमित्यत्रैव किं विनिगमकं वैपरीत्यस्यापि सुवचत्वात्।

**फलकत्वेन श्रुतत्वात् बधसाधनत्वेन श्येनो विधीयते न तु बधसाध्यनरकसाधनत्वेन नरकस्य फलत्वेनाश्रुतेः। न च जनकजनकस्य जनकत्वनियमः, कुम्भकारपितृपरम्परायाः कुम्भजनकत्वापत्तेः विधिनैव श्येनस्य बलवदनिष्टाननुबन्धित्वबोधनाच्च। न च श्येनस्य नरकाहेतुत्वे अपेक्षितवैरिबधहेतुत्वे वा अविगानेन प्रवृत्तिः स्यादिति वाच्यं। श्येनाद्बधो बधाच्चावश्यं नरक इति प्रतिसन्धानेन विगानात्।**

'विधीयते' अभ्युपगम्यते, 'बधसाध्यनरकसाधनत्वेनेति, 'अभ्युपगम्यते' इत्यनुषज्यते। प्रमाणान्तरमाशङ्कते, 'न चेति, ननु तस्य कुम्भकारपितृत्वेनाजनकत्वेऽपि कुम्भकारत्वेन जनकत्वमस्त्येवेत्यनुशयादाह, 'विधिनैवेति। 'अविगानेन' बलवदनिष्टजनकत्वज्ञानाभावेन, तात्त्विकस्येति शेषः। 'विगानात्' बलवदनिष्टप्रयोजकत्वज्ञानात्।

---

अतएव 'विशेष्यवतीत्यादिपूर्व्वग्रन्थोऽप्यसङ्गतः इति चेत्, न, इष्टेच्छायाभिष्टसाधनत्वप्रकारकज्ञानस्य हेतुत्वकल्पनात्तद्विशेष्यक एव विशिष्टे लिङ्शक्तेः। नन्वेतत् कृतिसाध्यत्वेऽपि तुल्यं चिकीर्षानिर्व्वाहार्थं कृतिसाध्यत्वप्रकारकज्ञानस्य हेतुत्वकल्पनात्। न चाख्यातत्वेन कृतौ शक्तेस्तत एव संसर्गमर्य्यादया कृतिसाध्यत्वलाभान्न पृथक्शक्तिकल्पनमिति वाच्यं। एवं सति कृतिसाध्यत्वस्य ज्ञानाप्रकारतया चिकीर्षायास्तत्प्रकारकत्वानुपपत्तेः। किञ्च तथा सति लङादिवद्विषयत्वेन कृतौ धात्वर्थान्वयः स्यात् न तु साध्यत्वेनेति पृथगव्युत्पत्तौ पृथक् शक्तेरावश्यकत्वाच्चेति कृतिसाध्यत्वादित्रिषु

अत्रेदमस्वरसबीजं एवं सति बलवदनिष्टाप्रयोजकत्वज्ञानस्यैव प्रवर्त्तकतया तत्रैव विधिशक्तेः श्येने विध्यर्थबाधो दुर्वार एव नरकसाधनत्वाभावेऽपि नरकप्रयोजकत्वात्। किञ्च नरकसाधनत्वाभावेऽपि बलवद्द्वेषविषयसाधनत्वमस्त्येव नरकसाधनत्वेन बलवद्द्वेषविषयीभूतायाः

---

प्रत्येकं शक्तित्रयमेव युक्तं तृतीयायाः कारणत्वैकत्ववदिति चेत्, अत्र वदन्ति, कृतिसाध्यत्वे उक्तबीजसम्भवेन पृथक्शक्तावपि तदननुबन्धित्वविशिष्टेष्टसाधनत्वे लाघवादेकैव शक्तिरिति तच्चिन्त्यं। तदननुबन्धित्वविशिष्टकृतिसाध्यत्वे एका शक्तिरिष्टसाधनत्वमात्र एवापरेति विनियन्तुमशक्यत्वात् तथाच शक्तित्रयमेव। अपि च इष्टसाधनत्वे तदननुबन्धित्ववैशिष्ट्यं सामानाधिकरण्यरूपमेव वाच्यमन्यस्यासम्भवात् एवञ्च धर्म्मान्तरे तदननुबन्धित्वसमानधिकरणस्येष्टसाधनत्वस्य वैशिष्ट्यं यत्र सविषान्नभोजनादौ बाधावतारकालेऽवगतं तत्रापि प्रवृत्तिप्रसङ्ग एव। न च तदिष्टसाधनत्वं भिन्नमेवेति वाच्यं। अनुगतप्रत्ययादनुगतस्यैव तस्य शक्यत्वात् तस्मात् प्रवृत्तिविषयविशेष्यक-त्रितयप्रकारकं ज्ञानं मृग्यते तच्च शक्तौ न लक्षणायां सुविभक्तौ तदभावेऽपि तिङ्विभक्तौ तदभ्युपगमात्। अतएव रथो गच्छतीत्यत्र व्यापारलक्षणेति निरस्तं। विनिगमनाविरहेण विशिष्टस्याशक्यत्वात् एवञ्च सप्रमाणकं नानार्थत्वे गौरवं न दोषाय। किञ्च विशिष्टशक्यत्वे सामानाधिकरण्यरूपं वैशिष्ट्यमपि शक्यं शक्तित्रये तु तत् संसर्गमर्य्यादयैव भासते इति विपरीतमपि गौरवमिति संक्षेपः। वयन्तु ब्रूमः, तदननुबन्धित्वं बलवद्द्वेषविषयदुःखाजनकत्वमेव वाच्यमन्यस्य निर्वक्तुमशक्यत्वात् एवञ्च यस्य श्येनजन्यदुःखे न तादृशोद्वेषस्तं प्रति तदन्वययोग्यमन्यं प्रति नेति वेदार्थनिष्ठा न स्यात्, तथाच तज्ज्ञानस्य प्रवर्त्तकत्वेऽपि पूर्व्वोक्तयुक्त्या तन्न शक्यमतो नात्र विधिप्रवृत्त्यनुपपत्तिः। न च वैरिवधकामनाया अधिकारिविशेषणत्वात् तत्कामस्य बलवदनिष्टाननुबन्धित्वान्वय इति तत् सर्व्वत्र योग्यमेवेति वाच्यं।

ननु श्येनो मरणफलकव्यापारत्वेन हिंसा सा च नरकजनिकेति चेत्, न, न हि साक्षात्-परम्परा-

हिंसाया एव साधनत्वात् दुःखत्वपर्य्यन्तप्रवेशे प्रयोजनविरहेण बलवद्द्वेषविषयाजनकत्वमात्रस्य विध्यर्थत्वात्। न च श्येनविधिप्रामाण्यान्यथानुपपत्तिरेव प्रयोजनं तस्य तदंशान्वयानभ्युपगमेऽपि प्रामाण्यसम्भवात्, अपि च श्येनस्याभिचारत्वेन नरकसाधनत्वमपि प्रमाणसिद्धं मनुनाभिचारस्य उपपातकत्वेन परिगणनात् "नाभिचरेत वैरिमिति श्रुतेः, अतएव "अभिचारमहीनञ्च[१] त्रिभिः कृच्छ्रैर्व्यपोहतीति प्रायश्चित्तोपदेशोऽपीति ध्येयं ।

ननु श्येनस्य हिंसात्वात् मा हिंस्यादित्यनेन नरकसाधनत्वबोधनात् तस्य नरकसाधनत्वमस्त्येवेत्यन्येषां मत एवाशङ्कते, 'नन्विति,

(१) अभिचारमहीनाञ्चेति क॰ परन्तु अयं पाठो न समीचीनः ।

तत्कामस्यापि तात्त्विकस्यात्र द्वेषौत्कट्यात् । न हि तात्त्विको न प्रवर्त्तत इति तस्य वैरिबधेच्छापि नास्तीति । नन्विदमिष्टसाधनत्वेऽपि तुल्यं स्वर्गेऽपि सर्व्वस्येच्छाविरहादिति चेत्, न, स्वर्गकामनायास्तत्राधिकारिविशेषणत्वेन तत्कामं प्रति तस्य सर्व्वत्रान्वययोग्यत्वात् एवं कृतिसाध्यत्वेऽपि स्वरूपयोग्यतायाः सर्व्वत्र सत्त्वादिति दिक् । 'रागेति, शत्रुबधे रागौत्कट्यं शत्रौ द्वेषौत्कट्यं, यदा श्येनादिनिष्ठानिष्टानुबन्धित्वतिरस्कारस्तदा तज्जन्यनरके बलवद्द्वेषाभावात् प्रवृत्तिरिति भावः । 'अन्ये त्विति, अत्रेदमनभिमतिवीजं यदि श्येनाद्बधो बधाच्च नरक इति बलवदनिष्टप्रयोजकत्वज्ञानान्निवृत्तिस्तदा बलवदनिष्टाप्रयोजकत्वज्ञानमेव प्रवर्त्तकं वाच्यं अन्यथा तत्रापि प्रवृत्त्यापत्तिरेवम् तत्रैव लिङादिशक्तिरिति तदन्वयायोग्यमेवेति । 'सा चेति,

**साधारणमरणफलकव्यापारो हिंसा, कूपादौ विनष्टे गवि तत्कर्तुर्गोबधकर्त्तृत्वापत्तेः बध्यस्यापि हन्तुर्मृत्यूत्पादनद्वारेणात्महन्तृत्वप्रसङ्गाच्च। न हि अनुत्पादितमन्युः कश्चित् कमपि व्यापादयति, किन्त्वनुनिष्पादिमरणफलकोव्यापारो हिंसा यदनन्तरं मरणं भवत्येव।**

---

यद्यपि श्येनस्य हिंसात्वेऽपि वैधहिंसात्वादेव न नरकसाधनत्वं निषेधविधेस्तदितरपरत्वात् तथापि तदुपेक्ष्य प्रसङ्गात् हिंसालक्षणं विवेचयितुं समाधानान्तरमाह, 'न हीति, 'मरणफलकेति मरणप्रयोजनकेत्यर्थः, 'कूपादाविति, कूपादेरेव तत्र मरणजनकत्वेन हिंसात्वादिति भावः। 'व्यापादयति' मारयति, 'अनुनिष्पादीति, अव्यवहितानन्तर्य्यमनुशब्दार्थः, तथाच स्वाव्यवहितोत्तरभाविमरणरूपं फलं यस्य तादृशो व्यापारो हिंसेत्यर्थः, फलपदमनन्यथासिद्धत्वलाभाय, एतदेव विशदयति, 'यदनन्तरमिति यदव्यवहितोत्तरमित्यर्थः, 'एव-

---

तथाच बलवदनिष्टाननुबन्धित्वमन्वयायोग्यमेवेति भावः। आपाततो महार्णवलक्षणमाह, 'अनुनिष्पादीति, 'अनुनिष्पादि' स्वाव्यवहितोत्तरवर्त्ति मरणं फलं यस्य। न चैवं फलपदवैयर्थ्यं, मरणाजनक-तदव्यवहितपूर्ववर्त्तिन्यतिव्याप्तिवारकत्वात् यत्किञ्चित्सम्बन्धेन मरणस्य तदीयत्वात् फलपददाने च जन्य-जनकसम्बन्धेन तदीयत्वलाभान्नोक्तदोषः। नन्वेवं खड्गाघातोऽपि हिंसा न स्यात् तस्याप्यव्यवहितमरणफलकत्वाभावादिति चेत्, न, 'मरणफलकेत्यत्र तादृशमरणं फलं यस्य तादृशो व्यापारो यस्येति मध्यपदलोपिसमासाश्रयणादित्येके। अन्ये तु मरणं प्राणशरीरविभागरूपं फलं यस्य स मरणफलकः

न च श्येनस्तथा, किन्तु खड्गहननादिकमेव। अथ मरणानुकूलव्यापारो मरणोद्देशेनानुष्ठीयमानो हिंसा श्येनश्च तथा कूपादौ च न मरणोद्देशेनानुष्ठीयमान-

---

कारेणानन्यथासिद्धत्वमुक्तं। 'न च श्येन इति, तस्य मरणं प्रत्यन्यथा-सिद्धत्वात् अपूर्व्वखड्गाभिघातादिना व्यवधानाच्चेति भावः। 'खड्ग-हननं' प्राणखड्गाभिघातः, प्राणखड्गाभिघातादेव प्राणशरीरसंयोग-ध्वंसः प्राणो हि खड्गाभिहत उत्क्रामतीति खड्गप्राणाभिघातस्य हन्तृव्यापारस्य तथात्वादिति भावः। अत्र दैवान्मरणाव्यवहितपूर्व्व-वर्त्तिनि मरणाजनकेऽतिव्याप्तिवारणाय अनन्यथासिद्धत्वप्रवेशः, कूप-खड्गादावतिव्याप्तिवारणायाव्यवहितोरभावोति। नन्वेवं खड्गाभिघा-तादावव्याप्तिः प्राण-शरीरसंयोगध्वंसविशेषस्य प्राण-शरीरविभाग-विशेषस्य वा मरणस्य तदव्यवहितोत्तरोत्पत्तिकत्वाभावात् प्राण-क्रियादिना व्यवधानात्। अथात्र स्वक्षणाव्यवहितत्वं नोक्तं किन्तु स्वाव्यवहितोत्तरत्वं, तच्च स्वध्वंसाधिकरणक्षणध्वंसानधिकरणत्वे सति स्वाधिकरणक्षणध्वंसाधिकरणत्वं, इत्यञ्च स्वाधिकरणयत्किञ्चित्-

---

प्राणपरिस्पन्द एव सोऽनुनिष्पादी यस्य स खड्गप्राणयोगस्तथेत्याहुः। अपरे तु स्वाङ्गमव्यवधायकमितिन्यायेन व्यापारस्याव्यवधायकत्वान्नोक्तदोष इत्याहुः। 'गौरवादिति। यद्यपि तत्रानुनिष्पादित्वं विशेषणमत्र तदुद्देशेनानुष्ठीयमा-नत्वमिति न गौरवं तथापि व्रणपाकपरम्पराभूते न हन्तृत्वमिति तद्वारणा-यानुनिष्पादित्वमत्रापि विशेषणमावश्यकं वाच्यमिति स्वाभ्युपगमावष्टम्भेन मरणोद्देशांशप्रवेशाद्गौरवमुक्तं, यदि च तत्रापि हन्तृत्वमेवेति नात्र तद्वि-शेषणं तदा दोषान्तरमाह, 'मरणेतीति प्रकाशः।

**त्वमिति चेत्, न, एवं सति गौरवात् मरणानुद्देशेन**

---

चणाव्यवहितचण एव वर्त्तते इति न कोऽपि दोषः। इत्थञ्च मरणं प्रत्यनन्यथासिद्धत्वे सति मरणाव्यवहितपूर्व्ववर्त्तिव्यापारत्वमिति फलितार्थः, मरणञ्चात्र प्राण-शरीरसंयोगध्वंसविशेष एव विवक्षितो न तु तादृशविभागविशेषः प्राण-शरीरयोरपि हिंसात्वापत्तेः, चरम-क्रियाविभाग-संयोगानां हिंसात्वन्तु इष्टमेवेति चेत्, न, हिंसक-पुरुषस्य कूप-खड्गादेश्च हिंसात्वापत्तेरिति। न च मरणं फलं यस्य स मरणफलकः प्राणपरिस्पन्द एव "सन्निपातादेव मरणमित्यायु-र्वेदात् सन्निपातानन्तरं प्राणक्रियानभ्युपगमे तु सन्निपात एव सः, अनुनिष्पादी मरणफलको यस्य तादृशो व्यापार इति बहुव्रीहि-द्वयगर्भकर्म्मधारयः, खड्गाभिघातजनकीभूतखड्गपूर्व्वदेशसंयोगनाशो-ऽपि हिंसैव, अनुनिष्पादित्वञ्च स्वचणाव्यवहितोत्तरचणभावित्वमतो न खड्गादिष्वतिव्याप्तिरिति वाच्यं। वैरिनिष्ठदुरितापूर्व्वमादाय श्येन-स्यापि हिंसात्वापत्तेः तस्यापि मरणफलकत्वादिति नैवं, अनु-निष्पादि मरणं फलं यस्य सोऽनुनिष्पादिमरणफलकः प्राणपरि-स्पन्द एव स एव व्यापारो यस्य स खड्गाभिघातादिर्हिंसेत्यर्थात् व्यापारत्वञ्च समवायिकारणातिरिक्तकारणविधया असाधारण-जन्यत्वमतो न प्राणादिष्वतिव्याप्तिः, श्येनस्य न वैरिप्राणपरिस्पन्द-जनको मानाभावात् किन्तु तज्जन्यदुरितापूर्व्वमेव तज्जनकं तच्च हिंसैवेति दिक्। 'गौरवादिति मरणोद्देशेनानुष्ठीयमानत्वप्रवेशे गौरवादित्यर्थः। ननु भवतामपि अनुनिष्पादित्वांशस्याधिकस्य प्रवे-

क्षिप्तनाराचाद्धतब्राह्मणे च हिंसा न स्यात् । किञ्च* हिनस्तिधात्वर्थे अवच्छेदकं फलमव्यवहितमेव मरणं अव्यवहितफलकस्यैव व्यापारस्य धातुवाच्यत्वात् अन्यथा परम्परया विक्लित्तिफलकान्नकामेष्टतण्डुलक्रयादावपि पचतीतिप्रसङ्गात् । एवं खड्गाभिघातानन्तरं यत्र विलम्बेन मरणं व्रणपाकपरम्परया वा अन्ने विषप्रयोगेण वा तत्र हन्तृत्वं प्रायश्चित्तादि च न स्यात् इति चेत्, न, प्रायश्चित्ततुल्यतार्थं हि तत्र हन्तृव्यपदेशो

---

शात् क गौरवमत आह, 'मरणानुद्देशेनेति, 'नाराचः' शरः। ननु तस्य हिंसात्वाभावे इष्टापत्तेरेव तत्कर्त्तुर्हन्तृत्वव्यपदेशो भाक्त इत्यस्वरसादाह, 'किञ्चेति, इदञ्च यथाश्रुतलक्षणाभिप्रायेण। शङ्कते, 'एवमिति, 'खड्गेति, यत्र खड्गाभिघातानन्तरं व्रणपाकपरम्परया मरणं यत्रान्ने विषप्रयोगेण वा विलम्बेन मरणमित्यन्वयः, 'हन्तृत्वमिति 'न स्यादित्यनेनान्वयः, दूषणान्तरमाह, 'प्रायश्चित्तादि चेति। नन्वेवञ्चेन्मरणोद्देशेन क्रियमाणमरणानुकूलव्यापारत्वमेव हिंसात्वमस्तु भवन्मतेऽप्येव मरणानुद्देशेन क्षिप्तनाराचाद्ब्राह्मणमरणे हन्तृत्वव्यपदेशस्यापि गौणत्वस्य सुवचत्वेन विनिगमकाभावादित्यत आह, 'विनि-

---

* इष्टापत्तिमाशङ्क्याह, 'किञ्चेति, शङ्कते, 'एवमिति। ननूक्तरीत्या न लाघवं तथाच विनिगमकाभावादन्योद्देशक्षिप्तनाराचहतब्राह्मण एव हन्तृत्वव्यपदेशो गौणोऽस्तु व्रणपाकपरम्पराभूते च हन्तृत्वं मुख्यमेव तथाचा-

गौणः, विनिगमकञ्च लाघवमेव। वस्तुतस्तु मरणोद्देशेन कृतोऽदृष्टाद्वारकस्तदनुकूलव्यापारो हिंसा श्येन-

---

गमकञ्चेति, यद्यपि अनुनिष्पादित्वस्याधिकस्य प्रवेशात् कुतो लाघवं तथापि अस्मन्मते हिंसाधात्वर्थ एव हिंसापदेन बोध्यते इति लाघवं भवन्मते हि हिंसापदस्य समुदायस्य मरणोद्देशेन क्रियमाणमरणानुकूलव्यापारे शक्त्यन्तरं कल्पनीयमिति गौरवमिति भावः। नन्वव्यवहितफलकव्यापार एव धात्वर्थ इत्ययुक्तं गमधातौ व्यभिचारात् उत्तरसंयोगस्याव्यवहितफलाभावात् विभागादिना व्यवधानात् ददातीत्यादौ व्यभिचाराच्च स्वस्वत्वध्वंसानन्तरमेव परस्वत्वस्योत्पादात् सम्प्रदानस्वीकारविलम्बेन विलम्बात्, किञ्चैवं प्राणक्रियैव हिंसा स्यात् न तु खड्गाभिघातः प्राणक्रियया व्यवधानात् गलान्नसंयोगेऽतिव्याप्तिश्चेत्यरुचेराह, 'वस्तुतस्त्विति, कूपादौ गलान्नसंयोगे चातिव्याप्तिवारणाय 'मरणोद्देशेनेति, मरणोद्देशेन भ्रान्त्या क्रियमाणे घृतादिभक्षणेऽतिव्याप्तिवारणाय 'अदृष्टाद्वारकस्तदनुकूलेति अदृष्टाद्वारकमरणप्रयोजकेत्यर्थः, प्रयोजकत्वं फलोपधानरूपं नातः स्वरूपयोग्येऽतिप्रसङ्गः, त्रिसन्ध्यं अच्युतं केशवमित्यादिस्तवपाठे गङ्गामरणफलकेऽतिव्याप्तिवारणाय 'अदृष्टाद्वारकेति, न तु ब्रह्मशापादावतिव्याप्ति-

व्याप्तिर्गललग्नान्नभरणेऽतिव्याप्तिश्चेत्यपरितोषादाह, 'वस्तुतस्त्विति, तन्मरणोद्देशेनेति बोध्यं तेन विहङ्गमरणोद्देशे क्षिप्तनाराचहतब्राह्मणेऽपि न ब्राह्मणबधः। न चैवमन्यब्राह्मणोद्देशक्षिप्तनाराचेन तदन्यब्राह्मणे हतेऽपि ब्रह्मबधो न स्यात्तन्मरणस्य तत्रानुद्देश्यत्वादिति वाच्यं। इष्टापत्तेरित्येके।

वारणाय तत्, तस्यापि हिंसात्वे दूष्टापादनस्य सुकरत्वात् प्रायश्चित्तादिह्रासस्य वाचनिकत्वात् ।

सोन्दड़ोपाध्यायस्तु सकलरिपुक्षयकामकृतदुर्गामाहात्म्यपाठादेः(१) अदृष्टद्वारा रिपुमरणहेतुत्वात्तद्वारणायादृष्टाद्वारकत्वं विशेषणमावश्यकं, न हि श्येनवत्सोऽपि हिंसैवेति परेण सुवचं, सर्व्वस्य सर्व्वदा तत्र हिंसाव्यवहाराभावात् प्रायश्चित्तानुपदेशाच्च । अतएवाविगानेन तत्र शिष्टानां प्रवृत्तिरपीत्याहुः ।

मिश्रास्तु नरकविशेषजननौपयिकरूपमेव इह लक्ष्यं । न च हिंसामात्रं तथा, तस्य सर्व्वसाधारण्यात्, किन्तु मरणकर्तृत्वं नरकविशेषजनकमतः कर्त्तुरेव प्रत्यवायो नान्यस्य, कर्तृत्वञ्च अदृष्टाद्वारकतदनुकूलव्यापारगोचरकृतिमत्त्वं अन्यथा घटभोक्तुर्घटकर्तृत्वापत्तेरतो नादृष्टाद्वारकेति व्यर्थं, तच्च श्येनमपि वारयति न तु तदर्थं तदुपात्तं इत्याहुः । तन्न, 'ननु श्येन इत्यादिना हिंसालक्षणस्यैव प्रकृतत्वात्

(१) सकलोपद्रवक्षयकामकृतदुर्गामाहात्म्यपाठादेरिति ग० ।

ब्राह्मणमरणोद्देश्यकब्राह्मणमरणफलकव्यापाररूपाया ब्राह्मणहिंसायास्तत्राप्रत्यवायादित्येके । 'यदि चेति, ननु यदि सप्तमीतैलाभ्यङ्गः अनुद्दिश्य कृतस्तदा प्रथमविशेषणेनैव वारितः, यदि च तदुद्दिश्य कृतस्तदा असम्भवः इष्टमरणस्यानुद्देश्यत्वात् उद्देश्यत्वे वा श्येनतुल्यतया सोऽपि हिंसैवेति परेण सुवचत्वात्, कथं तदुपष्टम्भेनादृष्टाद्वारकत्वं विशेषणमिति चेत्, अत्र ब्रूमः, सकलानिष्टक्षयकामकृतदुर्गामाहात्म्यपाठादेरदृष्टद्वारापि रिपुमरणहेतुत्वात् तद्वारणार्थमदृष्टाद्वारकत्वं विशेषणमावश्यकं तस्य रिपुमरणोद्देशेनैव अनुष्ठीयमानतया तद्विशेषणेनावारणात्, न हि श्येनवत् सोऽपि हिंसैवेत्यपि

श्चादृष्टद्वारा मरणसाधनमतो न हिंसा। यदि चादृष्ट-
द्वारापि मरणसाधनं हिंसा स्यात् तदा सप्तमीतैला-

---

तस्या एव नरकजनकत्वात्। न चातिप्रसङ्गः, सम्बन्धविशेषेण तद्भङ्गात्। किञ्चादृष्टद्वारकमरणानुकूलव्यापारगोचरकृतिमत्त्वात् मा भूदसौ मरणकर्त्ता हिंसाकर्तृता च केन वार्य्यतामिति कुतो न श्येनो नरकविशेषहेतुः।

केचित्तु श्येनेनाभिचरन् यजेतेतिश्रुत्यर्थबाधभिया श्येनवारणायोक्तविशेषणमित्याहुः। तदसत्, कृतिसाध्यत्वे सतीष्टसाधनत्वमेव विधिना बोध्यते न तु बलवदनिष्टाननुबन्धित्वमपि अयोग्यत्वादिति केषाञ्चिन्मतेनैव श्रुत्यर्थोपपत्तेः।

'मरणसाधनं' मरणप्रयोजकं, एवमुत्तरत्रापि, यद्वा श्येनस्य मरणजनकव्यापाराजनकत्वेऽपि मरणजनकत्वमस्त्येवेत्यभिप्रायेणेदं। 'तदा सप्तमीतैलेति। न च सप्तमीतैलाभ्यङ्गो न दुष्टभार्य्यामरणोद्देशेन कृत-इति प्रथमविशेषणेनैव स वारित इति वाच्यं। वैराग्यादिना तदु-

---

परेशा सुवचं, सर्व्वस्य सर्व्वथा तत्र हिंसाव्यवहाराभावात् प्रायश्चित्तानुपदेशाच्च। अतएवाविगानेन सर्व्वेषां तत्र प्रवृत्तिरपि तद्वत्तदुद्देश्यककृततैलाभ्यङ्गस्यापि न हिंसात्वमिति तद्वारणायापीदं। न चेष्टमरणमनुद्देश्यमेवेति वाच्यं। वैराग्यादिना कदाचित् तत्सम्भवादिति।

केचित्तु स्तुत्यर्थवादभयेनैव श्येनस्यावश्यवारणीयतया अदृष्टाद्वारकत्वं विशेषणमावश्यकमिति सप्तमीतैलाभ्यङ्गोवारितोऽपि पुनर्वार्य्यते न तु तद्वारणार्थमेव विशेषणमित्याहुः।

भ्यङ्गस्यादृष्टद्वारा इष्टभार्य्याविनाशहेतुत्वादभ्यङ्गकर्त्तु-हिंसकत्वापत्तिः । अतएव कूपादौ गोमरणेऽपि न बधकर्तृत्वं तत्कर्त्तुः, गललग्नान्नमरणे न भोक्तुर्न वा परिवेषयितुरात्महन्तृत्वं ब्रह्महन्तृत्वं वा व्रणपाकपरम्परया विलम्बेन विषप्रयोगेण च हन्तृत्वं मुख्यमेव न

---

द्देशेन कृततैलाभ्यङ्गस्यापि न हिंसात्वमिति तद्वारणाय तदुपादानात् । इदमापाततः उद्देश्यत्वे श्येनतुल्यतया सोऽपि हिंसैवेति परेण सुवचत्वात् किन्तु त्रिसन्ध्यस्तवपाठ एवातिप्रसङ्गो बोध्यः । मरणोद्देशेनेत्यस्य प्रयोजनं दर्शयति, 'अतएवेति, भोक्तुरात्महन्तृत्वं परिवेषयितुर्ब्राह्मणहन्तृत्वमित्यन्वयः, 'व्रणपाकेति खड्गाभिघातानन्तरं व्रणपाकपरम्परयेत्यर्थः, 'विलम्बेन विषप्रयोगेण चेति विषप्रयोगेन विलम्बेन चेत्यर्थः, यत्र मरणं तत्रापीति शेषः । तत्रापि

---

यत्तु नरकविशेषजनकताप्रयोजकं रूपमिह विवक्षितं तस्यैव प्रकृतत्वान्नरकविशेषहेतुस्य न मरणानुकूलव्यापारमात्रं अकामकृते तत्प्रसङ्गात् अत्रार्द्धफलबलात् तद्व्यापारकर्त्तुरेव तन्नरकविशेषभागित्वात् कर्त्ता च तदिच्छापूर्व्वकतद्विषयककृतिमान्न तु तद्विषयककृतिमन्मात्रं अतएव तन्न व्यपदेशो मत्तो भूतं न तु मया कृतमिति, यथा च तदुद्देश्यकत्वपूर्व्वकत्वं तथादृष्टाद्वारकत्वमपि अदृष्टद्वारककृतेः कर्तृत्वानिर्व्वाहकत्वात्, अतएव घटभोक्ता न तत्कर्त्तेति व्यवह्रियते, तथाच नरकविशेषजनकताप्रयोजकं तद्व्यापारकर्तृत्वमिति कर्तृत्वनिर्व्वाहायैतद्विशेषणमिति तच्चिन्त्यं, तावता मरणं प्रत्यकर्तृत्वेऽपि तदनुकूलव्यापारकर्तृत्वबाधकाभावात् । न हि मरणा-

त्वनुनिष्पादिमरणफलकत्वं गललग्नान्नमरणे स्वहन्तृ-त्वापत्तेः। अन्योद्देशेन क्षिप्तनाराचेन हते ब्राह्मणे ब्रह्महन्तृत्वं न स्यादिति चेत्, न, इष्टापत्तेः व्यपदेशस्तु

खड्गाभिघातादेरदृष्टाद्वारा मरणप्रयोजकत्वात् तदुद्देशेन कृतत्वाच्चेति भावः। पूर्व्वोक्तलक्षणपरित्यागे हेतुमाह, 'न त्विति, 'गललग्नेति। न च सा हिंसैव प्रत्यवायाभावस्तु वाचनिक एव यथा स्मृतिः "क्रियमाणोपकारे तु मृते विप्रे न पापभागिति[१] वाच्यं। तथा व्यवहारापत्तेः, प्रत्यवायाभावान्न व्यवहार इति चेत्, न, सति व्यवहार्य्ये तस्याकिञ्चित्करत्वात् वैधपशुघातस्य हिंसात्वव्यवहाराच्च। न चैवं तत्स्मृतिवैयर्थ्यं तस्य हिंसात्वाभावेन प्रत्यवायजनकत्वस्यासम्भावितत्वादिति वाच्यं। न्यायमूलस्मृत्यन्तरवदुपपत्तेः। 'इष्टापत्तेरिति। न चैकमेव ब्राह्मणमुद्दिश्य क्षिप्तनाराचेन तदतिरिक्तब्राह्मणे हतेऽपि ब्रह्मवधो न स्यात् तन्मरणस्य तत्रानुद्देश्यादिति वाच्यं। ब्राह्मणमरणोद्देश्यकब्राह्मणमरणफलकव्यापाररूपाया अनुगतहिंसायास्तत्राप्यनपायात्, न हि चैत्रादिविशेषघटिता ब्रह्महिंसा,

(१) न दोषभागितीति क०।

कूलघ्नेनयागान्तर्गतव्यापारकलापेऽपि कर्त्तव्ये कृतेरदृष्टद्वारकत्वं। न च मरणकर्तृत्वमेव नरकविशेषजनकमिति वाच्यं। खड्गाघातादिना यत्र मरणं तत्रापि नरकानापत्तेः। न हि प्राण-शरीरविभागादिरूपे मरणे अस्मदादेः कर्तृत्वं, तदुपादाने गौरवादस्मदादिज्ञानाजन्यत्वादिति प्रकाशः।

गौणः प्रयोगो लक्षणयापि समर्थयितुं शक्यते तत्पक्षेऽतिप्रसङ्गो वारयितुं न शक्यत इतीदमेव विनिगमकं। अतएव* अतदुद्देशेन कृतेऽपि निषिद्धे प्रायश्चित्ताद्युक्तं।

---

अननुगमापत्तेः। ननु व्रणपाकपरम्परया मृत एव तद्व्यपदेशो गौणोऽस्तु तथाचानुनिष्पादिमरणफलकव्यापारत्वरूपमेव हिंसात्वमस्तु विनिगमकाभावादित्यत आह, 'प्रयोग इति, 'तत्पचे' अनुनिष्पादीत्यादिलक्षणपचे, 'अतिप्रसङ्ग इति, गलत्तग्रासमरण इति शेषः। 'अतएव' गौणहिंसाव्यवहारादेव। न चैवं पित्रा मात्रा वा शिक्षार्थं चपेटप्रहारादिना दैवात् मृते ब्राह्मणे हिंसा न स्यात् तन्मरणोद्देशेनाकृतत्वादिति वाच्यं। इष्टापत्तेः प्रत्यवायोऽपि न तत्र तथाच स्मृतिः "क्रियमाणोपकारे तु मृते विप्रे न दोषभाक्" इति। नन्वत्र मरणं प्राणस्य क्रियाविशेषो वा विभागविशेषो वा संयोगध्वंसविशेषो वा। न चैतेष्वेकतर इति वाच्यं। अन्यतमोद्देशेन कृतेऽव्याप्तेः, सर्व्वमिति चेत्, न, एकमात्रोद्देशेन कृतेऽव्याप्तेः। न च हिंसापदस्य नानार्थता, मा हिंस्यादित्यादिश्रुतौ हिंसापदार्थस्याननुगतस्यानिर्वचनात्, अन्यतम इति चेत्, न, तथापि मरणसमशीलं शिरश्छेदादिकमुद्दिश्य कृते व्यापारेऽव्याप्तिः। मैवं, मरणपदेनात्र शिरश्छेदादिकमन्तर्भाव्यान्यतमस्य उक्तत्वात्।

---

* मरणोद्देशेनेत्यस्य प्रयोजनं दर्शयति, 'अतएवेति। ननु व्रणपाकपरम्परामृत एव तद्व्यपदेशो गौणोऽस्तु विनिगमकाभावादित्यत आह,

अपरे तु अनभिसंहितनरान्तरव्यापारमद्वारीकृत्य

---

हरिनाथोपाध्यायलक्षणं दूषयितुमाह, 'अपरे त्विति, मरण-साधनत्वमात्रोक्तौ खड्गकारस्य खड्गघटनायाश्च हिंसात्वापत्तिः अत-उक्तं 'कृत्यान्तं, तस्य तु नरान्तरव्यापारः खड्गप्राणाभिघात एव द्वारमिति नातिप्रसङ्गः तथात्वेऽपि अन्ने विषप्रयोगेऽव्याप्तिः तस्य हि नरान्तरव्यापारो भोजनमेव द्वारमतः 'अनभिसंहितेति, भोज-नन्तु अभिसंहितमेवेति अनेनेदं भोक्तव्यमित्यभिसन्धाय विषप्रयो-गात् अतएव परद्वारा विषं दत्त्वा मरणेऽपि गतं विशिष्टव्यतिरे-कात्, अनभिसंहितप्राणक्रियाद्वारक-खड्गाभिघातादिसङ्ग्रहाय 'नरा-न्तरेति हिंसकत्वेनाभिमतभिन्ननरेत्यर्थः, प्राणक्रिया तु न नरव्या-पारः प्राणस्य नरत्वाभावात् प्राणक्रियाया अपि परम्परया हिंसक-नरस्यैव व्यापारत्वात्तद्दोषतादवस्थ्यमतो हिंसकभिन्नेति। यद्वा दैवाद्ब्राह्मणमरणसाधनस्य अन्योद्देशेन क्षिप्तनाराचक्रियायाः सङ्ग्र-हाय हिंसकभिन्नेति, अन्यथा तत्क्रियाया अनभिसंहितनर-व्यापारः परम्परया हिंसकनरजन्यब्राह्मणप्राणशराभिघात एव तस्यैव द्वारत्वादव्याप्त्यापत्तेः, इत्यञ्च ब्राह्मणप्राणशराभिघातो न हिंसकन-रभिन्नव्यापारः प्राण-शरयोर्नरत्वाभावात् ब्राह्मणस्य तु तदजनक-त्वात्, अभिसंहितनरान्तरव्यापारं द्वारीकृत्येत्युक्तौ खड्गघातादाव-

---

'प्रयोग इति, 'तत्पद्व इति, अनुनिष्पादीत्यत्रेत्यर्थः, 'अतिप्रसङ्ग इति, मलत्वमात्रमरणा इति शेषः,। 'अनभिसंहितेति विशिष्यानभिसंहितेत्यर्थः, श्येने तु नरान्तरस्य वैरिणो व्यापारो विशेषाकारेणानभिसंहित एव द्वार-

मरणसाधनं हिंसा खड्गकारस्यानभिसंहितनरान्तरव्यापारद्वारा मरणसाधनत्वं तस्य हि नरान्तरव्यापारो नाभिसंहितः किन्तु धनलाभ इति खड्गकारो न घातकः। विषस्यान्ने प्रक्षेपेण नरान्तरव्यापारो भोजनमेवाभिसंहितः अनेनेदं भोक्तव्यमित्यभिसन्धाय विषप्रयोगादिति हिंसैवान्ने विषप्रयोग इति। तन्न।

---

व्याप्तिरिति नञ्द्वयं। न च दैवान्महिषादिमरणसाधनेऽन्योद्देशककूपादावतिव्याप्तिः तस्यानभिसंहितमहिषव्यापारद्वारकत्वेऽपि अनभिसंहितनरान्तरव्यापारद्वारकत्वाभावादिति वाच्यं। नरपदस्य प्राणिमात्रपरत्वात्। न चैवं श्येनोऽपि हिंसा स्यात् अपूर्व्वस्यानभिसंहितत्वाभावादिति वाच्यं। अस्मिन्मते तस्यापि लक्ष्यत्वात् श्रुतिसङ्गतिस्वीकारीत्यैव। खड्गकारेऽतिव्याप्तिमुद्धरति, 'खड्गकारस्येति, खड्गघटनामादाय खड्गकारे हन्तृत्वप्रसङ्गं निराकरोति, 'तस्य हीति, 'न घातकः,' खड्गघटनामादायेत्यादिः। यद्वा खड्गघटनामादाय खड्गकारे हन्तृत्वप्रसङ्गं निराकरोति, 'खड्गकारस्येति, करणं कारः घटनेति यावत्, 'तस्य हीति तत्कर्त्तुर्हीत्यर्थः, यथाश्रुते 'खड्गकारो न घातक इत्यमिग्रन्थासङ्गतेः। ननु अनभिसंहितत्वं मरणहेतुत्वेनानभिसंहितत्वं विवक्षितमतः परिवेषके न प्रसङ्ग इत्यत आह,

---

मिति न तत्रातिप्रसङ्ग इति भावः। अत्र श्येनोऽपि सङ्ग्राह्य एवेत्यन्ये। साक्षाद्यत्र मरणं तत्परिग्रहाय नञ्द्वयं, मरणसाधनमित्युक्ते खड्ग-

गललग्नकवलाद्यत्र मरणं तत्र परिवेषयितुर्घातकतापातात् अनेनेदं भोक्तव्यं इत्यभिसन्धाय परिवेषणाद्भोक्तुरात्महन्तृत्वापत्तेश्च अनभिसंहितनरान्तरव्यापारमद्वारीकृत्य मरणानुकूलान्नभक्षणानुष्ठानात्। अतएवाव्यवहितप्राणवियोगफलको व्यापारो हिंसा व्रणपाकपरम्परया मृते तु हन्तृत्वं व्यापारस्याव्यवधायकत्वादिति निरस्तं।

स्यादेतत् नेष्टसाधनता विधिः नित्ये सन्ध्योपास-

---

'भोक्तुरिति, 'अतएवेति भोक्तुरात्महन्तृत्वापत्तेरेवेत्यर्थः, 'व्यापारस्याव्यवधायकत्वादिति, तथाच श्येनोऽपि हिंसैव व्यापारस्याव्यवधायकत्वादिति भावः। न चानुनिष्पादीत्यनेन पौनरुक्त्यं, तत्राव्यवधानसामान्यं मरणे विवक्षितं अत्र तु व्यापारेतरेणाव्यवधानमिति भेदात्। यद्वा पूर्व्वलक्षणे मरणपदं विभाग-संयोगध्वंसयोर्मध्ये यत् परं तदन्यपरमत्र वियोगपदमिति भेदः।

मीमांसकः शङ्कते, 'स्यादेतदिति, 'विधिः' विधिप्रत्ययार्थः, 'न

---

कारस्यापि हिंसापत्तिरित्यत उक्तं, 'नरान्तरव्यापारमद्वारीकृत्येति, अन्ने विषप्रयोगेऽव्याप्तिवारणाय 'अनभिसंहितेति, अन्योद्देशे क्षिप्तनाराचेन हन्तृत्वपरिग्रहायान्तरपदमित्याहुः। नन्वयं व्यापारोऽस्य मरणं जनयत्वित्येवमाकारकमभिसन्धानं विवक्षितमिति परिवेषणे नातिप्रसङ्ग इत्यरुचेराह, 'भोक्तुरिति, तत्र नरान्तराभावेनैव विशिष्टाभावसत्त्वादिति भावः। 'अतएवेति भोक्तुरात्महन्तृत्वं स्यादित्यर्थः, 'अव्यवहितेति, पर्व्वं काला-

नादौ फलाभावात्। अथ नास्त्येव तत् नित्यं यत्रार्थवादादिकं विधिवाक्ये वा न फलं श्रुतमस्ति "सन्ध्यामुपासते ये तु सततं शंसितव्रताः। विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनं" इत्याद्यर्थवादात् "दद्यादहरहः श्राद्धं पितृभ्यः प्रीतिमावहन्" इत्यादिविधिवाक्यश्रवणाच्च, कृत्वाचिन्तयातूच्यते, यत्र न फलश्रुतिस्तत्र विश्वजिन्न्यायात् स्वर्गः फलमिति चेत्, न, कामनोपाधिकार्य्यत्वेन यागवन्नित्यताभङ्गप्रसङ्गादहरहः-

---

फलमिति, 'कृत्वाचिन्तया' प्रौढ्या, वस्तुतः सर्व्वत्रैव फलश्रुतिरस्त्येवेति भावः। 'कामनोपाधिकार्य्यत्वेनेति फलकामनाजन्यकृतिसाध्यत्वेनेत्यर्थः, 'यागवत्' काम्ययागवत्, 'नित्यताभङ्गेति शौच-तत्कालजीवित्वादिविशिष्टद्विजमात्रकृतिसाध्यतारूपाया नित्यताया भङ्गप्रसङ्गादित्यर्थः, 'मात्रपदं साकल्यार्थकं, कथं सन्ध्यावन्दनस्य तादृशनित्यता कथं वा तद्भङ्ग इत्युभयमुपपादयति, 'अहरहःश्रुत्या हीति अहरहः सन्ध्यामुपासीतेति श्रुत्येत्यर्थः, 'तत्कालेति सन्ध्यावन्दनत्वसामानाधिकरण्येन शौच-तत्तत्कालजीवित्वविशिष्टद्विजमात्रप्रत्येककृतिसाध्यत्वमवगतमित्यर्थः, एकसन्ध्याकालजीवित्वविशिष्टकृतिसाध्यत्वञ्च

---

व्यवधानं इष्टान्यथासिद्धिप्रयोजकव्यवधानाभाव इत्यपौनरुक्त्यं। अतएव प्रणापाकपरम्परास्मृते तत्र गौणो हन्तृत्वव्यपदेश इत्युक्तं, अत्र च हन्तृत्वं मुख्यमेवेत्याह, 'व्रणेति, 'दद्यादिति, तथाच नित्यश्राद्धे पितृगतप्रीतिरेव

श्रुत्या हि तत्कालजीविमात्रकृतिसाध्यं सन्ध्यावन्दन-

---

नान्यसन्ध्याकालीनसन्ध्यावन्दने विशिष्टकृतिसाध्यत्वस्य तत्र बाधात् शौच-तत्कालजीवित्वादेरधिकारिविशेषणतया पदाध्याहारादर्था-ध्याहाराद्वा तल्लाभः वीप्सा च तात्पर्य्यग्राहिकेति भावः। अत्रालस्या-भावस्य द्विजविशेषणत्वं द्रष्टव्यं,(१) अन्यथा बाधापत्तेः। न चैवमाल-स्यादिना सन्ध्यावन्दनाकरणे प्रत्यवायो न स्यादिति वाच्यं। प्रत्य-वायबोधकवाक्ये आलस्याभावादेरप्रवेशात्। न च सन्ध्यावन्दनत्व-सामानाधिकरण्येन तादृशकृतिसाध्यत्वबोधने सन्ध्यावन्दनमात्रस्य कर्त्तव्यत्वं न प्राप्तं सन्ध्यावन्दनत्वावच्छेदेन तदुपगमे बाधः भावि-सन्ध्याकालजीवित्वादिविशिष्टभाविद्विजकृतिसाध्यत्वस्यातीतसन्ध्याव-न्दने विरहात् एकपुरुषीयकृतिसाध्यत्वस्यापरपुरुषीयसन्ध्यावन्दने विरहाच्चेति वाच्यं। तत्सन्ध्याकालजीवित्वविशिष्टकृतिसाध्यत्वस्य तत्सन्ध्याकालीनसन्ध्यावन्दन एव सम्भवेन सन्ध्यावन्दनत्वसामाना-धिकरण्येन तादृशकृतिसाध्यत्वावगमेऽपि फलतः सन्ध्यावन्दनमात्रस्य कृतिसाध्यतावगमात् सर्व्वेषामेव सन्ध्याकालानां प्रातिस्विकरूपेण जीवित्वविशेषणतया प्रवेशात्, न ह्येकसन्ध्याकालजीवित्वविशिष्ट-कृतिसाध्यत्वमन्यसन्ध्याकालीनवन्दने सम्भवति, विशिष्टकृतिसाध्यत्वस्य

---

(१) आलस्याभावाद्यपि द्विजविशेषणं द्रष्टव्यमिति ग०।

---

फलमित्यर्थः, यावन्नित्य-नैमित्तिकानुष्ठानस्यावश्यं ब्रह्मलोकावाप्तिफलकत्वेऽपि

मवगतं, कामनोपाधिकार्य्यत्वे च यदा फलकामना नास्ति तदा तत्समय एव तत्कर्त्तव्यता न स्यात्, न हि तत्काले फलकामनावश्यम्भावः, प्रमाणाभावात्। किञ्च प्रथमप्रवृत्तेतरनिरपेक्षाहरहःश्रुत्या जीवि-

---

तत्र बाधादिति भावः। 'कामनोपाधिकार्य्यत्वे चेति फलकामना-धीनकृतिसाध्यत्वे चेत्यर्थः, 'यदा' यस्मिन् काले, 'फलकामना नास्ति' यत्पुरुषस्य फलकामना नास्ति, 'तदेति, 'तत्समये तदा तत्कर्त्त-व्यतैव न स्यादिति योजना, 'तत्समये' इत्यस्य च सन्ध्याकालः समयो यस्येति व्युत्पत्त्या तत्सन्ध्याकालवन्दन इत्यर्थः, 'तत्कर्त्तव्यतेत्यस्य च तत्सन्ध्याकालजीवित्वविशिष्टस्य तत्पुरुषस्य तत्कर्त्तव्यतैवेत्यर्थः, 'न हीति, 'तत्काले' सन्ध्याकाले, 'फलकामनावश्यम्भावः' शुचि-तत्का-लजीवित्वादिविशिष्टमात्रस्यैव फलकामनावश्यम्भावः(१)। सन्ध्यावन्द-नस्य फलकामनाधीनकृतिसाध्यत्वे प्रमाणमपि नास्तीत्याह, 'किञ्चेति, 'प्रथमप्रवृत्तेति प्रथमोत्पन्नेत्यर्थः, 'इतरनिरपेक्षेति शाब्दानुभव-जनने वाक्यान्तरनिरपेक्षेत्यर्थः, यद्वा इतरनिरपेक्षः सन् प्रथम-प्रवृत्तेति योजना, अर्थवादनिरपेक्षः सन् प्रथमशाब्दबोधजनके-त्यर्थः,(२) 'जीविमात्रस्याधिकारोऽवगत इति सन्ध्यावन्दनत्वसामा-

---

(१) तत्पुरुषीयतत्फलकामनासत्त्वनियम इति घ०।

(२) अर्थवादनिरपेक्षा सती प्रथमशाब्दबोधजनिकेत्यर्थ इति क०।

---

प्रौढिवादेनाह, 'कृत्वेति अभ्युपगमवादेनेत्यर्थः। 'प्रथमेति, नियोगविधि-

मात्रस्याधिकारोऽवगतस्तथाच तत्सापेक्षचरमप्रवृत्त्यर्थवादोपनीतफलकामस्य न तत्राधिकारः प्रथमप्रवृ-

नाधिकरणेन शौच-तत्कालजीवित्वादिविशिष्टस्य सर्व्वस्य प्रत्येककृतिसाध्यत्वमवगतमित्यर्थः, 'तत्सापेक्षेति, भवन्मते अहरहःश्रुतिबोधितं यत् सन्ध्योपासनजन्यमिष्टं तत् किमित्याकाङ्क्षायां(१) अहरहःश्रुतिसापेक्षः सन् चरमप्रवृत्तिश्चरमं शाब्दबोधजनकोयोऽर्थवादः तदुपनीतं यत् फलं तत्कामस्य, 'न तत्राधिकारः' न कृतिसाध्यतावगम इत्यर्थः, 'विरोधात्' अप्रामाण्यप्रसङ्गात् ।

मिश्रानुयायिनस्तु ननु अर्थवादबलात् कामनाविशिष्टकृतिसाध्यत्वे अवगते(२) विशेषणीभूतकामनाया अपि तद्गोचरकृतिहेतुत्वसिद्धौ अहरहःश्रुतिसिद्धजीविमात्रकृतिसाध्यत्वमेव जीविमात्रस्य तदानीं तत्कामनावश्यम्भावे मानमित्यतोऽर्थवादात् कामनाविशिष्टकृतिसाध्यत्वावगम एव न सम्भवतीत्याह, 'किञ्चेति, 'अहरहःश्रुतिविरोधादिति अहरहःश्रुत्या कामनाविशिष्टकृतिसाध्यत्वान्वयप्रयोजकीभूताया: कीदृशस्य तत्कृतिसाध्यमित्याकाङ्क्षाया विघटकत्वादित्यर्थः, अहरहःश्रुत्या प्रथमतो जीवित्वादिविशिष्टस्य कृतिसाध्यत्वावगमे तादृशाकाङ्क्षाया असम्भवादिति भाव इत्याहुः ।

(१) अहरहःश्रुतिबोधितं सन्ध्योपासनजन्यमिष्टं किमित्याकाङ्क्षाद्वारेति घ०।
(२) सिद्ध इति क० ।

रादौ प्रवर्त्तत इत्यभ्युपगमादिति भावः। 'तत्सापेक्षेति, नियोगफलाकाङ्क्षायामस्य प्रवृत्तिरिति भावः। 'प्रथमेति, उपजीव्यविरोधादित्यर्थः, नन्वेवं

साहरहःश्रुतिविरोधान्नित्ये फलश्रुतेरर्थवादस्य च स्तुतौ तात्पर्य्यं। अतएव प्रत्यवायपरिहारोऽपि न फलं तत्कामनोपाधिकार्य्यत्वे नित्यताक्षतेः। किञ्च नित्ये कर्त्तव्यताबोधनात् प्राक् न प्रत्यवाये प्रमाणमस्ति विधेः

---

नन्वेवं "दद्यादहरहः श्राद्धमित्यत्र फलश्रुतेः "सन्ध्यामुपासते ये त्वित्यर्थवादस्य च का गतिरित्यत आह, 'नित्यइति, 'फलश्रुतेः' विधिवाक्ये फलश्रुतेः, 'अर्थवादस्य चेति फलबोधकार्थवादस्य चेत्यर्थः, 'स्तुतौ' स्तुतित्वे, 'तात्पर्य्यं' वक्तुरभिप्रेतत्वं, 'तत्कामनोपाधीति प्रत्यवायपरीहारकामनाधीनकृतिसाध्यत्वे इत्यर्थः, 'नित्यताक्षतेरिति शौच-तत्कालजीवित्वादिविशिष्टद्विजमात्रकृतिसाध्यतारूपाया नित्यताया भङ्गापत्तेरित्यर्थः। प्रत्यवायपरिहारस्य फलत्वे अन्योन्याश्रयोऽपि भवतीत्याह, 'किञ्चेति।

मिश्रानुयायिनस्तु 'नित्यताक्षतेः' प्रत्यवायज्ञानं विना प्रवृत्तिविषयत्वाभावापत्तेः। ननु प्रत्यवायाप्रतिसन्धाने तत्कारणं नास्त्येवेत्यत्रेष्टापत्तिरित्यतोऽन्योन्याश्रयरूपं दोषान्तरमाह, 'किञ्चेतीत्याहुः।

'नित्य इति, 'कर्त्तव्यताबोधनात्' विधिना कर्त्तव्यताबोधनात्, 'प्राक् न प्रत्यवाये प्रमाणमस्तीति न प्रत्यवायत्वरूपेण प्रत्यवायज्ञानमस्तीत्यर्थः, 'विधेरिति पञ्चमी, यत इत्यादिः, 'कर्त्तव्यत्वं'

---

फलश्रुतेः का गतिरित्यत आह, 'नित्य इति, सा च विधिशक्तिमवसीदन्तीमुत्तम्भाति तदुक्तं "विधिशक्तिरवसीदन्ती स्तुत्यादिभिरुत्तभ्यत इति,

**कर्त्तव्यत्वमवगम्य कर्त्तव्याकरणे प्रत्यवायकल्पनं, विधिश्च फलाभावेन प्रथमं मूक एव, एवञ्च प्रत्यवायप्रमितौ विधिप्रवृत्तिः तत्प्रवृत्तौ च कर्त्तव्याकरणे प्रत्यवाय-कल्पनं इत्यन्योन्याश्रयः ।**

---

विधेरहरहःकर्त्तव्यत्वं, 'कर्त्तव्याकरण इति सन्ध्यावन्दनकरणाभावस्य वेदबोधितप्रतिदिनकर्त्तव्यताकगोचरकरणाभावत्वज्ञाने इत्यर्थः, 'प्रत्यवायकल्पनमिति तेन हेतुना जनकतासम्बन्धेन प्रत्यवायानुमानमित्यर्थः, "अकुर्व्वन् विहितं कर्म्मेत्यादिना प्रतिदिनविहित-तत्करणाभावस्य[1] प्रत्यवायजनकत्वबोधनादिति भावः । 'फलाभा-वेनेति प्रत्यवायज्ञानाभावात् विशिष्य प्रत्यवायपरीहाररूपफल-ज्ञानाभावेनेत्यर्थः, 'प्रथमं मूकएवेति प्रथमं तव मते कृतिसाध्यत्व-ज्ञानजननासमर्थ एवेत्यर्थः, तव नये इष्टसाधनत्वविशिष्टकृतिसाध्यत्वस्य विध्यर्थतया इष्टसाधनत्वं विहाय कृतिसाध्यत्वस्य बोधयितुमशक्यत्वादिति भावः । 'प्रत्यवायप्रमितावितिति विशिष्य प्रत्यवायोपस्थि-तावित्यर्थः, 'विधिप्रवृत्तिः' विधितः प्रतिदिनकार्य्यताज्ञानं, 'कर्त्त-व्याकरण इति वेदबोधितप्रतिदिनकर्त्तव्यताकगोचरकारणाभा-वत्वज्ञान इत्यर्थः, 'प्रत्यवायकल्पनं' तेन हेतुना जनकतासम्ब-न्धेन प्रत्यवायानुमानं, 'अन्योन्याश्रय इति । यद्यपि प्रमाणा-

---

(१) प्रतिदिनविहितकर्म्मकरणाभावस्येति ग० ।

---

'विधिश्चेति, त्वन्मत इति शेषः । 'कर्त्तव्येति, "अकुर्व्वन् विहितं कर्म्मेत्यादिना

न्तरादिविशिष्य प्रत्यवायानुपस्थितावपि विधिजन्योपस्थितित एव विशिष्य प्रत्यवायपरिहाररूपेष्टसाधनत्वावगमसम्भवः विशिष्य फलज्ञानाभावेऽपि सामान्यत इष्टत्वेन इष्टसाधनताबोधे बाधकाभावश्च। तथापि सामान्यत इष्टत्वेन इष्टसाधनत्वस्यैव विध्यर्थतया विधितोन विशिष्य प्रत्यवायपरिहाररूपेष्टसाधसनत्वोपस्थितिसम्भवः न वा विशिष्य फलज्ञानाभावेऽपि सामान्यत इष्टत्वेन इष्टसाधनताबोधसम्भवः विशिष्य फलेन समभिव्याहृतस्याभेदेनान्वयबोधजननं विना इष्टसाधनताबोधजनकत्वस्य विधेरव्युत्पन्नत्वात् । अतएव स्वर्गकामोयजेतेत्यादौ यागः स्वर्गाभिन्नेष्टसाधनमित्यन्वय इत्यभिमानेनेदं । वस्तुतस्तु विशिष्य फलज्ञानाभावेऽपि सामान्यत इष्टत्वेन इष्टसाधनताबोधे बाधकाभावः, अन्यथा विश्वजित्स्थलेऽपि प्रथमं सामान्यतइष्टसाधनत्वज्ञानासम्भवात् परन्तु प्रत्यवायपरीहारस्य फलत्वे प्रागुक्तनित्यताक्षतिः परीहारस्य नित्यतया फलत्वासम्भवो वा वक्ष्यमाणदोषो बोध्य इति सम्प्रदायः ।

केचित्तु 'न प्रत्यवाये प्रमाणमिति, न तत्करणाभावस्य प्रत्यवायजनकत्वे मानमित्यर्थः, 'विधेरिति पञ्चमी, यत इत्यादिः, 'कर्त्तव्यत्वं' अहरहःकर्त्तव्यत्वं, 'कर्त्तव्याकरण इति प्रतिदिनकर्त्तव्यत्वेन वेदबोधिताकरणत्वेन हेतुनेत्यर्थः, 'प्रत्यवायकल्पनं' तत्करणाभावस्य प्रत्यवायजनकत्वकल्पनं, 'फलाभावेनेति, प्रत्यवायपरीहाररूपफलसाधनत्वान्वयासम्भवेनेत्यर्थः, 'प्रथमं' सन्ध्यावन्दनादिकरणाभावनिष्ठप्रत्यवायजनकत्वज्ञानात् पूर्व्वं, 'मूक एव' तव मते शाब्दबोधाजनक एव, भवन्मते कृतिसाध्यत्वविशिष्टफलसाधनत्वस्य विध्यर्थ-

अपरे तु न विधेः कर्त्तव्यत्वमवगम्य कर्त्तव्याकरणे प्रत्यवायकल्पनं येनान्योन्याश्रयः किन्तु निन्दार्थवा-

---

तया फलसाधनत्वमबोधयित्वा कृतिसाध्यत्वबोधनेऽप्यसामर्थ्यात्। न च सन्ध्यावन्दनादिकरणाभावनिष्ठप्रत्यवायजनकत्वज्ञानात् पूर्व्वं सन्ध्यावन्दने प्रत्यवायपरीहाररूपफलसाधनत्वान्वय एव कुतो न सम्भवतीति वाच्यं। विधिवाक्ये प्रत्यवायपरीहाररूपफलश्रुतेरभावेन सन्ध्यावन्दनादिकरणाभावनिष्ठप्रत्यवायजनकत्वज्ञानस्यैव सन्ध्यावन्दनादिनिष्ठप्रत्यवायपरीहाररूपफलसाधनत्वप्रतीतौ तात्पर्य्यग्राहकत्वात् तत्परीहारसाधनत्वप्रतीतौ तज्जनकीभूताभावप्रतियोगिकृतिविषयत्वस्यान्वयप्रयोजकरूपतया योग्यतात्वेन योग्यताज्ञानाभावाच्चेति भावः। ननु सन्ध्यावन्दनादिकरणाभावनिष्ठप्रत्यवायजनकत्वज्ञानानन्तरमेव विधेः प्रवृत्तिः स्यादित्यत आह, 'एवञ्चेति, 'प्रत्यवायप्रमितौ' अकरणनिष्ठप्रत्यवायजनकत्वप्रतीतौ, 'विधिप्रवृत्तिः' विधितः शाब्दबोधः, 'कर्त्तव्याकरणे' वेदबोधितप्रतिदिनकर्त्तव्यताकाकरणत्वेन हेतुना, 'प्रत्यवायकल्पनमिति प्रत्यवायजनकत्वज्ञानमित्यर्थ इति प्राहुः।

'कर्त्तव्यत्वमवगम्येति, 'कर्त्तव्यत्वं' कृतिसाध्यत्वे सति प्रत्यवायपरिहाररूपफलजनकत्वं, 'कर्त्तव्याकरणे' वेदबोधितप्रतिदिनकर्त्तव्यताकाकरणत्वेन हेतुना, 'प्रत्यवायकल्पनमिति सम्प्रदायमते प्रत्यवायत्वरूपेण प्रत्यवायानुमानमित्यर्थः, केषाञ्चिन्मते तु सन्ध्योपासनाभावस्य प्रत्यवायजनकत्वज्ञानमित्यर्थः, 'निन्दार्थवादेन' निन्दार्थ-

---

विहिताकरणस्यैव प्रत्यवायहेतुत्वबोधनादिति भावः। 'निन्दार्थवादेनेति,

देन प्रायश्चित्तोपदेशेन चोपासनस्य प्रकृत्यर्थस्य ताव-द्व्यापारस्वरूपस्याभावः प्रत्यवायहेतुरवगतः, तथाच सन्ध्योपासनाभावः प्रत्यवायद्वारा दुःखसाधनं, तद-भावः सन्ध्योपासनं दुःखसाधनाभावत्वेन फलं, प्राय-श्चित्ते पापध्वंसवदिति तत्साधनत्वेन कृतिर्बोध्यते वि-धिना । न चैवं प्रत्यवायपरिहार एव फलमस्त्विति वाच्यं । परिहारस्य प्रागभावरूपत्वेन अनादितया

---

वादविषयत्वेन, 'प्रायश्चित्तोपदेशेन' प्रायश्चित्तविधिविषयत्वेन, 'प्रकृ-त्यर्थस्येति "नोपास्ते यस्तु पश्चिमामित्यादावुपास्तिधात्वर्थस्येत्यर्थः, 'फलं' इष्टं, 'प्रायश्चित्ते' प्रायश्चित्तस्य, 'तत्साधनत्वेनेति सन्ध्योपा-सनरूपेष्टसाधनत्वेनेत्यर्थः, 'कृतिः' सन्ध्योपासनविषयिका कृतिः, कृतीष्टसाधनताज्ञानमेव च प्रवर्त्तकमिति भावः । 'न चैवमिति, 'एवं' उक्तरीत्या अन्योन्याश्रयाभावे, 'प्रागभावरूपत्वेनेति अत्यन्ता-

---

यद्यपि तस्य साक्षान्न प्रत्यवायहेतुत्वं विषयस्तथापि तादृशार्थवादविषयत्वस्य प्रत्यवायहेतुत्वव्याप्यत्वात् तेन लिङ्गेन तद्बोधनादिति भावः । 'प्रायश्चित्तेति तद्विषयत्वस्य तद्व्याप्यत्वादिति भावः । सन्ध्योपासनाभावप्रायश्चित्तमिति शब्दात् प्रतीते प्रायश्चित्ते प्रायश्चित्तपदार्थालोचने क्रियमाणे "प्रायः पापं विजानीयाच्चित्तं तस्य विशोधनमिति तदर्थसङ्केतग्राहकार्थवादप्रवृत्तौ पाप-नाशककर्म्मप्राप्तौ पापस्य हेत्वाकाङ्क्षायामुपस्थितस्य सन्ध्यावन्दनाभावस्य हेतु-ताग्रह इति भाव इत्यन्ये । इष्टसाधनत्वमुपपादयति, 'तत्साधनत्वेनेति, तत्-कृतीष्टसाधनताज्ञानस्यैव तत्र प्रवर्त्तकत्वमिति मतेनेदं । 'न चैवमिति, 'एवं'

असाध्यत्वात्। न च उपासनाकरणं प्रत्यवायहेतुर्नोपासनाभावः तथाच दुःखसाधनाभावत्वेन कृतिरिष्टा न तूपासनमिति वाच्यं। निन्दार्थवादस्योभयत्र सत्त्वेन उभयस्यापि तथात्वादिति, तन्न, एवमपि काम्यत्वे नित्यताक्षतिप्रसङ्गात्। किञ्च "अकुर्व्वन् विहितं कर्म्मेत्यादिना "नोपास्ते यश्च पश्चिमामित्यादिना च करणाभावस्यैव प्रत्यवायहेतुत्वं बोध्यते न तु तद्विषयाभावस्य, अन्यथा अकर्त्तुः प्रत्यवायो नान्यस्येति कथं

भावरूपत्वेन वेति शेषः, 'असाध्यत्वात्' सन्ध्योपासनाद्यजन्यत्वात्। 'कृतिरिष्टेति उपासनागोचरकृतिरिष्टेत्यर्थः, तथाच उपासनागोचरकृतिसाधनत्वमुपासनागोचरकृतौ बाधितमिति कुतोविधिरिति भावः[१]। 'उभयत्रेति सन्ध्योपासनाभाव-तत्करणाभावयोरुभयोरेवेत्यर्थः, 'काम्यत्वे' सन्ध्योपासनारूपफलकामनाधीनकृतिसाध्यत्वे। 'किञ्चेति, 'नोपास्ते इत्यत्राख्यातार्थकृतौ नञर्थान्वयादिति भावः। 'अन्यथा' विषयाभावस्यैव प्रत्यवायहेतुत्वे, 'नान्यस्येति न कर्त्तु-

(१) कुत एवेदमिति भाव इति ग०।

प्रत्यवायपरिहारस्योक्तगत्या प्रथमोपस्थितत्वे, 'कृतिरिष्टेति तथाच कृतावपि नेष्टसाधनतान्वय इति भावः। 'उभयत्रेति सन्ध्योपासनाभावे तदकरणे चेत्यर्थः, "एतत् सन्ध्यात्रयं प्रोक्तं ब्राह्मण्यं यदधिष्ठितं। यस्य नास्त्यादरस्तत्र न स ब्राह्मण उच्यते" ॥ इत्यादेरुभयसाधारणत्वादिति भावः। 'नोपास्ते इति-आख्यातस्य कृतिपरत्वान्नोपासनाविषयककृतिमानित्यर्थः। ननु विषयाभावेऽपि निन्दार्थवाद इत्यत आह, 'अन्यथेति, तथाचानन्यगत्या तत्रापि

स्यात् विषयाभावस्य साधारण्यात् । वस्तुतस्तु कृतिसाध्यत्वे सतीष्टसाधनताज्ञानं प्रवर्त्तकत्वेन निर्व्यूढं । न च कृतौ कृतिसाध्यत्वमस्तीत्यतो न किञ्चिदेतत् ।

नव्यास्तु[१] नित्यापूर्व्वप्रागभावो दुरितद्वारा दुःख-

रित्यर्थः, 'विषयाभावस्येति उपासनारूपक्रियाया अभावस्येत्यर्थः, 'साधारण्यादिति उपासनाकर्त्तुरात्मन्यपि सत्त्वादित्यर्थः, क्रियायाः आत्मन्यसमवायादिति भावः । न च स्वजनककृत्याश्रयत्वलक्षण-परम्परासम्बन्धेन तदभावोहेतुरिति वाच्यं । तादृशस्य सम्बन्धत्वे अभावप्रतियोगितावच्छेदकत्वे च मानाभावादिति हृदयं । यद्वा एतदस्वरसेनैवाह, 'वस्तुतस्त्विति, 'कृतिसाध्यत्वे सतीति कृतिसाध्यत्व-विशिष्टेष्टसाधनत्वस्य ज्ञानमित्यर्थः, 'निर्व्यूढं' न्यायमते निर्व्यूढं । 'न च कृताविति, तथाच विशिष्टेष्टसाधनताज्ञानस्य तत्रासम्भवात् कुतस्तद्विशिष्टेष्टसाधनताज्ञानात्प्रवृत्तिरिति भावः । इदमुपलक्षणं यजेतेत्यत्र प्रकृत्यर्थे इष्टसाधनत्वान्वयस्य व्युत्पत्तिसिद्धत्वेन अत्र कृतौ तदन्वये व्युत्पत्तिविरोध इत्यपि द्रष्टव्यं । 'एतत्' अपरेतुमतं ।

'नव्याः' नैयायिकनव्याः, 'नित्येति नित्यजन्यापूर्वस्य प्रागभाव-

(१) नवीनास्त्विति क० ख० ।

कारणाभावस्यैव प्रत्यवायहेतुत्वे तात्पर्य्यं । 'विषयेति मार्ज्जनादिक्रियायाः शरीरनिष्ठत्वेन कर्त्तर्य्यपि तद्विरहादित्यर्थः । अस्तु चोक्तगत्या उपासनस्यैवे-ष्टत्वेन तत्कृतेरिष्टसाधनत्वं तथापि कृतिसाध्यत्वाभावादेव न प्रवृत्तिरित्याह, 'वस्तुतस्त्वितीति प्रकाशः ।

साधनं तदभावोऽपूर्व्वं दुःखसाधनाभावत्वेनेष्टं तत्सा-धनत्वेन कृतिसाध्यत्वेन च सन्ध्योपासनं विधीयते इति, तन्न, निन्दार्थवादादिना सन्ध्योपासनाभावस्तद-करणं वा प्रत्यवायहेतुरवगतो न त्वपूर्वाभावः प्रथमं

---

इत्यर्थः, एतत्सन्ध्याकालीनसन्ध्योपासनजन्यापूर्व्वस्य प्रागभावः का-लानवच्छिन्नाधिकरणत्वसम्बन्धेन तत्तत्सन्ध्याकालसहकृतः सन् दु-रितजनकः तेन प्रागभावस्यानादित्वेऽपि न सततं दुरितोत्पत्त्या-पत्तिः। एकसन्ध्योपासनजन्यापूर्वप्रागभावस्य प्रतिसन्ध्याकालसह-कारेण दुरितजनकत्ववारणाय तत्तत्सन्ध्याकालीनत्वं सन्ध्योपासन-विशेषणं, सन्ध्याकालस्य दण्डद्वयात्मकतया चरमदण्डकृतसन्ध्या-बन्दनकस्यापि प्रथमदण्डे दुरितोत्पत्तिवारणाय सम्बन्धविशेषानु-धावनं, कार्य्यतावच्छेदकञ्च सन्ध्याकालभेदविभिन्नदुरितनिष्ठवैजात्य-मेव तेन न परस्परं व्यभिचारः। न चैवमपि सन्ध्याकालस्य दण्ड-द्वयात्मकतया दण्डद्वयमेवाकृतसन्ध्याबन्दनकस्य धारावाहिकदुरि-तोत्पादापत्तिरिति वाच्यं। तत्तत्सन्ध्याकालजन्यदुरितविशेषोत्पत्तिं प्रति तत्तत्सन्ध्याकालीनत्वविशिष्टीभूय तादृशदुरितविशेषस्य प्रति-बन्धकत्वादिति भावः। 'निन्दार्थवादादिनेति "नोपास्ते यस्तु पश्चि-मामित्यादिनिन्दार्थवादविषयत्वादिनेत्यर्थः, 'सन्ध्योपासनेति त-त्तत्सन्ध्याकालीनसन्ध्योपासनस्य तादृशस्य सन्ध्योपासनकरणस्य वा अभाव इत्यर्थः, 'प्रत्यवायहेतुरिति कालानवच्छिन्नाधिकरणत्वसम्ब-

---

विधेरिष्टसाधनत्वबोधानन्तरं किन्तदिष्टमित्याकाङ्क्षायां अपव्वंकल्पनमित्याह,

प्रमाणाभावेन तदनुपस्थितेः विधेः* इष्टसाधनत्वबोधकत्वात् परिशेषेणापूर्वमिष्टं कल्प्यत इति चेत्, तर्हि विश्वजिन्न्यायेन स्वर्ग एव फलं कल्प्यतां काम्यत्वस्य त्वयापि स्वीकारात्, किञ्च विधिप्रवृत्तावपूर्वज्ञानं अपूर्वज्ञाने च विधिप्रवृत्तिरित्यन्योन्याश्रयः।

---

न्धेन तत्तत्सन्ध्याकालसम्बन्धतः सन् प्रत्यवायहेतुरित्यर्थः, कालानवच्छिन्नाधिकरणत्वस्य कारणतावच्छेदकसम्बन्धतया यदाकदाचित् कृतैकसन्ध्यावन्दनकस्य सन्ध्यावन्दनान्तराकरणेऽपि प्रत्यवायानुत्पत्तिवारणाय तत्तत्सन्ध्याकालीनत्वं सन्ध्योपासन-तत्करणयोर्विशेषणं, सर्व्वमन्यदुक्तदिशावसेयं। 'प्रथममिति निन्दार्थवादजन्यशाब्दबोधात् पूर्व्वमित्यर्थः, 'प्रमाणाभावेन' उपस्थापकपदाभावेन, 'तदनुपस्थितेः' अपूर्व्वाभावानुपस्थितेः, निन्दार्थवादविषयत्वस्य तत्रासिद्धेरिति शेषः। शङ्कते,'विधेरिति सन्ध्यामुपासीतेत्यादिनित्यविधेरित्यर्थः,'परिशेषेण' दृष्टान्तरबाधेन, 'स्वर्ग एवेति, नित्यजन्यापूर्व्वस्य स्वतः परतो वा पुरुषार्थत्वाभावेन दृष्टत्वाभावादिति भावः। 'अपूर्व्वज्ञानमिति इतरफलव्युदासेन परिशेषादपूर्व्वज्ञानमित्यर्थः, 'अन्योन्याश्रय इति, एतच्चापाततः विधेः सामान्यतः प्रथममिष्टसाधनत्वमादाय प्रवृत्तौ पश्चादनुपपत्त्या इतरफलव्युदासेनापूर्व्वरूपेष्टकल्पनमित्यपूर्व्वज्ञानं विनापि विधिप्रवृत्तिसम्भवेनान्योन्याश्रयाभावादिति ध्येयं।

---

* 'विधेरिति, 'तर्हीति, यद्यपि स्वर्गकल्पनेऽप्यपूर्व्वकल्पनमिति लाघवात्तदेव कल्पयितुमर्हं किञ्च स्वर्गकल्पनेऽपीष्टसाधानत्वं परस्याप्युपपन्नमेव

यावन्नित्य-नैमित्तिकनिर्वाहस्य तत्तदाश्रमविहित-कर्म्मणां सम्यक्परिपालनस्य च ब्रह्मलोकावाप्तिः फलं श्रूयते, तथाच नित्यस्य सफलत्वमिति केचित् । तन्न । तस्य विधेर्नित्यविधिमुपजीव्य प्रवृत्तिस्तस्य च फलाभावेन प्रथमं मूकत्वात्, अन्यथा परस्परसापेक्षत्वेनान्योन्याश्रयः तस्मात् कार्य्यतैव विधिः । ननु नित्ये

---

मतान्तरमाशङ्कते, 'यावदिति, 'कर्म्मणां' यावन्नित्य-नैमित्तिक-काम्यकर्म्मणां, तेन 'यावन्नित्येत्यादिना न पौनरुक्त्यं, 'श्रूयते' विधिना बोध्यते, 'तथाचेति, यावतामेव नित्यनैमित्तिकादिकर्म्मणां स्वस्वमात्र-जन्यापूर्व्वद्वारा दण्ड-चक्रवत् ब्रह्मलोकावाप्तिजनकत्वादिति भावः । 'तस्य विधेः' ब्रह्मलोकावाप्तिरूपफलबोधकविधेः, 'नित्यविधिमुपजीव्येति नित्यविधिवाक्येन शाब्दबोधजननानन्तरमेवेत्यर्थः, अहरहः-कर्त्तव्यतादिरूपनित्यत्वज्ञानस्य तदधीनत्वादिति भावः । 'फलाभावेनेति फलज्ञानाभावेनेत्यर्थः, इष्टसाधनत्वविशिष्टकृतिसाध्यत्वस्य विध्यर्थतया तदपहाय केवलकृतिसाध्यत्वेनापि बोधयितुमशक्यत्वादिति भावः । 'अन्योन्याश्रयः' नित्यविधितोऽहरहःकर्त्तव्यत्वादिरूपनित्य-

---

तथापि काम्यत्वे नित्यताव्यतिरिक्त्यर्थैव तात्पर्य्यं, किञ्च विशेषतः फलानुपस्थितौ विधिप्रवृत्तिरेव न भवतीत्याह, 'किञ्चेति । 'यावदिति, उपाधिभेदेन नित्य-नैमित्तिक-तत्तदाश्रयविहितकर्म्मणोर्भेदः, 'तस्य' ब्रह्मलोकावाप्तिफल-बोधकस्येत्यर्थः । 'नित्येति, विहितपरिपालनत्वादिना तत्प्रवृत्तेरिति भावः । तर्हि नित्यविधिरेव प्रथमं प्रवर्त्ततामित्यत आह, 'तस्य चेति,

वेदात् कार्य्यताज्ञानेऽपि प्रयोजनज्ञानं विना कथं प्रवृत्तिः, न हि प्रयोजनमनुद्दिश्य मन्दोऽपि प्रवर्त्तते इति चेत्, न, नित्ये फलबाधेन प्रवृत्तिमात्रे प्रयोजनज्ञानस्याप्रयोजकत्वात्, काम्येऽपि प्रयोजनज्ञानं न साक्षात् प्रवर्त्तकं उपायाविषयत्वात् प्रयोजनेऽप्रवृत्तेश्च, किन्त्विष्टसाधनताज्ञानद्वारा कार्य्यताज्ञाने उपक्षीण-

त्वज्ञानानन्तरमेव ब्रह्मलोकावाप्तिरूपफलबोधकविधिना फलज्ञानं जनयितव्यं तेन फलोपस्थितौ नित्यविधिना विशिष्टकृतिसाध्यत्वं बोधयितव्यं इतिक्रमेण बोद्धव्यः[१] । 'प्रयोजनज्ञानं विनेति, अमुकमिष्टमेतज्जन्यमिति इष्टेतज्जन्यत्वज्ञानं विनेत्यर्थः, एतच्च इष्टविशेष्यकतज्जन्यत्वज्ञानमपि स्वातन्त्र्येण हेतुरित्यभिमानेन । 'अनुद्दिश्य' तज्जन्यत्वेनाज्ञात्वा, 'प्रयोजनज्ञानस्य' इष्टनिष्ठजन्यताज्ञानस्य, एवं सर्व्वत्र, 'साक्षात्प्रवर्त्तकमिति अनन्यथासिद्धत्वे सति प्रवृत्तिप्रयोजकमित्यर्थः, 'उपायाविषयत्वादिति उपायाविशेष्यकत्वादित्यर्थः, उपायविशेष्यकज्ञानस्यैव चिकीर्षाद्वारा प्रवृत्तिप्रयोजकत्वादिति भावः । 'अप्रवृत्तेश्चेति उपायमुख्यविशेष्यतया अप्रवृत्तेश्चेत्यर्थः, 'इष्टसाधनताज्ञानद्वारेति, 'उपक्षीणं' उपयुक्तं, इदञ्च तन्निष्ठजन्यतानि-

(१) अन्योन्याश्रय इत्यादिः बोद्धव्य इत्यन्तः पाठः क-पुस्तके नास्ति ।

'कथमिति, प्रयोजनज्ञानमिष्टसाधनताज्ञानद्वारा प्रवृत्तिकारणं न भवति किन्तु कार्य्यताज्ञानोपक्षीणमिति निर्णयः कथमित्यर्थः । पर्व्वं फलज्ञानरूपकारणाभावान्न प्रवृत्तिरित्युक्तमिह तु निष्फलत्वज्ञानस्य प्रतिबन्धकत्वान्न

मेव, कथमयं निश्चयः नित्ये इष्टसाधनताज्ञानासम्भवात् कार्य्यताज्ञानस्य वेदादपि सम्भवात्। ननु निष्फले

---

रूपकत्वं तज्जनकत्वमित्यभिप्रायेण। 'अयं निश्चय इति प्रयोजनज्ञानं इष्टसाधनताज्ञानद्वारा काम्यस्थल एव प्रवृत्तिहेतुकार्य्यज्ञानोपयुक्तं न नित्यस्थल इति कथं निर्णय इत्यर्थः, 'इष्टसाधनताज्ञानासम्भवादिति नित्य इत्यादिः इष्टसाधनताज्ञानरूपद्वारासम्भवादित्यर्थः(१), प्रयोजनज्ञानस्याप्यसम्भवाच्चेत्यपि बोध्यं(२)। नन्वेवं कार्य्यताज्ञानमेव तत्र कथं स्यात् तस्य इष्टसाधनताज्ञानद्वारा प्रयोजनज्ञानाधीनत्वादित्यत आह, 'कार्य्यताज्ञानस्येति, तथाच इष्टसाधनतालिङ्गककृतिसाध्यताज्ञानमेव प्रयोजनज्ञानाधीनमिति भावः। यद्यपि वेदाधीनकार्य्यताज्ञानं न प्रवृत्तिहेतुः किन्तु स्वविशेषणवत्ताप्रतिसन्धानजन्यमेव तथेति शौचादिमत्त्वेन सम्भवादित्येव वक्तुमुचितं, तथापीष्टसाधनतालिङ्गककृतिसाध्यताज्ञान-वेदाधीनकृतिसाध्यताज्ञानयोरेकशक्तिमत्त्वेन प्रवृत्तिसामान्यहेतुत्ववादिनामयं ग्रन्थः, अतएवाग्रिमग्रन्थोऽपि सङ्गमयिष्यत इति ध्येयं। पूर्व्वं प्रयोजनज्ञानस्य प्रवृत्तिहेतुतया तेन विना कथं प्रवृत्तिरित्याशङ्कितं इदानीं निष्फलत्वादिज्ञानस्य प्रतिबन्धकत्वाभिप्रायेण पृच्छति, 'नन्विति, 'निष्फलत्वं'

---

(१) नित्ये प्रयोजनाप्रसिद्धेरिति भावः।

(२) प्रयोजनेऽप्येतज्जन्यत्वज्ञानासम्भवाच्चेत्यपि बोध्यमिति ग०।

---

प्रवर्त्तेतेत्याह, 'नन्विति, ननु यदि निष्फले फलज्ञानाभावान्न प्रवृत्त्यभावः

दुःखैकफले वा प्रेक्षावतां कथं प्रवृत्तिः, वेदाधीन-कार्य्यताज्ञानसत्त्वात् सफलप्रवृत्तावपि तस्यैव तन्त्रत्वात्। यत्तु लौकिके निष्फले दुःखैकफले वा न प्रवर्त्तते तदिष्टसाधनतालिङ्गकस्य कार्य्यताज्ञानस्य वेदाधीनस्य वा अभावात्। न च दुःखैकफलत्वज्ञानं प्रवृत्ति-प्रतिबन्धकं, सति कार्य्यताज्ञाने तस्य प्रतिबन्धकत्वा-

---

इष्टासाधनत्वं, 'दुःखैकफले वेति, 'वाकारस्त्वर्थे, नित्ये इति शेषः, 'कथं प्रवृत्तिरिति निष्फलत्वादिज्ञानाभावं विना कथं प्रवृत्तिरि-त्यर्थः, उत्तरयति, 'वेदाधीनेति, 'तस्यैवेति कार्य्यताज्ञानस्यैवेत्यर्थः, तथाच निष्फलत्वादिज्ञानस्य प्रतिबन्धकत्वे मानाभाव इति भावः । नन्वेवं लौकिकेऽपि दुःखैकफले प्रवृत्तिः स्यादिति दुःखैकफलत्व-ज्ञानस्य प्रतिबन्धकत्वमावश्यकमित्यत आह, 'यत्त्विति, 'यदिति 'न प्रवर्त्तत इत्यस्य विशेषणं, 'तत्' अप्रवर्त्तनं, 'वेदाधीनस्य वेति अन्य-तरकार्य्यताज्ञानस्यैकशक्तिमत्त्वेन हेतुत्वादिति भावः। इदञ्च न सम्यक् एवं सति विश्वजिता यजेतेत्यत्रापि स्वर्गकल्पना न स्यात् वेदाधीन-कार्य्यताज्ञानादेव प्रवृत्तिसम्भवादिति ध्येयं। 'न चेति, 'चस्त्वर्थः, 'कार्य्यताज्ञाने' तादृशान्यतरकार्य्यताज्ञाने । ननु प्रयोजननिष्ठतज्ज-न्यत्वज्ञानं विनापि यदि प्रवृत्तिस्तदा "प्रयोजनमनुद्दिश्य न मन्दो-ऽपि प्रवर्त्तते" इति सकलप्रामाणिकप्रवादव्याघात इत्यतो नित्येऽपि

किन्तु कार्य्यताज्ञानाभावात्तदा जलताड़नादौ दुःखैकफलतया ज्ञानेऽप्यनाम-

दर्शनात्। अथ वा काम्ये लिङोऽपूर्ववाचकत्वान्नित्येऽपि लिङोपासनादिविषयकमपूर्वं बोध्यते, तच्च निष्फलमपि स्वतएव सुखवत्प्रयोजनं नित्यमभ्यर्थ्यमानञ्चेति। उच्यते। सर्वत्र नित्ये फलश्रवणाज्जीविफल-

---

प्रयोजनमाह, 'अथ वेति, 'काम्ये' स्वर्गकामो यजेतेत्यादौ, 'अपूर्ववाचकत्वात्' कार्य्यत्वरूपेणापूर्व्वशक्तत्वात्, 'नित्येऽपि' सन्ध्यामुपासीतेत्यादावपि, 'विषयकं' जन्यं, 'अपूर्व्वं' पण्डापूर्व्वं, 'बोध्यत इति कार्य्यत्वरूपेण बोध्यत इत्यर्थः। वैदिकलिङ्त्वावच्छेदेनैव कार्य्यत्वरूपेणापूर्वशक्तिकल्पनात् तत्र च जन्यतासम्बन्धेन उपासनादेरन्वयः न तु अर्थवादाद्युपस्थितब्रह्मलोकावाप्त्यादिसाधनत्वं तदर्थः, तथाप्यपूर्व्वस्यावश्यकत्वेन गौरवादिति भावः। 'तच्च' पण्डापूर्व्वञ्च। नन्वेवं तत्रापि कामनावश्यम्भावे मानाभावात् नित्यताक्षतिस्तुल्येत्यत आह, 'नित्यमिति तत्तद्विहितकालेऽवश्यं कामनाविषयश्चेत्यर्थः, श्रुतिबोधितनित्यतान्यथानुपपत्त्यैव तथा कल्पनादिति भावः। प्रामाणिकं गौरवं न दोषायेत्यभिप्रायेण समाधत्ते, 'उच्यत इति, 'फलकामस्येति अर्थवादाद्युपस्थितफलकामस्येर्थः, अन्यथा अर्थवादा-

---

प्राब्दजन्यकार्य्यताज्ञानात् प्रवृत्त्यापत्तिरिति नित्येऽपि फलमाह, 'अथ वेति, तच्चापूर्व्वं न पूर्व्वमुपस्थितमिति न तदादाय इष्टसाधनत्वान्वयः इति भावः। 'तच्चेति, यद्यप्येवमपि काम्यत्वे नित्यताक्षतिरन्यथार्थवादिकेन किमपराद्धं तथापि तद्दूषणमग्रे वाच्यमेवेति भावः। 'जीवीति, प्रयोजनज्ञानं विना अप्रवृत्तेर्जीविमात्रस्याधिकारासम्भवादिति भावः। सम्बलिताधिकारमात्रे

कामस्य सम्बलिताधिकारः यथोपरागे नैमित्तिकं स्नान-श्राद्धादि फलश्रुतेः काम्यं अकरणे प्रायश्चित्तादिश्रुतेश्च नियतकर्त्तव्यताकं, यथा वा षोडशश्राद्धस्य प्रेतत्वविमुक्तिकामनाश्रुतेः प्रेतत्वविमुक्तिहेतुषोडशश्राद्धे सङ्कल्पं विधाय महाजनानामाचारात् काम्यत्वं निन्दार्थवादेनाकरणे प्रत्यवायश्रुतेरवश्यकर्त्तव्यत्वं तथा सन्ध्योपासनमपि फलश्रुतेः काम्यं अकरणे नरकश्रुतेः प्रायश्चित्तोपदेशाच्च नियतकर्त्तव्यताकं । यत्तु

---

द्विवैफल्यमिति भावः । 'सम्बलितः' समुदितः, 'अधिकारः' फलहेतुप्रवृत्तिप्रयोजकः, तेन शुचि-तत्कालजीवित्वं फलकामना च द्वयमेव नित्यक्रियाजन्यफलहेतुः यद्विशिष्टेन क्रियमाणस्य कर्म्मणः फलार्ज्जकत्वं तस्यैव प्रवृत्तिप्रयोजकधर्म्मस्याधिकारत्वात् । न च फलकामनाया अधिकारत्वे तद्विगमदशायां शुचि-तत्कालजीविनोऽपि नित्यकर्म्माकरणे प्रत्यवायो न स्यात् यावदधिकारवतएवाकरणस्य प्रत्यवायहेतुत्वात् अन्यथा शौचाभावदशायामप्यकरणात् प्रत्यवायापत्तेरिति वाच्यं । अग्रे निरस्यत्वादिति ध्येयं । ननु काम्यत्व-नित्यत्वयोर्विरोधादेकस्य कर्म्मणस्तदुभयरूपत्वमसङ्गत-

---

दृष्टान्तमाह, 'यथेति, सन्ध्योपासनवत् फलश्रुतावपि नैतत्काम्यमिति यदि ब्रूयात् तदा दृष्टान्तान्तरमाह, 'यथा वेति, तस्याप्यकाम्यत्वे साभिलाषसङ्कल्पाचारविरोध इति भावः । 'अर्थवादेति, तथा चेष्टसाधनत्वस्य विधि-

यागे काम्यत्वेऽपि न नियतकर्त्तव्यताकत्वं तदकरणे प्रायश्चित्तानुपदेशात्। न च नित्ये फलकामनाया-असम्भवः, त्रिकालकाम्यस्तवपाठवत् नित्ये फलकाम-नासम्भवात्। यत्तु प्रथमप्रवृत्ताहरहःश्रुत्या तत्का-लजीविमात्रस्याधिकारबोधनात् न फलकामस्याधि-कार इति, तन्न, अहरहःश्रुत्यर्थवादयोः प्रथमगृही-तैकवाक्यताबलेन तत्कालजीविफलकामस्य सम्बलि-ताधिकारात् अर्थवादोपस्थितफलान्वयं विनैकवाक्य-ताभङ्गात्। न चार्थवादस्य स्तुतिपरत्वान्नैकवाक्यता, बाधकं विना स्वार्थापरित्यागात् विधिवाक्योपस्थिते

---

मत आह, 'यथेति। 'स्तवपाठवदिति सप्तमीसमासाद्वतिः, तथाच तत्र यथा अननुभूयमानापि फलकामनावश्यकी तथा नित्यस्थ-लेऽपीति भावः। 'प्रथमगृहीतेति, विधेरिष्टसाधनताबोधकतया दृष्टविशेषाकाङ्क्षया प्रवृत्तस्यार्थवादस्य तदेकवाक्यत्वनियमादिति भावः। शङ्कते, 'न चेति, 'स्तुतिः' पदार्थमात्रोपस्थितिः, निरस्यति, 'बाधकं विनेति, 'स्वार्थस्यापरित्यागः' अनुभावकत्वं। न चैवमङ्ग-स्थलीयापि फलश्रुतिः प्रमाणं स्यात्, नैयायिकानामिष्टापत्तेः प्रधानफलेनैवाङ्गानां फलाकाङ्क्षानिवृत्तेस्तत्रत्या फलश्रुतिः स्तुति-

---

त्वमच्युतमिति भावः। 'विधीति "दद्यादहरहः श्राद्धमित्यादिविधिवाक्यो-पस्थितमित्यर्थः। ननु कामनाविरहेऽप्यकरणे प्रत्यवायात्तत्परिहारार्थमेव

फले विधिवाक्यस्थफलमादायैवाहरहःश्रुत्या कार्य्यताबोधनात्। नन्वेवं तत्कालजीविकामिनोऽधिकारे यदा फलकामनाविरहस्तदा अशुचेरिवाधिकाराभावान्नियतकर्त्तव्यता न स्यात् अधिकृताकरणे प्रत्यवायो न त्वकरणमात्र इति चेत्, न, नैमित्तिकेऽपि तत्काले कस्यचित्कामनाविरहिणोऽनियतकर्त्तव्यतापत्तेः। अथापवादाभावेनौत्सर्गिकी फलकामनास्त्येव

मात्रमित्यपि वदन्ति। अर्थवादस्याप्रमाणत्वेऽप्याह, 'विधीति "नित्यं नैमित्तिकं यच्चेत्यादिप्रागुक्तविधिवाक्योपस्थितइत्यर्थः, 'फलं' विधिबोधितफलं, 'बोधनादित्यस्य च: शेषः। 'अधिकाराभावादिति प्रवृत्तिप्रयोजकयावदधिकाराभावादित्यर्थः। ननु फलकामनादशायामेव नियतकर्त्तव्यत्वमुपेयं सन्ध्यावन्दनादेरतोदोषान्तरमाह, 'अधिकृताकरण इति, 'न त्वकरणमात्र इति, 'स्यादित्यनुषज्यते, अधिकृताकरणप्रयुक्तः प्रत्यवायः फलकामनाविरहदशायामकरणमात्रे न स्यादन्यथा कामनादशायामशुचेरप्यकरणे प्रत्यवायः स्यादित्यर्थः, प्रतिबन्धिमुद्रया निरस्यति, 'नैमित्तिकेऽपीति, 'अनियतकर्त्तव्यतापत्तेः' अकरणे प्रत्यवायानापत्तेः। शङ्कते, 'अथेति, 'फलकामनास्त्येव' नैमित्तिक इति शेषः। नन्वपवादो बाधकः तथाच

---

नियमः अतः प्रवृत्तिरित्यत आह, 'अधिकृतेति, इति गूढ़ाभिसन्धिः। प्रतिबन्ध्या समाधत्ते, 'नैमित्तिकेऽपीति, अभिसन्धिमुद्घाटयति, 'तथेति,

फलज्ञानस्य स्वविषयकेच्छाजनकस्वभावत्वात् यस्य तु मुमुक्षापवादेन फलान्तरे कामना नास्ति तस्याकरणेऽपि न प्रत्यवाय इति न तन्नियतकर्त्तव्यताकत्वं नैमित्तिके तथा नित्येऽपि मुमुक्षया फलकामनाबाधेना-

---

तदभावमात्रं यदि फलकामनाहेतुस्तदानवगतेऽपि फले कामना स्यादत आह, 'फलज्ञानस्येति, आर्थवादिकेत्यादिः, 'मुमुक्षापवादेनेति मोक्षोपधायकेच्छया प्रतिबन्धेनेत्यर्थः, 'तस्य' व्यास-वशिष्ठादेः, नैमित्तिककर्म्मणामकरणेऽपि न प्रत्यवायः फलकामनाविरहेणानधिकारित्वादिति भावः। शङ्कां निरस्यति, 'तथा नित्येऽपीति, 'औत्सर्गिकी फलकामनास्त्येवेत्यनुषज्यते, 'तुल्यमिति। वस्तुतः "निद्रया कलहैर्नृत्यैरनाश्वासैश्च साम्प्रतं। त्यक्तवैदिककर्म्माणो घोरं नरकमाप्नुयुः" इत्यादिस्मृतिबलात् फलकामनातिरिक्तयावदधिकारवत एव नित्य-नैमित्तिकाकरणे प्रत्यवायः कल्प्यते इति सन्ध्यावन्दनदशायां फलकामनाविरहेऽपि शौचादिमतस्तदकरणे प्रत्यवायः। किञ्च सन्ध्यादशायां पतितस्पर्शनिबन्धनादप्यकरणात् प्रत्यवायो न स्यात् शौचरूपाधिकारविरहात् अतः स्वज्ञाननिष्पाद्यभिन्नेनैवाधिकारेण विशिष्टस्याकरणे प्रत्यवायो वाच्यः तदानीं शौचस्य निष्पादनानर्हत्वादेवञ्च फलकामनापि स्वकीयज्ञाननिष्पाद्ये-

---

तथाच यस्य नित्ये नियमतः कर्त्तव्यता तस्य फलकामनावश्यम्भाव एव नैमित्तिकादिवदिति भावः। ननु मुमुक्षोरपि फलकामनाविरहिणो-

करणेऽपि न प्रत्यवाय इति तुल्यं। किञ्चार्थवादोपस्थितफलोपाधिकर्त्तव्यत्वेऽवगते "अकुर्वन् विहितं कर्मे"त्यादिवाक्याच्छौचे सति सन्ध्यावन्धनाकरणे निन्दार्थ-

---

वेति तदन्य एवाधिकारोऽकरणे प्रत्यवायप्रयोजकः। यदि च फलकामना नाधिकारः प्रमाणाभावादन्यथा प्रसङ्गात् फलसिद्धिः क्वापि न स्यात् यद्विशिष्टेनैव क्रियमाणस्य कर्म्मणः फलहेतुत्वं तस्य शौच-ब्राह्मणत्वादेरेवाधिकारत्वात् "अकामकृतात् कामकृतं पापं पुण्यञ्च द्विगुणमित्यापस्तम्बादिवचनात् कामनायाः द्विगुणफलं प्रत्येव प्रयोजकत्वावगतेरित्यादि विभाव्यते, तदा तु नानुपपत्तिगन्धोऽपीति युक्तमुत्पश्यामः। नन्वार्थवादिकफलस्योपस्थित्यनियमात् तत्कामना नावश्यकीत्यत आह, 'किञ्चेति, 'अर्थेति वस्तुगत्या आर्थवादिक-

---

यावन्नित्य-नैमित्तिकानुष्ठानमस्त्येवेत्यस्वरसादाह, 'किञ्चेति, न हि प्रत्यवाय-परिहारमेव फलमादाय विधिप्रवृत्तिर्येनान्योन्याश्रयः स्यादिति भावः। 'शौचे सतीति, नन्वधिकारे सत्यकरणे नरकदुष्कृतिर्न शौचमात्रे माना-भावात्तथाचाशुचेरिव फलकामनाविरहिणोऽपि सम्बलिताधिकाराभावाद-करणे न प्रत्यवाय इति कथं तदा तत्परिहारार्थं नियतप्रवृत्तिः तदिदमुक्तं अधिकृताकरणे प्रत्यवायो न त्वकारणमात्र इति चेत्, न, शौचादिमत्त्वं लफकामना चेत्येधिकारद्वयं एवञ्चाधिकारयोः सम्वलनमित्येव सम्बलिताधि-कारपदार्थः, तथाचाधिकाराभ्यामन्यतरेण वाधिकृतस्याकरणं प्रत्यवाय-हेतुः अतः शौचे सति फलकामनाविरहिणोऽप्यकरणं तथेति तात्पर्य्या-दित्येके, तच्चिन्त्यं, एवमशुचेरपि फलकामनावतोऽकरणे प्रत्यवायापत्तेः। वयन्तु ब्रूमः "अकुर्व्वन् विहितं कर्म्मेत्यादिना विहिताकरणस्य प्रत्यवायहेतु-

वादेन च नरकश्रुतेः प्रायश्चित्तोपदेशाच्च प्रत्यवायः कल्प्यते तत्फलकामनाविरहेऽपि प्रत्यवायपरिहारार्थं नियमतः प्रवर्त्तते विधिप्रवृत्त्यनन्तरं प्रत्यवायस्य

---

फलोपाधिकं कर्त्तव्यत्वं यस्य तादृशे सन्ध्यावन्दनादावुपस्थितेत्यर्थः। 'तत्फलेति आर्थवादिकफलेत्यर्थः, प्रागुक्तान्योन्याश्रयं परिहरति, 'विधिप्रवृत्त्येति, सन्ध्यामुपासीतेत्यादिविधेरिष्टत्वेनेष्टसाधनत्वावगतौ

---

त्वमवगतं न त्वधिकृताकरणस्य तद्बोधकपदाभावात्। न चैवमशुचेरपि तदकरणे प्रत्यवायापत्तिरिति वाच्यं। अशुचेस्तत्कर्त्तव्यतानिषेधेन शुचेरेव तत्कर्त्तव्यताविधानेन च तं प्रति तस्याविहितत्वात् विहिताकरणस्य च प्रत्यवायहेतुत्वादत एव ततकाले तस्य विहितत्वेनान्यकालीनाकरणं न प्रत्यवायहेतुस्तद्यदि कामनायां तत्कर्त्तव्यताविधानं कामनाविरहे तत्कर्त्तव्यतानिषेधश्च स्यात् तदा अशुचेरिव कामनाविरहिणोऽप्यकरणे प्रत्यवायो न स्यात्। न चैवं, न हि सकामस्याहरहःश्रुत्या तद्विहितं येन निष्कामस्य तद्विहितं तस्मादस्तु वाधिकृताकरणं प्रत्यवायहेतुः तथापि नित्ये उक्तयुक्त्या सामान्यतः शौचमात्रं अधिकारिविशेषणं न तु फलकामनापि, सा हि नित्यस्य फलजनकतायामधिकारः। अतएव फलकामेनैव कृतं नित्यं फलजनकं अन्यथा तु प्रत्यवायपरिहारमात्रफलकं अयमेव च काम्याद्भेदः तदिदमुक्तं 'शौचे सतीत्यादि।

केचित्तु समर्थस्य फलकामस्याकरणं न प्रसक्तं येन पापहेतुत्वप्रतिपादनेन तन्निवार्य्येत तथाच "अकुर्व्वन् विहितं कर्म्मेत्यादेरप्रसक्तप्रतिषेधत्वापत्त्याधिकारैकदेशे करणाभावेऽपि पापमिति तात्पर्य्यान्नयनादनधिकृताकरणमपि प्रत्यवायहेतुरित्याहुः।

प्रामाणिकत्वात् अकरणोन्मुखस्य* करणेन प्रत्यवाय-प्रागभावस्य साध्यत्वात्, नैमित्तिके फलोपाधिकर्त्तव्यत्वे कामनाविरहेऽपि नियतकर्त्तव्यतावत् ।

यत्तु निष्फलेऽपि नित्ये वेदाधीनकार्य्यताज्ञानात् प्रवर्त्तत इति, तन्न, दुःखैकफलत्वेन ज्ञायमाने प्रेक्षावतां कृतेरनुत्पादनियमात् अयोग्यतया नित्ये कृतिसाध्यत्वस्य बोधयितुमशक्यत्वात् । अतएव सन्ध्योपासनमफल-

---

तत्किमिष्टमित्याकाङ्क्षायामकुर्वन्नित्यादिवचनैः प्रत्यवायानुत्पादस्येष्टत्वेन कल्पनादित्यर्थः । ननु प्रत्यवायानुत्पादस्याजन्यत्वात् तत्साधनत्वं सन्ध्यावन्दनादेर्दुर्घटमत आह, 'अकरणेति, प्राचां मतेनेदं, 'कामनाविरहेऽपीति फलान्तरकामनाविरहेऽपीत्यर्थः, प्रत्यवायपरीहारार्थमिति शेषः । इदमुपलक्षणं यत्र प्रत्यवायपरीहारस्यानुपस्थितिः तत्रान्ततः स्वविशिष्टताप्रतिपत्त्यर्थं लोकविगाननिवृत्त्यर्थमेव वा नित्यस्थले प्रवृत्तिर्भविता क्लृप्तकारणं विना कार्य्यानुत्पादस्यावश्यम्भावादिति ध्येयं ।

ननु तत्कार्य्यताया वेदबोधितत्वधीरेव सन्ध्यावन्दनादेर्दुःखैकफलकत्वबुद्धौ प्रवृत्तिविरोधितामपनयेदत आह, 'अयोग्यतयेति, जलं ताडयेदित्यादेः प्रामाण्यभियेष्टसाधनत्वविशिष्टस्यैव कृतिसाध्यत्वस्य विध्यर्थत्वादिति भावः ।

---

* परिहारस्य प्रागभावत्वेनासाध्यत्वं निरस्यति, 'अकरणेति, 'नैमित्तिक इति, अन्यथा तत्राप्यप्रतीकारादिति भावः । 'गुरुमतं' प्रामा-

मपि क्रियते वेदबोधितकर्त्तव्यताकत्वादित्याशङ्क्य गुरु-मतमेतन्न गुरोर्मतमित्यभिप्रायेणोपेक्षितवानाचार्य्यः।

यत्तु पाण्डापूर्वं स्वत एव प्रयोजनं इत्युक्तं, तदपि न, एवं तवापि काम्यत्वे नित्यत्वहान्यापत्तेः। किञ्च सुखं दुःखाभावश्च मुख्यं प्रयोजनं तत्साधनञ्च गौणं नित्यापूर्वन्तु तेषु नैकमपि पण्डापूर्वत्वात्, काम्यापूर्वञ्च सुखहेतुर्गौणं प्रयोजनं। प्रवर्त्तकविध्यनुरोधेन तदपि प्रवर्त्तकं कल्प्यत इति चेत्। न। प्रवर्त्तनीयेन लोकेन तस्य प्रयोजनत्वेनाज्ञानात् गुरुणा नित्यापूर्वं प्रयोजन-मुक्तं इत्युच्यमानेऽपि नादरः प्रेक्षावतां। मुक्ति-स्वर्गौ चालौकिकावपि सुख-दुःखाभावसजातीयतया प्रयो-जने, तस्मादेवं वदन् गुरुरपि लघुरेव। तदयं सङ्क्षेपः

---

'गौणं' सफलत्वौपाधिकं। शङ्कते, 'प्रवर्त्तकेति विधेः प्रवर्त्त-कत्वानुरोधेनेत्यर्थः, 'तदपि' पण्डापूर्व्वमपि, 'प्रवर्त्तकं' प्रवृत्त्युपयुक्तं फलं। ननु यथा मुक्ति-स्वर्गयोरलौकिकयोरपीच्छा तथा पण्डा-पूर्व्वेऽपि स्यादत आह, 'मुक्तीति, 'सङ्क्षेपः' विचारस्य। दुःखसाध-

---

करमतं, 'गुरु' महद्वा मतमिति सोपहासं, 'गुरोः' अस्मद्गुरोः।

ननु स्वतः प्रयोजनत्वाभावेऽपि गौणमेवास्त्वित्यत आह, 'तत्साधनञ्चेति। नन्वेवमपि मुक्ति-स्वर्गावपि प्रयोजने न स्यातां लोकेन तयोः स्वार्थत्वेनाज्ञाना-दित्यत आह, 'मुक्तीति, पण्डापूर्व्वं त्वपूर्व्वजातीयमपि पण्डत्वान्न तथेति

नित्ये दुःखैकफलत्वेन प्रवृत्त्यनुपपत्तेः फलोपाधिकर्त्तव्यता तच्च फलं दुःखसाधनाभावः पापक्षयोऽपूर्वं वेति तदिच्छा प्रवृत्त्यर्थं प्रत्यहमुपेया तां विना प्रवृत्त्यनुपपत्तेः, तथाचार्थवादिकं विधिवाक्यश्रुतञ्च फलमस्तु क्वतमन्येन। न च कामनाविरहे नियतकर्त्तव्यता न स्यात्, अपूर्वादीच्छाविरहेऽपि तुल्यत्वात्, प्रत्यवायपरिहारार्थं नियमतः प्रवृत्तिस्तुल्यैव। यत्र च न फलश्रुतिस्तत्र विश्वजिन्न्याय इति। नन्विदमिष्टसाधनमिति ज्ञानादेतत्साध्यमिष्टमिति ज्ञानाच्च प्रवृत्तिदर्शनात्

---

नस्य सन्ध्यानुपासनादेरभावः सन्ध्योपासनादिरूपः, क्वतिगतमेवेष्टसाधनत्वं प्रवर्त्तकमिति मतेनेदं। क्रियागतं तत्तथेति मतेनाह, 'पापक्षयोऽपूर्व्वं वेति, 'तदिच्छा' दुःखसाधनाभाव-पापक्षयापूर्व्वयोरन्यतरगोचरेच्छा, 'उपेया' परैरिति शेषः। 'आर्थवादिकं' "सन्ध्यामुपासते ये नित्याद्यर्थवादलब्धं, 'विधीति "नित्यं नैमित्तिकं यच्चेत्यादिप्रागुक्तविध्युपस्थापितञ्चेत्यर्थः। नित्यताभङ्गमाशङ्कते, 'न चेति। प्रतिबन्ध्या निरस्यति, 'अपूर्वादीच्छेति, 'यत्र' नित्ये, 'विश्वजिन्न्याय इतीति प्रत्यवायानुत्पादस्याजन्यत्वेन फलत्वासम्भवात् स्वर्ग एव तत्र फलमित्यर्थः। 'इदं' यागादि, 'एतत्साध्यमिष्टमिति, 'ज्ञानाच्चेति, उक्त-

---

भावः। 'तथाचेति, अन्यथार्थवादादेः स्तुतिपरत्वकल्पनागौरवं स्यादिति भावः। ननु यत्र नित्ये न फलश्रुतिस्तत्र कथमिष्टसाधनत्वान्वय इत्यत आह, 'यत्र चेति, तटस्थः पृच्छति, 'नन्विति। ननु फलेच्छायामपि

प्रथमस्यैव प्रवर्त्तकत्वे किं विनिगमकं, उच्यते, फलेच्छायां स्वविषयविशेष्यकज्ञानस्य हेतुत्वेन क्लृप्तत्वात् उपायचिकीर्षापि बाधकं विना तथा। वस्तुतस्तु कृतिसाध्ययागस्य साध्य इष्ट इति ज्ञानस्य प्रवर्त्तकत्वे यजेतेतिपदात् प्रथमं कृतिसाध्यो याग इति ज्ञानं ततः कृतिसाध्ययागस्य साध्य इष्ट इति ज्ञानं विशेषणज्ञा-

---

रमिति शेषः, 'प्रथमस्यैवेति उपायविशेष्यकेष्टसाधनत्वज्ञानस्यैवेत्यर्थः, यत्र च एतत्साध्यमिष्टमिति ज्ञानानन्तरं प्रवृत्तिस्तत्रापि फलबलात् तादृशेष्टसाधनताज्ञानं कल्प्यत इत्याशयः। 'फलेच्छायामिति सुखादीच्छायामित्यर्थः, 'बाधकं विनेति बाधकाभावेनेत्यर्थः। ननु स्वत्वस्याननुगततया फलेच्छायां स्वविषयविशेष्यकज्ञानस्य हेतुत्वेऽपि उपायेच्छायां हेतुत्वे मानाभाव इत्यरुचेराह, 'वस्तुतस्त्विति, साध्येष्टस्य च विध्यर्थत्वादिति भावः। एवञ्च स्वर्गकामो यजेतेत्यादौ स्वर्गकामकृतिसाध्ययागसाध्यमिष्टमिति प्रत्ययार्थविशेष्यकः कृतिसाध्ययागसाध्येष्टवान् स्वर्गकाम इति प्रथमान्तविशेष्यको वा अन्वयबोधः। न च द्वितीये "पितृस्वर्गकामो गङ्गायां पिण्डं दद्यादिति विधेर्बाध इति वाच्यं। तत्र परम्परासम्बन्धेनैव कर्त्तरि

---

स्वविषयत्वेनैव हेतुत्वं, न तु तद्विशेष्यकत्वेन गौरवादित्यरुचेराह, 'वस्तुतस्त्विति, एतत्साध्यमिष्टमेतावन्मात्रं न प्रवर्त्तकं, 'कृत्यसाध्येऽतिप्रसङ्गादित्यत्रापि कृतिसाध्यत्वप्रवेश आवश्यक इति दर्शयति, 'प्रथममिति, 'तत इति, यद्यपि लक्षणायां अविशेषात्तल्लाघवं तथापि बहुव्रीहौ धर्म्मी

नसाध्यत्वात् विशिष्टज्ञानस्येति ज्ञानद्वयं तव, मम तु यागः कृतिसाध्य इष्टसाधनमित्येकमेव ज्ञानं। न च कृतिसाध्यत्वं यागे बोधयित्वा कृतिसाध्ययागस्य साध्य-इष्ट इति लिङा बोधयितुं शक्यमपि, एकस्वार्थान्वयमपरपदार्थे बोधयित्वा तदन्वितापरस्वार्थान्वयबोधकत्वस्य पदेऽव्युत्पत्तेः यजिपदे च कृत्या सह यागान्वयं बोधयित्वा पर्य्यवसिते पुनः स्वार्थान्वयबोधकत्वे आवृत्तिप्रसङ्गः।

अथ साध्यमिष्टं यस्येति साध्येष्टकत्वं शक्यं, तथाच

---

इष्टान्वयादिति ध्येयं। 'विशेषणज्ञानसाध्यत्वादिति विशेषणतावच्छेदकप्रकारकविशेषणज्ञानसाध्यत्वादित्यर्थः, 'विशिष्टज्ञानस्य' विशिष्टवैशिष्ट्यज्ञानस्य, 'एकमेवेति, एकत्र द्वयमितिन्यायेनेति भावः। तथाच धर्म्मद्वयकल्पनागौरवान्न तस्य हेतुत्वमिति भावः। दूषणान्तरमाह, 'न चेति न वेत्यर्थः, 'कृत्या सहेति साध्यतासंसर्गेण कृत्या सहेत्यर्थः, 'पर्य्यवसिते' निराकाङ्क्षिते।

शङ्कते, 'अथेति, तथाच ममाप्येकत्र द्वयमितिन्यायेन कृतिसाध्यत्व-साध्येष्टकत्वयोरेकदैव यागे ग्रह इति भावः। परि-

---

सम्यस्तत्पुरुषे सम्बन्धमात्रमिति विशेष इत्याहुः। ननु विशेष्ये विशेषणं तत्र च विशेषणान्तरमिति न्यायेनैकदैव इष्टे यागसाध्यत्वस्य यागे कृतिसाध्यत्वस्य भानं सम्भवति तथाचात्राप्येकमेव ज्ञानं अतएव न व्युत्पत्ति-

बहुव्रीह्यर्थापेक्षया इष्टस्य साधनमिति षष्ठ्यर्थस्य लघु-

इति, 'तथाचेति । न च इष्टवृत्तिसाध्यत्वमेव निरूपकतासम्बन्धेन विध्यर्थ इति वाच्यं । तत्सम्बन्धस्य(१) वृत्त्यनियामकतया अभाव-प्रतियोगितानवच्छेदकत्वेन मण्डलीकरणं न कुर्य्यादित्यत्र नञ-र्थानन्वयापत्तेस्तस्यापि प्रतियोगितावच्छेदकत्वे च न यजेतेत्यपि प्रयोगापत्तेः तस्य वृत्त्यनियामकतया तत्सम्बन्धेनाभावस्य केवला-न्वयित्वादिति भावः । ननु विशिष्टवैशिष्ट्यबोधाभ्युपगमे उक्त-सकलदोषसम्भवेऽपि यागे कृतिसाध्यत्वं यागसाध्यत्वञ्च इष्टे एकदैव गृह्यते इत्यभ्युपगमे न कोऽपि दोषः । न चैकत्वान्वितापरपदा-र्थान्वितकर्म्मत्वादिबोधकसुब्विभक्त्यतिरिक्तस्थले एकस्वार्थान्वितापर-पदार्थान्वितस्वार्थबोधकत्वं पदस्याव्युत्पन्नमिति वाच्यं । जानाति-स्वपितीत्यादौ वर्त्तमानत्वाश्रयत्वयोस्तथान्वयबोधस्य ज्ञानादौ दर्श-नात् । किञ्चैवमिष्टसाधनत्वस्य विध्यर्थत्वेऽपि तज्ज्ञानस्यैव प्रवर्त्तकत्वे न विनिगमकं(२) । न च तस्याप्रवर्त्तकत्वे विधेः प्रवर्त्तकत्वभङ्गप्रसङ्ग इत्येव विनिगमकं, परम्परयापि तदुपपत्तेः तत्रापि विधिजन्यज्ञानस्य

(१) तत्र वृत्त्यनियामकसम्बन्धस्येति क० ।

(२) विनिगमकं न किञ्चिदप्यस्तीत्यर्थः ।

विरोधोऽपि एकदैवोभयबोधनेनैकं स्वार्थान्वयं बोधयित्वा अपरस्वार्थान्वया-बोधनादेकदा तद्बोधने व्युत्पत्तिविरोध इत्यत्र मानाभावात् अतएव च ना-वृत्तिप्रसङ्गोऽपि घटमानयेत्यादाविव तादृशावृत्तेरदोषत्वञ्च तत्रापि घटप-दादेरवान्तरवाक्यार्थबोधजननानन्तरं पुनर्महावाक्यार्थान्वयबोधनादिति प-

त्वात्तदेव शक्यं। किञ्च तत्साध्यत्वं न नियमतस्तदुत्तरसत्त्वं दण्डसाध्ये घटे व्यभिचारात्, नापि तदवच्छिन्नक्षणोत्तरक्षण एव सत्त्वं एवकारव्यवच्छेद्यतदनुत्तरसमयस्याकाशेऽप्रसिद्धेः शब्दस्य तदसाध्यत्वापत्तेः। अतएव न तदभावव्यापकाभावप्रतियोगित्वं रूपे रससाध्यत्वापत्तेश्च। नापि तदवधिकोत्तरत्वव्याप्यसमयसम्बन्धः, उत्तरत्वव्याप्यत्वं ह्युत्तरत्वानधिकरणकाला-

---

साचाद्प्रवर्त्तकत्वादित्यरुचेराह, 'किञ्चेति, 'तदुत्तरत्वं' तद्ध्वंसाधिकरणक्षणत्वं, दण्डध्वंसाधिकरणक्षणमात्रसत्त्वं(१) न घटस्येत्याह, 'दण्डेति तद्दण्डसाध्ये तद्घट इत्यर्थः, 'व्यभिचारात्' अव्याप्तेः, तदधिकरणक्षणस्योत्तरत्वं वाच्यमित्याशयेनाह, 'तदवच्छिन्नेति। 'अतएवेति घट-शब्दयोर्दण्डाकाशासाध्यत्वप्रसङ्गादेवेत्यर्थः, आकाशस्य सार्व्वकालिकतया कालिकसम्बन्धावच्छिन्नाकाशाभावाधिकरणकालाप्रसिद्धेरिति भावः। 'रूप इति समसमयवृत्तिरूप-रसव्यक्त्योः परस्परं साध्यत्वप्रसङ्गादित्यर्थः। 'तदवधिकेति तदधिकरणसमयावधिकेत्यर्थः, अतो न नित्यासङ्गहः, 'व्याप्येति सम्बन्धविशेषणं। तद्वदन्यावृत्तित्वं व्याप्तिमभिप्रेत्याह, 'उत्तरत्वेति। ननु व्यापकसामाना-

---

(१) नियमत इत्यनेन मात्रार्थलाभादिति भावः।

---

व्याखरसादाह, 'किञ्चेति, 'दण्डेति दण्डोत्तरमपि कदाचिद्घटाभावादित्यर्थः, 'अतएव' शब्दस्याकाशासाध्यत्वापत्तेरेव, न ह्याकाशाभावव्यापकः शब्दाभावः,

वृत्तित्वं तच्चाकाशेऽप्रसिद्धं गुरुतरञ्च । तस्मात् तत्साधनकत्वमेव तत्साध्यत्वं, एवञ्च लाघवात् तत्साधनत्वज्ञानमेव प्रवर्त्तकं न तु तत्साधनकत्वज्ञानमिति ।

---

धिकरणस्वरूपं व्याप्यत्वं तच्च स्वाधिकरणसमयनिष्ठात्यन्ताभावाप्रतियोगि-तदधिकरणक्षणोत्तरत्वकत्वं। न च तथापि परमाण्वादेराकाशसाध्यत्वापत्तिः अन्यथासिद्धसाधारण्याच्चेति वाच्यं। जन्यत्वेनानन्यथासिद्धत्वेन च विशेषणीयत्वादित्यरुचेराह, 'गुरुतरञ्चेति। 'तत्साधनकत्वमेवेति तन्निष्ठाया अनन्यथासिद्धत्वे सति स्वाव्यवहितपूर्व्ववर्त्तिताया निरूपकत्वमेवेत्यर्थः, 'लाघवादिति निरूपकत्वाप्रवेशेन लाघवादित्यर्थः, 'तत्साधनत्वज्ञानमेवेति तन्निष्ठेष्टसाधनताज्ञानमेवेत्यर्थः ।

अत्र नव्याः सामान्यत इष्टसाधनत्वं प्रत्येकं स्वर्गादिसाधनत्वं वा न विध्यर्थः सम्भवति, न वा तज्ज्ञानस्य प्रवर्त्तकत्वं, अग्निष्टोमादौ बाधितत्वात्, साधनत्वं हि तदव्यवहितपूर्व्वकालनिष्ठात्यन्ताभावप्रतियोगितानवच्छेदकान्यथासिद्ध्यनिरूपकधर्म्मवत्त्वं तत्र चानवच्छेदकत्वं न निरुक्तप्रतियोगितावच्छेदकप्रतियोगिकभेदमात्रं विशेषाभावमादायातिप्रसक्तेः किन्तु तादृशावच्छेदकत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वं। न चाग्निष्टोमत्वादिकं तथा, तदवच्छिन्नमन्तरेणापि वाजपेयादिना

---

शब्दवत्याकाशात्यन्ताभावसत्त्वेन व्यभिचारादित्याङः। 'तत्साधनत्वज्ञानमेव प्रवर्त्तकमिति, तत्रेदं चिन्त्यं, यदि तत्साधनत्वज्ञानं प्रवर्त्तकं तदा दुःखप्रागभावार्थितया प्रायश्चित्तादौ प्रवृत्तिर्न स्यात् तत्साधनत्वं हि तन्नियत-

गङ्गास्नानादिना च[१] स्वर्गोत्पत्तेः। न चाग्निष्टोमादिजन्यतावच्छेदकं स्वर्गादिनिष्ठं वैजात्यमस्ति तदवच्छिन्नसाधनत्वमेव विध्यर्थः प्रवर्त्तकज्ञानविषयस्य तस्याबाधितत्वादिति वाच्यं। तादृशजातिविशेषाणां विध्येकगम्यकार्य्यतावच्छेदकतयैव सिद्धतया विधेः प्रवृत्तिपूर्व्वमुपस्थितिविरहेण तदवच्छिन्नसाधनत्वे विधिशक्तिग्रहासम्भवात् अन्यथा कार्य्यतावच्छेदकतया सिद्धत्वव्याघातादिधित एव तत्सिद्धेः स्वर्गविशेषत्वाद्यनुपस्थितावपि यागादौ प्रवृत्तिदर्शनाच्च तस्मात् सामान्यतः स्वसाध्येष्टं प्रत्येकं स्वसाध्यस्वर्गादिकं वा विध्यर्थः, तस्य च वृत्तिनियामकेन कालिकादिना येनकेनचित्सम्बन्धेन धात्वर्थेऽन्वयः, स्वं समभिव्याहृतमग्निष्टोमादि, समभिव्याहारविशेषस्य नियामकत्वाच्च नियमतस्तत्तदुपायविशेषसाध्येष्टलाभः अग्निष्टोमयागः स्वसाध्येष्टवानित्यन्वयबोधः। न च साध्यत्वमपि साधनत्वघटितमिति तद्दोषतादवस्थ्यमिति वाच्यं। साध्यत्वं हि अन्यथासिद्ध्यनिरूपकत्वे सति तद्धर्मावच्छिन्नवदन्यावृत्तित्वं। नन्वेवमग्निष्टोमेन यजेतेत्यादावसम्भवः अग्निष्टोमादेरपि प्रमेयत्वादिरूपेण स्वर्गं प्रत्यन्यथासिद्धत्वात्। न च तद्धर्मरूपेणान्यथासिद्धेरनिरूपकत्वे सति तद्धर्मावच्छिन्नवदन्या-

(१) गङ्गाजलसंयोगादिना चेति क०।

पूर्व्ववर्त्तित्वं तत्पूर्व्ववर्त्तित्वञ्च तत्प्रागभावावच्छिन्नसमयवर्त्तित्वं। न च प्रागभावस्य प्रागभावाभावेन तन्नियतपूर्व्ववर्त्तित्वं सम्भवति। न च प्रागभावस्योत्तरसमयसम्बन्ध एवात्र साध्यस्तत्साधनत्वज्ञानमविकलमेवेति वाच्यं। तत्सम्बन्धस्य समयप्रागभावात्मकत्वात् तस्य च तदसाध्यत्वात्। किञ्च प्रायश्चित्तादिषु दुःखाभावमुद्दिश्यैव प्रवर्त्तते न तु तत्समयसम्बन्धमुद्दिश्य तस्य स्वतः

वृत्तित्वं तदिति वाच्यं। दद्यात् यजेतेत्यादावव्याप्तेः सामान्यतो दानत्व-यागत्वयोः स्वर्गजनकतानवच्छेदकतया स्वर्गस्य तेन रूपेणान्यथासिद्धेर्निरूपकत्वात् स्वर्गनिष्ठजातिविशेषस्यैवाग्निष्टोमादिजन्यतावच्छेदकतया गुरुधर्म्मान्तरेणाग्निष्टोमत्वाद्यवच्छिन्नाया अन्यथासिद्धेर्निरूपकत्वाच्चेति चेत्, न, यद्धर्म्मावच्छिन्नं प्रति याग-दानादेर्न येन रूपेण हेतुत्वं तत्तद्धर्म्मभेदकूटवद्धर्म्मवत्त्वस्य सत्यन्तेन विवक्षितत्वादित्याहुः। तदसत्। चैत्यं न वन्देतेत्यादिनिषेधविधौ स्वसाध्येष्टस्य सिद्ध्यसिद्धिभ्यां नञर्थानन्वयापत्तेः।

मिश्रास्तु वैजात्यांशं परित्यज्य वस्तुगत्या विजातीयस्वर्गसाधनत्वादिकमेव विध्यर्थः, अतो वैजात्यस्य कारणत्वाघटकत्वेन न उपस्थितिरपेक्षिता। न च वैजात्यस्याप्रवेशे केन रूपेण स्वर्गविशेषाणां शक्यतावच्छेदकेऽनुप्रवेश इति वाच्यं। इष्टत्वेन स्वर्गत्वेन वा तेषां प्रवेशात् इष्टत्वादेः कारणत्वाघटकत्वेऽपि शक्यतावच्छेदके प्रकारतया प्रवेशे बाधकाभावादित्याहुः। तदसत्। प्रतियोगिनि प्रतियोगितावच्छेदकतापर्य्याप्त्यधिकरणस्य वैशिष्ट्यमवगाहमान एव तदवच्छिन्नप्रतियोगिताकत्वमभावेऽवगाहते न त्वन्यथेति नियमात् वैजात्यांशं परित्यज्य विजातीयस्वर्गाव्यवहितप्राक्कालवृत्त्यभावप्रतियोगितानव-

पुरुषार्थत्वात्। ननु येन रूपेण यस्य साध्यता तद्रूपाक्रान्तसाध्याधिकरणकालोपाधिपूर्व्ववर्त्तित्वज्ञानं प्रवर्त्तकं तच्चात्राप्यस्ति दुःखप्रागभावस्य प्रायश्चित्ताद्यनन्तरकालवृत्तिप्रागभावत्वेन साध्यत्वात्तदधिकरणकालोपाधिपूर्व्ववर्त्तित्वस्य प्रायश्चित्तादौ सम्भवादिति चेत्, न, एवं घटाद्यधिकरणसमयात् पूर्व्ववर्त्तित्वाप्रतिसन्धाने प्रवृत्तिर्न स्यात्। न चेष्टापत्तिः, अनुभवविरोधात्। न चोभ-

**स्यादेतत्, इष्टत्वज्ञानस्य प्रवर्त्तकत्वे तृप्तोऽपि भोजने प्रवर्त्तेत मनसा तृप्तेरिष्टत्वज्ञानात् । अथ स्वरूपसत्यपि**

च्छेदकत्वग्रहासम्भवात् । वस्तुतस्तु इष्टत्वेन इष्टं प्रातिस्विकरूपेण स्वर्गादिकं वा विध्यर्थः, साध्यत्वञ्च धात्वर्थ-विध्यर्थयोः संसर्गः, स्वर्गकामोऽग्निष्टोमानुकूलकृतिमान् अग्निष्टोमवच्चेष्टमिति प्रत्ययार्थविशेष्यकश्चान्वयबोधः, निषेधविधौ च साध्यतासम्बन्धेन धात्वर्थस्यैवाभावोविध्यर्थे भासते निषेधविधौ प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तिभङ्गस्तु इष्टसाधनत्वशक्तिवादिनामपि समानः । यद्वा विजातीयस्वर्गसाधनत्वमेव संसर्गः तथाच धात्वर्थविशेष्यक एवान्वयबोधः[१] । न च वैजात्यं प्रागनुपस्थितमिति वाच्यं । संसर्गोपस्थितेरनपेक्षत्वादिति दिक् ।

इच्छाविषयसुखसाधनं याग इत्याकारकं ज्ञानं प्रवर्त्तकत्वेन नैयायिकाभिमतमित्यभिमानेनाशङ्कते, 'स्यादेतदिति, 'इष्टत्वज्ञानस्येति इष्टत्वप्रकारेणेच्छाविषयतावच्छेदकधर्म्मविशिष्टसाधनत्वज्ञानस्येत्यर्थः, 'मनसेति, इच्छानाशेऽपीति शेषः, 'इष्टत्वज्ञानात्' इष्टत्वप्रका-

(१) इष्टवान् याग इति धात्वर्थविशेष्यकान्वयबोध इत्यर्थः ।

योरपि प्रवर्त्तकत्वं, अननुगमात् प्रवृत्तिवैजात्यकल्पने मानाभावात् । किञ्च शेत्वाद्यधिकरणकालोपाधिपूर्व्ववर्त्तित्वज्ञानसम्भवात्तदर्थितयापि प्रवृत्त्यापत्तिः तस्मादनन्यगत्या तत्साध्यत्वज्ञानमेव प्रवर्त्तकं । न च तदपि तत्साधनकत्वं अन्यानिवृत्तेः एवञ्च दोषतादवस्थ्यमिति वाच्यं । यस्मिन् सत्यग्रिमक्षणे यस्य सत्त्वमित्यादिना क्षेमसाधारणस्य तत्साधनत्वस्य ग्रन्थकृतैव निर्व्वचनात्, एतेन

फलेच्छा कारणं सा च सिद्धतया तृप्तौ नास्तीति चेत्, तर्हि इन्तैवमावश्यकत्वात् फलेच्छैव कारणं न तु तज्ज्ञानं गौरवात्। किञ्च इच्छाज्ञानस्य कारणत्वे इच्छा कारणं न स्यात् स्वज्ञानेन तन्नाशात् इच्छा-

---

रकज्ञानसम्भवात्, 'फलेच्छेति, वस्तुगत्या इच्छाविषयतावच्छेदको योधर्मस्तद्विशिष्टसाधनताज्ञानसहकारेणेति शेषः। 'तज्ज्ञानं' इच्छा-विषयत्वप्रकारकं ज्ञानं, 'गौरवादिति तत्प्रकारकत्वस्याधिकस्य प्रवेशादित्यर्थः। न चेष्टापत्तिः, इष्टत्वांशे विधिशक्तिकल्पनावैयर्थ्यप्रसङ्गात्, इष्टत्वांशोपस्थित्यर्थमेव तत्र विधिशक्तिस्वीकारादित्यभिमानः। 'स्वज्ञानेनेति इच्छात्वप्रकारकज्ञानहेतुना तन्निर्विकल्पकेने-

---

तत्साधनकत्वमेव तत्साधनत्वमेवञ्च साधनत्वे लाघवमित्यसङ्गतं बोध्यं। न चैवमिष्टसाधनत्वज्ञानात् प्रवृत्तिर्न स्यादिति वाच्यं। तवाप्येतत्साध्यमिष्टमिति ज्ञानात् प्रवृत्तिर्न स्यादिति तौल्यात्। यदि च लाघवादिना तत्साधनत्वज्ञानस्य प्रवर्त्तकत्वे निर्णीते तत्र प्रवृत्त्यभाव इष्ट एव समानसंवित्संवेद्यत्वाद्वा तत्रापि तज्ज्ञानसम्भवात् तत एव तत्र प्रवृत्तिरिति मन्यसे, तदा प्रायश्चित्तप्रवृत्त्यन्यथानुपपत्त्या तत्साधनत्वज्ञानस्य प्रवर्त्तकत्वे निर्णीते तत्रापि प्रवृत्त्यभाव इष्ट एव समानसंवित्संवेद्यत्वात् तज्ज्ञानादेव वा प्रवृत्तिरिति तुल्यं तस्मात् यन्मते दुःखसाधनध्वंसस्य स्वतः पुरुषार्थत्वात् तदर्थितयैव प्रायश्चित्तादौ प्रवृत्तिस्तन्मत एव तत्साधनताज्ञानं प्रवर्त्तकमिति। ननु स्वज्ञानमिच्छायां व्यापारोऽस्तु तथाच व्यापारिनाशेऽपि न क्षतिः। किञ्च विनश्यदवस्थेच्छायाः कारणत्वमस्तु। न चेच्छात्वनिर्विकल्पकेन तन्नाशे तदसम्भव इति वाच्यं। ज्ञानवदिच्छाया अपि विषयनिरूप्यत्वेन निर्विकल्पकान-

तज्ज्ञानधाराकल्पनेऽनवस्थानात् । अपि चेच्छाविषयः सुखं इति ज्ञानं न मानसं सुखस्यासिद्धतया तद्विशेष्यकसाक्षात्कारस्य तत्सन्निकर्षं विना अभावात्, ओदनादावपीष्टत्वज्ञानं न सम्भवति मनसोवहिरस्वातन्त्र्यात् । नापि चक्षुरादिना ज्ञातः कृत इतिवत्

---

त्यर्थः । ननु ज्ञानेन पूर्व्वेच्छायां विनाशितायामपि इष्टसाधनताज्ञानोत्तरमिच्छान्तरोत्पत्त्या प्रवृत्तिरित्यत आह, 'इच्छेति इच्छायाः स्वरूपसत्या हेतुत्वे प्रथमापि तथास्तु ज्ञाताया एव कारणत्वे च उत्तरेच्छाया अपि ज्ञानेन नाशात् तदनन्तरमपि इच्छान्तरं वाच्यं सापि तथैवेत्युत्तरोत्तरेच्छा-तज्ज्ञानधाराकल्पनेऽनवस्थेत्यर्थः, 'असिद्धतयेति, अनागतसुखस्यैव इच्छाविषयत्वादिति भावः । अन्तर्विषयकस्येष्टत्वज्ञानस्यासम्भवमुक्त्वा बहिर्विषयकस्याह, 'ओदनादाविति, 'न सम्भवति' मनसा न सम्भवति, 'इष्टत्वज्ञानं' ओदनादाविष्टत्व-

---

भ्युपगमादित्यखरसादाह, 'अपि चेति, तथाच सुखसाधने भोजनादाविष्ट-साधनत्वज्ञानाभावात् प्रवृत्तिर्न स्यादिति भावः । 'ओदनादावपीति, तथाच तत्साधने पाकेऽपि न प्रवर्त्तेतेति भावः । 'तन्नेति, इह त्वसिद्धतयौदनादेस्तदसम्भव इति भावः । ननु सुखमोदनञ्चेच्छामि इत्यनुव्यवसायेन तद्विषयत्वमिच्छायां गृह्णता तुल्यवित्तिवेद्यतया इच्छाविषयत्वमपि सुखादौ गृहीतं । न चैवमपि तदसन्निकर्षात्सुखादिविशेष्यकमिष्टत्वज्ञानं न स्यादिति वाच्यं । इष्टसाधनताज्ञानस्य तथाप्यवैकल्यात्तत्र विशेषणज्ञानत्वेन तदुपयोगात् । किञ्च ज्ञानोपनीतसुखादेर्विशेष्यत्वेऽप्यदोषः अतएवासन्निकृष्टपर्व्वतादिविशे-

इष्टत्वज्ञानं, तच विशेष्यसन्निकर्षात्। वस्तुतस्तु इष्टस्य विशिष्य सुखत्वादिना अज्ञाने याग-पाकादाविष्टसाधनताज्ञानेऽप्यप्रवृत्तिप्रसङ्गः इष्टस्याल्पाधिकभावेन नानाप्रकारत्वेन च विशिष्यानध्यवसायात्। न चेष्टविषयतावच्छेदकसुखत्वादेरुपलक्षणमिष्टत्वं, सुख-दुःखाभाव-तत्साधनेषु अनुगतस्योपलक्ष्यस्याभावेनाननुगमा-

---

ज्ञानं, 'तत्रेति ज्ञातः क्वत इत्यादावित्यर्थः, अत्र चेच्छाया असिद्धविषयतया न विशेष्यसन्निकर्ष इति भावः। ननु उपनयरूपसन्निकर्षसत्त्वात् इच्छाविषयः सुखमिति ज्ञानं नैयायिकानां न दुर्घटमित्यरुचेराह, 'वस्तुतस्त्विति, 'इष्टसाधनताज्ञानेऽपीति सामान्यतइष्टत्वेन यागइष्टसाधनमिति ज्ञानेऽपीत्यर्थः,(१) 'विशिष्यानध्यवसायादिति, इष्टस्यामुकस्य साधनमिति विशेषतोऽनिर्णयादित्यर्थः। ननु तत्र इष्टसाधनताज्ञानानन्तरं तदिष्टे इष्टत्वहेतुना सुखादिस्वरूपत्वमनुमाय मनसा इच्छाविषयसुखसाधनं याग इति विशेषतो निर्णयसम्भव इत्याशङ्कते, 'न चेति, 'सुखत्वादेः' सुखत्वादिरूपेण सुखादेः, 'उपलक्षणं' अनुमापकं, 'तत्साधनेषु' ग्राम-पशु-हिरण्यादिषु, 'उपलक्ष्यस्य' व्यापकतावच्छेदकस्य, 'अननुगमात'

---

(१) सामान्यत इष्टत्वेन इष्टसाधनताज्ञानेऽपीत्यर्थ इति क०।

---

व्यक्तो मानसः परामर्श इत्यस्वरसादाह, 'वस्तुतस्त्विति, फलेच्छा स्वरूपसती प्रवृत्तिप्रयोजिका न प्रवर्त्तकधीविषय इति न तृप्तस्य भोजने प्रवृत्तिरित्या-

दिति । उच्यते । यत्रेच्छा तत्साधनताज्ञानमेव लोक-वेदसाधारणं प्रवर्त्तकं तेषां सुख-दुःखाभाव-तत्साधन-त्वेनेच्छाविषयाणां अननुगतानामपि वस्तुसदिच्छावि-षयत्वमेवानुगमकं एवं यदा सुखादाविच्छा भवति

---

व्यभिचारात् । इष्टापत्त्या परिहरति, 'यत्रेच्छेति येन रूपेणेत्यर्थः, 'तत्साधनताज्ञानमेवेति तद्रूपविशिष्टसाधनताज्ञानमेवेत्यर्थः, अन्यथा घटत्वेनेच्छायां द्रव्यसाधनमिति ज्ञानादपि प्रवृत्त्यापत्तेः, तथाच इष्टत्वप्रकारकत्वं न प्रवेशनीयमिति भावः । ननु यत्त्व-तत्त्वयो-रैक्यस्याभावात्तद्विशेष्यक-सुखत्वविशिष्टसाधनताज्ञान-दुःखाभावत्ववि-शिष्टसाधनताज्ञान-ग्रामलाभत्वादिविशिष्टसाधनताज्ञानानां तत्सा-ध्यकप्रवृत्तिं प्रति प्रातिस्विकरूपेण हेतुत्वं वाच्यं, तथाचाननुगमः । न च तत्साध्यक-तदुपादानकसुखार्थिप्रवृत्तित्वादिकं कार्य्यतावच्छेद-कमिति वाच्यं । सुखार्थित्वस्य सुखेच्छाजन्यत्वरूपतया तज्जन्यताव-च्छेदकानुगतरूपाभावेणाननुगतत्वाद्धूमलिङ्गकत्वादिवदित्यत आह, 'तेषामिति, 'सुख-दुःखाभावेति सुखत्व-दुःखाभावत्वेत्यर्थः, 'तत्साध-नत्वेनेति ग्रामलाभत्व-पशुलाभत्व-हिरण्यलाभत्वादिनेत्यर्थः, 'इच्छा-विषयाणां' इच्छाविषयतावच्छेदकानां, 'वस्तुसदिच्छाविषयत्वमेवेति इच्छाविषयतावच्छेदकत्वमेवेत्यर्थः । न चैवमपि घटत्वेनेच्छायां द्रव्यसाधनमिति ज्ञानात् प्रवृत्त्यापत्तिः इच्छाविषयत्वस्य केवलान्व-

---

प्रायेण परिहरति, 'यत्रेति, 'वस्तुसदिति । नन्विदमसम्भवि इष्टसाधनता-ज्ञान-फलेच्छावदुपादानप्रत्यक्षस्यापि प्रवृत्तिहेतुत्वं । न चैतेषामात्मगुणानां

स्वकृतिसाध्यत्वे सति सुखादिसाधनमिति ज्ञानं तदा

यितया द्रव्यत्वादेरपीच्छापिषयतावच्छेदकत्वादिति वाच्यं। तत्कालीनत्व-तत्पुरुषीयत्वेनेच्छाविशेषणात् कार्य्यतावच्छेदकमपि तत्कालीन-तत्पुरुषीय-तत्साध्यकक्कतित्व-तादृशोपायेच्छात्वमेवेति न व्यभिचारः। न चैवमपि इष्टसाधनत्वाज्ञानदशायां तदभावज्ञानदशायां वा चिकीर्षा-प्रवृत्तिदुर्वारा तत्कालीन-तत्पुरुषीय-तद्विषयकचिकीर्षादेरसिद्धतया तत्कालीन-तत्पुरुषीयेच्छाविषयसाधनताज्ञानस्य तत्र हेतुत्वाकल्पनादिति वाच्यं। प्रसिद्धेषु सर्व्वेषु तत्तत्कालीन-तत्तत्पुरुषीयेच्छाविषयसाधनताज्ञानस्य चिकीर्षाहेतुत्वकल्पनेन विशेषसामग्रीविरहादेव यथोक्तस्थले चिकीर्षाद्यनुत्पत्तिः। न च स्वरूपसत्तादृशज्ञानविषयतावच्छेदकत्वमादाय विनिगमनाविरह इति वाच्यं। विनश्यदवस्थफलज्ञानजनितफलेच्छास्थले तदसम्भवात् तत्कालपदेनोपायेच्छा-प्रवृत्त्योः पूर्व्वकालस्याभिहितत्वाद्घटत्व-द्रव्यत्वोभयप्रकारकज्ञानानन्तरं घटत्वमात्रप्रकारकेच्छायां घटसाधनमिति ज्ञानाभावेऽपि द्रव्यसाधनमिति ज्ञानात् कपाले प्रवृत्त्यापत्तेश्च। किञ्च ज्ञानविषयतावच्छेदकत्वेनानुगमे फलेच्छानुदयदशायामतिप्रसङ्गवारणाय फलेच्छापि पृथक्जनिका वाच्येति गौरवं, स्वरूपसत्तादृशकृतिविषयतावच्छेदकत्वन्तु न सम्भवत्येव फलस्य प्रवृत्तिविषयत्वाभावादिति भावः। इदमापाततः एवं सति तत्तद्व्यक्तित्वेन कार्य्य-कारणभावस्यैव सम्यक्त्वात् एकस्य पुरुषस्य एकदा

---

सद्भावस्थितिरिति चेत्, न, इच्छोत्पत्त्यनन्तरं तद्विरोध्यनुत्पादसमयावच्छि-

**पाकादौ प्रवर्त्तते । नन्वेवं प्रवर्त्तकज्ञानविषयस्य नाना-त्वेन तच्छक्तस्य विधिप्रत्ययस्य नानार्थत्वप्रसङ्ग इति**

---

नानाप्रवृत्तिविरहेण यथोक्तरूपेण कार्य्य-कारणभावेऽपि तत्तद्व्यक्तिविश्रामात् कार्य्यतावच्छेदक-कारणतावच्छेदकयोर्गौरवं पुनरधिकमिति ।

केचित्तु सुखसाधनत्वज्ञान-दुःखाभावसाधनत्वज्ञान-ओदनसाधनत्वज्ञान-धनलाभसाधनत्वज्ञान-ग्रामलाभसाधनत्वादिज्ञानानां प्रत्येकमेव हेतुत्वं तत्साध्यक-तदुपादानकसुखार्थिप्रवृत्तित्वादिकञ्च प्रत्येकं कार्य्यतावच्छेदकं, सुखार्थिप्रवृत्तित्वञ्च सुखसाधनताज्ञानवत्प्रवृत्तित्वं तत्तदव्यवहितोत्तरत्वं मतुवर्थः सम्बन्धाननुगमस्तु न दोषाय, फलेच्छाया अपि पृथक् हेतुत्वात् न तदनुदयदशायां प्रवृत्त्यतिप्रसङ्गः तत्रापि सुखेच्छावत्प्रवृत्तित्वादिकमेव कार्य्यतावच्छेदकमित्याहुः ।

एकदेशिनस्तु प्रवृत्तेर्विषयतात्रयी साध्यत्वेन विषयता सिद्धत्वेन विषयता उद्देश्यत्वेन विषयता च तत्रोद्देश्यत्वेन विषयता सुखादिफलनिष्ठा सुखार्थितया चन्दनसंयोगं करोमीत्यनुभवात् । न चैवं सुखादेः प्रवृत्तिविषयत्वस्वरूपायोग्यत्वसिद्धान्तव्याघात इति वाच्यं। तस्य साध्यताख्यविषयतायामेव स्वरूपायोग्यत्वात्, तथाच सुखाद्युद्देश्यकत्वमेव सुखाद्यर्थित्वं तदेव च सुखादीच्छायाः सुखादिसाधनत्वज्ञानादीनाञ्च कार्य्यतावच्छेदकं एवमुपायेच्छाया अपि विषयताद्वयी उद्देश्यत्वेन विषयता तदन्यविषयता च, उद्देश्यता च तत्र

---

प्रस्यैव वस्तुसदिच्छाविषयत्वेन विवक्षितत्वादित्याहुः । भ्रान्तः शङ्कते, 'नन्विति,

**चेत्, न, सुखत्वादिनाननुगतं इष्टत्वेनानुगतं फलं प्रति साधनत्वस्य यागादेर्लिङादिना बोधनात्,**

---

फलत्वेन उद्देश्यता सुखादिफलनिष्ठा सुखार्थितया चन्दनसंयोगमिच्छामीत्यनुभवादिति प्राञ्चः।

'इष्टत्वेनानुगतमिति, इदमापाततः एवमपि ज्ञानविषयत्वकृतिविषयत्वमादाय विनिगमनाविरहेण नानार्थत्वस्य दुर्वारत्वात् केवलान्वयित्वस्य त्रिष्वेवाविशिष्टत्वात् तथाच विनिगमनाविरहेण इष्टसाधनत्व-ज्ञेयसाधनत्व-कृतिविषयसाधनत्वानां शक्यतावच्छेदकत्वं दुर्वारमिति। न चानुभवादिष्टसाधनत्वमेव शक्यतावच्छेदकमिति वाच्यं। अनुभवस्यैवासिद्धत्वात् इतरथा कृतिसाध्यत्वमात्रशक्तिवादिनो मीमांसका अप्यनुभवेनैव निरस्याः स्युः। न च तथापि विनिगमनाविरहेण इष्टसाधनत्वं ज्ञेयसाधनत्वं कृतिविषयसाधनत्वं त्रयमेव विधिशक्यं अनन्तसुख-दुःखाभावादिसाधनत्वमपेक्ष्य लाघवादिति वाच्यं। इष्टत्वादेः केवलान्वयितया चैत्यं न वन्देत जलं न ताडयेदित्यादौ नञर्थानन्वयप्रसङ्गात्। न च तत्र स्वर्गसाधनत्वादौ लक्षणेति वाच्यं। स्वर्गसाधनत्वादौ शक्तिरिष्टसाधनत्वे च लक्षणेत्यस्यापि सुवचत्वात् प्रयोगस्य तुल्यत्वात् इष्टसाधनत्वापेक्षया स्वर्गसाधनत्वस्य लघुत्वाच्च। वस्तुतस्तु आख्यातसामान्यस्य कृतौ शक्तिकल्पनाद्विधेरपि कृतावेव शक्तिर्लाघवात् स्वर्गसाधनत्वादौ निरूढलक्षणेत्येव तत्त्वं।

---

यज्ज्ञानं हि प्रवर्त्तकं स एव विधिस्तच्च नेष्टसाधनत्वं किन्तु सुखादि-

तथाच फलानामनुगमार्थं फलेच्छा शक्या न त्विच्छा ज्ञानकारणत्वेन । अथैवं सुखादिसाधनत्वेन ज्ञानं प्रवर्त्तकं तन्न शक्यं अननुगमात्, यच्च शक्यमिष्टसाधनत्वं तज्ज्ञानं न प्रवर्त्तकं इति विधेः प्रवर्त्तकता न स्यात् इति चेत्, साक्षादेवमेव किन्त्विष्टसाधनं यागइति लिङा बोधिते इष्टाकाङ्क्षायां काम्यत्वेन श्रुतः स्वर्ग एव इष्टत्वेनावगम्यते, तदनन्तरं स्वर्गकामपदसमभिव्या-

---

नन्विष्टत्वप्रकारकज्ञानस्याप्रवर्त्तकत्वे विधेरिष्टत्वांशे शक्तिकल्पनं वृथेत्यत आह, 'तथाचेति, 'तन्न शक्यमिति, 'तत्' सुखादिसाधनत्वं, 'एवमेव' विधेरप्रवर्त्तकत्वमेव, 'लिङा बोधिते' लिङन्तयजेतेत्यादिपदेन बोधिते, 'इष्टाकाङ्क्षायां' किं तदिष्टमिति जिज्ञासायां, इदञ्च जिज्ञासाकाङ्क्षा इति मतेन(१) 'इष्टत्वेनेति तादात्म्यसम्बन्धेन इष्टविशेषणत्वेनेत्यर्थः, 'अवगम्यत इति, स्वर्गवदिष्टसाधनं याग इत्याकारेणेति भावः । इदञ्च न प्रवर्त्तकं साधनत्वांशे स्वर्गाप्रकारकत्वादत आह, 'तदनन्तरमिति, 'स्वर्गकामपदसमभिव्याहारादिति तत्समभिव्या-

---

(१) इदञ्च जिज्ञासाया आकाङ्क्षात्वमत इति ग० ।

---

साधनत्वमिति तत्रैव लिङः शक्तिरिति नानार्थत्वमित्यर्थः, 'तथाचेति एवञ्च न नानार्थत्वमित्यर्थः । ननु तथापि स्वर्गत्वेन तज्ज्ञानं न स्यात् तेन रूपेणानुपस्थितेरित्यत आह, 'एवञ्चेति, 'एवञ्च' स्वर्गत्वेन कामनाविषयत्वेन

द्वारात् स्वर्गसाधनं याग इति ज्ञानं प्रवर्त्तकमुत्पद्यते। एवञ्च विधिजन्यज्ञानजन्यं ज्ञानं प्रवर्त्तकं।

---

द्वारजन्यस्वर्गवदिष्टसाधनं याग इति ज्ञानसहकारादित्यर्थः, 'उत्पद्यते' मनसा उत्पद्यते।

केचित्तु 'उत्पद्यते' शब्दादुत्पद्यते, इष्टांशमपहाय स्वर्गेण सह साधनत्वान्वयः स्यादित्यर्थः(१), इत्याहुः। तदसत्, साधनत्वस्य इष्ट-विशेष्यतयोपस्थितत्वेन तदपहायान्येन सह अन्वयस्याव्युत्पन्नत्वात्।

'विधिजन्येति विधिजन्यं स्वर्गरूपेष्टसाधनं याग इति महा-वाक्यार्थज्ञानं तज्जन्यं स्वर्गसाधनं याग इति मानसं ज्ञानं तदेव प्रवर्त्तकमित्यर्थः(२)। इदमापाततः स्वर्गपदस्य समासनिविष्टतया इष्टे तदर्थान्वयबोधस्य प्रत्ययार्थैकदेशेन नामार्थाभेदान्वयस्य चाव्यु-त्पन्नतया इष्टेन सह स्वर्गस्याभेदान्वयबुद्ध्यसम्भवात्। वस्तुतस्तु स्वर्ग-

---

(१) इष्टांशमपहाय स्वर्गेण सह साधनत्वस्यान्वयादित्यर्थ इति ग०।

(२) तदेव प्रवर्त्तकमिति भाव इति क०।

---

त्वोपस्थितस्य स्वर्गस्य लिङा उपस्थाप्येष्टेन सहान्वये, स्वर्गरूपेष्टसाधनं याग-इति शाब्दं ज्ञानमित्यर्थः। न चैवं विधिजन्येत्यादिविरोधः, विधिजन्यधा-त्वाख्यातार्थान्वयज्ञानरूपमवान्तरवाक्यार्थज्ञानं तज्जन्यमुक्तरूपमहावाक्या-र्थज्ञानं प्रवर्त्तकमित्येतत्परत्वात्तस्येति भावः। अतएवानुमानमाशङ्क्य नि-षेधयति, 'यत्त्विति योजयन्ति, तच्चिन्त्यं, यत्र यदिच्छा स्वरूपसती तत्-साधनताज्ञानस्यैव प्रवर्त्तकत्वेन स्वेष्टसाधनतानुमानस्य निष्फलत्वेऽपि सत्-

यत्तु सर्वेषामेव विधेर्न साक्षात् प्रवर्त्तकत्वं विधि-बोधकात् स्वकृतिसाध्यत्वादेरनवगमात्, स्वेष्टसाधन-त्वञ्च अहं इष्टसाधनयागकः स्वर्गकामत्वादृर्शवाक्या-वगतस्वर्गकामवदित्यनन्तरमर्थात् प्रतीयते। तन्न।

---

कामकृतिसाध्यो याग इष्टसाधनञ्च इति विधिवाक्येन बोधिते तदनन्तरमेव मनसा स्वर्गसाधनं याग इति प्रवर्त्तकं ज्ञानमुत्पद्यते इत्येव तत्त्वं ।

शाब्दज्ञानाप्रवर्त्तकत्वं सर्व्वसिद्धमित्याह, 'सर्व्वेषामेवेति, मत-इति शेषः । 'विधिबोधकात्' 'विधिः' इष्टसाधनत्वादिः तद्बोधकात् प्रत्ययात्, 'स्वकृतिसाध्यत्वादेरित्यादिना इदानीन्तनस्वकृतिसाध्यत्व-परिग्रहः तस्यैव प्रवर्त्तकत्वात् । नन्विष्टत्वेनेष्टसाधनत्वस्य विध्यर्थत्व यागादौ कुतः स्वेष्टसाधनत्वप्रतीतिरित्यत आह, 'स्वेष्टेति, 'इत्यन-न्तरं' इत्यनुमानानन्तरं, 'अर्थात्' उपनयवशात्, 'प्रतीयते' मनसा

---

कृतिसाध्यत्वज्ञानार्थमनुमानमावश्यकमेव कृतिसाध्यत्वज्ञानस्य मदंशविषय-त्वेनैव प्रवर्त्तकत्वात् अन्यथातिप्रसङ्गाद्विधेश्च तच्चासामर्थ्यादिदानींकाल-विषयतयापि च तस्य प्रव॰ॅकत्वात्तदर्थमनुमानमावश्यकं तदिदमुक्तं 'विधेः स्वकृतिसाध्यतादेरनवगमादिति । किञ्चेष्टस्य पदार्थैकदेशतया स्वर्गस्य चा-न्यान्वितत्वेन निराकाङ्क्षतया कथमिष्ट-स्वर्गयोरन्वयः तथाच कथमुक्तं महा-वाक्यार्थज्ञानं प्रवर्त्तकमिति तस्माद्विधिजन्यमहावाक्यार्थज्ञानजन्यमानुमा-निकं मानसं वा ज्ञानं प्रवर्त्तकमित्येवार्थः । न चैवं 'यत्त्वित्यादिनानुमान-मात्रस्य तन्निषेधप्रतिपादनविरोधः, तस्य स्वेष्टसाधनत्वानुरोधेन नानुमाना-

यत्रेच्छा[1]तत्साधनमिति शाब्दज्ञानादेव प्रवृत्त्युपपत्ते-स्तत्प्रतीतिर्निष्फला।

अन्ये तु साधनत्वमात्रं विध्यर्थः, स्वर्गादिसाधनतालाभस्तु समभिव्याहारात् इष्टसाधनतापक्षेऽपि

---

प्रतीयते, 'किन्तु यत्रेच्छेति पाठः, 'इच्छा' स्वेच्छा, 'शाब्दज्ञानात्' शब्दप्रयोज्यमानसज्ज्ञानात्, 'तत्प्रतीतिः' स्वेष्टत्वप्रकारेण स्वेष्टसाधनत्वप्रतीतिः, 'निष्फलेति, स्वेच्छाविषयत्वस्य स्वरूपसत एवानुगमकतया तज्ज्ञानस्य प्रवृत्त्यहेतुत्वादिति भावः।

केचित्तु 'सर्व्वेषामित्यस्य प्राक् 'यत्त्विति पाठः, 'किन्त्वित्यस्य स्थाने 'तन्नेति पाठः। तत्र 'स्वकृतिसाध्यत्वादेरित्यादिना स्वेष्टसाधनत्वपरिग्रहः, कुतस्तर्हि स्वेष्टसाधनत्वप्रतीतिरित्यत आह, 'स्वेष्टेति। आदिपदगृहीतमादाय दूषयति, 'तन्नेतीति बोध्यं।

'साधनत्वमात्रमिति, मात्रपदेनेष्टांशनिरासः, 'समभिव्याहारादिति 'स्वर्गकामेत्यत्र स्वर्गपदसमभिव्याहारादित्यर्थः, यत्र फलश्रुतिर्नास्ति तत्र तदध्याहारात् शाब्दबोध इति भावः। 'इष्टसाधन-

---

(१) किन्तु यत्रेच्छेति ग०।

---

पेक्षेत्येवंपरत्वात्तदिदमुक्तं 'यत्रेच्छेति, एवञ्च 'तत्प्रतीतिर्निष्फलेत्यत्र स्वांशप्रतीतिरिष्टांशे या तत्प्रतीतिरित्यर्थः, स्वकृतिसाध्यत्वबोधार्थन्त्वनुमानमावश्यकमेव। ननु मत्कृतिसाध्यतावन्मदिष्टसाधनताज्ञानस्यैव प्रवर्त्तकत्वात् सापि सफलैवेति चेत्, न, इच्छायाः स्वरूपसत्या एव प्रवर्त्तकत्वे तद्विशेषणतदीयत्वस्यापि स्वरूपसत एव तदुपयोगात् कृतौ तु नैवं। न चैवं शाब्दज्ञा-

तस्योपजीव्यत्वात्, तथाहि यजेतेत्यनेन यागः कृति-साध्यः साधनञ्चेति बोधिते साधनस्य साध्याकाङ्क्षायां कामनाविषयत्वेन श्रुतोऽसिद्धः स्वर्ग एव साधनाकाङ्क्षी साध्यत्वेनावगम्यते उपस्थितत्वात्। न च यागस्य साध-

---

तेति, 'तस्येति स्वर्गपदसमभिव्याहारस्येत्यर्थः, समभिव्याहारादेव स्वर्गरूपेष्टलाभादिति भावः । 'साधनस्येति कस्य साधनमित्या-काङ्क्षायामित्यर्थः, 'साधनाकाङ्क्षी' आकाङ्क्षितसाधनकः, 'साध्यत्वेन' यागनिष्ठसाधनतानिरूपकत्वेन। न च साधनत्वस्य कार्य्यघटिततया दृष्टान्तर्भाव आवश्यक इति वाच्यं। साधनत्वमखण्डमतिरिक्तपदार्थ-इत्यभिप्रायात् । वस्तुतस्तु 'साधनत्वमात्रं' दृष्टांशमपहाय साधनता-घटकीभूततावत्पदार्थमात्रं, 'विध्यर्थः' प्रत्येकं खण्डशो विध्यर्थः, स्वर्गसाधनत्वत्व-दुःखाभावसाधनत्वत्वाद्यनन्तगुरुधर्म्मस्य शक्यतावच्छेद-कत्वकल्पने वैशिष्ट्यांशे शक्तिकल्पने च गौरवादित्यर्थः, एवकार-स्थलवदेकपदार्थयोरपि परस्परमन्वयस्वीकारात् संसर्गमर्य्यादया पर-स्परवैशिष्ट्यलाभ इति भावः । 'यजेतेत्यनेनेति यजेतेत्यत्र प्रकृति-प्रत्ययपदेनेत्यर्थः, 'कृतिसाध्यः' कृतिसाध्यत्वं, 'साधनञ्च' साधनत्वं अव्यवधानादिश्च, 'बोधिते' स्मारिते, 'साधनस्येति कस्य साधनं यागइत्याकाङ्क्षायां सत्यामित्यर्थः, 'साध्यत्वेनावगम्यत इति याग-

---

नादेव प्रवृत्त्युपपत्तेरित्यनेन विरोधः, शाब्दप्रयोज्यानुमानिकादिज्ञानादे-रिति तदर्थः । क्वचित्तु 'सर्व्वेषामित्यस्य पूर्व्वं 'यत्त्विति न पाठः, 'तन्नेतिस्थाने 'किन्त्विति पाठः, तत्र विधिजन्यज्ञानजन्यं मानसादिज्ञानं प्रवर्त्तकमित्यत्रो-

नाकाङ्क्षा, कृतिसाध्यत्वेनैवोपस्थितेः। अतएव विश्वजिदादौ स्वर्ग एव साध्यत्वेन कल्प्यत इति। इष्टसाधनताविधिपक्षेऽपि "तरति मृत्युं तरति ब्रह्महत्यां योऽश्वमेधेन यजते" इत्याद्यर्थवादे विधिबोध्येष्टसाधन-

निष्टसाधनत्वनिरूपकत्वेनानुभूयते इत्यर्थ इत्येव तत्त्वं। ननु यागसाधनं स्वर्गकाम इति यागस्यैव निरूपकतया साधनत्वेनान्वयोऽस्त्वित्यतआह, 'न चेति, 'साधनाकाङ्क्षा' साधनत्वेनान्वये आकाङ्क्षा, 'कृतिसाध्यत्वेनैवेति कृतिसाध्यत्वप्रकारेणैव यागस्य शाब्दबोधे भानादित्यर्थः, तथाच सुब्विभक्त्यतिरिक्तस्थले पदानामेकस्वार्थान्वितापरपदार्थान्वितस्वार्थान्तरान्वयबोधकत्वमव्युत्पन्नमितिन तथान्वय इति भावः। इदमापाततः जानाति स्वपितीत्यादौ वर्त्तमानत्वाश्रयत्वयोरन्वयबोधस्य ज्ञानादौ तथा दर्शनात्, किन्तु विध्यर्थसाधनत्वं प्रकृत्यर्थस्य विशेषणतयैवान्वीयते न तु विशेष्यतयेति व्युत्पत्तेर्यागस्य निरूपकतया न साधनत्वेऽन्वयः, अन्यथा तवापि यागरूपेष्टसाधनं स्वर्गकाम इत्यन्वयबोधस्य दुर्वारत्वात् इत्येव तत्त्वं। 'अतएवेति यतएव यागस्य साधनत्वेनान्वये नाकाङ्क्षा अतएवेत्यर्थः, 'स्वर्ग एवेति

---

पदम्भार्थं सर्व्वेषामित्यादि, स्वेष्टसाधनत्वस्वार्थात् प्रतीयते, किन्तु तत्प्रतीतिर्निष्फलेत्यत्र तात्पर्य्यं।

'साधनत्वमात्रमित्यत्र मात्रपदेनेष्टांशमात्रव्यवच्छेदः, न तु कृतिसाध्यत्वादेरपीति बोध्यं। 'तस्येति समभिव्याहारस्येत्यर्थः। न चेत्युपलक्षणं यागस्य यागसाध्यान्वये बाधोऽपीति द्रष्टव्यं। 'अतएवेति उपस्थितस्या-

त्वस्यार्थवादादेवावगमात्। कुतो विधिकल्पनमिति चेत्। न। अविनाभावात्, तथाभूतसाधनत्वस्य

---

अध्याहृतस्वर्गकामपदोपस्थापितस्वर्ग एवेत्यर्थः, साध्यत्वेन साधनतान्वितत्वेन, अत्रापीदं चिन्त्यं, स्वर्गकामेत्यत्र स्वर्गपदस्य समासनिविष्टतया तदर्थेन सह विध्यर्थसाधनत्वस्य कथमन्वयो निराकाङ्क्षत्वादिति परन्तु स्वर्गादिष्वपि प्रत्येकं खण्डशः शक्तिरित्येव सारं। 'इष्टसाधनताविधिपक्षेऽपीति न्यायनय इति शेषः, 'अपिशब्देन कृतिसाध्यत्वमात्रस्य विध्यर्थत्वाभ्युपगमे तु सुतरां तन्नये विधिकल्पनमनर्थकं आख्यातमात्रस्यैव कृतिशक्ततया तदर्थकृतेः साध्यतासम्बन्धेन प्रकृत्यर्थेऽन्वयादेव कृतिसाध्यत्वलाभसम्भवादिति सूचितं। मीमांसकानामाख्यातस्य व्यापारशक्ततया कृतिसाध्यत्वलाभार्थमेव विधिकल्पनमिति हृदयं। 'अर्थवादे' अर्थवादस्थले, 'अर्थवादादेवेति, अत्र विध्यर्थे लटोऽनुशिष्टत्वादिति भावः। 'कुत इति हेतुप्रश्नः फलप्रश्नो वा,

---

न्यस्य साध्यत्वान्वयायोग्यत्वादेवेत्यर्थः, अत्रेदमनभिमतिवीजं इष्टसाधनताविधिपक्षे कामनादेः साध्यान्तरस्याप्यन्वयसम्भवान्न स्वर्गान्वयनियमः। न चान्यन्नोपस्थितं कामना च न यागसाध्येत्ययोग्यताज्ञानं तथान्वये इति वाच्यं। कामनाविशेषो यागसाध्यः स्यादिति योग्यतासंशयसम्भवात् स्वर्गान्वयेऽपि तत्संशय एव। ननु प्रवर्त्तकत्वतात्पर्य्यग्रहादन्यथानुपपत्त्यैव तल्लाभ इति चेत्, हन्तैवं तत एवेष्टसाधनत्वमेवाक्षिप्यतां कृतं साधनत्वांशेऽपि शक्त्येति मीमांसकः शङ्कते, 'इष्टेति, इष्टसाधनतामात्रविधिपक्षे इदं बोध्यं, अन्यथा कृतिसाध्यत्वलाभायैव विधिकल्पनस्यावश्यकत्वादर्थवादात्र तथेष्टसाधनत्वलाभः। तच्चिन्त्यं, अविनाभावमेव विवृणोति, 'तथाभूते-

विधेयत्वव्याप्तत्वात्, व्यापकानुपलम्भबाधोद्धाराय वा प्रयोजनाभावान्न तत्कल्पनं तच्चेत्यप्याहुः ।

यत्त्विष्टसाधनत्वाभिधाने करणे लिङोऽनुशासनात् दर्श-पौर्णमासाभ्यामित्यनभिहिताधिकारविहिता तृतीया न स्यादिति । तन्न । उपायतामात्राभिधा-

---

आद्ये आह, 'अविनेति, अविनाभावमेव दर्शयति,[1] 'तथाभूतेति श्रौतेष्टसाधनत्वस्येत्यर्थः, अन्ये आह, 'व्यापकेति श्रौतेष्टसाधनत्व-व्यापकं विधेयत्वं तच्चात्र नास्ति अतो नेष्टसाधनमिति व्यापकानुप-लब्धिनिबन्धनो यो बाधस्तदुद्धाराय वेत्यर्थः । इदमुपलक्षणं बल-वदनिष्टाननुबन्धित्वलाभायेत्यपि बोध्यं । 'आहुरिति, बलवदनिष्टा-ननुबन्धित्वस्य न लाभ इति विधिकल्पनमावश्यकमित्यरुचिबीज-मत्र बोध्यम् ।

वैयाकरणमतमाशङ्क्य दूषयति, 'यत्त्वित्यादिना, 'करण इति, 'लिङोऽनुशासनात्' लिङोऽनुशासनाभ्युपगमात्, प्रवर्त्तकज्ञानोत्पत्तये यागनिष्ठेष्टसाधनत्वस्य लिङाभिहितत्वे इत्यर्थः, 'उपायतेति लिङा साधनतामात्राभिधानेऽपीत्यर्थः, आख्यातेन कारकेऽभिहिते प्रथमे-

---

(१) विशदयतीति ग० ।

---

ति । अप्रयोजकत्वान्न तथा व्याप्तिरिति ये मन्यन्ते तन्मतमाह, 'प्रयोजनेति ।

'करण इति, इष्टसाधनत्वेन करणस्य यागादेः लिङाभिधानं ततो-ऽभेदान्वयधीरित्यभिमानः, 'उपायतेति तज्ज्ञानमात्रादेव प्रवृत्त्युपपत्तेः तथाचानभिहितकरणत्वाभिधानाय तृतीयेत्यर्थः । ननूपायत्वेनापि करणस्य

नेऽपि तद्विशेषकरणत्वानभिधानात् । वस्तुतस्त्वभिहितान्वयलभ्यं यागेष्टसाधनत्वं इष्टसाधनत्वमात्रस्य विध्यर्थत्वात्(१) ।

---

त्यस्याख्यातेन कारकसङ्ख्यायामभिहितायां प्रथमेत्यर्थोऽवश्यं वाच्यः कर्त्रादीनामाख्यातावाच्यत्वात् तथाच प्रकृते कथमभिहितत्वमाख्यातेन कारकसङ्ख्यानभिधानादित्याह,(२) 'वस्तुत इति, 'अभिहितान्वयलभ्यं' लिङ्पदप्रतिपाद्यं, 'यागेष्टसाधनत्वं' यागनिष्ठेष्टसाधनत्वमात्रं, न तु तद्गतसङ्ख्यापीति शेषः(३) । तदेव कुत इत्याह, 'इष्टेति, 'विध्यर्थत्वात्' अत्र विधिप्रतिपाद्यत्वात्, सङ्ख्याभिधानेऽनन्वयाच्चेत्यपि बोध्यं । इदञ्च दर्श-पौर्णमासाभ्यां यजेतेत्यादौ करणत्वे तृतीया तस्य विध्यर्थैकदेशे इष्टेऽन्वयः तथाच दर्श-पौर्णमासकरणकेष्टसाधनं याग इत्यन्वयबोध इत्यभिमानेन । वस्तुतो धान्येन धनवानित्यादिवदभेदे तृतीया न तु करणतायां, दर्श-पौर्णमासाभिन्नो याग इष्टसाधनं इत्येवान्वयबोधः, एवमग्निष्टोमेन यजेतेत्यादाविति बोध्यम्(४) ।

---

(१) लिङर्थत्वादिति क०, ख० ।

(२) प्रकृते इष्टसाधनतामात्रस्य विध्यर्थत्वेनाख्यातेन सङ्ख्यानभिधानादित्याहेति घ० ।

(३) न तु कर्त्रादीनां आख्यातावाच्यत्वात् तद्गतसङ्ख्यापीति शेष इति ग० ।

(४) इति ध्येयमिति ग०, घ० ।

---

यागादेरभिधानात् अनभिहिताधिकारविहिता तृतीया न स्यादेवेत्यतश्चेराह, 'वस्तुतस्त्विति, यागादेर्धातुलभ्यत्वादनन्यलभ्यस्य च शब्दार्थत्वात् के-

नव्यास्तु चिकीर्षाद्वारा ज्ञानस्य कृतौ हेतुता चिकीर्षा च कृताविच्छा सनः प्रकृत्यर्थगोचरेच्छावाचित्वात् पिपक्षादिवत्। न तु कृतिविषयपाकादिविषये कृतिसाध्यत्वप्रकारकेच्छाभिधायकत्वं(१) पाकादेः प्रकृत्यनभिधेयत्वात्। न हि कृतिवाचकस्य तद्विषयवाचकत्वं, करोतीत्युक्ते तद्विषयसंशयात्। एवञ्च कृताविच्छेष्टसाधनताज्ञानात् तत्साध्येष्टज्ञानाद्वा इच्छादौ तथा कल्पनात्। यदा च कृताविच्छा तदा सैव चिकीर्षा अन्यत्रेच्छामात्रं न तु कृतिसाध्यताज्ञानात् कृतौ कृतिसाध्यत्वाभावात्। अथ पाकं कृत्या साधयामीतीच्छानुभवसिद्धा अनुभवापलापे उपेक्षणीयत्वापत्तेः,

---

सोन्दड़स्य पुनरपि मतं दर्शयति,(२) 'नव्यास्त्विति, 'प्रकृत्यनभिधेयत्वात्' कृधात्वनभिधेयत्वात्, 'तद्विषयसंशयादिति घटं पटं वेति संशयादित्यर्थः। 'अनुभवसिद्धेति प्रवृत्तेः पूर्व्वमनुभवसिद्धे-

---

(१) कृतिसाध्यत्वप्रकारकेच्छावाचित्वमिति ख०।

(२) सोन्दड़स्य पुनरभिमतं दर्शयतीति ग०, सोन्दड़मतं विशिष्य परिष्कृत्य पुनरपि दर्शयतीति घ०।

---

नापि रूपेण न लिङा करणाभिधानमिति भावः। यद्यपि वाक्यार्थतया तदभिधानमस्त्येव तथापि पदार्थतया तदभिधानं नेत्येवानभिहितत्वार्थ इति कुसुमाञ्जलिप्रकाशे स्फुटं, एवञ्च यागेष्टसाधनत्वयोराश्रयाश्रयिभाव एवा-

सा च कृतिसाध्यताज्ञानात्, सा च चिकीर्षापदाप्रतिपाद्यापि कृतिहेतुः समानविषयत्वात् न तु कृतीच्छा कृतिहेतुः कृतिविषयाविषयत्वादिति चेत्, अस्ति तावत्पाककृताविच्छा दृष्टीच्छावत्, अस्ति च कृतिसाध्यत्वप्रकारिकेच्छा, पाके तथापि कृतीच्छैव कृतिकारणं लाघवात् न तु कृतिसाध्यत्वप्रकारिकेच्छा गौरवात्। धात्वर्थानुपरक्ते कृतिस्वरूपे इच्छैव नोदेतीति चेत्,

---

त्यर्थः, 'समानविषयत्वादिति कृतिसाध्यताख्यविषयताश्रयविषयकत्वादित्यर्थः, 'लाघवादिति, समानविशेष्यकत्वस्य चाप्रयोजकत्वादिति भावः। 'धात्वर्थेति, तथाच धात्वर्थोपरक्तकृतावेव इच्छेति भावः।

---

न्वय इति बोध्यं। न चेष्टसाधनत्वमिष्टसाधनत्वत्वेन शक्यं वाच्यं तच्चेष्टसाधनघटितं तदितरावृत्तित्वघटितञ्चेति लाघवादिष्टसाधनमेव तत्त्वेन शक्यमभेद एवान्वय इति वाच्यं। प्रकृति-प्रत्ययार्थयोरभेदान्वयाव्युत्पत्तेः किञ्चेष्टसाधनस्य शक्यत्वे तद्धर्म्मोऽपि शक्य इत्यत्र मानाभावः। न हि यच्छक्यं तद्धर्म्मोऽप्यवश्यं शक्य इति नियमः, शक्यानन्त्यापत्तेः शक्यस्यैवोपाधिविशेषस्यैकत्वे तदनुगमार्थमपि तदनभ्युपगमात् गवादिपदे तु व्यक्तेरनुगमार्थं गोत्वादेः शक्यत्वं। न चैवं लिङ्पदान्निर्व्विकल्पकापत्तिः, उपाधिविशेषस्य नानापदार्थघटितत्वेन सविकल्पमात्रविषयत्वात्। वस्तुतः सङ्ख्यानभिधानाभिधानं प्रयोजकं अन्यथा कर्त्तुरवाच्यत्वेनानभिहितत्वाद्देवदत्तः पचतीत्यत्र प्रथमा न स्यादेवञ्च लिङा करणसङ्ख्यानभिधानात् तृतीया स्यादेवेति तत्त्वं। शङ्कितमप्यधिकाभिधानायाह, 'नन्वास्त्विति, तथाच कृतिसाध्यताज्ञानं प्रवर्त्तकं चिकीर्षाजनकज्ञानस्यैव तथात्वादिति भावः। 'लाघवादिति कृतिसाध्यत्व-

न। पाकादिकृतीष्टसाधनताज्ञानात् पाककृताविच्छा ततः कृतिरित्यभ्युपगमात्। न चावगति-प्रवृत्त्योः समानविषयत्वं उभयसिद्धं, तस्यैव विचार्य्यत्वात्। कथं तर्हि पाकं कृत्या साधयामीतीच्छा, यथा वह्निसाध्यत्वेन इष्टसाधनतावगमात् वह्निना पाकं साधयामीतीच्छा तथा कृतिसाध्यत्वेन इष्टसाधनत्वात् पाकस्य पाकं

'अवगति-प्रवृत्त्योरिति कार्य्य-कारणभावापन्नयोरिष्टसाधनताज्ञान-प्रवृत्त्योरित्यर्थः, 'तस्यैवेति तत्रैव विवादादित्यर्थः। ननु मास्तु कृतिसाध्यत्वप्रकारकेच्छा प्रवृत्तिहेतुस्तथापि तादृशेच्छायां तव नये को हेतुः किमिष्टसाधनताज्ञानमात्रं कृतिसाध्यताज्ञानमात्रं वा उभयं वेति[१] सुहृद्भावेन पृच्छति, 'कथं तर्हीति केन हेतुना तथापीत्यर्थः, उत्तरयति, 'यथेति, 'वह्निसाध्यत्वेन' वह्निसाध्यपाकत्वावच्छेदेन, 'कृतिसाध्यत्वेन' कृतिसाध्यपाकत्वावच्छेदेन, 'इष्टसाधन-

(१) पूर्व्वमनुभवसिद्धेष्टसाधनताज्ञानं वा मम कृतिसाध्यताज्ञानमात्रं वा उभयं वेतीति घ०।

प्रकारकेच्छात्वापेक्षया कृतीच्छात्वस्य कारणतावच्छेदकस्य लघुत्वादिति भावः। ननूक्तं भिन्नविषयत्वात् कृतीच्छा न हेतुरित्यत आह, 'न चेति, तथाचोक्तलाघवात् कृतीच्छैव हेतुरिति भावः। पृच्छति, 'कथन्तर्हीति, यदि कृतिसाध्यताज्ञानं न चिकीर्षाहेतुरिति शेषः। उत्तरं, 'यथेति, यद्यप्येतच्चिकीर्षायाः कृतिसाध्यत्वज्ञानजन्यत्वेऽपि नव्यमते न क्षतिस्तत्र कृतीच्छारूप-

कृत्या साधयामीतीच्छा अन्यथा तत्तदुपायसाध्यत्वेन इच्छा पाकादौ तत्तदुपायसाध्यत्वप्रकारकज्ञानात् स्यादित्यनन्तकारणकल्पना स्यात्। मम तूपायेच्छायामिष्टसाधनताज्ञानमेव हेतुः क्रियाद्वारा कृतेरिष्टसाधनत्वज्ञाने क्रियाया अपीष्टसाधनत्वं विषयइति कृतीच्छा भवन्ती क्रियाविषयापि भवतीति ज्ञानेच्छाप्रयत्नानां समानविषयतापि। अतएव पाकं चिकीर्ष-

---

त्वात्' इष्टसाधनत्वावगमात्, 'अन्यथेति यदि कृतिसाध्यताज्ञानमिष्टसाधनताज्ञानञ्च द्वयं हेतुरभ्युपेयते तदेत्यर्थः, 'उपायेच्छायां' तद्धर्म्मप्रकारकोपायेच्छायां, 'इष्टसाधनताज्ञानमेवेति तद्धर्म्मावच्छेदेनेष्टसाधनताज्ञानमेवेत्यर्थः। पूर्व्वं कार्य्य-कारणभावापन्नानां ज्ञान-चिकीर्षा-प्रवृत्तीनां समानविशेष्यकत्वमसिद्धमित्युक्तं इदानीं तेषां समानविशेष्यकत्वमुपपादयति, 'क्रियाद्वारेति, 'ज्ञानेच्छा-प्रयत्नानामिति, कार्य्य-कारणभावापन्नानामिति शेषः, 'समानविषयतापि' समानविशेष्यकतापि, 'पाकं चिकीर्षतीति सप्तम्यन्तं, 'विषयतया'

---

चिकीर्षाहेतुत्वाङ्गीकारेण कृतिसाध्यत्वज्ञानस्य तथाप्यप्रवर्त्तकत्वात् इष्टसाधनताज्ञानादेव तदुपपत्तेस्तथापि कृतिसाध्यत्वप्रकारेच्छायाः प्रवर्त्तकत्वेऽपि कृतिसाध्यताज्ञानं न प्रवर्त्तकं इष्टसाधनताज्ञानादेव तस्या अभ्युपपत्तेरिति दर्शयितुं इदमुक्तमिति ध्येयं। समानविषयत्वेन हेतुत्वमभ्युपेत्याह, 'क्रियेति। 'अतएवेति यत एव पाकोऽपि चिकीर्षाविषयः अतएवेत्यर्थः, अन्यथा

तीति चिकीर्षाविषयतया पाकः प्रतीयते। यद्वा इच्छाविषयविषयतया पाकः प्रतीयते इति तस्य कर्म्मता ग्रामं जिगमिषति शत्रुं जिघांसतीत्यत्र ग्रामादेरिव, न हि ग्रामादाविच्छा, सिद्धत्वात्। अतएव भोगे सुखे च चिकीर्षा तदनुकूलकृतेरिष्टहेतुत्वात् अन्यथा कृतिसाध्येष्टसाधनतापक्षे तच्चिकीर्षासामग्र्यन्तरं कल्प्येत। एवञ्च सन्ध्यावन्दनं दुःखसाधना-

---

विशेष्यतया, 'प्रतीयते' द्वितीयातः प्रतीयते, 'इच्छाविषयविषयतया' इच्छाविषयविशेष्यतया, 'तस्य' पाकपदस्य, 'कर्म्मता' द्वितीयान्तता, 'जिगमिषतीति, अत्र गमधातुर्ज्ञानार्थकः, 'जिघांसतीति, अत्र हनधातुर्द्वेषार्थकः, 'न हीति, तथाच सन्प्रत्ययान्तसविषयार्थकधातुयोगे द्वितीयाया इच्छाविषयविशेष्यत्वमर्थ इति भावः। 'अतएवेति यत एव कृतीष्टसाधनताज्ञानाच्चिकीर्षा अतएवेत्यर्थः, 'कृतिसाध्येष्टसाधनतेति कृतिसाध्यत्वे सतीष्टसाधनताज्ञानस्य चिकीर्षाहेतुत्वे इत्यर्थः। 'सन्ध्यावन्दनं' सन्ध्योपासनं, 'तत्साधनं कृति-

---

कृतेरेवेप्सितत्वात् पाकस्य तदभावात् कर्म्मता न स्यादिति भावः। पाकस्येच्छाविषयत्वाभावेऽपि कर्म्मत्वमुपपादयति, 'यद्वेति इच्छाविषयः कृतिः तद्विषयतयेत्यर्थः, 'ग्रामादेरिति तत्रापीच्छाविषयगमनादिविषयतयैव कर्म्मत्वमित्यर्थः, 'सामग्र्यन्तरमिति, एतच्च यन्मते भोगे नेच्छा तत्र बोध्यं। अन्यथा भुक्तिरूपेष्टसाधनत्व-कृतिसाध्यत्वयोः सुखेऽवैकल्यान्न तत्र सामग्र्यन्तरं स्यादिति। लोकवद्वेदेऽपि कृतीष्टसाधनत्वज्ञानमेव प्रवर्त्तकमित्याह, 'एवञ्चेति,

वन्दनाभावरूपत्वेनेष्टं तत्साधनं कृतिरिति लिङर्थः, अन्यथा कृतिर्न कृतिसाध्या सन्ध्यावन्दनञ्च नेष्टसाधनमिति कस्य कृतिसाध्यत्वे सतीष्टसाधनत्वं विध्यर्थः स्यात् । अतएवैकप्रत्ययाभिधेयत्वप्रत्यासत्तेरन्तरङ्गतया विधिप्रत्ययाभिधेयेष्टसाधनत्वस्य कृतावेवान्वयो न प्रकृत्यर्थे तथैव चिकीर्षाकारणज्ञानजनकत्वात् प्रकृत्यर्थस्य च कृतौ विषयत्वेनान्वय इति ।

---

रितीति सन्ध्योपासनविषयककृतिः सन्ध्योपासनसाधनमितीत्यर्थः, 'लिङर्थः' सन्ध्यामुपासीतेत्यादिनित्यविधौ लिङर्थः, 'अन्यथा' कृतिसाध्यत्वे सतीष्टसाधनत्वस्य लिङर्थत्वे । नन्वेवं स्वर्गकामो यजेतेत्यादौ विधेश्चिकीर्षाप्रयोजकज्ञानजनकत्वानुपपत्तिः तत्र बाधकाभावेन क्रियानिष्ठेष्टसाधनत्वस्यैव लिङा बोधनात्, न तु कृतिनिष्ठस्येत्यत आह, 'अतएवेति कृतीष्टसाधनताज्ञानस्य हेतुत्वादेवेत्यर्थः, 'एकप्रत्ययेति, आख्यातसामान्यशक्त्या कृतेरपि विधिप्रत्ययोपस्थापितत्वादिति भावः । 'अन्तरङ्गतया' स्वसम्बन्धितया, 'जनकत्वात्' जनकत्वनिर्वाहात्, 'प्रकृत्यर्थस्येति यागादेरित्यर्थः । न चैवं प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तिभङ्ग इति वाच्यं । कृतिस्वरूपस्वार्थ-

---

'नेष्टसाधनमिति, काम्यत्वे नित्यताहतेरिति भावः । ननु कृतीष्टसाधनताज्ञानाद्यत्र क्वचित् प्रवर्त्तेतेत्यत आह, 'प्रकृत्यर्थस्य चेति, तथाच सन्ध्योपासनयागादिविषयककृतेरिष्टसाधनत्वावगमान्नान्यत्र प्रवर्त्तेत इति भावः । यद्वा प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थावबोधकत्वमुपपादयति, 'प्रकृत्यर्थस्य चेति,

उच्यते। वह्निसाध्यत्वेन कृतिसाध्यत्वेन वा न पाकस्यौदनसाधनता इत्युक्तं। कथं तर्हि वह्निना पाकं साधयामीतीच्छा इति चेत्, न, इष्टसाधनत्वेन ज्ञाते यत्र यत्साध्यत्वं ज्ञायते तत्र तत्साध्यत्वेनेच्छा भवतीति, यथेष्टसाधनत्वेन ज्ञाते पाके वह्निसाध्यत्वज्ञानात् वह्निना साधयामीतीच्छा एवं कृतिसाध्यत्वेनावगते इष्टस्य साधनताज्ञानात् कृत्या साधयामीतीच्छा तथाचेष्टसाधनत्वेन कृतिसाध्यत्वेन च ज्ञाते कृतिसा-

---

मादायैव तादृशव्युत्पत्तिस्थितेः, न हि प्रकृत्यर्थान्विततयैव यावत्स्वार्थबोधकत्वमिति व्युत्पत्तिः, पचतीत्यादौ वर्त्तमानत्वादेरपि कृतावनन्वयापत्तेः वर्त्तमानत्वाद्यतिरिक्तत्वेन स्वार्थविशेषणत्वे किमपराद्धमिष्टसाधनत्वातिरिक्तत्वविशेषणेनेति भावः। 'उच्यत इति अत्र मयोच्यते इत्यर्थः, 'उक्तमिति, पाकत्वादिकमपेक्ष्य गौरवादिति भावः। 'कथं तर्हि पाकं कृत्या साधयामीतीच्छेति पाठः, इष्टसाधनताज्ञानमात्रात् स्यादिति शेषः, तथा सति वृष्टावपि तादृशेच्छापत्तेरिति भावः। 'यथेति प्रसाध्याङ्को दृष्टान्तः, 'तथाचेति तद्धर्मावच्छिन्नविशेष्यकेष्टसाधनताज्ञानात्तद्धर्मावच्छिन्नविशेष्यताक-कृतिसाध्यताज्ञानाच्च तद्धर्मावच्छिन्नविशेष्यताक-कृतिसाध्यत्व-

---

इष्टसाधनत्वस्य क्वचिद्द्वारैवान्वय इति भावः। दृष्टान्तं दूषयन्नेव दार्ष्टान्तिकं दूषयति, 'वह्नीति, 'तथाचेति, एवञ्च कृतिसाध्यत्वमपि प्रवर्त्तकं विध्यर्थस्येति भावः। नित्येऽपीष्टसाधनत्वमुपपादितमेव। नन्वस्तु कृतिसाध्यत्वप्रकारकेच्छायाः

ध्यत्वप्रकारिकेच्छा न त्विष्टसाधनताज्ञानमात्रादिति।

प्रकारकेच्छेत्यर्थः, 'न त्विति, अतो न वृष्ट्यादौ तथेच्छेति भावः। न च मास्तु तदुपायसाध्यपाकत्वावच्छिन्नधर्म्मिकेष्टसाधनताज्ञानं पाकत्वाद्यवच्छिन्ने तत्तदुपायसाध्यत्वप्रकारकेच्छाहेतुर्गौरवात् तेन रूपेणेष्टसाधनत्वविरहाच्च तथापि तत्तदुपायसाध्यपाकत्वादिप्रकारकेष्टसाधनताज्ञानं पाकत्वाद्यवच्छिन्ने तत्तदुपायसाध्यत्वप्रकारकेच्छाहेतुरस्तु यत्प्रकारिका उपायेच्छा तत्प्रकारकमिष्टसाधनताज्ञानं हेतुरिति सामान्यकार्य्य-कारणभावेनैवोपपत्त्या कार्य्य-कारणभावलाघवात् भवतु तत्तदुपायसाध्यपाकत्वादिना इच्छा तत्तदुपायसाध्यत्वप्रकारकज्ञानात् स्यादित्यनन्तकार्य्य-कारणभावप्रसङ्गादिति वाच्यं। यत्त्व-तत्त्वयोरनुगतयोरभावात् तत्तदुपायसाध्यत्वान्तर्भावेनानन्तकार्य्य-कारणभावस्य तवाप्यावश्यकत्वात् तत्तदुपायसाध्यपाकत्वादिप्रकारकेष्टसाधनताज्ञानं(१) हेतुः किमिष्टसाधनपाकत्वादिधर्म्मितावच्छेदककतत्तदुपायसाध्यत्वप्रकारकज्ञानं हेतुः पाकत्वादिधर्म्मितावच्छेदकक-तत्तदुपायसाध्यत्वेष्टसाधनत्वोभयप्रकारकज्ञानं वा इत्यत्र विनिगमकाभावात् उद्देश्य-विधेयतावच्छेदकभेदेनानन्तकार्य्य-

(१) तत्तदुपायसाध्यपाकत्वादिधर्म्मितावच्छेदककेष्टसाधनताज्ञानमिति ग०।

कृतिसाध्यत्वप्रकारकज्ञानजन्यत्वं तथापि सा न कृतिहेतुः किन्तु लाघवात् कृतीच्छैव सा च कृतीष्टसाधनताज्ञानादेव उपपन्नेति कृतिसाध्यताज्ञानं न प्रवर्त्तकं कृतिहेतुचिकीर्षाजनकज्ञानस्यैव तथात्वादित्यत्र नव्यमते किमपि नोत्तरमुक्तमिति चेत्, अत्राहुः, पाकादेरिष्टसाधनताज्ञानं विना तत्कृतेस्तद्बोधासम्भवेन तत्प्राथमिकत्वे इष्टसाधनीभूतपाकजनिका कृतिरिति

आचार्य्यास्तु प्रवर्त्तकमिष्टसाधनताज्ञानमेव लिङर्थ-

कारणभावकल्पनं पुनरधिकं इष्टसाधनत्वांशस्याप्यवच्छेदककोटि-प्रविष्टत्वादवच्छेदकगौरवञ्च मम पाकत्वाद्यवच्छिन्नविशेष्यककृतिसाध्य-ताप्रकारकज्ञानत्वेनैव हेतुत्वात् कृतिसाध्यत्वप्रकारकेच्छानुरोधेन पाक-त्वादिप्रकारकेच्छात्वेन पाकत्वादिप्रकारकेष्टसाधनताज्ञानत्वेन कार्य्य-कारणभावस्यावश्यकत्वात् ततएवातिप्रसङ्गादिविरहादिति भावः। यद्यप्येतावता कृतिसाध्यपाकत्वावच्छेदेनेष्टसाधनताज्ञानं कृतिसाध्य-त्वप्रकारकेच्छायां हेतुरिति यन्नव्यैरुक्तं तत्र दूषणाभिधानेऽपि लाघवात् कृतीच्छैव कृतिकारणं न तु कृतिसाध्यताप्रकारकेच्छा इत्यत्र न किमपि दूषणमभिहितं तथापि प्रथममेव तस्य दूषित-त्वात् नात्र पुनर्दूषणाभिधानमिति मन्तव्यं।

'आचार्य्याः' उदयनाचार्य्याः, 'इष्टसाधनताज्ञानमेव' बलवद-निष्टाननुबन्धीष्टसाधनताज्ञानमेव, 'आप्ताभिप्राय इति आप्तत्वप्रका-रकेच्छेत्यर्थः, आप्तत्वञ्च साध्यत्वाख्यभ्रमानधीनकृतिविषयत्वं, अनेन हेतुना बलवदनिष्टाननुबन्धीष्टसाधनत्वमनुमीयते चैत्यवन्दन-विष-

ज्ञान एव कृतिसाध्येष्टसाधनत्वयोः प्रत्ययात्तेनैव तद्धेतोरिति न्यायेन प्रवृत्तौ सम्भवत्यां न तत्कृतिगोचरेष्टसाधनत्वज्ञानपर्य्यन्तापेक्षा गौरवात्। न च पाकजनिका कृतिरिति ज्ञानेऽपि पाकः कृतिसाध्य इति ज्ञानालाभः, समानवित्तिवेद्यतया तल्लाभादिति तच्चिन्त्यं, उक्तलाघवेन कृतीच्छायाः प्रवर्त्त-कत्वे सिद्धे तदुपपादकत्वेन तत्पर्य्यन्तापेक्षाया युक्तत्वात्। वस्तुतस्तु समान-प्रकारकज्ञानस्यैव विरोधितया पाककृतिरिष्टसाधनमिति ज्ञानेऽपि पाकः कृत्यसाध्य इति ज्ञानसम्भवात्तेन च प्रवृत्तिप्रतिबन्धात् कृतिसाध्यताज्ञानं

त्वाप्ताभिप्रायो लाघवात् पाकं कुर्य्याः कुर्य्यामित्यत्र विधिलिङः सम्बोध्य-स्वकर्तृकक्रियेच्छाभिधायकत्वेना-

भक्षणादौ व्यभिचारवारणाय भ्रमानधीनत्वं कृतिविशेषणं, भोजनादिनान्तरीयकजलताडनादौ व्यभिचारवारणाय जन्यत्वलक्षणं साध्यत्वं विहाय साध्यत्वाख्यविषयत्वानुधावनं, भ्रमभिन्नत्वेनापि इच्छा विशेषणीया तेन तादृशकृतिविषयत्वप्रकारकायथार्थेच्छामादाय चैत्यवन्दनादौ विषभक्षणादौ च न व्यभिचारः, कृतौ विध्यर्थान्वयनये तु भ्रमानधीनेच्छाजन्यत्वमाप्तपदार्थः, जन्यत्वपदेन च स्वाविषयककृत्यद्वारकजन्यताविशेषो ग्राह्यः, तेन नान्तरीयकजलताड़नादौ न व्यभिचारः। न च तादृशजन्यत्वं यागादावसिद्धमिति वाच्यं। तन्नये कृतीष्टसाधनताज्ञानस्य प्रवर्त्तकतया यागादावसिद्धत्वेऽपि क्षतिविरहात् द्वितीयेच्छा च पूर्व्ववत् भ्रमभिन्नत्वेन विशेषणीयेति भावः। 'लाघवादिति, तव निषेधविध्यनुपपत्त्या बलवदनिष्टाननुबन्धित्वेऽपि शक्तिः कल्पनीया मम तु तद्विरहाल्लाघवमित्यग्रे स्वयमेव विवेचयिष्यते। ननु तवाप्तत्वप्रकारकत्वप्रवेशात् भ्रमभिन्नत्वप्रवेशाच्च गौरवमित्यरुचेराह, 'पाकमित्यादि त्वं पाकं कुर्य्याः अहं पाकं कुर्य्यामित्यत्रेत्यर्थः, 'सम्बोध्य-स्वकर्तृकेति सम्बोध्यकर्तृका आत्मकर्तृका च या क्रिया तद्गोचरेच्छाबोधकत्वेनेत्यर्थः, इच्छाविषयपाकानुकूलकृत्याश्रयस्त्वं इच्छाविषयपाकानुकूलकृत्याश्रयोऽहं इत्यन्वयबोधादिति भावः। सविषयवाचिधातुयोग्याख्यातसामान्यस्यैवा-

प्रवर्त्तकं, जनकज्ञानं विघटयत एव ज्ञानस्य प्रतिबन्धकत्वादेवञ्च तज्जन्या कृतिसाध्यत्वप्रकारिकेच्छैव हेतुः, गौरवञ्च प्रामाणिकमेव। 'लाघवादिति

ज्ञा-प्रार्थनाशंसनादिलिङो वक्त्रादीच्छाभिधायकत्वेन लिङ्मात्रस्येच्छावाचकत्वकल्पनाच्च। एवञ्च स्वर्गकामो

---

अयत्वे निरूढलाक्षणिकत्वादिविधिनैवाश्रयत्वलाभः, त्वं पचेरित्यादौ तु इच्छाविषयपाकानुकूलकृतिमांस्त्वमित्यन्वयबोधः आख्यातसामान्य-शक्त्या कृतिलाभादिति ध्येयं। 'आशंसेति, धनी भूयादित्यादौ बोध्यं। 'वक्त्रादीच्छाभिधायकत्वेनेति, 'अभिधायकत्वेन' शक्तत्वेन, 'आदि-पदात् यत्र शुकादौ वक्तुरीच्छा बाधिता तत्र शिक्षकपुरुषेच्छापरि-ग्रहः, इदञ्च स्वरूपकथनं न तु तद्रूपेण शक्तिः इच्छात्वेनैव शक्तेः परन्तु इच्छात्वेन वक्तुरिच्छैव बोध्यते नान्यस्य युष्मदस्मदादिपदवद्व्युत्पत्ति-वैचित्र्यादित्यवधेयं। 'लिङ्मात्रस्येति, तद्दृष्टान्तेन[१] लिङ्त्वेन हेतुना लिङ्मात्रस्यैव इच्छावाचकत्वानुमानाच्चेत्यर्थः, तथाच प्रामा-णिकं गौरवं न दोषायेति भावः। एतेनाप्तत्वं न वक्तृत्वं इष्टसाधन-त्वानुमितौ तस्यानुपयोगितया व्यर्थविशेषणत्वात् अनेनैव हेतुना बलवदनिष्टाननुबन्धीष्टसाधनत्वेऽनुमीयमाने भ्रान्त्या क्रियमाणे चैत्यवन्दनादौ व्यभिचारप्रसङ्गात् न कलञ्जं भक्षयेदित्यादौ निषे-धविधिबाधप्रसङ्गाच्च। अतएव न भ्रमशून्यत्वं सर्व्वत्र ईश्वरमादायो-पपत्तावपि निषेधविधिबाधात् व्यर्थविशेषणत्वाच्च बलवदनिष्टाननु-बन्धीष्टसाधत्वानुमाने व्यभिचारप्रसङ्गाच्च। न च प्रकृतक्रियागोच-

---

(१) आज्ञादिलिङ्दृष्टान्तेनेति ग०।

---

'अभिप्रायविधिपक्ष इत्यादिना वक्ष्यमाणादित्यर्थः। नन्वाप्तत्वविवेचने गौरव-

**यजेतेत्यस्य स्वर्गकामस्य कृतिसाध्यतया यागो याग-**

---

रेष्टसाधनताप्रमावत्त्वं तत् तच्चेष्टसाधनत्वानुमाने व्यभिचारवारकतया न व्यर्थमिति वाच्यं। तत्तत्क्रियान्तर्भावेनानन्तशक्त्यापत्त्या निषेधविध्यर्थबाधेन बलवदनिष्टाननुबन्धित्वेऽपि पृथक्शक्त्यापत्त्या च लाघवादिष्टसाधनत्वस्यैव शक्यत्वापत्तेः बलवदनिष्टाननुबन्धीष्टसाधनत्वानुमाने मधु-विषसम्पृक्तान्नभोजने व्यभिचारप्रसङ्गाच्च। अतएव प्रकृतक्रियागोचर-बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनताप्रमावत्त्वं तदित्यपि परास्तं तत्तत्क्रियान्तर्भावेनानन्तशक्त्यापत्तेर्निषेधविधिस्थलेऽप्रसिद्ध्यापत्तेश्चेति दूषणमप्यपास्तं।

केचित्तु स्वेच्छाधीनभ्रमानधीनकृतिसाध्यत्वमाप्तत्वपदार्थः, साध्यत्वञ्च जन्यत्वं, अनेन हेतुना इष्टसाधनत्वानुमाने भोजनादिनान्तरीयके जलताड़नादौ तादृशकृतिसाध्यत्वप्रकारकायथार्थेच्छामादाय चैत्यवन्दनादौ च व्यभिचारवारणाय स्वेच्छाधीनेति भ्रमानधीनेति च कृतिविशेषणं, स्वपदं प्रकृतक्रियापरमित्याहुः। तदसत्, न कलञ्जमित्यादिनिषेधविधिस्थले तादृशकृतेरप्रसिद्धेः। न च स्वेच्छाधीनत्वं न शक्तौ प्रवेशनीयं किन्तु इष्टसाधनत्वानुमाने कर्त्तव्ये व्यभिचारवारणाय हेतौ स्वातन्त्र्येण तद्विशेषणमुपादेयमिति वाच्यं। तथा सति भ्रमानधीनकृतिसाध्यत्वप्रकारकत्वस्यापि शक्तौ प्रवेशस्य वैयर्थ्यापत्तेरभिप्रायमात्रस्यैव सम्यक्त्वात् अयथार्थेच्छामादाय निषेधविधेरप्रामाण्यापत्तेश्चेति।

'स्वर्गकामस्य कृतिसाध्यतयेति विशेषणे तृतीया साध्यतासम्ब-

---

मित्युपपादकत्तरमाह 'पाकमिति, 'यागो यागयत्नो वेति मतभेदेन, तथाच

यत्नो वा आप्तेष्ट इत्यर्थः। ततो यो व्यापारः यस्य

---

न्धेन स्वर्गकामकृतिमान् याग इत्यर्थः, आख्यातसामान्यशक्तिवलल-भ्याया: कृतेरन्वयावश्यकत्वादिदमभिहितं, 'यागयत्नो वेति स्वर्ग-कामस्य यागानुकूलो यत्न इत्यर्थः। इदञ्च कृतीष्टसाधनताज्ञानस्य हेतुतानये, सर्व्वत्र षष्ठ्यर्थः संसर्गः,(१) 'आप्तेष्ट इति आप्तत्वप्रकारक-भ्रमभिन्नेच्छाविषय इत्यर्थः, आप्तत्वञ्च उक्तक्रमेण यथायुक्तं ग्राह्यं। यद्यपि स्वर्गकामपदस्य प्रथमान्ततया तदर्थस्य कृतौ नान्वयसम्भवः निराकाङ्क्षत्वात् प्रथमान्तपदोपस्थाप्यस्य शाब्दबोधे विशेष्यत्वादा-ख्यातार्थमुख्यविशेष्यकत्वनियमाच्च अन्यथा देवदत्तः पचतीत्या-दावपि देवदत्तनिष्ठा पाकानुकूला कृतिरित्यन्वयबोधापत्तेः, तथाप्यत्रानुभवबलाद्विलक्षणैव व्युत्पत्तिः, अतएव इष्टसाधनत्वादिश-क्तिमतेऽपि प्राचीनाः स्वर्गकामेष्टसाधनं यागः स्वर्गकामकृतिसाध्यश्च इत्यन्वयबोधमङ्गीकुर्व्वन्तीति भावः। एतेनाख्यातोपस्थाप्यकृतेर्विष-यित्वानुकूलत्वान्यतरसम्बन्धेन धात्वर्थविशेष्यतयैव भाननियमात् कथं साध्यतासम्बन्धेन धात्वर्थविशेषणतया भानमित्यपि परास्तं, अत्र विल-क्षणव्युत्पत्तेः। 'यस्य कृतिसाध्यतयेति यस्य कृतिसाध्यत्वाख्यभ्रमान-धीनकृतिविषयतारूपेण, 'आप्तेनेष्यते' भ्रमभिन्नेच्छाविषय इत्यर्थः,

---

(१) सर्वत्र षष्ठ्यर्थः कृतावन्वित इति ग०।

---

'कृतिसाध्यतयेति न यत्नान्वयि, एवमग्रेऽपि बोध्यं। एवञ्च कृतिसाध्यत्वमपि प्रकार्यमिति ध्येयं। ननु यत्त्वं तत्त्वं वा नानुगतमिति नानुमानमत आह, 'तथा-

कृतिसाध्यतया यद्व्यापारविषयकः प्रयत्नो वा यस्याप्ते-नेष्यते स तस्य बलवदनिष्टाननुबन्धीष्टसाधनमिति व्याप्तिग्रहात् यागस्येष्टसाधनत्वमनुमिनोति। तथा हि यागो मदिष्टसाधनं मत्प्रयत्नविषयतया आप्तेने-ष्यमाणत्वात् यथा मत्पित्रा मत्प्रयत्नविषयतयेष्यमाणं

---

'आप्तेनेति प्रकारे तृतीया, आप्तपदं साध्यत्वाख्यभ्रमानधीनकृति-विषयत्वपरमिति स्फुटीकरणायाप्तेनेत्युक्तं, हेतुश्च साध्यताख्यभ्र-मानधीनयत्कृतिविषयत्वप्रकारकभ्रमभिन्नेच्छाविषयत्वमेवेति बोध्यं, एवं सर्व्वत्र। कृतीष्टसाधनताज्ञानस्य हेतुतानये आह, 'यद्व्यापारेति, 'यस्येति, भ्रमानधीनेच्छाजन्यत्वरूपेणेति शेषः, यागस्य याग-यत्नस्य वा इष्टसाधनत्वं बलवदनिष्टाननुबन्धित्वे सतीष्टसाधनत्वमि-त्यर्थः, 'यागो मदिष्टसाधनमिति यागो बलवदनिष्टाननुबन्धित्वे सति मदिष्टसाधनमित्यर्थः, 'मत्प्रयत्नविषयतयेति साध्यत्वाख्यभ्रमा-नधीन-मत्कृतिविषयत्वरूपेणेत्यर्थः, 'इष्यमाणत्वात्' भ्रमभिन्नेच्छा-विषयत्वात्, अत्र भ्रान्त्या तत्पुरुषक्रियमाणे चैत्यवन्दन-विषभक्षणादौ व्यभिचारवारणाय भ्रमानधीनेति मत्कृतिविशेषणं, भोजनादि-नान्तरीयकजलताड़नादौ व्यभिचारवारणाय जन्यत्वलक्षणं साध्यत्वं विहाय साध्यत्वाख्यविषयत्वानुधावनं, तादृशकृतिविषयत्वप्रकारका-यथार्थेच्छामादाय चैत्यवन्दनादौ व्यभिचारवारणाय भ्रमभिन्नेति

ह्यीति। 'कलञ्जभक्षणमिति, सत्यन्तं उदासीने व्यभिचारवारणाय, मद-

मद्भोजनं मदिष्टसाधनं तथाचेदं तस्मात्तथा। एवं न कलञ्जं भक्षयेदित्यस्य मम कलञ्जभक्षणप्रयत्नो नाप्तेच्छाविषय इत्यर्थः। ततः कलञ्जभक्षणं मम बलवदनिष्टसाधनं मदिष्टसाधनत्वे सत्यप्याप्तेन मत्प्रयत्नविषयतया अनिष्यमाणत्वात् यथा मत्पिचा मत्प्रयत्नविषयतया अनिष्यमाणं मधु-विषसम्पृक्तान्नभोजनं मम बलवदनि-

---

इच्छाविशेषणं। न च साध्यत्वाख्यभ्रमानधीनमत्कृतिविषयत्वादित्येवास्त्विति वाच्यं। भिन्नधर्म्मिकत्वेन धूमप्रागभाववद्वैयर्थ्यादिति ध्येयं। 'मत्प्रयत्नविषयतयेति साध्यत्वाख्यभ्रमानधीन-मत्कृतिविषयतयेत्यर्थः। 'नाप्तेच्छाविषय इति नाप्तत्वप्रकारकभ्रमभिन्नेच्छाविषय इत्यर्थः, 'मदिष्टसाधनत्वे सत्यपीति मदिष्टसाधनत्वे मत्कृतिसाध्यत्वे च सत्यपीत्यर्थः, अयञ्च भागः प्रायशः प्रमाणान्तरादुपस्थित इति द्रष्टव्यं। 'आप्तेन मत्प्रयत्नविषयतयेति साध्यत्वाख्यभ्रमानधीन-मत्कृतिविषयत्वरूपेणाप्तेनेत्यर्थः, 'अनिष्यमाणत्वात्' भ्रमभिन्नेच्छाविषयत्वाभावात्, 'मत्पिचेति मत्पिचापीत्यर्थः, तेन भ्रमानधीनमत्कृतिसाध्यत्वप्रकारकेच्छाविषयत्वसामान्याभावो लभ्यते यथाश्रुते सामान्याभावस्य हेतौ अप्रवेशादसङ्गतेः। नन्वाज्ञादिलिङा इच्छात्वेन वक्तुरेवेच्छा बोध्यते स्वर्गकामो यजेतेत्यादौ च विधिलिङा कस्येच्छा बो-

---

नाप्तेन मदिष्टसाधनस्यापि मत्प्रयत्नविषयतया अनिष्यमाणत्वाद्व्यभिचार इत्यत उक्तं 'आप्तेनेति, जगत एवेश्वरेच्छाविषयतया अप्रसिद्धिभयादाह,

ष्टसाधनं तथाचेदं तस्मात्तथा, स चाप्तो वेदव्याख्याता[१] भगवानीश्वर एव। यस्तु वेदे पौरुषेयत्वं नोपैति तं प्रति विधिरेव तावद्गर्भ इव श्रुतिकुमार्य्याः पुंयोगे प्रमाणं। न तर्हि लाघवं तात्पर्य्यगौरवादीश्वराद्यनन्त-कल्पनादिति चेत्, न, लाघवादिनेच्छाबोधकत्वेन लोके लिङः प्रमाणसिद्धत्वेन फलमुखगौरवस्यादोष-त्वात्। न तु कर्त्तुरस्मरणं बाधकं प्रागेव निरासात् तृप्तिकामनया विषभक्षणप्रवृत्तस्य विषभक्षणं तत्-कृतिसाध्यतया नेश्वरेणेष्यते ततो विषभक्षणस्य ईश्व-

धनीयेत्यत आह, 'स चेति तादृशेच्छाश्रयश्चेत्यर्थः, आप्तश्च प्रकृत-वाक्यार्थगोचरयथार्थज्ञानवान्, तथाचात्रापि वक्तुरेवेच्छा बोध्यत-इति भावः। ननु यन्मते वेदस्य वक्ता नास्ति तन्मते किं स्यादत-आह, 'यस्त्विति, 'विधिरेवेति, वक्तृभिन्नस्येच्छाबोधने तस्य निरा-काङ्क्षत्वादिति भावः। 'कर्त्तुः' वेदवक्तुः, 'अस्मरणं' मन्वादिस्मृत्या अबोधनं, 'प्रागेवेति, "प्रतिमन्वन्तरञ्चैषा श्रुतिरन्या विधीयते"। इत्यादि स्मृत्या कर्तृबोधनादिति भावः[२]। 'तत्कृतिसाध्यतयेति

(१) वेदवक्तेति ग०।

(२) कर्त्तृबोधनादित्यर्थ इति ख०, ग०।

'मत्प्रयत्नविषयतयेति, ईश्वरस्य तत्प्रकारिका न तत्रेच्छेति भावः। तात्पर्य्य-गौरवमेव विवृणोति 'ईश्वरइति इति प्रकाशः।

आद्यहेतौ मत्प्रयत्नविषयतयेत्यस्य फलं दर्शयति, 'तृप्तीति, द्वितीयानु-

रेच्छाविषयत्वेऽपि न तेन व्यभिचारः। यद्वा यत्-कामकृतिसाध्यत्वेन यो व्यापार आप्तेनेष्यते स तस्ये-ष्टसाधनं विषभक्षणञ्च तृप्तिकामकृतिसाध्यत्वेन नेश्व-रेच्छाविषयः मानाभावात्। अतएव न कलञ्जं भक्षयेदित्यत्र कलञ्जभक्षणं तृप्तिकामनया भक्षण-प्रवृत्तस्य कृतिसाध्यत्वेनाप्तेच्छाविषयो नेति तस्येश्वरे-

---

भ्रमानधीनतत्कृतिसाध्यत्वाख्यविषयतयेत्यर्थः, एवं सर्व्वत्र साध्यत्वपदं साध्यताख्यविषयतापरं। ननु स्वर्गत्वादिरूपेण स्वर्गादिसाधनत्व-ज्ञानमेव हेतुः न त्विष्टत्वेन तच्च न वृत्तं इत्यरुचेराह, 'यद्वेति, 'यत्कामेति यदर्थीत्यर्थः, अत्रापि 'भ्रमानधीनेति कृति-विशेषणं बोध्यं। 'तस्येष्टेति तस्येष्टस्येत्यर्थः, 'तृप्तिकामकृतीति भ्रमानधीनतृप्त्यर्थिकृतीत्यर्थः, 'मानाभावात्' विषयबोधाभावात् ईश्वरेच्छायास्तु सन्मात्रविषयकत्वनियमादित्यर्थः, 'कृतिसाध्यत्वेन' भ्रमानधीनकृतिसाध्यत्वेन, 'आप्तेच्छेति भ्रमभिन्नेच्छेत्यर्थः। नन्वेवं

मानेऽपि तत्फलमाह 'अतएवेति, 'बलवदिति, तथाच यागो बलवदनिष्टा-ननुबन्धीष्टसाधनमित्येव साध्यं, अतएव तद्गर्भव्याप्त्युपदर्शनं प्रागुक्तं संगच्छत-इति भावः। अत्रेदमनभिमतिबीजं भ्रमेण तृप्तिकामकृते विषभक्षणे तथापि व्यभिचार एव तस्य तृप्तिकामकृतिसाध्यत्वेनेश्वरेच्छाविषयत्वात्। न चात्र मानाभावः। वस्तुतस्तत्र तत्कृतिसाध्यत्वे तत्प्रकारकतदिच्छाया वज्रलेप-त्वात्तदिच्छायाः सकलप्रकारकत्वात्, अन्यथा घटस्य घटत्वेन तदिच्छाविषयत्वे किं मानं। न च बलवदनिष्टाजनकत्वमपि लिङ्गविशेषणं, भ्रमकृतजलताड-नादौ तथापि व्यभिचारात् उक्तरीत्या तस्यापि मत्कृतिसाध्यत्वेनेश्वरेच्छा-विषयत्वात् तस्यानुमानिकत्वाभ्युपगमेन विधिवाक्यादनुपस्थितेश्च। न च

च्छाविषयत्वेऽपि विशिष्टनिषेध उपपद्यते, अभिप्राय-

कुतो लाघवमित्यतः पूर्व्वोक्तं लाघवमेव विवृणोति, 'अभिप्राय-विधिपक्ष इति, अत्रेदमस्वरसवीजं तन्मयेऽपि भ्रमानधीनत्व-भ्रमभिन्नत्वेच्छात्वादीनां प्रवेशाद्विपरीतमेव गौरवं आज्ञादिलिङ्-दृष्टान्तेन लिङ्त्वेन हेतुना लिङ्मात्रस्यैव इच्छाशक्तत्वानुमानञ्चा-प्रयोजकं श्येनेनाभिचरन् यजेतेत्यादिविधेरप्रामाण्यापत्तिश्च श्येनस्य बलवदनिष्टाननुबन्धित्वभ्रमाधीनकृतिसाध्यत्वनियमेन तत्र तादृश-भ्रमभिन्नेच्छाविषयत्वस्य बाधितत्वादिति।

अत्र नव्याः आप्तत्वप्रकारकत्वं भ्रमभिन्नत्वञ्च न प्रवेशनीयं किन्तु इच्छात्वेन इच्छैव विध्यर्थः, इष्टसाधनत्वादौ च निरूढलक्षणा

प्रकारान्तरोपस्थितस्यैव तस्य लिङ्गविशेषणत्वं, कृतिसाध्यत्वस्याप्यशक्यत्वा-पत्तेः तद्वदेव तस्यापि लिङ्गविशेषणत्वसम्भवात्। एतेन यद्व्यापारविषयः प्रयत्नो यस्यापेनेष्यत इत्यादिव्याप्तौ व्यभिचारो बोध्यः, एवञ्च भ्रमकृते कलञ्जभक्षणे विशिष्टनिषेधानुपपत्तिरेव उक्तगत्या तस्यापि तत्कृतिसाध्य-त्वेनेश्वरेच्छाविषयत्वादिति दिक्।

अन्ये तु अनुमितेर्व्यापकतावच्छेदकविषयकत्वादिष्टसाधनत्वप्रकारकानु-मितावपि प्रवर्त्तकस्वर्गसाधनताज्ञानमितो न भवतीत्यस्वरसमाहुः।

विधिस्त्वनेकधा भिद्यते क्वचित् क्रियाविधिः यथोद्भिदा यजेतेति, क्वचित् सम्बन्धविधिः, यथा यदाग्नेयोऽष्टाकपालो भवतीति, क्वचिद्विशिष्टविधिः यथा न जीर्णमलवद्वासा स्नातकः स्यादिति, अत्र हि नानुयाजेष्वितिवत् पर्युदासलक्षणया जीर्णमलवदन्यत्वविशिष्टवासोविधिरेवायं अनन्यगतिक-त्वात्। न ह्यत्र जीर्णत्व-मलवत्त्वाभ्यां विशिष्टं वासो निषिध्यते, विशिष्ट-वासोनिषेधस्य विशेष्यवासोनिषेधेऽप्युपपत्तेर्नञस्याप्यन्वयापत्तेरेकविशिष्ट-स्योपादानापत्तेश्च। नाप्येकैकविशिष्टमेव निषिध्यते, वाक्यभेदापत्तेः, वि-

विधिपक्षे बलवदनिष्टाननुबन्धित्वमानुमानिकं इष्ट-

लाघवात् सा चेच्छा वक्तुरेव बोध्यते नान्यस्य युष्मदस्मदादिपदवत् व्युत्पत्तिवैचित्र्यात्। न चेच्छायाः स्वरूपसत्या एव प्रवृत्त्यादिहेतुत्वात् तज्ज्ञानमनुपयुक्तमिति वाच्यं। तज्ज्ञानस्य प्रवृत्तावनुपयोगित्वेऽपि इष्टसाधनत्वाद्यपेक्षया लाघवादेव तत्र शक्त्युपगमात्। न चैवं विधेर्ज्ञानत्व-गुणत्व-सत्त्वादिकमादाय विनिगमनाविरह इति वाच्यं। भवान् पाकं कुर्य्यात् अहं पाकं कुर्य्यां इत्याद्याज्ञादिलिङ्स्थलेऽनुभवबलादिच्छात्वेन इच्छायां लिङः शक्तेरावश्यकत्वात्, न हि तत्र तत्तद्यागत्वादिकं शक्ततावच्छेदकं, किन्तु सामान्यतो यागत्वादिकमेव तथा। न चाख्यातसामान्यस्यैव कृतित्वेन कृतौ शक्तिकल्पनात् कृतावपि विधिशक्तिरस्त्विति वाच्यं। तत्र तित्व-

---

शेषणमात्रनिषेधेऽप्येवं। अतएव सुवाससा भवितव्यमिति श्रुतिरत्र मूलमिति भट्टोक्तमपि युज्यते, निषेधकत्वे हि विधायकमूलकं कृतं न स्यादिति। क्वचिद्गुणविधिः यथा सितासिते स्नायादित्यत्र नित्यविधिप्राप्त एव स्नानद्वये फलार्थं देशरूपो गुणो विधीयते। क्वचित् कालरूपगुणविधिः यथा मध्याह्न एव एकोद्दिष्टं कुर्व्वीतेति। क्वचित् कारकरूपस्तद्विधिः यथा गोदोहनेन पशुकामस्येति। क्वचित् कालविशिष्टकर्म्मविधिः यथा अपरपक्षे श्राद्धं कुर्व्वीतेति। क्वचित् क्रमविधिः यथा दर्श-पूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेति। क्वचित् नियमविधिः यथा याजनाध्यापन-प्रतिग्रहैर्ब्राह्मणो धनमर्ज्जयेदिति, अत्र हि न धनार्ज्जनं विधीयते रागप्राप्तत्वात्, नाप्यर्ज्जनस्य याजनाद्यन्वयः कृष्याद्यन्वयवत्तस्यापि रागप्राप्तत्वात् अप्राप्तस्यैव विधेयत्वात्, तथाचाप्राप्त इतरोपायनिषेध एवात्र विधेयः। क्वचित् परिसङ्ख्याविधिः यथा पञ्च पञ्चनखा भक्ष्या इत्यत्र। नन्वत्रापि शशकादीनां पञ्चानां भक्षणं रागप्राप्तमेवेति तदितरपञ्चनखभक्षणनिषेध एव विधेय इति नियम-परि-

साधनताविधिपक्षे तु तदपि शक्यमिति गौरवमिति ॥

तत्त्वादेरेव शक्यतावच्छेदकत्वेनाख्यातत्वस्यानवच्छेदकत्वात् । वस्तुतस्तु कृतीच्छयोरुभयोरेव शक्तेरावश्यकत्वाद्विधिर्नानार्थ एव कृतिशक्त्य-नभ्युपगमे स्वर्गकामो यजेतेत्यादौ स्वर्गकाम इत्यस्यानन्वयापत्तेः तत्र शक्त्यभ्युपगमे च इच्छाविषययागानुकूलकृतिमान् स्वर्गकाम-इत्यन्वयबोधसम्भवात् । अतएव इष्टसाधनत्वादिशक्तिवादिनामपि कृतौ विधिशक्तिरावश्यकी स्वर्गकामपदस्य प्रथमान्तत्वेन स्वर्ग-कामेष्टसाधनं याग इत्यन्वयबोधासम्भवात्, कृतिशक्त्यङ्गीकारे च इष्टसाधनीभूतयागानुकूलकृतिमान् स्वर्गकाम इति सर्व्वसिद्ध-व्युत्पत्त्यविरोधेनान्वयबोधोपपत्तेः । न चेच्छात्वेनेच्छायां शक्तौ न कलञ्जं भक्षयेदित्यादिनिषेधविधेरप्रामाण्यापत्तिः कलञ्जभक्षण-स्यापि इच्छाविषयत्वेन विषयतया इच्छाभावस्य बाधितत्वात् इति वाच्यं । इष्टसाधनत्वशक्तिवादिनामिव तत्र लक्षणया विध्यु-

---

सङ्ख्ययोरन्यव्यवच्छेदविधायकत्वादभेदः इति चेत्, अत्र वदन्ति, यत्क्रियायां विकल्पेन कारकान्वयस्तत्र नियमः यथा धनार्ज्जने, न ह्येकस्यामेव धनार्ज्जन-क्रियायां याजन-प्रतिग्रहादयो मिलिता अन्वीयन्ते, याजन-प्रतिग्रहाभ्या-मेकस्य धनार्ज्जनस्यासम्भवात् । परिसङ्ख्यायान्तु नैवं, शशकादिमांसेन निर्म्मितस्यैकस्य पिण्डस्यैकस्यामेव भक्षणक्रियायां अन्वयसम्भवात् । तदुक्तं

"विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति ।

तत्र चान्यत्र च प्राप्तौ परिसङ्ख्या न मुच्यते" ॥ इति ।

यत्तु तादृशार्ज्जने विकल्पेनोपायत्रयसम्बन्धे शब्दतः प्रतीयमाने कृष्यादीना-मनन्वयोऽर्थात् सिद्ध्यति, न हि येषामेकान्वये अपरानन्वयनियमस्तेषां समु-च्चयः सम्भवति, तथाचान्येतरोपायव्युदास एव शब्दतात्पर्य्यं प्राप्तत्वात् किन्तु

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ शब्दाख्यतुरीयखण्डे विधिवादः समाप्तः ।

---

पस्थापितस्य पापाजनकत्वस्यैव कलञ्जभक्षणेऽभावबोधनात् अन्यथा तत्राप्रामाण्यं दुर्वारमिति प्रागेवावेदितत्वात् । न च तथापि पाकं न कुर्य्याः पाकं न कुर्य्यामित्यादिलौकिकनिषेधलिङोऽप्रामाण्यापत्तिरिति वाच्यं । तत्र लक्षणया लिङोपस्थापितायास्तत्तत्पुरुषेच्छात्वेन वक्त्रिच्छाया एव विषयतया अभावबोधनात् । यद्वा तत्रेच्छात्वेनैव वक्त्रिच्छाव्यक्तेरभावो नञा बोध्यते अन्यत्र लिङोऽन्वयितावच्छेदकावच्छिन्नाभावबोधकत्वनियमेऽपि अत्र व्युत्पत्तिवैचित्र्याभ्युपगमादिति प्राञ्चः ॥०॥

इति श्रीमथुरानाथ-तर्कवागीशविरचिते तत्त्वचिन्तामणिरहस्ये शब्दाख्यतुरीयखण्डरहस्ये विधिवादरहस्यम् सम्पूर्णम् ॥०॥

---

न तत्र शब्दः प्रवर्त्तते अन्यलभ्यत्वात् वह्निजिज्ञासुं प्रति धूमोऽस्तीतिशब्दवत्, परिसङ्ख्यायान्तु नैवं तत्र भक्षणक्रियायाञ्च पञ्चनखान्वये प्रतीतेऽर्थादितरपञ्चनखान्वयो न व्युदास्यते उक्तगत्या तत्र समुच्चयसम्भवात् तथाचात्रानन्यगत्या अन्यपञ्चनखभक्षणनिषेधोऽत्र वाक्यार्थः, एवञ्च भक्ष-पञ्चपदयोर्विरोधलक्षणा तेन पञ्चेतरे पञ्चनखा न भक्ष्या इति वाक्यार्थः सिद्ध्यति, तथाचोपस्थितपदार्थपरित्यागादनुपस्थितपदार्थकल्पनादभावविधित्वाच्च नियमापेक्षया दोषत्रयवती परिसङ्ख्यानन्यागत्येति तच्चिन्त्यं। याजनादिजन्यतत्तदर्ज्जनेतरोपायव्युदासस्यार्थलभ्यत्वेऽपि कृष्यादिभिर्नार्ज्जयेदित्यस्याप्राप्तेः अनन्यगत्या नियमेऽपि निषेधस्यैव वाक्यार्थत्वौचित्यात्, अन्यथा कृष्यादिभिरर्ज्जयेदेव तज्जन्यार्ज्जन-तत्सम्बन्धव्युदासाभावादिति प्रकाशः ॥

# अथापूर्व्ववादः ।



## अथ स्वर्गकामो यजेतेत्यादाविष्टसाधनत्वं कार्य्यत्वं

---

अथापूर्व्ववादरहस्यं ।

प्रसङ्गादपूर्व्वस्य विधिप्रत्ययवाच्यतां प्राभाकराभिमतां निराकर्त्तुं विचाराङ्गसंशयप्रयोजिकां विप्रतिपत्तिमादर्शयति, 'अथेत्यादिना, 'यद्विधिः' यद्विधिपदोपस्थापितार्थः, 'समभिव्याहृतक्रियान्वयीति एतद्विधिसमभिव्याहृतधातूपस्थापितार्थान्वयी तदन्यान्वयी वेत्यर्थः, तदन्वयित्वञ्च तद्विशेष्यकत्वावच्छिन्नशाब्दबोधप्रकारताश्रयत्वं, अत्र विधिकोटिः विधेः कार्य्यत्वे शक्तिवादिनां नैयायिकानां तन्नये स्वर्गकामकृतिसाध्यो याग इत्यन्वयात्, निषेधकोटिस्तु कार्य्यत्वरूपेणापूर्व्वे शक्तिवादिनां प्राभाकराणां तन्नये स्वर्गकामस्य यागविषयकं कार्य्यमिति यागवियककार्य्यवान् स्वर्गकाम इत्येव वान्वयबोधात्। अत्र विषयकत्वं जन्यत्वं, तच्च याग-कार्य्ययोः संसर्गः, कार्य्यत्वं कृतिसाध्यत्वं, अपूर्व्वस्यापि क्वचिल्लक्षणादिना धातूपस्थापितत्वात् विधि-

प्रसङ्गादाह, 'अथेति, यद्यपि गुरुमते विधिः कार्य्यात्मा समभिव्याहृतक्रियान्वय्येव तथापि कार्य्यत्वांशमुभयवादिसिद्धं लिङर्थमादायैव विप्रति-

वा यद्विधिः स समभिव्याहृतक्रियान्वयी तदन्यान्वयी

समभिव्याहृतधातूपस्थापितत्वाच्च विधिकोटौ सिद्धसाधनं निषेधकोटौ बाध इति तद्वारणाय एतद्विधिसमभिव्याहृतेति धातुविशेषणं, तदन्यान्वयित्वञ्च तदन्वयिभिन्नत्वं, यथाश्रुतस्य विरोधिकोटित्वाभावात् । इष्टसाधनत्वत्वादिना प्रत्येकरूपेण पक्षत्वे द्वयोरसङ्ग्रहः इष्टसाधनताविधिपक्षे इष्टसाधनत्वस्यापि तन्नये विध्यर्थकार्य्येऽन्वयादतः पक्षे 'यद्विधिरिति, इत्यत्र यद्विध्यर्थत्वेन द्वयोरनुगमान्नोक्तदोषः । 'इष्टसाधनत्वं कार्य्यत्वं वेति तु स्वरूपकथनं न तु तद्रूपेण पक्षे प्रवेशः, 'इष्टसाधनत्वमिति प्राभाकरैकदेशिमते, 'कार्य्यत्वं' कृतिसाध्यत्वं । न च गुरुनये कार्य्यस्य धर्मिणो विध्यर्थतया कृतिसाध्यत्वरूपस्य कार्य्यत्वस्य विधिप्रत्ययप्रवृत्तिनिमित्तत्वमेव कुतो विध्यर्थत्वमिति वाच्यं । कार्य्यस्य विध्यर्थत्वेऽपि अवच्छेदकविधया कार्य्यत्वस्यापि विध्यर्थत्वात् । वस्तुतस्तु तन्मते कृतिसाध्यत्वरूपं कार्य्यत्वं न शक्यतावच्छेदकं, अपि तु प्रागभावप्रतियोगित्वरूपं ध्वंसप्रतियोगित्वरूपं धर्म्मत्वरूपं वा लाघवात्, कृतिसाध्यत्वन्तु पृथगेव शक्यं लिङ्सामान्यशक्यं वा पचेतेत्यादिलौकिकस्थलानुरोधात् । अन्वयबोधोऽपि यागविषयकं कार्य्यं स्वर्गकामकृतिसाध्यमित्याकारकः कृतिसाध्ययागविषयककार्य्यवान् स्वर्गकाम इत्याकारको वेति यथाश्रुतमेव साधु । पक्षतावच्छेदकावच्छेदेन विधिकोटिसिद्धेरुद्देश्यतया बलवदनिष्टाननुबन्धित्वस्य प्रकृत्यर्थेऽन्वयमादाय नांशतः

पक्षिर्बोध्या, इष्टसाधनत्वं विधिरिति न्यायमतेनाभ्युपगमवादेन वा बोध्यं ।

सिद्धसाधनं, न वा कृतिसाध्यत्वेष्टसाधनत्वयोरन्यतरत्रांशतः साध्यसिद्धिमादायार्थान्तरत्वं, प्रवर्त्तकज्ञानप्रकारीभूतत्वेन च विध्यर्थो विशेषणीयः तेन वर्त्तमानत्वादेः कालस्य सङ्ख्यायाश्च तादृशविधिप्रतिपाद्यत्वेऽपि न तत्र विधिकोटावंशतो बाधः, न वेष्टसाधनत्वत्वादौ विध्यर्थतावच्छेदकेऽंशतो बाधः प्रवर्त्तकज्ञानप्रकारीभूतत्वस्य प्रवृत्तिविशेष्यांशे प्रवर्त्तकज्ञानप्रकारत्वरूपत्वात् । यद्वा सङ्ख्याकालातिरिक्तत्वेन विध्यर्थोऽपि विशेषणीयः, विधिशक्यत्वरूपस्य विध्यर्थत्वस्य पक्षतावच्छेदकत्वादिष्टसाधनत्वत्वादौ नांशतो बाधः, कृतिसाध्यत्वस्य पृथक् शक्यतया नैतदसङ्ग्रहः । निषेधसिद्धिस्तु पक्षतावच्छेदकसामानाधिकरण्येन उद्देश्या नातो बलवदनिष्टाननुबन्धित्वेऽंशतो बाधः । प्रवर्त्तकज्ञानप्रकारीभूतत्वमात्रेण पक्षतायां ओदनकामः पचेदित्यादिविध्यर्थे ओदनसाधनत्व-पाकमात्रविषयककृतिसाध्यत्वादौ विधिकोटावंशतो बाध इति, स्वर्गकामो यजेतेत्यादिस्थलीयतत्तद्विध्यर्थत्वेन पक्षतालाभाय 'स्वर्गकामो यजेतेत्यादाविति विधिविशेषणमिति भावः ।

नव्यास्तु विज्ञातविधितत्त्वार्थस्तु तदन्वयिनं पृच्छति, 'अथेति, न तु विप्रतिपत्तिपरोऽयं ग्रन्थः, गुरुणा समं विवादे तु कार्य्यत्वं विधिप्रत्ययशक्यतावच्छेदकं न वेति विप्रतिपत्तिरूहनीया विधिकोटिः परेषां । न च विधिप्रत्ययशक्यत्वेऽपि तस्य प्रकृत्यर्थयागादावभेदान्वयेऽपि नैयायिकानां विवक्षितार्थसिद्ध्यार्थान्तरप्रसङ्ग-

यद्यप्यौपादानिकं साधनत्वादिकं परमते यागेऽन्वेत्येव तथापि प्राथमिक-

वा, अत्र गुरवः, नाहत्य क्रियाकार्य्यतया लिङा बोध-

इति वाच्यं। धात्वर्थ-प्रत्ययार्थयोरभेदान्वयबोधस्याव्युत्पन्नतया ता-दृशान्वयबोधासम्भवात् अन्यथा पूर्व्वोक्तविप्रतिपत्तावपि यागनिष्ठ-कृतिसाध्यत्वस्य निरूपकतासम्बन्धेन विध्यर्थे कृतावन्वयादपि नैया-यिकानां विवक्षितार्थसिद्ध्यार्थान्तरप्रसङ्गस्य दुर्व्वारत्वादिति प्राहु-रिति दिक्।

'अत्र गुरव इति, 'अत्र' विप्रतिपत्तौ प्रश्ने वा, 'नाहत्येति, 'आहत्य' साक्षात्, अपूर्व्वकार्य्यत्वानुपपत्तिज्ञानद्वारा पश्चात्तु बोध्यत एवेति भावः। 'क्रिया' यागादिः, 'कार्य्यतया' स्वर्गकामकृतिसाध्यतया। न चैवं अनुपपत्तिज्ञानोत्तरकालिकबोधमादाय विधौ सिद्धसाधनं निषेधे च बाध इति वाच्यं। तदन्वयित्वस्य शाब्दत्वघटितत्वादेव सिद्धसाध-नादिनिरासात् अनुपपत्तिज्ञानोत्तरकालिकबोधस्यैव औपादानिक-बोधत्वेन शाब्दत्वविरहात्, औपादानिकत्वञ्च प्रत्यक्षत्वादिवदनुभव-त्वव्याप्यो धर्म्मविशेषः तदवच्छिन्नं प्रति च श्रौतानुपपत्तिज्ञान-सचिवः शब्द एव पुनरनुसन्धीयमानो हेतुः अतएवानुपपत्तिज्ञान-सचिवः शब्द एव पञ्चमप्रमाणमिति परसिद्धान्त इति भावः[१]।

[१] न चैवमित्यादिः इति भाव इत्यन्तः पाठः गपुस्तके नास्ति।

शाब्दोपस्थितान्वयबोधस्तमभिप्रेत्येदं बोध्यं। 'आहत्येति इष्टसाधनताज्ञा-नात् प्रागित्यर्थः। 'स्वर्गेति स्वर्गकामस्य नियोज्यस्य नियोज्यत्वेन योऽन्वय-बोधस्तत्र योग्यताज्ञानविरहादित्यर्थः। कुत एवमित्यत आह, 'कामनेति विशेष्यान्वय्यनन्वयिनो विशेषणत्वानुपपत्तेरित्यर्थः। न च कामनोपलक्षण-

यितुं शक्यते स्वर्गकामनियोज्यान्वययोग्यताज्ञानविरहात्, कामनाविशिष्टस्य हि ममेदं कर्य्यमिति बोद्धृत्वं

---

'स्वर्गकामनियोज्येति स्वर्गकामोयजेतेत्यत्र यो विधिवाक्यनियोज्यस्तदीयकृतिसाध्यत्वान्वयबोधप्रयोजकीभूतस्य ज्ञानस्य विरहादित्यर्थः, वक्ष्यमाणयुक्त्या यागे स्वर्गकामकृतिसाध्यत्वान्वयबोधे यागनिष्ठेष्टसाधनताज्ञानस्य हेतुत्वेन प्रथमं तद्विरहादिति भावः। प्रयोजकज्ञानविरहमेवोपपादयति, 'कामनाविशिष्टस्य हीति, 'ममेदं कार्य्यमिति यागविशेष्यकस्वर्गकामकृतिसाध्यत्वप्रकारकेत्यर्थः, 'बोद्धृत्वं' शाब्दबोधोपयोगित्वं, तच्च कारण-कारणतावच्छेदकसाधारणं तेन वक्ष्यमाण-

---

मेव, अकामव्यावृत्तोपलक्ष्याभावात् विशेषणत्वे बाधकाभावाच्च। ननु कर्त्तृत्वेनाधिकारित्वेन वा तदन्वयसम्भवे किं नियोज्यत्वेनेति चेत्, कृतिसमवायित्वरूपस्य कर्त्तृत्वस्य स्वर्गरूपफलभाविविलक्षणस्याधिकारित्वस्य च कामनांशेऽनन्वयात्। न च कृतिजनकत्वेन कर्त्तृत्वेनान्वयोऽस्तु तच्च विशेषणीभूतकामनायामपि अन्यथा बोद्धव्यत्वान्वयोऽपि कथमिति वाच्यं। न हि न्यायनय इव फलकामना गुरुमतेऽपि साक्षात्प्रयत्नहेतुः, किन्तु ममेदं कार्य्यमिति बोधद्वारेत्यस्यापि नियोज्यत्व एव विश्रामादिति वदन्ति।

अन्ये तु शुचिविहितकालजीवित्वे सति फलकामनावत्त्वमिष्टोपायताज्ञानवत्त्वञ्चाधिकारित्वं तच्च कामिनो यागे न सम्भवति तस्य क्षणिकत्वात् स्वर्गस्य क्रमिकत्वात्। न च फलसाम्यलक्षणेनाधिकारित्वेनान्वयोऽस्त्विति वाच्यं। फलवत्त्वे ह्यधिकारिता तया च तस्य क्रियान्वये सति प्रवृत्तौ सत्यां फलवत्त्वमित्यन्योन्याश्रयात्। नापि कर्त्तृत्वेनान्वयः, तथा हि स्वर्गकाम इत्यादिवाक्यं तावत् इच्छाविषयत्वेन स्वर्गं बलवदिष्टप्रतिपादकं। न चेदमन्यार्थं

नियोज्यत्वं, तत् कामनायास्तद्बोधोपयोगे सति भवति

क्रमेण कामनाया अपि तादृशशाब्दबोधोपयोगित्वं सङ्गच्छते, कामना-विशिष्टस्य तु तादृशबोधोपयोगित्वं समवायिकारणतया, 'नियोज्य-त्वं' सकलप्रामाणिकसिद्धनियोज्यव्यवहारविषयतावच्छेदकं, 'तदिति स्वर्गकामनाविशिष्टस्य तादृशबोधोपयोगित्वमित्यर्थः, 'तद्बोधोपयोगे सतीति तादृशकार्य्यताबोधोपयोगित्वे सतीत्यर्थः, विशेष्यान्वयिन एव विशेषणतया विशेषणस्य तदुपयोगित्वं विना विशिष्टस्य तदुपयोगि-

भवति, नेष्टं परनिष्पत्तये इति न्यायात्, किन्त्विष्टार्थतैवान्यस्य सर्व्वस्य कामनापि तावत् काम्यार्थैव सा हि स्वर्गे भवन्ती तत्साधने इष्टोपायता-धियं ततः कार्य्यताधियं तत्रोत्पाद्याधिकारिणं तत्र प्रवर्त्त्य स्वर्गमर्ज्जयतीति, एवं यागोऽप्युपायतया स्वर्गार्थः, एवं स्वहेतुभूतापूर्व्वनियोज्यतया पुरुषोऽपि स्वर्गार्थ एवेति न पुंसः कर्त्तृत्वेन क्रियायामन्वयः व्युत्पादितस्वर्गप्राधान्य-भङ्गापत्तेः। तथा हि स्वर्गकामकर्त्तृको याग इत्यन्वये स्वर्गस्य कर्त्तृकोटि-प्रवेशात् अन्यार्थत्वप्राप्तेः। ननु यजेतेत्यनेनोक्ता भावना शुद्धेन प्रातिपादि-कार्थेनान्वीयते उभयाकाङ्क्षाबलात् तदनुयायिनी लिङुक्ता सङ्ख्यापि एक-प्रत्ययोपात्तत्वात्, एवञ्चैकैव सङ्ख्या सुप्तिङ्भ्यामभिधीयते इति शाब्द-सामानाधिकरण्यं, तथाच भावनान्वयेन पुरुषः कर्त्ता भवन्नन्वीयते यागे एवञ्चाधिकारित्वेनान्वये अधिकारिणोऽलाभे प्रवर्त्तकत्वायोगः तत्कथमेव-मिति चेत्, न, पश्चात् कर्त्तृत्वादिनाप्यन्वयस्याभ्युपगमेन सर्व्वस्योपपत्तेः। अतएवैकादशाद्ये तथैव सिद्धान्तितमिति वदन्ति। ननु निरुक्तनियोज्य-त्वमनुपस्थितं कथमन्वयप्रकार इति चेत्, न, योग्यतावच्छेदकप्रकारेणोप-स्थित एव इतरान्वय इति छिन्नेतरत्ववत् तस्य योग्यताबलादेवोपस्थितेः संसर्गरूपतयैव तद्भानमित्यप्याहुः। 'बोद्धृत्वमिति बोधजनकत्वमित्यर्थः।

स च कामनानन्तरं काम्यसाधनताबोधात् कार्य्यताबोधे सति स्यात्, एवञ्च स्वर्गसाधनताबोधे सति स्वर्गकामनियोज्यान्वययोग्यता । न च कालान्तरभाविस्वर्गे क्रिया साक्षात् परम्परया वा साधनमिति शब्दो

लासम्भवात्। न च रूपवति रस इत्यादिवत्कामना चोपलक्षणमिति वाच्यं। विशेषणत्वसम्भवे उपलक्षणत्वस्यान्याय्यत्वादिति भावः। 'स चेति, कामनायास्तादृशबोधोपयोगश्चेत्यर्थः, 'कामनानन्तरं काम्यसाधनताबोधादिति, 'कामनानन्तरं' कामनाप्रकारकज्ञानानन्तरं, यः काम्यसाधनताबोधः कामनाघटितकाम्यसाधनताबोध इति यावत्, तस्मात् कार्य्यताबोधे सति तज्जन्यो यदि कार्य्यताबोधस्तदैव स्यात् कामनायाः कारणतावच्छेदकत्वात्, न हि कामनैव साक्षात्-कार्य्यताबोधजनिका, असम्भवात् इत्यर्थः, अतः काम्यसाधनताज्ञानं स्वर्गकामकृतिसाध्यत्वान्वयप्रयोजकं इति शेषः। 'स्वर्गकामेति स्वर्गकामो यो नियोज्यस्तदीयकृतिसाध्यत्वान्वयबोधप्रयोजकज्ञानमित्यर्थः। नन्वेवं प्रथमं वेदाद् यागे स्वर्गसाधनताज्ञाने सति तदनन्तरं तत्र स्वर्गकामकृतिसाध्यताबोधो भविष्यति किं कार्य्यत्वरूपेण विधेरपूर्व्वशक्त्येत्यत आह, 'न चेति, 'क्रिया' यागादिः, 'साक्षादिति

कामनायाः साक्षात् तद्बोधोपयोगे बाधात् तद्द्वारमाह, 'स चेति साक्षात् जनकत्वबाधे द्वारानुपस्थित्या कामनायां तद्ग्रहोऽसम्भवीत्यतो द्वारोपस्थितिर्वाच्या द्वारञ्चेष्टसाधनताज्ञानं तदसम्भवे योग्यताज्ञानविरह इत्यर्थ-इत्यन्ये ।

बोधयितुमर्हति, आशुविनाशित्वात् परम्पराघटकानुपस्थितेश्च तृतीयप्रकाराभावाच्च। अन्यथा तमादाय

अव्यवहितपूर्व्वत्वसम्बन्धेन कार्य्याधिकरणीभूतक्षणनिष्ठात्यन्ताभावप्रतियोगितानवच्छेदकान्यथासिद्धनिरूपकधर्म्मवत्त्वं साक्षात्साधनत्वं, तादृशधर्म्मावच्छिन्नजनकत्वे सति कार्य्यनियतपूर्व्ववर्त्तितावच्छेदकान्यथासिद्धनिरूपकधर्म्मवत्त्वञ्च परम्परासाधनत्वमिति भावः। साक्षात्साधनत्वस्याबोधने हेतुमाह, 'आश्विति यागादेरिच्छाविशेषरूपस्य तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वात् इत्यर्थः, परम्परासाधनत्वस्याबोधे हेतुमाह, 'परम्परेति अव्यवहितपूर्व्वत्वसम्बन्धेन स्वर्गविशेषाधिकरणीभूतक्षणनिष्ठात्यन्ताभावप्रतियोगितानवच्छेदकान्यथासिद्धनिरूपकधर्म्मावच्छिन्नजनकत्वे सति स्वर्गविशेषनियतपूर्व्ववर्त्तितावच्छेदकान्यथासिद्धनिरूपकधर्म्मवत्त्वरूपपरम्परासाधनत्वघटकस्यापूर्व्वस्यानुपस्थितेरित्यर्थः। न चापूर्व्वघटितविशिष्टपरम्परासाधनत्वस्यैव विध्यर्थतया तत एव विशिष्टोपस्थितिसम्भवात् किमपूर्व्वस्य पृथगुपस्थित्या इति वाच्यं। परम्परासाधनत्वान्वयबोधे परम्पराघटकफलपर्य्यन्तस्थायिव्यापारोपधायकत्वस्यान्वयप्रयोजकरूपत्वेन योग्यतात्वात् प्रथमं तज्ज्ञानं विना तदन्वयबोधासम्भवादिति भावः। नन्वेतदुभयविलक्षणमेव साधनत्वं बोधयिष्यतीत्यत आह, 'तृतीयेति, 'अन्यथा' तृतीय-

यद्यपि तन्मते औपादानिकं तन्न शाब्दं, तथाप्युपादानसहकृतशब्दजन्यतया शाब्दाभ्युपगमादेतदुक्तं। 'स्वर्गेति साक्षात् स्वर्गसाधनतार्हमित्यर्थः, अन्यथा क्रियातौल्ये दोषतौल्यादित्यवधेयं। एतच्च काम्यस्थले, नित्ये चेष्टसाधनताज्ञानं विनापि तन्मते कार्य्यताबुद्धेर्नियोज्यान्वयसम्भवादित्यवधेयं।

साधनत्वसम्भवात् कल्प्यमप्यपूर्व्वं न स्यात्, इष्टसाधनताविधिपक्षे स्फुटैवानुपपत्तिः । कार्य्यताविधिपक्षे

प्रकारसत्त्वे, 'साधनत्वसम्भवादिति अपूर्व्वं विनापि यागस्य स्वर्गसाधनत्वसम्भवादित्यर्थः[१] । 'कल्प्यमिति तव नयेऽप्यपूर्व्वकल्पना न स्यादित्यर्थः, आशुविनाशिनो यागस्य कालान्तरभाविस्वर्गसाधनत्वान्यथानुपपत्त्यैव त्वयापूर्व्वकल्पनादिति भावः । नन्वेवं प्रथमं परम्परासाधनत्वरूपेण परम्परासाधनत्वान्वयासम्भवेऽपि सामान्यतः स्वर्गसाधनत्वरूपेणान्वयः स्यादित्यत आह, 'इष्टसाधनताविधिपक्ष-इति सामान्यत इष्टसाधनत्वस्य विध्यर्थत्वपक्षे इत्यर्थः, 'अनुपपत्तिरिति साक्षात्परम्परोदासीनेन फलसाधनत्वान्वयेऽपि फलपर्य्यन्तस्थायित्व-तादृशव्यापारोपधायकत्वान्यतरवत्त्वस्य योग्यतात्वेन तज्ज्ञानं विना सामान्यतोऽपि तत्साधनत्वान्वयासम्भवात् इति भावः । न च साक्षात्परम्परासाधनत्वोभयसाधारणं स्वर्गसाधनत्वमनुगतमेव दुर्वचमिति वाच्यं । स्वर्गत्वावच्छिन्नविजातीयस्वर्गनियतपूर्व्ववर्त्तितावच्छेदकान्यथासिद्धनिरूपकधर्म्मवत्त्वस्यैव तत्त्वात् । न चैवमव्यवधानांशस्याप्रवेशात् स्वतो व्यापारतो वा स्वर्गाव्यवहितपूर्व्वक्षणमसतोऽपि नियतपूर्व्वसतः कारणत्वापत्तिरिति वाच्यं । अन्यथासिद्धनिरूपकत्वविशेषणेनैव तद्वारणात्, विजातीयस्वर्गनियतपूर्व्ववर्त्तितावच्छेदकत्वन्तु यावत्यो विजातीयस्वर्गव्यक्तयः प्रत्येकं तत्पूर्व्वक्षणवृत्तिनिष्ठत्वं विजातीयस्वर्गोत्पत्त्यधिकरणनिष्ठस्वावच्छिन्नोत्तरत्वसम्बन्धावच्छिन्ना-

(१) इति भाव इति ख० ।

अन्वयप्रकारतया साधनत्वं शाब्दमिति फलतो न

भावप्रतियोगितावच्छेदकान्यत्वमिति यावत्, एवमग्रेऽपि सर्वत्र बोध्यं। कार्य्यत्वं कारणत्वञ्चातिरिक्तपदार्थ इत्यभिप्रायेणेदमित्यपि कश्चित्। ननु भवन्मतेऽपि विधिप्रत्ययात् कार्य्यत्वरूपेणापूर्व्वावगमेऽपि तस्य स्वर्गसाधनत्वं नावगतं तथाच तावन्मात्रज्ञानात् कथं प्रवृत्त्यर्थमुत्तर-कालं यागे परम्परया स्वर्गसाधनत्वावगमः परम्परासाधनत्वस्यापूर्व्व-निष्ठसाधनताघटितत्वात्। न च कार्य्यवत्साचात्साधनत्वस्यापि विध्यर्थतया तस्य च समानपदोपात्ततया कार्य्ये एवान्वयादपूर्व्वस्य स्वर्गसाधनत्वावगम इति वाच्यं। तथापि कार्य्यमात्रस्य विध्यर्थत्व-पचेऽप्रतीकारादित्यत आह, 'कार्य्यताविधिपच इति कार्य्यत्वमात्रस्य विधिप्रवृत्तिनिमित्तत्वपचे इत्यर्थः, मात्रपदादिष्टसाधनत्वमात्रस्य व्यवच्छेदः, तेन मञ्ज्रादेर्विध्यर्थत्वेऽपि न चतिः, कृतिसाध्यत्वस्य पृथक् शक्यत्वपचे तु कार्य्यत्वमात्रस्य विधिशक्यत्वपचेऽपीत्यर्थः, मात्रपदा-दिष्टसाधनत्वव्यवच्छेदः, 'अन्वयप्रकारतयेति कृतिसाध्यत्वान्वयप्रयो-जकरूपतयेत्यर्थः, 'साधनत्वं' पदानुपस्थितमपि स्वर्गसाधनत्वं, घटेन जलमाहरेदित्यादौ अपदार्थस्यापि छिद्रेतरत्वस्य भानवच्छाब्दमिति भावः। यद्यपि अपूर्व्वे कृतिसाध्यत्वान्वयबोधे स्वर्गसाधनत्वस्यान्वय-प्रयोजकरूपतया योग्यतात्वे शाब्दबोधात् पूर्व्वमपूर्व्वे तज्ज्ञानमस-म्भवि अपूर्व्वस्य शाब्दबोधात् पूर्व्वमज्ञानात् तथापि परनये बोध-नीयपदार्थे योग्यताज्ञानं न कारणं बोधनीयपदार्थस्यापूर्व्वत्वात् किन्तु पदार्थतावच्छेदकावच्छिन्ने क्वचित्तस्याज्ञानं तच्च प्रकृतेऽपि

कश्चिद्विशेषः । अतः क्रियातोऽन्यत् स्वर्गसाधनतार्हं क्रियाकार्य्यतानिर्व्वाहकं लिङाद्यर्थः । ननु* स्वजातीयेऽन्वयदर्शनं योग्यता दृष्टञ्च घृतपानस्याशुविनाशिनः

सम्भवति कार्य्यत्वरूपेण घटादावेव जलाहरणरूपकाम्यसाधनताज्ञानसत्त्वादिति निगर्व्वः[१] । स्वयमुपसंहरति, 'अतइति, 'स्वर्गसाधनतार्हमिति साक्षात् स्वर्गसाधनत्वस्यान्वययोग्यमित्यर्थः, 'क्रियाकार्य्यतानिर्वाहकमिति कार्य्योपस्थितेरिष्टसाधनताज्ञानं ततः कृतिरिति प्रणाल्या क्रियायाः कृतिसाध्यतानिर्वाहकमित्यर्थः, 'लिङाद्यर्थ इति, आदिपदात्तव्यादिपरिग्रहः । 'सजातीयइति तत्सजातीये तत्सजातीयस्यान्वयदर्शनं संसर्गनिश्चयः तच्च तस्य योग्यता न त्वन्वयप्रयोजकरूपवत्त्वमित्यर्थः, तथाच सामान्यतः फलसाधनत्वस्यान्वये निरुक्तान्यतरधर्म्मवत्त्वस्य योग्यतात्वाभावात् परम्पराघटकापूर्व्वानुपस्थितावपि प्रथमं सामान्यतः स्वर्गसाधनत्वत्वरूपेण परम्परासाधनत्वस्यान्वयः स्यादिति भावः । ननु सजातीयेऽन्वयदर्शनमप्यत्र नास्तीत्यत आह, 'दृष्टञ्चेति, 'पुष्टिहेतुत्वमिति काम्यसाधनत्वत्वरूपेण पुष्टिहेतुत्वमित्यर्थः, 'आशुविनाशित्वे काम्यसाधनत्वमेव साजात्यमिति भावः । 'पदार्थतावच्छेदकेनेति अन्वयितावच्छेदकरूपेणेत्यर्थः, 'प्रकृते चेति अग्निष्टोमेनेत्यादौ अग्निष्टोमत्वावच्छिन्ने

(१) निगर्भ इति ख० ।

'नन्विति तथाच न योग्यताज्ञानविरह इत्यर्थः, 'आद्येति यथा चैतत्

कालान्तरे पुष्टिहेतुत्वमिति चेत्, न, यथाकथञ्चित् साजात्यस्यायोग्येऽपि सत्त्वेन योग्यताया अव्यावर्त्तकत्वापत्तेः पदार्थतावच्छेदकेन साजात्यस्याद्यजातः पयः पिवतीत्यादौ प्रकृते चासम्भवात् तस्मादन्वयप्रयोजकरूपवत्त्वं साजात्यं। अतएव द्रवद्रव्यत्वं सेककरणत्वे प्रयोजकं इत्ययोग्योवह्निः, तदिहाशुविनाशिनः कालान्तरभाविफलजनकत्वे फलसमयपर्य्यन्तस्थायिव्यापारजनकत्वं प्रयोजकमतोऽपूर्व्वं विना साजात्यमेव न

---

स्वर्गसाधनत्वलावच्छिन्नस्यान्वयादर्शनादिति भावः। 'अन्वयप्रयोजकरूपवत्त्वं साजात्यमिति अन्वयप्रयोजकरूपवत्त्वरूपं साजात्यमित्यर्थः, योग्यतेति शेषः। 'सेककरणत्वे' सेककरणत्वान्वये, यद्धर्म्मवत्तया ज्ञात एव यदन्वयधीस्तद्धर्म्मवत्त्वमेव तदन्वयप्रयोजकं भवति च द्रवद्रव्यत्ववत्तया ज्ञातएव सेककरणत्वधीरिति द्रवद्रव्यत्वं तदन्वयप्रयोजकमिति भावः।

केचित्तु तदन्वयव्याप्यतावच्छेदकधर्म्मवत्त्वं तत्त्वं द्रवद्रव्यत्वपदञ्च तद्विशेषपरमित्याहुः।

'तदिहेति तथाचेहेत्यर्थः, 'आशुविनाशिनः' यागस्य, 'फलजनकत्वे' स्वर्गजनकत्वान्वये, 'फलसमयेति स्वर्गसमयेत्यर्थः, 'प्रयोजकमिति, साक्षात् स्वर्गसमयपर्य्यन्तस्थायित्वस्य बाधितत्वादिति भावः। 'अपूर्व्वं' विना अपूर्व्वज्ञानं विना, 'साजात्यमेवेति स्वर्गसाधनत्वान्व-

---

तथा व्याख्यातं योग्यतालक्षणे। 'प्रकृते चेति, प्रथमं तज्ज्ञानस्यासम्भवादिति

गृह्यते घृतपानस्य तु वैद्यकोपस्थितधातुसाम्यमादाय पुष्टिसाधनत्वयोग्यताज्ञानं विज्ञस्य। अथ बाधकप्रमाणाभावो योग्यता। न च साधनत्वमात्रे बाधकं, साक्षात्तद्बाधेऽपि परम्परासाधनत्वमादाय तद्विश्रान्तिसम्भवात्। न च योग्यानुपलब्ध्या द्वारस्य बाधात् परम्परासाधनत्वमपि बाधितं, संस्कारस्येव तस्य

---

यप्रयोजकरूपवत्त्वरूपं साजात्यमेवेत्यर्थः। नन्वेवं पुष्टिकामो घृतं पिबेदित्यादौ आशुविनाशिनो घृतपानस्य कथं पुष्टिसाधनताज्ञानं फलपर्य्यन्तस्थायित्व-तादृशव्यापारोपधायकत्वान्यतरवत्त्वज्ञानाभावादित्यत आह, 'घृतपानस्येति फलपर्य्यन्तस्थायिधातुसाम्यरूपव्यापारमादायेत्यर्थः, 'विज्ञस्येति, अविज्ञस्य न भवत्यन्वयधीर्भवति वा घृतपानस्यैव स्थिरत्वभ्रमादिति भावः। भ्रमस्याग्रहीतासंसर्गकज्ञानद्वयं विशिष्टज्ञानं वेत्यन्यदेतत् यथार्थतात्पर्य्यस्य शाब्दबुद्धिसामान्यहेतुत्वाच्च तद्भ्रमान्नायोग्ये शाब्दधीरिति हृदयं। 'बाधकप्रमाणाभाव इति, तद्धर्म्मावच्छिन्ने तद्धर्म्मावच्छिन्नाभावप्रमाविरह इत्यर्थः, न त्वन्वयप्रयोजकरूपवत्त्वमिति भावः। 'साधनत्वमात्र इति, यागत्वावच्छिन्ने स्वर्गसाधनत्वत्वावच्छिन्नाभावप्रमेत्यर्थः, 'साक्षात्तद्बाधेऽपि' साक्षात्साधनत्वस्याभावेऽपि, 'तद्विश्रान्तिसम्भवात् इति स्वर्गसाधनत्वसत्त्वसम्भवादित्यर्थः। 'बाधात्' अभावनिश्चयात्, 'बाधितं' निश्चिताभावकं, 'संस्कारस्येव तस्येति संस्कारस्येवातीन्द्रि-

---

भावः। 'संस्कारस्येवेति, अयोग्यस्य योग्यानुपलब्ध्या बाधोऽशक्य इति

सम्भवात्, अन्यथा वाच्येऽप्यपूर्व्वे क्रिया कामिकार्य्या न स्यात् काम्यासाधनत्वात्। न हि यद्देवायोग्यं तत्पश्चात् योग्यं, अयोग्यत्वे च निष्फलः प्रयासः। न च कामिकार्य्यमपूर्व्वं तदर्थिकार्य्या च क्रियेति वाच्यं। यागे रागादित्यनेन विरोधात्। तथापि द्वारानुप-

यस्य द्वारस्य सम्भवादित्यर्थः, तथाच योग्यानुपलब्ध्या योग्यस्य द्वाराभावनिश्चयेऽपि न द्वारसामान्याभावनिश्चयसम्भवइति भावः। 'अन्यथा' यागे स्वर्गसाधनत्वसामान्यस्यैवाभावे, 'वाच्ये' वाच्येऽपि, क्वचित्तथैव पाठः, 'कामीति स्वर्गकामेत्यर्थः, 'यद्देव' क्रियास्वरूपं, 'अयोग्यं' स्वर्गासाधनं, 'पश्चात्' अपूर्ववाच्यत्वज्ञाने, 'योग्यं' स्वर्ग-साधनं, 'अयोग्यत्वे चेति स्वर्गासाधनत्वे चेत्यर्थः, 'निष्फलः प्रयास-इति अपूर्व्ववाच्यताकल्पने यस्तव प्रयासः स निष्फल इत्यर्थः। 'न चेति, 'कामिकार्य्यं' स्वर्गकामकार्य्यं, 'तदर्थिकार्य्या' अपूर्व्वार्थि-कार्य्या, तथाच यागः स्वर्गसाधनमेव नेति भावः। 'यागे रागा-दिति यागे रागादङ्गे वैधीत्यनेन विरोधापत्तेरित्यर्थः, तस्य हि रागः स्वर्गादिफलेच्छा, स्वर्गसाधनताज्ञानजन्यचिकीर्षा वा, तया यागे प्रवृत्तिः अङ्गे च विधिरपूर्व्वं तदर्थितया प्रवृत्तिः, अन्यथा स्वर्गार्थितया अङ्गे प्रवृत्तौ यागवदङ्गस्य प्रधानत्वापत्तेरित्यर्थ इति भावः। प्रकृते, 'तथापीति, 'किन्त्विति, विधेः सामान्यत दृष्टसा-

भावः। 'अयोग्यत्व इति यागादिक्रियाया अयोग्यत्वे तद्गोचरो यजमानस्य प्रयत्नो विफल इत्यर्थः, ईश्वरस्य तत्कार्य्यताबोधनाय प्रयासो व्यर्थ इत्यन्ये। 'न चेति तथाच यागः स्वर्गसाधनमेव नेत्यर्थः। 'याग इति रागः स्वर्गादि-

स्थित्या परम्परासाधनमिति ज्ञानं न भवेदिति चेत्, सत्यं, किन्तु स्वर्गसाधनं याग इति ज्ञानं साक्षात्परम्परोदासीनं वस्तुगत्या परम्परासाधनत्वविषयकमुत्पद्यमानं नायोग्यतया परिभवितुं शक्यम्। यदि च साक्षात्परम्पराविशेषद्वयव्यतिरिक्तं सामान्यं नास्त्येव

---

धनत्वमात्रशक्तत्वादिति भावः। 'परम्परासाधनत्वेति साधनत्वत्वेन परम्परासाधनत्वविषयकमित्यर्थः, 'अयोग्यतयेति अन्वयप्रयोजकरूपवत्त्वलक्षणभवन्मतसिद्धयोग्यताज्ञानविरहेणेत्यर्थः। ननु साक्षात्साधनत्व-परम्परासाधनत्वाभ्यामतिरिक्तं साधनत्वमेव नास्तीत्यत आह, 'यदि चेति साक्षात्साधनत्व-परम्परासाधनत्वातिरिक्तं यदि

---

फलेच्छा तया तत्साधने यागे प्रवृत्तेरङ्गे वैधीविधिरपूर्व्वं तदर्थितयाङ्गे प्रवृत्तिरिति त्वदुक्तेन तवैव विरोधादित्यर्थः, स्वर्गसाधनताज्ञानजन्यचिकीर्षा राग इत्यन्ये। ननु न्यायनये यद्यपूर्व्वार्थितयैवाग्रे प्रवृत्तिस्तदा प्रथमं तदनुपस्थितौ मूकत्वमङ्गविधेः स्यात्, स्वर्गार्थितया चेत् तदा यागेनाविशेषात् विनिगमनाविरहात् तदङ्गत्वे न स्यादिति चेत्, न, स्वर्गान्वयाविशेषेऽपि फलसमभिव्याहारेण यत्र विधिवाक्यं प्रवर्त्तते तत्प्रधानमिति निर्णयादित्येके। प्रथमं साधनत्वेनेष्टसाधनत्वेन वाङ्गविधिप्रवृत्तावपूर्व्वकल्पनोत्तरमपूर्व्वरूपेष्टसाधनताज्ञानादङ्गे प्रवृत्तिरित्यन्ये। तदुत्तरमेवाङ्गविधिप्रवृत्तिरित्यप्याहुः। ननु विशेषविनाकृतं सामान्यज्ञानं कथमित्यत आह, 'वस्तुगत्येति, विशेषभानमस्त्येव विशेषरूपेण भाननियमोऽसिद्धः अतएव घटत्वेन नीलघटादेर्विशेषस्य भानादिति भावः। ननु नीलघटत्वाद्यतिरिक्तघटत्ववदुभयातिरिक्ततत्साधनत्वं नास्त्येवेत्यत आह, 'यदि चेति, 'योग्यमयोग्य-

तदा अननुगमः, किं वा विशेषयसि साक्षात्परम्परया वेति। न च यावद्विशेषबाधे तद्बाधितं, परम्परासाधनत्वेऽबाधादिति। मैवं। योग्यता हि स्वबाधकप्रमाविरहो वा सकलबाधकप्रमाविरहो वा, आद्ये वह्निना सिञ्चतीत्यादौ स्वबाधकप्रमा-तद्विरहौ समयभेदेन स्त इति तदेव योग्यमयोग्यञ्चेति प्राप्तं, द्वितीये तु योग्यानुपलब्ध्या तन्निश्चयोऽशक्यः परप्रमाया अयोग्यत्वात्। न च वाच्यं सकलबाधकप्रमाविरहः स्वरूपसन्नेव प्रयोजक इति, अयोग्ये योग्यताभ्रमादन्वयबोधाभावप्रसङ्गात् अन्यस्य तत्र बाधकप्रमासत्त्वात्। अन्वयप्रयोजकरूपवत्त्वेन बाधकप्रमाविरहो निश्चीयते

---

साधनत्वसामान्यं नास्तीत्यर्थः, 'तदाननुगम इति, भवन्मतेऽपि शक्यतावच्छेदकाननुगम इत्यर्थः[१]। 'किं वेति, धर्म्मितावच्छेदस्यैकस्याभावादिति भावः। भ्रान्ताशङ्कां निराकरोति, 'न चेति, 'तद्बाधितं' साधनत्वसामान्यं बाधितं। 'परप्रमाया इति, अनुमानस्य च सर्व्वत्र सर्व्वदा अनवतारादिति भावः। 'अयोग्य इति, भवन्मत-इति शेषः, 'योग्यताभ्रमादिति निरुक्तयोग्यताभ्रमस्यैव सत्त्वादित्यर्थः,

---

(१) मीमांसकैकदेशिना इष्टसाधनत्वेऽपि शक्तिस्वीकारादिति भावः

---

श्चेति। न च विरहपदमत्यन्ताभावपरं, तन्निश्चयस्याशक्यत्वादिति भावः। 'अशक्य इति। न च नित्य-निर्द्दोषत्वेन वेदे तदनुमेयं, तस्यैव प्रथमं दुर्ज्ञेय-

इति चेत्, तर्हि प्राथमिकत्वात् सैव योग्यता। न च सा प्रकृते सम्भवतीत्युक्तं, किञ्चैकविशेषबाधे शाब्द-सामान्यज्ञानं तदितरविशेषप्रकारतानियतं छिद्रबाधे छिद्रेतरघटज्ञानवत्। न च द्वारानुपस्थित्या प्रकृते तथा घटते। एतेन यदुक्तं प्रशस्तरूपवान् चैत्र इत्यत्र गौर-श्यामविशेषानवगमेऽपि रूपमात्रमवगम्यते तद्वत्

---

'सैव' अन्वयप्रयोजकरूपवत्त्वेव, 'सम्भवति' प्रथमं ज्ञाता सम्भवति। ननु योग्यतायाः संशयसाधारणं ज्ञानं शाब्दधीकारणं न तु निश्चयमात्रं तथाच स्व-परसाधारणबाधकप्रमाविरहस्य सर्व्वत्र निश्चेतुमशक्यत्वेऽपि न क्षतिरित्यस्वरसादाह, 'किञ्चेति, 'शाब्दसा-मान्यज्ञानं' सामान्यप्रकारकशाब्दसामग्रीजन्यज्ञानं, यथाश्रुतन्तु न सङ्गच्छते प्रकृते सामान्यप्रकारकत्वे विशेषप्रकारकत्वासम्भवात्। 'द्वारानुपस्थित्येति, विधेः सामान्यत इष्टसाधनत्वस्यैव शक्यता-वच्छेदकत्वादिति भावः। इदमापाततः छिद्रबाधे तदितरघटत्वेन घटविशेषधीवद्यापि साक्षाद्बाधे तदितरसाधनत्वेन व्यापारानु-पस्थितावपि साधनत्वधीसम्भवात्तस्यापि विशेषधर्म्मत्वादिति ध्येयं। 'गौर-श्यामेति, गौर-श्यामयोर्य्यो विशेषो गौरत्व-श्यामत्वरूपः, 'रूप-मात्रं' रूपत्वं।

---

त्वात्। वस्तुतः सर्व्वत्र तन्निश्चयासम्भवान्न सा योग्यतेति भावः। 'प्रसङ्गा-दिति, तन्मते असंसर्गाग्रहत्वेऽपि न्यायनयमभ्युपेत्योक्तं। ननु न योग्यता-संशयः शाब्दधीहेतुः स्वरूपसती योग्यताप्रमा हेतुरित्यरुचेराह, 'किञ्चेति।

विशेषानवगमेऽपि साधनत्वमात्रमिति तत्प्रत्युक्तं, तत्रैकविशेषबाधाभावेनौदासीन्यसम्भवात्।

एतेन स्वर्गकामान्वयबलात् क्रियायाः फलसाधनत्वं तद्बलाच्च पटोः संस्कारस्येव स्थायित्वं कल्प्यतां किम-

---

भट्टैकदेशिमतं दूषयितुमाह, 'एतेनेति, 'स्वर्गकामान्वयेति स्वर्गकामीयकृतिसाध्यत्वान्वयेत्यर्थः, 'पटोः संस्कारस्येवेति भवन्मते पटोः संस्कारस्येवेत्यर्थः, तन्मतेऽनुभवस्यापि स्थैर्य्यकल्पनयैवोपपत्त्या संस्कारकल्पनायां मानाभावेन यथाश्रुतासङ्गतेः, सर्व्वस्य संस्कारस्य फलसमयस्थायित्वाभावात् 'पटोरिति, पटुत्वं स्मृतिफलोपहितत्वं,

---

सामान्यघटितविशेषद्वयमध्ये नियमोऽयं बोध्यः, छिद्रेतरत्वप्रकारकघटज्ञानवदित्यर्थः, अत्रेदं चिन्त्यं यथा छिद्रबाधे छिद्रेतरत्वेन घटधीस्तथा साक्षात्त्वबाधे तदितरकारणत्वेन द्वारानुपस्थितावपि तद्धीरस्तु तस्यापि विशेषत्वात्। किञ्च परम्परासाधनत्वेनापि तद्धीरस्तु छिद्रेतरत्ववद्योग्यताबलादेव तन्मते तदुपस्थितिसम्भवात्। न च परम्पराघटकापूर्व्वस्य प्रागननुभवात् नोपस्थितिरिति वाच्यं। न हि तन्मते अन्वयप्रतियोगिन एवोपस्थितिरन्वयबोधाङ्गं। अपूर्व्ववाच्यत्वेऽपि तदनन्वयप्रसङ्गात् कार्य्यत्वेन घटादेरेव शक्तिग्रहविषयत्वेन पदार्थस्मरणे तस्यैव विषयत्वात् तथाच परम्परासाधनत्वप्रकारकोपस्थितेर्वाच्यसमानप्रकारकत्वेन हेतुत्वात्। सा च न दुर्लभा वाक्यार्थानुभवकाले च योग्यताबलात् परम्परात्वेनापूर्व्वमेव भासतां, तथाच किमपूर्व्ववाच्यतया। न च पदाजन्यतया सोपस्थितिर्नाङ्गं, छिद्रेतरोपस्थितावपि तुल्यत्वादितीति प्रकाशः।

भट्टमतं निरस्यति, 'एतेनेति। संस्कारस्यापि न सर्व्वस्य तथात्वमत-

पूर्व्वेण सङ्कल्पविशेषस्य यागस्याग्रे प्रत्यक्षानुपलब्धि-रात्मविशेषगुणानां प्रथमक्षण एव स्वविषयकप्रत्यक्ष-जननस्वभावात् अस्तु, न चैवं क्रियान्तरमपि तथा,

'स्थायित्वमिति फलपर्य्यन्तस्थायित्वमित्यर्थः । न च योग्यात्मविशेष-गुणानां स्वोत्तरोत्पन्नगुणनाश्यतया कथं यागादेरिच्छाविशेषरूपस्य तावत्कालस्थायित्वमिति वाच्यं । स्वत्वस्यानुगतस्यैकस्याभावेन लाघ-वात्तत्तद्व्यक्तित्वेनैव नाश्य-नाशकभावात्तत्र स्वर्गव्यक्तेरेव नाशकत्वाभ्युप-गमात् । न च तत्तद्व्यक्तित्वेन नाश्य-नाशकभावेऽपि तत्तत्क्षणोत्पन्न-ज्ञानेच्छादिकं प्रति तत्तत्क्षणद्वितीयोयोक्षणस्तदुत्पन्नत्वेन नाशकत्वं तथाच यागादिसमानकालीनज्ञानाद्यन्तरवद्यागादेराशुविनाशित्व-मावश्यकमिति वाच्यं । एकस्मिन्नेव क्षणेऽनन्तक्षणसत्त्वेन विनिग-मनाविरहादनन्तकार्य्य-कारणभावस्यावश्यकतया लाघवेन तत्तद्व्य-क्तित्वेनैव नाश्य-नाशकभावादिति भावः । नन्वेवं दिनान्तरेऽपि यागस्य प्रत्यक्षापत्तिरत आह, 'सङ्कल्पेति, 'सङ्कल्पः' इच्छा, 'प्रथ-मक्षण एवेति चतुर्थक्षणपूर्व्वक्षण एवेत्यर्थः, तेन विनश्यदवस्थप-रामर्शादेरनुव्यवसाये न व्यभिचारः, अपेक्षाबुद्धेः क्षणत्रयावस्थायित्वे तदितरत्वेनात्मविशेषगुणोविशेषणीयः, तेन विनश्यदवस्थतदनुव्यव-साये न व्यभिचारः । 'क्रियान्तरमपीति ज्ञान-द्वेषादिकमपीत्यर्थः,

आह, 'पटोरिति, 'प्रथमक्षण एवेति उत्पत्त्यग्रिमक्षण एवेत्यर्थः, एतदपि निर्विकल्पकानपेक्षणपक्षे ।

केचित्तु 'प्रथमक्षण एवेत्यस्य द्वितीयक्षणान्यतरक्षण एवेत्यर्थः, तेनानु-मित्यनन्तरं परामर्शानुव्यवसायसम्भव इत्याहुः ।

प्रमाणाभावात्, एवं लोकप्रसिद्धक्रियाकार्य्यत्वव्युत्पत्ति-रपि भग्ना न भवतीति परास्तम्। स्वर्गसाधनतायोग्य-तया स्वर्गकामान्वयः तदन्वये च स्थायित्वं इत्यन्यो-न्याश्रयात् लोके धर्म्मिग्राहकमानेन क्रियायाः क्षणि-कत्वनिश्चयाच्च।

---

'तथा' बहुतरक्षणावस्थायि, 'लोकप्रसिद्धेति ओदनकामः पचेते-त्यादिलौकिकविधिस्थलसिद्धेत्यर्थः, 'क्रियाकार्य्यत्वेति विधेराहत्य क्रियानिष्ठकार्य्यताबोधकत्वमपीत्यर्थः, 'स्वर्गसाधनतेति स्वर्गसाधनत्व-रूपयोग्यतानिश्चये सतीत्यर्थः, 'स्वर्गकामान्वयः' स्वर्गकामीयकृतिसा-ध्यत्वान्वयः, 'स्थायित्वं' स्थायित्वकल्पनं, स्थायित्वकल्पने च स्वर्ग-साधनत्वनिश्चय इति शेषः, 'लोके' लोकस्य, 'धर्म्मिग्राहकमानेन' प्रत्यक्षेण, 'क्षणिकत्वनिश्चयाच्चेति इदानीं नाहं यजे इदानीं मम यागोनष्ट इत्याद्यभावनिश्चयाच्चेत्यर्थः, अन्यथा घट-तज्ज्ञानादेरपि नित्यत्वापत्तेरिति भावः। इदमुपलक्षणं यागादेस्तावत्कालस्थायित्वे दिनान्तरेऽपि तत्प्रत्यक्षापत्तिर्दुर्व्वारा, न हि सामग्रीसत्त्वे नियम-सहस्रैरपि कार्य्योत्पत्तिर्वारयितुं शक्या, आत्मविशेषगुणस्थले तादृ-

---

ननु नान्योन्याश्रयः यथा स्वर्गकामान्वयानुपपत्त्या लिङः कार्य्ये शक्तिस्तथा तत एव धर्म्मिकल्पनात इति न्यायेन क्रियाया एव स्थायित्वं कल्प्यतामि-त्येवाह, 'लोकेति क्रिया तावत् फलपर्य्यन्तो व्यापारः फलश्चावच्छेदकं तस्य यजेः स्वत्वध्वंस इति तन्नाशयोऽयं यज्यर्थः सिद्धः क्रियान्तरवदिति लोक-

## ननु देवपूजार्थो यजिः, पूजा चाराधना गौर-

शनियमसत्त्वेऽपि गङ्गास्नानादिस्थले तादृशनियमे मानाभावेन[१] स्थायित्वासम्भवाच्चेत्यपि बोध्यं।

तटस्थः शङ्कते, 'नन्विति, 'गौरवितेति गौरवितनिष्ठप्रीति-हेतुक्रियेत्यर्थः। यद्यपि गौरवितत्वं न स्वापेक्षयोत्कर्षवत्त्वं, उत्कर्षस्य गुण-कर्म्मगतजातिरूपतया[२] द्रव्ये तदसम्भवात्, नापि स्वज्ञानापेक्ष-योत्कृष्टधीमत्त्वं, मूर्खायां मातरि तदसम्भवात्, नापि स्वगुणापे-क्षया उत्कृष्टगुणवत्त्वं, राग-द्वेषाधर्म्मोत्कर्षैरपि तथात्वापत्तेः, नापि स्वसुकृतापेक्षयोत्कृष्टसुकृतवत्त्वं, ऐन्द्रपदजनकसुकृतवति नीचेऽपि तथात्वापत्तेः, स्वसुकृतापेक्षयापकृष्टसुकृतवति मातृप्रभृतावव्याप्त्याप-त्तेश्च। तथापि भक्तिविषयत्वं[३] गौरवितत्वं, भक्तित्वञ्च प्रत्यक्षसिद्धो-

(१) स्वर्गकामो गङ्गायां स्नायादित्यादौ सर्व्वाङ्गीनजलसंयोगादिरूपस्नाना-दिक्रियायाः स्थायित्वासम्भवादपूर्व्वकल्पनाया आवश्यकत्वाच्चेति भावः।

(२) गुणगतजातिरूपतयेति ख०।

(३) भक्तिविशेषविशेष्यत्वमिति ख०।

सिद्धक्षणिकत्वायाः क्रियाया न स्थैर्य्यं कल्प्यते धर्म्मिग्राहकमानबाधादि-त्यर्थ इत्याहुः। तथाच प्रमाणान्तरबाधे न धर्म्मिकल्पनापि ज्यायसी, अन्यथा प्रतीतध्वंसानामपि लोके तिरोभावमात्रकल्पने साङ्ख्यमतप्रवेश इति भावः। एवमनुभवस्यापि स्थायित्वे संस्कारोऽपि न कल्प्येत तथाच संस्कार-स्यैवेत्यप्ययुक्तं स्यादिति बोध्यं।

तटस्थः शङ्कते, 'नन्विति, पितृभ्यो दद्यात् सन्ध्यामुपासीतेत्यादावपि

नौचविषयकसमूहालम्बनव्यावृत्त:[१] मानसत्वव्याप्योजातिविशेषः, तदवच्छिन्नं प्रति कारणञ्च नानैव कार्य्यमात्रवृत्तिजाते: कार्य्यतावच्छेदकतानियमस्याप्रयोजकतया तस्याः कार्य्यतानवच्छेदकत्वेऽपि क्षतिविरहात् यथाकथञ्चित्तदनुगतकारणस्यापि वक्तुं शक्यत्वाच्च । ननु तथापि अग्निमाराधयेदित्यादावन्वयानुपपत्तिः । न चाग्निना सह गौरवितस्याभेदेनान्वय इति वाच्यं । गौरवितस्य पदार्थैकदेशत्वात् स्तोकं पचतीत्यादाविव क्रियाविशेषणतया नपुंसकलिङ्गत्वापत्तेः । नापि गौरवितप्रीतावाधेयतया तदन्वयस्तस्याप्येकदेशत्वात् गौरवितसम्बन्धितया उपस्थितेश्चेति चेत्, न, गौरवितप्रीतिहेतुक्रियारूपविशिष्टेऽग्नेः कर्म्मत्वेनान्वयात् । न चैवमग्निनिष्ठप्रीतेरलाभ इति वाच्यं । धात्वर्थतावच्छेदकफलशालित्वं कर्म्मत्वमिति कर्म्मविभक्तेरेव तल्लाभात् गौरवितादिषु खण्डशः शक्त्या प्रीतावेव वा आधेयतया तदन्वयात् । न च तथापि कृष्णमुपासीतेत्यादावगतिरेव भगवतः कृष्णस्य प्रीतेरभावादिति वाच्यं । तत्रापि विषयितायाः कर्म्मविभक्त्यर्थत्वात् सा च गौरवितप्रीतिहेतुक्रियायामेवान्वेति । न च भगवद्विषयकक्रियाया गौरवितनिष्ठप्रीतिहेतुत्वं बाधितमिति[२] वाच्यं । प्रीतिहेतुपदेन प्रीतिस्वरूपयोग्यस्य विवक्षितत्वात् इति भावः ।

---

[१] नौचविशेष्यकसमूहालम्बनज्ञानव्यावृत्त इति ख० ।

[२] ईश्वरस्य गौरवितत्वेऽपि तन्निष्ठप्रीतेरभावात् अन्यगौरवितनिष्ठप्रीतेस्तादृशक्रियाया अजनकत्वाद्‌बाधितत्वमिति भावः ।

---

देवताप्रीतिरेवान्यत्रावधृता द्वारमित्यभिमानः । ननु मानान्तरं तत्र

वितप्रीतिहेतुः क्रिया, अतो देवताप्रीतिद्वारा यागस्य स्वर्गसाधनत्वं, प्रीतेः क्षणिकत्वेऽपि प्रीत्यनुभवजनित-संस्कारद्वारा तत्सम्भवात्। अतएवाग्नेयादौ प्रीति-भागितया अग्न्यादेरुद्देश्यत्वमिति चेत्, न, यज् देव-पूजायां इति हि शाब्दिकस्मृतिः स्मृतित्वादेव न स्वतः प्रमाणं। न च यागस्य देवताप्रीतिहेतुत्वे स्वर्गस्य देवताप्रीतिसाध्यत्वे वा मानान्तरमस्ति। वस्तुतस्तु

---

नव्यास्तु भक्तिजन्यक्रिया आराधना कृष्णमुपासीतेत्यादौ च चैत्रस्य नप्ता इत्यादाविव विषयतया एकदेशे भक्तावेव कृष्णादे-रन्वयबोध इति प्राहुः।

'देवताप्रीतिद्वारेति, तथाच किमपूर्व्वेणेति भावः। ननु प्रीतेः सुखस्याशुविनाशितया कथं स्वर्गसाधनत्वमत आह, 'प्रीतेरिति, 'प्रीत्यनुभवजनितेति स्वलौकिकप्रत्यक्षद्वारा प्रीतिजनितेत्यर्थः, 'तत्-सम्भवात्' प्रीतेः स्वर्गसाधनत्वसम्भवात्, 'आग्नेयादौ' आग्नेयादि-यागस्थले, 'प्रीतिभागितया' तज्जन्यप्रीत्याश्रयतया, 'शाब्दिकस्मृतिः' शाब्दिकानामर्थवाद इत्यर्थः, 'स्मृतित्वात्' अर्थवादत्वात्। नन्वर्थ-वादत्वेऽपि महाजनपरिग्रहात् प्रामाण्यमित्यरुचेराह, 'वस्तुतस्त्विति, ननु विष्णुप्रीतिकामो विष्णुं ध्यायेदित्यादिश्रुतिरेव देवताचैतन्ये

---

स्यादित्याशङ्क्याह, 'न चेति, न चाविगीतत्वादिविशेषितस्मृतित्वाद् वेदोऽनु-मेय इति वाच्यं। अनुकूलतर्काभावादिति भावः। 'यत्र चेति, न च यत्र

चेतने देवे मानमेव नास्ति यत्र च विष्णुप्रीतिकामादिवादोऽस्ति तत्र विष्णुरेव प्रीतिः न तु विष्णोः षष्ठ्यर्थलक्षणादोषात् विष्णुशब्दस्य प्रीतिविशेषवाचकत्वं वेद एव कल्प्यते। न च देवपूजार्थयज्यन्वयबलात्तथा, अन्योन्याश्रयात्। नन्वेवं आग्नेयादीनां

---

मानमित्यत आह, 'चेतन इति, अतीन्द्रियप्रीतेरभावात् परकीयसुखस्यापराप्रत्यक्षत्वादतः सुखसिद्धिर्देवताचैतन्यविरहे न सम्भवतीति भावः[१]। 'यत्र चेति, विष्णोः प्रीतिकामस्तं ध्यायेत् प्रीयते भगवान् हरिरित्यादिश्रुतौ च मानाभाव इति भावः। ननु विष्णुशब्दस्य प्रीतिविशेषबोधकत्वं क्वाप्यदृष्टचरमित्यत आह, 'विष्णुशब्दस्येति अन्यथा भवन्नयेऽपि विष्णौ प्रीतेर्बाधितत्वेन तन्निष्ठप्रीतेः फलत्वासम्भवादिति भावः। 'देवपूजार्थेति स्वर्गकामो यजेतेत्यादौ देवपूजार्थकयजधातुना देवतानिष्ठगौरवितप्रीतिहेतुक्रियात्वेन बोधनादित्यर्थः, 'तथा' देवतायाश्चैतन्यं, 'अन्योन्याश्रयादिति यजेधातोर्देवतानिष्ठप्रीतिहेतुक्रियाबोधकत्वसिद्धौ देवता-

---

(१) चेतन इत्यादिः न सम्भवतीति भाव इत्यन्तः पाठः कपुस्तके नास्ति

---

विष्णोरित्यस्ति तत्र का गतिः, तत्र मानाभावादित्याशङ्कः। न च वरुणप्रीतिरित्यादौ का गतिः, तस्यापि प्रीतिविशेषवाचकत्वकल्पनात्। वस्तुतः पूर्वं यागे देवताप्रीतिरित्यन्तरादृष्टं विना कथं तन्निर्वाहः, तदनुभवजनितसंस्कारस्य च स्वजन्यस्मृत्यादिना नाशे फलाभावप्रसङ्ग इति बोध्यं। 'अन्यो-

चैतन्यसिद्धिस्तत्सिद्धौ च तादृशक्रियाबोधकत्वसिद्धिरित्यन्योन्याश्रया-दित्यर्थः। इदमापाततः यज्धातोस्तादृशक्रियाबोधकत्वसिद्धौ देव-तानिष्ठचैतन्यसिद्धेरनुपयोगात् महाजनपरिगृहीतशाब्दिकस्मृतित-एव तादृशक्रियाबोधकत्वसिद्धेः। किञ्च तन्मये चेतनस्य देवतात्वे मानाभावेऽपि सहस्राचादिशरीरिणमभ्युपगच्छत्येव तत्प्रीतिरेव व्यापारोऽस्तु। न च प्रीतेः सुखस्याशुविनाशित्वात् संस्कारस्य च स्वध्वंस-स्मरणेतराजनकत्वनियमादिदमप्ययुक्तमिति वाच्यं। तादृश-नियमे मानाभावात्। वस्तुतस्तु देवतायाश्चेतनत्वेऽपि सर्व्वत्र देव-तायाः प्रीतेर्न व्यापारत्वसम्भवः वैष्णवं चरुं निर्वपेदित्यादिविधि-बोधितवैष्णवयागादौ सुवर्णदानादौ च तदसम्भवात्। न च तत्रापि विष्णुप्रीतिरेव व्यापार इति वाच्यं। विष्णुनिष्ठप्रीते-र्बाधितत्वात्। न च तथाप्याग्नेयादियागस्थले आवश्यकाग्न्यादि-प्रीतिरेव व्यापारोऽस्तु किं तत्रापूर्व्वेणेति वाच्यं। देवतानिष्ठप्रीतेः स्वर्गव्यधिकरणत्वेन व्यापारत्वासम्भवात् एतत्पुरुषीययागजन्यदेव-ताप्रीतितः पुरुषान्तरस्यापि स्वर्गप्रसङ्गात् तत्तत्पुरुषीयत्वान्तर्भा-वेन कार्य्य-कारणभावेऽनन्तकार्य्य-कारणभावप्रसङ्गात् गौरवाच्च। अथ देवतानिष्ठप्रीतिर्न व्यापारः किन्तु देवताविषयकस्वप्रीतिः, प्रीतिश्चा-नुरक्तिः, एवं यत्र विष्णुप्रीतिकामादिवादोऽस्ति तत्रापि विष्णुविष-यकप्रीतिरेवार्थः, अन्यथा विष्णुत्वादेः प्रीतिनिष्ठत्वे विष्णोः प्रीति-कामः प्रीयते भगवान् हरिरित्यादिश्रुतेः सर्व्वसिद्धाया अपला-पापत्तेरिति चेत्, न, यागादेः साचाद्देवताविषयकानुरागजन-कत्वस्य प्रत्यचबाधितत्वेनापूर्व्वद्वारैव कालान्तरे तज्जनकत्वस्य वक्तव्य-

तया अपूर्व्वस्यावश्यकत्वात् कल्प्यत्वाविशेषेण विनिगमनाविरहेणा-पूर्व्वसिद्धेर्दुर्व्वारत्वाच्च इत्येव दूषणमवसेयं ।

केचित्तु यागादिगोचरसंस्कार एवावश्यकत्वाद्व्यापारोऽस्तु किमपूर्व्वेण स च संस्कारो न स्मृतिनाश्यतावच्छेदकवैजात्यावच्छिन्नोऽपि तु स्वर्गनाश्यः। न च संस्कारस्य विषयाजन्यतया यागादिगोचरसंस्कारस्य कुतो यागादिव्यापारत्वमिति वाच्यं। यागादेः स्वगोचरलौकिकप्रत्यक्षद्वारा स्वविषयकसंस्कारजनकत्वसम्भवात् अतएवानुमित्यादिजनितपरकीययागादिगोचरसंस्कारवतो न स्वर्गोत्पत्तिस्तस्य यागजन्यत्वाभावात्। न चैवं घटादिलौकिकप्रत्यक्षजन्यसंस्कारं प्रत्यपि घटादेर्जनकत्वापत्तिरिति वाच्यं। तत्र मानाभावात् अत्र तु लाघवतर्कसहकृतस्वर्गसाधनत्वान्यथानुपपत्तेरेव मानत्वात्। अथैवं गङ्गास्नानादिस्थले परकीयगङ्गास्नानादिलौकिकप्रत्यक्षजन्यतद्गोचरसंस्कारतोऽपि स्वर्गप्रसङ्गः कुष्ठाद्युपहतत्वचः अन्धस्य च प्रत्यक्षासम्भवात्[१] गङ्गाजलसंयोगात् स्वर्गानुत्पत्तिप्रसङ्गश्चेति चेत्, तर्हि तत्रापूर्व्वस्यावश्यकत्वेऽपि यागादिस्थलेऽपूर्वे मानाभावात् अज्ञातयागादेरनभ्युपगमादित्याहुः ।

ननु फलसाधनतान्वये फलसमयस्थायित्व-तादृशव्यापारोधायकत्वान्यतरत्वस्य योग्यतात्वे आग्नेयाष्टाकपालयाग-ऐन्द्रदधियाग-ऐन्द्रपयोयागात्मकयागत्रयरूपस्य दर्शस्याग्नेयाष्टाकपालयाग-उपांशुयागाग्नीषोमीयैकादशकपालयागात्मकयागत्रयरूपस्य पौर्णमासस्य चावान्तरकलिकापूर्व्वत्रयं त्रयं विना षड्जन्यैकपरमापूर्व्वजनकत्वमनुपपन्नं युगपदाग्नेयादीनां सहानवस्थानादतो दर्श-पौर्णमासाभ्यां

---

(१) कुष्ठाद्युपहतत्वचा प्रत्यक्षासम्भवादिति ग० ।

षसां क्षणिकत्वात् योग्यतानवगतौ परमापूर्वकारण-

यजेत स्वर्गकाम इत्यादिप्रधानविधिबोधितपरमापूर्वसाधनत्वान्यथानुपपत्त्या तत्र परमापूर्वनाश्यकलिकापूर्वषट्कं कल्प्यते इति तव सिद्धान्तो व्याहतः योग्यताज्ञानाभावेन प्रधानविधिवाक्यात् प्रथमं परमापूर्वसाधनताज्ञानस्यैवासम्भवादित्याशङ्कते, 'नन्वेवमिति, 'एवं' साधनत्वान्वये निरुक्तान्यतरवत्त्वस्य योग्यतात्वे, 'क्षणिकत्वादिति आशुविनाशित्वादित्यर्थः, परम्पराघटकानुपस्थितेश्चेति शेषः । 'कथमिति कथं प्रधानविधिबोधितपरमापूर्वसाधनत्वान्यथानुपपत्त्या कलिकापूर्वकल्पनमित्यर्थः । यदि च निरुक्तयोग्यताज्ञानं विनापि परमापूर्वसाधनत्वावगमस्तदा परमापूर्वज्ञानं विना स्वर्गसाधनत्वस्यापि ज्ञानसम्भवात् किं परमापूर्वस्यापि वाच्यतयेति भावः । न च तत्रापि प्रधानविधिबोधितपरमापूर्वसाधनत्वान्यथानुपपत्त्या कलिकापूर्वाणि न कल्प्यन्ते अपि तु आग्नेयादिबोधकप्रत्येकवाक्यात् कलिकापूर्वोपस्थितौ प्रधानविधिवाक्यात् परमापूर्वसाधनत्वावगमः प्रथमन्तु प्रधानविधिवाक्यं मूकमेवेति वाच्यं । अपसिद्धान्तात् आग्नेयाष्टाकपालो भवत्यमावास्यायामित्यादिप्रत्येकविधिवाक्यानां दर्श-पौर्णमासस्वरूपमात्रबोधकतया कलिकापूर्वाबोधकत्वाच्चेति निगर्वः । आशुविनाशित्वेन प्रतिसंहिते कर्म्मणि यद्रूपेण फलस्य

---

न्याश्रयादिति पूजार्थकयज्यन्वये सति देवताचैतन्यसिद्धिः, तत्सिद्धौ च पूजार्थकयज्यन्वय इत्यन्योन्याश्रयादित्यर्थः । तुल्यन्यायतया शङ्कते, 'नन्विति, आग्नेयोऽष्टाकपालो भवत्यमावास्यायामैन्द्रं दधि भवत्यमावास्यायामित्यादयः षडुत्पत्तिविधयः दर्श-पौर्णमासाभ्यां यजेतेति विधिवाक्यार्थीभूतप्रधानापूर्वं

त्वानवगमे कथमपूर्व्वकल्पनेति चेत्, न, काम्ये अपूर्व्व-

कालान्तरभावित्वप्रतिसन्धानं तद्रूपावच्छिन्नफलसाधनत्वान्वये तत्प-र्य्यन्तस्थायिव्यापारोपधायकत्वं योग्यता प्रकृते च प्रधानविधिना कार्य्यत्वरूपेण परमापूर्व्वं बोध्यते तथाच कार्य्यत्वरूपेण तज्जनकता दर्शादीनां ग्राह्या तत्र च परमापूर्व्वत्वरूपेण कालान्तरभावित्व-प्रतिसन्धानेऽपि न कार्य्यत्वरूपेण कालान्तरभावित्वप्रतिसन्धानं कार्य्य-त्वावच्छिन्नस्य दर्शाद्यव्यवहितक्षणेऽपि सम्भवादतः परमापूर्व्वसमय-स्थायिव्यापारोपधायकत्वज्ञानं विनापि प्रथमं कार्य्यत्वरूपेण सामा-न्यतस्तत्साधनत्वग्रहः उत्तरकालञ्च स्वर्गसमयस्थायिकार्य्यान्तरज-नकस्य तादृशकार्य्यजनकत्वं परमापूर्व्वजनकतयैव पर्य्यवस्यति तच्च साक्षान्न सम्भवति आग्नेयादेराशुविनाशित्वादतः परम्पराजनकत्वं तच्चावान्तरव्यापारं विना अनुपपन्नमित्यनुपपत्तिज्ञानात् कलि-कापूर्व्वाणि कल्प्यन्ते स्वर्गस्य च देहान्तरभोग्यत्वेन कालान्त-रभावित्वप्रतिसन्धानात्तत्पर्य्यन्तस्थायिव्यापारोपधायकत्वज्ञानं विना सामान्यतोऽपि न तत्साधनत्वग्रहसम्भव इति गुढाभिसन्ध्या समाधत्ते, 'काम्य इति दर्श-पौर्णमासाभ्यां यजेत स्वर्गकाम इति काम्य-विधावित्यर्थः, 'अपूर्व्ववाच्यत्वस्थिताविति कार्य्यत्वरूपेण परमापूर्व्ववा-

प्रति दधिहोमादीनां साधनत्वं बोधयन्ति, तेषां तत्साधनत्वे तन्निर्व्वा-हाय षडुत्पत्त्यपूर्व्वाणि कल्प्यन्ते, एवञ्च सर्व्वत्र प्रधानीभूतमपूर्व्वं वाच्यं। उत्पत्त्यपूर्व्वाणि कल्प्यानीति तत्सिद्धान्तः स न स्यात् क्रमिकप्रधानापूर्व्वं प्रति क्षणिकानामाग्नेयादिकर्म्मणामयोग्यतया साधनत्वग्रहासम्भवादित्यर्थः। 'काम्य इति, फलस्योत्कटरागगोचरतया तत्पूरणक्षमः कलिकापूर्व्वबोधक-

**वाच्यत्वस्थितौ आग्नेयादौ तद्द्वारा साधनत्वस्य योग्यतासम्भवात् न तु प्रथमं।**

---

च्यत्वस्थिताववेत्यर्थः, 'तद्द्वारा साधनत्वस्येति परमापूर्व्वद्वारा साधनत्वस्येत्यर्थः, सामान्यतः स्वर्गसाधनत्वरूपेणान्वये इति शेषः। 'योग्यतासम्भवात्' योग्यताज्ञानसम्भवात्, 'न तु प्रथममिति न तु परमापूर्व्व-

---

काम्यप्रधानविधिरेव, तथाच प्रथमप्रवृत्तात् तस्मात् अपूर्व्वे प्रतीते अपूर्व्वद्वारैव स्वर्गं प्रति यागस्येव नियोगं प्रति आग्नेयादीनां कारणतास्त्विति प्रतीताविवाग्नेयादीनां नियोगसाधनताधीरुदेति, तावत्पर्य्यन्तस्थायिव्यापारवत्त्वरूपयोग्यताया ज्ञानात् न तु प्रथममुत्पत्तिविधिप्रवृत्तिरिति भावइत्याहुः; तच्चिन्त्यं, न हि स्वं प्रति स्वं साधनं, तथाच तद्द्वारीभूतापूर्व्वानुपस्थितौ परमापूर्व्वकारणताबोधे कथं योग्यताज्ञानं, कथं वा साक्षात्साधनताबाधे परम्परासाधनत्वप्रकारकधीः। न च तज्जातीयपरमापूर्व्वोपस्थितौ स्थायिव्यापारवत्त्वरूपयोग्यतानिश्चयसम्भव इति वाच्यं। तज्जातीयसंस्काराद्युपस्थितावुक्तयोग्यतानिश्चयसम्भवे प्रधानापूर्व्वस्यापि वाच्यतानापत्तेः। तन्न तज्जातीयमिति चेत्, न, सर्व्वथा साजात्यस्य प्रकृतेऽप्यसम्भवात् गुणत्वादिना साजात्यस्य तत्रापि सम्भवात् प्रकृते तन्न योग्यताघटकमिति तुल्यमिति। अत्राहुः देहान्तरोपभोग्यस्वर्गे आशुविनाशिक्रियायाः साक्षात् साधनताबाधे युक्तस्तत्र योग्यताज्ञानविरहः, प्रकृते च परमापूर्व्वं प्रति साक्षादपि तस्य हेतुत्वसम्भवे योग्यताज्ञानसम्भवः। न च यौगपद्याभावात् न तथा, ऋत्विग्भिरनेकैरेकदा क्रियमाणानां यौगपद्यस्यापि सम्भवात्, अग्रे च मत्सामेककर्त्तृकत्वप्रतिसन्धाने अग्रिमाग्रिमनाशादनुपपत्त्या प्रथमगृहीतसाधनतानिर्व्वाहार्थमुत्पत्त्यपूर्व्वं कल्प्यत इति, तदिदमुक्तं 'तद्द्वारेति तत्प्रतीतेत्यर्थः।

वाच्यत्वं विनेत्यर्थः, स्वर्गस्य देहान्तरभोग्यत्वेन कालान्तरभावित्वप्रतिसन्धानात् तत्साधनत्वान्वये तत्पर्य्यन्तस्थायिव्यापारोपधायकत्वस्य योग्यतात्वात् कार्य्यत्वरूपेण परमापूर्व्वसाधनत्वान्वये च न तत्पर्य्यन्तस्थायिव्यापारोपधायकत्वज्ञानमपेक्षितं कार्य्यत्वावच्छिन्नस्य कालान्तरभावित्वाप्रतिसन्धानादित्यभिसन्धिः। एतच्चापाततः स्वर्गस्य कालान्तरभावित्वाप्रतिसन्धाने क्रियायाः क्षणिकत्वाप्रतिसन्धाने वा स्वर्गसाधनत्वान्वयेऽप्यपूर्व्वोपस्थितिं विना योग्यताज्ञानसम्भवात्।

केचित्तु दर्श-पौर्णमासाभ्यां यजेत स्वर्गकाम इत्यत्र विधिप्रत्ययस्य कार्य्यत्वरूपेणापूर्व्वसामान्य एव शक्तत्वात् प्रथमं कार्य्यत्वरूपेण कलिकापूर्व्वसाधनत्वावगमस्ततः कार्य्यत्वरूपेण परमापूर्व्वसाधनत्वावगमः न तु प्रथममेव परमापूर्व्वसाधनत्वावगमः। न च प्रथमं कार्य्यत्वरूपेण कलिकापूर्व्वसाधनत्वावगमेऽपि तत्र परमापूर्व्वपर्य्यन्तस्थायित्वं न गृहीतमिति वाच्यं। द्वितीयबोधे परमापूर्व्वे स्वर्गपर्य्यन्तस्थायित्ववत् प्रथमबोधे कलिकापूर्व्वे स्वर्गपर्य्यन्तस्थायिव्यापारसमयस्थायित्वभानेऽपि बाधकाभावादिति समाधत्ते, 'काम्य इति दर्श-पौर्णमासाभ्यां यजेत स्वर्गकाम इति काम्यविधावित्यर्थः, 'अपूर्व्ववाच्यत्वस्थिताविति कार्य्यत्वरूपेण कलिकापूर्व्वस्यापि वाच्यत्वस्थितावित्यर्थः, 'तद्वारा साधनत्वस्येति कलिकापूर्व्वद्वारा परमापूर्व्वसाधनत्वस्येत्यर्थः, अन्वय इति शेषः, 'योग्यतासम्भवात्' प्रथमं योग्यताज्ञानसम्भवात्, 'न तु प्रथममिति, परमापूर्वसाधनत्वावगम इति शेषः। न चैवं प्रतीतपरमापूर्वसाधनत्वानुपपत्त्या कलिकापूर्व्वाणां कल्प्यत्वमिति सिद्धान्तव्याघात इति वाच्यं। प्रधानविधिवाक्यात् परमापूर्वसा-

धनलाभ्वयानुपपत्त्या कलिकापूर्व्वाणामेव प्रथमान्वयबोधविषयत्वं इत्येव तदर्थात् इति भाव इत्याहुः।

ननु एकस्मिन्नेव परमापूर्व्वे स्वर्गे च दर्श-पौर्णमासयोरुभयोः केन रूपेण जनकत्वमिति चेत्, उच्यते, दर्श-पौर्णमासोभयसाधारणेन दर्शत्व-पौर्णमासत्वव्यापकीभूतेन वैजात्यविशेषेण विजातीयापूर्वं विजातीयस्वर्गञ्च प्रति जनकत्वं विजातीयापूर्वजनकतावच्छेदकतयैव तद्वैजात्यसिद्धिः। न च दण्ड-चक्रन्यायेन दर्शत्व-पौर्णमासत्वाभ्यामेव जनकत्वमस्तु केवलदर्शात् केवलपौर्णमासाद्वा फलानुत्पादस्य परस्परव्यतिरेकादेवोपपत्तेरिति वाच्यं। कार्य्य-कारणभावद्वयकल्पने गौरवात् दर्शत्वादेर्जनकतावच्छेदकतापर्य्यन्तस्य विध्यर्थत्वाभावात्। न च तत्रापि दर्शत्वादिप्रत्येकधर्म्ममादाय विनिगमनाविरहात् कार्य्य-कारणभावत्रयमावश्यकमिति वाच्यं। केवलदर्शात् केवलपौर्णमासाच्च फलोत्पादस्य वारणाय कार्य्य-कारणभावद्वयस्यावश्यकत्वेन गौरवस्यैव विनिगमकत्वात्। यदि च पौर्णमासं विना कृते दर्शे दर्शत्वस्य दर्शं विना कृते च पौर्णमासे पौर्णमासत्वस्य प्रत्यक्षसिद्धत्वं नाभ्युपेयते किन्तु दर्शपूर्व्वकृते पौर्णमास एव पौर्णमासत्वं पौर्णमासोत्तरकृत एव दर्शे दर्शत्वमुपेयते, तदा तु प्रत्येकं दर्शत्व-पौर्णमासत्वाभ्यामेव जनकत्वं न तु व्यापकजात्या अतिरिक्तजातिकल्पने गौरवात् अतिरिक्तजातिकल्पनेऽपि दर्शत्वादिकमादाय विनिगमनाविरहेण कार्य्य-कारणभावद्वयस्यावश्यकत्वात्। अथ यदि पौर्णमासोत्तरकृते दर्श एव दर्शत्वं तदा दर्शत्वेनैव हेतुतास्तु किं पौर्णमासत्वेन हेतुतया। न च विनिगमनाविरहात् पौर्णमासत्वेनापि हेतुत्वमिति

वाच्यं। केवलपौर्णमासत्वेन हेतुत्वे पौर्णमासानन्तरं दर्शोत्पाद-प्राक्काल एव परमापूर्व्वोत्पत्त्यापत्तेरेव विनिगमकत्वादिति चेत्, न, दर्श-पौर्णमासाभ्यां यजेत स्वर्गकाम इति श्रुत्या पौर्णमासस्यापि हेतुत्वबोधनात् पौर्णमासत्वेनापि हेतुत्वस्यावश्यकत्वात् दर्शत्वस्य पौर्णमासावृत्तित्वात्। एतेन पयोयागात्मकदर्शचरमयागस्यैव पयोयागत्वेन हेतुत्वमस्त्वित्यपि निरस्तं। दर्श-पौर्णमासत्वाक्रान्तानामन्येषामपि हेतुत्वस्य वेदबोधितत्वात्। अथोभयसाधारणवैजात्येन हेतुतापक्षे जातेरव्यासज्यवृत्तितया आग्नेयादियागषट्कस्थल एव आग्नेयादियत्किञ्चिद्यागानन्तरं परमापूर्व्वोत्पत्त्यापत्तिः कारणतावच्छेदकावच्छिन्नयत्किञ्चित्कारणसत्त्वात् एवं दर्शत्व-पौर्णमासत्वादिना प्रत्येकहेतुत्वपक्षेऽपि[१] पौर्णमासानन्तरं दर्शान्तर्गततया यत्किञ्चिद्यागे कृते एव परमापूर्व्वोत्पत्त्यापत्तिरिति चेत्, न, परमापूर्व्वं प्रति व्यापारीभूतानां कलिकापूर्व्वषट्कानामपि तत्तद्रूपेण दण्ड-चक्रवत् हेतुतया कलिकापूर्व्वषट्कानां सम्बद्धतया वा तदभावादेव तत्र परमापूर्व्वानुत्पादात्। ननु तथापि दर्श-पौर्णमासस्थले कियन्त्यपूर्व्वाणीति चेदत्र प्राञ्चः, प्रथमतः पौर्णमासत्रयेण प्रत्येकं कलिकापूर्व्वत्रयं जनयित्वा मध्ये एकं परमापूर्व्वं जन्यते एवं दर्शत्रयेणापि प्रत्येकं कलिकापूर्व्वत्रयं जनयित्वा मध्ये एकं परमापूर्व्वं जन्यते ततस्ताभ्यां परमापूर्व्वाभ्यां चरमं परमापूर्व्वान्तरं जन्यते इति न चापूर्व्वाणीत्याहुः।

---

(१) दर्शत्व-पौर्णमासत्वाभ्यां हेतुत्वपक्षेऽपीति ग०।

नव्यास्तु मध्यमपरमापूर्वद्वये मानाभावात् षड्भिः कलिकापूर्वै-रेव चरमं परमापूर्वं जन्यत इति सप्तापूर्व्वाणि। न च पूर्वपूर्वक्रिया-भिर्जनितैः पञ्चभिः कलिकापूर्वैः सह उत्तरक्रिययैव चरमं परमा-पूर्वं जनयतु किं चरमक्रियाजन्यकलिकापूर्वेणेति वाच्यं। तस्या-अपि स्वोत्तराङ्गदक्षिणादानादिसापेक्ष्येनैव परमापूर्वजनकत्वोपगमेन तावत्कालानवस्थित्या चरमकलिकापूर्वस्वीकारात् दक्षिणादानाद्यु-त्तराङ्गञ्च साक्षादेव परमापूर्वहेतुर्न तु तत्र द्वारापेक्षेति प्राहुः।

उच्छृङ्खलास्तु षड्भ्यः कलिकापूर्वेभ्य एव स्वर्गोपपत्तेः चरमपर-मापूर्वेऽपि मानाभावः। न च स्वर्गं प्रति षण्णामपूर्व्वाणां षडपूर्व-सम्बन्धेन दर्श-पौर्णमासानाञ्च हेतुत्वे गौरवमिति वाच्यं। तथापि परमापूर्वं प्रति षडपूर्व्वाणां षडपूर्वसम्बन्धेन दर्श-पौर्णमासानाञ्च हेतुत्वेन तुल्यत्वात् षडपूर्व्वाणां सम्बन्धत्वन्तु मतद्वय एव। यदि षडपूर्व्वाणामपि पृथक् हेतुत्वं तदाऽपूर्वत्वेनैव इतरथा तु षट्त्वेन इत्यन्यदेतदित्याहुः।

तदसत् परमापूर्व्वानभ्युपगमे दक्षिणादानादेश्चरमाङ्गस्य स्वर्गोप-योगित्वानुपपत्तेः, न हि दक्षिणादानं साक्षात् स्वर्गहेतुः, अङ्गत्वात् आशुविनाशित्वाच्च, तज्जन्यस्यापि पृथगपूर्वस्य स्वीकारे किमपराद्धं परमापूर्वेण, परमापूर्वं प्रति च दक्षिणादानादेश्चरमाङ्गस्य साक्षादेव हेतुत्वं इत्युक्तमेव। न च परमापूर्व्वाभ्युपगमे तत्र षडपूर्व्वाणां दक्षि-णादानस्य च कारणत्वं कल्पनीयमतो गौरवमिति वाच्यं। तथापि षडपूर्व्वाणां दक्षिणादानादिजन्यापूर्व्वस्य च स्वर्गं प्रति हेतुत्वेन तुल्यत्वात्, मम तु कलिकापूर्व्वषट्कं परमापूर्व्वजनन एव द्वारं न

तु स्वर्गहेतुः मानाभावात् यागस्य हेतुत्वे च श्रुतिरेव मानमिति न किञ्चिदेतत् ।

ननु तथापि नवावृत्त्यादिस्थले दशपार्थिवशिवपूजादिस्थले च केन रूपेण परमापूर्वविशेषे स्वर्गविशेषे च हेतुत्वं तत्र नवावृत्तित्वादेर्ज्जातित्वाभावात् । न च तत्रापेक्षाबुद्धिविशेषविषयत्वरूपनवत्वादिविशिष्टावृत्तित्वादिनैव हेतुत्वं अपेक्षाबुद्धिश्च प्रत्येकसङ्कल्पपूर्वकनवावृत्त्यादिव्यावृत्ता ग्राह्या इति वाच्यं । प्रत्येकनवावृत्त्यादिमात्रवृत्त्यपेक्षाबुद्धेः कारणतावच्छेदकत्वेऽननुगमात् सकलनवावृत्त्यादिवृत्त्यपेक्षाबुद्धेः कारणतावच्छेदकत्वे अननुगमात् सकलनवावृत्त्यादिवृत्त्यपेक्षाबुद्धेः कारणतावच्छेदकत्वे असम्भवात् । अथ चण्डीपाठावृत्तितत्तन्नवत्वेतरनवत्वत्वादिना नवत्वादिकमनुगतीकृत्य तद्विशिष्टत्वेन हेतुत्वं वाच्यं कारणतावच्छेदकसम्बन्धश्च स्वर्गं प्रति परमापूर्वमेव परमापूर्वं प्रति तु परमापूर्वेतरापूर्वसामान्यमेव दर्शादिस्थलवदत्रापि प्रत्येकावृत्तिजन्यकलिकापूर्वनवकादिद्वारेव परमापूर्वजननात् प्रत्येकसङ्कल्पपूर्वकप्रत्येकावृत्तिजन्यापूर्वतो नवावृत्त्यादिस्थलीयप्रत्येकावृत्तिजन्यकलिकापूर्वस्य न वैलक्षण्यमतः कलिकापूर्वं प्रति चण्डीपाठत्वादिनैव हेतुत्वं कार्य्यतावच्छेदकश्च चण्डीपाठसामान्यजन्यतावच्छेदकतया सिद्धो नवावृत्त्यादिजन्यतावच्छेदकजातिव्यापको जातिविशेष एव धारावाहिकपरमापूर्वद्वयादिवारणाय परमापूर्वेतरेति, नवत्वादेः प्रत्येकापरिसमाप्तत्वादेकस्मान्न परमापूर्वोत्पाद इति चेत्, न, निखिलापेक्षाबुद्धिसाधारणस्य नवत्वत्वस्य एकस्यानुगतस्याभावेन तेन रूपेणानुगमासम्भवादिति । मैवं । नवावृत्तित्वादेरपि नवपाठा-

ननु* यो ब्राह्मणायावगुरेत्तं शतेन यातयेदित्यत्र ब्राह्मणवधोद्यमस्य शतयातनाहेतुत्वावगमे यथा दुरितापूर्व्वं कल्प्यते[१] तथेहापीति चेत्, न, अवगुरेत् यातयेत् इत्यत्र हेतु-हेतुमतोर्लिङित्यनुशासनात् लिङा अवगोरण-शतयातनयोर्नियतं पौर्वापर्य्यं बोध्यते प्र-

दिविषयकमानसज्ञानविशेषवृत्तिमानसत्वव्याप्यजातित्वात् नवकृत्वः पठेत् दशपार्थिवशिवलिङ्गानि पूजयेदित्यादावपि तादृशज्ञानविशेष एव धात्वर्थः, तादृशज्ञानविशेषस्य परमापूर्वं प्रति साक्षादेव हेतुरिति सङ्क्षेपः। प्रतिबन्ध्यन्तरमाशङ्कते, 'नन्विति, 'शतयातनेति शतवर्षावच्छिन्नयातनेत्यर्थः, 'यातना' नरकविशेषः, 'तथेहापीति तथा स्वर्गकामो यजेतेत्यादावपि स्वर्गसाधनत्वावगमानन्तरं परमापूर्वकल्पनमस्त्वित्यर्थः, 'नियतमिति कारण-कारणव्यावृत्तान्यथासिद्धिचतुष्टयानिरूपकनियतपूर्ववर्त्तितावच्छेदकधर्म्मवत्त्वमात्रमित्यर्थः,

(१) यथा दुरितापूर्व्वकल्पनमिति ख०, ग० ।

* प्रतिबन्धिमाशङ्कते, 'नन्विति, 'शतयातना' नरकविशेषः, तथाचात्र तव या गतिः सा समापीति भावः। 'नियतमिति अन्यथासिद्धचतुष्टयरहितनियतपौर्व्वापर्य्यमित्यर्थः, तेन मध्यवर्त्तिकल्पनं निर्व्वहति, अन्यथा दण्डरूपादौ तत्कल्पनापत्तेरिति भावः। नन्वेतदप्याशुविनाशिनां मध्यवर्त्तिज्ञानेन विनाऽयोग्यतया दुर्ग्रहं अन्यथा अन्यथासिद्धिपञ्चकरहितनियतपौर्व्वापर्य्यपर्य्यवसन्नस्य कारणत्वस्यापि ग्रहे बाधकाभावात्

त्यक्षेणानुभव-स्मरणयोरिव, तच्च साधनत्वे साधनसा-
धनत्वे वा उभयमपि मध्यवर्त्तिघटितमिति दूरित-

तेन 'मध्यवर्त्तीत्यादि सङ्गच्छते, 'साधनसाधनत्वे वेति च सङ्गच्छते, नियतपूर्ववर्त्तितावच्छेदकत्वन्तु तदुत्पत्त्यधिकरणक्षणनिष्ठोत्तरत्वसम्बन्धावच्छिन्नाभावप्रतियोगितानवच्छेदकत्वमित्युक्तमेव। नन्वनन्यथासिद्धनियतपूर्ववर्त्तित्वमात्रबोधने कथं दुरितापूर्वकल्पनं दुरितापूर्वकल्पनं विनापि तादृशपूर्ववर्त्तित्वोपपत्तेरित्यतआह, 'तच्चेति, प्रकृतमिति शेषः, 'साधनत्वे' शतयातनापरम्परासाधनत्वे, 'साधनसाधनत्वे वा' शतयातनासाधनसाधनत्वे वा, सम्भवतीति शेषः, साक्षात्साधनत्वस्य बाधितत्वादिति भावः। 'घटितमिति व्याप्तमित्यर्थः, 'इह त्विति स्वर्गकामो यजेतेत्यादौ त्वित्यर्थः, 'विध्यनुशिष्टेति प्रवर्त्तक-

र्जितं नैयायिकैः। एतेनोक्तस्य मध्यवर्त्तिज्ञानं विना ग्रहसम्भवेऽपि इष्टसाधनता दुर्ग्रहा सा हीष्टसहभावनिर्म्मिता, तत्सहभावस्य क्षणिकस्य व्यापारनिर्म्मितशरीरमेव यागस्य स्वर्गसाधनत्वं तत् कथं व्यापाराप्रतीतौ प्रतीयतां एकदेशस्यापरिचयादिति परास्तं। एवमप्यनन्यथासिद्धनियतपूर्व्वसत्त्वादिरूपकारणत्वबोधे बाधकानभिधानादिति। अत्राहुः, उक्तलिङा नियतपौर्व्वापर्य्यमात्रं बोध्यते तस्मान्नावगुरितव्यमिति निषेधकवेदभागेनावगोरणाभावविषयकापूर्व्वकार्य्यत्वे बोधिते तदन्यथानुपपत्त्या अवगोरणस्य शतयातनाहेतुत्वनिबन्धनपूर्व्वत्वमित्यनुमीयते। न ह्यवगोरणस्यानिष्टसाधनत्वं विना तदभावविषयकापूर्व्वकार्य्यत्वमुपपद्यते, प्रत्युत रागप्राप्तमवगोरणमेव कुर्य्यात् तथाचोत्तरकालानुमितकारणत्वनिर्व्वाहाय

कल्पनं संस्कारवत्, इह तु विध्यनुशिष्टा लिङ् कार्य्यतामाह। किञ्च कामी काम्यादन्यत् काम्याव्यवहित-

ज्ञानजनकत्वेनाभिमतेत्यर्थः, 'कार्य्यतामाहेति, कार्य्यतान्वयबोधे चेष्टजनकत्वमेव योग्यता तज्ज्ञानञ्चाशुविनाशिनो यागस्य स्वर्गसमयस्थायिव्यापारजनकत्वज्ञानं विनाऽनुपपन्नमिति कार्य्येऽपूर्वरूपव्यापारे लिङः शक्तिरावश्यकीति भावः। नन्वेवगुरेदित्यचान्यथाभिद्धिचतुष्टयराहित्ये सति नियतपूर्ववर्त्तित्वमात्रस्य लिङर्थत्वे शतयातनारूपानिष्टसाधनत्वस्यावगोरणेऽलाभान्निवृत्त्यनुपपत्तिः। न च तादृशनियतपूर्ववर्त्तित्वमात्रस्य लिङ्प्रत्ययादवगतौ प्रमाणान्तरात् साधनत्वावगम इति वाच्यं। तथा सति यजेतेत्यादिप्रवर्त्तकस्थलेऽपि तथा सुवचत्वेन तत्राप्यपूर्ववाच्यत्वानुपपत्तेरित्यस्वरसान्मास्तु आशुविनाशिनः फलसाधनत्वान्वये फलसमयस्थायिव्यापारोपधायकत्वं योग्यता तथापि अपूर्वकामनां विना यागे प्रवृत्त्यनुपपत्त्या अपूर्वकामनार्थमपूर्वज्ञानस्यावश्यकत्वेनापूर्वशक्तिरप्यावश्यकीत्याह, 'किञ्चेति।

केचित्तु लाघवान्नियतपूर्ववर्त्तिताज्ञानमेव निवर्त्तकमिति तत्र साधनत्वानवगमेऽपि न क्षतिः। न चैवं प्रवृत्तावपि नियतपूर्ववर्त्तिताज्ञानमेव हेतुरस्तु किं साधनताज्ञानार्थं प्रवर्त्तकस्थलेऽप्यपूर्ववाच्य-

दुरितकल्पनं यागे तु नैवमिति न प्रतिबन्धिरिति दिक्। 'इह त्विति तत्र चोक्तयोग्यताज्ञानविरहादिदोष इति न तौल्यमित्यर्थः। इतोऽपि क्रियायां न कार्य्यतान्वय इत्याह, 'किञ्चेति, नित्ये व्यभिचारादाह, 'कामीति, काम्ये व्यभिचारादाह, 'काम्यादन्यदिति। न च पाकत्वात् पाकः कार्य्य इत्यनु-

साधनतया ज्ञातमेव कर्त्तव्यतयाऽवैतीति नियमात् न

तयेति वाच्यं। तत्र प्रवृत्त्यर्थं साधनताज्ञानाननुसरणादपि तु प्रवर्त्तककार्य्यताज्ञानार्थं कार्य्यतान्वयबोधे च फलबलेन काम्यसाधनत्वस्यैव योग्यतात्वादिति न कोऽप्यत्राखरस इत्याहुः।

'काम्यादन्यदिति यः काम्यभिन्नत्वे सति यत्कामनाजन्यप्रवृत्तिहेतुकार्य्यताज्ञानविषयो भवति सोऽवश्यं तदव्यवहितसाधनतया ज्ञातो भवतीति नियमार्थः, अत्र यत्कामनाजन्यप्रवृत्तिविषयत्वमात्रोक्तौ अपूर्वमादाय हविराद्युपादाने व्यभिचार इति प्रवृत्तिहेतुकार्य्यताज्ञानविषयत्वपर्य्यन्तं, अपूर्व-यागोभयगोचरकार्य्यतासमूहालम्बनविषयत्वेनापूर्वमादायापूर्वे व्यभिचारवारणाय विषयताविशेषलाभार्थं सत्यन्तोपादानं, विषयताविशेषः प्रवृत्तिहेतुतावच्छेदकीभूतकार्य्यतांशे विशेष्यत्वं, यत्कामनापदेन च कृतिसाध्यत्वाप्रकारकयदुद्देश्यककामना विवक्षिता, तेन चिकीर्षात्मकयागगोचरकामनाया अपि प्रवृत्तिहेतुत्वेऽपि यागमादाय यागे न व्यभिचारः, न वा हविराद्युपादानगोचरकामनाया अपि प्रवृत्तिहेतुत्वाद्धविरादिमादाय यागे व्यभिचारः, प्रवृत्तिश्च प्रमाजन्यत्वेन विशेषणीया तेनापूर्वकामनया कृते चैत्यवन्दनादौ न व्यभिचारः। न च साध्ये ज्ञातत्वस्य भ्रम-प्रमासाधारणस्य प्रवेशान्न व्यभिचार इति वाच्यं। प्रकृतेऽपि स्वर्गाव्यवहितसाधनत्वभ्रममादाय सिद्धसाधनापत्त्या साध्ये प्रमाविषयत्वरूपज्ञातत्वपर्य्यन्तस्याविवक्षितत्वादिति मन्तव्यं। 'कामिन-

मितौ व्यभिचारः, तन्मते तत्रापि तदपेक्षाभ्युपगमादित्याहुः। न च तन्मते

क्रियायां कामिनोऽन्वयो योग्यः । न च तृप्तिकामस्य पाके प्रवृत्तेर्व्यभिचारः, ओदनकामस्य तत्र प्रवृत्तेः, तृप्तिकामना तु तत्कामनोपयोगिनी न तु साक्षात्, अन्यथा साधनसाधने प्रवृत्तिर्न स्यात् । काम्यसाधनत्वं प्रवर्त्तकं लाघवादिति चेत्, न, भोजनकामस्य सिद्धौदनस्य पाके प्रवृत्तिप्रसङ्गात् तस्यौदनद्वारा भोजन-

इति स्वर्गकामनामात्रवत इत्यर्थः, 'अन्वयः' प्रवृत्तिविषयत्वं, 'योग्यः' सम्भवी, क्रियायाः स्वर्गाव्यवहितसाधनत्वाभावादिति भावः । तथा-चापूर्वकामनयैव यागे प्रवृत्तेरपूर्वकामनार्थमपूर्वज्ञानस्यावश्यकत्वेना-पूर्वे शक्तिरप्यावश्यकीति निगर्वः । 'तृप्तिकामस्येति, पाकस्य तृप्त्य-व्यवहितसाधनत्वाभावादिति भावः । 'तत्कामनेति ओदनकामने-त्यर्थः, 'न तु साक्षादिति, प्रवृत्तिहेतुरिति शेषः । 'अन्यथेति तृप्ति-कामनाया ओदनकामनासम्पादकत्वाभावे इत्यर्थः, 'साधनसाधने' तृप्तिसाधनस्यैव साधने तृप्तावन्यथासिद्धे पाके इति यावत्, 'प्रवृत्तिर्न स्यादिति तन्मते तृप्तिकामस्य प्रवृत्तिर्न स्यादित्यर्थः, काम्यसाधनता-ज्ञानस्य प्रवृत्तिहेतुत्वादिति भावः । 'काम्यसाधनत्वमिति साधन-तत्साधनसाधारणं काम्यप्रयोजकतामात्रमित्यर्थः, 'लाघवादिति कारणकारणव्यावर्त्तकानन्यथासिद्धत्वाप्रवेशेन साक्षात्साधनत्वमपेक्ष्य

साध्यत्व-साधनत्वयोरेकदा भाने विरोध इति वाच्यं । वादिभेदेनाविरोधा-दित्याहुः । अवच्छेदभेदमादायादोष इत्यन्ये । 'काम्येति, तथाच व्यापके

साधनत्वाविशेषात्, विशेषणे तु यत्राव्यवहितसाधनं पाकः तत् न काम्यं यच्च काम्यं तत्र नाव्यवहितसाधनं पाकइति न प्रवृत्तिः। ननु पाकस्य सिद्धौदनद्वारा भोजनसाधनत्वं न सम्भवति द्वारस्यासाध्यत्वात् ओदनान्तरद्वारा च तथा प्रतिसन्धाने अव्यवहितविशेषणेऽपि कुतोन पाके प्रवर्त्तते ओदनान्तरे द्वारे साक्षात्साधनत्वादिति चेत्, न, पाकस्य भोजनसाधनत्वे

---

लाघवादित्यर्थः, 'साधनत्वाविशेषात्' प्रयोजकत्वाविशेषात्, 'विशेषणे त्विति साक्षाद्विशेषणे त्वित्यर्थः, 'यत्र' ओदने, 'अव्यवहितसाधनं' साक्षात्साधनं, 'तन्न काम्यमिति, सिद्धत्वादिति भावः। 'यच्च' भोजनं, 'अव्यवहितसाधनं' साक्षात्साधनं। इदमापाततः बलवदनिष्टानुबन्धित्वज्ञानस्य प्रतिबन्धकतया सिद्धौदनस्य पाके प्रवृत्त्यभावसम्भवादिति ध्येयं। 'पाकस्य' सिद्धपाकस्य, 'भोजनसाधनत्वं' भोजनप्रयोजकत्वज्ञानं, 'द्वारस्येति यस्य यद्द्वारं तस्य तत्साध्यत्वनियमादित्यर्थः, 'तथा प्रतिसन्धान इति भोजनप्रयोजकत्वप्रतिसन्धानइत्यर्थः, 'अव्यवहितविशेषणे' साक्षात्त्वविशेषणे, 'ओदनान्तर इति, तस्यासिद्धत्वेन तत्रौदनत्वरूपेण काम्यत्वस्यापि सम्भवादित्याशयः। 'भोजनसाधनत्वे' भोजनप्रयोजकत्वज्ञाने, 'विशेषस्य' विशेषरूपेण

अव्यवहितपदवैयर्थ्यमिति भावः। 'यत्रेति ओदन इत्यर्थः, 'यदिति भोजनमित्यर्थः, 'ओदनान्तरेति, तस्यासिद्धत्वेन काम्यत्वमित्यभिमानः। 'ओदन-

विशेषस्याप्रयोजकतया ओदनमात्रस्य द्वारत्वात् तस्य च साध्यत्वाविवादात् । ओदनविशेषे च सिद्धे ओदन-कामनाविरहात् न तुल्यत्वं । नन्वोदने सिद्धत्वात् यथा न कामना तत एव द्वारतापि न, अथौदनान्तरस्या-सिद्धत्वमादाय[१] द्वारता तर्हि कामनापि स्यात् तस्यासिद्धत्वादिति चेत्, न, पाकस्यैकविशेषद्वारता-बाधो न विशेषान्तरद्वारताविरोधी सकलविशेषस्यैकत्र

---

ओदननिष्टद्वारताज्ञानस्य, 'द्वारत्वात्' द्वारतया ज्ञानात्, 'तस्य' ओदनत्वाश्रयस्य, 'साध्यत्वाविवादात्' पाकसाध्यत्वाविवादादित्यर्थः । ननु तथापि पाके प्रवृत्त्यापत्तेस्तुल्यता दुर्व्वारैवेत्यत आह, 'ओदन-विशेष इति, यत्किञ्चिद्विषयसिद्ध्यैव सामान्येच्छाविच्छेदात् । न च तथापि ओदनत्वरूपेण कामना सम्भवत्येवेति वाच्यं । तादृशकाम-नादशायां[२] प्रवृत्तेरिष्टत्वादिति भावः । भावमविद्वानाशङ्कते, 'नन्विति, 'द्वारतापि' द्वारताज्ञानमपि, 'द्वारता' द्वारताज्ञानं । भावमुद्घाटयति, 'पाकस्येति, 'द्वारताविरोधी' सामान्यतोद्वारता-

---

(१) ओदनान्तरमसिद्धमादायेति ख० ।

(२) तादृशकामनयेति ग० ।

---

विशेषे चेति, यत्किञ्चिद्विशेषसिद्ध्यैव सामान्येच्छाविच्छेदादिति भावः । आशयमविद्वान् शङ्कते, 'नन्विति, आशयमुद्घाटयति, 'पाकस्येत्यादि । नन्वेवमपूर्व्वं कामिकर्त्तव्यतया न बुध्यते काम्याव्यवहितसाधनत्वेन प्रथमं

द्वारत्वासम्भवात्, एकविशेषसिद्धौ तु तन्मात्रकामना विच्छिद्यते, न हि सकलविशेषसिद्धत्वेन सामान्यकामनाविच्छेदः, सकलविशेषसिद्धेरसम्भवेन तदनुच्छेदप्रसङ्गात्। अथ वा काम्यादन्यत् साक्षादसाधनत्वेन ज्ञायमानं यत्कर्त्तव्यतया कामी बुध्यते तत्काम्याव्यवहितसाधनमन्तरा कृत्वैव। यद्वा काम्यादन्यत् कामी प्रथमं काम्याव्यवहितसाधनं कर्त्तव्यतयाऽवैति पश्चात् तद्-

---

ज्ञानविरोधीत्यर्थः, 'तन्मात्रकामना' सामान्यकामना, यागेऽपूर्व्वार्थितया प्रवृत्तौ "यागे रागादङ्गे वैधीति सूत्रविरोधात्, अन्यथा व्याप्तिमाह, 'अथ वेति, 'असाधनत्वेनेति तदसाधनत्वेनेत्यर्थः, 'कर्त्तव्यतया' तत्कामकृतिसाध्यतया, 'काम्याव्यवहितेति तदव्यवहितसाधनजनकतया ज्ञात्वैवेत्यर्थः, अत्र स्वर्गस्यापि स्वर्गकामकृतिसाध्यताज्ञानविषयत्वात् स्वर्गे व्यभिचारवारणाय विषयताविशेषलाभार्थं 'काम्यादन्यदिति, एवमग्रेऽपि। 'तद्द्वारेति काम्याव्यवहितसाधने कार्य्यताज्ञानद्वारेत्यर्थः। न च यागस्य स्थिरत्व-निर्व्यापारत्वभ्रमवतो विनाप्यपूर्वकार्य्यताबोधं यागकार्य्यताबोधाद्व्यभिचार इति वाच्यं। गुरुनये तदभावात्तन्नये कार्य्यत्वासंसर्गाग्रहस्यैव तत्त्बो-

---

तद्बोधाभावादित्यरुचेराह, 'अथ वेति। 'यद्वेति, न च यत्र साक्षात् साधन एव कामिप्रवृत्तिस्तत्र व्यभिचार इति वाच्यं। परम्परासाधननिष्ठप्रवृत्तिप्रयोजकेच्छावतः कामिपदेन विवक्षितत्वात्। न चैवमपि स्थिरत्व-निर्व्यापारत्वभ्रमवता कामिना यत्र यागः कर्त्तव्यतया बुध्यते तत्र व्यभिचार इति

द्वारा अव्यवहितसाधनमिति प्रथमं यागे कामिका-र्य्यताबोधोऽयोग्यतापराहत एव ।

उत्तानास्तु विवादविषयोलिङ् समभिव्याहृत-क्रियान्वितकार्य्यताबोधिका प्रमाणलिङ्त्वात् लौकिक-

---

दयादिति भावः । 'अयोग्यतापराहत इति काम्याव्यवहितसाधने कार्य्यताज्ञानात्मकयोग्यताज्ञानविरहपराहत इत्यर्थः ।

'उत्तानास्त्विति नैयायिकोत्ताना इत्यर्थः, उक्तबाधकमनिराकृत्यानुमानेन यागान्वितकार्य्यताबोधकत्वसाधनादुत्तानत्वं, न हि बाधकसत्त्वेऽनुमानसहस्रैरपि विषयसिद्धिरिति भावः । 'विवादविषयोलिङिति, लौकिकलिङि अंशतः सिद्धसाधनवारणाय 'विवाद-विषय इति स्वर्गकामोयजेतेत्यादावित्यर्थः, 'समभिव्याहृतेति 'स्व-समभिव्याहृतधात्वर्थविशेष्यककार्य्यत्वप्रकारकबोधजनिकेत्यर्थः, अपूर्व-स्यापि क्रियात्वात् सिद्धसाधनवारणाय स्वसमभिव्याहृतेति । न चापूर्वकार्य्यताबोधानन्तरं यागेऽपि कार्य्यताबोधात् सिद्धसाधनमिति वाच्यं । अपूर्वोपस्थितेः प्रागिति साध्ये विशेषणीयत्वादिति भावः । 'प्रमाणलिङ्त्वादिति कार्य्यत्वप्रमापकलिङ्त्वादित्यर्थः, तेनावगुरे-

---

वाच्यं । परम्परासाधनविषये आशुविनाशित्वज्ञानवत्त्वेन कामिनो विशेष-णात् । 'विवादविषय इति, एतच्च सम्प्रदायमते लौकिकलिङा अंशतः सिद्धसाधनवारणाय । अपूर्व्वस्यापि क्रियात्वेन सिद्धसाधनादाह, 'समभि-व्याहृतेति । न चावगुरेदित्यत्र व्यभिचारः, लिङ्विशेषहेतुत्वे तात्पर्य्यात्,

**लिङ्त्वत्, लिङुपस्थाप्यं कार्य्यत्वं समभिव्याहृतक्रियान्वितं लिङुपस्थाप्यकार्य्यत्वात् पचेतेतिकार्य्यत्ववत्,**

दित्यादौ हेतु-हेतुमतोर्लिङित्यादिना विहिते आमंत्रा-प्रार्थनादिविहिते च लिङि न व्यभिचारः। न वा कुर्य्यादित्यत्र व्यभिचारः तत्र धात्वर्थे कार्य्यत्वस्य बाधेन कार्य्यत्वप्रमापकत्वाभावात्। न चैवं कुर्य्यादित्यत्र कथं व्यभिचारं वक्ष्यतीति वाच्यं। 'नान्वयावित्युपक्रम्यान्वययोरेव तदुद्भावनात्।

केचित्तु 'उक्ताना इत्यस्य मीमांसकोक्ताना इत्यर्थः, निर्युक्तिकमतमालम्ब्य स्वपचहानिकर्त्तृतया चोक्तानत्वं, इत्यस्य 'प्रमाणलिङ्त्वादिति यथाश्रुतमेव साधु, हेतु-हेतुमतोर्लिङित्यादिना विहितस्यामंत्रादिविहितस्य च सिद्धार्थकतया प्रमाणत्वाभावेन व्यभिचाराभावात्। न च तथापि कुर्य्यादित्यत्र व्यभिचार इति वाच्यं। अन्त्यानुमानद्वयवदेतदनुमानेऽप्यस्य दोषस्योहनीयत्वादित्याहुः।

'लिङुपस्थाप्यमिति विवादास्पदलिङ्जन्या कार्य्यत्वोपस्थितिः स्वजनकलिङ्समभिव्याहृतधात्वर्थविशेष्यककार्य्यत्वप्रकारकबोधजनिका लिङ्जन्यकार्य्यत्वोपस्थितित्वादित्यर्थः, अतएव कार्य्यत्वस्यैकत्वेऽपि पचेतेत्यादिकमादाय सिद्धसाधनं, न वा कार्य्यत्वस्यानुगतस्य सुखादिवृत्तेर्योगेऽपि सत्त्वेन व्यभिचाराभावाद्धेतौ उपस्थाप्यान्तवैयर्थ्यमिति

'लिङुपस्थाप्यमिति। नन्वत्र सिद्धसाधनं कार्य्यत्वस्यानुगतस्यैकत्वेन लिङुपस्थाप्यस्यैव तस्य कदाचित् क्रियान्वयात् एवञ्च हेतौ व्यर्थविशेषणत्वं कार्य्यत्वमात्रस्यैवाव्यभिचारादिति चेत्, न, लिङ्जन्या कार्य्यत्वोपस्थितिः तत्क्रियान्वित-

यागो वा कार्य्यत्वान्वितः लिङ्सम्बलितधातुप्रतिपाद्यत्वात् पाकवदित्यनुमानात् क्रियाकार्य्यत्वावगमेनापूर्व्वं कल्प्यमिति, तच्च प्रथमे यागान्वितकार्य्यत्वबोधकत्वं लिङो बोध्यते न तु क्रियते। न च योग्यताज्ञानं विना तत्सम्भवतीत्युक्तमेव। न हि योग्यतादिकं विनैव तदनुमानप्रामाण्यप्रयोजनमात्रादन्वितमभिधीयते शब्देन, नान्यौ, कुर्य्यादित्यत्र व्यभिचारात् वेदस्यानुवादकतापाताच्च।

---

ध्येयं। 'यागो वेति यागः स्वप्रतिपादकधातुसमभिव्याहृतलिङ्जन्यकार्य्यत्वप्रकारकज्ञानविशेष्यः लिङ्समभिव्याहृतधातुप्रतिपाद्यत्वात् पाकवदित्यर्थः, 'लिङ्पदं विधिलिङ्परं, तेनावगुरेदित्यादौ न व्यभिचारः। 'क्रियाकार्य्यत्वावगमेनेति क्रियाकार्य्यत्वावगमस्य प्रामाणिकत्वेनेत्यर्थः, दूषयति, 'तच्चेति, 'बोध्यते' अनेनानुमानेन बोध्यते, 'इत्युक्तमेवेति, दूषणमिति शेषः, 'अन्वितमभिधीयत इति शाब्दबोधोजन्यत इत्यर्थः, तथाच बाध इति भावः। 'कुर्य्यादित्यत्रेति तत्र धात्वर्थे कार्य्यत्वस्य बाधेन साध्याभावादिति भावः। इदमुपलक्षणं उक्तक्रमेण बाधोऽपि बोध्यः। श्रोतुरुक्तानुमानानन्तरमेव

---

कार्य्यत्वबोधिका लिङ्जन्यकार्य्यत्वोपस्थितित्वादित्यत्र तात्पर्य्यात्। 'कार्य्यत्वान्वित इति लिङ्जन्यकार्य्यत्वप्रकारकबोधविशेष्य इत्यर्थः, 'लिङ्पदञ्च विधिलिङ्परं अतो नावगुरेदित्यत्र व्यभिचारः। दूषयति, 'तच्चेति, तथाच बाध इति भावः। 'कुर्य्यादिति, धातु-प्रत्ययोपस्थाप्ययत्नयोः

नन्वपूर्व्वे व्युत्पत्तिविरहः तथा हि प्रसिद्धार्थस्वर्ग-कामपदसमभिव्याहारान्यथानुपपत्त्या उपस्थिते शक्ति-र्ग्रहीतव्या। न च शाब्दानुभवात् पूर्व्वं अपूर्व्वमुप-स्थितं,(१) मानाभावात् अपूर्व्वत्वव्याघातात् अवाच्य-

---

विधिप्रवृत्तिरिति(२) पराशयं मत्वा दूषणमाह, 'वेदस्येति, इदमापाततः भिन्नप्रकारारकतयाऽनुवादकत्वाभावादिति मन्तव्यं।

'व्युत्पत्तिविरह इति विधेः शक्तिग्रहासम्भव इत्यर्थः, 'समभिव्याहारान्यथानुपपत्त्येति तदुपस्थापितस्य स्वर्गकामनावतो यागे कृतिसाध्यत्वान्वयानुपपत्त्येत्यर्थः, 'ग्रहीतव्येत्यग्रेतनेनान्वयः। ननु अन्यथानुपपत्त्या जन्मान्तरीयसंस्कारादेव तदुपस्थितिः कल्पनीयेत्यत आह, 'अपूर्व्वत्वव्याघातादिति, शाब्दबोधात्पूर्वं प्रमाणान्तराविषय-

---

(१) अपूर्व्वोपस्थितिरिति क०।

(२) वेदप्रवृत्तिरितीति ग०।

---

परस्परमनन्वयादिति भावः। न चाभेद एवान्वयः, भिन्नप्रकारोपस्थितिं विना तदभावात् अत्र बाधोऽपि बोध्यः। ननु तद्यावृत्तो हेतुर्वाच्य इति न व्यभिचार इत्यत आह, 'वेदस्येति वेदप्रतिपाद्यकार्य्यत्वादेर्बोधावच्छेदकतया प्रागेव सिद्धेरुत्तरानुमानयोः स्वातन्त्र्येणैवेत्यर्थः। न च भिन्नप्रकारकत्वान्नानुवादकत्वमिति वाच्यं। समानविषयत्वेन तथात्वमिति मतेनोक्तत्वात्। वस्तुतो नैवमनुवादकत्वं अन्यथा तन्मतेऽप्यापत्तेः कार्य्यत्वादेः कदाचिदनुमितस्यैव ततः प्रतीतेः। यदि च नियमतस्तथाऽभावान्नानुवादकत्वं तदा प्रकृतेऽपि तुल्यं, तस्मात् प्रथमदूषण एव तात्पर्य्यं। 'प्रसिद्धेति, वृद्धव्यवहारादेरभावादिति भावः। 'अपूर्व्वत्वेति शाब्दानुभवात् पूर्व्वं मा-

त्वापाताच्च । न च लिङादिना तदुपस्थितिः, व्युत्पत्त्यनन्तरं तत्प्रवृत्तावन्योन्याश्रयात् । न च कार्य्यत्वेनोपलक्षिते तत्र शक्तिग्रहः, उपलक्षणं हि स्मरणमनुमानं वा अगृहीते सम्बन्धाग्रहादशक्यमिति । मैवं । कार्य्ये धर्म्मिणि कार्य्यत्वेन शक्तिग्रहात् कार्य्यत्वविशिष्टस्योप-

---

त्वस्यैवापूर्वत्वरूपत्वादिति भावः । ननु सन्नपि योगार्थोऽत्र त्यज्यते मण्डपपदवदित्यस्वरसादाह, 'अवाच्यत्वेति, प्रकारान्तरेणापूर्वस्योपस्थितौ तद्वाच्यत्वं विनापि तद्द्वारा जनकत्वनिश्चयसम्भवादिति भावः । 'तत्प्रवृत्तौ' लिङादिनाऽपूर्वोपस्थितौ, अपूर्वत्वेनैवोपस्थितिः प्राक् नास्तीत्याशयेनाशङ्कते, 'न चेति, 'उपलक्षिते' उपस्थिते, 'स्मरणं' लिङादिना स्मरणं, 'अगृहीते सम्बन्धाग्रहादशक्यमितीति, स्मरणे सम्बन्धग्रहस्य अनुमितौ साध्यव्याप्यहेतुसम्बन्धग्रहस्यापेक्षितत्वादिति भावः[१] । गूढाभिसन्धिः समाधत्ते, 'मैवमिति, 'कार्य्ये धर्म्मिणीति कार्य्यत्वाश्रये धर्म्मिणीत्यर्थः, 'कार्य्यत्वविशिष्टस्येति घटा-

(१) 'अगृहीत इत्यादिः इति भाव इत्यन्तः पाठः कपुस्तके नास्ति ।

नान्तराविषयत्वमेवापूर्व्वत्वं तद्वाहन्यत इत्यर्थः, 'अवाच्यत्वेति प्रकारान्तरेण तल्लाभे तदेव द्वारमादाय यागे साधनत्वान्वयसम्भवे क्रियाकार्य्यत्वमेव लिङ्वाच्यं स्यात् न त्वपूर्व्वमित्यर्थः, अनन्यलभ्यस्यैव शब्दार्थत्वादित्यर्थ इत्यन्ये, 'कार्य्ये इति । नन्वेवमपि स्वर्गसाधनताबोधे सति स्वर्गकामनियोज्यान्वययोग्यताज्ञानं स्यात् स च घटादौ, अपूर्व्वे वा, नाद्यः बाधात्, नान्त्यः

स्थितमेव ततोऽन्विताभिधानदशायां यागविषयकं कार्य्यमित्यनुभवः स्वर्गकामान्वयायोग्यतया घटादिकं तिरस्कृत्य क्रियाभिन्ने योग्यतावशाद्यागविषयकापूर्व्वे पर्य्यवस्यति न त्वपूर्व्वत्वेन शक्तिग्रहः। न चापूर्व्वं कार्य्यमित्यनुभवः, भवति च सामान्यतः सम्बन्धबुद्धिः सहकारिवशात् विशेषबुद्ध्युपायः यथा तवैव कर्तृमात्रे सम्बन्धग्रहात् कर्तृविशेषसिद्धिः। ननु कार्य्यत्वेनापि किं घटादौ शक्तिग्रहः उतापूर्व्वे उभयत्र वा, नाद्यः अन्यप्रतिपत्तावन्यशक्तिग्रहानुपयोगात्। नान्त्यौ प्राग-

दिकमिति शेषः, 'यागविषयकं कार्य्यमिति, स्वर्गसाधनमिति शेषः, 'स्वर्गकामेति स्वर्गसाधनत्वान्वयायोग्यतयेत्यर्थः, 'विशेषबुद्ध्युपाय इति सामान्यरूपेण विशेषबुद्ध्युपाय इत्यर्थः, 'सम्बन्धग्रहात्' क्तः[१] सम्बन्धग्रहात्, 'कर्तृविशेषेति पक्तेत्यादौ पाककर्त्रादिविशेषसिद्धिरित्यर्थः[२]। अभिसन्धिमुद्घाटयितुं शङ्कते, 'नन्विति, प्रागनुपस्थिते-

(१) क्तप्रत्ययस्येत्यर्थः।

(२) पाककर्तृत्वादिना विशेषसिद्धिरित्यर्थ इति क०।

अनुपस्थितेः, अन्यथा क्रियायां तदन्वयेन किमपराद्धं इति चेत्, न, नित्यस्थल इव यागविषयकं कार्य्यमित्यनुभवे जाते तदादाय स्वर्गकामान्वययोग्यताबुद्धौ महावाक्यार्थज्ञानाभ्युपगमादित्याहुः। 'यागविषयकमिति, विषयत्वं न प्रकारः, किन्तु याग-कार्य्ययोर्विषय-विषयिभावः संसर्ग इति

नुपस्थितेरिति चेत्, न, येन हि रूपेण शब्देनानुभवो जन्यते तेन रूपेण शक्तिग्रहः पदार्थस्मरणञ्च शाब्दानुभवहेतुः, न हि प्रमेयत्वेन शक्तिग्रहः पदार्थस्मरणञ्च घटत्वेन शाब्दानुभवहेतुः। एवञ्च घटादावेव कार्य्ये शक्ता लिङिति शक्तिग्रहस्ततः कार्य्यमिति स्मरणं ततो योग्यतादिवशात् प्रचुरद्रव्य-गुण-कर्म्माणि कार्य्याणि विहाय यागविषयकं कार्य्यमित्यनुभवो भवन्नपूर्व्वमालम्बते योग्यत्वाच्च तस्य स्थायित्वलाभः। अतएव

---

रिति अपूर्वस्य प्रागनुपस्थितेरित्यर्थः, 'येन हीति शक्तिग्रह-पदार्थस्मरण-शाब्दानुभवानां समानप्रकारत्वेनैव कार्य्य-कारणभावो न तु समानविषयत्वेनापि गौरवादित्यर्थः। ननु समानविषयत्वेनैव कार्य्य-कारणभावो न तु समानप्रकारत्वेनेत्यत आह, 'न हीति, 'पदार्थस्मरणञ्च' प्रमेयत्वेन पदार्थस्मरणञ्च, तथाच समानप्रकारकत्वस्यावश्यकत्वात्तेनैव रूपेण हेतुत्वमिति भावः। 'स्मरणं' घटादेः स्मरणं, ननु कार्य्यमात्रशक्त्या कथं स्वर्गपर्य्यन्तस्थायिकार्य्यलाभ इत्यत आह, 'योग्यत्वाच्चेति यागविषयककार्य्ये स्वर्गसाधनत्वान्वये स्वर्गपर्य्यन्तस्थायित्वस्य योग्यतारूपत्वाच्चेत्यर्थः। 'अतएवेति यत एव प्रथमं न

---

बोध्यं। ननु स्थायित्वानुपस्थितौ नियोज्यान्वयानुपपत्तिस्तदवस्थैवेत्यत आह, 'योग्यत्वाच्चेति। समानप्रकारकत्वमात्रञ्च न तन्त्रं किन्तु समानविषयत्वमपि

वाक्यार्थानुभवमात्रविषयत्वात्तदपूर्व्वं। न च स्मृतानामाकाङ्क्षादिवशादन्वयबोधः पदेन क्रियते, न चापूर्वं स्मृतिगोचर इति वाच्यं। शक्तिग्रह-पदार्थस्मृति-शाब्दानुभवानां समानप्रकारकतामात्रेण हेतु-हेतुमद्भावावधारणात् लाघवादावश्यकत्वाच्च, न तु क्वचित् सहचारमात्रेण अन्वयप्रतियोगिन एवोपस्थितिस्तथा, गौरवात् गोपदादपूर्वंगवाननुभवप्रसङ्गाच्च। विशिष्ट-वैशिष्ट्यबोधे सर्व्वत्र तथैव, अन्यथा पर्वतीयवह्निर्व्याप-

तज्ज्ञानमित्यर्थः, 'अपूर्वं' अपूर्वव्यवहारः, 'पदेन क्रियत इति, नियम इति शेषः। 'शक्तिग्रहेति, तथाच तादृशनियमोऽसिद्ध इति भावः। नन्वाकाशादिपदस्थले शाब्दपदार्थोपस्थितेर्हेतुत्वस्य दृष्टत्वाद्-त्रापि तथेत्यत आह, 'न त्विति, 'क्वचित्' आकाशादिपदे, 'तथा' शाब्दधीहेतुः, 'अपूर्वेति शक्तिग्रहाविषयीभूतेत्यर्थः। ननु विशिष्ट-वैशिष्ट्यबोधे विशेषणतावच्छेदकप्रकारकविशेषणज्ञानस्य हेतुतया यागविषयककार्य्यत्वान् स्वर्गकाम इति विशिष्टवैशिष्ट्यबोधानुरोधाद्-पूर्वज्ञानमावश्यकमित्यत आह, 'विशिष्टेति विशिष्टवैशिष्ट्यबोधेऽपि विशेषणतावच्छेदकप्रकारकज्ञानमेव हेतुर्न तु विशेषणविषयत्वस्यापि तत्र प्रवेश इत्यर्थः, 'अन्यथा' विशेषणविषयत्वस्यापि तत्र प्रवेशे,

अन्यत्र तथा दर्शनादित्याशङ्क्य निराकरोति, 'न चेति, 'शक्तिग्रहेति, यद्यपि शक्तिग्रहस्य शाब्दानुभवहेतुत्वे मानाभावस्तथापि पदार्थस्मरणं प्रति हेतुत्वं बोध्यं, 'गोपदादिति, सामान्यलक्षणा नास्तीत्यभिमानः, एवमग्रेऽपि।

कतया नावगत इति कथं तदन्वयोऽनुमितौ। ननु सामान्यलक्षणया प्रत्यासत्त्या सर्वा एव व्यक्तयो व्याप्तिग्रहे शक्तिग्रहे च विषयीभवन्ति, कथमन्यथा पर्वतीयधूमव्याप्यग्रहे तस्मादनुमितिरिति चेत्, न, येन रूपेण व्याप्तिग्रहस्तेन रूपेण व्याप्यत्वेन वा पक्षधर्म्मताग्रहोऽनुमितौ कारणमस्तु किं तया। अपि च सा यद्यस्ति ममापि, नास्ति चेत्तवापि। किञ्च तव दर्शने सास्तीति

---

'व्यापकतयेति व्यापकताज्ञाने न भात इत्यर्थः, 'तदन्वयः' तद्विषयत्वं, 'तस्मात्' तदीयपक्षधर्म्मताज्ञानात्, 'तेन रूपेणेति स्वमते, तन्मते व्याप्यतावच्छेदकप्रकारकपक्षधर्म्मताज्ञानस्यैवानुमितिहेतुत्वात्, 'व्याप्यत्वेन वेति महानसीयधूमे गृहीतेन धूमव्यापकवह्निसमानाधिकरणधूमत्वरूपेण वह्निमदन्यावृत्तित्वरूपेण वा व्याप्यत्वेनेत्यर्थः, एतच्च न्यायनये, परनये वह्निव्याप्यो धूमः धूमवान् पर्वत इति ज्ञानादप्यनुमित्युत्पत्तेः वह्निव्याप्यवान् पर्वतइति ज्ञानादप्यनुमित्युत्पत्तेश्चेति ध्येयं। 'सा' सामान्यप्रत्यासत्तिः, 'ममापीति, तथाच कार्य्यत्वरूपसामान्यप्रत्यासत्त्या अपूर्व्वोपस्थितेर्यागविषयककार्य्यवान् स्वर्गकाम इत्यन्वयबोध इति भावः। इदञ्चाभ्युपगमवादेन तैरूपनी-

---

तदेव द्रढयितुं शङ्कते, 'नन्विति, 'व्यापकत्वेनेति परनयेनोक्तं, 'अपि चेति, न ह्यभ्युपगमेनार्थाः क्रियन्ते, अनभ्युपगमेन वा निवर्त्त्यन्ते इति भावः। 'सुतरामिति, अन्योन्यदोषाभावादिति भावः। तदेव विवृणोति, 'कार्य्य-

सुतरामपूर्ववाच्यता कार्य्यत्वेन हि रूपेणापूर्वस्यापि शक्तिग्रहविषयत्वं पदार्थस्मृतिविषयत्वञ्च। न चैवमपूर्वत्वक्षतिः, यागविषयत्वादेर्विशेषस्य कार्य्ये लिङं विनानुपस्थितेः, यथा पर्वतीयत्वभानं वह्नौ नानुमितिं विना। ननु कार्य्ये यदि क्रियासाधारणेन लिङ्शक्तिः क्रिया चायोग्येति योग्यापूर्वलाभः तदा नित्यनिषेधापूर्वयोरलाभः, न हि तत्रायोग्यतया क्रिया त्यक्तुं शक्यते, फलाश्रवणात् कल्पनायाञ्च वीजाभावात्।

---

तभानानभ्युपगमादिति ध्येयं[१]। 'सुतरामिति, विवृणोति, 'कार्य्यत्वेन ह्येति। 'क्रियासाधारणेन' क्रियासाधारणधर्म्मप्रकारेण, 'अयोग्या' साक्षात्फलजननायोग्येत्यर्थः, 'नित्य-निषेधेति सन्ध्यामुपासीतेत्यत्र सन्ध्यावन्दनजन्यापूर्वस्य न कलञ्जं भक्षयेदित्यत्र कलञ्जभक्षनाभावजन्यापूर्वस्य चालाभ इत्यर्थः, तथाच तवापसिद्धान्त-इति भावः। 'अयोग्यतया' साक्षात्फलजननायोग्यतया, 'फलाश्रवणादिति नित्य-निषेधस्थले फलाश्रवणादित्यर्थः, 'कल्पनायाञ्चेति फलकल्पनायाञ्चेत्यर्थः, 'वीजाभावात्' प्रमाणाभावात्, 'कार्य्येण समं'

---

(१) 'ममापीतीत्यादिः इति ध्येयमित्यन्तः पाठः कपुस्तके नास्ति।

---

त्वेनेति, 'यागेति, तथाच विशिष्य पूर्व्वाप्रतीतत्वमपूर्व्वत्वमिति भावः। 'नन्विति, तदुक्तं काम्ये लृप्तशक्तिर्लिङादिर्नित्ये निषेधे वाऽपूर्व्वमाहेतीति भावः। 'न ह्येति, न च तात्पर्य्यान्नियमः, तथा तात्पर्य्ये मानाभावादन्यथा

न च एकत्र निर्णीतः शास्त्रार्थोऽन्यत्र तथैवेति न्यायात् तत्राप्यपूर्वमेव लिङर्थ इति युक्तं, न ह्यपूर्वत्वेन शक्तिग्रहः किन्तु कर्य्यत्वविशिष्टे धर्म्मिणि क्रिया च तथा भवत्येव। न च कार्य्येण समं क्रियाया अन्वयानुपपत्त्या अपूर्वे पर्य्यवसानं, अभेदस्याप्यन्वयादिति। मैवं। न हि लोके पचेतेत्यादौ कार्य्ये धर्म्मिणि शक्तिः कल्पिता, किन्त्वनन्यलभ्ये कृतिरूपे कार्य्यत्वमात्रे धर्म्मिणः पाकादेर्धातोरेवोपस्थितिसम्भवात् क्रियाकार्य्यत्वस्यान्विताभिधानलभ्यत्वात्तथाच धर्म्मिणि वेदे शक्तिः कल्पनीया

---

क्रियारूपेण कार्य्येण समं, 'अभेदस्यापीति। यद्यपि निषेधस्थले कलञ्जभक्षणाभावस्य कार्य्यत्वाभावेन कार्य्यत्वरूपेण लिङा न तद्बोधसम्भवस्तथापि अभावस्योत्पाद-विनाशशालित्वनयेऽभावस्यापि कार्य्यत्वसम्भव इत्यभिप्रायेणेदं धर्म्मत्वरूपकार्य्यत्वाभिप्रायेण वा।

केचित्तु कार्य्यत्वं कृतिसाध्यत्वं तच्च योग-क्षेमसाधारणमित्यभावस्यापि कार्य्यत्वसम्भव इत्याहुः।

'कृतिरूप इति, साध्यत्वं संसर्ग इति भावः। 'अन्विताभिधानेति

---

विवादाभावादित्याहुः। 'कृतिरूप इति, जन्य-जनकभावस्च संसर्ग इति मतेनेदं। वस्तुतः कार्य्यत्व एव तात्पर्य्यं चिकीर्षानुरोधेन तत्प्रकारकज्ञानस्यैव प्रवर्त्तकत्वादिति। 'वेद इति, विधिलिङ इत्यर्थस्तेनावगुरेदित्यादौ न दोषः। न चामुकपापक्षयकामो गङ्गायां स्नायादित्यादौ विघ्नध्वंसकामस्य स्तवादिविधौ वा नापूर्व्वं द्वारं गौरवादिति न क्रियातिरिक्तान्वय इति वाच्यं।

सा च क्रियानिरासेनैव। न हि क्रियायाः कार्य्यत्वान्वययोग्यत्वे धर्म्मिणि शक्तिः कल्पयितुं शक्यते, तस्मादयोग्यतया क्रियानिरासानन्तरं तदतिरिक्त एव शक्तिः कल्पनीया[१]। न च क्रियातिरिक्तकार्य्यात् कार्य्यमात्रं लघु ततः क्रियापि शक्यैवेति वाच्यं। यतो न ब्रूमः क्रियातिरिक्तकार्य्यत्वेन शक्तिः किन्त्वयोग्यतया क्रियायां निरस्तायां धर्म्मिणि शक्तिकल्पनसमये यत् क्रियातिरिक्तं तत्र शक्तिः न तु शक्तिग्रहे क्रियाप्रवेशः, न हि यत्प्रयुक्तानुपपत्त्या यत्कल्पनं तदेव तस्य

शाब्दबोधेत्यर्थः, 'धर्म्मिणि' कार्य्ये, 'कार्य्यत्वान्वयेति स्वर्गकामकृतिसाध्यत्वान्वयेत्यर्थः, 'अयोग्यतया' स्वर्गकामकृतिसाध्यत्वान्वयायोग्यतया, एवमग्रेऽपि। 'तत्र शक्तिरिति तत्र शक्तिग्रह इत्यर्थः, 'यत्प्रयुक्तेति यन्निष्ठस्वर्गकामकृतिसाध्यत्वान्वयानुपपत्त्येत्यर्थः, 'शक्तिकल्पना-

(१) तदतिरिक्ते शक्तिकल्पनमिति ख०।

तद्भिन्नलिङस्तथात्वादित्याङ्गः। ननु शक्तिग्रहेऽपि क्रियाप्रवेशाभावाद्यदि यत्रापि क्रिया नान्वेति तदाऽपूर्व्वमपि तथा स्यात्तस्यापि प्रागनुपस्थितत्वेन तदप्रवेशात्। यदि च समानप्रकारकत्वेन हेतुत्वात् तदप्रविष्टस्याप्यन्वये न विरोधस्तदा क्रियायामपि तुल्यमित्यत आह, 'न हि यदिति, तथाच क्रियाऽयुक्तानुपपत्त्या तत्कल्पनादग्रे योग्यापि क्रिया नान्वेति उक्तनियमाभ्युपगमादत एव छिद्रेतरत्ववत् क्रियातिरिक्तकार्य्यत्वमेवान्वयबोधप्रकार इति वदन्ति, अपूर्व्वे तु नैवमनुपपत्तिरिति भावः इति प्रकाशः।

विषयः, एवञ्च कार्य्यत्वेनापि तदतिरिक्तकार्य्ये एव शक्तिकल्पनान्नित्य-निषेधयोरपि तदेवोपासनाद्यन्वय-योग्यं लिङाभिधीयते न तु कार्य्यत्वमात्रं धर्म्मिणि बाधकाभावात् लक्षणाप्रसङ्गाच्च* । घटादिस्तु लिङ्-

---

दिति वैदिकलिङ्मात्रस्य शक्तिकल्पनादित्यर्थः, 'उपासनादीति सन्ध्योपासनादीत्यर्थः, 'आदिपदान्निषेधविधिस्थले कलञ्जभक्षणाद्यभावपरिग्रहः, 'लक्षणेति, वैदिकलिङः कार्य्ये धर्म्मिण्येव शक्तिकल्पनादिति भावः । एतच्च लोकस्थले लौकिकलिङ्त्वं कार्य्यत्वशक्ततावच्छेदकमित्यभिप्रायेण, अन्यथा तत्र लिङ्त्वस्य शक्ततावच्छेदकत्वे लक्षणाया असङ्गतेरिति ध्येयं । एतच्चापाततः तन्नयेऽपूर्वस्य शक्तिग्रहाविषयत्वेऽपि शाब्दबोधविषयत्ववत्क्रियाया अपि कार्य्यत्वरूपेण वैदिकलिङः शक्तिग्रहाविषयत्वेऽपि शाब्दबोधविषयत्वसम्भवात् । न हि न्यायनय इव तन्मते शाब्दपदार्थव्यक्तौ शक्तिधीरपेक्षिता, किन्तु पदार्थतावच्छेदकरूपेण यत्रकुत्रचिद्धर्म्मिणि शक्तिग्रहादेव शाब्दबोधे योग्यव्यक्तेर्भानं । किञ्चैवमपि निषेधस्थलेऽपूर्व्वालाभः तत्र कलञ्ज-

---

* नन्वेवमपि निषेधापूर्व्वभावो न स्यात् क्रियातिरिक्तनिषेधे कार्य्यता-बोधेनोपपत्तावपूर्व्वकार्य्यतावगमकल्पने मानाभावात् । न च प्रागभावरूपे निषेधे कार्य्यत्वस्य बाधान्नैवमिति वाच्यं । क्षेमसाधारणस्यैव तस्य प्रवर्त्तकत्वेन प्रागुक्तत्वात् तस्य चाबाधादिति चिन्त्यं । 'लक्षणेति विशिष्टशक्तपदस्य एकदेशे लाक्षणिकत्वादित्यर्थः । ननु यदि घटादिकार्य्यत्वेन लिङ्-शक्तिग्रहस्तदा नापूर्व्वलाभः घटाद्यतिरिक्तकार्य्यत्वेन चेत् तदा शक्तिग्रह एव न स्यात् तस्यानुपस्थितेरित्यत आह, 'घटादिष्विति कार्य्यत्वमात्रं पुरस्कृत्य

शक्तिग्रहे न तिरस्क्रियते न पुरस्क्रियते उभयथापि गौरवात्। अन्विताभिधानदशायान्वयोग्यतया तस्याप्रवेशः विधिप्रत्ययस्य च तत्राप्रयोगः केवलस्य तस्यासाधुत्वात्। धातुसमभिव्याहारस्थले च तदर्थेनान्वयबोधजनननियमेन घटाद्यप्रतिपादकत्वात्। अतएवाप्र-

---

भक्षणाभावस्यापि क्रियातिरिक्ततया कार्य्यत्वरूपेण लिङा तस्यैव बोधसम्भवात्। वस्तुतस्तु प्रकृति-प्रत्ययार्थयोरभेदान्वयस्याव्युत्पन्नतया लिङा क्रियादेर्न बोधसम्भव इत्येव तत्त्वं। ननु घटादिलक्षणकार्य्यत्वस्य शक्यतावच्छेदकत्वे यजेतेत्यादौ कथमपूर्व्वलाभः घटादिभिन्नकार्य्यत्वस्य शक्यतावच्छेदकत्वेऽपूर्व्वस्यानुपस्थितत्वात् कुत्र कार्य्यत्वशक्तिग्रह इत्यत आह, 'घटादिष्विति, 'उभयथापीति घटादिभिन्नकार्य्यत्वस्य घटादिलक्षणकार्यत्वस्य वा शक्यतावच्छेदकत्वे इत्यर्थः, किन्तु कार्यत्वमेव शक्यतावच्छेदकमिति भावः। ननु सामान्यतः कार्यत्वस्य शक्यतावच्छेदकत्वे यजेतेत्यादौ घटादेरपि शाब्दबोधे भानापत्तिरित्यत आह, 'अन्वितेति शाब्दबोधदशायामित्यर्थः, 'अयोग्यतया' धात्वर्थान्वयायोग्यतया। नन्वेवं कार्यत्वेन घटादेरपि शक्यत्वात्तत्रापि लिङः कदाचित् प्रयोगः स्यादित्यत आह, 'विधीति, 'केवलस्य' धात्वसमभिव्याहृतस्य, 'तस्य' विधिप्रत्ययस्य। 'अप्रयोगादेवेति

---

तत्र शक्तिग्रह इत्यभ्युपगमादन्यथोभयथा गौरवादित्यर्थः। 'यत्प्रकारिका इति एकविशेषबाधं विनेत्यर्थः, तेन छिद्रेतरत्वादौ न प्रसङ्गः। न च

योगादेवाप्रयोगोऽपूर्वत्वं वा प्रयोगोपाधिरिति वदन्ति। अथाप्रतिपाद्यघटादिवृत्तितया न कार्य्यत्वं प्रवृत्तिनिमित्तं प्रतिपाद्यमात्रवृत्तेरेव तथात्वात् अन्यथा प्रमेयत्वमेव तथास्त्विति चेत्, न, यत्प्रकारिका हि प्रतिपत्तिः पदजन्या तदेव तच्च प्रवृत्तिनिमित्तं फलकल्प्यत्वात्

असाधुत्वादेवेत्यर्थः, 'अप्रयोगः' विधिप्रत्ययाद्घटादेरप्रयोगः, 'प्रयोगोपाधिरिति शक्तिप्रमाजन्यशाब्दबोधे[१] अभावसम्बन्धेन प्रतिबन्धकमित्यर्थः, तादृशबोधेऽपूर्वत्वं कारणमिति पर्य्यवसितोऽर्थः, 'प्रतिपत्तिः' शक्यप्रतिपत्तिः, 'तदेव तच्चेति तद्वृत्ति तदेवेति योजना, शक्यवृत्ति तदेवेत्यर्थः, तथाच तत्पदशक्यवृत्तित्वे सति तत्पदजन्योपस्थितिप्रकारत्वं तत्पदप्रवृत्तिनिमित्तत्वमिति लक्षणं फलितं, आकृतेरपि गोपदादिजन्यप्रतीतौ गवाद्यंशे स्वसमवायिसमवेतत्वसम्बन्धेन प्रकारत्वात्तत्रातिव्याप्तिवारणाय सत्यन्तं, आकृतिस्तु अवयवसंयोगविशेषरूपा न गोपदशक्यवृत्तिः स्वसमवायिसमवेतत्वलक्षणपरम्परासम्बन्धस्य वृत्त्यनियमकत्वात् वृत्त्यनियामकसम्बन्धेन तु न कोऽपि धर्म्मः कुत्रापि शक्यतावच्छेदकः, पशुपदादेरपि लोमवल्लाङ्गूलादिसमवेतत्वादिकमेव शक्यतावच्छेदकं, न तु समवेतत्वसम्बन्धेन लोमवल्लाङ्गूलादिकं, तदादिपदात् कदाचित् परम्परासम्बन्धेन कपालत्वादिप्रकारेण घटादिबोधस्तु लक्षणयैव, आकृतेरपि द्रव्यादिपदश-

(१) शक्तिं प्रमाय तज्जन्यशाब्दबोध इति ग० ।

तीरत्वादौ प्रसङ्गः, तत्प्रकारिका शक्यप्रतिपत्तिरित्यर्थात्, आकृतिर्न

शक्तेः न तु प्रतिपाद्यमात्रवृत्ति साक्षादौ व्यभिचारात्।

---

क्यवृत्तित्वात् तत्पदेति। न चाकृतेरपि कालिकादिसम्बन्धेन शक्यगवादिवृत्तित्वादतिव्याप्तिस्तदवस्थेति वाच्यं। तत्पदशक्तिविशेष्यतावच्छेदकतानियामकसम्बन्धेन तत्पदशक्तिमुख्यविशेष्यवृत्तित्वस्य विवक्षितत्वात्, मुख्येत्युपादानात् मूर्त्तादिपदे परिमाणत्वादेः घटादिपदे आकृतिवृत्त्यवान्तरजातेश्च शक्यतावच्छेदकत्वव्युदासः ज्ञानविषयशक्तवस्त्वादिपदे ज्ञानस्यापि शक्तिमुख्यविशेष्यतया ज्ञानत्वस्य शक्तिमुख्यविशेष्यवृत्तित्वेऽपि न यथोक्तसम्बन्धेन तद्वृत्तित्वं। न चाकाशत्वादेरपि आकाशादिपदशक्यतावच्छेदकत्वापत्तिरिति वाच्यं। नव्यमते घटत्वादेर्घटादिपदशक्यतावच्छेदकत्ववदाकाशत्वादेरप्याकाशादिपदशक्यतावच्छेदकत्वे इष्टापत्तेः, सम्प्रदायमते चाकाशादिपदशक्तेर्विशेष्यांशे निर्विकल्पकरूपतया विशेष्यतावच्छेदकतानियामकसम्बन्धाप्रसिद्धैवातिव्याप्तिविरहात्, अवयवावयविवाचिदध्यादिपदे दध्यादेः शक्यतावच्छेदकत्ववारणाय विशेष्यदलं, उपस्थितिश्च लक्षणा-शक्तिभ्रमाजन्यत्वेन विशेषणीया। तेन लक्ष्यतावच्छेदके द्रव्यत्वादौ नातिप्रसङ्गः। न च समूहालम्बनमादायातिप्रसङ्ग इति वाच्यं। यत्प्रकारताघटितधर्म्मावच्छेदेन तत्पदजन्यत्वं तत्त्वस्य विवक्षितत्वादिति निगर्व्वः। तत्पदशक्तिविशेष्यतावच्छेदकत्वं तत्पदप्रवृत्तिनिमित्तत्वं, संस्थानञ्च गुरुनये नव्यनैयायिकनये च न शक्यमिति न तत्रातिव्याप्तिरिति तु ध्यायः। 'साक्षादौ' साक्षात्समवेतत्वादौ, 'तथा'

---

प्रकार इति मतेनेदं। 'साक्षादाविति, यद्यपि प्रतिपाद्यमात्रवृत्त्येव प्रवृत्ति-

**न च प्रमेयत्वं तथा, तद्बोधस्याप्रवर्त्तकत्वात्। अतएव लोके लिङ् लाक्षणिकी क्रियाभिन्ने धर्म्मिणि वेदे**

---

यथोक्तलक्षणाश्रयः, 'तद्बोधस्य' तत्प्रकारकज्ञानस्य, 'अप्रवर्त्तकत्वात्' शक्त्या अजनकत्वात्, घटादिपदस्येति शेषः। ननु लौकिकलिङः कार्य्यत्वे शक्तिः वैदिकलिङः कार्य्ये धर्म्मिणि शक्तिरित्यभ्युपगमे लौकिकलिङ्त्व-वैदिकलिङ्त्वयोः शक्ततावच्छेदकत्वे शक्ततावच्छेदक-गौरवमित्यत आह, 'अतएवेति शक्ततावच्छेदकगौरवादेवेत्यर्थः, 'लाक्षणिकी' कार्य्यत्वलाक्षणिकी, 'वेदे' वेदस्थले, 'शक्तिकल्पनादिति लिङ्सामान्यस्यैव शक्तिकल्पनादित्यर्थः। न च लिङ्मात्रस्य कार्य्यत्वे शक्तिः[१] वेदे च कार्य्ये धर्म्मिणि लक्षणेत्येव किं न स्यात् कार्य्यत्व-

---

(१) न च लौकिकलिङः कार्य्यत्वे शक्तिरिति ग०।

---

निमित्तमित्याक्षेपो न यावत् प्रतिपाद्यमात्रवृत्ति तावत्तथा, तथाच व्यापकव्यभिचारोऽयमयुक्तः, तथापि तत्त्वं न प्रवृत्तिनिमित्तत्वप्रयोजकं साक्षादौ तत्त्वेऽपि तथात्वाभावादिति तात्पर्य्यं। 'अतएवेति, अतिदेश्यमाह, 'क्रियाभिन्न इति आदौ लोके लिङः कार्य्यत्वे शक्तिकल्पनेऽपि वेदे कार्य्ये शक्तिकल्पनसमये लाघवात् लिङ्त्वावच्छेदेनैव क्रियाभिन्ने कार्य्ये शक्तिः कल्प्यते तथाच क्रियायाः कार्य्यभेदान्वये कार्य्यत्वमात्रोपस्थितये लौकिकी लिङ् लाक्षणिकीत्यर्थः।

केचित्तु उभयशक्तिकल्पने गौरवात् लोके लक्षणा। न च लोके कार्य्यत्वशक्ताया लिङः वेद एव कार्य्ये लक्षणास्तु विनिगमकाभावादिति वाच्यं। अपूर्व्वाननुभवापत्तेरित्यग्रे स्फुटमित्याहुरिति प्रकाशः।

शक्तिकल्पनात्। न च* लौकिकानामपूर्वे तात्पर्य्यं सम्भवति, पूर्वं प्रमाणान्तरेणाप्रतीतेः, क्रियासाधारणशक्तावपि लोके लक्षणैव पचेतेत्यत्र हि पाककार्य्य-

---

त्वापेक्षया कार्य्यत्वत्वविशिष्टस्य कार्य्यत्वस्य शक्यतावच्छेदकस्य गुरुत्वात् विनिगमकाभावाच्चेति वाच्यं। कृतिसाध्यत्वत्वरूपकार्य्यत्वत्वापेक्षया प्रागभावप्रतियोगित्वादिरूपस्य धर्मत्वरूपस्य वा कार्य्यत्वस्य लघुत्वादित्यभिप्रायः। वस्तुतस्तु लाघवाल्लिङ्माचस्य कृतावेव शक्तिः साध्यत्वं संसर्गः वेदे च प्रागभाववत्त्वादिरूपकार्य्यत्वाश्रये धर्म्मिणि लक्षणैत्येव ज्यायः। ननु लोकस्थले कार्य्यत्वरूपेणापूर्व्वमेवार्थोऽस्तु किं लक्षणयेत्यत आह, 'न चेति, 'पूर्व्वमिति, वेदे तु अनादिलिङ्प्रवाहादेवाध्यापकानामपूर्व्वावगमात्तत्र तात्पर्य्यसम्भव इति भावः। वस्तुतोऽपूर्व्वं लोके बाधितं मानाभावादित्येव द्रष्टव्यं। ननु लिङः शक्तिग्रहे क्रियाभिन्नधर्म्मिणो विषयत्वेऽपि कार्य्यत्वस्य शक्यतावच्छेदकतया क्रियायां शक्तिरस्त्वेव तथाच लोकेऽपि पाकः कार्य्याभिन्न इत्यभेदान्वयबोधस्य शक्त्यैवोपपत्तौ किं लक्षणयेत्यत आह, 'क्रियासाधारणेति, 'लक्षणैव' कार्य्यत्वे लक्षणैव, 'पाककार्य्यतावगम्यत इति आधाराधेयभावसम्बन्धेन पाकविशेष्यककृतिसाध्यत्वप्रकारकान्वयबोधो जायत इत्यर्थः, अन्यथा प्रवृत्त्यनुपपत्तेस्तथाच प्रवर्त्तकज्ञानानुरोधाल्लक्षणेति भावः। इदञ्चाभ्युपगमवादेनोक्तं वस्तुतो

* ननु लोकेऽपि न लक्षणा किन्त्वपूर्व्वबोध एवास्तु इत्यत आह, 'न चेति, 'क्रियेति, एतच्चाभ्युपगमवादेन अन्यथा नित्यस्थलेऽगतेरिति बोध्यं।

तावगम्यते, तच्च कार्य्यत्वे लिङस्तात्पर्य्यं लाघवात् । न धर्म्मिणि क्रियाया धातुलभ्यत्वात् । तदाहुः, तात्पर्य्याद्धि वृत्तिर्न तु वृत्तेस्तात्पर्य्यमिति, तृतीयायाः करणत्वैकत्ववत् कार्य्यं कार्य्यत्वञ्च न स्वतन्त्रं शक्यं

---

धात्वर्थ-प्रत्ययार्थयोरभेदान्वयबोधस्याव्युत्पन्नतया क्रियासाधारणशक्तावपि शक्त्या नोपपत्तिरन्यथा नित्य-निषेधस्थलेऽपि तथान्वयबोध-सम्भवादपूर्व्वालाभापत्तेरिति ध्येयं । ननु लोके पचेतेत्यादौ कार्य्यत्वे लिङो लक्षणायां लिङ्पदात् कार्य्यत्वरूपेण पाकोपस्थितिद्वारा पाक-विशेष्यककार्य्यत्वप्रकारकान्वयबोधो जायतामिति वक्तुस्तात्पर्य्यमनुपपन्नं लिङो लक्षणया कार्य्यत्वमात्रोपस्थापकत्वादित्यत आह, 'तच्चेति, 'कार्य्यत्वे' कार्य्यत्वोपस्थितौ । 'तात्पर्य्याद्धीति लोके लाघवात् केवल-कार्य्यत्वोपस्थितौ लिङस्तात्पर्य्यात् केवलकार्य्यत्व एव वृत्तिरित्यर्थः, 'न तु वृत्तेरिति, अन्यत्रेति शेषः । इदमापाततः लौकिकतात्पर्य्यस्य पुमिच्छानियन्त्रितत्वात्तत्र लाघवस्याकिञ्चित्करत्वात् । वस्तुतस्तु तात्पर्य्यसत्त्वेऽप्याकाङ्क्षानुरोधेन लक्षणाया अभ्युपगम इत्येव तत्त्वं । ननु तथापि यन्मते वेदस्थले कृतिसाध्यत्वरूपकार्य्यत्वाश्रये लिङः शक्तिस्तन्मते कृतिसाध्यत्वरूपकार्य्यत्वस्यापि विशेषणविधया शक्यतया लोके शक्त्यैव तादृशकार्य्यत्वोपस्थितिसम्भवात् किं लक्षणयेत्यत आह, 'तृतीयाया इति । 'न स्वतन्त्रं शक्यमिति, धर्म्यंशे विधेर्निर्विकल्पकशक्त्याप-

तत्त्वापूर्व्वानङ्गीकर्त्तृमते इदमित्यन्ये । 'क्रियाया इति, अनन्यलभ्यतया न तत्र तात्पर्य्यं तदभावाच्च सत्यपि वृत्तिस्तत्राप्रयोजिकेति भावः । न चैवं नीलो

किन्तु विशिष्टं विशिष्टाच्च विशेषणमन्यदेवेति कार्य्यत्वे लक्षणा। न च कार्य्यत्वविशिष्टधर्म्म्युपस्थितावपि धर्म्म्यंशमपहाय क्रियायां कार्य्यत्वान्वयोऽस्तु किं लक्षणयेति वाच्यं। न ह्यीतरधर्म्मिगतत्वेनोपस्थितस्य धर्म्म्यन्तराकाङ्क्षास्ति, अतः स्वतन्त्रकार्य्यत्वोपस्थितये लक्षणा यथा पुरोडाशकपालेन तुषानुपवपतीत्यत्र पुरोडाशार्थितया तदन्वितत्वेनोपस्थितस्य कपालस्य नोपवा-

---

त्तेरिति भावः। 'कार्य्यत्वे लक्षणेति कृतिसाध्यत्वरूपकार्य्यत्वविशिष्टशक्तिवादिनामपि तादृशकार्य्यत्वे लक्षणैवेत्यर्थः, 'गतत्वेन' विशेषणत्वेन, 'स्वतन्त्रेति इतराविशेषणतयेत्यर्थः, 'तुषानुपवपतीत्यत्रेति, पुरोडाशाय कपालं पुरोडाशकपालमिति चतुर्थीसमासे सतीति शेषः, 'पुरोडाशार्थितयेति पुरोडाशप्रयोजनकत्वरूपेणेत्यर्थः, 'तदन्वितत्वेनेति पुरोडाशप्रयोजनकरूपपुरोडाशपदार्थान्वितत्वेन शाब्दानुभवविषयस्य क-

---

घट इत्यादौ नीलपदं नीलमात्रपरं स्यात् न तु धर्म्मिपरं अन्यलभ्यत्वादिति वाच्यं। तुल्यविभक्तिकप्रातिपदिकार्थयोरभेदान्वयस्यैव व्युत्पत्तिसिद्धत्वादित्याहुः; आकाङ्क्षानुपपत्तेस्तथात्वमित्यन्ये। ननु विशेषणस्य कार्य्यत्वस्य विशिष्टप्रविष्टतया न शक्यसम्बन्धस्तस्य भेदाधिष्ठानत्वादित्यत आह, 'विशिष्टाच्चेति। न च 'किन्तु कार्य्यत्वमात्र इत्यग्रेतनेन विरोधः, तस्याभ्युपगमरीत्या क्रियानिरासपरत्वादित्येके। मतान्तरेण तदित्यन्ये। 'यथेति, ननु घटार्थेन दण्डेन गामभ्याजेत्यादावपि लक्षणा स्यात्। यदि च वाक्यैकवाक्यान्वयेन निराकाङ्क्षत्वं तदा प्रकृतेऽपि तुल्यमिति चेदत्राहुः, वेदे न्यायकल्प्यं तात्पर्य्यमिति लाघवादुभयप्रयोजनान्वये तात्पर्य्याभावादत्र लक्षणा लोके च

पाकाङ्क्षेति स्वतन्त्रकपालोपस्थितयेऽधिष्ठानलक्षणा ।

पालस्येत्यर्थः, 'नोपवापाकाङ्क्षेति, एतच्च जिज्ञासायोग्यताकाङ्क्षावादिमते, एकप्रयोजनकत्वेनावगतस्य प्रयोजनान्तरे जिज्ञासाया असम्भवात्, न ह्यमुकस्यास्य किं प्रयोजनमिति जिज्ञासा सम्भवतीति भावः। 'स्वतन्त्रकपालोपस्थितय इति पुरोडाशप्रयोजनकानन्वितत्वेन कपालशाब्दबुद्धये इत्यर्थः, 'अधिष्ठानलक्षणेति पुरोडाशपदस्य पुरोडाशाधिष्ठाने मृण्मयपात्रे लक्षणेत्यर्थः, एवञ्च पुरोडाशाधिष्ठानाभिन्नकपालेन तुषानुपवपतीत्यन्वयबोधः, पुरोडाशस्य कपालमिति षष्ठीतत्पुरुषः पुरोडाशञ्च तत्कपालञ्चेति कर्म्मधारयो वा समास इति भावः । 'उपवापः' स्फोटनं, यद्यप्यत्र इतरविशेषणतया उपस्थितिनिबन्धनं न निराकाङ्क्षत्वमपि तु प्रयोजनान्तरवत्त्वोपस्थितिनिबन्धनमेवेति दृष्टान्त-दार्ष्टान्तयोर्महद्वैषम्यमेव तथापि निराकाङ्क्षत्वनिबन्धनलक्षणांशमात्रे दृष्टान्तः । एतच्चापाततः जिज्ञासायोग्यताया-आकाङ्क्षात्वाभावात् घटजनकेन दण्डेन गामभ्याजेत्यत्राप्येवंरूपेण निराकाङ्क्षतयाऽन्वयबोधानुपपत्तेः । किञ्चावान्तरवाक्यार्थबोधपूर्व्वकमहावाक्यार्थबोधेऽप्येवंरूपेण निराकाङ्क्षत्वं तथापि खले कपोतन्यायेन(१) युगपत्तथान्वयबोधे न काप्यनुपपत्तिः। वस्तुतस्तु वेदस्थले एकप्रयो-

(१) वृद्धा युवानः शिशवः कपोताः खले यथामी युगपत् पतन्ति । तथा तथामी युगपत् पदार्थाः परस्परेणान्वयिनो भवन्तीति न्यायेनेत्यर्थः ।

न्यायविषयेऽपि तात्पर्य्यादुभयत्र तदविरोधादुभयान्वयबोधान्न लक्षणेति दिक् । ननु लोके क्रियाकार्य्यत्वं वेदे तु अपूर्व्वकार्य्यत्वं लिङर्थ इति व्युत्पत्ति-

न च व्युत्पत्तिविरोधः, न हि लोके क्रियाकार्य्यत्वे शक्तिरवधारिता, येन विरोधो भवेत्, किन्तु कार्य्यत्वमात्रे क्रियाया धातुलभ्यत्वात्। न च धर्म्म्यन्तरे शक्तावपि तद्भङ्गः, तस्मात् प्रकृत्यर्थान्वितस्वार्थबोधकत्वं

---

जनकत्वविशिष्टस्य प्रयोजनान्तरेण नान्वयः आनुपूर्व्वीभेदेन व्युत्पत्तिभेदात् वेदानुपूर्व्वीस्थले तथैव व्युत्पत्तेः सकलवैदिकैकवाक्यतया तथा निर्णीतत्वादित्यधिष्ठानलक्षणेत्येव तत्त्वं। 'व्युत्पत्तिविरोध इति लोके लिङ्त्वावच्छेदेन क्रियानिष्ठकार्यताबोधकत्वमवधारितं वेदे च कार्य्ये धर्म्मिणि लिङः शक्तौ तद्भङ्ग इत्यर्थः, 'लोक इति, लिङ्त्वावच्छेदेनेति शेषः, 'क्रियाकार्य्यत्वे शक्तिः' क्रियाविशेष्यककार्य्यत्वानुभवजनकता, 'कार्य्यत्वमात्र इति 'शक्तिरवधारितेत्यनुषज्यते, 'शक्तिः' अनुभवजनकता। 'न चेति, वेदस्थले इति शेषः, 'धर्म्यन्तरे' कार्य्ये धर्म्मिणि, 'तद्भङ्ग इति, क्रियानिष्ठकार्य्यत्वस्यैव लिङा बोधनादिति भावः। ननु तथापि लोकस्थले लिङः क्रियानिष्ठकार्य्यताबोधकतया प्रकृत्यर्थान्वितस्वार्थबोधकत्वं लिङ्त्वावच्छेदेन सिद्धं कार्य्ये धर्म्मिणि शक्तौ च तद्भङ्गः कार्य्ये धर्म्मिण्येव लिङर्थकार्य्यत्वान्वयादित्यत आह, 'तस्मादिति लोकस्थले लिङः क्रियान्वितकार्य्यताबोधकत्वादित्यर्थः,

---

विरोध इत्यत आह, 'न चेति। नन्वेवमपि तत्र कार्य्यत्वेन धर्म्मिणीति विरोध एवेत्यत आह, 'न चेति तस्या एव शक्तेः क्रियातिरिक्तधर्म्मिविषयत्वमात्रं कल्प्यते न तु तद्भङ्ग इत्यर्थः। ननु प्रकृत्यर्थान्वितस्वार्थप्रतिपादकत्वं प्रत्ययानां व्युत्पन्नं, न च यागान्वितकार्य्यत्वं लिङा बोध्यत इति व्युत्पत्तिविरोध एवेत्यपसंहरन्नेव निरस्यति 'तस्मादिति। 'क्रियेति क्रियोपलक्षित-

प्रत्ययानां गृहीतं प्रत्ययार्थश्चापूर्वमपीति न विरोधः। अस्तु वा लोके लिङः क्रियाकार्य्यत्वे शक्तिः तथापि तदङ्गं विनैव नानार्थन्यायेन वेदे धर्म्म्यन्तरे शक्तिस्तां विना स्वर्गकामान्वयासम्भवात्।

'प्रत्ययानां गृहीतमिति लिङ्प्रत्ययत्वावच्छेदेन गृहीतमित्यर्थः, न तु प्रकृत्यर्थान्वितयावत्स्वार्थबोधकत्वमिति भावः। 'प्रत्ययार्थश्च' लिङ्प्रत्ययार्थश्च, 'न विरोध इति, अपूर्व्वरूपस्वार्थस्यैव प्रकृत्यर्थान्वितत्वादिति भावः। तुष्यतु दुर्ज्जनन्यायेनाह, 'अस्तु वेति, 'क्रियाकार्य्यत्व इति, 'क्रिया' कृतिः, तस्याः कार्य्यत्वे तत्साध्यत्वे इत्यर्थः, शक्ततावच्छेदकञ्च लिङ्त्वमेव वेदेऽपि अपूर्व्वनिष्ठकृतिसाध्यत्वावगमादिति भावः। 'नानार्थन्यायेनेति हर्य्यादिपदन्यायेनेत्यर्थः, यथाश्रुते अस्यापि नानार्थतया नानार्थतुल्यत्वाभिधानस्यासङ्गतत्वापत्तेः, 'वेदे' वेदस्थले, 'धर्म्म्यन्तरे' कार्य्ये धर्म्मिणि, शक्ततावच्छेदकन्तु अत्रापि लिङ्त्वमेवेति भावः। तथाच यथा हर्य्यादिपदस्थले एकमेव हरिपदत्वादिकं शक्ततावच्छेदकं विष्णुत्व-चन्द्रत्वादिभेदेन शक्यतावच्छेदकञ्च नाना तथा अत्राप्येकमेव लिङ्त्वं शक्ततावच्छेदकं शक्यतावच्छेदकञ्च कार्य्यत्वत्वं कार्य्यत्वञ्च द्वयमिति फलितार्थः। न च लिङ्त्वावच्छेदेन कार्य्ये शक्तौ लोकेऽप्यपूर्व्वत्वाभापत्तिरिति वाच्यं। प्रागेव समाहितत्वात् तत्रापूर्व्वस्य बाधितत्वाच्चेति भावः।

कार्य्यत्व इत्यर्थः। न च पूर्व्वमपि प्रवृत्तिनिमित्तभेदान्नानाशक्तिरिति पूर्व्वाभेद इति वाच्यं। तत्र कार्य्यत्वशक्तेरेवातिरिक्तधर्म्मिविषयत्वमात्रं कल्प्यते न तु शक्त्यन्तरं अत्र तु शक्त्यन्तरमेवेत्याशयात्। यद्यप्येवं नानार्थतैव न तु

अन्ये तु पचेतेत्यादौ धातुनैव पाकः कार्य्योऽभिधीयते लिङ् तत्र तात्पर्य्यग्राहिका न तु शक्ता नियमतस्तादृश्येव तत्प्रयोगात्, सामान्यशब्दस्य विशेषपर-

केचित्तु कार्य्यत्वशक्ततावच्छेदकं सामान्यतो लिङ्त्वमेव कार्य्यशक्ततावच्छेदकन्तु वैदिकलिङ्त्वं, अतएव 'नानार्थन्यायेनेत्यपि यथाश्रुतं सङ्गच्छते नानार्थस्थले शक्ततावच्छेदकैक्यादित्याहुः। तदसत्, शक्ततावच्छेदके वैदिकत्वप्रवेशे प्रयोजनविरहादिति ध्येयं।

'तां विना' कार्य्ये धर्म्मिणि शक्तिं विना, 'स्वर्गकामान्वयेति प्रागुक्तयुक्त्या स्वर्गकामकृतिसाध्यत्वान्वयासम्भवादित्यर्थः।

'न तु शक्तेति न तु कार्य्यत्वे शक्ता लाक्षणिकी वेत्यर्थः, तात्पर्य्यग्राहकतामेवोपपादयति, 'नियमत इति, 'तादृश्येवेति पाकादिविशेष्यककार्य्यत्वप्रकारकबोधस्थल एवेत्यर्थः, 'तत्प्रयोगात्' लिङ्प्रयोगात्, एतन्मते केवलं पचेतेत्युक्तौ पदार्थोपस्थितिमात्रं न त्वन्वयबोधः पदार्थद्वयाभावात् किन्तु ओदनं पचेतेत्यादावेवान्वयबोध इति ध्येयं। ननु पाकसामान्यवाचिनः पचधातोः कार्य्यपाकाभिधायित्वे लक्षणापत्तिरित्यत आह, 'सामान्येति, 'विशेषपरत्वं' विशे-

तन्नायत्तथापि शक्ततावच्छेदकभेदात् तथात्वं लौकिक वैदिकविधिलिङ्त्वावच्छेदेन शक्तिभेदान्नानार्थन्तु नैवमित्याहुः।

केचित्तु नानार्थे परस्परासङ्कीर्णार्थद्वये शक्तिद्वयं अत्र चैकशक्तिविषयकार्य्यत्वघटिते विशिष्टेऽपरशक्तिरिति नानार्थन्यायाभिधानमित्याहुः।

नन्वेवं पचतीत्यादावपि तद्धीः स्यादित्यत आह, 'लिङिति, शक्तिरेव कथं नेत्यत आह, 'सामान्येति। यथा घटपदेन नीलघटधीः शक्त्यन्तरं

त्वञ्च न वृत्त्यन्तरनिर्वाह्यं, अतएव वर्त्तमानत्वादौ न लड़ादिशक्तिरिति लोके शक्त्यग्रहात् न व्युत्पत्तिविरोध इति, तदसत्, लिङः कार्य्यत्वेऽशक्तौ पचिपदात् कार्य्यत्वज्ञानानुपपत्तेः युगपद्वृत्तिद्वयविरोधात्। न चाज-

---

शबोधकत्वं, 'वृत्त्यन्तरेति लक्षणेत्यर्थः । 'अतएवेति धातुत एव वर्त्तमानत्वादिप्रकारेण क्रियाबोधसम्भवादेवेत्यर्थः, लड़ादिकन्तु तत्तात्पर्य्यग्राहकमिति भावः । एवञ्च प्रागुक्तव्युत्पत्तिविरोधोऽपि नास्तीत्याह, 'इतीति, 'लोके' लोकस्थले, 'शक्त्यग्रहादिति लिङः क्रियानिष्ठकार्य्यताबोधकत्वाग्रहादित्यर्थः, 'न व्युत्पत्तिविरोध इति न प्रागुक्तव्युत्पत्तिविरोधोऽपीत्यर्थः । 'कार्य्यत्वज्ञानानुपपत्तेरिति धातुना वस्तुगत्या कार्य्यपाकाभिधानेऽपि कार्य्यत्वप्रकारकान्वयबोधानुपपत्तेरित्यर्थः। ननु पचेः कार्य्यत्वे लक्षणा पाके च शक्तिरुभयोः परस्परमन्वयाच्च कार्य्यत्वप्रकारकान्वयबोधोपपत्तिरित्यत आह, 'युगपदिति, 'उभयसाधारणेति शाब्दबोधे उभयसाधारणधर्म्मस्य लक्ष्यतावच्छेदकत्वेनाभिमतस्य प्रकारतया अभानादित्यर्थः, कार्य्यत्वत्वरूपेणैव कार्य्यत्वस्य पाकत्वावच्छिन्ने प्रकारत्वादिति भावः । ननु कार्य्यपाकत्वरूपेण कार्य्ये पाक एव धातोर्लक्षणास्तु । न च विनि-

---

विनैवेति भावः । 'अतएवेति, धातुनैव वर्त्तमानत्वादिविशिष्टाभिधानं लड़ादिकन्तु तात्पर्य्यग्राहकमिति भावः । 'कार्य्यत्वेति कार्य्यत्वप्रकारकज्ञानानुपपत्तेरित्यर्थः, अतएव घटपदादपि नीलघटधीर्न नीलघटत्वप्रकारिकेति भावः । लक्षणया तत् स्यादत आह, 'युगपदिति । न च प्रकृष्टजयवत्

इत्यस्यार्था, उभयसाधारणस्यानुपस्थितेरिति दिक्।

गमकाभावात् प्रत्यय एव किमिति न लक्षणा धातुस्तु तत्पर्य्यग्राहकोऽस्तु सङ्ख्याया एव प्रत्ययस्य शक्यार्थत्वादिति वाच्यं। प्रत्ययस्य प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमभङ्गापत्तेः। न चानन्तधातुषु लक्षणापेक्षया एका शक्तिर्लघीयसीति वाच्यं। लक्षणाकल्पनायाअदोषत्वात् अन्यथा प्रयजतीत्यादावुपसर्गेऽप्येवङ्क्रमेण शक्त्यापत्तेरित्यस्वरसादाह, 'दिगिति, दिगर्थस्तु कार्य्यपाके धातोर्लक्षणायां चैत्रः पचेतेत्यादौ चैत्रादेरनन्वयापत्तिः धात्वर्थ-नामार्थयोरन्वयस्याव्युत्पन्नतया कार्य्यत्वैकदेशे कृतौ चैत्रादेरन्वयासम्भवात् अन्यथा पचतीत्यादावपि प्रत्यये शक्तिविलोपापत्तेः धातोरेव पाकानुकूलकृत्यादौ लक्षणासम्भवात्। न च सर्व्वत्र धातौ लक्षणायां मुख्यप्रयोगालाभ इति वाच्यं। शोभनं पाचक इत्यादौ तत्सम्भवात् तत्र धातोः पाककर्त्तरि लक्षणायां सुप्विभक्त्यर्थानन्वयप्रसङ्गात्, न हि धातुस्तत्प्रकृतिः, पाकादिपदे मुख्यतायाः साम्राज्याच्च। न च कृतिसाध्यत्वस्य प्रत्ययार्थत्व एव चैत्रादेः कुत्रान्वय इति वाच्यं। तदेकदेशे कृतावेव चैत्रादेरन्वयात् चैत्रादेः प्रथमान्तपदोपस्थाप्यत्वेऽपि विधिलिङ्स्थले व्युत्पत्तिवैचित्र्यात् प्रत्ययार्थविशेषणतया अन्वयो व्युत्पन्नः[१] स्वर्गकामो यजेतेत्यादौ वैदिकस्थले तादृश-

(१) अन्वयस्य व्युत्पन्नत्वादिति ग०।

कार्य्यत्वविशिष्टे पाके लक्षणास्तु केवलस्य विशिष्टान्यत्वादिति वाच्यं। युगपद्वृत्तिद्वयाङ्गीकर्त्तृमतेन कथञ्चित्तस्योपपाद्यत्वात् तद्विरोधाङ्गीकर्त्तृमते चात्र तदभावात्। एतदभिप्रायेणैवाह, 'दिगिति। योग्यतावलान्न स्थायित्वादि-

यद्वा ज्ञाने पदानां शक्तिः शक्यत्वात्, एवञ्च लिङ्-

व्युत्पत्तिभेदस्य त्वयाभ्युपगमात् । अस्तु वा आख्यातसामान्यशक्ति-बललभ्यकृतेर्विशेष्यतयैव चैत्रादेरन्वयः कृतिसाध्यपाकानुकूलकृति-मांश्चैत्र इत्यन्वयबोधस्य निरुपद्रवत्वात् । न चैवं कृतिसाध्यपाके धातोर्लक्षणापक्षेऽपि सामान्यशक्तिबललभ्यकृतेर्विशेष्यतयैव चैत्रादे-रन्वयसम्भव इति वाच्यं । लिङः कृतौ शक्तिस्वीकारे तस्या एव साध्यतासंसर्गेण धात्वर्थविशेषणतया अनुकूलतासंसर्गेण धात्वर्थविशे-ष्यतया चान्वयसम्भवाद्धातोर्विशिष्टलक्षणाभ्युपगमस्य व्यर्थत्वात् लाघ-वात् साध्यतासंसर्गेण कृतिप्रकारकज्ञानस्यैव प्रवर्त्तकतया कृतिसाध्य-त्वप्रकारकज्ञानविरहेऽपि क्षतिविरहात् । यदप्युक्तमत एव वर्त्त-मानत्वादौ न लडादिशक्तिरिति, तदपि तुच्छं, धातोर्वर्त्तमानपा-कादौ लक्षणायां लडर्थकृतौ वर्त्तमानत्वाद्यलाभप्रसङ्गात् । न च तत्र वर्त्तमानत्वाद्यलाभेऽपि न क्षतिरिति वाच्यं । तथा सति कृतिनि-वृत्तावपि पाकस्य विद्यमानतादशायां पचतीति प्रयोगापत्तेः कृते-र्विद्यमानत्वे भाविपाकदशायां तादृशप्रयोगानापत्तेश्चेति भावः ।

नन्वपूर्वे व्युत्पत्तिविरह इति पूर्वपक्षे समाधानान्तरमाह, 'यद्वेति, 'ज्ञान इति शाब्दबोधविशेषणतावच्छेदकधर्मप्रकारकज्ञान-इत्यर्थः,(१) 'पदानां' पदज्ञानानां, 'शक्तिः' शक्तिग्रहः, 'शक्यत्वादिति

(१) शाब्दबोधविषयतावच्छेदकधर्मप्रकारकज्ञान इत्यर्थ इति ग० ।

लाभ इति मतेन कल्पान्तरमाह, 'यद्वेति, एतन्मते कार्य्यत्ववत् साधन-त्वबोधोऽपि शाब्दो न विरुद्ध इत्यपि बोध्यं । 'शक्यत्वादिति, ज्ञानस्येति

पदं एकचोच्चारणे स्थायित्व-स्वर्गजनकत्व-कार्य्यत्वानां ज्ञाने शक्तमिति व्युत्पत्तिः स्थायिज्ञानादिकञ्चोपस्थितमेव, ततो लिङ्पदेन एकचोच्चारणे योग्यतादिवशात् यागविषयकं स्थायिस्वर्गजनकं कार्य्यमित्येकं ज्ञानमनुभवरूपं प्रचुरद्रव्य-गुण-कर्म्मविलक्षणविषयं क्रियते। न चैवं नानार्थवदेकैकज्ञाने शक्तिग्रहादेकैकविषयोऽनुभवो भवेत् न समुदितविषय इति वाच्यं। शक्तिग्रहकाले एकचोच्चारण इति विशेषणमहिम्ना

अर्थस्य शक्यत्वेऽपि ज्ञानस्य शक्तिविषयत्वादित्यर्थः, तत्प्रकारकशक्तिग्रहादेव तत्प्रकारेण तदाश्रयव्यक्तिभानमिति भावः। 'लिङ्पदमेकचोच्चारण इति लिङ्पदविषयकमेकज्ञानमित्यर्थः, 'स्थायित्वेति स्थायित्वादिप्रकारकज्ञाने शक्तमित्यर्थः, 'व्युत्पत्तिः' शक्तिग्रहः, 'स्थायिज्ञानादिकञ्चेति स्थायित्वादिप्रकारकज्ञानञ्चेत्यर्थः, 'लिङ्पदेनैकचोच्चारण इति लिङ्पदविषयकैकज्ञानेनेत्यर्थः। 'एकैकज्ञाने' एकैकप्रकारकज्ञाने, 'न समुदितविषय इति, सकृदुच्चरित इत्यादिनियमात्[१] इति भावः। 'शक्तिग्रहकाल इति लिङ्पदज्ञान-

(१) सकृदुच्चरितः शब्दः सकृदर्थं गमयतीति नियमादित्यर्थः।

शेषः, शक्य एव शक्तेरुचितत्वादिति भावः। अर्थस्य तु शक्यज्ञानविषयतया शक्यत्वोक्तिरिति ध्येयं। 'स्थायित्वेति स्थायित्वादिप्रकारके स्थाय्यादिज्ञाने शक्तमित्यर्थः। अतएवाह, 'स्थायीति, प्रत्येकमिति शेषः। 'एकैकेति,

तत्सम्भवात्, नानार्थे तु प्रमाणाभावेन गौरवेन च शक्तिग्रहे तस्याप्रवेशात्। तथाप्यमीषां समूहालम्बनं स्यान्न तु परस्परं वैशिष्ट्यज्ञानमिति चेत्, न, साकाङ्क्षधर्म्म-धर्म्मिगोचरैकज्ञानस्यैव विशिष्टज्ञानत्वात्, न च समूहालम्बनसम्भेदः। तस्य निराकाङ्क्षविषय-

---

श्लोकरीत्या शक्तिग्रहेत्यर्थः, तथाच तदतिरिक्तस्थले सकृदुच्चरित-इत्यादिनियम इति भावः। 'प्रमाणाभावेनेति, युगपन्नानार्थानुभवाभावेनेति भावः। 'तथापीति, वैशिष्ट्यांशे शक्तिग्रहविरहादिति भावः। 'साकाङ्क्षेति साकाङ्क्षौ यौ धर्म्म-धर्म्मिणौ तदुभयगोचरैकज्ञानस्येत्यर्थः, 'समूहालम्बनसम्भेदः' समूहालम्बनाविशेषः। 'निराकाङ्क्षेति, आकाङ्क्षा च तन्मते पदार्थान्तरं तच्च न समूहालम्बनज्ञाने इति भावः। वृत्तिरूपा शक्तिः कार्य्यानुकूला शक्तितोऽन्यैव अतः सा साक्षादर्थनिरूपितापि सुवचा इति मतमाश्रित्यापि व्यधिकरण-

---

विशिष्टस्य प्रागनुपस्थितेरिति भावः। 'प्रमाणाभावेनेति, प्रकृते च स्वर्गकामान्वयानुपपत्तेरेव मानत्वादत एव गौरवं न दोषायेति भावः। प्रकृते नानार्थानुभवबलादेव तत्प्रवेश इत्यन्ये। 'तथापीति शक्तिग्रहकाल इव स्थाय्यादीनां वैशिष्ट्यज्ञानमभेदज्ञानं न स्यादित्यर्थः। यद्वा स्थायित्वादीनां एकस्मिन् धर्म्मिणि सामानाधिकरण्यज्ञानं न स्यादित्यर्थः। यद्यपि प्रत्येकमप्युपस्थितानामाकाङ्क्षादिवशात् संसर्गबोधः सम्भवत्येव तथाप्यभ्युपेत्य स्वमतेन समाधत्ते, 'साकाङ्क्षेति अगृहीतासंसर्गेत्यर्थः, 'सम्भेदः' अविशेषः। नन्वेवं नित्यस्थले का गतिः तत्र स्वर्गजनककार्य्याभावात् कथं वा अपूर्व्वलाभ-

त्वात्। अस्तु वोपस्थितेष्वगृहीतासंसर्गेषु स्थायित्व-स्वर्गजनकत्व-कार्य्यान्वेषु शक्तिः अगृहीतासंसर्गक-स्यापि विशिष्टज्ञानसमानशीलत्वात् अत उक्तन्यायेन तावद्विषयकमेकं ज्ञानं लिङ्पदेन जन्यते। एवमेवा-लौकिकार्थेषु स्वर्गादिपदेषु शक्तिग्रहः। ननु भव-

नानाधर्म्मविशिष्टनिरूपितैकशक्तिमभ्युपेत्य समाधत्ते, 'अस्तु वेति, 'उपस्थितेष्वगृहीतासंसर्गेष्वित्यनेन संसर्गानन्तर्भावेन धर्म्म-धर्म्मिशक्तावपि विशकलितोपस्थितेरेवासंसर्गाग्रहसहकारेण समूहालम्बनविलक्षणशाब्दबोधजनकत्वमिति सूचितं[१]। 'शक्तिरिति शक्तिग्रह इत्यर्थः, धर्म्मे शक्तिग्रहादेव तत्प्रकारेण धर्म्मिण उपस्थितिः यथा जातिशक्त्यैव व्यक्तेर्लाभ इति भावः। अशक्यस्य वैशिष्ट्यस्याभानेऽपि न क्षतिरित्याह, 'अगृहीतेति, 'अगृहीतासंसर्गकस्य' असंसर्गाग्रहजन्यज्ञानस्य, 'विशिष्टज्ञानेति विशिष्टवैशिष्ट्यावगाहिज्ञानेत्यर्थः, 'अत इति नानार्थेषु शक्तेरैक्यादित्यर्थः, 'उक्तन्यायेनेति तावदर्थनिरूपितैकशक्तिमत्त्वादित्यर्थः, 'एवमेव' विशृङ्खलविशेषण-विशेष्यमवगाह्यैव, 'स्वर्गादिपदेष्विति, तत्र दुःखासम्भेदादिविशिष्टसुखादेरर्थस्य प्रमाणान्तरानवगम्यत्वाद्विशिष्टविषयकशक्तिधियोऽसम्भवादिति भावः। एतच्च विधिशेषस्यार्थवादस्य प्रामाण्यं नास्तीत्यभिप्रेत्य, अन्यथा यत्र

(१) वृत्तिरूपेत्यादिः सूचितमित्यन्तः पाठः गपुस्तके नास्ति

इति चेत्, न, अयोग्यतया स्वर्गजनकत्वांशमपहाय स्थायिकार्य्यमित्येवान्वयादित्येके। लक्षणया तथा बोध इत्यन्ये। न च वैद्यकलिङादौ का

तूक्तप्रकारेण शक्तिग्रहस्तथापि लिङ्पदात् यागविषयककार्य्यानुभवे सत्यपूर्वलाभात् स्वर्गकामान्वयः सम्भवतीत्युपपादकप्रतिसन्धाने प्रसिद्धार्थस्वर्गकामपदसमभिव्याहारान्यथानुपपत्त्या लिङः कार्य्ये शक्तिकल्पनं । न हि प्रथममुपपादकप्रतिसन्धानं विनार्था-

दुःखेन सम्भिन्नमित्यर्थवादादिविशिष्टार्थेऽपि स्वर्गपदशक्तिग्रहसम्भवात् तत्रोक्तरीत्यनुसरणवैयर्थ्यप्रसङ्गात्, उपपादकप्रतिसन्धाने लिङ्पदस्य स्वर्गकामान्वितस्वार्थबोधकत्वरूपस्वर्गकामसमभिव्याहारानुपपत्त्या कार्य्ये शक्तिः कल्प्या क्लृप्तायाञ्च शक्तौ अपूर्व्वोपस्थित्या तद्घटितस्य लिङो यागविषयककार्य्यानुभावकत्वरूपस्य उपपादकस्य ग्रहइत्यन्योन्याश्रयमाशङ्कते, 'नन्वित्यादिना, 'सम्भवति' उपपद्यते, तथाच लिङः कार्य्यानुभावकत्वं स्वर्गकामान्वितस्वार्थबोधकत्वोपपादकमिति पर्य्यवसितः प्रतिसन्धानाकारः, तदुपपादकत्वञ्च स्वाभावव्यापकतदभावकत्वं, स्वर्गकामसमभिव्याहारानुपपत्त्या तदनुपपत्तिसिद्धकार्य्यानुभावकताया अपूर्व्वानुभावकतायां पर्य्यवसानादिति भावः । कार्य्यादिपदे कार्य्यानुभावकत्वग्रहात् कार्य्यानुभावकत्वसामान्यस्योपपादकत्वग्रहे उपपाद्यवत्तया प्रतीते लिङ्पदे कार्य्यानुभावकत्वसामान्यं सिद्धात् कार्य्यान्तरानुभावकत्वबाधेनापूर्व्वरूपकार्य्यानुभाव-

गतिः तत्र धातुसाम्यद्वारा साधनत्वज्ञानात् क्रियायामेव कार्य्यत्वान्वयादिति वाच्यं। तदतिरिक्तलिङ एव उक्तशक्तिग्रहादित्येके । लक्षणया तथान्वयइत्यन्ये ।

पत्तिः सम्भवति । न च शक्तिकल्पनात् पूर्वं उपपादकशरीरनिविष्टमपूर्वं ज्ञातमिति चेत्, तत् किं य एव विशेष उपपादकः पक्षधर्म्मताबलात् सिध्यति तत्प्रतिसन्धानमर्थापत्तौ कारणं तथात्वे पूर्वं गृहीतमाचस्य कल्प्यत्वे कल्पनोच्छेदापत्तिः। तस्मात् यथा सामान्यतोभोजनस्य पीनत्वसम्बन्धावगमात् उपपादकतर्कें सति कल्पनातो विशेषावगमः यथा वा

कत्वं पर्य्यवस्यति । न च तादृशविशेषस्योपपादकत्वेन ज्ञानमर्थापत्तिप्रवर्त्तकमिति समाधत्ते, 'तत्किमित्यादिना, 'कल्पनोच्छेदापत्तिरिति देवदत्तादौ प्रतीयमानपीनत्वानुपपत्त्यापि तदुपपादकदेवदत्तीयभोजनादिरूपापूर्व्ववस्तुसिद्ध्युच्छेदापत्तिरित्यर्थः, 'पीनत्वसम्बन्धावगमात्' पीनत्वोपपादकत्वावगमात्, 'विशेषावगम इत्यनेनास्यान्वयः, 'उपपादकतर्के सतीति यदि देवदत्तो भोजी न स्यात्तदा पीनो न स्यात् इत्यादिविषयपरिशोधकतर्के सतीत्यर्थः, तदपेक्षा चानुमान इवार्थापत्तावपि बलवत्या इच्छाघटितविपरीतशङ्कासामग्र्यानिरासद्वारा इत्यवधेयं । अथ वा 'तर्कपदं संशयपरं, संशयस्य पक्षताघटकः अनुमान इवार्थापत्तावुपयुज्यते । अथ वा 'पीनत्वसम्बन्धावगमात्' पीनत्वकारणताग्रहात्, 'उपपादकतर्के' पीनत्वरूपोपपाद्ये भोजनरूपोपपादकान्वय-व्यतिरेकव्याप्तिज्ञान इत्यर्थः, तर्कपदस्य करणव्युत्पत्त्या व्याप्तिज्ञानपरत्वात्, 'कल्पनातः' कल्पनासामग्रीतः,

न हि तन्मते कल्प्यज्ञानमपि पूर्व्वं म्टग्यते इति चिन्त्यं। ननु

सामान्यशक्तव्यक्तिवाचकपदेन समभिव्याहारवशाद्वि-शेषाभिधानमेवमत्रापि कार्य्यमात्रवाचकत्वे कार्य्यवि-शेषलाभः सम्भवतीति तर्क्कितोपपादकप्रतिसन्धानाद्-भवत्यर्थापत्त्या शक्तिकल्पनं, यागविषयकञ्च कार्य्यं न घटादि तस्य सविषयकत्वाभावात्, विषयत्वञ्च ज्ञान-घटयोरिव स्वभावसम्बन्धो वा तन्निरूपणाधीननिरूप-

'विशेषावगमः' भोजनत्वेन वस्तुगत्या अपूर्व्वदेवदत्तीयभोजनव्यक्ति-सिद्धिः । प्रमाणान्तरादपूर्व्वव्यक्तिलाभस्थले सामान्यतः सिद्धिं दृष्टा-न्तयति, 'यथा वेति, 'समभिव्याहारवशात्' समभिव्याहृतानयनाद्य-बाधात्, 'विशेषाभिधानं' अपूर्व्वव्यक्तिविशेषलाभः, 'कार्य्यमात्रवाचकत्वे' कार्य्यसामान्यानुभावकत्वे, सिध्यतीति शेषः । 'कार्य्यविशेषलाभः' कार्य्यत्वेनापूर्व्वरूपकार्य्यानुभावकत्वलाभः । अपूर्व्वलाभवीजं कार्य्यान्त-रस्य यागाद्यन्वयायोग्यत्वरूपं दर्शयति, 'यागेति, 'सविषयकत्वा-भावादिति यागविषयकत्वाभावादित्यर्थः, 'विषयत्वञ्चेति, प्रकृत-इति शेषः । यागापूर्व्वयोस्तादृशस्वरूपसम्बन्धे मानाभावादाह, 'तदिति तन्निरूपणाधीननिरूपणविषयत्वमित्यर्थः, 'तत्' अपूर्व्वं । नन्वेवं यागविषयकयत्किञ्चिन्निरूपणव्यक्तेर्घटादिनिरूपणस्याप्यधीन-

शाब्दबोधे घटादिकार्य्यान्वय एव कथं नेत्यत आह, 'यागेति । नन्वपूर्व्व-मपि घटवन्निर्व्विषयकमेवेति कथं तथेत्यत आह, 'विषयत्वञ्चेति तद्विषय-कत्वञ्चेत्यर्थः । 'ज्ञानेति घटज्ञानस्येत्यर्थः । ननु स्वभावसम्बन्धो विषयादि-साधारण इत्यत आह, 'तन्निरूपणेति यागनिरूपणाधीन-निरूपणत्वमि-

णत्वं वा तत्समानसंवित्संवेद्यत्वं वा व्यावृत्तसाधनत्वं वेति। अस्ति हि याग-दान-होमजन्यापूर्वाणां तुल्य-

तया घटादेरपि यागविषयकत्वापत्तिः। न च तन्निरूपणाधीन-मात्रविषयत्वं तद्विषयत्वमिति वाच्यं। अपूर्व्वमप्रतीत्यापि याग-पदादितो यागप्रतीतेरसम्भवापत्तेरित्यत आह, 'तदिति। ननु तत्समानसंवित्संवेद्यत्वं तद्विषयकधीविषयत्वं तद्विषयकयावद्धीविष-यत्वं वा, नाद्यः यागे घटादिविषयत्वस्याप्यापत्तेः, नान्त्यः यागेऽपूर्व्वविषयत्वस्याप्यनापत्तेरित्यत आह, 'व्यावृत्तेति असाधारण-कारणत्वमित्यर्थः, यागविषयककार्य्यत्वरूपेण ध्वंसभानवारणाया-साधारणत्वप्रवेशः। वस्तुतस्तु पुरुषोत्तममुखं पश्येदित्यत्र पुरुषोत्त-ममुखदर्शनविषयककार्य्यत्वरूपेण संस्कारभानवारणाय तत्प्रवेशः, असाधारणत्वञ्च अन्वयितावच्छेदकव्याप्यनानाव्यक्तिवृत्तिधर्म्मावच्छिन्न-त्वमित्येव सारं। असाधारणकारणत्वमेव व्यवस्थापयति, 'अस्ति हीति, 'तुल्यरूपेति, यागनिष्ठतत्कारणतायाः सकलकार्य्यसाधारण-

त्वर्थः, एतदपि यागज्ञानादावतिप्रसक्तमत आह, 'तत्समानेति, यदा कदाचित् सज्ञानवित्तिवेद्यत्वं घटादावपि नियमेन प्रकृतेऽप्यसम्भवतीत्यत-आह, 'व्यावृत्तेति व्यावृत्तसाधनत्वं यागस्य विषयत्वं तत्साध्यत्वमपूर्व्व-सविषयकत्वं इत्यर्थः, एतच्च प्रागनुपस्थितमपि संसर्गमर्य्यादया भासत इति स्मर्त्तव्यं। व्यावृत्तत्वमुपपादयति, 'अस्ति हीति, अनभिसंहितपरस्वत्वापत्ति-फलस्त्यागो यागः, अभिसंहितपरस्वत्वापत्तिफलस्त्यागो दानं, देशविशेष-गतद्रव्यप्रक्षेपोपाधिकस्त्यागो होम इत्याहुः। 'तुल्येति यागापूर्व्वस्य दाना-दिव्यावृत्तो यागः कारणमेवमन्यत्रापीत्यर्थः। यद्यप्येतदपि तज्जन्यस्वर्गादा-

रूपसाधनान्तरव्यवच्छेदेन प्रत्येकमात्रजन्यत्वं । तदुक्तं, "विशब्दो हि विशेषार्थः सिनोतिर्बन्ध उच्यते । विशेषेण सिनोतीति विषयोऽतो नियामकः" इति । ननु येन रूपेण शक्तिग्रहः तेन रूपेण कार्य्यत्वशक्ताल्लिङ्पदाल्लक्षणया कार्य्योपस्थितौ योग्यतादिवशादपूर्व्वला-

ज्ञानाद्यात्मककारणान्तरव्यावृत्तत्वेनेत्यर्थः, 'प्रत्येकमात्रजन्यत्वं' यागादिप्रत्येकमात्रनिष्ठजनकतानिरूपकत्वं । विषयशब्दस्य व्यावृत्तजनकताश्रयवाचित्वे साधकमाह, 'तदुक्तमिति, 'विशेषार्थः' व्यावृत्तत्वार्थः, 'बन्धः' जननं, 'सिनोतीतीति, व्युत्पत्त्येति शेषः, 'नियामकः' व्यावृत्तजनकताश्रयः । 'शक्तिग्रह इति मीमांसकस्य तव शक्तिग्रह इत्यर्थः, 'तेन रूपेणेति 'कार्य्योपस्थितावित्यत्रान्वेति, अतएव[१] शक्तिलाघवं लौकिकव्युत्पत्त्यनतिक्रमश्च भवतीति भावः । ननु अपूर्व्वस्य शक्यमन्वन्धितया अनवगमात् कथं लक्षणयोपस्थितिः

(१) एवञ्चेति ग० ।

वतिप्रसक्तं तथापि तद्व्यावृत्तं निर्व्वाच्यं, एतदतिप्रसक्तिर्न दोषायेत्यप्याहुः । वस्तुतः स्वभावसम्बन्धविशेष एवैतद्व्यावृत्तत्वदिति बोध्यं । अत्र वृद्धसम्मतिमाह, 'तदुक्तमिति, 'विशेषेणेति अन्यतो व्यावृत्त्या असाधारण्येनेत्यर्थः, 'सिनोति' सम्बध्नाति जनयतीति यावत् । ननु वेदेऽपि लिङः कार्य्यत्वमात्र एव शक्तिरस्तु धर्म्मिणोऽन्यलभ्यत्वादित्याशङ्कते, 'नन्विति, तथाच न व्युत्पत्तिविरोधोऽपीति भावः । 'कार्य्योपस्थिताविति येन रूपेण त्वन्मते शक्तिः तेन रूपेण लक्षणया कार्य्योपस्थिताविति बोध्यं । ननु लक्ष्यापूर्व्वा-

भोऽस्तु कार्य्यस्मरणं हि अन्विताभिधानोपयोगि न त्वपूर्वस्मरणं तच्च पदेन पदार्थेन वेति न कश्चिद्विशेषः, कार्य्यञ्च शक्यकार्य्यत्वसम्बन्धितयावगतमेवेति चेत्, न, लिङो लाक्षणिकत्वेनापूर्वाननुभावकत्वात्। न चेतरान्वितस्वार्थशक्तस्य यज्यादिपदस्येतरदपूर्वमादायानुभावकत्वमिति वाच्यं। इतरोपलक्षितस्वार्थान्वयमात्रे हि पदानां शक्तिर्न त्वितरच्च गौरवात् पदान्तरलभ्य-

---

स्यादित्यत आह, 'कार्य्यस्मरणं हीति कार्य्यत्वरूपेण यत्किञ्चित्कार्य्यस्मरणं हीत्यर्थः, अन्यथा कार्य्यशक्त्यभ्युपगमेऽप्यगतेरिति भावः। 'तच्च' कार्य्यत्वप्रकारककार्य्यस्मरणञ्च, 'पदेन' लिङ्पदेन, 'पदार्थेन वा' शक्त्या लिङ्पदोपस्थापितेन कार्य्यत्वेन वा, एतच्च लक्षणायां मुख्यार्थ एव पदस्मारितो लक्ष्यार्थस्मारक इति सम्प्रदायमतानुसारेणोक्तं। 'कार्य्यञ्चेति कार्य्यत्वरूपेण यत्किञ्चित् कार्य्यञ्चेत्यर्थः। 'अपूर्व्वाननुभावकत्वादिति अपूर्व्वाननुभावकत्वप्रसङ्गादित्यर्थः। अत्रेष्टापत्तिमाशङ्कते, 'न चेति, 'इतरान्वितस्वार्थशक्तस्य' इतरान्वितस्वार्थानुभवशक्तस्य, इतरनिष्ठविषयतानिरूपितस्वार्थविषयताशाल्यनुभवशक्तस्येति यावत्, 'यज्यादिपदस्य' यज्यादिपदस्यैव, 'इतरोपलक्षितेति इतरविषयत्वाविशेषितस्वार्थानुभवत्वावच्छिन्नेत्यर्थः, 'न त्वितरच्च' न

---

स्मरणे कथं लक्षणेत्यत आह, 'कार्य्यस्मरणमिति, अन्यथा शक्तिपक्षेऽप्यप्रतीकार इति भावः। पूर्व्वस्यैव तीरस्मारकत्वमिति मतेनाह, 'पदार्थेनेति। न च कार्य्यत्वोपस्थितिः शक्त्यैवेति युगपद्वृत्तिद्वयविरोधः, विशि-

त्वाच्च । लक्षणायाञ्च तीरोपलक्षितान्वयशालिस्वार्थानुभावकत्वमितरपदस्य तीरस्य तु संस्कारादुपस्थितिरसन्निहितेनान्विताभिधानाभावात् । न चापूर्वं सं-

त्वितरत्व-विषयत्वमन्तर्भाव्य । नन्वेवं गङ्गायां घोष इत्यत्र कथं तीरवृत्तित्वानुभवः[१] इत्यत आह, 'लक्षणायाञ्चेति गङ्गायां घोषइत्यत्र चेत्यर्थः, 'तीरोपलक्षितेति वस्तुगत्या तीरनिरूपितवृत्तिताशालीत्यर्थः, 'इतरपदस्य' घोषादिपदस्य, न तु तीरानुभावकत्वमिति शेषः । 'तीरस्य' तु तीरवृत्तित्वस्य तु, तथाच लक्षणास्थले लक्ष्यस्मृतिरेव न तु तत्र तस्य शाब्दानुभवे प्रवेश इत्यभिमानः । नन्वन्वयबोधे तीरवृत्तित्वस्याप्रवेशे किं तस्य स्मृतेरित्यत आह, 'असन्निहितेनेति अनुपस्थितेनेत्यर्थः, 'अन्विताभिधानेति, तीरवृत्तिर्घोष इति विशिष्टव्यवहारासम्भवादित्यर्थः, तथाच साकाङ्क्षज्ञानद्वयस्यैव तत्र विशिष्टव्यवहारजनकत्वमिति भावः ।

पितृचरणास्तु ननु यदि तीरवृत्तित्वस्य संस्कारादुपस्थितिस्तदा कथं न शाब्दानुभवे भानमित्यत आह, 'असन्निहितेनेति शक्त्यानुपस्थितेनेत्यर्थः, 'अन्विताभिधानेति शाब्दानुभवासम्भवादित्यर्थइति प्राहुः ।

(१) तीरवृत्तित्वान्वय इति क० ।

स्य केवलान्वयितया प्रकृतसृजयवत्तदभ्युपगमात् । तर्हि गङ्गायां घोष इत्यत्र का गतिरित्यत आह, 'लक्षणायाञ्चेति, 'असन्निहितेनेति अनासन्नेनेत्यर्थः, पदजन्योपस्थितेरेवासत्तित्वादत्र च पदार्थस्यैवोपस्थापकत्वाभ्युपगमादिति

स्कारविषयः। किञ्च यजिपदेन स्वर्गकामकार्य्यविषयो याग इत्यनुभवोभवेत् लक्षणायामितरपदस्य लक्षणीयविशेषणस्वार्थविशेष्यकानुभवजनकत्वात्। न चैतादृशो बोध आकाङ्क्षितः। न च यागाविशेषितकार्य्यमात्रेण स्वर्गकामान्वयः प्रतीयते, किन्तु यागविषयक-

---

ननु प्रकृतेऽप्यपूर्व्वस्य संस्कारादुपस्थितिरस्त्वित्यत आह, 'न चेति। ननु लक्षणायां लक्ष्यस्मृतिरेव यदि तदा तव नये अपूर्व्वानुपस्थिततीरवृत्तित्वं न प्रतीयेतेत्यत आह, 'किञ्चेति। ननु तथैवानुभवोऽस्तु को दोष इत्यत आह, 'न चेति, 'आकाङ्क्षितः' यागविषयकं कार्य्यं कृतिसाध्यं भवत्वित्यपूर्व्वविषयकचिकीर्षाजनकः। नन्वेतादृशबोधस्य तादृशापूर्व्वविशेष्यकचिकीर्षां प्रत्यजनकत्वेऽपि न क्षतिस्तस्याप्रवर्त्तकत्वादित्यस्वरसादाह, 'न चेति न वेत्यर्थः, स्वर्गकामो यजेतेति वाक्यादिति शेषः। 'स्वर्गकामान्वयः' स्वर्गकाम-

---

भावः। ननु त्वन्मतेऽर्थाध्याहारवदासन्नत्वमितरपदेनानुभवविषयः स्यात्, किञ्च तीरस्य शाब्दबोधविषयत्वमवश्यं वाच्यं। अन्यथा विभक्त्यर्थानन्वयापत्तेः, तथाच यथा तत्र शाब्दत्वं तथा प्रकृतेऽपि कार्य्यस्मरणे सति समानप्रकारकत्वस्य नियामकत्वेन योग्यतया शाब्दानुभवोऽपूर्व्वमादाय पर्य्यवस्येदित्यरुचेराह, 'किञ्चेति, 'लक्षणायामिति, यद्यपि मञ्चाः क्रोशन्तीत्यादौ व्यभिचारः, तथापि व्यभिचारममुं 'यथा हि मञ्चा इत्यादिना हि कृतो ग्रन्थकार एवाग्रे विभावयिष्यतीति बोध्यं। ततः किमित्यत आह, 'न चेति, कृतिसाध्यत्वाप्रकारकत्वादित्याद्यः, तच्चिन्त्यं, कार्य्यांशे कार्य्यत्वप्रकारकत्वस्याविरोधात्। तस्मात् स्वर्गकामबोधकं यागविषयकं कार्य्यमिति कार्य्यविशे-

कार्य्यविशेषे, तथाच तथाविधबोधार्थं लिङः कार्य्ये शक्तिरेवेति ।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ शब्दाख्यतुरीयखण्डे अपूर्व्ववादपूर्व्वपक्षः ।

---

कृतिसाध्यत्वान्वयः। 'यागविषयकेति यागविषयकतया भाते कार्य्यविशेषे इत्यर्थः, तथैवानुभवादिति भावः । 'तथाचेति, लक्षणाया-लक्षणीयविशेषणकतया अनुभवजनकत्वनियमादिति भावः । अत्र मध्वाः क्रोशन्तीत्यादौ व्यभिचारो ग्रन्थकृतैव स्वयं वक्ष्यते इति नाशङ्कितः ।

इति श्रीमथुरानाथ-तर्कवागीशविरचिते तत्त्वचिन्तामणिरहस्ये शब्दाख्यतुरीयखण्डरहस्ये अपूर्व्ववादपूर्व्वपक्षरहस्यम् ॥०॥

---

व्यकज्ञानस्यैव प्रवर्त्तकत्वाभ्युपगमात्तदनाकाङ्क्षितत्वमिति मन्तव्यं । ननु स्वर्गकामकार्य्यमित्येव ज्ञानं कार्य्यविशेष्यकतया प्रवर्त्तकमस्त्वित्यत आह, 'न

## अथापूर्ववादसिद्धान्तः ।

अत्रोच्यते । अन्वयप्रयोजकरूपवत्त्वं न योग्यता अनाप्तोक्ते पयसा सिञ्चतीत्यत्र सत्यप्यन्वयप्रयोजकद्रवद्रव्यत्वे बाधकप्रमायामन्वयाबोधात् । अथ योग्यत्वेऽपि स्वबाधकप्रमाविरहः कारणं तर्हि सोऽप्यवश्यापेक्षणीयइति लाघवात् सैव योग्यता, एवञ्च तदेव योग्यमयोग्यञ्च स्यादिति चेत, सत्यं, यथा दशाविशेषे तदेव साकाङ्क्षमनाकाङ्क्षमासन्नमनासन्नञ्च तथा स्वबाधक-

## अथापूर्ववादसिद्धान्तरहस्यं ।

'अनाप्तोक्त इति करकाभिप्रायप्रयुक्त इत्यर्थः, 'द्रवद्रव्यत्वे' द्रवद्रव्यत्वज्ञाने, 'योग्यत्वेऽपि' योग्यताज्ञानेऽपि, 'स्वबाधकप्रमेति, 'प्रमापदमत्र निश्चयपरं, तेनाप्तोक्ते बाधभ्रमदशायां नातिप्रसङ्गः । शङ्कते,[१] 'एवञ्चेति, 'तदेव साकाङ्क्षमिति अजनितान्वयबोधकत्वमाकाङ्क्षा

(१) यद्योग्यं तत् सर्वदैव योग्यं यदयोग्यं तत् सर्वदैवायोग्यं इत्यभिप्रायेण शङ्कत इत्यर्थः ।

चेति । आपाततोऽभ्युपगमवादेनाह, 'तर्हीति । न चैवं स्वबाधकभ्रमदशायामन्वयबोधापत्तिः, प्रमापदस्य निश्चयपरत्वात् । 'साकाङ्क्षमिति अन्वयबोधजननाजननदशायां साकाङ्क्षमनाकाङ्क्षञ्च, एवं स्मरणास्मरणदशायां आ-

प्रमा-तद्विरहदशायां तदेवान्वयबोधे योग्यमयोग्यञ्चाभिधीयते, स्वबाधकप्रमायां तद्विरहे वा योग्यायोग्यताव्यवहारदर्शनात् स्वबाधकप्रमाविरहदशायां योग्यतादिसत्त्वेऽपि वह्निना सिञ्चतीत्यत्रान्वयबोधः अप्रमादोषवत्पुरुषप्रणीतत्वात् । सामान्यभानस्य किञ्चिद्विशेषभाननियतत्वात् विशेषाभाने कथं तद्भासतइति चेत्, न, वस्तुगत्या परम्परासाधनं विशेषो भासतएव परम्परासाधनत्वन्तु प्रकारो न भासते तत्प्रकारभाने हि परम्पराघटकज्ञानस्य हेतुत्वात्, यथा

इत्यभिप्रायेणेदं, स्वीयबाधनिश्चयाभावस्य योग्यतात्वे साधकमाह, 'स्वबाधकेति। नन्वेवं स्वीयबाधनिश्चयविरहदशायां बाधितार्थकस्यापि योग्यत्वे तत्रान्वयधीः प्रमा स्यादित्यत आह, 'स्वबाधकेति, 'दोषवदिति, तथाच दोषाभाव एव शाब्दप्रमाप्रयोजक इति भावः। शङ्कते, 'सामान्येति, 'विशेषाभान इति परम्परासाधनत्वाभानइत्यर्थः, साक्षात्साधनत्वस्य च बाध इति शेषः । 'यथेति, छिद्रेन-

सन्नमनासन्नश्चेत्यर्थः । नन्वेवं शाब्दप्रमाप्रयोजकयोग्यतासत्त्वे कथं शाब्दभ्रम इत्यत आह, 'स्वेति । यद्यपि भ्रान्तप्रतारकवाक्यं करणापाटवजन्यञ्च वाक्यं दोषजन्यत्वेऽपि प्रमाजनकं, तथापि वक्तुर्यथार्थवाक्यार्थज्ञानं गुणः तदभावो दोष इति मते तात्पर्य्यं । तथाच यागे स्वर्गसाधनत्वान्वयो नायोग्यतापराहत इति भावः। अत्र शङ्कते, 'सामान्येति, 'तथा सतीति । यद्यपि

घटेन जलमाहरेत्यत्र योग्यतया छिद्रेतरघटे घटत्वेन भासते न तु छिद्रेतरत्वेन तथा सति लक्षणायां युगपद्वृत्तिद्वयविरोधेन घटानन्वयप्रसङ्गात् उभयसाधारणरूपेणानुपस्थितेश्च नाजहत्स्वार्था। अथ

---

राभिन्नघटत्वरूपेण घटपदस्य लक्षणामविदुषः पुरुषस्येति शेषः। 'न तु छिद्रेतरत्वेनेति न तु छिद्रेतराभिन्नत्वेनेत्यर्थः, 'लक्षणेति छिद्रेतरे घटपदस्य लक्षणेत्यर्थः, 'घटानन्वयेति घटत्वेन घटानन्वयप्रसङ्गादित्यर्थः, युगपद्वृत्तिद्वयविरोधादेकपदवृत्त्युपस्थापितयोः कृतिवर्त्तमानत्वाद्यतिरिक्तस्थले परस्परमन्वयबोधस्याव्युत्पन्नत्वाच्चेति भावः। ननु यत्किञ्चिद्धर्म्मेण छिद्रेतरत्व-घटत्वे अनुगतीकृत्य तद्धर्म्मावच्छिन्नवत्त्वरूपेण घटपदस्य घटे अजहत्स्वार्थलक्षणास्त्वित्यत आह, 'उभ-

---

युगपद्वृत्तिद्वयाङ्गीकर्त्तृमते प्रकृत्यन्वयवत्तेन भानं सम्भवति, तथापि यत्र न तथा तात्पर्य्यं तत्र योग्यतादिज्ञानसत्त्वे शाब्दबोधोपपत्तौ लक्षणाकल्पने मानाभावान्न तथात्वेन भानमित्यत्र तात्पर्य्यं। तन्मते गङ्गातीरत्वेन यथा न शाब्दबोधः आकाङ्क्षाविरहात्तथा प्रकृतेऽपीत्यन्ये। 'संस्कारेति संस्कारसहकृतस्य घटपदस्यैव तदुपस्थापकत्वाभ्युपगमात्तस्यापि प्रकृत्यर्थतया छिद्रेतरत्वावच्छेदेन विभक्त्यर्थान्वय इत्यर्थः। न च वृत्त्या प्रकृतिप्रतिपाद्यत्वं प्रकृत्यर्थत्वं, गौरवादित्याशयः। 'शब्देति, वृत्त्येति शेषः, अन्यथोक्तन्यायेन तीरेऽपि सप्तम्यर्थान्वयसम्भवे लक्षणोच्छेदः स्यात् पदात् समवायसम्बन्धेनाकाशोपस्थितौ तदन्वयबोधापत्तेश्चेति बोध्यं। नन्वेतावता स्मरणनियमसम्भवेऽप्यन्वयानुभवप्रवेशेन हेतुरुक्तः। न चोपस्थितपरित्यागे बीजाभावान्नियतोपस्थितं शब्दाश्रयत्वमादायैवानुभव इति वाच्यं। छिद्रेतरत्वेऽपि

संस्कारात्तदुपस्थितिः । न च सुब्विभक्तीनां प्रकृत्यर्थगतस्वार्थान्वयबोधकत्वव्युत्पत्तेस्तत्र विभक्त्यर्थो नान्वीयेतेति वाच्यं । प्रकृत्यर्थो हि प्रकृतिप्रतिपाद्यः लक्षणीयान्वयानुरोधात् । स च संस्कारसहकारात् प्रकृतेऽपि । न च तस्यानियतोद्बोधकान्न नियता तदुपस्थितिः । फलबलेन तथा कल्पनादिति चेत्, न, शब्दोपस्थापितेनैव शब्दस्यान्वयबोधकत्वात् । न चैवमाकाशपदा-

---

येति, 'अनुपस्थितेरिति घटत्व-छिद्रेतरत्वयोः शाब्दबुद्धिविषयत्वाभावादित्यर्थः । 'संस्कारादिति, वृत्त्यतिरिक्तयत्किञ्चित्सम्बन्धेन घटपदादिति शेषः । 'तदुपस्थितिः' घटत्वेन घटोपस्थितिः, लक्षणया च घटपदाच्छिद्रेतरोपस्थितिरिति शेषः, अतो न युगपद्वृत्तिद्वयविरोध इति भावः । 'तत्र' घटत्वविशिष्टे घटे, 'प्रकृतिप्रतिपाद्यः' प्रकृतिजन्यस्मृतिविषयः, न तु शक्त्या प्रकृतिस्मारितः, 'संस्कारसहकारादिति, वृत्त्यतिरिक्तप्रकृतिसम्बन्धज्ञानजन्यस्मृतिविषयत्वेनेति शेषः । 'तस्य' संस्कारस्य, 'अनियतोद्बोधकादिति वृत्त्यतिरिक्तघटपदसम्बन्धज्ञानरूपस्योद्बोधकस्यानियतत्वादित्यर्थः, 'तदुपस्थितिरिति, स्यादिति शेषः । 'तथा कल्पनात्' नियतोद्बोधकत्वकल्पनात्, 'शब्दोपस्थापि-

तथात्वापत्तेः । यदि च तत्तन्नियतोपस्थितिकं, तदाकृदव्यातिरिक्तादव्यत्वेन शक्तिग्रहे शब्दाश्रयत्वस्यापि तथात्वाभावात् तुल्यं वृत्त्यनुपस्थापितस्याप्यन्वये प्रागुक्तदोषस्य, वृत्त्युपस्थापितत्ववन्नियमत इत्यादेरपि तत्प्रयोजकत्वकल्पने

शक्यस्य संस्कारोपस्थितस्य शब्दाश्रयत्वस्य कथं शाब्दानुभवविषयत्वमिति वाच्यं। नियमतो यद्धर्म्मवत्त्वेनोपस्थिते यत्र शक्तिग्रहः तत्स्मरणजनकसंस्कारस्य तद्धर्म्मविषयतानियमेन तदुद्बोधकादेव तदंशेऽपि उद्बोधनियमेनाकाशपदादशक्यस्यापि तस्य भानात्। अस्तु

---

तेनैवेति वृत्त्या शब्दोपस्थापितेनैवेत्यर्थः, 'शाब्दानुभवविषयत्वमिति आकाशपदजन्याकाशानुभवविषयत्वमित्यर्थः, 'नियमतः' निश्चयतः, तृतीयान्तात्तसिः, अभेदश्च तृतीयार्थः, अन्वयश्चास्य 'शक्तिग्रह इत्यनेन, 'यत्र' धर्म्मिणि, 'तत्स्मरणजनकेति शक्तिग्रहसहकारेण तद्धर्म्मिस्मरणोपधायकेत्यर्थः, 'तद्धर्म्मविषयतेति तद्धर्म्मस्मृत्युपधायकतेत्यर्थः, 'विषयतापदस्य व्यापारानुबन्धिविषयतापरत्वात्, 'तदुद्बोधकादेवेति आकाशोद्बोधकाच्छब्दाश्रयत्वविशिष्टे आकाशे आकाशपदशक्तिग्रहादेवेत्यर्थः, 'तदंशेऽप्युद्बोधनियमेनेति शब्दाश्रयत्वांशेऽपि स्मरणनियमेनेत्यर्थः, 'अशक्यस्यापि तस्येति आकाशनिष्ठाकाशपदवृत्त्यविषय-

---

गौरवं। किञ्चैवं गोत्वादिकमपि शब्दाश्रयत्ववन्न शक्यं स्यादित्यस्वरसादाह, 'अस्तु वेति, तथाच वृत्त्युपस्थापितमादायैवान्वयबोधः क्विदेतरत्वन्तु न तथेति भावः। 'नियमत इति, नन्वष्टद्रव्यातिरिक्तद्रव्यत्वेनाप्युपस्थितेर्न नियतोपस्थितिरतएवानुपदं तथैव वक्ष्यति तथाच कथं तत्र शक्तिरिति चेत्। अत्राहुः, नियमतोऽनुपस्थितावपि शब्दाश्रयत्वं प्रवृत्तिनिमित्तं विनिगमकाभावादत्वादिपदवन्नानार्थत्वेऽप्युपपत्तेः। न चैकस्यां शक्तौ नानैव प्रवृत्तिनिमित्तमिति वाच्यं। अप्रयोजकत्वात्। किञ्च त्व-तलोर्भिन्नार्थत्वेनोप-

वा तदपि शक्यं यदि नियमत उपस्थितिः सहप्रयोगस्य वाच्यादिपरत्वेनाप्युपपत्तेः। वस्तुतस्तु निय-

स्यापि[१] शब्दाश्रयत्वस्य भानादित्यर्थः, तथाच स्वप्रकारकपदवृत्तिज्ञानोपस्थापितत्वमेव विधेयतातिरिक्तस्वप्रकारताकशाब्दबोधे तन्त्रं न तु स्वप्रकारकस्वनिष्ठपदवृत्तिज्ञानोपस्थापितत्वमिति भावः। ननु तथापि शब्दाश्रयत्वस्याकाशपदशक्यविषयत्वे आकाशपदशक्तिप्रमाजन्याकाशोपस्थितौ कथं तस्य नियमतः प्रकारत्वं तत्पदशक्तिप्रमाजन्योपस्थितौ नियमतः प्रकारत्वस्य तत्पदशक्तिविषयत्वस्य व्याप्यत्वादिति तटस्थाशङ्कायामाह, 'अस्तु वेति, 'तदपि' शब्दाश्रयत्वमपि, 'शक्यं' विशेषणीभूयाकाशपदशक्तिविषयः, 'नियमत उपस्थितिः' नियमेनाकाशपदशक्तिप्रमया शब्दाश्रयत्वप्रकारकोपस्थितिः। ननु

(१) आकाशपदशक्यविषयस्यापीति क०।

पत्तावुपचरितार्थत्वे मानाभावादिति। वस्तुतस्तु लाघवाच्छब्दाश्रयत्वमेव प्रवृत्तिनिमित्तं न त्वष्टद्रव्यातिरिक्तद्रव्यत्वादिकमपि गौरवात्। क्वचित्तथात्वेन शक्तिभ्रमात्तदुपस्थितेः। अन्यथा कम्बुग्रीवत्वादिनापि शक्तिग्रहात्तदुपस्थितौ तदपि शक्यं स्यात्। यदि च लाघवात् घटत्वमेव तथेति तत्र शक्तिग्रहो भ्रमस्तदा प्रकृतेऽपि तुल्यमिति न नानार्थत्वमिति। नन्वेवं घटः कुम्भ इतिवदाकाशः शब्दाश्रय इति सहप्रयोगो न स्यादत आह, 'सहेति, आकाशपदवाच्य इति तदर्थः। 'वस्तुतस्त्विति तथाच नियतानुपस्थितस्यापि शक्यत्वं विनिगमकाभावेन नानार्थत्वमन्यथा न तथेत्यन्यदेतदिति भावः। शक्यभावपक्षे संस्कारस्य कदाचिदनुद्बोधमभ्युपेत्याह, 'अस्तु वेति, अत्रा-

तोपस्थितिरेव नास्ति। अस्तु वा पदादपि निर्व्वि-

शब्दाश्रयत्वस्याकाशपदप्रवृत्तिनिमित्तत्वे आकाशं शब्दस्येति षष्ठ प्रयोगोऽनुपपन्नः आश्रयत्वस्य षष्ठ्यर्थतया पचन् पचतीतिवन्निराकाङ्क्षत्वादित्यत आह, 'षष्ठेति, 'वाच्यादीति आकापदस्याकाशपदवाच्यादिपरत्वेनापीत्यर्थः, 'आदिपदात् अष्टद्रव्यातिरिक्तद्रव्यपरत्वपरिग्रहः। 'नियतोपस्थितिरेव नास्तीति आकाशपदशक्तिप्रमया शब्दाश्रयत्वप्रकारकोपस्थितिरेव न नियतेत्यर्थः, कदाचिदष्टद्रव्यातिरिक्तद्रव्यत्व-केवलद्रव्यत्वादिप्रकारेणाप्युपस्थितेरिति भावः। ननु तद्धर्म्मविशिष्टविशेष्यकतद्धर्म्मावच्छिन्नशक्तिसंसर्गकज्ञानमेव तद्धर्म्मप्रकारकशाब्दबोधकारणमन्यथा घटादिपदस्यापि घटत्वादेः शक्यतावच्छेदकत्वविलोपापत्तेः उक्तरीत्यैव घटत्वादेः शक्यतानवच्छेदकत्वेऽपि शाब्दबोधे भानसम्भवात्। न च तत्पदशक्तिप्रमाजन्योपस्थितौ नियमतः प्रकारत्वस्य तत्पदशक्तिविषयत्वव्याप्यतया घटत्वादौ घटादिपदस्य शक्तिसिद्धिरिति वाच्यं। आकाशपदशक्तिप्रमया शब्दाश्रयत्वेनेव घटादिपदशक्तिप्रमयापि घटत्वादिना नियतोप-

---

काशपदान्निष्प्रकारकमेवाकाशस्मरणं स्मृतेर्विशिष्टज्ञानत्वस्य नियमोऽसिद्ध एवेति भावः। न चाकाशोद्रव्यमित्यादौ भिन्नप्रकारोपस्थितिं विना कथमभेदान्वय इति वाच्यं। विभक्त्युपनीतसंख्यामादाय तथात्वादित्याहुः। 'तत्रापीति, न चान्वयप्रकारकतया साधनत्वं शाब्दमिति, कार्म्याव्यवहितसाधनतया ज्ञातमेवेति च परेण प्रागभिधानात्तद्विरोधः। मतान्तरेणास्योक्तत्वादित्येके।

कल्पकं तर्ह्यन्वयबोधदशायामितरान्वयानुपपत्त्यभावा-

स्थितेरसिद्धत्वात् द्रव्यत्वादिप्रकारकघटत्वावच्छिन्नघटपदशक्तिप्रमया तादृशकेवलघटपदशक्तिप्रमया वा द्रव्यत्वादिप्रकारेणापि घटोपस्थितेः, परन्तु तदुपस्थितिर्न शाब्दबोधाङ्गमित्येवाभ्युपगमात् तावता घटत्वादौ घटादिपदस्य शक्तिसिद्धावपि हरिपदादेश्चन्द्रत्वादौ शक्तिविलोपापत्तेर्दुर्वारत्वाच्च तत्र कदाचित् सिंहत्वादिनाप्युपस्थितेः सर्व्वसिद्धत्वात् तथाचाकाशपदाशक्यतावच्छेदकस्य शब्दाश्रयत्वस्य कुतः शाब्दबोध इत्यत आह, 'अस्तु वेति, 'पदादपीति द्रव्यादिपदादिवाकाशादिपदादपीत्यर्थः, शक्त्येति शेषः, 'निर्व्विकल्पकं' आकाशादेः शब्दाश्रयत्वाद्यप्रकारकमेव शाब्दज्ञानं। न चैवं तत्र कः प्रकार इति वाच्यं। सङ्ख्यादेः पदान्तरोपस्थितस्यैव तत्र प्रकारत्वसम्भवादिति भावः ।

मीमांसकः शङ्कते, 'तर्हीति अपूर्व्वस्यावाच्यत्वे इत्यर्थः, 'अन्वयबोधेति स्वर्गसाधनत्वत्वेन स्वर्गसाधनत्वान्वयबुद्धिदशायां यथा नापूर्व्वप्रत्ययस्तथेत्यर्थः, 'अन्वयानुपपत्त्यभावादिति तादृशान्वयबुद्धिदशायां स्वर्गोपधायकव्यापारोपधायकत्वं विना यागस्य स्वर्गसाधनत्वसम्बन्धोऽनुपपन्न इति स्वर्गसाधनत्वान्वयानुपपत्तिज्ञानाभावादि-

विशेषरूपेणाग्रिमबोधमभिप्रेत्येदमित्यन्ये । न चौपादानिकस्वर्गसाधनत्वपक्षे कथं योग्यताग्रहः, यागविषयकं कार्य्यमित्यनुभवानन्तरमनुपपत्तिप्रभवेष्टसाधनताज्ञाने सति स्वर्गकामबोधकयागविषयककार्य्यमित्यनुभवादित्याहुः । कार्य्यत्वमात्रं नित्यस्थलवन्नानुपपन्नं स्वर्गकामकार्य्यत्वं तदा

दग्रेऽपि कल्पना न स्यादिति चेत्, तर्हि तवापि कार्य्यताबोधानन्तरं औपादानिकसाधनताबोधो न स्यात् औपादानिकबोधेऽनुपपत्तिबोधस्य हेतुत्वात्, कल्पना-

---

त्यर्थः, 'अग्रेऽपि' तादृशान्वयबुद्ध्युत्तरमपि, 'कल्पना न स्यादिति निरुक्तान्वयानुपपत्तिज्ञानादपूर्व्वकल्पना न स्यात्, प्रतीतानुपपत्तिमूलकप्रतीतौ प्रथमप्रतीतिदशायां अनुपपत्तिज्ञानस्यापेक्षितत्वादिति भावः। तथाचापूर्व्वासिद्धिप्रसङ्ग इति भावः। 'तर्हीति यदि प्रतीतानुपपत्तिमूलकप्रतीतौ प्राथमिकप्रतीतिदशायामनुपपत्तिज्ञानमपेक्षितं तदेत्यर्थः, 'कार्य्यताबोधानन्तरमिति अपूर्व्वनिष्ठकार्य्यताबोधानन्तरमित्यर्थः, 'औपादानिकेति यागे काम्यसाधनत्वविशिष्टकामिकार्य्यत्वप्रकारकौपादानिकबोधो न स्यादित्यर्थः, अपूर्व्वकार्य्यताबोधदशायां यागविषयककार्य्यस्य कामिकार्य्यत्वं न यागकृतिं विना सा च कृतिर्न यागस्य कामिकार्यत्वविशिष्टकाम्यसाधनताधियं विना(१) इत्यनुपपत्तिज्ञानाभावादिति भावः। ननु प्रतीतानुपपत्तिमूलकप्रतीतावेव प्राथमिकप्रतीतिदशायामनुपपत्तिज्ञानमपेक्षितं औपादानिकबोधस्य न तथेत्यत आह, 'औपादानिकेति औपादानिकशाब्दबोधेऽपीत्यर्थः, 'अनुपपत्तिबोधस्य' प्रतीतानुपपत्तिबोधस्य, 'हेतुत्वादिति, भवन्मये हेतुत्वादित्यर्थः, प्रत्यक्षत्वादिवदौपादानि-

---

(१) कामिकार्य्यत्वविशिष्टेष्टसाधनताधियं विनेति ग०।

---

अप्रतीतमेवेति कथमनुपपत्तिप्रभवतज्ज्ञानमिति चिन्त्यं।

ननु दोषस्याप्रामाण्यप्रयोजकत्वमुक्तयोग्यतापक्षे प्रागुक्तं तच्च भ्रान्त-प्रता-

माचोच्छेदश्चैवं स्यात् प्रतीतानुपपत्तिमूलकत्वात् कल्प-

---

कत्वमप्यनुभवत्वव्याप्यो धर्म्मविशेषः, स च जातिरूप उपाधिरूपोवे-त्यन्यदेतत् । तदवच्छिन्नं प्रति च प्रतीतानुपपत्तिप्रतिसन्धानसचिवः शब्द एव पुनरनुसन्धीयमानो हेतुरतएवानुपपत्तिसचिवः शब्द-एव पञ्चमं प्रमाणमिति तव सिद्धान्तादिति भावः । 'एवं स्यादिति प्रतीतानुपपत्तिमूलकप्रतीतौ प्रथमप्रतीतिदशायामनुपपत्तिज्ञानस्या-पेक्षितत्वे सति स्यादित्यर्थः, 'कल्पनाया इति, कल्पनात्वमर्थापत्तित्व-व्याप्यो जातिविशेषस्तदवच्छिन्नं प्रति प्रतीतानुपपत्तिज्ञानं कारण-मिति तव सिद्धान्तादिति भावः । ननु स्वीयबाधनिश्चयविरहो न योग्यता तथा सति शाब्दप्रमां प्रति अनुगतकारणालाभात् । न च दोषाभाव एव तथा, भ्रान्त-प्रतारकवाक्य-शुकादिविसंवादिवाक्ययो-रव्याप्त्यतिव्याप्त्यापत्तेः शाब्दसामान्यं प्रति क्लृप्तकारणभावस्यैव विशेष-रूपेण शाब्दप्रमाहेतुत्वनियमविलोपापत्तेश्च । अतएव स्व-परसाधा-रणबाधकप्रमाविरह एव स्वरूपसन् शाब्दप्रमाहेतुरित्यपि न तस्य शाब्दसामान्यकारणत्वेनाक्लृप्तत्वादतः स्व-परसाधारणबाधकप्रमावि-रह एव योग्यता वाच्या सा च न स्वरूपसती शाब्दसामान्यहेतुः शाब्दभ्रमोच्छेदापत्तेः किन्तु तज्ज्ञानं शाब्दसामान्यहेतुः तत्प्रमा च शाब्दप्रमायामित्येवोपेयं, तथाच प्रकृते यागे परकीयबाधक-

रकवाक्ये तदभावादयुक्तं, आवश्यकयोग्यताप्रमात्वाप्रमात्वाभ्यामेवोपपत्तौ च क्ल सयार्थवाक्यार्थज्ञान-तदभावयोर्गुण-दोषतया हेतुत्वकल्पना गौरवात्, किञ्च परबाधकप्रमानिश्चये स्वबाधकप्रमाविरह-तन्निश्चयदशायामपि स

नायाः। वस्तुतस्तु बाधकप्रमाविरहस्य योग्यतात्वे संशयसाधारणं ज्ञानमात्रमेव तस्याः प्रयोजकं तेन यत्र बाधकप्रमानिश्चयस्तत्रैवान्वयबोधाभावोऽन्यत्र तु तद्वीमात्राच्छाब्दबोध इति यागेऽपि योग्यतासंशये-नान्वयबोधाप्रतिबन्धः बाधसंशयस्याप्रतिबन्धकत्वात्, अन्यथा अनुमानाद्युच्छेदप्रसङ्गात्(१)। अपूर्व्ववाच्यत्वे-

प्रमाविरहस्य निश्चेतुमशक्यतया कथमन्वयधीरित्यत आह, 'वस्तु-तस्त्विति, 'बाधकप्रमाविरहस्य' स्व-परसाधारणबाधकप्रमाविरहस्य, 'योग्यतात्वे' योग्यतात्वेऽपि, 'अन्यत्र त्विति यत्र न बाधकप्रमानिश्चय-एवेत्यर्थः, 'तद्धीमात्रात्' स्व-परसाधारणबाधकप्रमाविरहज्ञानमा-त्रात्। ननु स्व-परसाधारणबाधकप्रमाविरहसंशये तदाहितबाधसंश-यस्यावश्यकत्वात् कथं शाब्दबोध इत्यत आह, 'बाधसंशयस्येति, 'अनुमानादीति सन्दिग्धसाध्यकानुमानादीत्यर्थः। अस्तु वा स्वर्ग-कामकृतिसाध्यत्वान्वये स्वर्गसाधनत्वं योग्यता तथापि संशयसाधारण-तज्ज्ञानस्यैव तदन्वयबोधहेतुतया यागेऽपि तत्संशयादेव स्वर्ग-कामकृतिसाध्यत्वशाब्दबोधोऽस्तु किमपूर्व्ववाच्यत्वेनेत्याह, 'अपूर्व्ववाच्य-त्वेऽपीति साध्यतासम्बन्धेन कृतिमत्त्वलक्षणकार्य्यत्वरूपेणापूर्व्वस्य लिङ्-

(१) अनुमानमात्रोच्छेदप्रसङ्गादिति क०।

शाब्दधीरिति तद्विरहोऽपि योग्यतान्तर्भूत इत्यरुचेराह, 'वस्तुतस्त्विति। 'अन्यथेति, विशेषदर्शनेऽपि संशयो वर्त्तते अनुमित्या नाश्यते इति मतेनेद-

ऽप्यपूर्व्वे स्वर्गसाधनतासंशयाद्योग्यतायाः संशय एव अपूर्व्वस्य प्रथमं स्वर्गसाधनत्वानिश्चयादुपादानस्यान्विताभिधानोत्तरकालीनत्वात् साधक-बाधकप्रमाणाभावेन द्वारसम्भावनया साधनत्वसम्भावनातः स्वर्ग-

पदवाच्यत्वेऽपीत्यर्थः, 'अपूर्व्वे' लिङ्पदार्थतावच्छेदककार्य्यत्वावच्छिन्ने, 'स्वर्गसाधनतासंशयादिति कस्यचित् पुरुषस्य स्वर्गकामकृतिसाध्यत्वान्वयपूर्व्वं स्वर्गसाधनतायाः संशयस्यैव सत्त्वादित्यर्थः, 'योग्यतायाः संशय एवेति स्वर्गसाधनत्वरूपयोग्यतायाः संशय एवेत्यर्थः, अपूर्व्वनिष्ठस्वर्गकामकृतिसाध्यत्वान्वयबोधे क्वचिद्धेतुरिति शेषः। 'अपूर्व्वस्य' लिङ्पदार्थतावच्छेदकनिरुक्तकार्य्यत्वावच्छिन्नस्य, 'प्रथममिति, सर्व्वेषामिति शेषः। नन्वनुपपत्तिज्ञानसहकारादौपादानिकस्वर्गसाधनतानिश्चयः सर्व्वेषामेव यागविषयकेऽपूर्व्वे भविष्यतीत्यत आह, 'उपादानस्येति यागविषयककार्य्यस्य स्वर्गकामकृतिसाध्यत्वं स्वर्गसाधनत्वं विना अनुपपन्नमित्यनुपपत्तिज्ञानस्येत्यर्थः, 'अन्विताभिधानेति अपूर्व्वे स्वर्गकामकृतिसाध्यत्वान्वयबोधोत्तरकालीनत्वादित्यर्थः, तथाचान्विताभिधाने उपादानेन स्वर्गसाधनत्वोपस्थितिः स्वर्गसाधनत्वोपस्थितौ चान्विताभिधानमित्यन्योन्याश्रय इति भावः। 'साधकेति, तथाचेत्यादिः, 'द्वारसम्भावनयेति पुष्टिं प्रति घृतपानस्येव स्वर्गं प्रति

मित्येके। सन्देहोत्तरक्षणे यत्र स्मरणात्मकः परामर्शस्तदभिप्रायेणेदमित्यन्ये।
'अपूर्व्वेति, न च यागविषयकं कार्य्यमित्यनुभवानन्तरमौपादानिकस्वर्गसाधनताबोधे सति स्वर्गकामान्वय इति वाच्यं। स्वर्गकामकार्य्यस्यैवानुपपन्नतया

कामान्वय इति तुल्यं। अपि च यथा न क्रिया स्थिरेत्ययोग्या तथा कार्य्यमपूर्व्वमपि विशिष्टं न स्थिरं कृतेर्विनष्टत्वात्। न चाधिष्ठाने अपूर्व्वमात्रे साधनत्वं, तस्य पदार्थैकदेशत्वेनान्वयाप्रतियोगित्वात्।

---

यागस्यापि किञ्चिन्मध्यवर्त्तिद्वारं स्यास्यतीति सम्भावनयेत्यर्थः, 'साधनत्वसम्भावनातः' यागेऽपि स्वर्गसाधनत्वसम्भवनातः, 'स्वर्गकामान्वयः' स्वर्गकामकृतिसाध्यत्वान्वयसम्भवः, 'तुल्यमिति, तथाच किमपूर्व्ववाच्यत्वेनेति भावः। अपूर्व्वस्य लिङ्पदवाच्यत्वे साधकाभावमुक्का बाधकमप्याह, 'अपि चेति, 'अयोग्या' साक्षात्स्वर्गसाधनत्वान्वयाविशेष्या, 'विशिष्टं' साध्यतासम्बन्धेन कृतिमत्त्वलक्षणकार्य्यत्वविशिष्टं, 'न स्थिरं' न स्वर्गाव्यवहितपूर्व्ववर्त्ति। न च गौर्द्रव्यं नीला गौरित्यादौ गोत्वोपलक्षिते द्रव्यत्वादेरन्वयवदत्रापि कृत्युपलक्षिते स्वर्गसाधनत्वान्वयो भविष्यतीति वाच्यं। तथा सति फलाव्यवहितपूर्व्वस्थायिधर्म्मस्यैव(१) वैदिकविधिजन्यसाक्षात्फलसाधनताबोधे विशेष्यतावच्छेदकत्वमिति नियमभङ्गापत्तेरिति भावः। 'अधिष्ठाने' वस्तुगत्या साध्यतासम्बन्धेन कृतिमत्त्वाश्रये, 'साधनत्वं' एकत्र द्वय-

(१) स्वर्गाव्यवहितपूर्व्वस्थायिधर्म्मस्यैवेति ग०।

---

तदुपपादकत्वेनैव तत्कल्पनात्, अन्यथा नित्येऽपि कार्य्यत्वमात्रानुपपत्त्या तत् कल्प्येतेति। 'अपि चेति, यद्यपि घटमानयेत्यादौ घटत्वमिवावच्छेदकतया वासस्वी देवदत्तपदवाच्य इत्यत्र वास इवोपलक्षणतयान्वयो योग्य एव, तथापि विशेषणतयान्वये अयोग्यत्वं बोध्यं, अतएव 'विशिष्टमिति। वस्तुतस्तु पूर्व्वदोष एव तात्पर्य्यं। 'तस्येति, यद्यपि प्राङ्कः पाणइर एव इत्यादा-

अन्ये त्वन्वयविरोधिरूपविरहो योग्यता, अतएव वह्निना सिञ्चतीत्यत्र तद्भ्रमे भवत्यन्वयभ्रमः। यागे चान्वयविरोधिरूपविरहो योग्यानुपलब्ध्या सुगम एव। न च यागे आशुविनाशित्वं कालान्तरभाविफल-जनकत्वविरोधीति वाच्यं। अनुभवे क्वाथपाने चाशु-

मितिन्यायेन यागविषयकत्व-साचात्साधनत्वयोरुभयोरन्वयः, न तु साध्यतासम्बन्धेन कृतिविशिष्टत्वं तत्र विशेष्यतावच्छेदकमिति भावः। 'अन्वयाप्रतियोगित्वादिति स्वरूपतोऽन्वयप्रतियोगित्वासम्भवादि-त्यर्थः। अस्तु वा पदादपि निर्विकल्पकमिति मते आकाशमित्यादौ स्वरूपत एवाकाशस्य सञ्ज्ञांशे विशेष्यत्वात् 'पदार्थैकदेशत्वेनेत्य-भिहितं, पदार्थैकदेशत्वश्चावच्छिन्नशक्तिविशेष्यत्वं।

'अन्वयविरोधीति विशेष्ये विशेषणासमानाधिकरणधर्म्मविरह-इत्यर्थः, 'तद्भ्रमे' वह्निकरणकत्वविरोधिधर्म्माभावभ्रमे, 'अन्वय-विरोधीति स्वर्गसाधनत्वविरोधीत्यर्थः, 'सुगम एव' सुज्ञेय एव।

वयोगव्यवच्छेदादौ पदार्थैकदेशपाण्डरत्वाद्यन्वयो दृष्टस्तथाप्यनन्यगत्या तत्र तथा अत्र तु न तथेत्याशयः। नन्वेकविशेषबाधे सामान्यज्ञानमपरप्रकार-नियतमवश्यं वाच्यं। अन्यथैकप्रकारबाधे सामान्यनिश्चयेऽपरप्रकारसंशयः कदाचित् स्यात्। न चैवं, तथाचापूर्व्ववाक्यतेति। मैवं, तादृशसामान्यस्या-परप्रकारव्याप्यतया तन्निश्चयस्यैव विशेषदर्शनत्वादित्याहुः।

'अन्ये त्विति, अन्वयविरोधित्वमन्वयाभावव्याप्यत्वं यदि तदा केवला-न्वयिन्यव्याप्तेरिति ग्रन्थकृदुक्तयोग्यतापरत्वे अस्य पूर्व्वाविशेष इत्यनभिमति-बीजमत्रेत्याहुः। 'योग्येति, यद्यपि बाधकप्रमाविषयत्वादेरतीन्द्रियस्याप्य-

विनाशिनि कालान्तरभाविफलजनकत्वाद्यागेऽप्यन्ततस्तत्सत्त्वात्, अन्यथापूर्ववैफल्यात्। अस्मादन्वयप्रयोजकरूपवत्त्वं लघिवति चेत्, न, तत्सत्त्वेऽप्यनाप्तोक्ते व्यभिचारादन्वयविरोधित्वेन यत्किञ्चित्प्रतिसन्धानं तत्रास्त्येव अन्ततो बाधकप्रमाविषयत्वस्यैव विरोधिनोज्ञानादिति।

---

'अन्ततस्तत्सत्त्वादिति व्यापारद्वारा तत्सत्त्वादित्यर्थः, 'अन्वयप्रयोजकेति, अन्वयप्रयोजकत्वमन्वयसमानाधिकरणत्वमित्यभिमानः, 'तत्सत्त्वेऽपि' तज्ज्ञानसत्त्वेऽपि, 'व्यभिचारात्' बाधनिश्चयदशायां शाब्दबोधानुत्पादात्, प्रकृते यागेऽपि यागत्वादेरेव तादृशरूपस्य सुलभत्वाच्चेत्यपि बोध्यं। नन्वन्वयविरोधिरूपविरहज्ञानस्य हेतुत्वेऽपि अनाप्तोक्तौ बाधनिश्चयदशायां कुतो नान्वयबोधः बाधनिश्चयदशायां नियमतोऽन्वयविरोधिरूपवत्ताज्ञानाभावेन बाधनिश्चयसत्त्वेऽपि तादृशरूपविरहज्ञाने बाधकाभावादित्यत आह, 'अन्वयविरोधित्वेनेति, 'तत्रास्त्येवेति तत्र बाधनिश्चयदशायामस्त्येवेत्यर्थः। एतदपेक्षया बाधनिश्चयाभावस्यैव लघुत्वं बाधनिश्चयदशायामन्वयविरोधित्वेनावश्यं कस्यचिद्ग्रहे मानाभावश्चात्रास्वरसो बोध्यः।

---

न्वयविरोधित्वात्तदभावोऽशक्यनिश्चय एव तथापि योग्यमात्राभिप्रायेणेदं। अयमपि वा अस्वरसोऽत्र बोध्यः। 'अन्तत इति वस्तुतस्तादृशफलजनकत्वसत्त्वादित्यर्थः। 'व्यभिचारादिति, तदज्ञानेऽप्यन्वयबोधाभावादित्यर्थः। प्रकृते तु नायं दोष इत्याह, 'अन्वयेति।

काम्यसाधनत्वज्ञानमेव प्रवर्त्तकं लाघवात्। सिद्धौ-दनस्तृप्तिकामो लघूपाये भोजने प्रवर्त्तते न तु पाके गुरूपायत्वात्, जलाद्यर्थी च सन्निहिते। अतएव ज्योतिष्टोमादौ श्रुतस्वर्गफलकत्वेऽपि गुरूपायत्वेनाननुष्ठानलक्षणाप्रामाण्यापत्त्या फलभूमा कल्प्यते, इष्टोत्प-

---

किञ्च कामी काम्यादन्यदित्याद्युक्तं नियमं दूषयति, 'काम्येति, 'एवकारात् काम्याव्यवहितसाधनताज्ञानव्यवच्छेदः, 'प्रवर्त्तकं' प्रवृत्ति-प्रयोजकं, तच्च न्यायनये प्रवृत्तिहेतुचिकीर्षां प्रति साक्षाज्जनकतया परनये च कामीत्यादिनियमबलेन कृतिसाध्यताज्ञानद्वारा प्रवृत्ति-हेतुचिकीर्षाजनकतयेति मतद्वयसाधारण्यं । नन्वेवं तृप्तिकामस्य सिद्धौदनस्यापि पाके प्रवृत्तिप्रसङ्गः पाकस्यापि परम्परया इष्टकृति-साधनत्वात्[१] इत्यत आह, 'सिद्धौदन इति, 'गुरूपायत्वादिति बलवदनिष्टाजनकत्वज्ञानाभावादित्यर्थः। तादृशाजनकत्वज्ञानस्य प्रव-र्त्तकत्वे युक्तिमाह, 'अतएवेति तादृशाजनकत्वज्ञानस्य प्रवर्त्तकत्वा-देवेत्यर्थः, 'ज्योतिष्टोमादौ' बह्वायाससाध्यज्योतिष्टोमादौ, 'श्रुत-स्वर्गफलकत्वेऽपि' श्रुतस्वर्गफलकत्वस्याविशिष्टत्वेऽपि, 'फलभूमा कल्प्यत-इति योजना, स्वल्पायाससाध्यज्योतिष्टोमादिजन्यस्वर्गव्यावृत्तं ज्योति-

---

(१) पाकस्यापि काम्यतृप्तिसाधनत्वादिति ग० ।

---

कामी काम्यादन्यदित्यादि दूषयति, 'काम्येति, 'भूमेति बाहुल्यमुत्कर्ष-रूपवैजात्यं वेत्यर्थः। विशिष्य कल्पकाभावाद्वैलक्षण्यत्वेन सामान्यतः कल्पन-मबाधितं विषयीकरोतीति बोध्यं। गुरुत्वमननुगतमतः प्रतिबन्धकान्तर-

त्यनान्तरीयकश्रमजनकत्वं वा प्रतिबन्धकं। अपि च काम्याव्यवहितसाधनतया ज्ञातमेव यदि कामी कर्त्तव्यतयाऽवैतीति नियमः तदा पूर्व्वमपि कार्य्यतया नावगम्येत अन्विताभिधानात् पूर्व्वं काम्यसाधनताबोधकाभावादुपदानस्यान्विताभिधानोत्तरकालीनत्वात्।

---

ष्टोमादिसामान्यजन्यतावच्छेदकवैजात्यव्याप्यमुत्कर्षरूपस्वर्गनिष्ठवैजात्यान्तरं कार्य्यतावच्छेदकं कल्प्यत इति तदर्थः, तत्र हेतुमाह, 'गुरूपायत्वेनेति, यदि न तत्कल्पनीयं किन्तु ज्योतिष्टोमत्वेन विजातीयस्वर्गत्वेन सामान्यकार्य्य-कारणभाव एवाभ्युपेयस्तदा स्वल्पायाससाध्यज्योतिष्टोमादेव ज्योतिष्टोमसामान्यजन्यतावच्छेदकवैजात्याक्रान्तस्वर्गोत्पत्तिसम्भवज्ञानदशायां बलवद्द्वेषविषयदुःखजनकत्वज्ञानेनेत्यर्थः, 'अननुष्ठानलक्षणेति प्रवृत्त्यविषयत्वरूपाप्रामाण्यापत्त्येत्यर्थः, स्वल्पायाससाध्यादेवेच्छाविषयतावच्छेदकवक्रायाससाध्यजन्यतावच्छेदकधर्म्मावच्छिन्नोत्पत्तिसम्भवज्ञानेऽपि बक्रायाससाध्यजन्यनान्तरीयकदुःखेऽवश्यं बलवद्द्वेषोत्पत्तिरित्यभिमानः। 'इष्टोत्पत्तीति बलवद्द्वेषविषयश्रमजनकत्वज्ञानमेवेत्यर्थः, 'काम्याव्यवहितेति यदि तदव्यवहितसाधनतया ज्ञातमेव तत्कामनाजन्यप्रवृत्तिहेतुकार्य्यताज्ञानविषयो भवतीति नियम इत्यर्थः, 'उपादानस्येति परम्परया स्वर्ग-

माह, 'इष्टेति बलवद्द्वेषविषयदुःखजनकत्वज्ञानमित्यर्थः, 'बोधकाभावादिति। न च ज्ञानपदं ज्ञायमानपरं शाब्दबोधदशायाश्च तत्सम्भवत्येवेति वाच्यं। तदा व्याप्तिप्रयोजकत्वात् तदौपादानिकत्वपक्षे दोषतादवस्थ्याच्च। यद्वा

अतएव काम्यादन्यदित्यादि प्रकारद्वयं निरस्तं, कार्य्यताबुद्धौ प्रवृत्तौ वा काम्यसाधनत्वस्यैव हेतुत्वात् । न च कार्य्ये घटादौ लिङ्शक्तिग्रहः, यथा लिङ्शक्तिग्रहकाले स्वर्गकामान्वयायोग्यत्वात् क्रियानिरासस्तथा यागान्वयानुपपत्त्या घटादिनिरासोऽपि स्यात् । न हि यागविषयको घटादिः सम्भवति, अन्यथा अन्विताभिधानदशायामपि तन्निरासो न स्यात् । स्यादेतत्,

---

साधनीभूतयागविषयककार्य्यस्य स्वर्गाव्यवहितसाधनत्वं विना स्वर्गकामकृतिसाध्यत्वमनुपपन्नमित्यनुपपत्तिज्ञानस्य स्वर्गाव्यवहितसाधनत्वज्ञापकस्येत्यर्थः, 'अन्विताभिधानेति स्वर्गकामकृतिसाध्यताबोधेत्यर्थः। न च संशयात्मकमेव तज्ज्ञानं पूर्व्वं भविष्यतीति वाच्यं । अपूर्व्वस्य पूर्व्वमनुपस्थित्या संशयस्याप्यसम्भवात् संशयस्य हेतुत्वे यागेऽपि तादृशसाधनत्वसम्भावनातः कर्त्तव्यताबोधसम्भवादपूर्व्ववाच्यताभ्युपगमस्य व्यर्थत्वप्रसङ्गाच्चेति भावः । 'प्रकारद्वयमिति, 'अथवा-यद्वेत्यादिनोक्तं प्रकारद्वयमित्यर्थः, 'कार्य्यताबुद्धौ' प्रवृत्तिहेतुकार्य्यताबुद्धौ, एतच्च परनये, 'प्रवृत्तौ वेति स्वमते, 'काम्यसाधनत्वस्यैव' साक्षात्-परम्परासाधारणकाम्यसाधनत्वज्ञानस्यैव । कार्य्ये लिङः शक्तिग्रहासम्भवमाह, 'न चेति, 'स्वर्गकामान्वयायोग्यत्वादिति प्रथमं स्वर्ग-

---

अव्यवहितत्वांशबोधकाभावान्न तथात्वमिति भावः । 'अतएवेति वक्ष्यमाणादेवेत्यर्थः, अप्रयोजकत्वे तात्पर्य्यं । व्युत्पत्तिविरहमाह, 'न चेति । 'न

स्वर्गकामान्वयानुपपत्त्या तदन्वययोग्ये लिङ्शक्तिग्रहः स्थायिकार्य्यञ्च तथा, अतः शक्तिग्रहकाले क्रियानिरासो युज्यते न घटादेः। यजिपदमन्तर्भाव्य स्वर्गकामपद-लिङ्पदाभ्यां अन्विताभिधानदशायां घटादिनिरासो यागान्वयायोग्यत्वादिति, तत् किं शक्तिग्रहकाले यागान्वयानुपपत्तिर्हस्तपिहिता येन घटादिनिरासिका सा न प्रतिसन्धीयेत। प्रत्युत प्रत्ययस्यान्तरङ्गप्रकृत्यर्थान्वयं बोधयत एवेतरान्वयबोधकत्वमिति तदन्वयानुपपत्तिप्रतिसन्धानमेव प्राथमिकं, पुरुषदोषादप्रतिसन्धाने शक्तिग्रहो भ्रम एव घटादेरशक्यत्वात् पुरुष-

---

कामकृतिसाध्यत्वान्वयायोग्यत्वादित्यर्थः, । 'स्वर्गकामान्वयेति प्रथमं स्वर्गकामकृतिसाध्यत्वान्वयेत्यर्थः, 'स्थायीति स्वर्गाव्यवहितपूर्व्वस्थायीत्यर्थः, 'तथा' प्रथमं स्वर्गकामकृतिसाध्यत्वान्वययोग्यं, 'न घटादेरिति, तस्य स्वर्गाव्यवहितपूर्व्वमपि स्थायित्वसम्भवादित्यभिमानः, दूषयति, 'तत्किमिति, 'अन्तरङ्गेति स्वार्थनिष्ठेत्यर्थः, 'अप्रतिसन्धान इति यागान्वयानुपपत्तेरप्रतिसन्धान इत्यर्थः। ननु घटादिकमपि शक्यमेव योग्यतावशाच्चापूर्व्वलाभ इत्यत आह, 'पुरुषविशेषं प्रतीति यस्य

---

हीति, प्रागुक्तं विषयत्वमसम्भवीति भावः। 'अप्रतिसन्धाने' घटान्वयानुपपत्तेरप्रतिसन्धाने। नन्वप्रतिपाद्यघटादिवृत्त्यपि कार्य्यत्वं प्रवृत्तिनिमित्तमित्युक्तं तदाश्रयतयैव घटादेरपि शक्यत्वं स्यादित्यत आह, 'पुरुषेति,

विशेषं प्रति अपूर्व्ववाच्यतापत्तेश्च। घटादीनामनन्तत्वेन यदि तन्निरासो न शक्यः तदा अन्विताभिधानदशायामपि न स्यात् पाकादीनां क्रियात्वेनेव पृथिवीत्वादिना निरासासम्भवाच्च। एवञ्च प्रचुरद्रव्य-गुण-कर्म्मसु निरस्तेषु क्व कार्य्ये धर्म्मिणि शक्तिग्रहः। न च विशेषे निरस्तेऽपि कार्य्यसामान्यं न निरस्त-

पुरुषस्य घटादौ शक्तिग्रहकाले यागान्वयानुपपत्तिर्न स्फुरिता तस्यैव पुरुषस्येत्यर्थः, 'अपूर्व्ववाच्यतापत्तेः' अपूर्व्वस्य लिङ्पदप्रतिपाद्यतापत्तेः, अपूर्व्वस्य विधिजन्यशाब्दबोधविषयतापत्तेरिति यावत्, तथाच यस्य घटादौ यागान्वयानुपपत्तिः स्फुरिता तस्य लिङः कार्य्यशक्तिग्रहासम्भवेन यजेतेति विधिवाक्याद्यागविषयकं कार्य्यमिति शाब्दबोधो न स्यात्, न चेष्टापत्तिः, तस्यापि पुरुषस्य विधिवाक्यजन्यशाब्दबोधस्यानुभवसिद्धत्वादिति भावः। ननु घटादीनामनन्तत्वेन तत्रानुपपत्तिप्रतिसन्धानमेवानुपपन्नमित्यत आह, 'घटादीनामिति, 'तन्निरासः' तन्निष्ठानुपपत्तिग्रहः, 'न स्यात्' अनुपपत्तिग्रहो न स्यात्, 'निरासासम्भवात्' अनुपपत्तिग्रहासम्भवात्। 'निरस्तेषु' शक्तिग्रहविषयताबाधकविशिष्टेषु, 'निरस्तेऽपि' शक्तिग्रहविषयताबाधकविशिष्टे-

तथाच यत्रानुपपत्तिप्रतिसन्धानं तत्र शाब्दबोधो न स्यात्। न चेष्टापत्तिः, अनुभवविरोधात्, तदप्रतिसन्धाने क्रियायामपि कार्य्यत्वान्वयस्य सुवचत्वमित्यपि बोध्यं। 'एवञ्चेति, ननु सामान्यलक्षणाभ्युपगमपक्षे कार्य्यत्वेनोपस्थितेऽपूर्व्वे शक्तिग्रहो यथाच नापूर्व्वत्वक्षतिस्तथा प्रागुक्तमिति चेत्, न,

मिति वाच्यं। न हि विशेषाविषयं सामान्यज्ञानं सम्भवति। एतेनापूर्व्वसाधारणकार्य्यत्वेन घटादौ शक्तिग्रह इति परास्तं। अगृहीतासंसर्गेषु स्थायित्व-कार्य्यत्व-स्वर्गजनकत्वेषु तज्ज्ञानेषु वा शक्तिग्रह इत्यपि परास्तं, स्थायिनां घटादीनां निरासात् धर्म्ममात्रे च शक्तिग्रहस्य प्रकृतेऽनुपयोगात्। किञ्च तेषु शक्तिग्रहः

---

ऽपि, 'न निरस्तं' न शक्तिग्रहविषयताबाधकविशिष्टं। उपसंहरति, 'एतेनेति, 'ज्ञानेषु' तज्ज्ञानेषु, क्वचित्तथैव पाठः। स्थायित्वादिषु धर्म्मेषु शक्तिग्रहो धर्म्म्यन्तर्भावेन कैवल्येन वा, आद्ये 'स्थायिनामिति, 'निरासात्' यागान्वयानुपपत्त्या शक्तिग्रहविषयत्वनिरासात्, द्वितीये 'धर्म्ममात्रे चेति, 'अनुपयोगादिति धर्म्म्युपस्थित्यननुकूलत्वेनानुपयोगादित्यर्थः। ननु जातिशक्तिग्रहो व्यक्तिमिव धर्म्मशक्तिग्रह एव धर्म्मिणमुपस्थापयतीत्यत आह, 'किञ्चेति, 'समुदितेषु' मिथः सामा-

---

तन्मते पूर्व्वदोष एव तात्पर्य्यात्। 'न हीति, ननु विशेषरूपेण बाधितेऽपि सामान्यतः कार्य्यत्वेन तत्रैव शक्तिग्रहोऽस्तु अन्यथा निर्व्वह्निपर्व्वते पर्व्वतेतर-वृत्तिर्वह्निरत्र नास्तीति ज्ञानेऽनुमितेर्निर्विषयत्वापत्तिरिति चेत्, न, विशेष-बाधकस्यापि दोषत्वात् यथाचैतत्तथानुमानप्रकाशे विपश्चितं। 'एतेनेति, यद्यपि प्रागपि तदेव निरस्तं तथापि पूर्व्वं घटत्वादिनोपस्थिते कार्य्यत्वेन शक्तिग्रह इत्यपास्तं, इदानीं कार्य्यत्वेनोपस्थिते घटादौ शक्तिग्रह इति निरस्तमिति भावः। 'यद्वेत्यादिमतद्वयं निरस्यति, 'अगृहीतेति, 'तज्-ज्ञानेष्विति। यद्यपि तेषामेकं ज्ञानं प्रागुक्तं तथापि वक्त्रभिप्रायकं बहु-वचनं। 'अनुपयोगादिति अपूर्व्वलाभानापत्तेरित्यर्थः, 'समुदितेष्विति,

समुदितेषु प्रत्येकं वा, नाद्यः प्रथमं समुदायस्यैकज्ञानाविषयत्वात् विषयत्वे वा पूर्व्वमेव विशिष्टस्य सत्त्वेऽपूर्व्वत्वव्याघातः एकज्ञानविषयसाकाङ्क्षधर्म्म-धर्म्मिणोरेव विशिष्टत्वात् । न द्वितीयः एवं हि लिङ्पदात् स्मरणत्रयं यजिपदाच्च यागस्मरणं । न च चतुर्णां

---

नाधिकरणावच्छिन्नेषु, 'समुदायस्य' सामानाधिकरण्यस्य, 'एकज्ञानाविषयत्वादिति स्थायित्वादिविषयकज्ञानाविषयत्वादित्यर्थः, अपूर्व्वरूपाधिकरणस्य सामानाधिकरण्यघटकत्वादिति भावः । 'पूर्व्वमेव' शाब्दानुभवात्पूर्व्वमेव, 'विशिष्टस्य' स्थायित्वादिविशिष्टापूर्व्वज्ञानस्य, 'अपूर्व्वत्वव्याघात इति, शाब्दानुभवात्पूर्व्वं विशिष्टज्ञानाविषयत्वस्यैवापूर्व्वत्वरूपत्वादित्यभिमानः । ननु सामानाधिकरण्यघटकतया अपूर्व्वस्योपस्थितावपि स्थायित्वादिविशिष्टज्ञानं न तत्र वृत्तमेवेत्यत आह, 'एकज्ञानेति साकाङ्क्षधर्म्म-धर्म्मिणोरेकज्ञानस्यैवेत्यर्थः, 'विशिष्टत्वात्' विशिष्टज्ञानत्वात् । 'स्मरणत्रयमिति स्थाय्या-

---

एकाधिकरणवृत्तित्वं समुदायः, 'प्रथममिति, त्वयान्यथाख्यातेरनभ्युपगमादिति भावः । 'एकपदं सम्पातायातं, अतएवाग्रे पूर्व्वमननुभवादित्येव वक्ष्यतीति ध्येयं । नन्वपूर्व्वमादाय तथा बोधः स्यादित्यत आह, 'विषयत्वे वेति । ननु तावद्धर्म्मविशिष्टशरीरादेस्तथात्वमस्तु तथाचापूर्व्वस्य तदविषयत्वात् कथमपूर्व्वत्वव्याघातः । न च क्रियान्तरभावित्वमपि विवक्षितं परेणापूर्व्वत्वनियत एव शक्तिग्रहाभ्युपगमादिति वाच्यं । स्वर्गिशरीरादौ तथाप्यतिप्रसक्तेरिति चेत्, न, अव्यवहितानन्तर्य्यस्य विवक्षितत्वादिति दिक् । 'सत्त्वे' उपस्थितत्वे । तन्मतेनैवाह, 'एकेति । ननु समुदायमतिरिक्तं न ब्रूमः किन्तु

तेषां यौगपद्यमस्ति। न च प्रत्येकं शक्तिग्रहेऽपि समुदितविषयकमेकमेव स्मरणं लिङ्पदादिति युक्तं, समुदायस्य पूर्व्वमननुभवात्। स्मरणञ्च यदि साकाङ्क्ष-धर्म्म-धर्म्मिविषयकमेकं तदा अपूर्व्वत्वस्मृतिः एकज्ञानारूढयोः साकाङ्क्षधर्म्म-धर्म्मिणोरेव विशिष्टत्वात् तन्नियतत्वाद्वा। एतेन स्वर्गादिपदेषु अगृहीतासंसर्गधर्म्म-

---

दीनां स्मरणत्रयमित्यर्थः। 'अस्ति' सम्भवति, 'समुदितविषयकमिति स्थाय्यादित्रयविषयकमित्यर्थः, 'समुदायस्येति स्थाय्यादित्रयस्येत्यर्थः। 'अननुभवात्' समूहालम्बनानुभवविरहात्। ननु समूहालम्बनानुभवविरहेऽप्युद्बोधकसमाजादार्थिकं समूहालम्बनमेकं स्मरणं भविष्यतीत्यत आह, 'स्मरणञ्चेति, 'धर्म्म-धर्म्मिविषयकमिति अपूर्व्वस्थायित्वादिविषयकमित्यर्थ', 'एकज्ञानेति, 'ज्ञानपदं स्मरणपरं 'एवकारोऽप्यर्थे, तथाच साकाङ्क्षधर्म्म-धर्म्मिणोरेकस्मरणस्यापि विशिष्टज्ञानत्वादित्यर्थः। ननु तादृशानुभव एव विशिष्टज्ञानं न तु स्मरणमित्यत आह, 'तन्नियतत्वाद्वेति विशिष्टज्ञाननियतत्वाद्वेत्यर्थः,

स्थायित्वादिकमेव तथाच तत्तदुद्बोधकमानात्तत्समूहालम्बनमेकमेव स्मरणं तदेव समुदितविषयमित्यत आह, 'स्मरणञ्चेति, अन्यतरमात्रविषयत्वे निराकाङ्क्षविषयत्वे वा ज्ञातानुपयोग एव दोष इति रहस्यं। 'तन्नियतत्वाद्वेति साकाङ्क्षधर्म्म-धर्म्मिगोचरैकज्ञानारूढत्वस्य विशिष्टत्वनियतत्वाद्वेत्यर्थः। एतेन तन्मते ज्ञानाभावकालेऽपि विशिष्टसत्त्वमुपपादितमिति ध्येयं। 'एतेनेति स्वर्गस्य वाक्यार्थधीमात्रगोचरत्ववादिनस्तव मते स्वर्गपदे-

धर्म्मिषु शक्तिग्रह इति व्युदस्तं। प्रत्येक-समुदायविषयकस्मरणविकल्पग्रासात्। अस्तु वा लिङः कार्य्ये लक्षणा, यथा हि मञ्चाः क्रोशन्तीत्यादौ पुरुषविशेषः प्राग-

अन्यथा स्मृतेरप्यगृहीतग्राहितया प्रामाण्यापत्तेः, तथाच स्मृतिजनकीभूतविशिष्टज्ञानमादायैवापूर्व्वत्वक्षतिः। न च स्थायित्वादिरूपेण घटादिकमेव स्मरणविषयो नापूर्व्वमिति वाच्यं। तथासत्यनुपस्थितस्यापूर्व्वस्य शाब्दबोधविषयत्वानुपपत्तेः उपस्थितयोग्यतादिविशिष्टार्थबोधकत्वस्वभावत्वात् पदानामन्यथाऽतिप्रसङ्गादिति भावः। एवमेवालौकिकार्थेषु स्वर्गादिपदेषु शक्तिग्रह इति प्रागुक्तं दूषयति, 'एतेनेति, 'धर्म्म-धर्म्मिषु दुःखासम्भिन्नत्वादिधर्म्मसुखादिष्वित्यर्थः, 'व्युदस्तमिति स्वर्गस्य वाक्यार्थानुभवमात्रगोचरत्ववादिनस्तव मते व्युदस्तमित्यर्थः। अभ्युपगमवादेन परसिद्धान्तमात्रेणैवापूर्व्वस्य लिङ्-पदवाच्यतां खण्डयति,[१] 'अस्तु वेति, 'लक्षणा' न तु शक्तिः। नन्वेवं लाक्षणिकस्याननुभावकतया विधिवाक्यश्रवणानन्तरं यागविषयकापूर्व्वप्रत्ययो न स्यात्। न चागृहीतसंसर्गकं ग्रहण-स्मरणात्मकं ज्ञानद्वयमेकत्र भवतीति वाच्यं। सामान्यस्याप्रत्यासत्तितया अपूर्व्वस्य पूर्व्वमननुभूतत्वेन स्मरणायोगादित्यत आह, 'यथा हीति, 'प्राग-

(१) अभ्युपगममाश्रित्यैवापूर्व्वस्य लिङ्वाच्यतां खण्डयतीति ग०।

ऽप्येवं शक्तिग्रहो निरस्त इत्यर्थः। तन्मतेऽप्यपूर्व्वशक्तिकल्पनमत्यन्तासङ्गतमित्याह, 'अस्तु वेति। नन्वेवमपूर्व्वं नानुभूयेतैव लाक्षणिकस्याननुभावकत्वादित्यत आह, 'यथा हीति। एतेन लक्षणायामितरपदस्येत्यादिप्रागुक्त-

ननुभूतोऽप्यनुभूयते इतरपदाल्लाक्षणिकस्यानुभावकत्वात् तथाऽपूर्व्वमपि, अस्तु च स्वर्गकामकार्य्यविषयो याग इत्यनुभवे स्वर्गकाम-यागयोरन्वयप्रकारतया

---

ननुभूतोऽपीति समानप्रकारकस्मरणादेवेति शेषः। यद्यपि लक्षणीयार्थस्य विशेषणतयैव भानमिति नियमस्य मञ्चाः क्रोशन्तीत्यादावेव स्फुटतरो व्यभिचारस्तथापि तादृशनियमसत्त्वेऽपि न क्षतिरित्यभिप्रेत्याह, 'अस्तु चेति, 'स्वर्गकाम-यागयोरिति स्वर्गकामकृतिसाध्यत्व-यागयोरित्यर्थः, 'अन्वयप्रकारतया' विशेष्य-विशेषणतया, 'अर्थात्' अर्थापत्त्या। नन्वेवं विधिजन्यशाब्दबोधे तदुत्तरार्थापत्तौ वा क्रियायां कृतिसाध्यत्वस्याप्रकारत्वात् ततः क्रियायां कथं प्रवृत्तिः प्रवृत्तिविषयविशेष्यककृतिसाध्यताज्ञानस्यैव प्रवर्त्तकत्वादित्यत-

---

श्चाशौ व्यभिचाराप्रयोजकत्वमपि सूचितं इति मन्तव्यं। ननु पुरुषः संस्कारादुपतिष्ठते न त्वनुभूयत इत्यत आह, 'प्रागिति, एतच्च परमताभ्युपगमेनैव। न च तत्रापि कथमनुपस्थितस्यानुभवः, पुरुषत्वादिसामान्यप्रकारस्मरणे सति योग्यताबलाद्विशेषानुभवात् समानप्रकारकत्वेनैव तस्य हेतुत्वाभ्युपगमात्। यद्यपि स्वार्थादन्येन रूपेण ज्ञाते भवति लक्षणा, न चेह कार्य्यत्वादन्येन रूपेण तदुपस्थितिः, तथाप्युक्तनियमोऽप्रयोजकः, अतएव नीलोघट इत्यादौ तथैव लक्षणेति पराभ्युपगमानुसारेणेदमुक्तमिति ध्येयं। ननु विधौ न लक्षणा तदुक्तं "न विधौ परः शब्दार्थ इति चेत्, न, तस्य मतान्तरत्वात्। अतएव परस्य लौकिकी लिङ् लाक्षणिकीति। यजिपदेन स्वार्थविशेष्यकं ज्ञानं स्यादित्यनेष्टापत्तिमाह, 'अस्तु चेति, यथा तथा बोधोऽस्त्वपूर्व्वलाभः परं मृग्यत इति भावः। नन्वेतादृशो बोधो नाका-

अपूर्व्वलाभः। यद्वा स्वर्गकामकार्य्यविषयो याग इति शाब्दानुभवानन्तरमर्थाद्यागविषयकं कार्य्यमिति ज्ञानं अनुपपत्तिप्रभवं। अतएव शाब्दबोधानन्तरमौपादानिकबोधात्प्रवृत्तिः। किञ्चापूर्वंवाच्यत्वेऽपि न कलञ्जं भक्षयेदित्यादितः कलञ्जभक्षणाभावविषयकमपूर्वमवगम्यापि न प्रवर्त्तेत तदभावे, तथाहि भक्षणे रागादस्य कर्त्तव्यताबुद्धिर्जाता शब्दाच्च भक्षणाभावे, निष्फलात् कार्य्यात् सफलं गरीय इति न्यायेन सुखहेतौ भक्षण एव प्रवर्त्तेत न तदभावे, निषेधापूर्व्वमेव फल-

---

आह, 'अतएवेति विधिजन्यवाक्यार्थानुभवे क्रियायां कृतिसाध्यत्वस्याप्रकारत्वादेवेत्यर्थः, 'औपादानिकेति औपादानिकक्रियाविशेष्यककृतिसाध्यत्वबोधादेवेत्यर्थः, अपूर्व्वस्य विधिपदवाच्यत्वेऽपि तथैवाभ्युपेयत्वादिति भावः। नित्य-निषेधयोरपि तदेव लिङा विधीयत इति प्रागुक्तं दूषयति, 'किञ्चेति, 'रागात्' रागविषयसाधनताज्ञानात्, 'शब्दाच्चेति, उपादानसहकारेणेति शेषः, 'भक्षणाभाव इति, तथाचेति शेषः, 'निष्फलादिति निष्फलत्वज्ञानसमवहितात् कार्य्यता-

---

ज्ञितः कार्य्यविशेष्यकज्ञानस्यैव प्रवर्त्तकत्वाभ्युपगमादित्यत आह, 'यद्वेति, 'नित्य-निषेधयोरपि तदेव लिङा विधीयत इति प्रागुक्तं दूषयति, 'किञ्चेति, तथाचेष्टसाधनत्वशक्तिर्नापूर्व्वे इति भावः। 'न तदभाव इति, इष्टसाधनतालिङ्गककार्य्यताज्ञानस्य प्रवर्त्तकत्वादिति भावः। 'फलमिति, तथाच तदेव

मिति चेत्, न, तस्य सुख-दुःखाभावान्यतया पण्डत्वेन तदजनकतया च गौण-मुख्यप्रयोजनत्वाभावात्। सुखवदपूर्वमपि प्रयोजनमिति चेत्, न, लोके तथानवगमात्। अलौकिकयोः स्वर्गापवर्गयोः लोकावगत-

ज्ञानात्, 'सफलं' सफलत्वज्ञानसमवहितकार्य्यताज्ञानं,[१] 'फलं' इष्टं, 'पण्डत्वेन तदजनकतया चेति सुख-दुःखाभावाप्रयोजकत्वेन फलाजनकतया चेत्यर्थः, 'गौण-मुख्येति इष्टसाधनताज्ञानाधीनेच्छाविषयत्व-सुख-दुःखाभावत्वज्ञानाधीनेच्छाविषयत्वयोरभावादित्यर्थः, 'सुखवदिति यथा सुखं फलसाधनताज्ञानं विनापि सुखत्वप्रकारकज्ञानादेवेच्छाविषयस्तथा अपूर्व्वमपि फलसाधनताज्ञानं विनापि अपूर्व्वत्वप्रकारकज्ञानादेवेच्छाविषय इत्यर्थः, 'लोके' लोकेन, 'तथानवगमादिति फलसाधनत्वेनाज्ञानदशायामपूर्व्वस्येच्छाविषयत्वानवगमादित्यर्थः। नन्वेवं निषेधापूर्व्ववत्फलसाधनताज्ञानाभावेन[२] स्वर्गापवर्गयोरपीच्छाविषयत्वं न स्यादित्यत आह, 'अलौकिकयोरिति लौकिकसुख-दुःखाभावभिन्नयोरित्यर्थः, 'लोकावगतेति लौकिकसु-

(१) निष्फलादिति निष्फलत्वज्ञानसमवहितात् कार्य्यताज्ञानात् सफलत्वज्ञानसमवहितं कार्य्यताज्ञानं बलवदिति न्यायार्थ इति ग०।

(२) फलसाधनत्वाभावेनेति ग०।

फलमादायेष्टसाधनत्वसत्त्वान्नोक्त दोष इति भावः। 'गौणेति तथाच स दोषस्तदवस्थ एवेत्यर्थः। नन्वेवं स्वर्गापवर्गावपि न प्रयोजने स्यातां लोके तथानवगमादित्यत आह, 'अलौकिकयोरिति। ननु वेदे तथा स्याल्लोक-

प्रयोजनसुख दुःखाभावजातीयतया प्रयोजनत्वं, वेदेऽपि काम्यस्थले काम्यसाधनस्यैवापूर्वस्य गौणप्रयोजनस्य लिङाभिधानं काम्यसाधनताज्ञानं विना कामिकार्य्यत्वस्य बोधयितुमशक्यत्वात् न तु स्वतः प्रयोजनत्वेन तच्चासामर्थ्यादनुपयोगाच्च प्रवृत्तेर्भोजनादाविव लोकक्लृप्तकाम्यसाधनताज्ञानात् कार्य्यताज्ञानाद्वा गौणप्रयोजनत्वेनैवोपपत्तेः । नापि नित्य-निषेधयोरपूर्व्वं

---

ख-दुःखाभावगतेच्छाप्रयोजकसुखत्व-दुःखाभावत्वप्रकारकज्ञानविषयतयेत्यर्थः, 'प्रयोजनत्वं इच्छाविषयत्वं । नन्वपूर्व्वस्यापि फलसाधनताज्ञानाजन्यापूर्व्वत्वप्रकारकज्ञानजन्येच्छाविषयत्वं वेदगम्यमित्यत आह, 'वेदेऽपीति, तव मत इति शेषः, 'काम्यसाधनस्यैवेति काम्यसाधनतया ज्ञातस्यैवेत्यर्थः, 'गौणप्रयोजनस्य' फलसाधनताज्ञानाधीनेच्छाविषयस्य, 'लिङाभिधानं' लिङा कार्य्यत्वप्रकारेणाभिधानं, 'न तु स्वतःप्रयोजनत्वेनेति न तु यथोक्तेच्छाविषयत्वेनेत्यर्थः, 'तच्चासामर्थ्यादिति तेन रूपेण शक्तिविरहादित्यर्थः, 'अनुपयोगाच्चेति स्वतःप्रयोजनत्वप्रकारकज्ञानस्यानुपयोगाच्चेत्यर्थः, अनुपयोगित्वमेवोपपादयति, 'प्रवृत्तेरिति, 'लोकक्लृप्तेत्यादि प्रकारद्वयं मतभेदेन, 'गौणप्रयोजनत्वेनैवेति अपूर्व्वनिष्ठस्वतःप्रयोजनत्वज्ञानं विनैवेत्यर्थः,

---

एव लोकावगमाद्दूरादत आह, 'वेदेऽपीति, 'लिङेति, त्वन्मतइति शेषः। अनुपयोगमेवाह, 'प्रवृत्तेरिति न प्रवृत्तावुपयोगशङ्कापि साप्यन्यथैवोपपन्नेत्यर्थः।

स्वतः प्रयोजनं लिङाभिधीयते। काम्यस्थले हि धर्म्मि-ग्राहकलिङादिना प्रवर्त्तककार्य्यत्वेनापूर्वमभिहितमतोनित्यादावपि कार्य्यत्वेनापूर्वबोधनं न तु स्वतः प्रयोजनत्वेन। ननु नित्ये लोक-वेदावगतगौण-मुख्य-प्रयोजनाभावे सति लिङेवापूर्वस्य स्वतः प्रयोजनत्वं बोधयति तेन विना प्रवृत्तिपरत्वानिर्व्वाहादिति चेत्, न, निरुपधीच्छाविषयत्वं हि स्वतः प्रयोजनत्वं अपूर्वस्य

---

'धर्म्मिग्राहकेति अपूर्व्वरूपधर्म्मिग्राहकेत्यर्थः। 'प्रयोजनाभावे सतीति प्रयोजनान्तराभावेसतीत्यर्थः, 'लिङेवेति सन्ध्यामुपासीतेत्यादि-नित्यविधिस्थलीयलिङः प्रवृत्तिप्रयोजकत्वान्यथानुपपत्तिरेवेत्यर्थः, 'लिङेवेति यथाश्रुतन्तु न सङ्गच्छते 'तत्रासामर्थ्यादिति पूर्व्वम-भिधानात् 'अतोऽपीत्यादिवक्ष्यमाणग्रन्थस्य पुनरुक्तत्वप्रसङ्गाच्च, 'अ-पूर्व्वस्य' नित्यापूर्व्वस्य, 'तेन विनेति नित्यापूर्व्वस्य स्वतःप्रयोजनत्वे-न विनेत्यर्थः, 'प्रवृत्तिपरत्वेति नित्यविधिस्थलीयलिङः प्रवृत्तिप्रयो-जकत्वानिर्व्वाहादित्यर्थः, लिङो हि प्रवृत्तिप्रयोजकत्वं तदिष्टसाधन-ताज्ञानद्वारा, दृष्टञ्च नित्यापूर्व्वातिरिक्तं प्रकृते वाधितं, नित्यापूर्व्व-स्येष्टत्वञ्च न फलसाधनताज्ञानेन सम्भवति पण्डत्वादतोऽपूर्व्वस्य स्वतः-प्रयोजनत्वं विना न प्रवृत्तिपरत्वनिर्व्वाह इति भावः। 'निरुपधीति

---

परमतेनाह, 'कार्य्यत्वेति, तन्मतेनैवाह, 'काम्येति। ननु काम्ये यथातथास्तु नित्ये तु तथा स्यादित्याह, 'नन्विति, तथाचानन्यगत्या लिङस्तत्र सामर्थ्यमपि

सिद्धं लिङा बोधनीयं। न च तादृशेच्छाविषयोऽपूर्वं क्वचिदपि सिद्धं। न च लिङेवापूर्वेच्छां जनयित्वा तां बोधयति तस्यास्तत्रासामर्थ्यादिच्छायाः सामग्र्यन्तरजन्यत्वाच्च। अतोऽपि काम्ये नित्ये चेच्छाविषयत्वं प्रयोजनत्वमपूर्वस्य लिङादिना न बोध्यते अपूर्वेच्छायाः

फलसाधनताज्ञानाधीनेत्यर्थः, 'सिद्धं' वर्त्तमानं, 'लिङा' लिङ्निष्ठप्रवृत्तिप्रयोजकत्वान्यथानुपपत्त्या, 'क्वचिदपि सिद्धमिति क्वचिदपि वर्त्तमानमित्यर्थः, क्लृप्तकारणाभावेनेच्छोत्पत्तेरसम्भवादिति भावः। 'लिङेव' लिङ्निष्ठप्रवृत्तिप्रयोजकत्वान्यथानुपपत्तिरेव, 'तस्याः' अनुपपत्तेः। ननु तस्यास्तत्रासामर्थ्यमसिद्धमित्यत आह,[१] 'इच्छाया इति, 'सामग्र्यन्तरेति अनुपपत्त्यघटितसामग्रीजन्यत्वनियमाच्चेत्यर्थः। 'अतोऽपीति, 'अपिशब्दात् 'लिङस्तत्रासामर्थ्यादिति पूर्व्वोक्तस्य समुच्चयः, 'इच्छाविषयत्वं प्रयोजनत्वमिति निरुपधीच्छाविषयत्वरूपं स्वतःप्रयोजनत्वमित्यर्थः, पूर्व्वमर्थापत्त्या बोधयितुं न शक्यते इत्यभिहितमिदानीं लिङादिना शाब्दबोधोऽपि तस्य न सम्भवतीत्युच्यते इति नाभेदः। 'अपूर्व्वेच्छाया इति फलसाधनता-

(१) तस्यास्तत्सामार्थ्यमपि तथैव सिद्धमित्यत आहेति ग०

कत्वमिति भावः। 'न चेति, तथाचायोग्यत्वान्न तद्बोध इति भावः। तर्हि कार्य्यताज्ञानरूपसामग्र्यन्तरजनितामेवेच्छां सा बोधयत्वित्यत आह, 'अतोऽपीति, यद्यप्यनागतस्यापि शब्देन बोधने न दोषः, तथापि लिङस्तत्रासाम-

शाब्दज्ञानात् पूर्वं असत्त्वात् किन्तु शाब्दकार्य्यताज्ञानात् सेति। अथ नित्ये कार्य्यत्वेनैवापूर्वस्याभिधानं न तु स्वतः प्रयोजनत्वेन किन्तु लिङा अपूर्वे बोधिते तस्य स्वतः प्रयोजनत्वमिच्छाविषयत्वं सम्भवति सुखज्ञानवदपूर्वज्ञानस्यापि स्वत एवेच्छाजनकत्वात्, ततः काम्यापूर्वसाधनताज्ञानान्निषेधे कार्य्यताबोधात् प्रवृत्तिरिति चेत्, न, अपूर्वज्ञानस्येच्छाहेतुत्वेनाक्लृप्तत्वात्। काम्यापूर्व्वे हि लोकक्लृप्तेष्टसाधनताज्ञानादेवेच्छा न

---

ज्ञानानधीनाया अपूर्वेच्छाया इत्यर्थः, 'शाब्दज्ञानात् पूर्वं' शाब्दज्ञानात्पूर्वमपि, अपिशब्दादुत्तरसमुच्चयः, 'असत्त्वात्' अप्रामाणिकत्वात्, 'शाब्दकार्य्यताज्ञानादिति, फलसाधनताज्ञानसमवहितादिति शेषः, 'सा' अपूर्वेच्छा। 'अथेति, 'नित्यपदं निषेधस्याप्युपलक्षकं, एवमग्रेऽपि, 'इच्छाविषयत्वमिति निरुपधीच्छाविषयत्वमित्यर्थः, 'सम्भवति' तिष्ठति, 'सुखज्ञानवदिति सुखत्वप्रकारकज्ञानवदित्यर्थः, 'अपूर्वज्ञानस्येति नित्य-निषेधापूर्वविषयककार्य्यत्वप्रकारकज्ञानस्येत्यर्थः, अपूर्वत्वप्रकारकज्ञानस्य लिङ्पदजन्यत्वाभावेन यथाश्रुतासङ्गतेः, एवमग्रेऽपि, 'स्वत एव' फलसाधनताज्ञानं विनैव, 'काम्यापूर्वेति, काम्यं

---

र्थमेव मूलदूषणं बोध्यं। 'नित्य इत्युपलक्षणं, निषेधेऽपीति द्रष्टव्यम्। अतइत्यतिदेश्यमाह, 'अपूर्व्वेति, 'काम्येति काम्यञ्च तदपूर्व्वञ्चेति काम्यापूर्व्वमित्यर्थः। 'काम्यापूर्व्वे हीति काम्यस्थलापूर्व्वे हीत्यर्थः। न च नित्य-निषेध-

त्वपूर्व्वत्वज्ञानात् । शास्त्रस्थस्य शास्त्रजकर्त्तव्यताज्ञानं बलवदिति चेत्, सफलविषयं तथा इदञ्च निष्फलविषयं । अथ प्रवृत्तिमतो निवृत्तिनियोगेऽधिकार इति यदा भक्षणप्रवृत्तस्तदा तन्निषेधे शाब्दकार्य्यताधीरिति तया विपरीतप्रयत्ने जनिते रागात् क्रियोत्पत्तिः तेनैव प्रतिबन्धात् रागकारितप्रवृत्तिमुपजीव्य हि

यदपूर्वं तत्साधनताज्ञानात्कार्य्यताबोधान्नित्ये प्रवृत्तिरिति योजना । निष्फलात् सफलं गरीय इत्यत्र शङ्कते, 'शास्त्रस्थस्येति, 'शास्त्रजेति शास्त्रप्रयोज्येत्यर्थः । प्रतियोग्यभावातिरिक्तस्थल एव निष्फलात् सफलं गरीय इत्यभिप्रायेणाशङ्कते, 'अथेति, 'प्रवृत्तिमतः' प्रतियोगिप्रवृत्त्युन्मुखस्य, प्रतियोगिगोचरप्रवृत्तिसामग्रीविशिष्टस्येति यावत्, 'निवृत्तिनियोगेऽधिकारः' तदभावत्वप्रकारकप्रवृत्तौ अधिकारः, तदभावत्वप्रकारकप्रवृत्तिमत्त्वमिति यावत्, 'भक्षणप्रवृत्तः' भक्षणगोचरप्रवृत्तिमान्, 'तदा' तदैव, 'शाब्दकार्य्यताधीः' शब्दप्रयोज्यकार्य्यताधीः, एवम्भूता प्रवृत्त्युपधायिकेति यावत् । नन्वेवं युगपद्भक्षणतदभावयोरुभयोरेव प्रवृत्तौ कुतो न भक्षणोत्पत्तिरित्यत आह, 'तयेति शाब्दकार्य्यताधियेत्यर्थः, 'विपरीतप्रयत्ने' भक्षणाभावगोचरप्रयत्ने, 'तेनैव' भक्षणाभावगोचरप्रयत्नेनैव । ननु विनिगमकाभावा-

विषयकापूर्व्वकार्य्यताज्ञानत्वेनैवेच्छाहेतुत्वं कल्प्यं मानाभावात्, प्रवृत्त्यादेरन्यथैवोपपाद्यत्वादिति भावः । ननु राग-शास्त्रयोर्बलवत्त्वे विनिगमकाभावाद्वैपरीत्यमेवास्त्वित्यत आह, 'रागेति, अन्यथा शास्त्रवैयर्थ्यं स्यात्तेन फल-

निवृत्तिकार्य्यता शास्त्रेण बोधिता अतस्तेन बोधने स्वफलं विपरीतकृतिरवश्यं उत्पाद्येति शास्त्रस्य बलवत्त्वमिति चेत्, न, निवृत्तिकार्य्यताबोधेऽपि निवृत्तौ प्रयत्न एव नोत्पद्यते यस्य प्रतिबन्धकता स्यात् स्याच्च निवृत्तिकार्य्यताबोधकमप्रमाणं निष्फलत्वेन तच्च कृते-

---

क्षणगोचरप्रयत्नेनैव तदभावगोचरप्रवृत्तिः कुतो न प्रतिबध्यतइत्यत आह, 'रागकारितेति रागकारितप्रवृत्तिमुपजीव्य या निवृत्तिनिष्ठकृतिसाध्यता रागकारितभक्षणगोचरप्रवृत्तिकालीना या कृतिर्भक्षणादिनिवृत्तिनिष्ठतत्साध्यतेति यावत्, अन्यथा भक्षणाभावगोचरप्रवृत्तेरलीकत्वादिति भावः। 'तेन' शास्त्रजकार्य्यताबोधेन, 'स्वफलं' परम्परया स्वफलं, 'विपरीतकृतिः' विपरीतस्योत्तरकालानुवृत्तिरूपा कृतिः, भक्षणाभावस्योत्तरकालानुवृत्तिरूपं कार्य्यमिति यावत्, कृतिपदस्य बहुषु कार्य्येषु प्रयोगात्, 'अवश्यमिति, अन्यथा शास्त्रस्याप्रामाण्यापत्तेरिति भावः। 'शास्त्रस्य' शास्त्रजकार्य्यताज्ञानस्यैव, 'बलवत्त्वं' स्वफलस्य भक्षणाभावोत्तरकालसम्बन्धस्योपधायकत्वं, 'निवृत्तिकार्य्यताबोधेऽपीति वेदाद्भक्षणाभावे कार्य्यताज्ञानेऽपीत्यर्थः, 'निवृत्तौ' भक्षणाभावे, 'नोत्पद्यत इति, लौकिकप्रकारणस्येष्टसाधनताज्ञानविशिष्टकृतिसाध्यताज्ञानस्याभावादिति भावः। 'बोधकमिति, शास्त्रमिति शेषः, 'कृतेरभावादिति कृतेरभावे

---

बलात्तथा कल्प्यत इति भावः। 'निवृत्तौति भक्षणादिनिषेधेत्यर्थः, 'अप्रमाणमिति। न च फलभ्रमाज्जायमानकृतिमादाय कृतिसाध्यत्वमबाधितमिति

रभावात्। अथ कलञ्जभक्षणस्य निन्दार्थवादेन बलवदनिष्टसाधनत्वावगमात् तद्भक्षणे न प्रवर्त्तत इति चेत्, एवमपि कलञ्जभक्षणे निवर्त्ततां तदभावे निष्प्रयोजनतया प्रवृत्तौ किमायातमिति। एतेन नित्यापूर्वसाधने सन्ध्यावन्दनादावपि प्रवृत्तिरपास्ता क्रियायाः कष्टत्वात् तदपूर्वस्य फलत्वात् स्वतोऽप्रयोजनत्वाच्च। तस्मात् लोके पचेतेत्यादौ कार्य्यत्वेष्टसाधनत्वरूपधर्म्मशक्तत्वेन ज्ञाता लिङ् स्वर्गकामो यजेतेत्यादौ तदन्वयं यागे योग्यतादिवशाद् बोधयतीति न वेदे धर्मिणि

---

कृतिसाध्यत्वलक्षणस्य कार्य्यत्वस्यापि बाधादिति भावः। न च फलभ्रमजन्यकृतिसाध्यत्वमादायैव न बाध इति वाच्यं। तादृशकृतिसाध्यत्वस्य वेदेनाबोधनादिति हृदयं। ‘बलवदनिष्टेति, बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनतालिङ्गककृतिसाध्यताज्ञानस्य प्रवर्त्तकत्वादिति भावः। ‘निवर्त्तताम्’ मा प्रवर्त्ततां, ‘किमायातमिति, तथा च निषेधविधेरपार्थकत्वमिति भावः। ‘एतेनेति, यदि नित्यस्य न फलमिति शेषः, ‘अपास्ता’ असम्भवा, ‘कष्टत्वात्’ इष्टासाधनत्वात्, ‘तदपूर्वस्य’ तज्जन्यापूर्वस्यापि। नैयायिकः स्वमतमुपसंहरति, ‘तस्मादिति, ‘धर्म्मिणि’ कार्य्ये, ‘स्वर्गसाधनता’ स्वर्गसाधनत्वत्वरूपेण स्वर्ग-

---

तद्बोधकं प्रमाणमिति वाच्यं। ममेदं कार्य्यमिति हि ज्ञानं ततस्तथाच यस्य न तद्भ्रमस्तं प्रति मदंशान्वितकृतेर्बाधात्तथात्वमित्याहुः। उपसंहरति, ‘तस्मादिति। नन्वेवमपूर्व्वमप्रमाणकं स्यादित्यत आह, ‘प्रतीतावे-

शक्तिकल्पना प्रतीता च स्वर्गसाधनता साक्षादसाधनस्य यागस्य व्यापारमन्तरेणानुपपद्यमाना तन्निर्व्वाहकं व्यापारमपूर्व्वं कल्पयति। ननु निरुपधिपूर्ववर्त्तिता कारणता सा व्यापारेण निर्व्वाह्यत इत्यत्र कोऽर्थः, किं क्रियते, उत ज्ञाप्यते, नाद्यः उत्तरवर्त्ति-

---

साधनता। तटस्थः शङ्कते, 'नन्विति, 'निरुपधीति अनन्यथासिद्धेत्यर्थः, 'पूर्ववर्त्तिता' पूर्वकालसम्बन्धिता, 'सेति, यागस्येति शेषः, 'क्रियते' जन्यते, 'उत्तरवर्त्तित्वेनेति यागनिष्ठपूर्वकालसम्बन्धिताया उत्तरवर्त्तित्वेनेत्यर्थः, 'व्यापारस्य' अपूर्वस्य, 'असामर्थ्यात्' जनकत्वासम्भवात्, एतच्च पूर्वकालसम्बन्धित्वं कारणत्वमित्यभिप्रायेण। वस्तुतस्तु नियतपूर्ववर्त्तितावच्छेदकधर्म्मवत्त्वं कारणत्वं तस्य च प्रकृते यागत्वादिरूपतया नित्यत्वेन तत्रापूर्वस्य न जनकत्वसम्भव इत्येव परमार्थः।

---

वेति। ननु यदीष्टसाधनतानिश्चयः प्रवर्त्तकस्तदा यागे सत्यवश्यं फलमिति निश्चयाभावेऽपि तन्निश्चयात् प्रवर्त्तेत। न चेष्टापत्तिः, बहुवित्तव्ययायाससाध्ये फलसन्देहे प्रवृत्त्यनुपपत्तेः, वैदिककर्म्मणि फलनिश्चयादेव प्रवृत्तेरित्युक्तत्वाच्चेति चेत्, अत्राहुः, साङ्गाद्वैदिककर्म्मण इति न्यायादङ्गाद्युपहितयागादवश्यं फलमिति निश्चयादेव यागे प्रवर्त्तते। न च कर्म्मनाशापारगमनादिशङ्कया प्रथमं फलनिश्चयोऽशक्य एवेति वाच्यं। अतीन्द्रियोपाधिशङ्कापिशाचीवत्तादृशशङ्कापिशाच्या अकिञ्चित्करत्वात्। तादृशशङ्काविरहकाल एव प्रवर्त्तत इत्यन्ये। नन्वपूर्व्वसत्त्वे तस्य वाच्यत्वकल्पने विवादः स्यात्तदेव तु नास्ति मानाभावादिति तटस्थः शङ्कते 'नन्विति। 'अन्य

त्वेन व्यापारस्य तत्रासामर्थ्यात्, नेतरः लिङ्गैव तद्बोधनात् चिरध्वस्तं कारणं व्यापारेण व्याप्तमिति चेत्, न, विपक्षे बाधकाभावेनाप्रयोजकत्वादन्यथा ऐन्द्रियकं कारणमतीन्द्रियव्यापारकमिति यागानुभवयोर्दर्शनात् तथा कल्प्येत ।

'लिङ्गैवेति, तथाच व्यापारकल्पने मानाभाव इति भावः । व्यापारे मानमाशङ्कते, 'चिरेति, व्याप्यत्वं तादात्म्येन व्यापकत्वञ्च जनकतासम्बन्धेन बोध्यं, 'अन्यथेति सहचारदर्शनमात्राद्व्याप्तिकल्पन इत्यर्थः, 'तथा कल्प्येतेति दण्डादावप्यतीन्द्रियव्यापारकल्पनापत्तेरित्यर्थः । न च व्यापारमन्तरेण यागादेः स्वर्गादिजनकत्वे स्वर्गादिधाराया अनिवृत्त्यापत्तिरिति वाच्यं । यथा हि अदृष्टस्वीकारे समयविशेषएव तस्य फलजनकता तथा यागादेरपीति सुवचत्वात् । अथादृष्टाभ्युपगमे मिथ्यावासनाया विजातीयवासनात्वेन धर्म्माधर्म्मजनकतया धर्म्माधर्म्मानुत्पादादेव तत्त्वज्ञानवतां कर्म्मणां न भोगः अदृष्टानभ्युपगमे च तत्त्वज्ञानिनामपि कर्म्मणां भोगप्रसङ्गः । न च मिथ्यावासना भोगं प्रत्येव हेतुरिति वाच्यं । तत्त्वज्ञानिनोऽपि भोगश्रवणादिति चेत्, न, विजातीयवासनाकालोत्पन्नकर्म्मण एव स्वर्गादिहेतुत्वात्(१) । अथ "पुण्यः पुण्यमाप्नोतीतिस्मृतेरपूर्व्वमि-

(१) स्वर्ग-नरकहेतुत्वादिति ग० ।

थेति यदि सहचारदर्शनमात्रादस्तुसिद्धिस्तदेत्यर्थः, एवं दण्डादावप्यती-

प्रायश्चित्तादीनाञ्च फलप्रतिबन्धकत्वमेव, प्राय-

---

द्धिः। न च तत्र पुण्यपदं यागादिक्रियापरमिति वाच्यं। यागादेर्नष्टतया दानासम्भवादिति चेत्, न, तत्र प्रथमपुण्यपदस्य यागादिप्राक्तनक्रियापरत्वात् दानपदस्य च इदं मम स्वर्गादिकं न जनयतु अमुकस्य जनयत्विती्च्छापरत्वात् द्वितीयपुण्यपदन्तु स्वर्गपरमेवेति भावः। नन्वेवं निषिद्धकर्म्मणामपि पापजनकत्वाभावे प्रायश्चित्तादीनां निष्फलत्वप्रसङ्ग इत्यत आह, 'प्रायश्चित्तेति, 'फलेति नरकप्रतिबन्धकत्वमेवेत्यर्थः, प्रायश्चित्तविधौ च नरकप्रयोजकीभूताभावप्रतियोगित्वं कृतिसाध्यत्वमात्रं वा लिङर्थः न लिष्टसाधनत्वमिति भावः। ननु प्रायश्चित्तस्य प्रतिबन्धकत्वे तस्याशुविनाशितया कालान्तरे नरकोत्पत्तौ बाधकाभावः। न च तत्तत्कर्म्मजन्यनरकं प्रति तत्तत्कर्म्मकालीन-तत्तत्कर्म्मसमानाधिकरणयावत्प्रायश्चित्ताभावानां हेतुत्वं प्रतिबन्धकत्वपदार्थः, समानाधिकरणान्तं यावत्त्वञ्चाभावविशेषणमेवेति वाच्यं। कृतप्रायश्चित्तस्य तत्तत्कर्म्मजन्यनरकस्याप्रसिद्धत्वेन तत्र तदभावकारणत्वस्य कल्पयितुमशक्यतया तेन नरकजनने बाधकाभावात्। न च तादृशाभावरूपविशेषसामग्य्रभावादेव कृतप्रायश्चित्तकर्म्मणा न नरकोत्पत्तिरिति वाच्यं। तथा सति यत्कर्म्मव्यक्त्यनन्तरं पूर्व्वं वा तेन पुरुषेण प्रायश्चित्तं कदाचिदपि न कर्त्तव्यं न कृतं वा तत्कर्म्मसमानाधिकरणयावत्प्रायश्चित्तात्यन्ताभावस्य तेषां सत्त्वेन विशेषसामग्य्रा अपि

न्द्रियो व्यापारः सिध्येदप्रयोजकता च तुल्येति भावः। प्रायश्चित्तादिनाश्यतया

सम्भवात्। न चाकृतप्रायश्चित्तान्येव तत्तत्कर्म्माणि नरकं प्रति विशेषसामग्री, तथा सति प्रायश्चित्तवैफल्यापत्तेर्विशेषसामग्रीविरहादेव नरकाभावोपपत्तेः। न च प्रायश्चित्तविशेषध्वंस एव नरकविशेषप्रतिबन्धक इति वाच्यं। प्रायश्चित्तोत्तरोत्पन्ननिषिद्धकर्म्मणापि नरकानुत्पत्तिप्रसङ्गादिति चेत्, न, तत्तत्प्रायश्चित्तविशेषव्यक्तिप्रागभावकालीनविजातीयकर्म्मजन्यफलं प्रति तत्तत्प्रायश्चित्तविशेषव्यक्तिनाशस्य सामानाधिकरण्यप्रत्यासत्त्या प्रतिबन्धकत्वोपगमात् तादृशफलन्तु पुरुषान्तरे तत्पुरुषस्यापि जन्मान्तरे प्रसिद्धं। न चैकस्मिन्नेव प्रायश्चित्तविशेषे कृते पूर्व्वोत्पन्नसर्व्वब्रह्मवधानां नरकाजनकत्वप्रसङ्ग इति वाच्यं। दृष्टत्वात् त्वयापि एकजातीयकर्म्मजन्यनानापापानां क्रमिकोत्पन्नानामेकेनैव प्रायश्चित्तेन नाशाभ्युपगमात्। न चैवं प्रायश्चित्ते कृते पूर्व्वजन्मान्तरीणनिषिद्धकर्म्मणापि नरकानुत्पत्तिप्रसङ्गः तच्छरीरकृतत्वेन कर्म्मविशेषणे तादृशकर्म्मजन्यनरकस्याप्रसिद्धा प्रतिबध्य-प्रतिबन्धकभावासम्भवादिति वाच्यं। तत्र पूर्व्वजन्मान्तरीयनिषिद्धकर्म्मणा नरकानुत्पादस्य दृष्टत्वात् अन्यथा तवापि जन्मान्तरीयतादृशपापस्य तथाविधप्रायश्चित्तेन नाशस्य दुर्व्वारत्वात्। अस्तु वा स्वसमानाधिकरणत्वे सति स्वपूर्व्ववर्त्तित्वविशिष्टोद्देश्यताख्यसम्बन्धावच्छिन्नप्रायश्चित्तविशेषाभाववत्कर्म्मविशेषत्वेनैव नरकविशेषजनकता। एतेन एकब्रह्मवधमुद्दिश्य प्रायश्चित्ते कृते तदितरब्रह्मवधादपि दुःखानुत्पत्त्यापत्तिरित्यपि निरस्तं। त्वयापि स्वसमानाधिकरण-स्वोद्देश्यजन्यत्वसम्बन्धेनैव प्रायश्चित्तस्य पापनाशकताया अभ्युपेयत्वात्। अथैवं

अपूर्व्वं सिध्येदित्याशङ्क्याह, 'प्रायश्चित्तादीनाञ्चेति। न च तत्प्रागभावस्या-

श्चित्तस्य "तस्मादेनसः पूतो भवतीति यत् फलं श्रुतमस्ति तस्य निषिद्धक्रियातः फलभाक् न

येन कर्मणा फलं दत्तं अनन्तरञ्च तत्कर्मोद्देशेन प्रायश्चित्तं कृतं तत्र तत्कर्मणस्तादृशसम्बन्धेन प्रायश्चित्ताभाववत्त्वाभावेन फलानुत्पादकत्वापत्तिः। न च तादृशप्रायश्चित्तान्यत्वं प्रायश्चित्ते विशेषणमिति वाच्यं। अदत्तफलक-दत्तफलकोभयकर्मोद्देश्यकप्रायश्चित्ते तद्भिन्नत्वाभावेनादत्तफलककर्मणोऽपि फलोत्पत्त्यापत्तेरिति चेत्, न, तत्तत्कर्मभिन्नत्वविशिष्टोद्देश्यत्वस्य तत्तत्कर्मविशिष्टोद्देश्यत्वातिरिक्तोद्देश्यत्वस्य वा प्रतियोगितावच्छेदकसम्बन्धघटकतया अभ्युपेयत्वात्। न चैवं प्रायश्चित्तस्य इष्टसाधनत्वाभावात् कथं तत्प्रवृत्तिरिति वाच्यं। तत्र त्विष्टप्रयोजकीभूताभावप्रतियोगित्वज्ञानमेव प्रवर्त्तकं न त्विष्टसाधनताज्ञानमित्यभ्युपगमात् पापनाशादाविच्छानुरोधेन त्विष्टाभावत्वज्ञानस्य तत्रापि इच्छाजनकत्वावश्यकत्वात् प्रायश्चित्ताभावस्य त्विष्टतया तदभावस्य प्रायश्चित्तस्य इष्टत्वेन तत्साधनताज्ञानात्तदुपायादौ प्रवर्त्तते न तु प्रायश्चित्त इत्यस्यापि सुवचत्वाच्च। अन्यथा तत्रापि दाहादिवारणाय मण्यादौ कथं प्रवृत्तिरित्यस्य दुःसमाधेयत्वादिति कृतं पल्लवितेन। ननु प्रायश्चित्तस्य नरकविशेषप्रतिबन्धकत्वे "तस्मादेनसः पूतो भवतीति पापनाशरूपफलश्रुतिविरोध इत्यत आह, 'प्रायश्चित्तस्येति, 'फलभागिति नरकभागित्यर्थः,

---

त्यन्ताभावत्वापत्तिः। पापनाशे च पापान्तरमासाद्य तदुत्पत्तेर्न तथात्वमिति वाच्यं। निषिद्धक्रियाविशेषस्यैव प्रतिबध्यत्वात् क्रियान्तरमादाय तत्सम्भ-

भवतीत्यर्थः, "धर्म्मः क्षरति कीर्त्तनादिति च कीर्त्तनाद्विहितक्रिया क्षरति फलं न जनयतीत्यर्थः । क्षरतीत्यत्र बाधकं विना न लक्षणेति चेत्, न, उपस्थितत्वेन विहितक्रियायामेव धर्म्मपदशक्तिग्रहस्य बाधकत्वात् । न चैतस्य मुख्यत्वार्थं पदार्थान्तरे शक्तिः, लक्षणोच्छेदा-

---

न तु 'एनसः' पापात्, पूतो भवतीत्यर्थ इति भावः । ननु तथापि "धर्म्मः क्षरति कीर्त्तनादित्यादिश्रुतिबलाद्विहितकर्म्मजन्यधर्म्मसिद्धिः विहितक्रियायाः कीर्त्तनात् तज्जन्यो धर्म्मो नश्यतीति तदर्थादित्यत आह, 'धर्म्म इति, अत्रापि तत्तत्कीर्त्तनप्रागभावकालीनतत्तत्कीर्त्तनविषयकर्म्मजन्यफलं प्रति तत्तत्कीर्त्तननाशस्य प्रतिबन्धकत्वं तत्तत्कीर्त्तनाभाववत्कर्म्मत्वेन कारणत्वं वा अवसेयं । 'क्षरतीत्यत्रेति, क्षरधातोर्नाशशक्तत्वादित्यभिमानः । वस्तुतस्तु क्षर चलने इत्यनुशासनात् क्षरधातोर्गतिशक्ततया नाशेऽपि लक्षणैवेति ध्येयं । 'उपस्थितत्वेनेति क्लृप्तत्वेनेत्यर्थः, 'बाधकत्वादिति, विहितक्रियानाशं प्रति कीर्त्तनस्याहेतुत्वादिति भावः । 'न चैतस्येति 'एतस्य' क्षरधातोः, 'पदार्थान्तरे' अपूर्व्वरूपे, 'शक्तिरिति धर्म्मपदस्य शक्तिरित्यर्थः, 'लक्षणोच्छेदेति, गङ्गायां घोष इत्यादावपि गङ्गापदस्य मुख्यत्वार्थं

---

वादिति भावः । 'उपस्थितत्वेनेति, पदार्थान्तरकल्पने गौरवादिति भावः । 'देवदत्ताद्यशरीरमिति, अत्र देवदत्तपदमन्यदीयशरीरांशे बाधवारणाय, 'आद्यत्वमपि शरीरविशेषणं बोध्यं । यद्वांशतः सिद्धसाधनं न दोष इति

पत्तेः विहितक्रियाकर्तृत्वज्ञानेन धार्म्मिकपदप्रयोगाच्च। एतेन देवदत्ताद्यशरीरं देवदत्तविशेषगुणप्रेरितभूतपू-

घोषपदस्य जले शक्तिः कल्प्यतामिति गङ्गापदेऽपि लक्षणा न स्यादित्यर्थः, 'विहितेति, इदमदृष्टजनकं न वेति सन्देहेऽपीत्यादिः। 'देवदत्ताद्यशरीरमिति, द्वितीयादिखण्डशरीरे आहारादिद्वारा पूर्वशरीरोत्पन्नज्ञानादेर्हेतुत्वमादायार्थान्तरवारणाय 'आद्येति, आद्यत्वं देवदत्तशरीरध्वंसाकालीनत्वं, क्वचिदाद्यपदशून्य एव पाठः, तच्च पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वाभ्रोकदोषः, संस्कार-जन्यत्वेनापि पक्षो विशेषणीयः अतो न तेनार्थान्तरं, 'देवदत्तेति देवदत्तीयविशेषगुणसहकृतं यद्भूतं पृथिव्यादि तज्जन्यमित्यर्थः, ईश्वर-विशेषगुणमादाय सिद्धसाधनवारणाय देवदत्तीयेति, देवदत्ती-यत्वं देवदत्तशरीरावच्छिन्नात्मनिष्ठत्वं, तेन वक्ष्यमाणदोषसङ्गतिः, सामान्यगुणमादायार्थान्तरवारणाय विशेषपदं। न च देवदत्तीय-विशेषगुणजन्यमित्येव साध्यमस्तु किं भूतजन्यत्वदलेनेति वाच्यं। तावन्मात्रस्यैव साध्यत्वात् भूतजन्यत्वोपादानन्तु अदृष्टस्य कारणान्तर-सहकारेणैव जनकत्वं न त्वितरनिरपेक्षेणेत्याविष्कर्त्तुं, 'अन्यत्व-

मतेनेदं। ईश्वरगुणमादायार्थान्तरवारणाय साध्ये 'देवदत्तेति, संख्यादिना-र्थान्तरवारणाय 'विशेषेति। न च संस्कारेणार्थान्तरं, संस्कारान्येति विशेषगुणविशेषणादित्येके। संस्काराजन्यत्वं पक्षविशेषणमित्यन्ये। यत्तु संस्कारस्य प्रेरकत्वाभावात् प्रेरितपदेनैव तद्वारणमिति तच्चिन्त्यं। प्रेरितत्वं हि सहकृतत्वं तच्च तत्रापि मनसि व्यभिचारवारणाय, समनमदीयान्तर-

र्व्वकं जन्यत्वे सति तद्भोगसाधनत्वात् तन्निर्म्मितस्रगव-दित्यनुमानात् तत्सिद्धिरिति परास्तं। जन्मान्तरीय-ज्ञानादिभिरेव तज्जनकत्वभिमतैः सिद्धसाधनादिति, नैवं, चिरध्वस्तस्य व्यापारसत्त्वे कारणत्वमिति निरु-पाध्यन्वय-व्यतिरेकाभ्यां व्याप्त्यवधारणात् यागस्य चिर-ध्वस्तकारणत्वेन व्यापारकल्पनात्। कार्य्ये व्यापारस्य

---

इति, मनसि व्यभिचारवारणाय सत्यन्तं। न चात्म-मनःसंयोगे व्यभिचारः तस्य भूतजन्यत्वाभावादिति वाच्यं। साध्ये भूतजन्यत्व-दलस्यानुपादेयत्वात् हेतौ वा जन्यपदस्य भूतजन्यपरत्वात्,[१] साध्ये भूतपदं द्रव्यसामान्यपरमित्यपि केचित्। 'तन्निर्म्मितेति तद्भोगसा-धन-तन्निर्म्मितस्रगवदित्यर्थः, 'तज्जनकत्वाभिमतैरिति अदृष्टजनक-त्वाभिमतैरित्यर्थः, यागादिवच्चिरातीतस्यैव हेतुत्वावगमादिति भावः। 'चिरेति व्यापारसत्त्व एव चिरध्वस्तस्य कारणत्वमित्यर्थः, भ्रम्यादिव्यापारके दण्ड-चक्रसंयोगादौ तथा दर्शनादिति भावः। 'चिरध्वस्तस्येति स्वर्गपूर्व्वं चिरध्वस्तस्येत्यर्थः, 'कार्य्ये इति तदन्वय-व्यतिरेकानुविधायितया साक्षात्कृतव्यापारजनकत्वं तज्जनकव्या-

---

(१) जन्यद्रव्यपरत्वादिति ग० ।

---

घटादौ व्यभिचारवारणाय 'तदिति तद्भोगसाधनद्रव्यत्वमित्यर्थः, तेन नात्ममनः संयोगादौ व्यभिचारः। 'तन्निर्म्मितेति, तद्भोगसाधनेत्यपि बोध्यं, 'सिद्धेति, यागादिवच्चिरातीतस्य जनकत्वाभ्युपगमादिति भावः। 'चिरेति, भ्रम्यादि-

पृथगन्वय-व्यतिरेकग्रहस्तद्व्यापारकत्वे उपाधिरिति चेत्, न, संस्कारे तदभावेऽप्यनुभवस्य तद्व्यापारकत्वात्। न चाप्रयोजकत्वं, यागो यदि चिरध्वस्तत्वे सति सव्यापारो न स्यात् स्वर्गसाधनं न स्यात् घटवदिति विपक्षे

---

पारवत्त्वे साध्ये उपाधिरित्यर्थः, 'तदभावेऽपीति स्मरणं प्रति अन्वय-व्यतिरेकसाक्षात्काराभावेऽपीत्यर्थः, 'तद्व्यापारकत्वेति स्मरणजनक-संस्काररूपव्यापारवत्त्वदर्शनादित्यर्थः, 'चिरध्वस्तत्वे सतीति स्वर्गपूर्व-कालीनध्वंसप्रतियोगित्वे सतीत्यर्थः, 'सव्यापारो न स्यादिति साक्षात् स्वर्गजनकसाक्षाज्जनको न स्यादित्यर्थः, अव्यवहितस्वर्गजनके व्यभि-चारवारणाय सत्यन्तमभावविशेषणं, प्रतियोगिविशेषणत्वे तद्दोष-तादवस्थ्यात् स्वर्गजनकशरीरजनकत्वस्य परैरभ्युपगमात्तद्वारणाय साक्षादिति जनकविशेषणं। यद्यपि व्याप्तिग्राहकतर्कोपदर्शनमेव प्रकृते उचितमयञ्च विषयपरिशोधकतर्कतया न व्याप्तिग्राहकस्तथापि

---

व्यापारके चक्र-दण्डादिसंयोगादौ तथा दर्शनादिति भावः। 'संस्कार इति, तत्रावश्यं तत्कल्पनमन्यथा नष्टसंस्कारकत्वाभिमतानुभवादपि स्मरणप्रसङ्ग-इति भावः। 'याग इति, चिरद्ध्वस्तत्वे सति व्यापारवद्भिन्नत्वमापादकं तथाच चिरद्ध्वस्तत्वस्य भिन्नेऽन्वयः अन्यथा प्रतियोग्यन्वयेऽव्यवहितस्वर्गसाधने व्यभिचारवारणार्थोपात्तसत्यन्तदानेऽपि व्यभिचारतादवस्थ्यापत्तेः विशिष्ट-विरहस्य तत्र सत्त्वात् सत्यन्तमात्रे च कृतेऽर्थान्तरं, व्यवहितस्वर्गसाधने व्यभिचारस्तेत्यग्रिमपदं, स्वर्गपदं दृष्टान्तासिद्धिवारणाय, स्वध्वंसादिकं प्रत्यपि तस्य हेतुत्वात्। न च विषयपरिशोधकोऽयं न व्याप्तिग्राहक इति वाच्यं।

बाधात्। न चात्र कारणताग्राहकाभाव उपाधिः,

अप्रयोजकत्वसंशयाहितपचीयव्यभिचारसंशयस्य प्रतिबन्धकतया तद्-विधूननद्वारा अस्य व्याप्तिग्राहकत्वमिति भावः। वस्तुतस्तु स्वर्ग-कारणत्वं न स्वर्गप्राक्कालवृत्त्यभावप्रतियोगितानवच्छेदकधर्म्मवत्त्वं यागे बाधात्। नापि स्वर्गप्राक्कालव्यापकात्यन्ताभावप्रतियोगिता-नवच्छेदकधर्म्मवत्त्वं किञ्चित्स्वर्गप्राक्कालवृत्तिनो व्यभिचारिणोऽपि तथात्वेनातिप्रसङ्गात् अपि तु स्वर्गाव्यवहितप्राक्कालवृत्त्यत्यन्ताभाव-प्रतियोगितानवच्छेदकधर्म्मवत्त्वं अव्यवहितपूर्व्ववर्त्तित्वस्य तत्तद्व्यक्ति-घटितत्वेऽपि संसर्गतया प्रवेशान्नाननुगमः, यागस्य चाशुविनाशितया न कालिकसम्बन्धावच्छिन्नतादृशात्यन्ताभावप्रतियोगितानवच्छेदक-धर्म्मवत्त्वसम्भव इति व्यापारसम्बन्धेनैव तथात्वं वाच्यमिति सम्बन्ध-तया व्यापारसिद्धिः। न चैतावता कस्यचित् सम्बन्धस्य सिद्धावपि तस्य यागजन्यत्वे किं मानमिति वाच्यं। तस्य कारणान्तरकल्प-नापेचया लाघवेनोपस्थितानुगतयागस्यैव कारणत्वसिद्धेः। न च तथापि स्वर्गजनकत्वे मानाभावः यागस्य स्वर्गसाधनतायाः श्रुति-सिद्धत्वेन विनिगमनाविरहाभावादिति वाच्यं। तथा सति[१] व्यापारमात्रस्यैव कारणत्वविलोपप्रसङ्गादिति दिक्। 'कारणताग्रा-

(१) एवं सतीति ग०।

व्याप्तिग्रहपूर्व्वं तत्परिपन्थिशङ्कापनायकत्वात्। न च पक्षे तच्छङ्का न परिपन्थिनीति वाच्यं। अप्रयोजकत्वाद्याहितायास्तस्यास्तथात्वात्, अतएव पक्षेऽप्युपाधिसन्देहाहितायास्तस्यास्तथात्वं। यत्तु विषयपरिशोधकतर्कस्यापि विरोधिजिज्ञासानिवृत्तिद्वारोपयोग इति स एवाभिहित इति, तन्न, तस्य

तेनापि समं व्याप्त्यवधारणे तस्याप्यापादनात्। न चैन्द्रियकस्यातीन्द्रियव्यापारवत्त्वनियमः, सव्यापारत्वे कार्य्याव्यवहितपूर्वसमये असत्त्वस्योपाधित्वेनाप्रयोज-

---

कत्वाभाव इति स्वर्गकारणत्वेनाग्टह्यमाणत्वमित्यर्थः, 'तेनापि सममिति स्वर्गकारणत्वेनाग्टह्यमाणत्वरूपोपाधिनापि सममुक्तापादकस्य व्याप्त्यवधारणेनेत्यर्थः, 'तस्यापि' उपाधेरपि, 'आपादनादिति आपाद्यतुल्यत्वादित्यर्थः, तथाच साधनव्यापकत्वमित्यर्थः। अन्यथैन्द्रियकं कारणमिति पूर्व्वोक्तं दूषयति, 'न चेति, 'सव्यापारत्व इति सव्यापारत्वमात्र इत्यर्थः, 'मात्रपदादतीन्द्रियव्यापारवत्त्वव्यवच्छेदः, 'असत्त्वस्येति असत्त्वे सति कारणत्वस्येत्यर्थः, 'उपाधित्वेन' प्रयोजकत्वेन,

---

शङ्कितप्रयोजकत्वनिरासाक्षमत्वेन प्रकृतासंगतत्वात्। यदि चोक्तरीत्या तथात्वं तदा व्याप्तिग्राहकत्वमेवेति। अन्यथैन्द्रियकमित्यादि प्रागुक्तं दूषयति, 'न चेति, 'उपाधित्वेनेति, प्रयोजकत्वेनेत्यर्थः, तथाच कार्य्याव्यवहितपूर्व्वसमयेऽसत्कारणं सव्यापारकमेवेति सन्नियमस्य निष्फलकत्वेन त्वन्नियमस्यैव परमप्रयोजकत्वादित्यर्थः। एतेनाप्रयोजकतया प्रागुक्तं तौल्यमपाकृतं बोध्यं। अतएव चक्षुरादावुक्तोपाधेः साध्याव्यापकत्वं ऐन्द्रियकत्वविशेषणे च शब्दादिजनके दण्डादौ साध्याव्यापकत्वमित्यपास्तं। ननु त्वदुक्ततर्केऽप्यप्रयोजकत्वशङ्का। न च निरुपाधित्वमेव विपक्षबाधकं, प्रतीतिविशेषविषयत्वादीनामुपाधित्वसम्भवात्। न च साध्यव्यापकत्वादिसन्देहः, तथाप्युपाधित्वसन्देहस्य दूरीकर्त्तुमशक्यत्वात्। किञ्च तादृशातीन्द्रियातिरिक्तपदार्थकल्पने व्यापारकल्पने च गौरवमेव बलवद्बाधकं। यत्तु कार्य्याव्यवहितपूर्व्वसमयविद्यमानता कारणता सा च साक्षात् व्यापारद्वारा वा, स्वाङ्गमव्यवधायकमितिन्यायात् तथाच व्यापारकल्पनमावश्यकमिति

'उपाधित्वेनेति यथाश्रुतन्तु न सङ्गच्छते कार्य्याऽव्यवहितपूर्व्वसमया-सत्त्वस्य चक्षुरादावतीन्द्रियव्यापारवत्त्वरूपसाध्याव्यापकत्वात्। न च साधनावच्छिन्नसाध्यव्यापकमिति वाच्यं। तथापि पतनजनक-गुरुत्वजनके घटादौ तथाविधसंयोगजनके चात्मनि साध्याव्या-

तन्न, नियमानन्यथासिद्धयोरवश्यं तत्र प्रवेशे अव्यवहितत्वस्य व्यर्थत्वात्। न च वह्न्यादिक्रियानियामकत्वेनादृष्टसिद्धिः, तादृशयागादिवदात्मसंयोगाद्वा तदुपपत्तेः यागादेश्च स्वभावादेव नियतकालीन-सावधिफलजनकत्वं अन्यथा अपूर्व्वेऽपि कल्पिते फलस्यानन्त्यापत्तिरिति चेत्, अत्राहुः, यदि नादृष्टं तदा प्रायश्चित्तादीनां वैफल्यं स्यात्। न च तेषां फलप्रतिबन्धकत्वं, तेषा-माशुविनाशितया तदभावानन्तरं फलप्रसङ्गात्। न च तदुत्तरं समयस्य प्रतिबन्धकत्वं, तस्य तथात्वे मानाभावात् तेषामप्रतिबन्धकत्वापाताच्च। न च तत्प्रागभावसहभूतानिषिद्धक्रिया फलहेतुरिति वाच्यं। अन्यप्रायश्चित्तप्राग-भावमादाय फलप्रसङ्गात् तत्तत्क्रियोद्देश्यक-तत्तत्प्रायश्चित्तप्रागभावस्य तथात्वे यत्र कर्म्मणि न प्रायश्चित्तं जातं तत्र प्रतियोग्यप्रसिद्ध्या तदभावा-सिद्धौ फलाभावप्रसङ्गात्। एवं विहितक्रियायां कीर्त्तनादिवैफल्यमपि द्रष्टव्यं। किञ्च सत्कर्म्मादिदानं ततश्च फलमिति श्रूयते तदिदमध्येत, न हि तत्र प्राचीनविहितक्रियाया एव दानं, तस्याविनष्टत्वात् अदृष्टस्याभ्युप-गमात् अकर्म्मिकाया दानक्रियाया अभावात् भावे वा तस्याः फलजनकत्वे-ऽतिप्रसङ्गात्तस्मादृष्टदानेनादृष्टान्तरं जन्यत इत्यकामेनाप्यभ्युपेयं। यत्तु एवं सति निरन्वयध्वस्तवीज-दण्डादेरङ्कुर-भ्रम्यादिकार्य्यं कालान्तरेऽपि स्यादिति बाधकमिति, तन्न, तत्र फलबलेन तथैव हेतुत्वात् यागादेश्च व्यवहितस्यापि हेतुत्वे विरोधाभावादिति। नन्वस्तु व्यापारस्तथापि संस्कार एवास्त्विति चेत्, न, तस्य स्मृतिमात्रहेतुतया स्वर्गाद्यहेतुत्वापत्तेः अनुभवमात्रजन्यतया यागाद्यजन्यत्वाच्च। वैजात्यकल्पने च सिद्धं नः समीहितं। वेगादिवत्तद्विशेषो-ऽस्तु गुणान्तरकल्पने गौरवादिति चेत्, न, गुरुत्वादेरपि तथात्वापत्तेरिति-

कत्वात्। नन्वेवं सन्ध्यावन्दनाकरणस्य दुःखसाधनत्व-श्रुतेः तत्करणप्रागभावो दुःखहेतुस्तथाच तस्य स्थिरत्वेन दुःखजननसम्भवात् न पापे प्रमाणं। न च प्रायश्चित्तवैफल्यं, प्रायश्चित्ताभावसहकृतस्यैव तस्य तज्जनकत्वात्। यत्तु प्रागभावनाश एव तेन क्रियत इति, तन्न, ध्वंस-प्रागभावानवच्छिन्नकालस्य प्रतियोगिकालत्वेन तदा करणापत्तेरिति चेत्, न, सन्ध्याकाली-

---

पकत्वादिति ध्येयं। नित्याकरणजन्यपापे प्रमाणाभावमाशङ्कते, 'नन्वेवमिति, 'एवं' क्रियाया अस्थैर्य्यादिवादृष्टकल्पने, 'तत्करणप्रागभाव इति सन्ध्यावन्दनकरणप्रागभाव इत्यर्थः, 'पाप इति नित्याकरणजन्यपाप इत्यर्थः, 'प्रायश्चित्तेति विहिताकरणनिमित्तकप्रायश्चित्तेत्यर्थः, 'प्रायश्चित्ताभावेति प्रायश्चित्तमुक्तरीत्या ध्वंससम्बन्धेन फलप्रतिबन्धकमेवेत्यर्थः, 'प्रागभावनाश इति सन्ध्याकरणादिप्रागभावनाश इत्यर्थः, 'सन्ध्याकालीनेति सन्ध्याकालवृत्तित्वविशिष्टस्य

---

दिक्। एवञ्च पक्षे साध्यसिद्धौ प्रश्नितोपाधीनां तत्रैव साध्यव्यापकत्वं तदिदमुक्तं 'निरुपाध्यन्वय-व्यतिरेकाभ्यामिति। 'नन्वेवमिति, 'एवं' चिरध्वस्तस्य व्यापारकल्पनाप्रयोजकत्वे, 'पाप इति, यद्यप्यगम्यागमनादेराशुविनाशित्वात्तज्जन्यपापे बाधकाभावस्तथापि सन्ध्यावन्दनाकरणजन्यपापे प्रमाणाभाव इत्यर्थः, 'ध्वंसेति। न च प्रागभावनाशस्यापि तद्विरोधित्वान्न तदापत्तिरिति वाच्यं। प्रतियोगिन एव तन्नाशत्वादिति भावः। 'सन्ध्येति, नन्वेवं सन्ध्याकालीनकरणप्रागभावो हेतुरित्यायातं तत्र तत्कालीनं करणं प्रति-

नाकरणस्य दुःखजनकत्वेन(१) विशिष्टस्य सन्ध्याकाला-पगमेऽनुपगमात्। न च सन्ध्याकालीनाकरणे विशेषणं किन्तु प्रतियोगिनि करणे तथाच विशिष्टाभावः स्थिर एवेति वाच्यं। सन्ध्याया ह्यकरणेऽन्वयस्तस्य

सन्ध्याकरणत्वावच्छिन्नप्रतियोगिताकाभावस्येत्यर्थः, 'दुःखजनकत्वे-नेति सामानाधिकरण्यप्रत्यासत्त्या दुःखजनकत्वेनेत्यर्थः, अन्यथा केव-लस्य करणाभावस्य सन्ध्याकालवृत्तित्वोपलक्षितस्य करणाभावस्य वा नरकसाधनत्वे तादृशाभावस्याकृतसन्ध्यावन्दनपुरुषे नरकजनन-समये कृतसन्ध्यावन्दनेऽपि सत्त्वेन तस्यापि नरकोत्पत्त्यापत्तिः काल-विशेषस्य पुरुषान्तर्भावेनाहेतुत्वादिति भावः। 'विशिष्टस्येति, तथाच तादृशविशिष्टाकरणस्य नरकोत्पादप्राक्कालेऽसत्त्वात्तत्राप्यवश्यमधर्म्म-कल्पनमिति भावः। 'सन्ध्याया हीति, सन्ध्याकालीनाकरणं नरक-साधनमिति वाक्य इत्यादिः, 'पदार्थत्वात्' प्रधानत्वात्, विशेष्यत्वा-

(१) दुःखसाधनत्वादिति क०, ख०, ग०।

योगि यदि तदाऽसम्भवः प्रागभाव-प्रतियोगिनोरेककालत्वाभावात्, यदि चान्यकालीनं तदा तत्कारिणोऽपि पापापत्तेरिति चेत्, न, तत्पुरुषे करण-सामान्यसंसर्गाभावः सन्ध्याकालीनः स च तद्धेतुरित्यर्थात्। ननु सन्ध्या-काल उपलक्षणं, न च विशेषणत्वे बाधकाभावान्न तथात्वं, विशेषणस्यापि हेतुत्वकल्पने गौरवस्यैव बाधकत्वादिति चेत्, न, व्यावृत्तोपलक्ष्यतावच्छेदक-रूपाभावादित्याहुः। तच्चिन्त्यं, सन्ध्याकालस्य स्ववृत्तिकरणाभावोपलक्षकत्व-सम्भवात् यथासन्नसमयसमाप्तेः फलत्वे तत्समयस्य स्ववृत्तिसमाप्त्युपलक्ष-

पदार्थत्वात् न तु करणे तस्य पदार्थैकदेशत्वेनाप्रधान-

दिति यावत्, 'पदार्थैकदेशत्वेनेति करणाभावरूपविशिष्टविशेषण-त्वेनेत्यर्थः, प्रधानविशेषणत्वेनान्वये सम्भवति प्रधानविशेषणविशेषण-त्वेनान्वयस्याकल्पनादिति भावः। इदमुपलक्षणं, वस्तुतस्तु सन्ध्या-कालस्य प्रतियोगिन्यन्वये कृतसन्ध्यावन्दनेऽपि सन्ध्याकालीनवन्दना-भावस्य तज्जन्यनरकोत्पादकाले सत्त्वात् नरकोत्पत्त्यापत्तिरित्येव दूषणं द्रष्टव्यं। ननु सन्ध्याकालस्य करणाभावविशेषणत्वेऽपि उपा-सनायाः पूर्व्वं परतो वा तस्यामेव सन्ध्यायां वन्दनाभावस्य प्रा-यिकत्वात् सर्व्वत्र पापोत्पत्तिप्रसङ्गः। न च यावत्सन्ध्याक्षणवृत्ति-त्वविशिष्टाकरणं पापहेतुरिति वाच्यं। यावत्सन्ध्याक्षणवृत्तित्व-विशिष्टस्याकरणस्य कुत्रापि सन्ध्यायामसम्भवादिति चेत्, न, प्रति-

कत्वं। वस्तुतस्तु अरुणान्यायेन विशेषणत्वं अन्यथोक्तगौरवेणारुण्यस्यापि क्रयसाधनत्वं न स्यात् तस्यापि स्वाधिकरणव्यक्त्युपलक्षकत्वसम्भवाद्यदि वौत्-सर्गिकं विशेषणत्वमिति गौरवमपि न्याय्यं तदा प्रकृतेऽपि तुल्यमिति प्रागु-क्तरीत्या प्रायश्चित्तवैफल्यमपि स्यादित्यपि बोध्यं। 'पदार्थैकेति। यद्यपि पदार्थत्वमेव करणस्य न तु पदार्थैकदेशत्वं तथापि करणाभावरूपविशिष्टा-पेक्षया प्रतियोगिन एकदेशोक्तिरिति ध्येयं।

नन्वेवं करण एव तदन्वयोऽस्तु तस्य वस्तुतः पदार्थैकदेशत्वाभावेन विनि-गमकाभावादिति चेदत्राह। तत्राकाङ्क्षाविरहः, न च चक्षुषा न पश्यतीत्यत्रैव तत्सम्भवः, तत्र तथा तात्पर्य्येण तथात्वात् प्रकृते च तथा तात्पर्य्यानवधा-रणात् प्रधानविशेषणत्वे सम्भवति नाप्रधानविशेषणतायामाकाङ्क्षेति, तदिद-मुक्तं 'अप्रधानत्वादिति। यत्तु सन्ध्याकालीनकरणस्य तदीयस्याभावो यदि

योग्यनधिकरणसन्ध्याकालवृत्तित्वविशिष्टतत्पुरुषीयसन्ध्यावन्दनत्वावच्छिन्नाभावस्य तत्पुरुषीयपापविशेषे हेतुत्वात् नरकविशेषं प्रति सामान्यतः सन्ध्यावन्दनत्वावच्छिन्नाभावत्वेनैव सामानाधिकरण्यप्रत्यासत्त्या हेतुत्वं पापाभावादेव च कृतसन्ध्यावन्दनस्य न नरकोत्पत्तिः तेन नरकविशेषे तत्तत्पुरुषान्तर्भावेण[१] कार्य्य-कारणभावासम्भवेऽपि न क्षतिः । न च तथापि सन्ध्यावन्दनपूर्व्वोत्तरसन्ध्याक्षणमादाय पापातिप्रसङ्गस्तदवस्थ इति वाच्यं । क्षणानां न सन्ध्यात्वमपि तु तावत्क्षणराशिवृत्तिस्थूलकालोपाधिरेव सन्ध्येत्यभ्युपगमात् सन्ध्यात्वन्तु शक्तिविशेषसम्बन्धेन सन्ध्यापदवत्त्वं तत्तत्कालेतरकालत्वं वा, तत्तत्पुरुषीयत्वविशिष्टत्वेनाभावोऽपि विशेषणीयः, तत्पुरुषीयाधर्म्मं प्रति तत्पुरुषस्य वा तादात्म्यसम्बन्धेन हेतुत्वमतः पुरुषान्तरे न तत्पुरुषीयपापविशेषादेरुत्पत्तिः । न च सन्ध्यायाः दण्डद्वयात्मकतया दण्डद्वयेनैव धारावाहिकापूर्व्वोत्पत्त्यापत्तिः यागादिस्थले च यागादेरुत्पत्तिसम्बन्धेन हेतुतया न धारावाहिकापूर्व्वोत्पत्त्यापत्तिरिति वाच्यं । इष्टत्वात् । न च यत्पुरुषीयसन्ध्यावन्दनमेवासिद्धं तत्पुरुषीयसन्ध्यावन्दनाभावस्य हेतुत्वासम्भवात् तस्य पापाद्यनुत्पत्त्यापत्तिः पुरुषपदेनात्मविवक्षणे शूद्रशरीर-

(१) तत्तच्छरीरान्तर्भावेणेति ग० ।

तथा तदा प्रतियोग्यप्रसिद्धिः अन्यदीयस्य चेत्तदातिप्रसङ्ग इति तच्चिन्त्यं, सन्ध्याकालीनकरणत्वावच्छिन्नाभावस्य तत्पुरुषे तथात्वसम्भवात्, अत्र सन्ध्याकालस्य विशेषणध्वंसे विशिष्टध्वंस इत्यभ्युपगमेऽनुमानखण्डोक्तविशिष्टप्रति-

परिग्रहदशायामपि सन्ध्याकरणाभावे प्रत्यवायापत्तिरिति वाच्यं। यस्य सन्ध्यावन्दनमप्रसिद्धं तत्पुरुषीयपापविशेषे सन्ध्याकालवृत्तित्वविशिष्टतत्पुरुषवृत्तित्वविशिष्टसन्ध्यावन्दनसामान्याभावस्यैव हेतुत्वात् पुरुषभेदेन कार्य्य-कारणभावभेदात् विशिष्टान्तद्वयमभावे विशेषणं। यद्वा द्वितीयविशिष्टान्तं नोपादेयं तत्पुरुषीयाधर्म्मं प्रति तत्पुरुषस्य तादात्म्येन हेतुत्वादेव न पुरुषान्तरे तत्पुरुषीयपापविशेषोत्पत्तिः। न च पुरुषभेदेन कार्य्य-कारणभावभेदे प्रतियोग्यनधिकरणसन्ध्यावृत्तित्वविशिष्टत्यभावविशेषणमनर्थकं कृतसन्ध्यावन्दनपुरुषान्तर्भावेण कार्य्य-कारणभावविरहादेवातिप्रसङ्गभङ्गादिति वाच्यं। अकृतसन्ध्यावन्दनस्यैव सन्ध्येतरकाले धारावाहिकपापानामुत्पत्तिवारणाय तदुपादानात् इष्टापत्तावनन्तापूर्व्वकल्पने गौरवात् फलमुखगौरवस्यापि दोषत्वात् तस्यादोषत्वे तु विशिष्टान्तस्यानुपादेयत्वात्। ननु तथापि प्रयागावच्छिन्नोत्पत्तिकमरणादेरपूर्व्वजनकत्वे मानाभावः मरणस्य स्वर्गपूर्व्वकालेऽपि सत्त्वात्। न च निर्व्यापारमरणस्य फलजनकत्वे फलधाराया अनिवृत्त्यापत्तिः प्रयागावच्छिन्नोत्पत्तिसम्बन्धेन तस्य हेतुत्वे च स्वर्गाव्यवहितप्राक्काले तेन सम्बन्धेन तदसत्त्वात् तदनुत्पत्त्यापत्तिः[१] अतोऽपूर्व्वमावश्यकमिति वाच्यं। अपूर्व्वाभ्युपगमेऽपि स्वर्गजनने कालविशेषस्य

(१) स्वर्गानुत्पत्त्यापत्तिरिति ग०।

योगिकध्वंसानङ्गीकाराद्विरोधश्चिन्त्य इति, अन्यथा विशेषणमात्रस्यैव व्यापारकल्पनेऽकरणस्य पापहेतुत्वं न स्यादिति दृष्टेनैवोपपत्तौ नादृष्टकल्पन-

त्वात्, तथापि ध्वंस एव व्यापारोऽस्तु तव सहभावा-निरूपकस्यापि कारणत्वात् तस्यानन्तत्वेऽपि स्वभावात् सावधिफलजनकत्वं। यच्च यद्ध्वंसोहेतुस्तच्च तत्प्राग-भावोऽपीति चेत्, न, दुग्धध्वंसजन्यदध्नि मिथ्याधीध्वंस-

---

सहकारित्वावश्यकतया तत एवातिप्रसङ्गभङ्गादिति चेत्, न, तत्रा-पूर्व्वानभ्युपगमादिति दिक्। ननु सन्ध्यावन्दनादिनित्याकरणजन्या-पूर्व्वस्यावश्यकत्वेऽपि यागादिस्थलेऽपूर्व्वे मानाभावः तत्र स्वध्वंसस्यैव व्यापारत्वसम्भवादित्याशङ्कते, 'तथापीति नित्याकरणजन्यापूर्व्वस्या-वश्यकत्वेऽपीत्यर्थः, यागादिस्थल इति शेषः। ननु कार्य्यसहवर्त्तिन-एव कारणतया ध्वंसस्य यागजन्यत्वाभावात् कुतो व्यापारत्वमित्यत-आह, 'तवेति, अन्यथा प्रागभावादेरकारणत्वापत्तेरिति भावः। ननु ध्वंसस्य व्यापारत्वे स्वर्गादिधाराया अनिवृत्त्यापत्तिः ध्वंसस्य नित्यत्वात् अदृष्टोपगमे तु तस्य चरमव्यक्तेरेव नाशान्न प्रसङ्ग इत्यत-आह, 'तस्येति, 'अनन्तत्वेऽपि' ध्वंसाप्रतियोगित्वेऽपि, 'स्वभावादिति तत्तद्ध्वंसजन्यफलसामान्ये तत्तत्कालविशेषस्य सहकारित्वादित्यर्थः, अपूर्व्वाभ्युपगमेऽपि कालविशेषस्य सहकारित्वावश्यकत्वादन्यथेह लोक-एव स्वर्गोत्पत्त्यापत्तिरिति भावः। 'यच्चेति, मण्यादिप्रतिबन्धकस्थले तथा दृष्टत्वादिति भावः। 'दुग्धध्वंसेति, इदमुपलक्षणं, महापट-

---

मित्याशयेनाह, 'तथापीति। ननु ध्वंसो न यागव्यापारः यागासहभावित्वेन तदजन्यत्वादित्यत आह, 'तवेति अन्यथा यागः स्वर्गेऽपि कारणं न स्यादि-त्यर्थः,। फलानन्त्यमाशङ्क्याह, 'तस्येति, अपर्व्वकल्पनेऽपि स्वभावस्यैवाश्रय-

साध्यमुक्तौ च[१] व्यभिचारात् प्रतिबन्धकाभावत्वेन हेतुत्वे तथाभावाच्च। ध्वंसेनानुपपत्तिः कथं तेनैव समाधातव्येति चेत्, न, ध्वंसे सति तद्व्यापारत्वज्ञानं विनानुपपत्तेस्तद्व्यापारत्वकल्पनया शान्तेरिति। मैवं। प्रतियोगि-ध्वंसयोरेकत्राजनकत्वात्। न हि नियमतो यद्ध्वंसे सति यद्भवति तत् तत्र कारणं।

ध्वंसजन्यखण्डपटे समवाय्यादिनाशजन्ये द्रव्यादिनाशे च व्यभिचारो बोध्यः। 'प्रतिबन्धकाभावत्वेनेति प्रतिबन्धकसंसर्गाभावत्वेनेत्यर्थः, 'तथाभावात्' तत्प्रागभावस्य हेतुत्वात्, 'ध्वंसेनानुपपत्तिरिति स्वर्ग-प्राक्काले ध्वंसज्ञानप्रयुक्ता स्वर्गकारणत्वाभावधीरित्यर्थः, 'तेनैव समाधातव्येति ध्वंसज्ञानेनैव निवर्त्तनीयेत्यर्थः, एकत्र निवर्त्तकत्व-प्रयोजकत्वयोर्विरोधादिति भावः। 'ध्वंसे सति' ध्वंसज्ञाने सति, 'तद्व्यापारत्वेति तद्व्यापारत्वज्ञानव्यतिरेकप्रयुक्तानुपपत्तिबुद्धेरित्यर्थः, 'कल्पनया' ज्ञानेन। अजनकत्वे हेतुमाह, 'न हीति, 'हि' यस्मात्, यद्ध्वंसजन्यं यत् तत्र तत्कारणकमित्यर्थः, तथाच तत्कारणकत्वस्य तद्ध्वंसजन्यत्वाभावव्याप्यतया स्वर्गो न यागध्वंसजन्यः यागकारणक-त्वादित्यनुमेयमिति भावः। न च चरमदुःखं प्रति यागादिद्वार-

(१) मिथ्याज्ञानादिध्वंसजन्यमुक्तौ चेति ख०।

णीयत्वादिति भावः। 'न हीति, यद्यप्येवमपूर्व्वपक्षेऽपि यागस्य स्वर्गकारणत्वं न स्यात् नियमतस्तद्ध्वंसे सत्येव तदुत्पत्तेः, यदि च तथात्वेऽपि वेदबोधित-कारणत्वमप्रत्यूहं तदा तुल्यं, तथाप्युक्तव्याप्तावेव तात्पर्य्यं। इति प्रकाशः।

न च संसर्गाभावत्वेन हेतुत्वे तथेति वाच्यं । व्यभिचाराभावेन तस्यापि* प्रयोजकत्वात् । अथ शब्दादकस्य मिथ्याज्ञानस्यादृष्टजनकस्य जनकत्वं मिथ्याज्ञानाभावस्यापि जनकत्वमित्युक्तव्याप्तिभङ्ग इति वाच्यं । तत्र मिथ्याज्ञानध्वंसस्य हेतुत्वे मानाभावात् । न च शब्दध्वंसप्रत्यक्षे विषयतया शब्दध्वंसजन्ये श्रोत्रव्यापारतया च शब्दजन्ये व्यभिचार इति वाच्यं । शब्दध्वंसप्रत्यक्षे शब्दध्वंसस्य श्रोत्र-मनःसंयोगस्य वा व्यापारतया शब्दस्याव्यापारत्वात् । न च तथापि तत्ता-तदनुभवध्वंसविषयकसमूहालम्बनप्रत्यभिज्ञायां व्यभिचारः तत्र विषयतया तत्तानुभवध्वंसस्य संस्कारद्वारा तत्तानुभवस्य च हेतुत्वादिति वाच्यं । संस्कारस्य सन्निकर्षविधया हेतुत्वेऽपि तत्र तत्तानुभवस्य हेतुत्वे मानाभावात् । अथ तथापि यन्मये प्रत्यभिज्ञाया ग्रहण-स्मरणात्मकत्वं तन्मये तादृशसमूहालम्बनप्रत्यभिज्ञायां व्यभिचारः स्मरणरूपतया तत्र संस्कारद्वारा तत्तानुभवस्यापि हेतुत्वावश्यकत्वादिति चेत्, न, ध्वंसत्वावच्छिन्नकारणतानिरूपितजन्यताया व्याप्तिघटकत्वात् तादृशजन्यता च महापटनाशजन्ये खण्डपटे दुग्धध्वंसजन्ये दध्नि समवायिनाशजन्यसमवेतनाशादौ च प्रसिद्धा समूहालम्बनप्रत्यभिज्ञायाञ्च विषयत्वेनैव तत्तानुभवध्वंसस्य हेतुत्वात् । एतेन पूर्व्वानुभवजन्यस्मृतौ तदनुभवध्वंसस्य कालोपाधितया हेतुत्वेऽपि न क्षतिरिति ध्येयं । 'हेतुत्व इति ध्वंसस्य हेतुत्व इत्यर्थः, 'तथेति प्रतियोगिनो न हेतुतेत्यर्थः, 'तस्यापि' ध्वंसत्वेन हेतुत्वस्यापि,

* 'तस्यापि' ध्वंसत्वेन हेतुत्वस्यापीत्यर्थः, तथाच ध्वंसत्वेनापि हेतुत्वे प्रतियोगी न कारणमिति व्याप्तिरेव व्यभिचाराभावादिति भावः । 'अथेति,

यागकारणता व्यापारं विना तदनुपपत्तेः तज्जन्यध्वंसस्य कारणत्वकल्पनमित्युभयमपि जनकं, अन्यत्र तु माना-भावान्न तथेति चेत्, न, यागध्वंसस्य यागजन्यस्वर्गं प्रति जनकत्वस्य प्रमाणान्तरविरोधेनार्थापत्त्याप्य-

---

'प्रयोजकत्वादिति प्रतियोगिनो हेतुत्वाभावे नियामकत्वादित्यर्थः। उक्तव्याप्तौ तद्ध्वंसकारणकत्वेनाप्रमीयमाणत्वमुपाधिमाशङ्कते, 'अ-थेति, 'शब्दात्' वेदात्, 'यागकारणता' यागस्य स्वर्गकारणता, 'कारणत्वकल्पनमिति स्वर्गकारणत्वकल्पनमित्यर्थः, तथाच स्वर्गे यागध्वंसकारणकत्वस्य प्रकाणसिद्धत्वेन पक्षे साधनाव्यापकतया त-द्ध्वंसाकारणकत्वेनाप्रमीयमाणत्वमुपाधिरिति भावः। 'अन्यत्र त्विति घटादिस्थले त्वित्यर्थः, 'न तथेति न दण्डादिरूपकारणध्वंसस्य कार-णतेत्यर्थः, तथाच घटादावेव साध्यव्यापकतेति भावः। 'प्रमाणान्त-

---

तथाचोक्तव्याप्तौ कारणताग्राहकाभाव उपाधिरिति भावः। 'प्रमाणान्तरेति स्वर्गो न यागध्वंसजन्यः यागजन्यत्वादित्याद्यनुमानविरोधेनेत्यर्थः। नन्व-त्राप्यप्रयोजकत्वं तथाच तन्निराकरणे उक्तव्याप्तिरेव हि अत्र मूलं सा चो-क्तोपाधिनाऽप्रयोजकत्वकवलितैव। न च यागस्य प्रतिबन्धकत्वापत्तिरेव प्रमाणान्तरविरोधः, संसर्गाभावत्वेनैव हेतुत्वे तथात्वात्। न च ध्वंसत्वेनापि हेतुत्वे तथा खण्डपटोत्पत्तौ महापटवदिति वाच्यं। तत्र कारणताग्राहका-भावादत्र च तत्सत्त्वे प्रतिबन्धकत्वं न किन्तु हेतुत्वमेव। किञ्च धर्म्मिकल्पनात-इति न्यायेन ध्वंसस्यैव व्यापारत्वमिति चेत्, न, प्रागुक्तरीत्या इष्टसिद्धौ तत्रैव व्यापारत्वं कल्प्यते लाघवान्न तु ध्वंसे तस्याभावतया गुरुत्वात्, एवञ्च व्यभिचाराभावे उक्तव्याप्तिरप्यविफला, तदिदमुक्तं व्यभिचाराभावेनेत्यादि,

रेति स्वर्गो न यागध्वंसजन्यः यागकरणकत्वादित्यनुमानस्य सत्-प्रतिपक्षतया विरोधित्वेनेत्यर्थः। न चास्य सोपाधितया हीनबल-त्वेन कथं सत्प्रतिपक्षत्वमिति वाच्यं। स्वर्गे यागध्वंसकरणकत्व-सिद्धावेव पक्षे साधनाव्यापकतया तस्योपाधित्वसम्भवादिति भावः। इदमापाततः तत्कारणकत्वस्य तद्ध्वंसजन्यत्वव्याप्यत्वे मानाभावात्। न च यागध्वंसस्य स्वर्गहेतुत्वे यागादेः प्रतिबन्धकत्वापत्तिरिति वाच्यं। संसर्गाभावत्वेनात्यन्ताभावत्वेन वा हेतुत्वे तथात्वात् अन्यथा समवाय्यादिनाशस्य द्रव्यादिनाशहेतुतया समवाय्यादेरपि प्रति-बन्धकत्वापत्तेः। न च ध्वंसस्य व्यापारत्वे यागध्वंसत्वेन हेतुत्वं अपूर्व्वस्य व्यापारत्वे जातिविशेषेण तत्त्वमिति लाघवादपूर्व्वसिद्धि-रनन्तापूर्व्वव्यक्तिकल्पनन्तु फलमुखमिति वाच्यं। ध्वंससम्बन्धेन यागस्य हेतुत्वोपगमात् ध्वंसस्य च ध्वंसत्वेन हेतुत्वमहेतुत्वं वा। अथ पुत्र-कृतगयाश्राद्धादिध्वंससम्बन्धेन पित्रादिस्वर्गहेतुत्वासम्भवः तद्ध्वंसस्य पित्राद्यनिष्ठत्वात्। न च तत्र स्वाश्रयपितृकत्वसम्बन्धेन स्वर्गः कार्य्य-इति वाच्यं। नानापुत्रस्थले तेन सम्बन्धेन स्वर्गस्याकृतगयाश्राद्धेऽपि पुत्रे सत्त्वेन व्यभिचारापत्तेरिति चेत्, न, पुत्रादिनिष्ठध्वंसस्यैव पित्रादौ गयाश्राद्धादेः सम्बन्धत्वात्। न च तदसम्बद्धस्य कथं तत्सम्बन्धत्वमिति वाच्यं। स्वप्रतियोग्युद्देश्यत्वसम्बन्धेन तस्य पित्रादि-सम्बद्धत्वात् सम्बन्धसम्बन्धगौरवस्य चादोषत्वात् तत्रापूर्व्वसिद्धावपि

---

प्रमाणान्तरविरोधोऽप्ययमेव बोध्य इति। ननु चरमदुःखोत्पत्तौ मिथ्या-ज्ञानध्वंसो हेतुरन्वय-व्यतिरेकात्तदपि च रागादिद्वारा कारणमिति दृष्ट-

यागादिस्थलेऽपूर्व्वासिद्धेः "पुण्यदः पुण्यमाप्नोतीत्यत्र च प्रथमपुण्यपदं यागादिक्रियापरमेव, दानपदन्तु इदं मम स्वर्गं न जनयतु अमुकस्य जनयत्विती च्छापरं, द्वितीयपुण्यपदन्तु स्वर्गादिपरमेव, तादृशेच्छारूपदानञ्च ध्वंससम्बन्धेन स्वर्गहेतुरिति तद्बलादपि नादृष्टसिद्धिः। न च मुक्तपित्रुद्देश्यकगयाश्राद्धादिना मुक्तस्यापि पितुः फलप्रसङ्गः श्राद्धध्वंसे फले वा दोषस्याहेतुत्वात् अदृष्टं प्रति तु दोषस्याहेतुतया न तत्कल्पनायां तत्प्रसङ्ग इति वाच्यं। तत्र फलप्रागभावाभावेन फलानुत्पादात् स्वप्रतियोग्युद्देश्यदोषकालोत्पन्नध्वंसस्यैव वा तत्र सम्बन्धत्वाभ्युपगमात्। अतएव तत्त्वज्ञानिनोऽपि यागादिना न भोगप्रसङ्गः तत्र तादृशभोगविशेषप्रागभावाभावात् तादृशध्वंसविशेषसम्बन्धेन यागादेरभावाच्च। ननु विजातीयगङ्गाजलाङ्गसंयोगाद्यात्मकगङ्गास्नानादिस्थले नानाव्यक्तीनां जलसंयोगादिध्वंसानां सम्बन्धत्वकल्पनामपेच्य लाघवादेकस्यैवापूर्व्वविशेषस्य सम्बन्धत्वं कारणत्वं वा कल्प्यते। न चैकैव विजातीयगङ्गाजलाङ्गसंयोगव्यक्तिः स्नानं न तु नानाव्यक्तिरिति वाच्यं। विनिगमनाविरहेण युगपदुत्पन्नानां गङ्गाजल-तदवयवादिपरम्परासंयोगानां सर्व्वेषामेव जलसंयोगतया स्नानत्वादिति चेत्, न, युगपदुत्पन्न-विनष्टानां गङ्गाजल-तदवयवादिपरम्परात्मसंयोगानामेव गङ्गास्नानत्वं, न तु क्रमोत्पन्नानां क्रमिकविनष्टानां वा, तथाच स्नानव्यक्तीनां नानात्वेऽपि एक एव ध्वंसः अतिरिक्तापूर्व्वधर्म्मिकल्पनापत्त्या लाघवेन तथैव कल्पनात्।

---

एव व्यभिचार इति चेत्, न, तदनङ्गीकारात्तथैव चतुर्थटीकादर्शनादित्याऽऽः। न च पदप्रत्यक्षे पूर्व्ववर्णांशे तद्ध्वंसोव्यापार इति वाच्यं। तदन-

न च गङ्गाजल-तदवयवादीनामाश्रयाणां भेदात् कथमेकध्वंस इति वाच्यं। आत्मजलसंयोगध्वंसानामतीन्द्रियतया आश्रयभेदेऽपि ध्वंसैक्ये बाधकाभावात् तावता गङ्गास्नानादिस्थलेऽपूर्व्वसिद्धावपि यागादिस्थलेऽपूर्व्वे मानाभावाच्च। न चापूर्व्वानभ्युपगमेऽङ्ग-प्रधानयोः फलं प्रत्यविशेषादङ्ग-प्रधानव्यवस्थैव न स्यात् अपूर्व्वाभ्युपगमे परमापूर्व्वजनकापूर्व्वजनकस्यैवाङ्गत्वात्, न हि ध्वंसपक्षे तत्सम्भवः, तद्ध्वंसस्य तद्ध्वंसाहेतुत्वादिति वाच्यं। प्रधानकथन्ताप्रवृत्तिविधिविधेयत्वेनैवाङ्गपरिभाषोपपत्तेः कथन्ताप्रधाननिर्वाहप्रकारकजिज्ञासेति न किञ्चिदेतत्।

नव्यास्तु यथा प्रामाणिकव्यवहारान्निश्चिताव्यभिचारकरूपेण सन्दिग्धव्यभिचारकरूपस्य लघुधर्म्मेण गुरुधर्म्मस्य व्याप्यधर्म्मेण व्यापकधर्म्मस्यान्यथासिद्धिस्तथा ध्वंसजन्यकार्य्यं प्रति प्रतियोगी प्रतियोगिजन्यकार्य्यं प्रति च ध्वंसोऽन्यथासिद्धः तथैव प्रामाणिकव्यवहारात्। अतएवानन्तापूर्व्वव्यक्तिकल्पनागौरवमपि न दोषाय प्रामाणिकत्वात्। न च पञ्चसु अन्यथासिद्धिषु नास्यान्तर्भाव इति वाच्यं। व्याप्यधर्म्मादिना अन्यथासिद्धिवद्व्यवहारबलादधिकस्यैवैतस्य स्वीकारात्। अन्यथा व्यवहारानादरे व्याप्यधर्म्मादिना व्यापकधर्म्मादेरनन्यथासिद्धत्वापत्तेः तेषामन्यथासिद्धत्वे तत्तद्धर्म्मभेदानामपि कारणतालक्षणे प्रवेशनीयत्वेन गौरवापत्तेः। न च कार्य्य-कारणभावस्य कार्य्य-कारण-

भ्युपगमादभ्युपगमे वा तदंशे तत्प्रत्यक्षस्यालौकिकत्वेन विषयाजन्यतया तद्व्यापाराकल्पनात्। न च शब्दध्वंसप्रत्यक्षे शब्दस्य श्रोत्रव्यापारतया व्यभिचारः, तत्र तद्ध्वंसस्यैव व्यापारत्वसम्भवादिति दिक्।

**कल्पनात्। अस्तु तर्हि देवताप्रीतिरेव व्यापार इति चेत्, न, यागस्य देवताप्रीतिहेतुत्वे मानाभावात्**

विशेषनियन्त्रिततया स्वध्वंसजन्यकार्य्यान्तरं प्रति यागस्य यागजन्य-कार्य्यान्तरं प्रति तद्ध्वंसस्याकारणत्वव्यवहारेऽपि याग-स्वर्गस्थले तथा-त्वाभावः तत्र तादृशव्यवहारस्य प्रामाणिकत्वानभ्युपगमादिति वाच्यं। तथा सति व्याप्य-व्यापकभावस्य व्याप्य-व्यापकविशेषनियन्त्रिततया व्याप्यधर्म्मान्तरेण व्यापकधर्म्मस्यान्यथासिद्धत्वव्यवहारेऽपि प्रकृते तथात्वाभावः। अत्र तादृशव्यवहारस्य प्रामाणिकत्वानभ्युपगमादिति व्याप्यधर्म्मेणान्यथासिद्धिस्थलेऽपि सुवचत्वेन तत्राप्यन्यथा-सिद्धत्वाभावापत्तेरिति प्राहुः।

'अस्त्विति, यद्यपि देवताप्रीतेर्व्यापारत्वं पूर्व्वमेव निराकृतं तथापि देवताचैतन्यस्यास्माभिरुपगमात् पूर्व्वोक्तबाधकासम्भवेन स्वमतेन दूषणान्तरमभिधातुं पुनः शङ्कते, 'अस्त्विति, यद्यपि प्रीतिरप्याशुविनाशिनी तथापि प्रीत्यनुभवजनितसंस्कारद्वारा प्रीतेर्व्यापारत्वमिति भावः। 'मानाभावादिति, यजदेवपूजायामिति शाब्दिकस्मृतेरप्रामाण्यादित्यर्थः, तथाच कल्प्यत्वाविशेषे किमपराद्धमपूर्व्वेणेति भावः। ननु भगवत्प्रणीताद्यव्याकरणमूलकत्वाच्छाब्दि-

केचित्तु फलसमानाधिकरणमेव जनकमितिस्थितौ पुण्यदानात्परस्मिन् दानध्वंसादेरभावादपूर्व्वमनन्यगत्याङ्गीकार्य्यमित्याहुः। 'अस्त्विति, पूर्व्वमन्वयप्रयोजकतया शङ्कितमिह व्यापारतयेति विशेष इत्येके। अधिकनिर्व्वचनाय तदेव स्मारितमित्यन्ये।

'मानाभावादिति, यजदेवपूजायामिति शाब्दिकस्मृतित्वादेव न स्वतः

गङ्गास्नानादौ देवताविरहेण तदसम्भवात्। न च तत्रापि तत्प्रीतिः, तस्य तत्प्रीतिहेतुत्वे मानाभावात् लाघवेन कर्त्तृ-भोक्तृगतव्यापारकल्पनाच्च। ननु नायं नियमः पुत्रकृतगयाश्राद्धादिना पितरि पितृकृतजातेष्ट्या पुत्रे चादृष्टोत्पत्तेः। अथ तत्रापि कर्त्तर्य्येवादृष्टं

कस्तुतिरपि मानमेवेत्यरुचेराह, 'गङ्गेति, 'देवताविरहेण' प्रीणनीयदेवताविरहेण, 'तदसम्भवादिति[१] देवताप्रीतेर्व्यापारत्वासम्भवादित्यर्थः, 'तत्प्रीतिरिति गङ्गाधिष्ठातृदेवताप्रीतिरित्यर्थः, 'लाघवेनेति साक्षात्सम्बन्धेन कारणत्वे लाघवेनेत्यर्थः, 'कर्तृ-भोक्तृगतेति कर्तृरूपो यो भोक्तेत्यर्थः, भोक्तृपदं प्रकृताभिप्रायेण सम्पाततायातं। 'नायं नियम इति कर्तृगत एव व्यापार इति न नियम इत्यर्थः, 'पुत्रकृतेति। न च गयाश्राद्धाद्यदृष्टयोः सामानाधिकरण्यप्रत्यासत्त्यैव हेतुत्वात् कथं पित्रादेरदृष्टोत्पत्तिरिति वाच्यं। उद्देश्यता-

(१) 'तदसम्भवादित्यत्र 'तदभावादिति कस्यचिन्मूलपुस्तकस्य पाठः तस्याप्ययमेवार्थः, कस्मिंश्चित् टीकापुस्तकेऽपि 'तदसम्भवादितीत्यत्र 'तदभावादितीति पाठो वर्त्तत इति।

प्रमाणमिति भावः। 'तत्प्रीतिः' गङ्गाप्रीतिः। न च स्वर्गिशरीरमेव व्यापारः, पूर्व्वादृष्टेन प्रलयोत्तरस्वर्गानुपपत्तेः। 'लाघवेनेति कृतिहेतुत्वनिर्व्वाहाय कल्प्यमानो व्यापारः तत्समानाधिकरण एव कल्प्यते एवं भोगोपपादकस्तत्समानाधिकरण इत्यर्थः, 'कर्तृ-भोक्तृगतेति मतभेदेन उभयथा देवताप्रीतिर्न व्यापार इति भावः। कर्तृगतत्वनियममाक्षिपति,

विहितक्रियायाः यागस्येव कर्तृगतादृष्टजनकत्वात्। न च मुक्ते पुत्रे तददृष्टनाशात् पितरि न स्वर्गः स्यादिति वाच्यं। अदृष्टस्य फलनाश्यतया पितरि स्वर्गाभावे-

सम्बन्धेन तेषामदृष्टहेतुत्वादिति भावः। 'विहितक्रियायाः' विहितक्रियात्वेन, पुण्यजनकक्रियात्वेनेति यावत्, तेन भेषजपानादौ न व्यभिचारः, तथाच पुत्रकृतं श्राद्धं स्वसमानाधिकरणादृष्टजनकं पुण्यजनकक्रियात्वात् यागवदित्यनुमेयमिति भावः। न च तददृष्टस्य कर्तृनिष्ठत्वेन समवायघटितसामानाधिकरण्यप्रत्यासत्त्या अदृष्टस्य स्वर्गहेतुत्वात् कथं तस्मात् पित्रादौ स्वर्गाद्युत्पत्तिरिति वाच्यम्। स्वजनककर्मोद्देश्यत्वसम्बन्धेन तददृष्टस्य स्वर्गादिजनकत्वादिति हृदयं। 'मुक्ते पुत्र इति पितृनिष्ठभोगात् प्रागेव मुक्ते पुत्र इत्यर्थः, 'तददृष्टेति गयाश्राद्धादिजन्यादृष्टेत्यर्थः, 'न स्वर्ग इति, स्यादिति शेषः(१)। 'अदृष्टस्येति प्रायश्चित्ताद्यनाश्यस्य प्रधानजन्यस्यादृष्टस्येत्यर्थः, तेनाजनितप्रधानापूर्व्वाङ्गापूर्व्वे न व्यभिचारः। नन्वेवं पुत्रस्याशेषविशेष-

(१) स्यादितिपदपूरणेन कस्मिंश्चित् मूलपुस्तके स्यादिति पदं नास्तीत्यनुमीयते, अस्मल्लब्धादर्शपुस्तकेषु सर्व्वेष्वेव तादृशपदं वर्त्तत इति पूरणमकिञ्चित्करमिति।

'नन्विति, 'विहितेति विहितक्रियाविशेषस्येत्यर्थः, तेन वैद्यकविहितक्रियायां न व्यभिचार इत्याहुः। 'फलेति, न चाकृतप्रधानाङ्गापूर्व्वे व्यभिचारः, यत्र न प्रधानं तत्र तदपूर्व्वं मानाभावात् भावे वा अदृष्टविशे-

नादृष्टानाशात् स्ववृत्तिभोगजनकादृष्टस्य मुक्तिविरोधित्वात्, न तु पितृगतमदृष्टं जन्यते मुक्ते पितरि दोषाभावेन योगिनामिव विहितक्रियायाः पित्रदृष्टाजनकत्वात्, तथात्वे च साङ्गमपि श्राद्धादिकं निष्फलं स्यादिति तद्विधेरप्रामाण्यापत्तिः पुत्रगतादृष्टेन च मुक्ते

गुणोच्छेदरूपमुक्तिविरोध इत्यत आह, 'स्ववृत्तीति, तथाच स्वावृत्तिभोगजनकेतराशेषविशेषगुणोच्छेद एव मुक्तिरिति भावः। इदमुपलक्षणं अशेषविशेषगुणोच्छेदस्य मुक्तित्वासिद्धेस्तत्यपि बोध्यं। पितृगतादृष्टजनकत्वे बाधकमाह, 'न त्विति, 'विहितक्रियाया इति मुक्तपितुरुद्देश्यकगयाश्राद्धादेरित्यर्थः, 'अजनकत्वादिति जनकत्वासम्भवादित्यर्थः। ननु तत्र नोत्पद्यत एवादृष्टमित्यत आह, 'तथात्वे चेति, 'अप्रामाण्यापत्तिरिति। इदमापाततः स्वरूपयोग्यत्वलक्षणफलसाधनत्वस्य विध्यर्थतया क्वचित् फलाजननेऽपि प्रामाण्यसम्भवादिति बोध्यं[१]। नन्वेवं पुत्रकृतगयाश्राद्धादिना मुक्तस्यापि पितुः सुखाद्युत्पत्तिः स्यात् तत्त्वज्ञानिनामपि भोगश्रवणेन दोषस्य सुखाहेतुत्वात् पितृनिष्ठादृष्टाभ्युपगमे च पितुर्दोषाभावेनादृष्टानुत्पत्त्या न तत्प्रसङ्ग इत्यत आह, 'पुत्रगतेति, तथाचेष्टापत्ति-

(१) इति ध्येयमिति ग० ।

षाभिप्रायकत्वात्। नन्वेवमदृष्टसत्त्वे मुक्तिविरोध इत्यत आह, 'स्ववृत्तीति। नन्वेवं मुक्तस्यापि स्वर्गोपभोगः स्यादित्यत आह, 'पुत्रेति, तथा-

पितरि सुखोत्पत्तौ न विरोधः योगिनामिव सुखोत्पत्तौ दोषस्याहेतुत्वात्। अथ पितृसुखं[१] पितृपुण्यजन्यमिति पितरि पुण्यं तेन विना तदसम्भवात् न पुत्रे तत्र फलप्रसङ्गादिति पितृस्वर्गकामनाजन्यक्रिया पितृपुण्यहेतुरिति पुत्रक्रियापि तज्जनिकेति चेत्, एवं, पितृक्रियापि पितृपुण्यजनिकेति न तां विना पितरि पुण्यं पुत्रक्रिया च पुत्रपुण्यजनिकेति पुत्रे पुण्यं पितृस्वर्गकामनाजन्यपुण्यत्वेन पितृस्वर्गहेतुरस्तु, तत्पुण्यं पितृवृत्ति तत्सुखहेतुपुण्यत्वात्, न पुत्रवृत्ति तत्सुखाहेतुरिति भावः। 'पितृसुखमिति पुत्रकृतगयाश्राद्धादिजन्यपितृसुखं पितृपुण्यजन्यं पितृसुखत्वादन्यपितृसुखवदित्यनुमेयमित्यर्थः, तर्कमाह, 'तेनेति पितृनिष्ठपुण्येन विना गयाश्राद्धजन्यपितृसुखासम्भवादित्यर्थः, व्यधिकरणपुण्यस्य व्यधिकरणभोगजनकत्वेऽतिप्रसङ्गादिति भावः। 'न पुत्रेति पुत्रस्तत्पुण्याभाववान् तज्जन्यस्वर्गाभाववत्त्वादित्यर्थः। ननु पितृक्रियायाः पितृपुण्यजनकत्वात् पुत्रक्रियातः कथं पितरि पुण्यं स्यादित्यत आह, 'पितृस्वर्गेति, उक्तानुमाने बाधकमाह, 'एवमिति। ननु तत्पुण्यस्य पुत्रनिष्ठत्वे तस्मात् पितृस्वर्गः कथं स्यात् व्यधिकरणस्यापि जनकत्वेऽतिप्रसङ्गादित्यत आह, 'पितृस्वर्गकामनाजन्येति, पुण्यपक्षकमनुमानान्तरमाशङ्कते, 'तत्पुण्यमिति, 'तत्सुखाहेतुपुण्यत्वादिति तत्सुखाहेतुफलजनकपुण्यत्वादित्यर्थः, तेन

(१) पितृगतसुखमिति क०।

पुण्यत्वादिति चेत्, न, तत्पुण्यं न पितृवृत्ति तत्कृत्य-जन्यपुण्यत्वात् पुत्रवृत्ति वा तत्कृतपुण्यत्वात्, तस्मात् पितृस्वर्गकामनाजन्यपुण्यत्वेन पितृस्वर्गहेतुतेति पुत्र-एव तत्पुण्यमिति। मैवं। स्वर्गोपपादकं ह्यपूर्व्वं स्वर्गा-श्रये कल्प्यते प्रथमोपस्थितत्वात् लाघवात् कल्पनायाः

---

सुखानुपधायके तन्निष्ठपुण्ये न व्यभिचारः। सत्प्रतिपक्षमाह, 'तत्-पुण्यमिति, 'अथ तत्रापि कर्त्तर्य्येवादृष्टमिति पूर्व्वपक्षीयस्वमतमुप-संहरति, 'तस्मादिति, 'पुत्र एवेति, तथाच 'कर्त्तर्य्येव व्यापार इति नियमोऽस्त्येवेति भावः। 'ननु नायं नियम इति पूर्व्वपक्षी दूषयति, 'मैवमिति, 'प्रथमोपस्थितत्वादिति पितृस्वर्गकामो गयायां श्राद्धं कुर्व्वीतेति विधिवाक्ये पितृपदस्य प्रथमोपस्थितत्वेन स्वर्गाश्रयस्य पितुरेव प्रथमोपस्थितेरित्यर्थः। ननु यत्र पितृपदस्य प्रथमं श्रवणे-ऽपि शक्तिज्ञानादिविलम्बेन पितुर्न प्रथमोपस्थितिस्तत्र यत्र वा विधिसापेक्षप्रवृत्तिकार्थवादादेव फल-तदाश्रययोरुपस्थितिस्तत्र च[१] गयाश्राद्धादिक्रियैव प्रथमोपस्थितेति तदाश्रयएवादृष्टं कल्प्यता-

---

(१) यत्र विधिसापेक्षप्रवृत्तकाम्यपदादेव तदाश्रयस्य पितुरुपस्थितिस्तत्र चेति ख०।

---

चेष्टापत्तिरिति भावः। अनियमवादी शङ्कते, 'तत्पुण्यमिति गयाश्राद्धादि-जन्यमित्यर्थः, नियमवादी दूषयति, 'नेति, एवञ्च जातेष्टिस्थलेऽपि कर्तृगता-दृष्टादेव फलसिद्धिरिति मन्तव्यं। अनियमवादी समाधत्ते, 'मैवमिति, 'प्र-थमेति पितृस्वर्गकाम इत्यादितः स्वर्गाश्रयः पिता प्रथमोपस्थित इत्यर्थः।

साक्षादुपपादकविषयत्वाच्च। न च स्वर्गहेतुकामनाश्रये स्वर्गकामनाजन्यक्रियाकर्त्तरि वा, विलम्बोपस्थितिकत्वात् गौरवात् परम्परया स्वर्गोपपादकत्वाच्च।

---

मित्यस्वरसादाह[१] 'लाघवादिति कार्य्य-कारणभावे समवायघटितसामानाधिकरण्यस्य प्रत्यासत्तित्वे लाघवादित्यर्थः, 'साक्षादिति लाघवेनादृष्ट-स्वर्गयोः कार्य्य-कारणभावकल्पनायाः समवायलक्षणसाक्षात्सम्बन्धस्य कारणतावच्छेदकत्वविषयत्वाच्चेत्यर्थः, अदृष्टस्य क्रियासामानाधिकरण्ये स्वजनककर्म्मोद्देश्यत्वसम्बन्धेन तस्य पितृस्वर्गहेतुतया परम्परासम्बन्धस्य कारणतावच्छेदकत्वापत्तेरिति भावः। स्वर्गहेतुकामनाश्रयत्वस्याकर्त्तर्य्यपि सत्त्वेनातिप्रसङ्गादाह, 'स्वर्गकामनेति, 'परम्परयेति स्वजनककर्म्मोद्देश्यत्वलक्षणपरम्परासम्बन्धेनादृष्ट-स्वर्गजनकत्वाद्गौरवाच्चेति योजना। ननु गयाश्राद्धादिजन्यादृष्टस्य स्वर्गसामानाधिकरण्येऽपि श्राद्धादृष्टयोः कार्य्य-कारणभावे कारणतावच्छेदकसम्बन्धगौरवं उद्देश्यत्वस्य कारणतावच्छेदकसम्बन्धत्वात्। न चोद्देश्यत्वापेक्षया स्वजनककर्म्मोद्देश्यत्वं गुर्व्विति वाच्यं। ममापि तत्तदुद्देश्यताया एव सम्बन्धत्वात् स्वजनककर्म्मोद्देश्यत्वस्य च सम्बन्धतानियामकसम्बन्धत्वात् तद्गौरवस्यादोषत्वात्। न च गयाश्राद्धादिजन्यादृष्टस्य कर्तृनिष्ठत्वे एकोद्देश्यकानेककर्तृकश्राद्धादिस्थले कर्तृभेदेन

---

(१) कल्प्यमित्यत आहेति ग०।

---

'लाघवादिति स्वर्गहेतुकामनाश्रयत्वापेक्षया स्वर्गाश्रयत्वस्य लघुत्वादित्यर्थः, उत्सर्गमाह, 'साक्षादिति साक्षात्सम्बन्धेनोपपादकविषयत्वादित्यर्थः।

यदि च पुत्रकृतपुण्येन मुक्तस्य पितुः शरीराद्युत्पत्तिः सुखञ्च स्यात् तदा साक्षिविधया असत्याभिधानादि-पुत्रक्रियाजन्यपापेन "स विष्ठायां कृमिर्भूत्वा पितृभिः सह पच्यते" इत्यादिबोधितनरकभागितापि मुक्तस्य पितुः स्यात्। तथाच पुत्रकृततथाविधशङ्कया न कश्चि-न्मोक्षार्थं ब्रह्मचर्य्यादिदुःखेनात्मानमवसादयेत् "दुःखे-

---

नानादृष्टकल्पने गौरवमिति वाच्यं। तदपूर्व्वस्य फलसामानाधिक-रण्येऽपि षट्पुरुषश्राद्धादावाश्रयभेदेन नानादृष्टकल्पने गौरवात्। न च गयाश्राद्धादिजन्यादृष्टस्य कर्तृनिष्ठत्वे गयाश्राद्धादेः केन सम्बन्धेन पितृनिष्ठस्वर्गहेतुता अदृष्टस्य व्यधिकरणत्वात् उद्देश्यतासम्बन्धेन गयाश्राद्धादेः स्वर्गपूर्व्वमसत्त्वादिति वाच्यं। अदृष्ट-स्वर्गयोः सामा-नाधिकरण्यप्रत्यासत्त्या हेतुत्वेनैवातिप्रसङ्गभङ्गात् श्राद्ध-स्वर्गयोर्दैशिक-सामानाधिकरण्यप्रत्यासत्त्या हेतुत्वविरहेऽपि क्षतिविरहादित्य-स्वरसादाह, 'यदि चेति, 'चकारः किन्त्वित्यर्थे, 'पुत्रकृतपुण्येनेति पुत्रकृतगयाश्राद्धादिजन्यपुण्येनेत्यर्थः, 'मुक्तस्य पितुः शरीराद्युत्पत्ति-रिति, सुखस्य शरीरसाध्यत्वादिति भावः। 'पुत्रक्रियाजन्यपापेनेति

---

'पुत्रगतादृष्टेन चेति दूषयति, 'यदि चेति। यद्यपि शरीराद्युत्पत्तेः प्राक् भोक्ता तथापि स्वर्गस्य तज्जन्यतानियमेन तदप्युक्तप्रायमिति दूषितमिति ध्येयं। नन्वेवं दुःखाभावसिद्ध्यनन्तरं शरीर-सुखादिसम्भवे को दोष इत्यत-

मात्यन्तं विमुक्तश्चरति न स पुनरावर्त्तते" इति श्रुति-विरोधश्च तथाच मुक्तस्य सुख-दुःखे शरीरञ्च भवती-त्यपदर्शनं मुक्ते पितरि श्राद्धादिना दोषाभावादेव

---

पुत्रक्रियाजन्यपुत्रनिष्ठपापेनेत्यर्थः, 'आवर्त्तते' शरीरी भवति, 'अप-दर्शनमिति अपसिद्धान्त इत्यर्थः, तथाच गयाश्राद्धादिजन्यादृष्टस्य कर्तृनिष्ठत्वाभ्युपगमे मुक्तपितृद्देश्यकगयाश्राद्धादिना मुक्तस्यापि पितुः स्वर्गाद्युत्पत्तिप्रसङ्ग इति तस्य फलसामानाधिकरण्यनियम इति सिद्धान्तनिष्कर्षः। ननु तददृष्टस्य पितृनिष्ठत्वाभ्युपगमेऽपि मुक्ते पितर्य्यदृष्टोत्पत्त्या सुखाद्युत्पत्तिर्दुर्वारेत्यत आह, 'मुक्त इति, 'श्राद्धा-दिना' पुत्रकृतगयाश्राद्धादिना, 'दोषाभावादेवेति दोषस्यादृष्टं प्रति सामानाधिकरण्यप्रत्यासत्त्या हेतुतया तदभावादेव नादृष्टमुत्पद्यत-इत्यर्थः। न च ममापि स्वर्गादिकं प्रति दोषस्य सामानाधिकरण्य-प्रत्यासत्त्या हेतुत्वेन मुक्ते पितरि न स्वर्गाद्युत्पत्तिरिति वाच्यं। तत्त्वज्ञानिनामपि भोगश्रवणेन दोषस्य स्वर्गाद्यहेतुत्वात्। न च गयाश्राद्धादिजन्यपुत्रनिष्ठादृष्टं प्रति पितृदोषस्यापि स्वाश्रयपितृकत्व-रूपपरम्परासम्बन्धेन हेतुत्वान्मुक्तपितृद्देश्यकगयाश्राद्धादिना पुत्रस्याप्य-दृष्टं नोत्पद्यत इति वाच्यं। गुरुतरातिरिक्तकार्य्य-कारणभावकल्पने गौरवात्। न च मुक्ते पितरि गयाश्राद्धादिजन्यस्वर्गादिप्रागभावा-भावादेव न स्वर्गाद्युत्पत्तिरिति वाच्यं। प्रागभाव एव मानाभावात्।

---

आह, 'न स पुनरिति न शरीरी भवतीत्यर्थः, शरीरनिषेधे तत्करणकं सुखमपि निषिद्धमित्यर्थः। विधेरप्रामाण्यमपाकरोति, 'मुक्त इति, 'विप्र-

नाहृष्टमुत्पद्यते। न चैवं साङ्गश्राद्धस्यापि निष्फलत्वं, अदृष्टोत्पत्तौ स्वरूपसतोदोषस्याङ्गस्य वैगुण्यात्, यथा विघ्नहेतुदुरितशून्येन कृतं मङ्गलं न पापध्वंसं जनयति स्वरूपसतः पापस्याङ्गस्याभावादेवञ्च[१] यागस्यापि

किञ्च गयाश्राद्धादिजन्यादृष्टस्य कर्तृनिष्ठत्वे यत्र तत्त्वज्ञानिना गयाश्राद्धादिकं कृतं तत्र पित्रादेः स्वर्गो न स्यात् कर्तृदोषाभावेनादृष्टानुत्पत्तेः। न चेष्टापत्तिः, अपसिद्धान्तात्। न चैवं श्येनस्थलेऽप्यदृष्टस्य शत्रुनिष्ठत्वापत्तिर्युक्तस्तौल्यादिति वाच्यं। दृष्टत्वात्। न चैवं कुसुमाञ्जलिविरोध इति वाच्यं। कुसुमाञ्जलावेकदेशिमतेन कर्तृनिष्ठत्वाभिधानादिति भावः।

केचित्तु यत्रैकेन बह्ननुद्दिश्य श्राद्धादिकं क्रियते तत्र कर्तृनिष्ठमेवैकमदृष्टं लाघवात् यत्र च गोष्ठीश्राद्धादौ बह्ननामेकमुद्दिश्य तत्र भोक्तृनिष्ठमेवैकमदृष्टमित्यनियमपक्ष एव सम्यगित्याहुः। तदसत्, गयाश्राद्धादिजन्यादृष्टविशेषस्य क्वचित् परम्परासम्बन्धेन स्वर्गविशेषोपधायकत्वं क्वचिच्च साक्षात्सम्बन्धेनेति सम्बन्धविशेषेणादृष्टविशेषस्वर्गविशेषयोः सामान्यकार्य्य-कारणभावे व्यभिचारापत्तेः गयाश्राद्धादिक्रियायाः क्वचित् साक्षात्सम्बन्धेनादृष्टविशेषोपधायकत्वं क्वचिच्च परम्परासम्बन्धेनेति गयाश्राद्धाद्यदृष्टविशेषयोः सामान्यकार्य्यकारणभावेऽपि व्यभिचाराच्चेति दिक्। 'न चैवमिति, 'एवं' मुक्ते

(१) इति तस्मादिति ख०।

हेत्विति प्रतिबन्धहेत्वित्यर्थः। उपसंहरति, 'एवञ्चेति जातेष्ट्यादिवद्याग-

व्यधिकरणो व्यापारो भविष्यतीति। उच्यते। विहित-क्रियया कर्तृगतव्यापारद्वारा कालान्तरभाविफलं जन्यत इत्युत्सर्गः, स च बलवता बाधकेनापोद्यते, प्रकृते च बाधकं नास्ति, यथा शास्त्रदेशितं फलमनुष्ठातरी-

पितरि गयाश्राद्धादिना अदृष्टानुत्पादे। 'ननु नायं नियम इति पूर्व्वपक्षी स्वाभिप्रेतमुपसंहरति, 'एवञ्चेति, कर्तृगत एव व्यापार इति नियमाभावादिति भावः। 'व्यधिकरणो व्यापार इति देवताप्रीतिरूपो व्यधिकरणो व्यापारो भविष्यतीत्यर्थः। अत्रैव पूर्व्वपक्षे समाधत्ते, 'उच्यत इति, 'उत्सर्गइति असति बाधके आवश्यक इत्यर्थः, 'स चेति, गयाश्राद्धादाविति शेषः, 'अपोद्यते' परित्यज्यते, 'प्रकृते चेति। न चातिरिक्तधर्म्मिकल्पनागौरवमेव बाधकमिति वाच्यं। देवताप्रीत्यनुभवजनितसंस्कारस्य फलव्यधिकरणतया परम्परासम्बन्धेनैव हेतुत्वे गौरवापत्त्या लाघवात् साक्षात्सम्बन्धेनापूर्व्वनिष्ठत-

स्यापि कृतिव्यधिकरणोव्यापारोऽस्त्वित्यर्थः। नन्वेवं यस्य कर्म्मणो बहुपुरुषगतः स्वर्गः फलं श्रूयते तत्रानेकादृष्टकल्पने गौरवं कथं वा नरकादिस्थितानां तेषां शौचाद्यभावे अदृष्टोत्पत्तिरिति चेत्, न, उक्तप्रमाणबलेन सर्व्वस्योपपत्तेः। प्रायश्चित्तादौ व्यभिचारादाह, 'कालान्तरेति। न च यत्रानेकक्रियात्मकं प्रायश्चित्तं तत्र का गतिरिति वाच्यं। तत्र फलस्यापि कालान्तरीयतया अदृष्टापेक्षणेऽप्यदोषात्। यद्यपि बाधकेनोत्सर्गः सम्पाद्यते, न तु बाध्यते तथात्वे नियमापत्तेः। तथापि 'स चेत्यस्य नियमस्तेत्यर्थस्तेन बलवद्बाधादुत्सर्गः फलतीति भावः। ननूत्सर्गोऽप्यनियम इत्यनियमवादिमतमेव साधितमित्यत आह, 'प्रकृते चेति, तथाच बलवद्बाधकेन

त्युत्सर्गः। पुत्रकृतगयाश्राद्धस्य पितृस्वर्गं प्रति पितृकृत-जातेष्टेः पुत्रपूतत्वादिकं प्रति हेतुत्वस्य शास्त्रेण बोधनात्। नन्वयं नियम एव पितृयज्ञ-जातेष्ट्यादौ परम्परासम्बन्धेन कर्त्तृगतमेव फलं। न हि यस्य कस्यापि पितरि पुत्रे वा फलं, किन्तु स्वपितृ-पुत्रयोस्तथाच स्वपितृगतत्वं स्वर्गभागिपितृकत्वं वा परम्परासम्बन्धः फलेन पुत्रस्य, एवं पूतपुत्रकत्वादिकमपि[१] पितृगतमेव।

त्तद्वैजात्यविशेषेण हेतुत्वकल्पने व्यक्तिकल्पनायाः फलमुखत्वादिति भावः। 'इत्युत्सर्ग इति, न तु नियम इति शेषः। नियमाभावे हेतुमाह, 'पुत्रकृतेति, 'नन्वयमिति, 'अयं' शास्त्रदेशितं फलमनुशातरीत्येवंरूपः, 'पितृयज्ञेति, यत इत्यादिः, परम्परासम्बन्धमेव विवृणोति, 'न हीति, स्वपितृगतत्वं फले पुत्रस्य सम्बन्धः न तु पुत्रे फलस्येत्यत आह, 'स्वर्गभागीति स्वाश्रयपितृकत्वमित्यर्थः, 'पितृगतमेवेति स्वाश्रयपितृत्वरूपपरम्परासम्बन्धेनेत्यर्थः, 'साचात्सम्बन्धेने-

(१) पूतपुत्रत्वादिकमपीति ग० ।

गयाश्राद्धादौ कृतिव्यधिकरणव्यापाराभ्युपगमेऽपि यागे कृतिसमानाधिकरण-एव व्यापारस्तन्मते तु व्यधिकरणो देवताप्रीत्यादिरिति विशेषः।

केचित्तु उत्सर्गो नानियमः किन्तु सर्व्वत्र प्रसक्तिज्ञानमिति यावत्, तस्य क्वचिदपवादोऽप्यायाथार्थ्यमिति नियमाद्भेदः, एवञ्च 'स चेत्यस्यापि यथाश्रुत एव तात्पर्य्यमित्याहुः।

दृष्टान्तं दूषयति, 'नन्विति तादृशफलस्य कर्तृगामित्वे नियम एवे-

न च फलस्य कर्त्तृगतत्वं साक्षात्सम्बन्धेनैवेति वाच्यं। ग्राम-पशु-पुत्र-हिरण्यादीनां परम्परया कर्त्तृगतत्वमिति व्यभिचारात्। न हि ग्रामादयः साक्षात् कर्तृ-सम्बद्धाः। एवं फलस्य साक्षात्कर्त्तृगामित्वबोधने शास्त्रस्योत्सर्गो न तु फलस्य कर्तृगामितावोधने।

यत्तु स्वर्गभागिपितृकत्वं न फलं तत्कामनाया-अधिकारिविशेषणत्वाभावात् पितृगतस्वर्गकाम इत्यादिश्रुतेः। स्वतश्च तथा कामनया प्रवृत्तौ श्रुतकामना-

वेति, परम्परायाः कर्त्तरि फलस्य सम्बन्धत्वे मानाभावादिति भावः। 'परम्परयेति स्वामित्वसम्बन्धेनेत्यर्थः, अन्यथा ग्रामवानहं पशुमानहं इति प्रतीत्यनुपपत्तेरिति भावः। 'एवमिति एवं सतीत्यर्थः, 'कर्तृगामितावोधन इति साक्षात्परम्परासाधारणकर्तृगामितावोधन-इत्यर्थः, तत्र तु नियम एवेति भावः।

अत्रैव पूर्व्वपक्षे भ्रान्तानां समाधानमाशङ्क्य निराकरोति, 'यत्त्विति, 'स्वर्गभागीति स्वाश्रयपितृकत्वमित्यर्थः, 'अधिकारिविशेष-णत्वाभावादिति कर्तृविशेषणत्वेनाश्रुतत्वादित्यर्थः, 'स्वतश्चेति तत्काम-

---

त्यर्थः, 'एवमिति पूतपुत्रकत्वादिना परम्परासम्बन्धेनेति शेषः। 'ग्रामेति स्वत्वं हि तत्र सम्बन्धः, तच्च शास्त्रविरुद्धोपायविषयत्वं इत्युपायादिघटितं न साक्षादित्याशयः। एवं सत्युत्सर्गत्वप्रवादं समर्थयति, 'एवमिति। सम्बन्धस्य फलत्वमिति भ्रमवतः समाधानं निरस्यति, 'यत्त्विति, 'तद्धीति,

विरहेण प्रयोगेऽङ्गवैगुण्यात् फलाभावप्रसङ्गः। किञ्च स्वर्गभागिपितृकत्वं विशिष्टं तच्च विशेष्यं तत्पितृकत्वं न काम्यं न वा फलं सिद्धत्वात्तदसाध्यत्वाच्च, किन्तु विशेषणं पितृगतस्वर्ग इति स एव फलमिति। तन्न। न हि स्वर्गभागिपितृकत्वं फलं, अपि तु स्वर्गेण समं पुत्रस्य परम्परासम्बन्धरूपं तदुक्तमिति।

उच्यते। यदि परम्परासम्बन्धेन पुत्रगतत्वं पितृस्वर्गस्य तदा संयुक्तसमवायादिना पुत्रेतरस्यापि फलं स्यात्। स सम्बन्धो न शास्त्रेण बोधित इति चेत्, तर्हि स्वर्गभागिपितृकत्वमपि न तथा शास्त्रेणाबोधितत्वात्,

---

नाया अधिकारिविशेषणत्वेनाश्रुतत्वेऽपि चेत्यर्थः, 'प्रयोगे' यागादौ। 'पितृगतस्वर्ग इति, काम्य इति शेषः। भ्रमं निराकरोति, 'न हीति, गुढाभिसन्धिः समाधत्ते, 'परम्परेति।

'संयुक्तेति स्वसमवायिसंयुक्तशरीरसंयोगसमवायेनेत्यर्थः, 'पुत्रेतरस्यापीति पुत्रेतरगतमपीत्यर्थः, तथाच परम्परासम्बन्धस्य सर्व्वसाधारणतया शास्त्रदेशितमिति सूत्रेण तद्बोधनं व्यर्थमिति भावः। गूढाभिसन्धिमुद्घाटयति, 'स सम्बन्ध इति, तथाच शास्त्रबोधित एव परम्परासम्बन्धः शास्त्रदेशितफलस्येति भावः। 'न तथेति न पुत्रादौ पितृस्वर्गादेः सम्बन्ध इत्यर्थः, 'शास्त्रेणेति, पितृस्वर्गकाम-

नन्वेवमधिकारः फलसाम्यं तच्च फलसम्बन्धित्वमिति स न स्यादिति चेत्,

ग्राम-पशु-हिरण्यादीनाञ्च सिद्धत्वेन न काम्यत्वं किन्तु तद्विषयकं स्वत्वं काम्यं फलमपि तदेव तच्च साक्षादेव कर्त्तृगतमिति कर्त्तृगतत्वेन फलस्य साक्षात् सम्बन्धो-नियत एव तस्माद् यद्गतत्वेन फलकामना तद्गतमेव शास्त्रदेशितं फलं। अतएव कामनाविषयः स्वगत-

---

इत्येव श्रुतेरिति भावः। ननु शास्त्रबोधितपरम्परैव सम्बन्धः शास्त्र-देशितफलस्येति नियमे ग्रामादेः कथं स्वामित्वसम्बन्धेन कर्तृगतत्वं शास्त्राबोधितत्वात् तथाच ग्रामवानहं पशुमानहमित्यादिप्रतीत्य-नुपपत्तिरित्यत आह, 'ग्रामेति, 'सिद्धत्वेनेति संयोगादिना सम्बन्धेन सिद्धत्वेनेत्यर्थः, 'तद्विषयकं स्वत्वमिति तन्निरूपितस्वामित्वसम्बन्धेन तत्काम्यमित्यर्थः, 'तदेवेति स्वामित्वसम्बन्धेन ग्रामाद्येवेत्यर्थः, 'तच्च' ग्रामादि च, 'साक्षादेवेति स्वामित्वसम्बन्धेनैवेत्यर्थः, 'कर्तृगतत्वेनेति वेदबोधितसम्बन्धेनैव ग्रामादेः कर्तृगतत्वेनेत्यर्थः, कामनाघटकतया स्वामित्वस्यापि वेदबोधितत्वादिति भावः। 'फलस्य' शास्त्रदेशितफ-लस्य, 'साक्षात्सम्बन्ध इति शास्त्रबोधितपरम्परैव सम्बन्ध इत्यर्थः,। नन्वेवं फलं क्वचिदनुष्ठातरि क्वचिच्चान्यत्रेत्यनियमेऽतिप्रसङ्ग इत्युपसंहरन् निराकरोति, 'तस्मादिति, 'फलकामनेति यत्कर्मजनिकेति शेषः, 'शास्त्रदेशितं फलमिति, तत्कर्मणा जन्यत इति शेषः। यद्यपि नायं

---

न, एतन्मते फलकामनाया एवाधिकारत्वात्। 'तच्चेति, स्वरूपसम्बन्धेनेति भावः। एवं फलस्येत्यादि दूषयति, 'कर्तृगतत्वेनेति। शास्त्रदेशितं फलमनु-ष्ठातरीत्युत्सर्ग इत्युपसंहरन्नियमान्तरं दर्शयति, 'तस्मादिति, 'अतएवेति,

एव स्वर्गः फलं यागादेः स्वर्ग-पूतत्वादेश्च पितृ-पुत्र-गतत्वेन काम्यत्वमिति श्राद्ध-जातेष्ट्यादेः पितृ-पुत्र-गतमेव फलं। एवञ्च मातापित्रादिगतस्वर्गकामनया पुत्रादिना कृतं पुष्करिणीमहादानादिकं माता-पित्रादिस्वर्गजनकमेव कामनाविषयस्वर्गसाधत्वेन तेषां श्रुतत्वात्। न हि स्वगतस्वर्गकामस्य कर्त्तव्यतां पुष्करि-ण्यादेर्विधिर्बोधयति तथा श्रुतेः, किन्तु स्वर्गकामस्य,

---

नियमः स्वस्वर्गोद्देशेन कृतगयाश्राद्धादौ पुत्रेतरपुत्रत्वादिकमुद्दिश्य कृते जातेष्ट्यादौ च व्यभिचारात् तेषां स्वगतस्वर्गाद्यजनकत्वात्, तथापि 'तद्गतमेव शास्त्रदेशितं फलमित्यस्य तदितरगतशास्त्र-देशितफलं तत्कर्म्मणा न जन्यत इत्यर्थ इति न दोषः। 'काम-नाविषय इति, स्वगतत्वेन कामनाविषयीभूतो यागादेः फलं स्वर्गः स्वगतएवेति योजना, 'स्वर्गसाधनत्वेनेति स्व-परसाधारणस्वर्ग-मात्रसाधनत्वेनेत्यर्थः, 'तेषां' पुष्करिणीदानादीनां, 'स्वगतेति स्वमा-

---

यतस्तद्गतत्वेन कामनेति भावः। 'अविशिष्टमिति, तथाच तत्र परगत-स्वर्गकामनैवाधिकार इति भावः। इतोऽप्यनुष्ठातरीत्युत्सर्ग इति बोध्यं। न च व्यक्तिवचनानां सन्निहितविशेषपरत्वमिति स्वकीयस्वर्गसाधनतैव श्रुत्या बोध्यत इति वाच्यं। स्वर्गत्वेन तस्यापि बुद्धिविषयतया बुद्धिसन्निधानस्याविशे-षात्। नन्वेवमतिप्रसङ्गः येन केनचित् कृतस्य यस्य कस्यचित् स्वर्ग-कामनया महादानादेः फलोदयः स्यात्तथाच रागादिना परदारैव तत्-सम्भवादुपोषणादिदुःखाननुभवप्रसङ्ग इति चेत्, न, यत्र सामान्यतोऽधि-कारबोधनं विशेषतस्तद्बोधकं नास्ति तत्र तथात्वस्येष्टत्वात् अतएव परगत-

स्वर्गश्च स्वगतः परगतो वेति स्वर्गकामत्वमविशिष्टं, यजेतेत्यात्मनेपदमपि कर्त्त्रभिप्रेतक्रियाफलमात्रजनकत्वे, न च स्वर्गकामो दद्यादित्यादौ, स्वगतस्वर्गकामनाया-

---

त्रगतेत्यर्थः, 'स्वर्गकामत्वमविशिष्टमिति मातापित्रादिस्वर्गकामनाया-अप्यधिकारिविशेषणतया अतस्वर्गकामनाश्रयत्वमविशिष्टमित्यर्थः। नन्वेवं स्वर्गकामो यजेतेत्यादावपि पितृस्वर्गादेः फलत्वे तत्र कथमात्मनेपदं स्यात्, "कर्त्त्रभिप्राये क्रियाफल इति सूत्रेण कर्तृसमवेत एव क्रियाफले तद्विधानात्तत्र हि कर्त्त्रभिप्राय इत्यस्य कर्त्तारमभिप्रैति समवैतीति व्युत्पत्त्या कर्तृसमवेत इत्यर्थ इति निबन्धृभिर्व्याख्यानादित्यत आह, 'यजेतेति, 'कर्त्त्रभिप्रेतेति कर्तृसमवेतेत्यर्थः, 'क्रियाफलमात्रजनकत्व इति क्रियाफलजनकत्वमात्र इत्यर्थः, तच्च तत्र कर्तृगतफलाभिप्रायके यजेतेत्यत्राप्यस्त्येव, न ह्यकर्तृगतफलाजनकत्वे आत्मनेपदमिति भावः। परस्मैपदन्तु परगतफलमात्रजनकत्वाभिप्रायेण। न चैवं स्वर्गकामो दद्यादित्यादौ स्व-परसाधारणफलबोधके परस्मैपदमनुपपन्नमिति वाच्यं। तत्र हि परस्मैपदस्य सिद्धधर्ममात्रे तात्पर्य्यं, न तु परस्मैपदार्थे तथैव शिष्टाचारादिति

---

फलार्थितयैव दुर्गास्तवपाठाद्याचरन्ति। राजादीनां दुःखाननुभवस्य शङ्कामुक्ततया कायक्लेशस्य फलाधिक्यहेतुत्वमित्यन्ये। नन्वेवं यजेतेति न स्यात् कर्तृगतक्रियाफल एवात्मनेपदस्मरणात् अतएव परार्थे पचतीति प्रत्युदाहरणं, अतएव यजेतेत्यात्मनेपदबलादपि फलस्य कर्तृगामित्वेव प्रतीयत-इति तृतीयटीकापि सङ्गच्छत इत्यत आह, 'यजेतेति। न च टीकाविरोधः, तस्य मतान्तरत्वादन्यार्थत्वाद्वा प्रत्युदाहरणमप्यनिच्छाविषयकमेवेति। न च

अन्तरङ्गत्वादौत्सर्गिकत्वाच्च स्वर्गकामत्वेन स्वगतस्वर्ग-काम एवोच्यते सामान्ये बाधकं विना विशेषपरत्वे मानाभावात् ।

केचित्तु सम्यग्गृहस्थाश्रमपरिपालनस्य ब्रह्मलोकावाप्तिः फलं श्रूयत इति जातेष्टि-पितृयज्ञयोरपि गृहस्थकर्म्मत्वेन तदेव फलमिति फलस्य कर्त्तृगामित्वे

---

निगर्व्वः । 'स्वर्गकाम इति स्वर्गकामः पुष्करिणीं दद्यादित्यादावित्यर्थः, 'सामान्य इति । नन्वेवमग्निष्टोमादेरपि परगतस्वर्गकामनया कर्त्तव्यत्वापत्तिः । न च कर्त्तुरुपस्थितत्वात् स्वगतस्वर्ग एव तत्र शब्दार्थ इति वाच्यं । पुष्करिणीदानादावप्येवं तुल्यत्वादिति चेत्, न, तस्य स्वगतस्वर्गकामकर्त्तव्यप्रकरणे परिपठितत्वेन बाधकसत्त्वादिति भावः । 'सम्यगिति समस्तेत्यर्थः, 'ब्रह्मलोकावाप्तिः' मोक्षप्राप्तिः, 'तदेव फलमिति कर्तृगतमिति शेषः । 'फलस्येति

यत् ज्वलन्ति हि काष्ठानि तत् किं पाकं न कुर्व्वत इत्यादावकर्त्रभिप्रायेऽपि तत्प्रयोगान्नैवमिति वाच्यं । तत्रात्मनेपदस्य प्रयोगसाधुत्वादित्येके । शिष्टप्रयोगत्वमेवात्र समाधिरित्यन्ये ।

यत्तु पितृगतस्वर्गकामनया न कर्म्म क्रियते किन्तु फलमुत्पाद्य तस्मै दीयते "पुण्यदः पुण्यमाप्नोतीति वचनादिति, तन्न, उक्तरीत्या तथात्वे बाधकाभावात् मृतस्य स्वीकाराभावेन सम्प्रदानत्वासिद्धौ दानासिद्धेश्च विषाणे दद्यादित्यादौ च दानपदं गौणं वेदबलादिह तु जीवने पुण्यदानेनैवोपपत्तेर्मुख्यार्थत्वे बाधकाभावादिति दिक् । 'सम्यगिति समस्तेत्यर्थः । तर्हि कथमुत्सर्ग इत्यत आह, 'प्रातिस्विकेति प्रत्येकेत्यर्थः । ननु सामस्त्या-

नियम एव, प्रातिस्विकफलाभिप्रायेणोत्सर्ग इत्याहुः। ननु यावन्नित्यपरिपालनस्य तत् फलं न तु काम्य-श्राद्धादेः, काम्यान्तर्भावे मानाभावात् यावत्काम्यानुष्ठानाशक्तेश्च। यावच्छक्यानुष्ठानस्यापि नात्रान्तर्भावः कामनाविरहादिनाप्यकरणात् यावन्नित्यानुष्ठाने तत्-फलाभावप्रसङ्गात् नित्यस्यैवावश्यकत्वेनोपस्थित्यान्वयाच्च। अपि च तैः कर्म्मभिः प्रत्येकमुत्पत्त्यपूर्व्वं तैश्च परमापूर्व्वं जन्यते इति न, गौरवान्मानाभावाच्च।

---

शास्त्रीयक्रियायाः कर्तृगतफलजनकत्वे नियम एवेत्यर्थः, 'प्राति-स्विकेति स्वर्गादिप्रत्येकफलेत्यर्थः। केषाञ्चिन्मत एव शङ्कते, 'नन्विति, ननु यस्य कामनाविरहादकरणं तस्य न भवत्येव तत्फल-मित्यरुचेराह, 'यावन्नित्येति यावन्नित्यमात्रानुष्ठान इत्यर्थः, 'तत्-फलाभावेति ब्रह्मलोकाभावप्रसङ्गादित्यर्थः, तथाच सिद्धान्तव्याघात-इति भावः। 'आवश्यकत्वेनोपस्थित्यान्वयाच्चेति, नित्यघटितयावत्-कर्म्मोपस्थितौ यावन्नित्योपस्थितेरावश्यकत्वाच्चेत्यर्थः, 'गौरवादिति अन्तिमक्रियामात्रादेव तत्सम्भवेन पूर्व्वक्रियाया अपूर्व्वजनकत्वकल्पने गौरवादित्यर्थः, अन्तिमत्वनिर्वाहायैव पूर्व्वाशेषकर्म्मोपयोगादिति भावः। ननु प्रामाणिकं गौरवं न दोषायेत्यत आह, 'मानेति,

---

र्थकं सम्यक्पदमेव मानमित्यत आह, 'यावत्काम्येति, तथाचानन्यगत्या सङ्कोच इति भावः। एवं सत्ययं दोष इत्याह, 'यावन्नित्येति, 'नित्यं' आवश्यकं, तेन नैमित्तिकस्यापि सङ्ग्रहः, 'गौरवादिति अन्तिमक्रियामात्रात्

किन्त्वन्तिमक्रियया परिपालनरूपक्रियान्तरेण वेति, न सर्व्वं कर्म्म ब्रह्मलोकावाप्तिफलकमिति[१]। मैवं। भगवदुद्देशेन कृतस्य काम्यस्य नित्यस्य वा यस्य कस्यापि कर्म्मणः परिपालनाद्ब्रह्मलोकावाप्तिः फलं श्रुयत-इति जातेष्टि-पितृयज्ञयोरपि तथा कृतयोस्तदेव फलं। तथाच भगवद्गीता "यज्ञायाचरतः कर्म्म कर्म्मग्रन्थि-

'परिपालनं' भगवत्समर्पणरूपकर्म्मान्तरं, 'तथा कृतयोरिति भगवदुद्देशेन कृतयोरित्यर्थः, 'तदेव फलमिति। न च तथापि भगवदुद्देशेन कृतयोर्जातेष्टि-पितृयज्ञयोः कर्तृनिष्ठफलजनकत्वाभावेन तत्रैव कर्तृनिष्ठफलजनकत्वनियमो व्यभिचारीति वाच्यं। तयोरपि विधिप्रतिपाद्यतावच्छेदकरूपेणैव ब्रह्मलोकावाप्तिजनकजातीयत्वेन व्यभिचाराभावात् विधिप्रतिपाद्यतावच्छेदकरूपेण कर्तृनिष्ठफलजनकजातीयत्वस्यैवोक्तनियमेन साध्यत्वादिति भावः। 'यज्ञायेति यज्ञो विष्णुः तदुद्देशेन कर्म्माचरतः पुरुषस्येत्यर्थः, 'कर्म्मग्रन्थिविलीयत-

(१) ब्रह्मलोकावाप्तिफलजनकमितीति क० ।

तत्सम्भवे क्रियान्तरहेतुत्वकल्पने गौरवादित्यर्थः। ननु प्रामाणिकं गौरवमपि न्याय्यमित्यत आह, 'मानेति। यद्यपि सन्ध्यावन्दनवत् सर्व्वकर्म्मणां तत्फलसम्बन्धो युज्यते तद्वदेवोत्पत्त्यपूर्व्वाणि परमापूर्व्वं वा तद्वदेव च व्यवधानेऽप्येकं प्रयोगत्वं, तथापि काम्यान्तर्भावे मानाभाव इत्यादि दूषण एव तात्पर्य्यमित्याहुः। सन्ध्यावन्दनेऽप्यन्तिमस्यैव ब्रह्मलोकफलकत्वमित्यन्ये। परिपालनञ्च भगवत्समर्पणरूपं कर्म्मान्तरमित्याशयः। 'भगवदिति, तथाच

र्व्विलीयते। यज्ञार्थात्कर्म्मणोऽन्यत्र लोकोऽयं कर्म्म-बन्धनः"। इति, तच्च कर्म्म यज्ञार्थतया प्रत्येकमेव तत्फलसमर्थं सम्बलनन्तु मङ्गलवदुपयुज्यते, अन्यथा एकप्रयोगस्य व्यवधानादसम्भवः, परिपालनन्तु कर्त्त-

---

इति आत्यन्तिकी दुःखनिवृत्तिर्भवतीत्यर्थः, 'यज्ञार्थादिति भगवदुद्देशकृतकर्म्मभिन्ने कर्म्मणीत्यर्थः, 'कर्म्मबन्धनः' कर्म्मभिर्बध्यते दुःखभागी भवतीत्यर्थः। नन्वेवं भगवदुद्देशेन यस्य कस्यचित् कर्म्मणोऽनुष्ठान एव ब्रह्मलोकावाप्तिः स्यादित्यनिष्टापत्तिमाह, 'तच्चेति। नन्वेवं कर्म्मान्तराचरणमनुपपन्नमित्यत आह, 'सम्बलनमिति कर्म्मान्तराचरणमित्यर्थः, 'उपयुज्यते' उपपद्यते, यथा माङ्गल्यशङ्कया मङ्गलान्तराचरणं तथात्रापि साङ्गत्वशङ्कया कर्म्मान्तराचरणमित्यर्थः, 'अन्यथेति, यदि कर्म्मराशेरेव तत्फलं तदेत्यर्थः, 'एकप्रयोगस्येति एकस्य कर्म्मणोऽन्यकर्म्मकाले विनाशात् फलासम्भव इत्यर्थः, प्रत्येकापूर्व्वजन्यपरमापूर्व्वे च मानाभाव इति भावः। ननु परिपालनरूपक्रियान्तरस्य तत्फलं न तु जातेष्ट्यादेरित्यत आह, 'परिपालनन्त्विति, 'कर्त्तव्यमित्येवेति उत्कटफलकामनाव्यतिरेकेण जातेष्ट्यादिरूपविहितकर्म्मणां करणमित्यर्थः।

---

भगवदुद्देशकृतत्वं सम्यक्त्वमिति भावः। 'यज्ञायेति, इज्यत इति यज्ञो विष्णुः तत्प्रीतये, स च जगत्कर्त्तृभिन्न इति न तत्र प्रीतिर्विरुद्धा। तत्समर्पणायेत्यन्ये, 'कर्म्मग्रन्थिः' कर्म्मजनितो धर्म्मोऽधर्म्मस्च, ग्रन्थिर्बन्धहेतुत्वादित्यर्थः। 'मङ्गलवदिति, तथाच यथा तत्रानेकविघ्नध्वंसस्तथात्राप्यनेक-

व्यमित्येव करणं । तदुक्तं "ददामि देयमित्येव यजे यष्टव्यमित्यहमिति ।

यत्तु निषिद्धासम्बन्ध एव सम्यक्त्वं न तु विहित-माचानुष्ठानमिति । तन्न । यत्किञ्चिन्निषिद्धासम्बन्ध-स्याभावात्(१) सर्व्वनिषिद्धासम्बन्धस्य सर्व्वच सुलभ-त्वादिति सम्प्रदायः ।

अच ब्रूमः । भगवदुद्देशेन कृतं किञ्चिदेव कर्म्म, सर्वं काम्यं वा, सर्वं नित्यं वा, सर्वमिति वा, नाद्यः

यत्तु कर्त्तव्यताज्ञानमाचात् जातेच्छादेः करणमित्यर्थ इति, तन्न, तावन्माचात् प्रवृत्त्यसम्भवात् ।

ननूत्कटफलकामनाव्यतिरेकेण विहितकर्म्मणां करणमेवासिद्ध-मित्यत आह, 'तदुक्तमिति जनकादिभिरिति शेषः । 'ददामि देयमित्येवेति उत्कटकामनाव्यतिरेकेणापि दानस्य कर्त्तव्यत्वादहं ददामि यागस्य कर्त्तव्यत्वादहं यजे इत्यर्थः ।

(१) निषिद्धासम्बन्धस्यासम्भवादिति क० ।

फलमित्याहुः । तच्चिन्त्यं मुक्तेर्नानात्वाभावात् । सारूप्य-सालोक्यादिभेदात् तथात्वमित्येके । अन्ये तु एकस्य कर्म्मणस्तत्फलकत्वेऽप्यसाङ्गत्वशङ्कया मङ्गलवत् कर्म्मान्तराचरणमित्यर्थ इत्याहुः । ननु परिपालनरूपक्रियान्तरमेव तत्फलत्वेन श्रूयते न जातेच्छादीत्यत आह, 'परिपालनन्त्विति, 'एवकारः फलकामनाव्यवच्छेदार्थः । तदुक्तं "असङ्कल्पितफलकाम्यकर्त्तारो हि हिरण्य-गर्भपदवीमवाप्यापवृज्यन्त इति । न च फलकामनां विना प्रवृत्तिरेव न

एकेनैव काम्येन नित्येन वा स्नानेन तथा कृतेन तत्फलसिद्धौ बहुवित्तादिसाध्ये श्राद्धादावप्रवृत्त्यापत्तेः। नापरौ अशक्यत्वात्। न तुर्य्यः जातेष्ट्यादेर्नित्यत्वाभावात्। तस्मात् सम्यग्गृहस्थाश्रमपालनस्य तत्फलं, सम्यक्त्वञ्च सामस्त्यमेव अतो गयाश्राद्धादेर्न ब्रह्मलोकावाप्तिः फलमिति साधूक्तं "शास्त्रदेशितं फलं

---

'विहितमात्रेति। 'मात्रपदं यावदर्थकं, 'एकेनैवेति। न च साङ्गत्वशङ्कया तदाचरणमिति वाच्यं। साङ्गे सावधानेन कृतेऽप्येकस्मिन् कर्म्मणि अपरानुष्ठानदर्शनादिति भावः। 'जातेष्ट्यादेरिति, तथाच जातेष्ट्यादावुक्तनियमो व्यभिचार्य्येवेति भावः। 'सम्यक्त्वञ्चेति,[१] तदाश्रमविहितावश्यककर्म्मणामिति शेषः। दैवादेकस्याकरणे न भवत्येव तत्फलं। न च प्रत्येकजन्यापूर्व्वकल्पने

---

(१) सामस्त्यमितीति ग०।

---

स्यादिति वाच्यं। उत्कटफलकामनानिषेधात्। 'एकेनैवेति, विशेषतः सालोक्यादिफलबोधकश्रुत्यादेरभावादेकेनैव तावत्सिद्ध्यापत्तेः। तथापि चाल्पायाससाध्यत्रादिकर्म्मणैवोपपत्तौ बह्वायासबहुलकर्म्माकरणप्रसङ्गः। न चासाङ्गत्वशङ्कया तदिति वाच्यं। सावधानं साङ्गेऽपि कृतेऽन्यकर्म्मफलादर्शनात्। 'सामस्त्यमेवेति, आवश्यककर्म्मणामिति शेषः। तथाच तेषामेव कर्त्तव्यमित्येव कृतानां ब्रह्मलोकावाप्तिः फलं न तु जातेष्ट्यादेः। तत्र च विनिगमनाविरहेण सन्ध्यावन्दनवत् सर्व्वकर्म्मणामेव तत्फलहेतुत्वमुत्पत्त्य-

अनुष्ठातरीत्युत्सर्ग इति । तच्च फलं क्वचिद्विधिवाक्यश्रुतं क्वचिच्चार्थवादिकमिति ।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ शब्दाख्यतुरीयखण्डे अपूर्व्ववादः ॥

---

गौरवमिति वाच्यं । प्रामाणिकत्वादिति भावः । 'क्वचिदिति यथा स्वर्गकामो वाजपेयेन यजेतेत्यादौ,[१] 'क्वचिच्चेति, अर्थवादस्तु द्वेधा विधिसन्निधिश्रुतो यथा "आत्मा ज्ञातव्यः न स पुनरावर्त्तत इति, क्वचिच्च विधिकल्पको यथा "तरति मृत्युमित्यादौ, तत्सिद्धमित्यर्थः । एतदुपलक्षणं क्वचिन्न्यायगम्यमपि बोध्यं यथा विश्वजिता यजेतेत्यादाविति ॥०॥

इति श्रीमथुरानाथ-तर्कवागीशविरचिते तत्त्वचिन्तामणिरहस्ये शब्दाख्यतुरीयखण्डरहस्येऽपूर्व्ववादसिद्धान्तरहस्यं ॥

---

(१) स्वर्गकामो राजसूयेन यजेतेत्यादाविति ग० ।

---

पूर्व्वादिकल्पनमपि प्रामाणिकमित्युत्सर्ग एवेत्युपसंहरति, 'इति साधूक्तमिति । 'क्वचिदिति स्वाराज्यकामो राजसूयेन यजेतेत्यादौ । 'क्वचिच्चेति तरति मृत्युमित्यादौ । इति प्रकाशः ।

# अथ कार्य्यान्वितशक्तिवादः ।

नन्वर्थवादादीनां सिद्धार्थतया न प्रामाण्यं । कार्य्यान्वित एव पदानां शक्त्यवधारणात् वृद्धव्यवहारा-

## अथ कार्य्यान्वितशक्तिवादरहस्यम् ।

प्रसङ्गादर्थवादस्य प्रामाण्यं व्यवस्थापयितुं परमतमवतारयति, 'नन्वित्यादि ।

केचित्तु फलं क्वचिदार्थवादिकमिति पूर्व्वमुक्तं तत्रैवाक्षिपति, 'नन्वित्यादि, तथाचोपोद्घात एवात्र सङ्गतिरित्याहुः । तदसत्, विध्येकवाक्यतापन्नार्थवादस्य तैरपि प्रामाण्यस्वीकारात्तमादायैव तदुपपत्तेः ।

'अर्थवादादीनामिति पटोऽस्ति घटोऽस्तीत्यादिवाक्यानां स्वरूपाख्यानमात्रपराणां काव्य-नाटकादीनाञ्चेत्यर्थः, 'सिद्धार्थतयेति कार्य्यतावाचकलिङाद्यसमभिव्याहृततयेत्यर्थः, 'न प्रामाण्यमिति न विशिष्टानुभवजनकत्वमित्यर्थः, किन्तु पदार्थोपस्थिति-तत्संसर्गाग्रहमात्रजनकत्वमिति, अत्र शाब्दत्वं कार्य्यत्वप्रकारकज्ञानवृत्ति न वा शब्दप्रामाण्यं कार्य्यत्वोपस्थापकपदनिराकाङ्क्षपदज्ञानवृत्ति न वा अनुमित्याद्यजनकं घटपदज्ञानं कार्य्यत्वानन्वितघटाद्यनुभवजनकं न वेत्यादयो विप्रतिपत्तय ऊहनीयाः । कुतो न प्रमाणं तदाह, 'कार्य्यान्वित एवेति, शक्तिर्द्विविधा एका कारणतारूपा,

आर्थवादिकमित्याक्षिपति, 'नन्विति । एतदेव कुत इत्यत आह, 'व्यव-

अन्या पदसङ्केतरूपा इयमेव स्मारिका शक्तिरिति गीयते, प्रकृते च शक्तिपदं कारणतापरं यानुभाविका शक्तिरिति गीयते तथाच कार्य्यत्वान्वितघटशाब्दबुद्धित्वेन घटपदज्ञानत्वेनेत्यादिक्रमेण पदमात्राणां कार्य्यत्वान्वितस्वार्थबोध एव जनकत्वावधारणादित्यर्थः, शक्तिपदस्य स्मारकशक्तिपरत्वन्तु न सङ्गच्छते गुरुणा जातावेव घटादिपदानां स्मारकशक्त्यभ्युपगमात्। अतएव तन्मतेऽपि यज्यादि-पदात् स्मृतिर्यागत्वादिरूपेणैव अनुभवस्तु लिङादिपदसाचिव्यात् कार्य्यताविशिष्टस्यैव। किञ्च घटादिपदानां कार्य्यत्वान्वितघटत्वादि-रूपेण स्मारकशक्त्यभ्युपगमेऽपि घटोऽस्तीत्याद्यर्थवादानां प्रामाण्यं दुर्व्वारमेव घटादिपदात् कार्य्यत्वान्वितघटत्वादिरूपेण घटादेरुप-स्थित्या कार्य्यत्वान्वितघटोऽस्तीत्यादिरूपशाब्दबोधस्यैव सम्भवात् पदार्थोपस्थित्याकाङ्क्षाज्ञानादिरूपसकलसामग्रीसत्त्वात्। न च शक्ति-पदस्यानुभावकशक्तिपरत्वेऽपि घटोऽस्ति पटोऽस्तीत्याद्यर्थवादस्थले घटादिपदात् कार्य्यत्वान्वितघटादिशाब्दबोध एव कुतो न जायत-इति वाच्यं। कार्य्यत्वोपस्थिति-घटादिनिष्ठकार्य्यत्वान्वयबुद्धिप्रयो-जकाकाङ्क्षाज्ञानादिरूपकार्य्यत्वान्वयबोधसामग्रीविरहेण तदभावात् सामान्यसामग्रीसहिताया एव विशेषसामग्र्याः कार्य्योपधायकत्वात्। न च तथापि कार्य्यभावोऽस्तीत्याद्यर्थवादानां प्रामाण्यं दुर्व्वारमिति वाच्यं। घटः कृतिसाध्य इत्याद्यर्थवादवत्तस्यापि प्रामाण्ये इष्टापत्तेः। न च तन्मते कार्य्यत्वान्वितघटादिशाब्दबोधाप्रसिद्ध्या कार्य्यता-वच्छेदके कार्य्यत्वान्वितविशेषणवैयर्थ्यमव्यावर्त्तकत्वादिति वाच्यं। अव्या-वर्त्तकत्वेऽप्यविशेषदर्शिना बालेन प्रथमं तदन्तर्भावेणैव जन्यताया-

गृहीतत्वेन तदपरित्यागात् अन्यथा कार्य्यत्वान्विततत्तच्छाब्दबुद्धि-त्वमपेक्ष्य लाघवात् तत्तच्छाब्दबुद्धित्वमेव कार्य्यतावच्छेदकमित्य-स्यापि सुवचत्वात्। न च कार्य्यत्वान्वितघटशाब्दबुद्धित्वं न कार्य्यत्व-विषयकघटशाब्दबुद्धित्वं घटोऽस्ति पटमानयेत्यादौ विध्यर्थ-सि-द्धार्थयोः समूहालम्बनापत्तेः, नापि घटविशेष्यककार्य्यत्वप्रकारक-शाब्दबुद्धित्वं तस्य कार्य्यतावच्छेदकत्वे घटमानयेत्यादावपि घटा-दीनामन्वयबोधानुपपत्तेरिति वाच्यं। साक्षात्परम्परया घटविष-यितानिरूपितकार्य्यत्ववैशिष्ट्यविषयिताशालिशाब्दबुद्धित्वस्य तत्त्वा-दिति ग्रन्थानुयायिनः।

उच्छृङ्खलास्तु घटविषयकशाब्दबुद्धित्वमेव घटपदादेः कार्य्य-तावच्छेदकं लाघवात्, न तु कार्य्यत्वस्यापि तत्र प्रवेशः। न चैव-मर्थवादाद्घटादिशाब्दबोधो दुर्व्वार इति वाच्यं। तत्रये घटादि-शाब्दबोधस्य कार्य्यत्वान्वितत्वनियमेन कार्य्यत्वान्वितशाब्दबोधसा-मग्रीविरहादेव तत्र शाब्दबोधाभावादिति गुरुमतं परिष्कुर्व्वन्ति।

यत्तु शाब्दसामान्यं प्रति कार्य्यत्वप्रकारकज्ञानजनकसामग्रीत्वेन हेतुत्वान्नार्थवादाच्छाब्दबोध इति। तन्न। घटोऽस्ति पटमानयेत्यादौ विध्यर्थ-सिद्धार्थयोः समूहालम्बनस्य दुर्व्वारतापत्तेः।

केचित्तु घटशाब्दबुद्धित्वेन साक्षात्परम्परया घटविषयिता-निरूपितकार्य्यत्वप्रकारिताकशाब्दबुद्धिसामग्रीत्वेनेत्यादिक्रमेण हेतु-हेतुमद्भावः शाब्दबोधमात्रस्यैव कार्य्यत्वप्रकारकतया कार्य्यत्वप्रका-रकत्वदलस्याव्यावर्त्तकत्वेऽपि सिद्धार्थस्थले अन्वयबोधवारणाय तत्-प्रवेश इत्यर्थ इत्याहुः।

द्देव सर्व्वेषामाद्या व्युत्पत्तिः उपायान्तरस्य शब्द-व्युत्पत्त्यधीनत्वात् । तथा हि प्रयोजकवाक्योच्चारणा-नन्तरं प्रयोज्यप्रवृत्तिमुपलभमानो बालः प्रेक्षावद्दा-

---

ननु घटपदादिज्ञानस्य कार्य्यत्वान्वितघटादिशाब्दबुद्धित्वं न कार्य्यतावच्छेदकमपि तु लाघवाद्घटादिशाब्दबुद्धित्वमित्यत आह, 'व्यवहारादेवेति, 'शब्दव्युत्पत्त्यधीनत्वादिति पञ्चम्यर्थः समुदाये-ऽन्वेति, तेन यत इति लभ्यते, 'सर्व्वेषां' पुरुषाणां, 'आद्या व्युत्पत्ति-रिति प्रथमं पदत्वेन कार्य्यत्वान्वितशाब्दबुद्धित्वेनेति क्रमेण सामान्यतः पदत्वावच्छेदेन कार्य्यत्वान्वितशाब्दबुद्धिजनकताग्रह इत्यर्थः । 'उपा-यान्तरस्येति विशेषतो घटादिपदानां घटादिशाब्दबुद्धिजनकता-ग्राहकस्येत्यर्थः, 'शब्दव्युत्पत्त्यधीनत्वादिति सामान्यतस्तादृशकार्य्य-कारणभावोत्तरकालीनत्वादित्यर्थः, तथाच प्रथमगृहीतसामान्य-कार्य्य-कारणभावे कार्य्यत्वान्वितत्वस्य कार्य्यत्वैशिष्ट्यविषयता-शालित्वरूपस्य प्रवेशाद्विशेषकार्य्य-कारणभावे गुरोरपि तस्य प्रवेश-इत्यभिमानः । कथं व्यवहारात् प्रथमं पदत्वावच्छेदेन कार्य्यत्वा-न्वितशाब्दबुद्धिजनकत्वग्रहः कथं वा कार्य्य-कारणभावग्राहकस्य तदुत्तरकालीनत्वं तदुत्पादयति, 'तथा हीति, 'वाक्योच्चारणेति, घटमानयेत्यादिवाक्योच्चारणेत्यर्थः, 'प्रवृत्तिः' घटानयनादिगोचर-प्रवृत्तिः, 'प्रेक्षावदिति प्रेक्षावद्वाक्योच्चारणस्य प्रेक्षावद्व्यवहारत्वेन

---

हारादिति, 'उपायान्तरस्येति प्रसिद्धार्थपदसामानाधिकरण्य-वाक्यशेष-व्याकरण-कोषाप्तोपदेशोपमानादेरित्यर्थः । तदुक्तं "शक्तिग्रहं व्याकरणो-

क्योच्चारणस्य प्रयोजनजिज्ञासायां तदन्वय-व्यतिरेकानुविधायित्वादुपस्थितत्वाच्च प्रयोज्यवृद्धप्रवृत्तिमेव प्रयोजनमवधारयति, न चाकिञ्चित्कुर्व्वतस्तादर्थ्यं[१] सम्भवतीति तज्जन्यं प्रवृत्त्यनुकूलं कार्य्यताज्ञानमेव कल्पयति, स्वप्रवृत्तौ च तेन कार्य्यताज्ञानस्य हेतुत्वावधारणात्, नान्यत् प्रवृत्तेः कार्य्यताज्ञानावरुद्धत्वात्। न

---

सामान्यतः प्रयोजनवत्तामनुमाय तद्विशेषजिज्ञासायामित्यर्थः, 'तदन्वयेति प्रवृत्तेर्वाक्योच्चारणान्वय-व्यतिरेकानुविधायित्वग्रहादित्यर्थः, 'उपस्थितत्वाच्चेति प्रवृत्तेरुपस्थितत्वाच्चेत्यर्थः, 'अकिञ्चित् कुर्व्वत इति प्रवृत्त्यनुकूलं किञ्चिदजनयतः शब्दस्येत्यर्थः, 'तादर्थ्यमिति प्रवृत्त्यनुकूलत्वमित्यर्थः, तथासति ममापि प्रवृत्तिप्रसङ्गादिति भावः। 'तज्जन्यमिति 'कल्पयतीत्यस्य पूर्व्वं योजनीयं, 'प्रवृत्त्यनुकूलं' प्रवृत्तिहेतुतयान्वितं, 'कार्य्यताज्ञानं' कार्य्यत्ववैशिष्ट्यविषयताशालिज्ञानमिति यावत्। ननु बालस्य कार्य्यताज्ञाने प्रवृत्तिहेतुत्वग्रहाभावात् कथं तेन तदनुमानमित्यत आह, 'स्वप्रवृत्ताविति, 'तेन' बालेन, 'नान्यदिति नेष्टसाधनताज्ञानमित्यर्थः, 'कार्य्यताज्ञानावरुद्धत्वादिति कार्य्यताज्ञानमात्रजन्यत्वावधारणादित्यर्थः, इदञ्च स्वमतावष्टम्भेनोक्तं।

(१) न चाकिञ्चिद्वक्तुर्वचनतस्तादर्थ्यमिति क०

पमान-कोषाप्तवाक्यव्यवहारतश्च। वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः" इति। 'न चाकिञ्चिदिति, आशुविनाशित्वादिति भावः।

चैवं शब्दस्य ज्ञानद्वारा प्रवृत्तिहेतुत्वं, स्वप्रवृत्तौ बालेन शब्दाहितविशेषस्य कार्य्यताज्ञानस्य हेतुत्वेनानवधारणात्। ज्ञाने च प्रत्यक्षादिनानोपायकत्वदर्शनात् शब्दोऽपि कार्य्यताज्ञानहेतुरित्यवधार्य्य तत्रैव शक्तिं

---

'ज्ञानद्वारेति कार्य्यताज्ञानद्वारेत्यर्थः, 'प्रवृत्तिहेतुत्वं' प्रवृत्तिहेतुत्वमपि, बालेन गृह्यतामिति शेषः, तथाच शब्दस्य कार्य्यत्वान्वितानुभवजनकत्ववत्प्रवर्त्तकत्वमपि कल्प्यतां तद्कल्पने कार्य्यत्वान्वितानुभावकत्वमपि न कल्प्यतामिति भावः। 'शब्दाहितविशेषस्येति शाब्दबोधरूपस्येत्यर्थः, 'हेतुत्वेनानवधारणादिति कार्य्यत्वान्वितशाब्दबुद्धित्वावच्छिन्नकार्य्यताप्रतियोगिककारणताश्रयत्वेनानवधारणादित्यर्थः, तथाच व्यभिचारज्ञानसत्त्वान्न प्रवृत्तिकारणताग्रह इति भावः। प्रवृत्तिगतविशेषस्य च तेनानवगमान्न विजातीयप्रवृत्तिं प्रत्यपि हेतुत्वग्रहसम्भव इति हृदयं। नन्वेवं कार्य्यत्वान्वितज्ञानेऽपि व्यभिचारात् शब्दस्य न कारणता गृह्यत इत्यत आह, 'ज्ञाने चेति, 'नानोपायकत्वदर्शनादिति नानोपायकार्य्यतावच्छेदकसाक्षात्कारत्व-शाब्दत्वादिरूपवैजात्यज्ञानादित्यर्थः, 'कार्य्यताज्ञानहेतुरिति, 'कार्य्या-

---

तर्हि शब्दस्य ज्ञानद्वारा प्रवृत्तिहेतुत्वमस्त्वित्याशङ्क्य निराकरोति, 'न चेति, 'शब्देति शब्दप्रयोज्यजातिमत इत्यर्थः, तथाच तत्र व्यभिचारादत्रापि ज्ञानएवान्यथासिद्धः शब्दः। न च प्रवृत्तिविशेषे तस्य हेतुत्वं, सामान्यसामग्रीतएवोपपत्तौ तथा हेतुत्वकल्पने गौरवान्मानाभावाच्चेति भावः। तर्हि व्यभिचारान्न ज्ञानेऽपि हेतुत्वं कल्पयेदित्याशङ्क्याह, 'ज्ञाने चेति, तथाचान्यथा-

कल्पयति उपस्थितत्वात् पश्चादावापोद्वारेण क्रिया-कारकपदानां कार्य्यान्विततत्तदर्थेषु शक्तिं गृह्णाति प्रथमगृहीतसामान्यशक्त्यनुरोधात्। स्यादेतत्, यद्यपि वृद्धव्यवहारादादौ कार्य्यान्वितधीरनुमिता तथाप्यन्वितमात्रशक्त्यैव कार्य्यतावाचकपदसमभिव्याहारादा-

---

न्वितेति साक्षात्परम्परया कार्य्यत्वान्वितेत्यर्थः, 'तत्तदर्थेषु' तत्तदर्थशाब्दबुद्धित्वावच्छिन्नेषु, 'शक्तिं' जनकतां, 'सामान्यशक्त्यनुरोधादिति सामान्यकार्य्य-कारणभावे कार्य्यत्वान्वितत्वस्य प्रवेशादित्यर्थः। न च तावता कार्य्यान्वितज्ञानशक्तिसिद्धावपि कार्य्यत्वान्वितज्ञाने शक्तिर्नायाता कार्य्यान्वितज्ञानस्याप्रवर्त्तकतया बालेन प्रवृत्त्या तदननुमानादिति वाच्यं। कार्य्यान्विते शक्तिरित्यादिसर्व्वत्र कार्य्यपदस्य भावव्युत्पत्त्या कार्य्यतापरतया कार्य्यत्वान्वितज्ञान एव तैः शक्त्यभ्युपगमात्। ननु तन्मयेऽपि कार्य्यान्वितज्ञाने शक्तिः सामान्यकार्य्य-कारणभाव एव कार्य्यत्वान्वितत्वस्य प्रवेश एव तदेव नेत्याशङ्कते, 'यद्यपीति, 'अन्वितमात्रशक्त्यैवेति पदत्वावच्छेदेनान्वितशाब्दबुद्धित्वावच्छिन्नजनकत्वाभ्युपगमेनैवेत्यर्थः, 'अन्वितत्वं' वैशिष्ट्य-

---

सिद्धान्वयादिना शब्दस्य ज्ञानहेतुत्वाद्वैजात्याच्च न व्यभिचार इति भावः। विशिष्य शक्तिग्रहार्थमाह, 'पश्चादिति, 'आवापः' सङ्ग्रहः, 'उद्धारः' त्यागः, क्वचित् 'उद्वापेति पाठः, 'कार्य्यान्वितेति। नन्वेवं कार्य्यान्वितघटत्वादिकं शक्यतावच्छेदकमिति घटपदादेस्तत्प्रकारिकैव पदार्थस्मृतिः स्यादिति चेत्, न, इष्टापत्तेरित्येके। वस्तुतस्तु यथा पदानामन्वितज्ञानजननियमेऽप्यन्व-

काङ्क्षादिमहिम्ना कार्य्यान्वितधीसम्भवात् न कार्य्यांशे-ऽपि शक्तिः परम्परयापि शब्दस्य कार्य्यान्वितज्ञाना-नुकूलत्वादर्थापत्तौ अन्यथोपपत्तिरपि। अवश्यञ्चा-काङ्क्षादेः कारणत्वं कार्य्यांशे शक्तावपि तद्व्यतिरेकाद-

विषयकत्वं, एतच्चाख्यावर्त्तकतया नोपादेयमित्यनुपदं स्वयमेव व-क्ष्यते, 'कार्य्यान्वितधीसम्भवादिति कार्य्यत्वान्वितधीसम्भवादित्यर्थः, 'न कार्य्यांशेऽपि' न कार्य्यत्वांशेऽपि, 'शक्तिरिति कार्य्यतावच्छेदकतेत्यर्थः, गौरवादिति भावः। ननु प्रामाणिकं गौरवं न दोषायेत्यत आह, 'परम्परयेति आकाङ्क्षाज्ञानसहकारेणेत्यर्थः, 'अनुकूलत्वात्' अनुकूल-त्वसम्भवात्, उपधायकत्वसम्भवादिति यावत्, 'अर्थापत्तावन्यथोप-पत्तिरपीति अर्थापत्तिप्रयोजकान्यथानुपपत्त्यभावोऽपीत्यर्थः, तथा-चार्थापत्तेरेव प्रमाणतया तदसम्भवेन प्रमाणमपि तत्र नास्तीति भावः। ननु तवाकाङ्क्षाज्ञानादेः पृथक्कारणत्वकल्पने गौरवञ्चेत्यत-आह, 'अवश्यञ्चेति, 'आकाङ्क्षादेः' आकाङ्क्षाज्ञानादेः, 'कार्य्यांशे

---

य्यांशे स्वरूपसतीति शक्तिस्तथाच कार्य्यान्वितत्वज्ञानजननियमाभ्युपगमात् तत्र शक्तावपि तदंशे स्वरूपसती सा व्याप्रियत इति न तथात्वमिति। ननु कार्य्यांशे शक्तिं विना कार्य्यान्वितधीर्न स्यादित्यन्यथानुपपत्त्या तदंशे शक्तिकल्पनमित्यत आह, 'परम्परयेति। यद्यपि पदार्थस्मरणद्वारा आ-काङ्क्षादिसहकारेणोभयमतेऽपि कार्य्यान्वितधीरिति पदस्यापि परम्परयैव तज्ज्ञानानुकूलत्वं, तथापि कार्य्यानन्वितावान्तरवाक्यार्थज्ञानद्वारा तद्धी-रिति परम्परा, तन्मते तु कार्य्यान्वितज्ञान एव पदसामर्थ्यात् साक्षादेव

न्विताभिधानव्यतिरेकनियमात्। सति चाकाङ्क्षादौ कार्य्यव्यतिरेकदर्शनादन्विताभिधानव्यतिरेको न क्वाप्यस्ति। अन्यथा गवादिपदानां व्यक्तावेव शक्तिः स्यात् संस्कारादेव व्यक्तिलाभदर्शनान्न तथेति यदि तदा कार्य्यवाचकपदादेव कार्य्यान्वितलाभ इति किं शक्त्या, वृद्धव्यवहारे नियमतः कार्य्यान्वितज्ञानं तत्र दृष्टमिति तत्र शक्तिकल्पने वृद्धव्यवहारे शब्दोप-

---

शक्तावपीति कार्य्यत्वस्य कार्य्यतावच्छेदकप्रवेशेऽपीत्यर्थः, 'कार्य्यव्यतिरेकदर्शनादिति कार्य्यत्वान्वितज्ञानव्यतिरेकादित्यर्थः, 'अन्विताभिधानव्यतिरेक इति शाब्दबोधव्यतिरेक इत्यर्थः। 'अन्यथेति प्रकारान्तरलभ्यार्थान्तर्भावेणापि शक्तिकल्पनेऽपीत्यर्थः, 'व्यक्तावेव' व्यक्तावपि, 'शक्तिः स्यादिति तव मते स्मारिका शक्तिः स्यादित्यर्थः, 'संस्कारादेवेति जातिशक्तिज्ञानोद्बोधिताद्व्यक्तिगोचरसंस्कारादेवेत्यर्थः, 'व्यक्तिलाभदर्शनादिति व्यक्तिलाभसम्भवादित्यर्थः, 'किं शक्त्येति

---

कार्य्यान्वितज्ञानमित्यवान्तरवाक्यार्थबोधोऽपि कार्य्यान्वितविषयत्वनियत एवेति साक्षात्त्वं। अतएव रूढ़िपूर्व्वकलक्षणास्थले ग्रन्थकार एव वक्ष्यति यथा पङ्कजमानयेत्यत्र प्रथमं डार्थवाक्यार्थधीस्ततस्तदन्वितजन्मधीस्तदनु च तथाभूतजन्मनि पङ्कपदार्थान्वयधीः कार्य्यान्वितव्युत्पत्त्यनुसारात् न तु सिद्धपङ्क-जन्म-कर्तृत्वानां प्रथममन्वयधीरिति वयमालोचयामः। 'तद्व्यतिरेकादिति, स्वरूपसदाकाङ्क्षाहेतुत्वपक्षे 'सति चेति, सिद्धार्थेऽप्यन्वयबोधादित्याशयः। 'अन्यथेति उपस्थितत्वमात्रादेव यदि शक्तिकल्पनं तदेत्यर्थः,

स्थापितेनैवान्वयबोधदर्शनाच्छब्दसन्निधेरेवान्वयबोध-हेतुत्वकल्पने द्वारमित्यादौ शब्द एवाध्याह्रियेत । क्वचिदसम्पूर्णवाक्ये वृद्धव्यवहारादाद्यव्युत्पत्तेः शब्दसन्निधिर्व्यभिचरतीति चेत्, तर्हि, सिद्धार्थेऽप्यन्वयप्रतीतिदर्शनात् कार्य्यत्वमपि व्यभिचारि । न च तत्र लक्षणा, बाधकाभावात् । शक्तिकल्पनाभिया ह्यन्यत्र

किं कार्य्यत्वांशान्तर्भावेणानुभावकशक्त्येत्यर्थः, 'शब्दसन्निधेरेवेति शब्दजन्यपदार्थोपस्थितेरित्यर्थः, 'शब्द एवेति, त्वन्मतेऽपीति शेषः, तथाच तवापसिद्धान्त इति भावः । शङ्कते, 'क्वचिदिति, 'असम्पूर्णवाक्ये' असम्पूर्णवाक्येऽपि, सकलान्वयप्रतियोग्युपस्थापकपदाभावेऽपीति यावत्, 'आद्यव्युत्पत्तेरिति, आद्यव्युत्पत्तिस्थानेऽपीति शेषः, 'सिद्धार्थेऽपीति कार्य्यत्वोपस्थापकलिङाद्यसमभिव्याहृतवाक्यादपीत्यर्थः, 'कार्य्यत्वमपीति कार्य्यत्वान्वितत्वमपीत्यर्थः, 'व्यभिचारीति शाब्दबोधत्वाव्यापकमित्यर्थः । 'लक्षणेति कुत्रचित्पदे कार्य्यत्वेन लक्षणेत्यर्थः, 'बाधकाभावादिति स्वशक्यान्वयबोधे बाधकाभावादित्यर्थः । नन्वन्वितशाब्दबुद्धावप्यनुभावकशक्तिकल्पनारूपगौरवमेव बाधकमन्यथा गङ्गायां घोष इत्यादौ गङ्गापदादेरपि तीरे लक्षणा न स्यात् तीरे स्मारकशक्तिकल्पनागौरवरूपबाधकादेव तत्र तीरे लक्षणाभ्युपगमादित्यत आह, 'शक्तिकल्पनेति शक्त्यन्तर-

तत्र त्वन्मत इति शेषः । 'अध्याह्रियेतेति, त्वन्मतेऽपीति शेषः, 'शक्तीति शक्त्यन्तरेत्यर्थः । ननु प्रथमं शक्तिग्रहस्योपजीव्यत्वात् तद्विरोध एव बाधक इति

लक्षणानुमता इह तु लघीयस्या उभयसाधारणपदार्थमात्रशक्त्या मुख्यस्यैवोचितत्वात्। किञ्च कार्य्यवाचिलिङादीनां आकाङ्क्षाद्युपेतपदार्थान्वितस्वार्थबोधकत्वमवश्यं वाच्यमतो विशेषात् पदान्तराणामपि तथात्वमस्तु लाघवादिति। मैवं। व्यवहारहेतुतया-

---

कल्पनेत्यर्थः, 'उभयसाधारणपदार्थमात्रशक्त्येति एकयैव कार्य्यत्वान्वितशाब्दबुद्धि-तदनन्वितशाब्दबुद्ध्युभयसाधारणान्वितपदार्थशाब्दबुद्धित्वरूपधर्म्मावच्छिन्नेऽनुभावकशक्त्येत्यर्थः, सिद्धार्थस्थले शाब्दबोधापत्तेरिति शेषः। 'कार्य्यवाचीति कार्य्यत्ववाचीत्यर्थः, 'स्वार्थबोधकत्वं' स्वार्थबोधकशक्तत्वं, 'अवश्यं वाच्यमिति, कार्य्यत्वान्वयासम्भवेन कार्य्यत्वान्वितस्वार्थबुद्धौ तस्य शक्त्यसम्भवादिति भावः। इदञ्च स्वमतानुसारेणोक्तं तन्मते लिङादेः कार्य्ये धर्म्मिणि शक्त्या कार्य्यत्वान्वितस्वार्थबोधकत्वस्य लिङादेरपि सम्भवादिति ध्येयं।

केचित्तु कार्य्यान्वितस्वार्थबोधे शक्तिरिति भ्रमेण दूषणमाहु, 'किञ्चेति, 'अवश्यं वाच्यमिति, कार्य्ये कार्य्यान्वयासम्भवेन कार्य्यान्वितस्वार्थबुद्धौ तस्य शक्त्यसम्भवादिति भाव इत्याहुः।

'लाघवादिति पदभेदाच्छक्तिभेदाभावेन लाघवादित्यर्थः। 'स्यादेतदितिपूर्व्वपक्षे समाधत्ते, 'मैवमिति, 'साक्षात्कारणत्वमिति

---

लक्षणा स्यादित्यत आह, 'किञ्चेति, कार्य्यवाचिनि कार्य्यान्विते शक्तिकल्पनेऽनन्वय एवेति व्यभिचारात् प्रथममेव कार्य्यान्वितेन शक्तिग्रहो भूतो वाक्ये

नुमिते हि कार्य्यान्वितज्ञानेऽन्वय-व्यतिरेकाभ्यां शब्दस्य साक्षात्कारणत्वमवधारयति न परम्परया, साक्षात्त्व-स्यौत्सर्गिकत्वेन तत्सम्भवे परम्पराया अन्याय्यत्वा-दिति तत्रैव शक्तिं कल्पयति नान्वितज्ञाने पदार्थज्ञाने

---

कार्य्यान्वितशाब्दबुद्धित्वावच्छिन्नकार्य्यताप्रतियोगिककारणताश्रयत्व-मित्यर्थः। 'न परम्परयेति। नन्वन्वितशाब्दज्ञानत्वावच्छिन्नकार्य्यता-प्रतियोगिककारणतां कल्पयित्वा कार्य्यवाचकपदसमभिव्याहारादि-वशेन कार्य्यत्वान्वितशाब्दबोधलाभ इति कल्प्यत इत्याह, 'साक्षात्त्व-स्यौत्सर्गिकत्वेनेति बाधकाभावे सति कार्य्य-कारणभावग्रहदशायां कार्य्यवृत्तितयोपस्थितत्वस्य कार्य्यतावच्छेदकत्वव्याप्यत्वेनेत्यर्थः, का-र्य्यत्वान्वितशाब्दबुद्धित्वेन कार्य्यत्वमकल्पयित्वेति शेषः, 'तत्सम्भवे' कार्य्य-त्वान्वितशाब्दबोधोपपत्तिसम्भवे, 'परम्पराया इति कार्य्यतावाचक-पदसमभिव्याहारादेरित्यर्थः, सहकारित्वकल्पनाया इति शेषः। उपसंहरति, 'इतीति, 'तत्रैवेति कार्य्यत्वान्वितशाब्दबुद्धित्वावच्छिन्न-एवेत्यर्थः, 'नान्वितज्ञान इति नान्वितशाब्दबुद्धित्वावच्छिन्न इत्यर्थः, वैशिष्ट्यविषयत्वरूपस्यान्वितत्वस्यांशस्याव्यावर्त्तकतया व्यर्थत्वादाह, 'प-

---

त्याज्य इति भावः। 'शब्दस्येति, पदार्थस्मरणव्यापारादिविशिष्टस्येति शेषः। अन्यथा स्मरणद्वारा हेतुत्वे साक्षात्त्वानुपपत्तेः उक्तरीत्या साक्षात्परम्परे बोध्ये। यत्तु कार्य्यवाचिपदसमभिव्याहारात् तल्लाभो न्यायमते परम्परेति, तन्न, परमतेऽपि तत्समभिव्याहारस्यापेक्षणात् अन्यथा कार्य्यान्वितशक्तावपि सिद्धार्थान्वयबोधस्य दुर्व्वारत्वात्। व्यवहारोपपादकतावच्छेदककार्य्या-न्वितज्ञानत्वावच्छेदेन कारणत्वमेव साक्षात् कारणत्वमिहेत्यन्ये। 'तत्रैवेति,

वा, अप्रवर्त्तकतया प्रवृत्त्या स्वकारणत्वेन तयोरनुपस्थापनात्। न चान्वितज्ञानशक्तावपि परम्परया कार्य्यत्वधीः सम्भवतीत्यर्थापत्त्या सैव कल्प्यतां लाघवात् न तु विशिष्टज्ञाने शक्तिरन्यलभ्यत्वात्[१] इति वाच्यं। अर्थापत्तेः साक्षादुपपादकमात्रविषयत्वेन न्यूना-

---

दार्थज्ञाने वेति शाब्दबुद्धित्वावच्छिन्ने वेत्यर्थः। ननु बाधकाभावे सत्युपस्थितरूपस्य कार्य्यतावच्छेदकत्वव्याप्यत्वं प्रकृते तु गौरवमेव बाधकमित्यत आह, 'अप्रवर्त्तकतयेति, 'तयोः' अन्वितज्ञानत्वावच्छिन्न-पदार्थज्ञानत्वावच्छिन्नयोः, युगपदुपस्थित्या न लाघव-गौरवावकाश इत्यभिमानः। कार्य्यत्वान्वितशाब्दबुद्धित्वमध्येऽन्वितशाब्दबुद्धित्व-शाब्दबुद्धित्वयोरपि प्रवेशादयुगपदुपस्थितिरस्त्येवेति सिद्धान्ते स्वयमेव वक्ष्यत इति नासङ्गतिः। गौरवं बाधकमुद्धृत्य अन्यलभ्यत्वं बाधकमाशङ्क्य निराकरोति, 'न चेति, 'परम्परया' कार्य्यवाचकपदसमभिव्याहारादिना, 'अर्थापत्त्येति कार्य्यत्वादुभयशाब्दबुद्धिजनकत्वं विना द्वारान्तररहितस्यास्य प्रवर्त्तकतानुपपन्नेत्यनुपपत्तिकरणकार्थापत्त्येत्यर्थः। 'सैव' अन्वितज्ञानत्वावच्छिन्ने शक्तिरेव, न तु प्रथमोपस्थितत्वलाघवात् 'विशिष्टज्ञाने' कार्य्यत्वान्वितज्ञानत्वावच्छिन्ने,

---

(१) सम्भवतीत्यन्वितज्ञान एव अर्थापत्त्या शक्तिः कल्प्यतां लाघवात् न तु कार्य्यत्वांशेऽप्यन्यतो लभ्यत्वादिति क०।

---

प्रथमागृहीतसाक्षात्कारणतारक्षार्थमिति भावः। 'साक्षादिति साक्षादुप-

धिकाग्राहकत्वात् साक्षादुपपादककार्य्यान्वितज्ञाने[1] शक्तिः कल्प्यते लिङादीनां शक्तेरल्पनात् अन्यलभ्यत्व-तर्कस्याप्यभावात्[2] वा आद्यव्युत्पत्तेर्विचार्य्यत्वात्। किञ्च प्रवृत्तिकारणतयोपस्थितं कार्य्यान्वितज्ञानमपहायानु-

'शक्तिरिति योजना, 'साक्षादुपपादकेति असति बाधके यद्धर्म्म-विशिष्टजनकत्वं विना अनुपपत्तिज्ञानं तद्धर्म्मावच्छिन्नकार्य्यताप्रति-योगिककारणताविषयत्वेनेत्यर्थः, 'न्यूनाधिकेति, तद्धर्म्मघटकीभूत-यत्किञ्चिद्धर्म्मानन्तर्भावेण तदघटकीभूतधर्म्मान्तर्भावेण कारणत्वा-ग्राहकत्वादित्यर्थः, 'साक्षादुपपादकेति अनुपपत्तिज्ञाने जनकतांशे साक्षाद्विशेषणतया भासमान इत्यर्थः, 'कार्य्यान्वितज्ञाने' कार्य्यत्वा-न्वितशाब्दबुद्धित्वावच्छिन्ने, कार्य्यत्वान्वितवैशिष्ट्यविषकशाब्दबुद्धित्वा-वच्छिन्ने इति यावत्, 'कल्प्यत इति अर्थापत्त्या विषयीक्रियत-इत्यर्थः। नन्वनन्यलभ्यत्वज्ञानमेव बाधकमस्तीत्यत आह, 'लिङा-दीनामिति, 'शक्तेरकल्पनादिति बालस्य कार्य्यत्वे शक्तेरज्ञानादित्यर्थः, 'अन्यलभ्यत्वतर्कस्यापीति लिङादिसमभिव्याहाररूपान्यलभ्यत्वप्रति-सन्धानरूपस्य बाधकस्यापीत्यर्थः। कार्य्यत्वान्वितज्ञाने शक्ति-कल्पने परोक्तगौरवादिति बाधकमुद्धृत्यान्वितज्ञानशक्तिकल्पनात्मकं बाधकमाह, 'किञ्चेति, 'शक्तिकल्पनमिति शक्त्यभ्युपगम इत्यर्थः,

(१) साक्षादुपपादककार्य्यत्वान्वितज्ञान इति क॰।

(२) अन्यलभ्यत्वतर्कस्याप्यसम्भवादिति क॰।

पादिका कार्य्यान्वितज्ञानशक्तिः कल्प्येतेत्यर्थः। यद्वा व्यवहारसाक्षादुप-

पस्थितान्वितज्ञानमात्रे शक्तिकल्पनमयुक्तं हेत्वभावा-दुपस्थित्यन्तरे च गौरवात्। अथ कार्य्यान्वितज्ञा-नोपस्थितावप्यन्वितज्ञानमप्युपस्थितमिति लाघवात् कार्य्यांशमपहायान्विते शक्तिर्गृह्यतामिति चेत्, न, ज्ञाने हि पदानां शक्तिः शक्यत्वान्नार्थेषु, अन्यच्च का-र्य्यान्वितज्ञानं अन्यदेवान्वितज्ञानं विषयभेदेन ज्ञान-

---

'हेत्वभावादिति उपस्थितकार्य्यत्वान्वितज्ञानपरित्यागे हेत्वभावादि-त्यर्थः, 'उपस्थित्यन्तरे चेति अन्वितशाब्दज्ञानस्योपस्थित्यन्तरकल्पने चेत्यर्थः, 'अन्विते' अन्वितज्ञानत्वावच्छिन्ने, वैशिष्ट्यविषयकशाब्दज्ञा-नत्वावच्छिन्न इति यावत्, 'शक्तिरिति कारणतेत्यर्थः, 'शक्यत्वादिति ज्ञानस्यैव पदकार्य्यत्वादित्यर्थः, 'नार्थेष्विति नान्वयेष्वित्यर्थः, अन्वयानां शक्यत्व एव कार्य्यत्वान्वितज्ञानस्योपस्थितिदशायां कार्य्य-त्वांशवदन्वयांशस्याप्युपस्थितत्वात्तत्रैव शक्तिग्रह इति सुवचं स्यादिति भावः[१]। ननु ज्ञानस्य शक्यत्वेऽपि कार्य्यत्वान्वितज्ञानस्योपस्थिति-दशायां अन्वितशाब्दज्ञानस्याऽप्युपस्थितत्वात्तत्रैव शक्तिग्रह इति सुवचमित्यत आह, 'अन्यच्चेति, 'कार्य्यान्वितज्ञानमिति कार्य्यत्वान्वि-

---

(१) तथाच विशिष्टस्यातिरिक्तत्वेऽपि विशेषण-विशेष्योपस्थितिं विना ना-तिरिक्तविशिष्टोपस्थितिरिति भावः। अन्यथा तादृशविशिष्टविषयक-ज्ञानोपस्थितिकाले अन्वयाद्युपस्थित्यनियमेन कथमर्थेषु शक्तिकल्पनस्य सुवचत्वं सङ्गच्छत इति।

---

पादके कार्य्यान्वितज्ञाने शक्तिः कल्प्येतेत्यर्थः, 'हेत्वभावादिति उपस्थिति-

भेदात् । तदुक्तमभाववादे अन्यद्भूतलज्ञानमन्यच्च घटवद्भूतलज्ञानमिति अन्वितज्ञानमुपस्थाप्य तत्र शक्तिग्रह इति गौरवमेव । लघुनि शक्ये सम्भवत्यन्यलभ्यं गुरु न तथेति चेत्, न, युगपदुपस्थितौ तथात्वात् । न च तस्याप्यनुपस्थितिः, पुरुषविशेषदोषात्, सर्व्वैरेवा-

---

तत्वविशिष्टशाब्दज्ञानमित्यर्थः, 'अन्वितज्ञानमिति अन्वितत्वविशिष्टशाब्दज्ञानत्वावच्छिन्नमित्यर्थः, 'विषयभेदेनेति विशेषणभेदेनेत्यर्थः, विशिष्टस्यातिरिक्तत्वादिति भावः । 'घटवद्भूतलज्ञानमिति घटप्रकारकत्वविशिष्टभूतलज्ञानमित्यर्थः । 'अन्वितज्ञानमिति अन्वितशाब्दज्ञानत्वावच्छिन्नमित्यर्थः । अन्यलभ्यत्वप्रतिसन्धान-गौरवज्ञानयोर्बाधकत्वमुद्धृत्य स्वरूपसतोस्तयोर्बाधकत्वमाशङ्क्य निराकरोति, 'लघूनीति वस्तुगत्या लघूनि धर्म्मे इत्यर्थः, 'शक्ये' शक्यतावच्छेदके, कार्य्यतावच्छेदक इति यावत्, 'अन्यलभ्यमिति, वस्तुगत्येत्यादि, 'युगपदुपस्थिताविति कार्य्य-कारणग्रहप्राक्काले वास्तविकलघु-गुरुधर्म्मद्वयोर्युगपदुपस्थितिसत्त्व एवेत्यर्थः, 'तथात्वादिति वास्तविकलघुधर्म्मस्य शक्यतावच्छेदकत्वे सम्भवति गुरोरतथात्वादित्यर्थः, यथाश्रुते पौनरुक्त्यापत्तेः । 'तस्यापीति अन्वितज्ञानत्वावच्छिन्नस्यापीत्यर्थः, 'अनुपस्थितिः' कार्य्य-कारणभावग्रहप्राक्कालेऽनुपस्थितिः ।

---

रूपहेत्वभावादित्यर्थः, 'दोषादिति, 'न चेति सम्बन्धः, तत्र हेतुमाह, 'सर्व्वैरिति, 'सर्व्वपदानामिति । नन्वेवं कार्य्यान्वितशक्तौ कार्य्यान्वितत्वेनैव पदार्थोपस्थितिपक्षे सिद्धार्थेऽपि विशेषणीभूतकार्य्यमादाय कार्य्यत्वविशिष्टधी-

व्युत्पत्तौ तथानवगमात्। तथापि न कार्य्यान्विते शक्तिः कार्य्यवाचिलिङादीनां व्यभिचारादिति चेत्, न, सर्व्वपदानां कार्य्यत्वविशिष्टधीजनकत्वात्। तच्च कार्य्यान्वितस्वार्थप्रतिपादकतयेतरान्वितस्वार्थकार्य्यप्रतिपादकतया वेति। एवञ्च कार्य्यान्वितव्युत्पत्तौ सत्या-

'पुरुषविशेषदोषादिति पुरुषदोषविशेषव्यक्तेरित्यर्थः, तथाच कस्यचिदुपस्थितिरस्त्वेवेति भावः। पुरुषसामान्यस्यैव तदुपस्थितिर्नास्तीति समाधत्ते, 'सर्व्वैरिति, 'आद्यव्युत्पत्तौ' आद्यव्युत्पत्तिकाले। कार्य्यान्वितस्वार्थबोधशक्तिभ्रमेण शङ्कते, 'तथापीति, पदमात्रस्येति शेषः, 'कार्य्यान्विते शक्तिरिति कार्य्यान्वितस्वार्थबोधशक्तिरित्यर्थः। 'व्यभिचारादिति, कार्य्यान्वयासम्भवेन तेषां कार्य्यान्वितस्वार्थबोधाजनकत्वादिति भावः। भ्रमं निराकरोति, 'सर्व्वपदानामिति, 'कार्य्यत्वविशिष्टधीजनकत्वादिति कार्य्यत्ववैशिष्ट्यविषयकशाब्दधीजनकत्वादित्यर्थः। 'तच्च' तादृशशाब्दधीजनकत्वञ्च, 'कार्य्यान्वितेति इतरपदार्थोपस्थापितकार्य्यत्वान्वितेत्यर्थः। 'स्वार्थकार्य्येति स्वोपस्थापितकार्य्यत्वविशिष्टकार्य्यप्रतिपादकतया चेत्यर्थः, 'इतरान्वितेति स्वरूपकथनं। ननु पदमात्रस्यैव कार्य्यत्वान्वितशाब्दज्ञाने शक्तौ निराकाङ्क्षेऽपि कुतो न तादृशबोध इत्यत आह, 'एवञ्चेति, 'व्यभि-

जनकत्वमस्तु। न च कार्य्यवाचिलिङादिपदाभावात् न तद्धीरिति वाच्यं। कार्य्यत्वोपस्थित्यर्थं हि तदपेक्षा सा च सिद्धार्थादेव जाता तथापि च तदपेक्षायां कार्य्यस्याध्याहारेण लक्षणया वोपस्थितौ तद्विशिष्टधीर्न स्यात् स्वो-

मनाकाङ्क्षादौ व्यभिचारादाकाङ्क्षादेरुपाधित्वं। तथा- चोपजीव्यप्रथमभाविकार्य्यान्वितव्युत्पत्त्यनुरोधेन वि- ध्यश्रुतावपि कार्य्याध्याहारः, क्वचिल्लक्षणा क्वचिद- संसर्गाग्रह इति सिद्धार्थेऽन्वयप्रतीतिदर्शनादुत्तरकाल- मन्वितमात्रे शक्तिरेव कल्प्यतां, प्राचीनकार्य्यान्वित- ज्ञानं बाध्यतामित्यप्यत एव निरस्तं। पूर्व्वकल्पनातः

---

चारादिति अन्वयव्यभिचारादित्यर्थः, 'उपाधित्वमिति कारणीभूत- ज्ञानविषयत्वरूपं प्रयोजकत्वमित्यर्थः। 'उपजीव्येति क्रिया-कारकप- दानां विशेषतस्तत्तदर्थज्ञानशक्तिग्रहोपजीव्येत्यर्थः। अस्योपजीव्यत्व एव मानाभाव इति सिद्धान्ते स्वयमेव वक्ष्यते इत्यदोषः। 'प्रथमभावीति प्रथमोत्पन्नेत्यर्थः, 'लक्षणा' कार्य्ये लक्षणा, 'असंसर्गेति या पदार्थो- पस्थितिस्तदसंसर्गाग्रह इत्यर्थः, 'सिद्धार्थ इति सिद्धार्थवाक्यस्यान्वय- प्रतीतिजनकतादर्शनादित्यर्थः, 'अन्वितमात्र इति अन्वितशाब्दज्ञान- मात्र इत्यर्थः, 'कार्य्यान्वितज्ञानं' कार्य्यत्वान्वितशाब्दत्वावच्छिन्नज्ञाने शक्तिज्ञानं, 'बाध्यतामिति अप्रमात्वेन कल्प्यतामित्यर्थः। 'उत्तरका-

---

क्षतस्यानुपदमेव तथा। किञ्च कार्य्याभाव इत्यादिशब्दोऽपि तन्मते प्रमाणं स्यात्, अत्राह:, प्रवृत्तिहेतुज्ञान एव व्युत्पत्तिग्रहाद्यादृशकार्य्यत्वोपस्थित्या तथा निर्व्वहति तादृशस्य प्रयोजकत्वं प्रकृते तु न तथा। यद्वा अयमपि दोषस्तन्मते बोध्य इति, 'उपाधित्वमिति प्रयोजकत्वमित्यर्थः, यत्र न तथा तात्पर्य्यग्रहस्तत्रासंसर्गाग्रह इत्याह, 'क्वचिदिति। ननु पूर्व्वमपि भ्रमज्ञान- मन्यथासिद्धत्वेनोत्तरेण बाध्यत एवेत्यत्रापि तथा स्यादित्यत आह, 'अनन्य- थेति, 'उपजीव्येति, कार्य्यान्वितव्युत्पत्तिमुपजीव्य सिद्धार्थेऽन्वयप्रतीतिरिति

कल्पनान्तरप्रसङ्गात् उत्तरकालभाविसिद्धार्थप्रयोगस्य लक्षणादिभिरप्युपपत्तेः अनन्यथासिद्धत्वाभावेन प्राचीनज्ञानाबाधकत्वात् उपजीव्यव्याघाताच्च। अथ सिद्धार्थेऽपि व्युत्पत्तिः सम्भवति तथाहि उपलब्धचैत्रपुत्रजन्मा बालस्तादृशेनैव वार्त्ताहारेण समं चैत्रसमीपं गतश्चैत्र पुत्रस्ते जात इति वार्त्ताहारवाक्यं शृण्वन् चैत्रस्य मुखप्रसादं गृह्णन् श्रोतुर्हर्षमनुमिनोति, हर्षाच्च तत्कारणं पुत्रजन्मज्ञानं कल्पयति, उप-

लभावेत्यादि 'अबाधकत्वादित्यन्तमेको ग्रन्थः। 'सिद्धार्थप्रयोगस्येति सिद्धार्थकवाक्यजन्यशाब्दबोधस्येत्यर्थः, 'लक्षणादिभिरिति कार्य्येण लक्षणादिभिरित्यर्थः, 'अनन्यथेति शाब्दज्ञानत्वावच्छिन्नशक्त्यभावं विनाऽनुपपन्नत्वाभावेनेत्यर्थः, 'अबाधकत्वादिति अप्रामाण्याज्ञापकत्वादित्यर्थः, 'उपजीव्यव्याघाताच्चेति प्राचीनज्ञानबाधोपजीव्यस्य सिद्धार्थेऽन्वयप्रतीतिदर्शनस्यासिद्धेश्चेत्यर्थः, यथाश्रुते कार्य्यान्वितव्युत्पत्तेः सिद्धार्थान्वयप्रतीतिदर्शनानुपजीव्यतया असङ्गत्यापत्तेः। 'सिद्धार्थेऽपीति कार्य्यत्वाविषयकज्ञानेऽपीत्यर्थः, 'व्युत्पत्तिरिति प्रथमशक्तिग्रह इत्यर्थः, तथाच प्रमात्वानुरोधादर्थतः शाब्दत्वावच्छिन्न एव पदानां शक्तिरभ्युपेयेति भावः। 'तादृशेनैव' उपलब्धचैत्र-

तन्मूलिकान्वितशक्तिकल्पना न बाधत इत्यर्थः। 'अथेति, तथाच कार्य्यान्वितशक्तेर्नोपजीव्यत्वमिति न तद्व्याघातो न वा कल्पान्तरप्रसङ्ग इति भावः। 'अशक्यत्वादिति, व्यभिचारादिति भावः। ननु परिशेषाद्बोध्यमत आह,

स्थितत्वादुपपादकत्वादान्योपस्थितौ गौरवाच्च तत्र वाक्यस्य कारणतां कल्पयति लाघवादिति चेत्, न, हर्षहेतूनां बहूनां सम्भवात् हर्षेण लिङ्गेन पुत्रजन्मज्ञानस्य बालेनानुमातुमशक्यत्वात् प्रियान्तरज्ञानस्य परिशेषयितुमशक्यत्वाच्च। अथ पुत्रजन्मज्ञानाव्यभिचारिवृद्धिश्राद्धादिक्रियाविशेषदर्शनात् पुत्रजन्मज्ञानानुमानमिति चेत्, तर्हि पुत्रस्ते जात इति वाक्यं तत्

---

पुत्रजन्मनेव, 'उपस्थितत्वादिति पुत्रजनन एव उपस्थितत्वादित्यर्थः, 'उपपादकत्वादिति पुत्रजन्मज्ञानस्य हर्षोपपादकत्वादित्यर्थः, 'तत्र' तस्मिन् कार्य्यत्वाविषयकपुत्रजन्मज्ञाने, तत इत्यादिः। 'लाघवादिति, कारणान्तरकल्पने गौरवादिति भावः। 'हर्षहेतूनामित्यशक्यत्वादित्यन्तमेको ग्रन्थः, 'हर्षेण लिङ्गेनेति, व्यभिचारादिति भावः। ननु प्रियान्तरज्ञानाभावकालीनो हर्षो लिङ्गं स्यादित्यत आह, 'प्रियेति, 'परिशेषयितुं' निरसितुं, तदभाववत्त्वेन निश्चेतुमिति यावत्, तथाच विशिष्टहेतोरज्ञानलक्षणासिद्धिरिति भावः। इदञ्च समाधिसौकर्य्यादुक्तं। वस्तुतस्तु पुत्रजन्यज्ञानानुमानेऽपि तस्य कार्य्यत्वाविषयकत्वे मानाभावः, कुत्रचित्पदे लक्षणादिना तत्र कार्य्यत्वविषयकत्वस्यासम्भवादिति ध्येयं। 'वृद्धिश्राद्धादीति वृद्धिश्राद्ध-

---

'प्रियान्तरेति, 'परिशेषयितुमिति निरसितुमित्यर्थः। यद्वा प्रियान्तरज्ञानस्य सम्भवेन पुत्रजन्मज्ञानस्य परिशेषयितुमिति पूरयित्वा व्याख्येयं। अन्य-

क्रियाकर्त्तव्यपरमेवेति कार्य्यान्वितज्ञानजनकत्वमेव तस्य प्रथमतो गृह्यते उत्तरकालं पुत्रजन्मज्ञानानुमानमिति न वुत्पत्तिः कार्य्यं जहाति, यत्रापीह सहकारतरौ मधुरं पिको रौतीति प्रसिद्धार्थपदसमानाधिकरण्यादिभिर्व्युत्पत्तिस्तत्रापि व्यवहाराधीनव्युत्पत्तिपूर्व्विका कार्य्यान्वित एव युक्ता पिकपदशक्तिः, पूर्व्वं नावधृतेति चेत्, न, तत्र पिकमानयेत्यादौ कस्यचित् कार्य्यान्वित-

---

विशेषादित्यर्थः, 'तर्हीति यदि पुत्रस्ते जात इति वाक्यश्रवणानन्तरं वृद्धिश्राद्धादिक्रियादर्शनं तदेत्यर्थः। ननु प्रसिद्धार्थकपदसामानाधिकरण्यगृहीतस्मारकशक्तिकपिकादिपदस्य कार्य्यत्वाविषयकशाब्दबोधजनकत्वात्र पदमात्रस्य कार्य्यत्वान्वितज्ञाने शक्तिरित्यत आह, 'यत्रापीति, पिकादिपद इति शेषः। सहकारतरुः आम्रवृक्षः, 'पिको रौतीति, अत्रापि पिकपदवाच्ये लक्षणेति, 'प्रसिद्धार्थपदेति तादृशप्रसिद्धार्थकबोधस्य विलक्षणमधूररवकर्तृत्व-पिकपदवाच्यत्वसामानाधिकरण्यज्ञानादिभिरित्यर्थः, 'व्युत्पत्तिरिति उपमानविधया कोकिलत्वादिविशिष्टस्मारिकायाः शक्तेर्धीरित्यर्थः।

---

त्रापि सिद्धार्थे व्युत्पत्तिमाशङ्क्य निराकरोति, 'यत्रापीति। यद्यपि 'उपायान्तरस्येति प्रागुक्तं तथापि अधिकवचनाय पुनराशङ्कितमिति ध्येयं। यद्यपि पिकपदशक्त्यनवधारणेऽपि सहकारादिपदव्युत्पत्तिपूर्व्वकतयापि तथा यूज्यते तथापि अभ्युपगमरीत्या समाधत्ते, 'तत्रापीति, 'कस्यचिदिति प्रयो-

एव व्युत्पत्तेः, उपजीव्यजातीयतया च तस्या बलवत्त्वं। किञ्चेदमपि कार्य्यान्वितज्ञानशक्तं पदत्वादिति सामा-

'तत्रापीति, सा शक्तिधीरिति शेषः, 'व्युत्पत्तिपूर्व्विकेति पिक-पदनिष्ठकार्य्यत्वान्वितपिकानुभावकशक्तिग्रहपूर्व्विकेत्यर्थः, 'कार्य्यान्वित-एवेति अध्याहारादिना कार्य्यत्वान्वितपिकानुभवमेव जनयतीत्यर्थः, अन्यथा प्राथमिकपिकपदवाच्यनिष्ठकार्य्यत्वान्वितानुभवजनकशक्ति-ग्रहस्याप्रमात्वापत्तेरिति भावः। न च प्रसिद्धार्थपदजन्यसामानाधि-करण्यज्ञानस्योपमानविधया शक्तिग्राहकत्वे "शक्तिग्रहं व्याकरणोप-मान-कोषाप्तवाक्याद्व्यवहारतश्च। वाक्यस्य शेषाद्विवृतेर्व्वदन्ति सा-न्निध्यतः सिद्धपदस्य वृद्धाः"॥ इत्यत्र शक्तिग्राहकस्य मध्ये प्रसिद्ध-पदसामानाधिकरण्यस्य पृथक्पाठानुपपत्तिरिति वाच्यं। उपमान-पदस्य सादृश्यकरणकोपमानपरतया गो-वृषन्यायेन विभागात्। ननु पिकपदस्य स्मारकशक्तिग्रहपूर्व्वं घटादिपदस्य कार्य्यान्वित-घटाद्यनुभाविकायाः शक्तेर्ग्रहेऽपि पिकपदस्य कार्य्यत्वान्वितशक्तिर्न गृहीतेत्यपि शङ्कते, 'पिकपदेति, 'शक्तिः' कार्य्यत्वान्वितपिकानु-भावकशक्तिः, 'तत्र' पिकादिपदे, 'कस्यचित्' पुरुषान्तरस्य, 'का-र्य्यान्वित एवेति कार्य्यत्वान्वितपिकानुभव एवेत्यर्थः, 'व्युत्पत्तेः' प्रथमं शक्तिग्रहात्, 'उपजीव्यजातीयतयेति उपजीव्यताश्रयतयेत्यर्थः, प्रा-थमिकत्वादेवोपजीव्यत्वं, 'बलवत्त्वं' प्रामाण्यं। तस्यापि पुरुषस्य प्रथमं कार्य्यत्वान्वितानुभावकशक्तिग्रहः सम्भवतीत्याह, 'किञ्चेति, 'इदं'

क्तिरित्यर्थः, एवञ्चोपजीव्यकार्य्यान्वितव्युत्पत्तिजातीयतया इदानीन्तन्यपि पिकपदस्य कार्य्यान्वितशक्तिरेव बलवतीत्याह, 'उपजीव्येति, 'इदमिति

न्यतोऽवगतं स्वार्थविशेषः परं नाधिगतः स इदानीं सुहृदुपदेशादिभिरवगम्यते। अतः सिद्धं प्रवृत्तिपराणां शब्दानां प्रवर्त्तकज्ञानजनकत्वं, तच्च क्वचित् साक्षात् कार्य्यान्वयात् क्वचित् परम्परया कार्य्यान्वयात् अत एव विधिशेषीभूतार्थवादानां स्वर्गादिपदशक्तिग्राह-

पिकपदं, 'सुहृदुपदेशादिभिरिति पिकः कोकिल इत्याप्तवाक्यादिभिरित्यर्थः। उपसंहरति, 'अतः सिद्धमिति, घटमानयेत्यादाविति शेषः, 'शब्दानामिति नाम-कारक-विभक्ति-धात्वाख्यातादिपदानां सर्व्वेषामित्यर्थः, 'प्रवर्त्तकेति कार्य्यत्वान्वितस्वार्थज्ञानत्वावच्छिन्नजनकत्वमित्यर्थः, 'तच्च' तच्च तादृशज्ञानजनकत्वञ्च, 'क्वचित्' आख्यातपदे, 'साक्षात्कार्य्यान्वयादिति स्वार्थविषयितायाः साक्षात्कार्य्यत्ववैशिष्ट्यविषयितानिरूपकत्वादित्यर्थः, 'क्वचिदिति नामादिपद इत्यर्थः, 'परम्परया कार्य्यान्वयादिति स्वार्थविषयितायाः परम्परया कार्य्यत्ववैशिष्ट्यविषयितानिरूपकत्वादित्यर्थः। 'अत एवेति यत एव कार्य्यत्वान्वितस्वार्थबोधपदेन साक्षात् परम्परया स्वार्थविषयितानिरूपितकार्य्यत्ववैशिष्ट्यविषयताशालिबोधो विवक्षितः अत एवेत्यर्थः, 'विधिशेषीभूतेति "आत्मा साक्षात्कर्त्तव्य इत्यादिविधिशेषीभूतानां "न स पुनरावर्त्तत इत्याद्यर्थवादानामित्यर्थः, 'स्वर्गादिपदेति, स्वर्गपिकपदमित्यर्थः। प्रथमगृहीतसामान्यव्याप्त्यनुरोधादग्रे न कार्य्यांशत्याग इत्ययुक्तं प्रथमं वाक्यसामान्य-कार्य्यान्वितज्ञानसामान्ययोर्हेतु-हेतुमद्भावाग्रहे

काणाञ्च प्रवृत्तिपरत्वेन परम्परया कार्य्यान्वयात् कार्य्यान्वितस्वार्थबोधकत्वमिति । यत्र पुराण-भारतादि-पाठे फलश्रुतिरस्ति तत्रार्थवादकल्पितविधिशेषीभूतत्वेन प्रवृत्तिपरत्वमेव तेषामतिपरम्परया कार्य्यान्वयात् कार्य्यान्वितस्वार्थबोधकत्वं, स्वरूपाख्यानपराणान्तु काव्य-नाटकादीनां पदार्थासंसर्गाग्रहेण संसर्गव्यवहारो न संसर्गग्रह इति ।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ शब्दाख्यतुरीयखण्डे कार्य्यान्वितशक्तिवादपूर्व्वपक्षः ।

---

कामोऽग्निष्टोमेन यजेतेत्यादिविधिशेषीभूतानामित्यादिः, 'परम्परया कार्य्यान्वयादिति स्वार्थविषयितायाः कार्य्यत्वविषयितानिरूपकत्वादित्यर्थः, 'अर्थवादकल्पितविधीति भारतादिनाम पठेदिति विधीत्यर्थः, 'अतिपरम्परया कार्य्यान्वयादिति स्वार्थविषयितायाः परम्परया कार्य्यत्ववैशिष्ट्यविषयितानिरूपकत्वादित्यर्थः, 'स्वरूपाख्यानेति प्रवृत्त्यपराणामित्यर्थः, 'पदार्थेति स्मारितपदार्थेत्यर्थः ।

इति श्रीमथुरानाथ-तर्कवागीशविरचिते तत्त्वचिन्तामणिरहस्ये शब्दाख्यतुरीयखण्डरहस्ये कार्य्यान्वितशक्तिवादपूर्व्वपक्षरहस्यं ॥

## अथ कार्य्यान्वितशक्तिवादसिद्धान्तः ।

अत्रोच्यते, घटमानयेति वाक्यश्रवणानन्तरं प्रयोज्यस्य घटानयनगोचरप्रवृत्त्या घटानयनकार्य्यताज्ञानमनुमितं बालेन न तु कार्य्यान्वितज्ञानं, प्रवृत्तिविशेषे तस्याहेतुत्वाद्घटादिपदशक्तिग्रहे तस्यानुपयोगाच्च । तच्च तज्ज्ञानविशेषे घटमानयेतिवाक्यविशेषस्यानाकलितपदविभागस्य हेतुत्वमवधार्य्य घटपद-द्वितीया-धातु-विधिप्रत्ययानां प्रत्येकमवापोद्वापद्वारेण घट-

---

अथ कार्य्यान्वितशक्तिवादसिद्धान्तरहस्यम् ।



'घटानयनकार्य्यताज्ञानमिति घटकर्म्मकानयनविशेष्यककार्य्यताज्ञानत्वावच्छिन्नमित्यर्थः, 'न तु कार्य्यान्वितज्ञानमिति न कार्य्यत्ववैशिष्ट्यावगाहिज्ञानत्वावच्छिन्नमित्यर्थः, तन्मते अन्वितज्ञान-कार्य्यत्वान्वितज्ञानयोरिव घटानयनकार्य्यज्ञान-कार्य्यत्वान्वितज्ञानयोर्भेदादिति भावः । 'प्रवृत्तिविशेष इति घटानयनगोचरप्रवृत्तावित्यर्थः, 'घटादिपदशक्तिग्रह इति आवापोद्वापद्वारेण घटादिपदानां प्रत्येकं विशिष्य तत्तदर्थशक्तिग्रह इत्यर्थः, 'अनाकलितपदविभागस्येति अनाकलितं विशेष्यपदानां तत्तदर्थज्ञानजनकत्वं यत्र तादृशेत्यर्थः, 'घटपदेति यथासङ्ख्येन घटज्ञानादिष्वन्वयः, 'आवापोद्वापद्वारेणेति घटज्ञाना-

कर्म्मत्वानयन-कार्य्यत्वज्ञानेषु प्रत्येकं कारणत्वमवगम्य शक्तिं कल्पयति। पश्चात् प्रवृत्तिसामान्येनानुमितकार्य्यान्वितज्ञाने वाक्यमात्रस्यान्यलभ्यत्वेन कार्य्यांशमपहायान्वितज्ञानमात्रे शक्तिं कल्पयति, न तु प्रथमं वाक्यमात्रस्य कार्य्यान्वितज्ञानमात्रहेतुत्वकल्पनं। अथ घटानयनक्रियायाः प्रथमं क्रियात्वज्ञानात्प्रवृत्तिमा-

---

दिकं प्रति प्रवृत्त्यन्वय-व्यतिरेकग्रहेणेत्यर्थः, 'शक्तिं कल्पयतीति घटशब्दबुद्धित्व-कर्म्मत्वशब्दबुद्धित्वादेः कार्य्यतावच्छेदकत्वं कल्पयतीत्यर्थः। ननु तदनन्तरं प्रवृत्तिसामान्येन सामान्यतः कार्य्यत्वान्वितज्ञानत्वावच्छिन्नत्वमनुमाय तत्रैव पदत्वावच्छेदेन शक्तिग्रहः स्यादित्यत आह, 'पश्चादिति, 'अनुमितकार्य्यान्वितज्ञान इति अनुमितेऽपि कार्य्यान्वितत्वावच्छिन्नज्ञान इत्यर्थः, 'अन्यलभ्यत्वेनेति प्रथमं विधिप्रत्ययानां कार्य्यत्वज्ञानशक्तेर्गृहीतत्वादन्यलभ्यत्वप्रतिसन्धानेनेत्यर्थः, अन्यथा घटाद्यन्तर्भावेणापि पदमात्रस्य शक्तिग्रहः स्यादिति भावः। 'कार्य्यान्वितज्ञानमात्र इति, कार्य्यत्वान्वितज्ञानत्वावच्छिन्नस्योपस्थितत्वादिति भावः। 'प्रथममिति घटानयनकार्य्यताज्ञान-घटमानयेतिवाक्ययोर्विशेषकार्य्य-कारणतावग्रहात् पूर्व्वमित्यर्थः, 'क्रियात्वेति चे-

---

प्रथमं सामान्यशक्तेरग्रहादित्याह, 'घटमिति', 'कार्य्यांशमिति, प्रथमं विधिप्रत्ययानां शक्तिग्रहादन्यलभ्यत्वप्रतिसन्धानस्य सुकरत्वादन्यथा घटाद्यन्तर्भावेणापि सर्व्वत्र शक्तिग्रहः स्यादिति भावः। 'क्रियात्वेति, यद्यपि तन्मते क्रियात्वं प्रवृत्तिं व्यभिचरत्येव तथापि जन्यकृतिजन्यक्रियामात्रे विशेषोऽस्ती-

चानुमानं तेन च कार्य्यान्वितज्ञानमनुमाय तत्र वाक्यमात्रस्य हेतुत्वं कल्पयित्वा शक्तिं कल्पयति तदुत्तरं विशेषयोः कार्य्य-कारणभावधीरिति चेत्, न, प्रथमं प्रवृत्तिमात्र-कार्य्यान्वितज्ञानमात्रयोरनुमानं बालस्य क्रमशोभवतीत्यत्र मानाभावात् घटादिपदशक्तिग्रहस्य तेन विनापि सम्भवात्। न च तदनुमानसामग्री तदावृत्तेति वाच्यं। तदा व्याप्त्यादिस्मृतौ मानाभावात्।

---

ष्टात्वेत्यर्थः, अतस्तन्मते ईश्वरानङ्गीकारात् क्रियामात्रस्य कृतिजन्यत्वाभावेऽपि न व्यभिचारः। 'कार्य्यान्वितज्ञानमिति कार्य्यत्वान्वितज्ञानत्वावच्छिन्नमित्यर्थः, 'शक्तिं कल्पयतीति कार्य्यत्वान्वितशाब्दज्ञानत्वं कार्य्यतावच्छेदकं कल्पयतीत्यर्थः, 'विशेषयोः' घटानयनकार्य्यताज्ञान-घटमानयेतिवाक्ययोः, 'क्रमश इति पौर्व्वापर्य्येणेत्यर्थः। ननु घटादिपदानां विशिष्य तत्तदर्थज्ञानशक्तिग्रहानुपपत्तिरेव मानमित्यत आह, 'घटादीति, 'शक्तिग्रहस्य' विशिष्य तत्तदर्थज्ञाने शक्तिग्रहस्यैवेत्यर्थः। 'न च तदनुमानेति, तथाच सामग्र्येव मानमिति भावः।

---

व्यभिमान इत्येके। व्यभिचाराप्रतिसन्धानदशायामनुमानाविरोध इत्यन्ये। 'घटादीति, तथाच तदन्यथानुपपत्तिर्न तत्र मानमिति भावः। एतच्च पररीत्या परस्मै दूषणमस्मन्नये कार्य्यान्वितज्ञानोपस्थितावन्वितज्ञानत्ववत् घटानयनकार्य्यताज्ञानोपस्थितौ कार्य्यताज्ञानोपस्थितिध्रौव्यात् तदुपस्थितावपि सामान्यतो हेतुत्वाग्रहान्न सामान्यशक्तिग्रह इत्यत्र वा तात्पर्य्यं। अतएव

सामान्ययोः कार्य्य-कारणभावग्रहो विशेषयोस्तथात्व-ग्रहे हेतुरिति चेत्, न, विशेषयोरन्वय-व्यतिरेकाभ्या-मेव तद्ग्रहात्। यथा धूम-वह्निविशेषयोः कार्य्य-कारणभावग्रहे तत्सामान्ययोरपि हेतु-हेतुमद्भावो भासते अन्यथा न सकृद्दर्शनगम्या व्याप्तिः स्यात् तथाचापि विशेषयोः कार्य्य-कारणभावविक्तिवेद्य एव सामान्य-योस्तथाभाव इति चेत्, न, प्रत्यक्षेण विशेषग्रहे योग्यत्वात् सामान्यमपि भासते प्रकृते च कार्य्यविशे-

---

शङ्कते, 'सामान्ययोरिति। न च तावता सामान्यकार्य्य-कारणभावपरि-ग्रहस्यावश्यकत्वेऽपि कार्य्यत्वान्वितज्ञानत्वेन पदत्वेन कार्य्य-कारणभावे मानाभावः अन्वितज्ञानत्वेन पदज्ञानत्वेनैव सामान्यकार्य्य-कारण-भावसम्भवादिति वाच्यं। अन्वितज्ञानत्वावच्छिन्नस्यानुपस्थितत्वात्का-र्य्यत्वान्वितज्ञानत्वावच्छिन्नस्य च प्रवृत्तिहेतुत्वेनैवानुमानसम्भवादित्य-भिमानः। ननु हेतुतया तस्योपस्थितिर्मास्तु समानवित्तिवेद्यतया तु नियतोपस्थितिः स्यादेवेत्याशङ्कते, 'यथेति, स्वमतेनाह, 'अन्यथेति, 'व्याप्तिः' कारणताविशेषः घटानयनकार्य्यताज्ञानरूपः, 'न सामा-

---

सामान्यहेतुत्वग्रहमेव शङ्कते, 'सामान्ययोरिति, विशेषहेतुत्वग्रह एव प्रा-थमिक इति वैपरीत्यमित्याह, 'विशेषयोरिति। शङ्कते, 'यथेति, स्वमत-दार्ढ्येनाह, 'अन्यथेति, यद्यपि कार्य्य-कारणभाव एव न व्याप्तिर्दण्ड-घटयो-स्तत्त्वेऽपि तदसत्त्वात् उपाध्यभावस्य तन्मते व्याप्तित्वाच्च, तथापि मत-

षेण कारणविशेषानुमितौ न सामान्यमिति न युगपदुपस्थितिः। अथ विशेषयोः कार्य्य-कारणभावात् सामान्ययोरपि तथात्वमनुमापयतीति चेत्, तर्हि विशेषयोः कार्य्य-कारणभावावगमः प्राथमिक इति तन्मूलकः प्रथमं पदविशेषे शक्तिग्रह एव स्यात् निष्प्रयोजनकत्वेनान्तरानुमितौ मानाभावात् यच्चोक्तं प्रवृत्ति-कारणतयोपस्थितं कार्य्यान्वितज्ञानमपहायान्वितज्ञानं कल्पयित्वा तत्र शक्तिकल्पनमयुक्तं उभयथा गौरवा-

---

न्यमिति न कार्य्यत्वान्वितज्ञानत्वावच्छिन्नमित्यर्थः, 'न युगपदुपस्थितिरिति कार्य्यत्वान्वितज्ञानत्व-घटानयनकार्य्यताज्ञानत्वरूपयोः सामान्य-विशेषधर्म्मयोर्न युगपदुपस्थितिः, प्रवृत्तिसामान्येन तदनुमाने मानाभावादित्यर्थः, तथाच यत्र सामान्य-विशेषधर्म्मयोर्युगपदुपस्थितिस्तत्रैव विशेषकार्य्य-कारणभावग्रहस्य सामान्यकार्य्यकारणभावविषयतानियम इति भावः। 'पदविशेष इति घटादिपदानां प्रत्येकं घटादिज्ञानेषु शक्तिग्रह इत्यर्थः। 'उभयथेति उपस्थितपरि-

---

विशेषेणेदमुक्तमित्याहुः। 'विशेषग्रहे' कार्य्य-कारणभावग्रहे, 'सामान्यमपि' सामान्यकार्य्य-कारणभावोऽपीत्यर्थः, एतदपि क्वाचित्काभिप्रायं, 'कार्य्यविशेषेणेति, कारणत्वेनेति शेषः, 'युगपदुपस्थितिः', विशेष-सामान्यकार्य्य-कारणभावयोरिति शेषः। यद्वा प्रत्यक्षेण सामान्योपस्थितौ सामान्यकार्य्य-कारणभावग्रहः प्रकृते च तदनुपस्थितौ न तच्छङ्कापीति यथाश्रुतमेव योज्यं। 'निष्प्रयोजनकत्वेनेति, व्याप्त्यादिस्मृतिविरहादिति भावः। प्रथमं

द्विति, तन्न, कार्य्यान्वितज्ञानेऽन्वितज्ञानत्वस्य सत्त्वात् तद्विशेषत्वात् तस्य अतस्तत्रैव शक्तिग्रहो न कार्य्यत्वांशेऽपि। अतएव घटवद्भूतलज्ञाने भूतलज्ञानत्वमपीति तद्भिन्नं तज्ज्ञानमभावव्यवहारे कारणं त्वयापि स्वीकृतं। अस्त्येवं किन्तु तदुपस्थितावप्यन्वितज्ञानत्वं न विषय इति तस्यैवोपस्थित्यन्तरं कल्प्यमिति चेत्, न, कार्य्यान्वितज्ञाने अन्वितज्ञानं विशेष्यमिति तदुपस्थितौ तस्यापि विषयत्वात् विशिष्टज्ञानसामग्रीतो-

---

त्यागे अनुपस्थितकल्पनायाश्चेत्यर्थः, 'कार्य्यान्वितज्ञान इति विशिष्टस्यानतिरिक्तत्वादिति भावः। 'तत्रैव' तदवच्छिन्न एव, लाघवादिति भावः। 'कार्य्यत्वांशेऽपीति कार्य्यत्वांशान्तर्भावेणापीत्यर्थः, 'तज्ज्ञानं' भूतलज्ञानं। कार्य्यत्वान्वितज्ञाने अन्वितज्ञानस्य सत्त्वेऽपि नान्वितज्ञानत्वरूपेण तदुपस्थितमपि तु कार्य्यत्वावच्छिन्नज्ञानत्वेनैव तदुपस्थितमित्याशङ्कते, 'अस्तीति, 'तदुपस्थितावपि' कार्य्यत्वान्वितज्ञानत्वेनोपस्थितावपि, 'तस्य' अन्वितज्ञानत्वस्य, 'कार्य्यान्वितज्ञाने' कार्य्यत्वान्वितज्ञानत्वे, 'अन्वितज्ञानं' अन्वितज्ञानत्वं, इदञ्च समाधिसौकर्य्यादुक्तं। वस्तुतस्तु तत्त्वयेऽप्युपस्थितं कार्य्यान्वितज्ञानत्वं न

---

सामान्यस्योपस्थितिमभ्युपेत्य कार्य्यतांशे गौरवान्न शक्तिग्रह इत्याह, 'कार्य्यान्वितज्ञान इति, 'अतएवेति, 'विशिष्टेति, अन्यथा विशेषणस्याप्यविषयतया विशिष्टबुद्धिर्निर्विषया स्यात् विशिष्टस्यातिरिक्तस्यानभ्युपगमा-

विषेष्यभानावश्यम्भावात् अन्यथा अन्यज्जातिज्ञानं अन्यच्च जातिविशिष्टज्ञानमिति व्यक्तिज्ञानमपहाय जातिज्ञानं क्वापि नोपस्थितमिति न तव जातिरेव पदार्थः स्यात् जातेः केवलोपस्थितौ च व्यक्तिसमान-संवित्संवेद्यत्वं न स्यात्। अथ जातिविशिष्टज्ञानो-

---

पदजन्यतावच्छेदकं प्रत्यक्षादिना तादृशज्ञाने व्यभिचारात् किन्तु कार्य्यत्वान्वितशाब्दत्वमेव, तच्च प्रवृत्तिहेतुकानुमानान्नोपस्थितमिति नायमनुयोग इत्येव तत्त्वं। 'जातिज्ञानमिति जातिप्रकारकज्ञान-मित्यर्थः, 'जातिविशिष्टज्ञानमिति व्यक्तिविशेष्यकजातिप्रकारक-ज्ञानत्वमित्यर्थः, 'व्यक्तिज्ञानं' व्यक्तिविशेष्यकज्ञानत्वं, 'जातिज्ञानं' जातिप्रकारकज्ञानत्वं, 'जातिरेवेति जातिप्रकारकज्ञानत्वावच्छिन्न एव पदानां शक्तिग्रह इति न स्यादित्यर्थः, जातिप्रकारकज्ञान-त्वस्यानुपस्थितत्वादिति भावः[१]। ननु केवलजातिविषयकज्ञान एव जातिज्ञानत्वमुपस्थितमिति तदेव लाघवाच्छक्यतावच्छेदकमि-त्यत आह, 'जातेरिति। 'जातिविशिष्टज्ञानोपस्थितेरिति व्यक्ति-

---

(१) तन्मते जातिविशिष्टज्ञानं विना केवलजातिज्ञानाभावात् विशिष्टोप-स्थितौ च न जातिज्ञानोपस्थितिरुक्तयुक्त्या स्वीक्रियते कथं तत्र शक्ति-ग्रह इति भावः।

---

दिति भावः। अनिष्टान्तरमप्याह, 'अन्यथेति, अस्तु तदुपस्थितिस्तथापि न यौगपद्येनेति न लाघवावतार इत्याशङ्क्य निराकरोति, 'न चेति,

पस्थितेर्व्यक्तिज्ञानविषयत्वेऽपि गौरवाद्व्यक्तेरन्यलभ्यत्वाच्च जातिविशिष्टज्ञानत्वं न शक्यतावच्छेदकं किन्तु जातिज्ञानत्वं लाघवादिति मतं तर्हि तुल्यं। न च युगपदुपस्थितौ लाघवावतारोन चात्र युगपदुपस्थितिरिति वाच्यं। विशिष्टज्ञानस्य विशेष्यविषयत्वनियमात्। किञ्च ममेदं कार्य्यमिति ज्ञानं साक्षादुपपादकं प्रवृत्त्या स्वकारणत्वेनानुमितमतस्तत्र शक्तिं गृह्णीयात् साक्षादुपपादकविषयत्वात् कल्पनायाः। न त्विदं कार्य्यमिति ज्ञाने, तस्य साक्षादुपपादकोपपादकत्वात्।

---

विशेष्यकजातिप्रकारकज्ञानत्वेनोपस्थितेरित्यर्थः, 'व्यक्तिज्ञानेति व्यक्तिविशेष्यकविषयत्वेऽपीत्यर्थः, विशेष्यविधया जातिप्रकारकज्ञानत्वविशेष्यकतयेति शेषः। नन्वस्तु तदुपस्थितिस्तथापि न यौगपद्येनेति कथं लाघवावतार इत्याशङ्क्य निराकरोति, 'न चेति। 'साक्षादुपपादकमिति प्रवृत्तिकारणतावच्छेदकावच्छिन्नमित्यर्थः, 'अत इति स्वकृतिसाध्यताज्ञानत्वेन प्रवृत्तिजनकत्वादित्यर्थः, 'तत्रेति तत्रैवेत्यर्थः, 'साक्षादिति, तत्र नय इत्यादिः, तत्रनये प्रवृत्तिकारणतावच्छेदकावच्छिन्नमात्रनिष्ठशक्तिविषयकत्वादित्यर्थः, 'कल्पनायाः' प्रवृत्त्यन्यथानुपपत्त्या कार्य्यताज्ञाननिष्ठशक्तिकल्पनायाः, तथाच मदंशान्तर्भा-

---

'विशिष्टेति, तथाच विशिष्ट-विशेष्ययोर्युगपदुपस्थितिरेवेत्यर्थः। यदि प्रवृत्तिसाक्षादुपपादकत्वेन तत्र शक्तिकल्पना तत्राह, 'किञ्चेति, तथापि मदंशोऽपि शक्यः स्यादन्यलभ्यत्वं गौरवञ्च तुल्यमिति भावः। परम्परा-

अथेदं कार्य्यमितिज्ञाने शक्त्यैव परम्परयानुमानद्वारा ममेदं कार्य्यमिति ज्ञानसम्भवात् अन्यलभ्यत्वेन न शक्तिकल्पना, तर्हि इतरान्वितज्ञानशक्त्यैव कार्य्यवाचकपदसमभिव्याहारेणैव कार्य्यान्वितज्ञानसम्भवात् अन्यलभ्यत्वेन न तत्र शक्तिकल्पनमिति तुल्यं।

नन्विदं कार्य्यमिति ज्ञानं साक्षादेव प्रवर्त्तकं कर्त्तव्यताप्रयोजकयावदेकविशेषणस्य स्वगतत्वप्रतिसन्धानं सहकारि तेन नातिप्रसङ्गः। न च सहकारिविलम्बेन

वेणापि शक्तिः स्यादिति भावः। 'साक्षादुपपादकोपपादकेति प्रवृत्तिकारणतावच्छेदकावच्छिन्नस्य मत्कृतिसाध्यताज्ञानस्य विशेषणज्ञानादिविधयोपपादकत्वादित्यर्थः, 'शक्त्यैवेति शक्त्यभ्युपगमेनैवेत्यर्थः, 'परम्परयेत्यस्य विवरणं 'अनुमानद्वारेति, 'अन्यलभ्यत्वेनेति, गौरवेण चेत्यपि बोध्यं, एवमग्रेऽपि।

तत्र मदंशे विध्युक्तनवीनमतमाह, 'नन्विदमिति, 'इदं' पाकादिकं, 'साक्षादेव प्रवर्त्तकमिति प्रवृत्तिकारणतावच्छेदकावच्छिन्नमेवेत्यर्थः, पाकत्वादिधर्म्मितावच्छेदककार्य्यताज्ञानत्वेनैव प्रवर्त्तकत्वादिति भावः। नन्वेवं पाकादौ स्वकृत्यसाध्यताज्ञानदशायामपि प्रवृत्तिप्रसङ्ग इत्यत आह, 'कर्त्तव्यतेति, 'यावदेकेति सकलेत्यर्थः,

---

मेवाह, 'अनुमानद्वारेतीति प्रकाशः।

नवीनमतेनाशङ्कते, 'नन्विति, 'कर्त्तव्यतेति, तदुक्तं कोटिकामस्य तद्धेतु-
त्वाद्युपकरणावत इत्यादि। 'यावदेकेति कोकोक्त्या सकलेत्यर्थः, तेन नैक-

कार्य्यानुत्पादे साक्षात्साधनत्वं निवर्त्तत इति चेत्, न, लाघवेन ममेदं कार्य्यमिति ज्ञानादेव प्रवृत्तेः, यथा च भविष्यद्विषया कार्य्यतानुमितिस्तथोक्तमधस्तात्। अपि च यादृशस्य पुरुषस्याविगीतकृतिसाध्यमिदं तादृशोऽहमिति धीर्न प्रवृत्तिहेतुः कृतक्रियमाणविषयककृतिसाध्यताज्ञानस्य सिद्धविषयस्यासिद्धविषयेच्छा-

तथाच पुरुषान्तरीयपाककृतिसाध्यताप्रयोजकत्वेनावधृतं सत् यत् प्रवर्त्तमानपुरुषविशेषणं तादृशसकलविशेषणस्य स्वगतत्वप्रतिसन्धानमित्यर्थः, तच्च विशेषणं ओदनकामना-तत्साधनताज्ञान-तण्डुलाद्युपकरणवत्त्वादिकं, स्वकृत्यसाध्यताज्ञानदशायाञ्च न तत् स्वगतत्वप्रतिसन्धानमिति भावः। 'साक्षात्साधनत्वं' कारणतावच्छेदकावच्छिन्नत्वं, 'कार्य्यतानुमितिः' कृतिसाध्यत्वानुमितिः, 'यादृशस्येति ओदनकामादिमत इत्यर्थः, 'अविगीतेति बलवदनिष्टाजनकेत्यर्थः, 'इदं' पाकादिकं, 'कृत-क्रियमाणेति, परकीयपाकेति शेषः। ननु समानप्रकारकत्वेनैव कार्य्य-कारणभावो न तु समानविषयत्वेनापि गौरवा-

पदानर्थक्यानन्वयादित्यर्थः, 'ममेदमिति, यद्यपीष्टसाधनत्वविषयकत्वमपि तत्र तथापि तदन्यस्य परोक्षस्य एतत्कारत्वव्यवच्छेद्यत्वे तात्पर्य्यं। नन्वेतद्दृष्टं मद्धृतन्तु परकृतपाकादौ सुग्रहमित्याशङ्क्य निराचष्टे, 'यथेति, स्वसमानप्रकारकत्वेनैव हेतुत्वं। ननु समानविषयत्वमपि तन्त्रं गौरवादित्यत आह, 'इच्छाया इति, इदानीं कृतिसाध्यताज्ञानं हेतुः सिद्धे च पाकादौ तद्बाधितमित्यपि दोषो बोध्यः। औत्सर्गिकत्वेन साक्षात्-

नुत्पादकत्वात् इच्छायाः स्वप्रकारकधीसाध्यत्वेन कृत्या साधयामीतीच्छायाः स्वकृत्यनन्तरभविष्यत्तारूपकृति-साध्यताधीजन्यत्वाच्च। अपि चास्तु प्रथमं कार्य्यान्वित-ज्ञाने वाक्यस्य साक्षात्कारणताबोधात्तत्र शक्तिग्रहः तथापि पश्चादावापोद्धारेण पदविशेषस्येतरान्वित-स्वार्थज्ञाने शक्तिं कल्पयति लाघवात्। न तु कार्य्य-त्वांशेऽपि गौरवात् अन्यलभ्यत्वाच्च। न चैवं प्रथम-प्रवृत्तस्य साक्षात्कारणताबोधस्य तन्मूलककार्य्यान्वित-

---

दित्यत आह, 'इच्छाया इति, 'कृत्या साधयामीति मत्कृतिसाध्यं भवत्वित्यर्थः, प्राथमिकसामान्यकार्य्य-कारणभावग्रहे कार्य्यत्वांशस्य प्रवेशेऽपि पश्चादावापोद्वापेन तत्तत्पदानां तत्तदर्थज्ञानेषु' शक्तिग्रहे न तस्य प्रवेश इत्याह, 'अपि चास्त्विति, साक्षात्कारणतेति कार्य्यत्वा-न्वितज्ञानत्वावच्छिन्नकार्य्यताप्रतियोगिककारणताबोधादित्यर्थः, 'तत्र' कार्य्यत्वान्वितज्ञानत्वे, 'शक्तिग्रहः' अवच्छेदकताग्रहः, 'इतरान्वितेति अन्विततत्तदर्थज्ञानत्वावच्छिन्न इत्यर्थः। 'न त्विति सामान्यकार्य्य-कारणभावग्रहे यस्य प्रवेशोविशेषकार्य्य-कारणभावग्रहेऽपि तस्य प्रवेश इति नियमे मानाभावादिति भावः। 'कार्य्यान्वितशक्ति-

---

कारणत्वमवधारयतीत्यत्राह, 'अपि चेति, 'अन्यलभ्यत्वाच्चेति, एतच्च लिङ्गादिशक्तिकल्पनोत्तरमिति मन्तव्यं। 'तन्मूलकेति, यत्रैव कारणत्वस्थैर्य्यं तत्रैव तदवच्छेदकतया कल्पनाच्छक्तिश्च तन्मते पदार्थान्तरं अस्मन्मते चेश्वरेच्छेत्यन्यदेतदिति भावः। अदर्शने हेतुमाह, 'बालस्येति। 'सः'

शक्तिग्रहस्य च बाधा स्यादिति वाच्यं। दृष्टत्वात् अन्यथासिद्धिमपश्यतो हि बालस्य स भूत इति तस्याबलवत्त्वात् गौरवान्यलभ्यत्व-तर्क-सहकृतप्रमाणजन्यत्वेनोत्तरस्य बलवत्त्वात्। न चोपजीव्यबाधान्न तथा प्रत्येतीति वाच्यं। उपजीव्यत्वे मानाभावात्। दैवाद्धि प्रथमं तद्वृत्तं न तु पदविशेषशक्तिग्रहे तस्य हेतुत्वं तेन विनापि तत्सम्भवात्। न च प्राथमिकत्वेन

---

ग्रहस्येति कार्य्यत्वान्वितज्ञानत्वेऽवच्छेदकताग्रहस्येत्यर्थः, 'बाधेति अप्रमात्वमित्यर्थः, 'अन्यथासिद्धिमिति अन्यथोपपत्तिकमित्यर्थः, 'सः' साक्षात्कारणताबोध इत्यर्थः, 'अबलवत्त्वात्' अप्रमात्वात्, एवमग्रेऽपि, 'अन्यलभ्यत्वेति, 'तर्कपदमत्रोत्कटकोटिकसम्भावनापरं, 'बलवत्त्वात्' प्रमात्वात्, एवं सर्व्वत्र, 'बाधात्' अप्रमात्वप्रसङ्गात्, 'तथा प्रत्येतीति अन्वितस्वार्थज्ञानत्वावच्छिन्ने पदविशेषाणां शक्तिं प्रत्येतीत्यर्थः, 'उपजीव्यत्व इति सामान्यशक्तिग्रहस्य विशेषशक्तिग्रहोपजीव्यत्वे मानाभावादित्यर्थः, 'दैवादिति सामग्र्याः प्राथमिक-

---

कार्य्यान्वितशक्तिग्रहः, अन्यलभ्यत्वं यद्यपि न तर्कस्तथापि यदि शक्यं स्यादन्यलभ्यं न स्यादित्यादितर्कप्रयोजकतया तर्कत्वोक्तिरित्याङ्गः। तर्कपदेन तर्कान्तरमेवोक्तं न तु तदुभयान्वितं तदित्यन्ये। तर्कपदं ज्ञानपरमित्यपरे।

'उत्तरस्य' अन्वितमात्रशक्तिग्रहस्य, 'तेन विनापीति, पूर्व्वोक्तन्यायेनेति शेषः, तथाच कार्य्यान्वितशक्तिग्रहस्य पदविशेषशक्तिग्रहेऽणोपजीव्यत्व-

बलवत्त्वं व्यभिचारात्। नापि सर्व्वैः प्रथमं प्रतीयमानत्वेन बलवत्त्वं सर्वेषां शरीराहम्प्रत्यये चन्द्रतारकादिपरिमाणस्य सर्व्वैरल्पत्वग्रहे च व्यभिचारात्। अतएव पूर्वकल्पनातः कल्पनान्तरप्रसङ्गः स्यादिति निरस्तं। यच्चानन्यथासिद्धतयोपजीव्यतया वा बलवत्त्वं पूर्वकल्पनायास्तच्च तथात्वात्। किञ्च प्रथमं कार्य्यान्वितज्ञाने वाक्यस्य साक्षात्परम्परोदासीनं कारणत्व-

त्वादित्यर्थः, 'व्यभिचारादिति इदं रजतमित्यादिभ्रमस्य प्राथमिकत्वे तदुत्तरवर्त्तिनो विशेषदर्शनजन्यज्ञानस्यैव प्रमात्वादित्यर्थः, 'बलवत्त्वमिति साक्षात्कारणत्वादेव बाधितमित्यर्थः, 'अहम्प्रत्यये' अहम्प्रत्ययविषये, 'अल्पत्वग्रहे'। 'अनन्यथासिद्धतयेति प्रयोजनान्तरक्षतिभिया उपजीव्यतयेत्यर्थः, 'तथात्वादिति पूर्व्वकल्पनातो विपरीतकल्पनाया दोषत्वादित्यर्थः। पूर्व्वकल्पनातो विपरीतकल्पनैव न भवतीत्याह, 'किञ्चेति, 'साक्षात्परम्परोदासीनमिति कार्य्यत्वान्वितज्ञानत्वान्वितज्ञानत्वावच्छिन्नकार्य्यताप्रतियोगिकत्वेनान्वितज्ञान-

मिति भावः। 'व्यभिचारादिति भ्रमस्य प्राथमिकस्याप्यबलत्वादित्यर्थः। 'सर्व्वैरिति सर्व्वस्य प्रत्ययत्वेनेत्यर्थः, तेन प्रत्यये व्यभिचारोऽग्रे न विरुध्यत-इति बोध्यं। एतच्चाभ्युपगमवादेनेति मन्तव्यं। 'यच्चेति, अन्यथा ज्ञानज्ञानं स्वविषये प्रवर्त्तकमिति प्रथमकल्पनाया अबाध्यत्वे तवान्यथाख्यात्यापत्तिरिति भावः। एतच्चाभ्युपेत्य समाहितं। वस्तुतस्तु साक्षात्कारणत्वं गृह्यत एव नेत्याह, 'किञ्चेति, 'उपायस्येति, यद्यपि प्रत्यक्षेऽन्वय-व्यतिरेकादिरुपायः, तथापि अनुमाने लिङ्गघटकतया तथात्वे तात्पर्य्यं। ननू-

मात्रं गृह्यते न तु विशेषोऽपि उपायस्यान्वय-व्यतिरेकादेरुभयविशेषसाधारणत्वेन तत्संशायकत्वात्, उत्सर्गोऽपि बाधकाभावनिश्चयसहकृतो निश्चायकः। न चान्यलभ्यत्वस्य बाधकस्याभावमापाततः स्वतो दर्शनमात्रेण बालो निश्चेतुमर्हति। अतएव प्रामाण्यस्यौत्सर्गिकत्वेऽपि बाधकाभावसहकृतनिश्चयादेव निश्चयः, अन्यथा प्रमाऽप्रमा वा साक्षात्परम्परासाधनं वेति

---

त्वावच्छिन्नकार्य्यताप्रतियोगिकत्वेन चाविशेषितमित्यर्थः, अश्वमेधादौ स्वर्गकारणताग्रहवत्कार्य्यतावच्छेदकमविषयीकृत्यापि कारणताग्रहसम्भवादिति भावः। 'न तु विशेषोऽपीति न तु निरुक्तसाक्षात्त्वविशेषितमपीत्यर्थः, 'उभयविशेषसाधारणत्वेनेति साक्षात्कारणत्वे परम्परया कारणत्वे च सम्भवेनेत्यर्थः। ननु कार्य्य-कारणभावग्रहदशायां कार्य्यवृत्तितया उपस्थितत्व-कार्य्यतावच्छेदकत्वयोः सहचारदर्शनसहकारात् साक्षात्कारणत्वनिश्चयः कथं न स्यात् लाघवादिज्ञानवद्भूयोदर्शनरूपोत्सर्गस्यापि प्रमाणसहकारित्वादित्यतआह, 'उत्सर्गोऽपीति निरुक्तभूयःसहचारग्रहोऽपीत्यर्थः। 'औत्सर्गिकत्वेऽपि' भूयःसहचरितत्वेन गृहीतत्वेऽपि, 'साक्षात्परम्परेति, कारणत्व-

---

त्सर्गसहकारात् साक्षात्त्वनिश्चयः स्यादित्यत आह, 'उत्सर्गोऽपीति, कदाचित्तन्निश्चये वाग्रे त्याग इति पूर्व्वोक्त एव तात्पर्य्यं। ननु यदि बाधकाभावनिश्चयसहकृत एवोत्सर्गो निश्चायकस्तदा किमुत्सर्गेण बाधकाभावनिश्चयादेव तन्निश्चयसम्भवात् बाधकाभावोऽप्यनियमरूपतया बाधनिश्चये परं नोत्सर्गावतार इति तन्निश्चयाभावः परमपेक्ष्यतां न तु तदभावनिश्चयोऽपि तथाच बाधकनिश्चयसन्देहेऽपि तदवतार इत्यपेयं इत्यत आह, 'अन्यथेति

संशयः क्वापि न स्यात्। यच्च हर्षहेतूनां बहूनां सम्भवादित्यादि, तन्न, स्वतोगृहीतहर्षहेतुस्तनपानादेर्बाधावताराद‌न्यस्य हर्षहेतोरग्रहादुपस्थितत्वादुपपादकत्वाच्च पुत्रजन्मज्ञानस्यैव हर्षहेतुत्वेन कल्पनात्। अन्यप्रियज्ञानं हर्षकारणं भविष्यतीति शङ्कायां कथमेवमिति चेत्, न, एवं हि कार्य्यान्वितज्ञानेऽपि शक्तिर्न गृह्येत, प्रयोज्यज्ञानहेतूनां बहुत्वादनन्यथासिद्धशब्दानुविधानस्य च तुल्यत्वात् अन्यप्रियस्याज्ञा-

साक्षात्कारणत्वयोर्भूयःसहचारग्रहरूपस्योत्सर्गस्य सत्त्वादिति भावः। इदमुपलक्षणं वस्तुतस्तु कार्य्यत्वान्वितज्ञानत्वावच्छिन्नस्वरूपयोग्यत्वेनैव पदत्वावच्छेदेन गृहीतस्य स्वरूपशक्तौ कार्य्यत्वान्वितत्वस्य प्रवेशेऽपि न बाधः, न वा विपरीतकल्पनेत्यपि बोध्यं। 'हर्षहेतुत्वेनेति अयं हर्षः प्रियज्ञानजन्यः हर्षत्वादित्यनुमानेनेत्यर्थः, 'अन्यप्रियज्ञानमिति, 'तुल्यत्वादिति इहापि हर्षहेतुज्ञाने शब्दस्यान्वयाद्यनुविधानसत्त्वा-

एवं सति सर्व्वत्रौत्सर्गिकार्थनिश्चये तत्संशयो न स्यादित्यर्थः। न चोत्सर्गवैयर्थ्यं, अन्वय-व्यतिरेकाभ्यां तस्यापि लाघवादिवत् प्रमाणसहकारित्वाभ्युपगमादिति दिक् इति प्रकाशः।

'एवं हीति, यदि च शङ्काया अनावश्यकत्वं शङ्कापिशाचीत्वेन वा अप्रतिबन्धकत्वं तदा तुल्यमिति भावः। कोटिज्ञानाभावादपि न शङ्केत्याह, 'अन्येति, 'नियम इति तथाच यत्रैव तदनुपस्थितिस्तत्र सिद्धार्थशक्तिग्रहोऽविकल एवेत्यर्थः। नन्वेवमन्यप्रियज्ञानाभावविशेषितो हर्षो न पुत्रजन्म-

नाच ज्ञानेऽपि वा तदा तदुपस्थितिनियमे माना-भावात् सन्देहाभावोपपत्तेः लिङ्गाभासजन्यकाकता-लीयसम्पन्नसंवादानुमितिवद्धर्षेण लिङ्गेन पुत्रजन्मज्ञा-नानुमानसम्भवाच्च । न चाभासजत्वेनानुमितेर्भ्रमत्वे तद्धेतुकशक्तिग्रहो भ्रमः, विषयस्य तथाभावेन तयो-र्यथार्थत्वात् । यथा कश्चित् सूत्रसञ्चाराधिष्ठितं दारुपुत्रकं घटमानयेति नियुङ्क्ते स च तमानयति तदा चेतनव्यवहारादिव तद्दर्शी बालो व्युत्पद्यते । इयं क्रिया

---

दित्यर्थः, तच्च पुत्रजन्मज्ञानस्य हेतुत्व एव सम्भवतीति भावः । सन्देह एव न सम्भवतीत्याह, 'अन्यप्रियस्येति अन्यस्य प्रियत्वेना-ज्ञानाच्चेत्यर्थः, 'सन्देहाभावोपपत्तेरिति सन्देहस्यैवाभावाच्चेत्यर्थः, 'हर्षेण लिङ्गेनेति व्यभिचारिणापि हर्षेण हेतुनेत्यर्थः, 'पुत्रजन्मेति अयं पुत्रजन्मज्ञानवान् हर्षवत्त्वादित्यादिक्रमेणेत्यर्थः, 'तथाभावेनेति अबाधितत्वेनेत्यर्थः, 'तयोः' अनुमिति-शक्तिग्रहयोः, कारणस्य भ्रम-त्वेऽपि कार्य्यस्य यथार्थत्वे दृष्टान्तमाह, 'यथेति, तदन्वय इति शेषः । 'स च' दारुपुत्रकः, 'व्युत्पद्यते' अनुभाविकां शक्तिं गृह्णाति ।

---

ज्ञानानुमाने लिङ्गं तदनुपस्थितेः तदविशेषितं व्यभिचारीत्यत आह, 'लिङ्गाभासेति, तथाच व्यभिचारास्फुरणदशायां लिङ्गभ्रमात् तत्सम्भव इति भावः । 'तयोः' अनुमिति-शक्तिग्रहयोः, अत्रानुरूपं दृष्टान्तमाह, 'यथेति, 'स चेति दारुपुत्रक इत्यर्थः, 'कृतीति आत्मकृतिजन्येत्यर्थः, तथाच पक्ष-धर्म्मताबलात तदीयत्वं कृतौ भातमिति भ्रमत्वं । न चैवमग्रे पक्षाप्रसिद्धिः,

**कृतिजन्या सा ज्ञानजन्या तत् वाक्यजन्यमित्यनुमिति-परम्पराया भ्रमत्वेऽपि तद्धेतुशक्तिग्रहः तज्जन्यशाब्द-बोधश्च यथार्थ एव विषयस्य तथाभावादिति सिद्धं**

---

शक्तिग्रहप्रकारमेवाह, 'इयमिति, 'कृतिजन्या' स्वसमानाधिकरण-कृतिजन्या, तेन भ्रमत्वं, 'सा' एतत्क्रियासमानाधिकरणा कृतिः, 'ज्ञानजन्या' स्वसमानाधिकरणकार्य्यत्वान्वितज्ञानजन्या, 'तत्' एत-त्क्रियासमानाधिकरणकृतिसमानाधिकरणीभूतं कार्य्यत्वान्वितज्ञानं, 'अनुमितिपरम्पराया इति, तत्रेत्यादिः, 'तद्धेतुशक्तिग्रह इति तद-धीनः कार्य्यत्वान्वितज्ञानत्वस्य पदमात्रकार्य्यतावच्छेदकताग्रह इत्यर्थः, 'तज्जन्येति अनुमितिजन्येत्यर्थः, तदर्थज्ञापकत्वज्ञानस्य हेतुतया अनु-भावकशक्तिज्ञानमपि शाब्दधीहेतुरिति मतेनेदं, 'तथाभावादिति अबाधितत्वादित्यर्थः, 'सिद्धार्थेऽपीति सिद्धत्वेन कार्य्यत्वानन्वितशाब्द-बोधेऽपीति यावत्, 'शक्तिग्रह इति शब्दस्य कारणताग्रह इत्यर्थः, 'इत्यन्तं 'सिद्धमित्यस्य कर्तृ नातो नपुंसकलिङ्गतानुपपत्तिः। 'अत-एवेति शब्दस्य कार्य्यत्वानन्वितशाब्दबोधं प्रत्यपि जनकत्वादेवेत्यर्थः, विधिवाक्यश्रवणं विनापीति शेषः, यथाश्रुते "यन्न दुःखेनेत्याद्यर्थ-

---

काञ्चनमयोऽद्रिरितिवत् तदीयत्वेन प्रसिद्धकृतेरेव पक्षत्वात् अतएव तद्वदेव तदंश एव भ्रमत्वं प्रसिद्धकृतौ ज्ञानजन्यत्वस्याबाधितत्वात्, एवं तदीयत्वेन प्रसिद्धज्ञानं पक्षीकृत्य तद्वाक्यजत्वं साध्यं तत्र चोभयांश एव भ्रमत्वं। यद्वा कृतिसाक्षाज्जन्येति साध्यं। न चेदमबाधितं, अतएवानुमितेर्भ्रमत्वात् दारुपुत्रकक्रिया स्वकृतिजन्येति सामान्यव्याप्तिपुरस्कारेण साध्यमित्याहुः।

सिद्धार्थेऽपि शक्तिग्रह इति। अतएव "यन्न दुःखेन

वादस्यापि विधिशेषीभूतत्वेन विधिवाक्यैकवाक्यतया कार्य्यताविषयकशाब्दबोधं प्रत्येव जनकत्वात् तेन रूपेण शक्तिग्रहे बाधका-

'अतएवेति सिद्धार्थस्यापि व्युत्पन्नतया वाक्यार्थानुभावकत्वादेवेत्यर्थः। ननु दुःखासम्भिन्नत्वमत्रासम्भवि, आद्यन्तयोस्तन्नियमात्। यदि च तदसहवृत्तित्वं तत् तदा अस्मदादिसुखेऽप्यस्ति। न चानन्तरमित्यनेनाविरललग्नप्रवाहो दुःखासम्भिन्न इत्यर्थान्न दोष इति वाच्यं। कतिपयकालावच्छेदेनास्मदादेरपि तथा सम्भवात्। न चाभिलाषोपनीतमित्यनेन तन्निरासः, चक्रवर्त्तिसुखे तस्यापि सम्भवात्, अन्यथा तत एवातिप्रसङ्गनिरासे विशेषणान्तरवैयर्थ्यादिति। अत्र केचित् एकजन्मावच्छेदेन दुःखासम्भिन्नत्वादिकं नानैव प्रवृत्तिनिमित्तं अन्यथा विशेषणवैयर्थ्यात् तदुपस्थितेस्तु तात्पर्य्यग्राहकत्वात् एवञ्च न चक्रवर्त्तिसुखातिप्रसङ्ग इत्याहुः, तच्चिन्त्यं, एवं हि नानार्थत्वपर्य्यवसाने गौरवात् तथा तात्पर्य्यग्राहकाभावाच्च। यावति न वैयर्थ्यं तावदेकमेव प्रवृत्तिनिमित्तमभिमतमित्येके। अन्ये तु अधर्म्माजन्यशरीरजन्यसुखत्वोपलक्षकमिदं। न च योगिनस्तादृशं शरीरं, तत्र दुःखोत्पत्तेरधर्म्मजन्यत्वात् सुखमात्रावच्छेदके तच्छरीरे मानाभावात्। न च स्वर्गिशरीरेऽपि मरणजन्यदुःखसम्भवात् अधर्म्मजन्यत्वं मरणस्य दुःखव्याप्यत्वात् "ते नराः सुखमत्यव इति दुःखाल्पत्वपरमिति वाच्यं। विपक्षबाधकाभावेन व्याप्तेरसिद्धेः सिद्धौ वा मरणदुःखजनकाधर्म्मान्याधर्म्माजन्यशरीरजन्यसुखत्वे तात्पर्य्यात्। न च स्वर्गहेतुपुण्यक्षयशङ्कया स्वर्गेऽपि दुःखोत्पत्तेर्दोषतादवस्थ्यं, तदुक्तं "स्वर्गेऽपि पातभीतस्येत्यादीति वाच्यं। तदन्यत्वेनाप्यधर्म्मविशेषणादित्येके। वस्तुतस्तु स्वर्गिशरीरं सुखमात्रावच्छेदकमिति यदि तत्र दुःखधीस्तदा भ्रान्तिः अतएव तद्धर्म्ममात्रजन्यमेव। केचित्तु अविरललग्नप्रवाहचिरस्थायीच्छामात्रयोनिदुःखासम्भिन्नसुखत्वं तथा, अतएव तत्प्रकारिकैव धीः चक्रवर्त्तिसुखे अवश्यमन्यतमविशेषणवैकल्यमित्याहुः।

सम्भिन्नं न च ग्रस्तमनन्तरं। अभिलाषोपपनीतञ्च

भावात्। 'यन्न दुःखेन सम्भिन्नमिति, 'न दुःखेन सम्भिन्नं' न दुःख-समानाधिकरणं न दुखावच्छेदकशरीरावच्छेद्यमिति यावत्, अन्यथा स्वर्गिणः सुखस्याप्यात्मनि भावि-भूतदुःखसमानाधिकरणत्वादसम्भवा-पत्तेः दुःखावच्छेदकावृत्तिजातिमच्छरीरावच्छेद्यमिति निष्कर्षः, तच्च एकजन्मावच्छेदेन दुःखानुत्पादएव सम्भवति तेन राजचक्रवर्त्तिनो-धारावाहिकसुखमात्रावच्छेदकपुण्यपरीपाकमात्रजन्यखण्डशरीरमा-दाय तदवच्छिन्नसुखे नातिप्रसङ्गः, स्वर्गिणो मरणेऽपि न दुःखं "ते नराः सुखमृत्यव इत्यादिवेदेन तथैव बोधनात् पापजशरीरविरहाच्च। अतएव स्वर्गिशरीरेऽपि पातभयजन्यदुःखश्रवणादसम्भव इत्यपि निरस्तं, पापजशरीरविरहेणानायत्या तस्य संसारनिन्दामात्रपरत्वात्, अतएव धर्मजन्यमात्रवृत्तिजातिमच्छरीरावच्छेद्यसुखत्वं स्वर्गत्वमित्यपि वदन्ति। 'दुःखपदं वा मरण-पातभीरुत्वादिजन्यदुःखातिरिक्तदुःख-परं, 'ग्रस्तमिति ग्रासो लौकिकसुखापेक्षयाऽपकर्षः तच्छून्यमित्यर्थः, 'अनन्तरं' अन्तरा विच्छेदस्तद्रहितं स्वाश्रयावच्छेद्यसुखानधिकरण-कालोत्तरोत्पत्तिकसुखावच्छेदकवृत्तिजातिमदनवच्छेद्यमिति यावत्, स्वपदं जातिपरं, स्वर्गिणः सुषुप्तावपि मानाभावात् युगपत्सकल-ब्रह्माण्डे खण्डप्रलयाभावात् सत्ता-द्रव्यत्वादेः स्वाश्रयावच्छेद्यसुखान-धिकरणकालाप्रसिद्ध्या न तदादायासम्भवः, तादृशसुखावच्छेदका-वृत्तिजातिमच्छरीरावच्छेद्यमिति वा अनन्तरत्वं वक्तव्यं, अत्रापि स्वपदं स्वर्गिशरीरवृत्तिजातिपरं, इत्यञ्च युगपत्सकलब्रह्माण्डप्रल-

तत् सुखं स्वःपदास्पदं" ॥ इत्यर्थवादोपस्थिते सुखे वेदादेव स्वर्गपदस्य शक्तिग्रहः न तु चन्दनादौ सुखो-

याभ्युपगमेऽपि न क्षतिः[१] । 'अभिलाषोपनीतञ्चेति सुखाभिलाषानन्तरं तत्साधनार्ज्जनविलम्बासहमित्यर्थः, स्वसमानाधिकरणस्वविषयकाभिलाषोत्पत्त्यनियतसामग्र्यजन्यमिति यावत्, स्वर्गिणां तथैव विलक्षणमदृष्टं यतः सुखविषयकाभिलाषोत्पत्तिसमय एव तत्र कारणानां सर्व्वेषां सम्पत्तिरिति भावः । स्वसमानाधिकरणेत्यभिलाषविशेषणात् संसारितादशायां स्वर्गविषयकाभिलाषे स्वर्गानुत्पादेऽपि न क्षतिः । स्वसमानाधिकरणत्वञ्च स्वावच्छेदकशरीरावच्छेद्यत्वं, अभिलाषव्यतिरेकोत्पन्नस्वर्गेऽव्याप्तिवारणाय निषेधद्वयगर्भता, 'स्वःपदास्पदमिति स्वरादिपदशक्यमित्यर्थः । न चाग्रस्तत्वादिविशेषणवैयर्थ्यं तादृशसुखस्यैव दुःखावच्छेदकावृत्तिजातिमच्छरीरावच्छेद्यत्वनियमेनाव्यावर्त्तकतया तादृशजातिमच्छरीरावच्छेद्यसुखत्वस्यैव शक्यतावच्छेदकत्वौचित्यात् ग्रासादिविशिष्टतादृशशरीरावच्छेद्यसुखे मानाभावादिति वाच्यं । प्रवृत्तिनिमित्ते विशेषणवैयर्थ्यस्यादोषत्वात् यत्प्रकारेण स्वारसिकबोधस्तस्याव्यावर्त्तकस्यापि गुरुतरस्यापि शक्यतावच्छेदकत्वादिति भावः । 'वेदादेवेति 'स्वःपदास्पदमिति वेदादे-

(१) तथाच पूर्व्वकल्पे सकलब्रह्माण्डेषु प्रलयानन्तरं पुनः सृष्टौ सत्यां स्वर्गिशरीरोत्पत्तौ सत्ता-द्रव्यत्वादिकमादायासम्भवो बोध्यः, अनादौ संसारे स्वर्ग-प्रलययोरसकृज्जातत्वादिति भावः ।

अग्रस्तत्वं चिरस्थायित्वं प्रवाहस्य बोध्यं । 'वेदादेवेति "स्वःपदास्पदमिति

परागेण स्वर्गपदप्रयोगाद्वेयतादशायाञ्चाप्रयोगात् सुखमेव शक्यं, बहुवित्तव्ययायाससाध्ये तत्तत्कर्म्मणि सुखमात्रार्थी न प्रवर्त्तेत इत्यर्थवादोपस्थिते स्वर्गपद-तात्पर्य्यं। न चार्थवादस्योपजीव्यत्वात् तदुपनीते तत-एव शक्तिग्रहः, तस्य स्वर्गपदतात्पर्य्यविषयत्वेनास्पद-

वेत्यर्थः, 'सुखोपरागेण' सुखजनकताप्रतिसन्धानेन, 'द्वेयतादशाया-मिति सुखजनकत्वाप्रतिसन्धानदशायामित्यर्थः, 'सुखमेवेति अति-शयितसुखसामान्यमेवेत्यर्थः, तथाच तज्जनकतात्मकशक्यसम्बन्धेन चन्दनादौ स्वर्गपदप्रयोगो भाक्त इति भावः। नन्वेवं "यन्न दुःखेने-त्याद्यर्थवादस्य वैयर्थ्यमप्रवृत्तिश्चेत्यत आह, 'बहुवित्तेति, 'तत्तत्कर्म्मणि' अग्निष्टोमादौ, 'स्वर्गपदेति "स्वर्गकामोऽग्निष्टोमेन यजेतेत्यत्र स्वर्ग-पदतात्पर्य्यमित्यर्थः, तथाच सामान्यशब्दस्य विशेषे तात्पर्य्यग्राहक-तया अर्थवादसाफल्यमिति भावः। 'उपजीव्यत्वादिति तात्पर्य्यग्रहार्थ-मवश्यापेक्षणीयत्वादित्यर्थः, 'तदुपनीते' तदुपस्थिते सुखविशेषे, 'ततएवेति, तत्र स्वःसदास्पदमित्यभिधानादिति भावः। 'स्वर्गपदेति सुखसामान्यशक्तस्वर्गपदेत्यर्थः, 'आस्पदत्वोपपत्तेरिति स्वर्गपदविषय-तोपपत्तेरित्यर्थः, 'वाच्यत्वाभिधायकत्वमिति "यन्न दुःखेनेत्यादे-र्विशेषरूपेण शक्त्यभिधायकत्वमित्यर्थः, आस्पदपदं हि न वाच्यत्व-वाचकमपि तु विषयतावाचकं तच्च सामान्यशक्त्यैव सामान्यशब्दस्य विशेषपरतया निर्व्वहतीति न विशेषरूपेण शक्तिबोधकत्वं तस्येति भावः। कचिच्चास्पदोक्तेरिति पाठः तत्र 'तात्पर्य्यविषयत्वेन' तात्पर्य्य-

त्वोपपत्तेर्न वाच्यत्वाभिधायकत्वं गौरवात्, सुखमात्रे चाप्रयोगात् अतिशयितसुखत्वं वाच्यं प्रयोगोपाधिर्वा- तिशयः। न चातिशयस्य सावधित्वेन चन्दनसुखेऽस्मा- दयं स्वर्ग इति धीः स्यात्, रसादाविवातिशयस्य जातित्वेनावध्यनिरूप्यत्वात्। अतिशयपदप्रयोगस्तु इतरज्ञानापेक्ष इति चेत्, न, विचित्रहेतुसाध्यतया

---

विषयार्थकत्वेन, 'आस्पदोक्तेः' आस्पदपदस्येत्यर्थो बोध्यः। 'गौरवा- दिति, तत्प्रकारेण स्वारसिकबोधस्त्वसिद्ध इति भावः। नन्वेवं सामान्यतः सुखत्वमेव शक्यतावच्छेदकमस्तु किमतिशयस्य शक्यताव- च्छेदकत्वेनेत्यत आह, 'सुखमात्र इति, 'अतिशयितसुखत्वमिति सुखत्वव्याप्योऽतिशय इत्यर्थः, 'वाच्यं' शक्यतावच्छेदकं, 'प्रयोगोपाधि- रिति सुखत्वमेव शक्यतावच्छेदकमतिशयस्तु प्रयोगोपाधिरित्यर्थः, प्रयोगोपाधित्वञ्च विशेष्यतासम्बन्धेन शक्तिप्रमया स्वर्गपदजन्यशाब्द- बोधोत्पत्तिप्रतिबन्धकान्योन्याभावप्रतियोगितावच्छेदकत्वं, विशेष्यता- सम्बन्धेन तादृशशाब्दबोधोत्पादेऽतिशयावच्छिन्नान्योन्याभावस्य प्रति- बन्धकत्वादिति भावः। 'अतिशयपदेति अस्मादतिशयितमिति पदप्रयोग इत्यर्थः, 'इतरज्ञानेति अवधिज्ञानेत्यर्थः, अवधेर्वाक्यार्थ- घटकत्वादिति भावः। 'विचित्रहेतुसाध्यतयेति विचित्रो हेतु-

---

वेदादेवेत्यर्थः। 'गौरवादिति विशिष्टव्याप्यत्वे गौरवादित्यर्थः, स्वर्गपदशक्ति- ग्रहस्य प्रकारान्तरेणेति भावः। तर्हि सुखमात्र एव स्वर्गपदप्रयोगः स्यादित्यत आह, 'सुखमात्रे चेति, विचित्रो हेतुर्याग-दानादिः प्रत्येकं

विलक्षणातिशयस्यानेकत्वेनाननुगमात्, सुखत्वावान्त-रातिशयत्वेनास्यानुगमेऽप्यनध्यवसायेन शक्त्यग्रहादप्रवृत्त्यापत्तेः। सुखत्वावान्तरजातेश्च सुखमात्रसाधारणत्वात् प्रयोगोपाधेर्निराकर्त्तव्यत्वात् लोके च लक्षणा।

---

र्यागदानादिस्तत्साध्यतया तज्जन्यतावच्छेदकतयेत्यर्थः, 'सुखत्वावान्तरेति सुखवृत्त्यतिशयपदवाच्यत्वेनेत्यर्थः, अतिशयवाच्यत्वञ्च वाच्यतासम्बन्धेनातिशयपदवत्त्वं तेन वाच्यतावच्छेदकभेदेन वाच्यताया अननुगमेऽपि न क्षतिः, सम्बन्धाननुगमस्यादोषत्वादिति भावः। 'अनध्यवसायेनेति सा जातिरतिशयपदार्थ इति विशिष्यानिश्चयेनेत्यर्थः, 'अप्रवृत्त्यापत्तेरिति स्वर्गपदस्याप्रवृत्त्यापत्तेरित्यर्थः, अप्रवृत्तिः शाब्दबोधाजनकत्वं, इदमुपलक्षणं विनिगमनाविरहेणातिशयपदोत्कर्षपदादेः शक्यतावच्छेदकतया सर्व्वस्यैवाननुगमतादवस्थ्याच्चेत्यपि बोध्यं। ननु सुखत्वावान्तरजातित्वेनानुगमः जातित्वञ्च समवेतत्वमित्यत आह, 'सुखत्वावान्तरेति, 'सुखमात्रेति, तथाच सुखत्वमेवावच्छेदकमस्तु अतिप्रसङ्गस्य विवक्षितेऽप्यनुद्धारादिति भावः। एतच्च दूषणं पूर्व्वकल्पेऽपि बोध्यं, अत्यन्तापकृष्टसुखे मानाभावेन तस्यापि सुखमात्रसाधारणत्वात्। नन्वास्तां तर्हि प्रयोगोपाधित्वं। न च तत्राप्यननुगमो दोषः, तत्तदतिशयावच्छिन्नान्योन्याभावस्य हेतुत्वादित्यत आह, 'प्रयोगेति, 'निराकर्त्तव्यत्वादिति शक्तिभ्रमतया स्वर्ग-

शक्यत्वे नानार्थत्वापत्तिरिति भावः। 'सुखत्वावान्तरातिशयत्वेनेति। यद्यपि विलक्षणनानातिशयसाधारण्यं नैकमतिशयत्वमिति दोषान्तरतादवस्थ्यं।

ननु दुःखासम्भिन्नसुखस्य शक्यत्वे चन्दनादौ स्वर्गपद-प्रयोगो लक्षणयापि न स्यात् सातिशयसुखस्य शक्यत्वे तत्सम्बन्धितया चन्दनादौ लक्षणा भवति तस्मात् दुःखासम्भिन्नत्वादिनोपलक्षिता सुखत्वावान्तरजाति-

---

पदजन्यलक्षणानुगतानतिप्रसक्तस्य दुर्व्वचतया स्वर्गवाचकपदभेदेनानन्तप्रतिबध्य-प्रतिबन्धकभावापत्त्या च निराकर्त्तव्यत्वादिति भावः। ननु "यन्नेत्याद्यर्थवादोपनीतसुखस्य शक्यत्वे चन्दनादिजन्यलौकिकसुखे कथं स्वर्गपदप्रयोग इत्यत आह, 'लोके चेति। स्वर्गत्वमश्वमेधादिजन्यसकलस्वर्गसाधारणं चन्दनादिसुखसाधारणञ्च कीटादिसुखव्यावृत्तैका जातिस्तदेव च स्वर्गादिपदशक्यतावच्छेदकमित्याशङ्कते, 'नन्विति, 'लक्षणयापीति, शक्यसम्बन्धाभावादिति भावः। 'सातिशयेति विजातीयेत्यर्थः, 'तत्सम्बन्धितयेति जनकतात्मकतत्सम्बन्धितयेत्यर्थः, 'उपलक्षिता' लक्षणया बोधिता, 'सुखत्वावान्तरजातिरिति कीटादिसुखव्यावृत्ता अश्वमेधादिजन्यसकलस्वर्गसाधारणी

---

तथाप्यतिशयत्वं जातित्वमित्यनुगम इति भावः। तादृशातिशयस्य सुखमात्रवृत्तित्वात् कुत्र शक्तिरित्यनध्यवसायः विशिष्याज्ञानमित्यर्थः। ननु सुखत्वावान्तरजातिमत्त्वेन सर्व्वत्रैव शक्तिग्रह इति नाननुगमो न वानध्यवसाय इत्यत आह, 'सुखत्वेति, तथाच सुखमात्र एव प्रयोगः स्यादिति भावः। तथात्वे लाघवेन सुखत्वेनैव शक्यतापत्तेश्चेत्यपि बोध्यं। 'तत्सम्बन्धितयेति तत्साक्षात्सम्बन्धितयेत्यर्थः, शक्यसाक्षात्सम्बन्ध एव लक्षणेत्यभिमानः। 'तस्मादिति, लाघवाज्जातिविशेषः शक्यः तदुपस्थापकतया च नार्थवादवैयर्थ्यमिति भावः। सुखमात्रे प्रयोगं परिहर्त्तुमाह, 'सुखत्वेति।

रेव वाच्या लाघवादिति चेत्, न, एकजातीयहेतु-साध्ये एकजातिसत्त्वेऽपि विलक्षणहेतुसाध्यस्वर्गेष्वेक-जातौ मानाभावात्। विहितकर्म्मजन्यता च तत्त-द्विशेषत्वेनैव, अननुगतस्यापि जन्यतावच्छेदकत्वात्

चन्दनादिसुखसाधारणी च जातिरित्यर्थः, 'वाच्या' शक्यतावच्छे-दिका, 'लाघवादिति "यन्न दुःखेनेत्याद्यपेक्षया लाघवादित्यर्थः, तत्प्रकारेण स्वारसिकबोधस्वसिद्ध इति भावः। ननु विहितकर्म्म-जन्यतावच्छेदकत्वेन सा जातिः सिद्ध्येदित्यत आह, 'विहितेति। न च नानाजातीनां जन्यतावच्छेदकत्वे गौरवाल्लाघवेन विहितकर्म्म-जन्यतावच्छेदकमेकमेव सामान्यं कल्प्यत इति वाच्यं। तादृशकार्य्य-कारणभावे मानाभावात् विहितत्वस्य स्वर्गकारणत्वेन वेदबोधितत्व-रूपतया आत्माश्रयेण कारणताया अनवच्छेदकत्वाच्च। न च धर्म्म-जनककर्म्मत्वं विहितत्वमिति वाच्यं। तथा सति सुखमात्रस्यैव धर्म्म-जन्यत्वात् सुखत्वस्यैव तदवच्छेदकत्वसम्भवेऽतिरिक्तजातौ मानाभावा-दिति भावः। नन्वेवं चन्दनादौ लक्षणया कथं स्वर्गपदप्रयोग इत्यत-

ननु विहितकर्म्मजन्यतावच्छेदकत्वेन सा जातिः सिद्ध्येदित्यत आह, 'विहितेति। ननु तत्तद्विहितकर्म्मविशेषजन्यतावच्छेदकत्वं तेषामिति यद्विशेषयोरिति न्यायेन सामान्ययोरपि कार्य्य-कारणभावः स्यात् अन्यथा जन्यसाक्षात्कारित्वमपि जन्यतावच्छेदकं न स्यात् न स्याच्च कर्त्तृजन्यता-वच्छेदकं जन्यत्वमिति। मैवं। अस्त्वेवं तथापि लौकिकोत्कटसुखस्य विहितकर्म्माजन्यतया चन्दनादौ तज्जातीयसुखसम्बन्धाभावात् लक्षणानुप-पत्तेः। ननु लौकिकस्याप्यदृष्टद्वारा विहितकर्म्मजन्यत्वमिति चेत्, हन्त तर्हि

सम्बन्धमात्रञ्च लक्षणावीजमिति वक्ष्यते। एवं देवता-

---

आह, 'सम्बन्धमात्रञ्चेति शक्यस्य सम्बन्धमात्रञ्चेत्यर्थः, 'लक्षणावीजं' लक्षणास्वरूपं, प्रकृतेऽपि स्वर्गवृत्तिसुखत्वाश्रयजनकत्वादिरूपपरम्परा-सम्बन्ध एवास्तीति भावः।

अत्र नव्याः, दुःखासम्भिन्नत्वादिरूपेण शक्यत्वेऽपि तेषां विशेष्य-विशेषणभावे विनिगमनाविरहात् स्वत्वघटितत्वेनाननुगतत्वाच्च नाना-र्थत्वं दुर्व्वारं, तथाच लाघवादश्वमेध-वाजपेयादिजन्यतावच्छेदिकाः गङ्गास्नानादिजन्यतावच्छेदिकास्तत्तज्जातय एव स्वर्गादिपदशक्यताव-च्छेदिकाः दुःखासम्भिन्नत्वादिप्रकारेण स्वारसिकबोधस्यासिद्धत्वात् "यन्न दुःखेनेत्याद्यर्थवादस्य च शक्यतावच्छेदकत्वपर्य्यन्ताबोधकत्वान्न तद्विरोधः। नन्वश्वमेधादिजन्यतावच्छेदिका न जातिश्चन्दनसंयोग-पुष्पसंयोगजन्यतावच्छेदकजातिभिः साङ्कर्य्यात् विनिगमनाविरहेण चन्दनसंयोग-पुष्पसंयोग-तरुणीसम्बन्धादीनां सर्व्वेषामेवाश्वमेधादि-जन्यस्वर्गोपधायकत्वात्। न च चन्दनसंयोगादिजन्यतावच्छेदक-जातीनां नानात्वमिति वाच्यं। विनिगमकाभावात्। न चाश्वमे-धादिजन्यतावच्छेदकजातयश्च पुष्पसंयोगादिजन्यतावच्छेदकजातीनां

---

सुखत्वमेव तज्जन्यतावच्छेदकं तस्यैव शक्यत्वे अतिप्रसङ्ग इत्युक्तमेव, तस्मात् लौकिकातिशयितसुखव्यावृत्तपारलौकिकसुखमात्रवृत्तिजातिर्न तज्जन्यताव-च्छेदकतया न वा मानान्तरेण सिद्धातीत्यत्रैव तात्पर्य्यमिति वयमालोचयामः।

केचित्तु विहितकर्म्मत्वं वेदबोधितकारणताककर्म्मत्वं, तथाच तस्या-वच्छेदकत्वे कारणतैव कारणतावच्छेदिका स्यादित्याहुः।

'सम्बन्धेति स्ववृत्तिसुखत्वजातिमज्जनकत्वरूपपरम्परासम्बन्धस्तथेत्यर्थः, एवं

विरुद्धाः तज्जन्यस्वर्गाणां धर्म्ममात्रहेतुकत्वादिति वाच्यं। अश्वमेधादि जन्यस्वर्गाणामुर्व्वशीसम्बन्धादिनानोपधायकत्वश्रवणादिति चेत्, न, विनिगमनाविरहादश्वमेधादिजन्यतावच्छेदकजातीनां चन्दनसंयोगादिजन्यतावच्छेदकजातिव्याप्य-विरुद्धभेदेन चन्दनसंयोगादिजन्यतावच्छेदकजातीनाञ्चाश्वमेधादिजन्यतावच्छेदकजातिव्याप्य-विरुद्धभेदेन नानात्वाभ्युपगमात्। न चैवमश्वमेधादिजन्यतावच्छेदकजातिव्याप्य-चन्दनसंयोगादिजन्यतावच्छेदकजाति-चन्दनसंयोगादिजन्यतावच्छेद-कजातिव्याप्याश्वमेधजन्यतावच्छेदकजात्योस्तुल्यव्यक्तिवृत्तितया कथं जातित्वमिति वाच्यं। जातिजन्याया एव जातेरुभयजन्यतावच्छेद-कत्वाभ्युपगमादिति प्राहुः।

केचित्तु निरुक्तदुःखासम्भिन्नसुखत्वमेव स्वर्गपदजन्यतावच्छेदकं, 'न च यस्तमित्यादिकन्तु स्वरूपकथनं, न हि विशिष्टधर्म्मस्यावच्छेद-कत्वपर्य्यन्तं वेदेन बोध्यते, किन्तु तदाश्रयस्य वाच्यत्वमात्रं वेदार्थः, विशिष्टधर्म्मेण स्वारसिकबोधोऽप्यसिद्धः। न च तज्जातीनामेव शक्यतावच्छेदकत्वमुचितमिति वाच्यं। नानार्थत्वप्रसङ्गादित्याहुः। तदसत्, प्रत्येकं तत्तज्जातिमादाय विनिगमकाभावेन जातीनामव-च्छेदकत्वस्य दुर्व्वचत्वात् जातिप्रकारेण स्वारसिकप्रयोगाभावस्य विवादग्रस्तत्वादिति दिक्।

---

दुःखासम्भिन्नत्वादिसमानाधिकरणसुखत्वस्य विशिष्टस्यैव स्वर्गपदजन्यप्रतीति-प्रकारत्वात् सामानाधिकरण्यांशेऽपि शक्तौ गौरवं न दोषः प्रामाणिक-त्वात्। अतएव दुःखासम्भिन्नत्वादिकं शक्त्युपाधिरिति नातिप्रसङ्गः तस्यापि शक्यत्वे च गौरवमिति निरस्तं, पदान्नियतोपस्थितेः शक्तिसाध्यत्वात्।

यामपि "इन्द्रमुपासीतेत्यादौ लोके प्रयोगस्यानियमात् गौणतयैव व्यवहाराच्चार्थानध्यवसायेऽलौकिकसह-स्राक्षादाविन्द्रादिपदशक्तिग्रहः, प्रमाणञ्च "इन्द्रः सह-

---

प्रसङ्गादिन्द्राय स्वाहा अग्नये स्वाहेत्यादिमन्त्रात्मकाचेतनमेव इन्द्राग्न्यादिपदशक्यं "इन्द्रमुपासीतेत्यादावपि इन्द्रपदं तादृशमन्त्र-वाचकमेव तदुपासना च तत्करणकहविस्त्यागादिस्तज्जपादिश्चेति मीमांसकमतं निराकर्त्तुमाह, 'एवमिति, 'देवतायामपि' देवताबो-धकेऽपि, एतच्च इन्द्रमुपासीतेत्यादावित्यस्य विशेषणं, 'लोके' लौकिके ईश्वरे, 'प्रयोगस्य' इन्द्रादिपदस्य, 'अनियमात्' शक्तिनियामक-त्वासम्भवात्, अनुगतानतिप्रसक्तशक्यतावच्छेदकासम्भवादिति यावत्, ग्रामेश्वर-मण्डलेश्वर-पृथिवीश्वरादिभेदेन लौकिकानामीश्वराणां वि-भिन्नतया सर्व्वसाधारणानतिप्रसक्तशक्यतावच्छेदकस्य दुर्व्वचत्वात्। न चेश्वरत्वमेव तथेति वाच्यं। तस्याप्यनुगतस्य दुर्व्वचत्वादिति भावः। नन्वेवं विनिगमनाविरहान्नानार्थतैवास्त्वित्यत आह, 'गौणेति तत्रेन्द्र-पदप्रयोगस्य गौणतया व्यवहाराच्चेत्यर्थः, 'अर्थानध्यवसाय इति लौ-किकेश्वरस्य इन्द्रपदार्थत्वाभावनिर्णये इत्यर्थः। ननु तत्र सहस्राक्षपुरुषे इन्द्रपदशक्तौ मानाभावः मन्त्रात्मकाचेतनस्यैव इन्द्रपदशक्यतया त-स्यैव तत्र तत्पदार्थत्वादित्यत आह, 'प्रमाणञ्चेति, 'विधिसमभिव्या-हृतेति "इन्द्रमुपासीतेत्यादिविधिशेषीभूतेत्यर्थः, विधिशेषीभूतत्वञ्च

---

'लोक इति राजादौ तत्प्रयोगस्यानियमादित्यर्थः। तर्हि तत्रैवोभयत्र वा शक्तिरस्त्वित्यत आह, 'गौणतयैवेति, 'विधीति, तथाच प्रवृत्त्यन्यथा-

स्राक्ष इत्यादिर्विधिसमभिव्याहृतोऽर्थवाद एव स्वर्गपदवत्। अथ स्वर्गपदे प्रवृत्त्यन्यथानुपपत्त्या "तत्सुखं स्वःपदास्पदमिति श्रुतेश्चार्थवादादेव शक्तिग्रहः, न चेह तथार्थवादः, किन्तु "इन्द्रः सहस्राक्ष इत्यादि स्तावकत्वेन प्रवृत्तिपरमिति चेत्, न, "इन्द्रः सहस्राक्ष-

---

विधिप्रयोज्याकाङ्क्षोत्थाप्यत्वं, 'अर्थवाद एवेति, "इन्द्रः सहस्राक्ष इत्यर्थवादस्येन्द्रपदप्रवृत्तिनिमित्तेन्द्रत्वाश्रये योगमर्थमर्य्यादया सहस्रचक्षुर्विशिष्टपुरुषस्याभेदबोधकतया इन्द्रत्वाश्रयाभेदेन हेतुना परम्परया सहस्राक्षपुरुषे इन्द्रपदशक्तिसाधकत्वादिति भावः। यद्यपि विध्यसमभिव्याहृतार्थवादस्यापि न्यायनये प्रमाणतया विधिसमभिव्याहृतेति व्यर्थं, तथाप्युभयवादिसिद्धप्रमाणताख्यापनाय तदुपात्तमिति ध्येयं। मीमांसकः प्रत्यवतिष्ठते, 'अथेति, 'प्रवृत्त्यन्यथानुपपत्त्येति स्वर्गपदस्य सुखमात्रशक्तत्वे बहुवित्तव्ययायाससाध्ये यागादौ स्वर्गार्थिप्रवृत्त्यन्यथानुपपत्त्येत्यर्थः। ननु स्वर्गपदस्य सुखमात्रशक्तत्वेऽपि यागादिस्थले तस्य "यन्न दुःखेनेत्यादिसुखविशेषत्वाचणिकत्वान्न प्रवृत्त्यनुपपत्तिरित्यत आह, 'तत्सुखमिति, 'न चेहेति, 'इह' इन्द्रमुपासीतेत्यादौ, 'तथार्थवादः' अर्थवादस्तथा, "इन्द्रः सहस्राक्ष इत्यर्थवादस्य इन्द्रपदशक्तिबोधकत्वमिति यावत्, 'स्तावकत्वेनेति मन्त्रात्मकेषु सहस्राक्षाभेदरूपोत्कर्षभ्रमजनकत्वेनेत्यर्थः, 'प्रवृत्तिपरमिति मन्त्रोपा-

नुपपत्त्या अवश्यं तस्य शक्तिग्राहकत्वमिति भावः। प्रामाण्यस्योभयसिद्धत्वाय तदुक्तमित्यन्ये। 'किन्त्विति, तथाच न शरीरिणी देवतेति तात्पर्य्यं।

इत्यादिप्रसिद्धपदसामानाधिकरण्यश्रुतौ बाधकं विना सहस्राक्षस्यैवेन्द्रादिपदवाच्यत्वावधारणात् प्रसिद्धपद-समन्वयबलेन प्रतीयमानमर्थमबाधितमादायैव तेषां प्रवर्त्तकत्वात्(१) । मन्त्रप्रकाशितशशिशेखराद्युपेतमु-

सनविषयकप्रवृत्तिप्रयोजकमित्यर्थः, 'प्रसिद्धपदेति प्रमाणतया महाजनप्रसिद्धपदादिन्द्रपदप्रवृत्तिनिमित्तेन्द्रत्वाश्रये सहस्राक्षाभेद-शाब्दप्रमितावित्यर्थः, 'बाधकं विनेति बाधकाभावेनेत्यर्थः, 'इन्द्र-पदेति इन्द्रत्वाश्रयाभेदेन हेतुना इन्द्रपदवाच्यत्वानुमानादित्यर्थः । नन्वस्तु इन्द्रपदस्य सहस्राक्षेऽपि शक्तिस्तथापि "इन्द्रमुपासीतेत्यादौ इन्द्रपदं मन्त्रवाचकमेवेत्यत आह, 'प्रसिद्धपदेति प्रमाणतया महाजनप्रसिद्धपदसमभिव्याहारबलेनेत्यर्थः, 'प्रतीयमानमिति इन्द्र-पदवाच्यत्वेन प्रतीयमानं सहस्राक्षमित्यर्थः, 'अबाधितमिति उपास्य-त्वबाधरहितमित्यर्थः; 'तेषां' "इन्द्रमुपासीतेत्यादिविधीनां, 'प्रवर्त्त-कत्वादिति प्रवर्त्तकज्ञानजनकत्वसम्भवादित्यर्थः, तथाच किं वृत्त्य-न्तरेणेति भावः । ननु देवताया एवेष्टसाधनीभूतोपासनाविषयतया सहस्राक्षे तादृशोपासनाविषयत्वरूपमुपास्यत्वमेव बाधितं मन्त्रस्यैव देवतात्वेन सहस्राक्षे देवतात्वाभावादित्यत आह, 'मन्त्रेति, 'शशि-

(१) प्रवृत्तिपरत्वादिति क० ।

'बाधकं विनेति तथाच सामानाधिकरण्यानुपपत्तिरेव शक्तिग्राहिकेत्यर्थः । नन्वेवमपि सहस्राक्षदेवतायामिन्द्रपदशक्तिग्रह इत्ययुक्तं देवतायास्त्वचैतन्य-नियमे सहस्राक्षस्य तद्भिन्नत्वनियमादित्यत आह, 'मन्त्रेति, आदिपदा-

दिश्य हविस्त्यागेन तत्रैव याज्ञिकानां देवताव्यवहारात्। अपि च "शिवाय गां दद्यादित्यादिना देवतासम्प्रदानत्वश्रुतेः शिवादिसहस्रनाम्नां पर्य्यायत्वेन श्रुतेर्महाजनपरिग्रहेण प्रमाणत्वादाराधितदेवतायां

---

शेखरादीत्यादिपदादच्चिसहस्रादिपरिग्रहः, 'तत्रैव' महस्राच्च एव।

केचित्तु ननु देवतैव इन्द्रपदवाच्या महस्राचस्तु न देवता मन्त्रात्मकाचेतनस्यैव देवतात्वादिति कथं तस्येन्द्रपदवाच्यत्वमित्यत आह, 'मन्त्रेतीत्याहुः।

'शिवायेति देवायेत्यर्थः, 'सम्प्रदानत्वेति, न ह्यचेतनस्य सम्प्रदानत्वमिति भावः। 'शिवादिसहस्रनाम्नामिति, देवतावाचकत्वेन प्रसिद्धानामिति शेषः, यथाश्रुते शिवादिपदस्यैतावता चेतने शक्तिसिद्धावपि तस्य देवत्वासिद्धा असङ्गतत्वापत्तेः, 'पर्य्यायत्वेनेति अभिन्नशक्यतावच्छेदककत्वेनेत्यर्थः, मन्त्रस्य शक्यत्वे च पदभेदेन मन्त्रभेदाच्छक्यतावच्छेदकैक्याभावेन पर्य्यायत्वं न स्यादिति भावः। 'वरेति न च मन्त्रस्य वरदातृत्वमिति भावः। 'देवताचैतन्यपच्च इति[१]

---

(१) देवताचैतन्य इति क० पुस्तकपाठः।

---

दच्चिसहस्रादिसंग्रहः। ननु तत्र भाक्तः प्रयोग इत्यस्वरसादाह, 'अपि चेति सम्प्रदानत्वं चेतनस्यैवेत्यर्थः। ननु वृच्चायोदकमासिञ्चतीतिवत् सम्प्रदानत्वं वैवच्चिकमादाय चतुर्थी न तु वास्तवसम्प्रदानत्वं स्वीकरणविरहादिति यदि परो ब्रूयात् तदा दोषान्तरमाह, 'शिवादीति पर्य्यायत्वमर्थैक्य एवेति

वरदातृत्वश्रुतेश्च बाधकं विना चेतनैव देवता । अथ देवताचैतन्यपक्षे तत्प्रीतिरेव यागव्यापार इति नापूर्व्वसिद्धिरिति चेत्, न, प्रीतेः सुखस्य तदनुभवस्य चाशुतरविनाशित्वात् तज्जन्यसंस्कारस्य स्वाविषये फलाहेतुत्वात् फलहेतुस्थायिकृतिव्यापारापेक्षायां लाघवेन कृतिसमानाश्रयस्यैव व्यापारत्वकल्पनात् । नानायागेष्वेकदाह्वाने चैकदा सन्निधानं तद्बुद्धिविशेष-

---

देवताचैतन्याभावादेव यजदेवपूजायामिति यागस्य देवताप्रीति-हेतुताबोधकशाब्दिकस्मृतेरप्रमाणत्वाभ्युपगमादिति भावः । 'तज्ज-न्येति प्रीत्यनुभवजन्येत्यर्थः, 'स्वाविषय इति स्वविषयाविषयकफला-हेतुत्वादित्यर्थः, 'व्यापारापेक्षायामिति व्यापारे कल्प्यमान इत्यर्थः। नन्वेवमेकस्या एव देवतायाः कथमेकदा नानायागेषु सन्निधानं स्यात् शरीरस्यावच्छिन्नपरिमाणवत्त्वादित्यत आह, 'नानेति, 'बुद्धिविशेष-इति तस्य तत्तत्कर्म्मविषयकबुद्धिविशेष इत्यर्थः। ननु बोधककोटि-भिरेकदावाहने देवतानां सार्व्वज्ञ्याभावात्कया प्रत्यासत्त्या तज्ज्ञानं।

---

शब्दभिन्न एकोऽर्थः सिद्ध इत्यर्थः, अन्यथा अनेकदेवताकल्पनापत्तिरित्यपि बोध्यं। ननु उपचरितार्थैव श्रुतिः स्यादत आह, 'बाधकं विनेति। निराकृतमपि प्रसङ्गान्तरेण शङ्कते 'अथेति, 'लाघवेनेति, बाधकं विनेति शेषः, 'तद्बुद्धीति। ननु नरेन्द्रादेः सार्व्वज्ञ्याभावात् संग्रामादि-व्यासङ्गदशायां आराधककोटिभिरेकदाह्वाने कथं ज्ञानमिति चेत्, न, अदृष्टविशेषस्मारितलिङ्गादिप्रतिसन्धानादित्येके। अदृष्टविशेषप्रत्यासत्त्या

एव प्रतिष्ठाविधिना प्रतिमादावहङ्कारवत्। अथ राजसूयादिप्रतिपादके श्रुतेरिन्द्रादिश्चेतन एव देवतात्वन्तु तस्य नास्ति मानाभावात्, किन्तु देशनादेशितचतुर्थ्यन्तपदनिर्द्देश्यत्वं देवतात्वमितीन्द्रायेत्यादिपदमेव

---

न चानुमानात्तज्ज्ञानं, तद्ग्रहे तद्व्याप्यादेरग्रहादिति चेत्, न, आवाहनजन्यादृष्टविशेषस्मारितप्रत्येकपदार्थासंसर्गाग्रहसहितमनसैव तज्ज्ञानादिति भावः। वस्तुतस्त्वस्मन्मतेऽपि तन्मतवददृष्टविशेष एव फलसहकारीभूतावाहनेन जन्यतेऽयत एव विष्णवावाहनमङ्गतिरेवं प्रतिष्ठाविधावपीत्येव तत्त्वं। यद्यप्यचेतनस्य देवतात्वं निराकृतं, तथापि चेतनस्य देवतात्वे मीमांसकोक्तबाधान्तरनिरासाय पुनराशङ्कते, 'अथेति, 'श्रुतेः' इन्द्रत्वस्य श्रुतेः, 'इन्द्रादिः' इन्द्रादिपदवाच्यः, 'देवतात्वं' देवतापदवाच्यत्वं, 'देशनादेशितेति, 'निर्द्देश्यत्वं' चतुर्थ्यन्तनामोच्चार्य्यत्वं, तथाच देशना वेदः तद्देशितं तद्बोधितं यच्चतुर्थ्यन्तपदनिर्द्देश्यत्वं यच्चतुर्थ्यन्त-

---

अनन्यगत्या मनसैव तज्ज्ञानमित्यन्ये। 'अथेति, वरदातृत्वमपि तस्यैव न देवताया इति भावः। 'देशनेति, "आग्नेयोऽष्टाकपाल ऐन्द्रं दधीत्यादिना तद्धितेनाग्न्यादेः प्रकृत्यर्थस्य चतुर्थ्यन्तपदनिर्द्देश्यत्वं बोध्यत इति तत्र तृत्र इविषि तस्य देवतात्वं। ननु सास्य देवतेति देवताधिकार्य्यत्वात् तद्धितस्य देवतात्वमित्यर्थः, तदुक्तं, "तद्धितेन चतुर्थ्या वा मन्त्रलिङ्गेन वा पुनः। देवतासङ्गतिस्तत्र दुर्ब्बलन्तु परस्परं" ॥ इति, तथाच देवतात्वज्ञाने तद्धितात्मकदेशनाप्रवृत्तिः तत्प्रवृत्तौ तु देशनादेशित-तद्घटितदेवतात्वज्ञानमित्यन्योन्याश्रय इति चेत्, न, देवतैकदेशस्य तत्पदनिर्द्देश्यत्वमात्रत्वस्यैव तदर्थत्वात् तत्पुरस्कारेण प्रवृत्ते तद्धिते देशनादेशिततत्पदनिर्द्देश्य-

पदत्वविशिष्टं चतुर्थ्यन्ततयोच्चार्य्यत्वं तद्देवतापदशक्यतावच्छेदकमित्यर्थः, यादृशपदं चतुर्थ्यन्ततयोच्चार्य्यत्वेन देशनया बोध्यते चतुर्थ्यन्तं सत् तादृशपदं देवतापदशक्यमिति तु फलितार्थः। न च कया देशनया इन्द्रादिपदस्य चतुर्थ्यन्ततयोच्चार्य्यत्वं बोध्यत इति वाच्यं। "ऐन्द्रं दधि भवत्यमावास्यायामाग्नेयं चरुं निर्व्वपेदित्यादौ "सास्य देवतेत्यर्थे विहितेन तद्धितेनैव चतुर्थ्यन्ततयोच्चार्य्यत्वरूपदेवतात्वस्येन्द्राग्न्यादिपदे बोधनादिन्द्राग्न्यादिपदस्य स्वभावत्वादिति भावः। अतएवेन्द्रायाग्नये इत्यादिपदमेव देवता न तु शक्राय वह्नये इत्यादिपदं शक्र-वह्न्यादिपदे चतुर्थ्यन्ततयोच्चार्य्यत्वस्य वेदेनाबोधनात्। न चेन्द्राय स्वाहेत्यादिसमुदाय एव देवता तस्य चतुर्थ्यन्ततयोच्चार्य्यत्वं न वेदबोधितमिति वाच्यं। स्वाहेत्यादेस्त्यागमात्रपरत्वेन देवतानन्तर्गतत्वात्। न च देवतार्थे विहितस्य तद्धितस्य देवतात्वमेवार्थः तच्च न चतुर्थ्यन्ततयोच्चार्य्यत्वमात्रमपि तु देशनादेशितत्वविशिष्टमिति वाच्यं। विशिष्टस्यापि तद्धितार्थत्वे बाधकाभावात् लाघवाद्विशे-

---

त्वरूपं तद्‌गृह्यत इति। न चैवं प्रकृत्यर्थस्य तद्धितादिना तथात्वबोधनात् तस्यैव देवतात्वं स्यादिति वाच्यं। शब्दात्मकस्यैव प्रकृत्यर्थत्वाभ्युपगमात्। नन्वेवमपि इन्द्रायेत्यादिपदमेव देवतेत्ययुक्तं। न हि चतुर्थ्यन्तस्यैव तस्य तदन्तपदनिर्द्देश्यत्वं तेन बोध्यत इति चेत्, अत्राहुः, अर्थोपहितशब्दस्य देवतात्वमिति मते देशनादेशितं यस्य तत्पदनिर्द्देश्यत्वं तदर्थोपहितचतुर्थ्यन्तपदमेव देवतेत्यर्थः, एवञ्च यद्यप्यर्थस्यापि देवताशरीरान्तर्भावस्तथापि विशिष्टस्याचैतन्यं चतुर्थ्यन्तपदस्यैव प्राधान्याच्चेन्द्रायेत्यादिपदमेव देवतेत्युक्तमिति मन्तव्यं। यद्वा अर्थस्य उपलक्षणत्वाभ्युपगमेन तथोक्तं, एतेन तिर्य्यगधिकरणे तिर्य्यक्पङ्क्-त्यार्षेयदेवतानामनधिकार इत्युक्तं, तत्र

ष्यमाचस्यैव तद्धितार्थत्वाच्च, एवञ्च "ऐन्द्रं दधि भवत्यमावास्यायामित्यादौ चतुर्थ्यन्ततयोच्चार्य्येन्द्रपदकरणकाभिन्नदधियागोऽमावास्यायां भवतीत्यन्वयबोधः। यद्वा 'निर्द्देश्यत्वं' स्वरूपत्वं, तथाच देशनादेशिता या चतुर्थ्यन्तता तद्विशिष्टपदत्वं देवतात्वमित्यर्थः, घटायेत्यादौ घटादिपदस्य चतुर्थ्यन्तताविशिष्टत्वेऽपि सा चतुर्थ्यन्तता न वेदबोधितेति नातिप्रसङ्गः, केवलेन्द्रादिपदस्य चतुर्थ्यन्तताविशिष्टत्वाभावादेव नातिप्रसङ्गः, एवमैन्द्रमित्यादौ तद्धितस्य चतुर्थ्यन्तत्वमर्थः, चतुर्थ्यन्तेन्द्रपदकरणकाभिन्नो दधियाग इत्यन्वयबोधः। न च यथातथार्थोऽस्तु सर्व्वत्रैव धृतिः स्वाहेत्यादौ प्रथमान्ते धृत्यादिपदेऽव्याप्तिः चतुर्थ्यन्तत्वाभावादिति वाच्यं। चतुर्थीपदेन चतुर्थ्यर्थकपदस्याभिधानात् धृतिः स्वाहेत्यादौ चतुर्थीनिषेधात् प्रथमाया एव चतुर्थीस्थानाभिषिक्ततया इन्द्राय स्वाहेत्यादौ चतुर्थ्या इव तस्या अप्युद्देश्यतार्थकत्वात् धृतिपदेन्द्रपदादेश्च न चेतनवाचकत्वं। वस्तुतस्तु चतुर्थ्यन्तत्वं

---

तिरश्चां विशिष्टान्तःसंज्ञाविरहात् पङ्गोः प्रचरणविरहात् तिस्रो दृष्टि-श्रुति-वाचः आर्षेया ऋषियोग्याः स्वस्वविषये विमुखा तेषामन्ध-बधिर-मूकानामवेक्षण-श्रवणोच्चारणाशक्ततया युक्तोऽनधिकारः, देवतानान्त्वत्यन्तविदुषीणां कथमनधिकार इति पूर्व्वपक्षस्तदचैतन्ये न घटेत घटादिवदप्रसङ्गात्। किञ्च देवतानामचैतन्ये आवाहनमन्त्रानर्थक्यं बौद्धस्य शारीरस्य वा सन्निधेरसम्भवात्, एवञ्च तीर्थेषु देवतानां नित्यसन्निहितत्वादावाहनबाध इति यदुक्तं तद्विरुद्ध्येतेत्यादिनिरवकाशं वेदितव्यं विशेषणीभूतार्थस्य चैतन्यमादाय सर्व्वस्योपपत्तेः, धृतिहोमादावर्थतश्चतुर्थ्यूहनमन्यथा स्वाहेति न स्यात् धृत्यादेर्न देवतात्वमित्यप्याहुः। चतुर्थ्यन्तत्वेन चतुर्थ्यर्थकत्वं विवक्षितमित्यन्ये। केचित्तु देशनादेशितं यत्र चतु-

देवता, अतएवाग्निप्रकाशकमन्त्रेणाग्निप्रकाशनानन्तरं अग्नय इति नियमतो हविस्त्यागो न पर्य्यायान्तरेण। न चेन्द्रोद्देशेन हविस्त्याग इन्द्रनिष्ठकिञ्चिज्जनकः तत्स्वरूपाजनकत्वे सति तदुद्देशेन क्रिय-

---

वैज्ञानिकं तथाच श्रुतिः स्वाहेत्यादौ चतुर्थ्यां ऊहनाम्नाव्याप्तिः। अतएव भूः स्वाहेत्यादौ लुप्तचतुर्थीकेऽपि नाव्याप्तिः। न चैवमचेतनस्य देवतात्वे तिर्य्यक्पङ्गु-व्यार्षेयदेवतानामनधिकार इति सूत्रेण तिर्य्यक्खञ्जान्ध-वधिर-मूकदेवतानां विहितकर्म्माधिकारनिषेधोऽसङ्गतः देवताया अचेतनत्वेन तत्र कर्म्मकर्तृत्वस्याप्रसक्तत्वादिति वाच्यं। तत्र देवतापदस्य महस्राचादिपरतया भाक्तत्वादिति दिक्। 'अतएवेति यतएव देशनादेशितत्वं विशेषणमत एवेत्यर्थः, 'अग्निप्रकाशकमन्त्रेणेति अग्नये स्वाहेति मन्त्रेणेत्यर्थः, 'अग्निप्रकाशनानन्तरमिति अग्नेरुद्देश्यताप्रतिपादनानन्तरमित्यर्थ., 'अग्नय इतीति अग्नये इत्यनेनेत्यर्थः, 'न पर्य्यायान्तरेणेति न वह्नय इत्यादिनेत्यर्थः, देवतोद्देशानन्तरमेव हविस्त्यागविधानात्तस्य च देवतात्वविरहादिति भावः। देवतायाश्चैतन्यमनुमानेन साधयति, 'न चेति, 'किञ्चिदिति, पक्षधर्म्मताबलात् स्वामित्वस्य प्रीतेर्व्वा सिद्धिः उभयमपि

---

र्थ्यन्तपदनिर्द्देश्यत्वमुच्चार्य्यत्वं तत्तथा एवञ्चेन्द्रायेत्युच्चार्य्य दद्यादिति वेदेन बोधनात् तत्र लक्षणागमनं। न च पितृभ्य इत्युच्चार्य्य दद्यादित्यादावतिप्रसङ्गः, तादृशवेदाभावादित्याऽऽः। 'न चेति, 'इन्द्रपदं देवतापरं, स च जन्यः स्व-स्वामिभावः सम्बन्ध इति देवताचैतन्यमिति भावः। 'तत्-स्वरूपेति, घटोत्पत्तये क्रियमाणे दण्डव्यापारादौ व्यभिचारादाह, 'सत्यन्तं,

माणत्वात् ब्राह्मणाय दानवदिति वाच्यं। अप्रयोजकत्वात् तदर्थत्वेन क्रियमाणत्वस्योपाधित्वाच्च। इन्द्राय

---

देवताया अचेतनत्वे न घटत इति परिशेषाद्देवताचैतन्यसिद्धिरिति भावः। यद्यपि तन्मतेऽपि इन्द्रश्चेतन एवेति सिद्धसाधनं, तथापि पक्षे साध्ये च इन्द्रपदं देवतापरं, देवतात्वन्तु देवतापदशक्यत्वं तेनोभयमतसाधारणदेवतात्वनिर्व्वचनाशक्यत्वेऽपि न क्षतिः। न च तन्मते इन्द्रायेत्यादिपदस्यैव देवतात्वेन हविस्त्यागस्य देवतोद्देश्यकत्वमेवासिद्धं इन्द्रादेश्चेतनस्यैव हविस्त्यागोद्देश्यत्वादिति वाच्यं। इन्द्रादिवदचेतनमन्त्रस्यापि तन्मते उद्देश्यत्वाददोषः। 'तत्स्वरूपेति देवतास्वरूपाजनकत्वे सति देवतोद्देशेन क्रियमाणत्वादित्यर्थः, यत्तज्ञ्यां सामान्यतोव्याप्तिः तेन तन्मते न साध्यासिद्धिः न वा दृष्टान्ते साध्यसाधनवैकल्यं, घटोद्देशेन क्रियमाणे दण्डादौ व्यभिचारवारणाय सत्यन्तं, 'क्रियमाणत्वं' शिष्टैः क्रियमाणत्वं, तेन भ्रमेण क्रियमाणे न व्यभिचारः। 'तदर्थत्वेनेति तद्गतफलार्थितयेत्यर्थः, हविस्त्यागस्तु स्वनिष्ठस्वर्गादिफलार्थितयैव क्रियत इति पक्ष एव साधनाव्यापकत्व-

---

'क्रियमाणत्वं प्रमाप्रयोज्यकृतिविषयत्वं। शिष्टैरिति च विशेषणमतो न भ्रमेण क्रियमाणे व्यभिचारः, सामान्यव्याप्त्यभिप्रायकमिदमिति न तन्मते साध्याप्रसिद्धिः। न वा दृष्टान्ते साध्यवैकल्यं। न चोभयमते नैकं देवतात्वमनुगतं, देवतापदवाच्यत्वेनानुगमादित्याहुः। ननु निरुपाधित्वमेव विपक्षबाधकमित्यत आह, 'तदर्थत्वेनेति तन्निष्ठफलजननायेत्यर्थः। अयन्तु स्वनिष्ठफलजननाय क्रियत इति भावः। कथं तर्हि तादर्थ्ये चतुर्थीत्यत आह, 'इन्द्रायेति, लाघवेन विशेषणीभूतार्थ-

स्वाहेत्यत्र न तादर्थ्ये चतुर्थी किन्तु स्वाहादिपद-योगे उपपदविभक्तिरेव अन्यथा "नमः-स्वस्ति-स्वा-हेत्यादिसूत्रवैयर्थ्यात्। मैवं। चतुर्थ्यन्तपदस्य देवता-त्वे मानाभावात् चतुर्थीं विनापि इन्द्रो देवतेति व्यव-हारात्[१]। अग्नये कव्यवाहनायेत्यादौ देवताद्वयप्रस-ङ्गात् "इन्द्रः सहस्राक्ष इत्यर्थवादस्य "इन्द्रमुपासीते-त्यादिविधिसमभिव्याहारेण एकवाक्यतया तस्यैवोपा-

मिति भावः। ननु देवाय स्वाहेत्यादौ तादर्थ्यचतुर्थ्येव देवतायाः स्वामित्व-प्रीत्यादौ मानं स्वाहापदार्थे त्यागे तन्निष्ठफलजनक-त्वस्य तादार्थ्यचतुर्थ्यर्थत्वात्तथाच परिशेषाद्देवताचैतन्यसिद्धिरित्यत-आह, 'इन्द्राय स्वाहेति देवाय स्वाहेत्यर्थः, 'उपपदविभक्तिरिति उप समीपवर्त्ति पदं उपपदं, तद्योगाद्विभक्तिरित्यर्थः, अन्यथा तादर्थ्य-चतुर्थीसूत्रवैयर्थ्यात् सूत्रे स्वाहापदवैयर्थ्यात्। 'देवतात्व इति देवता-पदवाच्यत्व इत्यर्थः, साधकाभावमुक्त्वा बाधकमप्याह, 'चतुर्थीमिति, 'व्यवहारात्' अभेदव्यवहारात्। ननु तत्रेन्द्रपदं इन्द्रायेतिपदे भाक्त-मित्यत आह, 'अग्नय इति। ननु कव्यवाहनपदस्य चतुर्थ्यन्ततयोच्चार्य्यत्वं चतुर्थ्यन्तत्वं वा न वेदबोधितमतो न कव्यवाहनायेति पदं देवते-त्यत आह, 'इन्द्र इति, 'एकवाक्यतयेति मिलित्वा सहस्राक्षाभिन्नेन्द्र-

(१) व्यवहारदर्शनादिति ख०।

स्यैव देवतात्वमित्याशयेनाह, 'चतुर्थ्यन्तेति, तर्हि विशेष्यमात्रस्यैव तथात्व-मस्त्वित्यत आह, 'चतुर्थीमिति, 'देवताद्वयेति। अयास्मिन् हविषि

स्यत्वात् "शिवस्वन्नाददीतेत्यत्र महादेवमुद्दिश्य त्यक्ते-ऽपि शिष्टानां शिवस्वत्वेन व्यवहाराच्च। अग्नय इति पदेन नियमतस्त्यागश्रुतिबोधितत्वेन तथा त्यागस्य

मुपासीतेत्यन्वयबोधजनकतया इन्द्रपदस्य महस्राचे तात्पर्य्यग्राहकतया वेत्यर्थः, 'तस्यैवेति चेतनस्य महस्राचस्यैवेत्यर्थः, उपास्यत्वे देवतात्व-मावश्यकं तेन विना तदनुपपत्तिरिति भावः। ननु देवतात्वाभा-वेऽप्युपास्यत्वं वाचनिकमित्यत आह, 'शिवस्वमिति देवस्वमित्यर्थः, 'महादेवमिति, शरीरिणमिति शेषः, 'शिवस्वत्वेन' देवस्वत्वेन, इदमुप-लक्षणमचेतनस्य स्वत्वासम्भवाच्चेत्यपि द्रष्टव्यं। ननु अग्नय इति पदस्य देवतात्वाभावे कथं तेनैव नियमतो हविस्त्याग इत्यत आह, 'अग्नय-इतीति, 'श्रुतिबोधितत्वेनेति अग्नये इत्युच्चार्य्य दद्यादिति श्रुतिबोधित-त्वेनेत्यर्थः, 'तथा त्यागस्य' तथा त्यागस्यैव। न च चेतनस्यैव देवतात्वे आकाशाय स्वाहेत्यादावाकाशादेः कथं देवतात्वं श्रूयत इति वाच्यं। तदधिष्ठातृपरत्वादाकाशादिपदस्य। न च चेतनस्य देवतात्वे देवाय स्वाहेत्यादौ तादर्थ्ये एव चतुर्थीसम्भवात् स्वाहायोगे चतुर्थ्यनु-शासनवैयर्थ्यमिति वाच्यं। तादर्थ्याविवक्षायां चतुर्थीविधायकत्वा-

---

चतुर्थ्यन्तपदनिर्द्देश्यतया विशिष्ट एव देशनया देशित इति कथ्यवाहनत्व-विशिष्टाग्निरेव देवतेति चेत्, न, विशेषणचतुर्थीवैयर्थ्यापत्तेः। विशिष्ट-देवतात्वेऽपि तत्प्रयोगो देशनानुरोधादिति चेत्, तर्हि सापि चतुर्थी देशनादेशितैवेति देवताद्वयापत्तिरेवेति वदन्ति। 'शिवस्वमिति, अचेतनस्य स्वामित्वासम्भवादिति भावः। न च देवताभिन्नं शिवमादाय तदुपपत्तिः, तथापि देवतास्वमित्यनागतेः। न चाकाशादेरचेतनस्य कथं देवतात्वमिति वाच्यं।

फलहेतुत्वात्। न च वीजाक्षराणां देवतात्वात् तत्रैव शिवादिपदशक्तिग्रह इति वाच्यं। वीजाक्षराणां चतुर्थ्यन्तत्वानियमात्। तदप्रतीतावपि मन्त्रप्रकाशितशशिशेखराद्युपेतमुद्दिश्य हविस्त्यागेन तत्रैव याज्ञिकानां व्यवहारः वीजाक्षराणां हविस्त्यागभागित्वेनानुद्देश्यत्वात् शिवस्य प्रतिमन्त्रं वीजाक्षराणां नानात्वात् अननुगमेन शिवपदशक्तिग्रहस्याशक्यत्वाच्च। न च मूर्त्तिभेदेन शिवशरीराणामननुगतत्वेन तत्रापि न शक्तिग्रह इति वाच्यं। बाल्यादिना भिन्नशरीरेषु

---

दिति भावः। वीजाक्षराण्येव देवताः शिव-महादेवादिपदशक्तिरपि तत्रैवेति मीमांसकैकदेशिमतं निराकरोति, 'न चेति। ननु चतुर्थ्यन्तवीजाक्षरत्वं न लक्षणमत आह, 'तदप्रतीतावपीति वीजाक्षराप्रतीतिदशायामपीत्यर्थः, 'तत्रैव' शशिशेखराद्युपेत एव। ननु तत्र देवताव्यवहारो भाक्त इत्यत आह, 'वीजेति, 'हविस्त्यागभागित्वेनेति हविर्निष्ठत्यागजन्यफलनिरूपकत्वेनोद्देश्यत्वाभावादित्यर्थः, तादृशोद्देश्यस्यैव देवतात्वनियमादिति भावः, तच्च फलं स्वत्वं। ननु तादृशोद्देश्यस्यैव देवतात्वमिति नियमे मानाभाव इत्यत आह, 'शिवस्येति, 'शिवपदेति, देवतापदेत्यपि बोध्यं, 'न शक्तिग्रहः' न शिवपदशक्ति-

---

तदधिष्ठातुश्चेतनस्यैव देवतात्वात्। तदेकदेशिमतमाशङ्क्य निराकरोति, 'न चेति। नन्वेकदेशिनो न तत् देवतालक्षणमत आह, 'तदिति, तस्य च भाक्तत्वे मानाभावादिति भावः। 'शिवपदेति, नानार्थत्वकल्पने

चैत्रत्ववच्छिवत्वजातेरदृष्टविशेषोपगृहीतत्वस्य वानुगतत्वात् अदृष्टशून्यस्य चेश्वरस्य न देवतात्वं, ईशानस्य

ग्रहः, 'शिवत्वजातेरिति । न च शिवशरीरस्य तैजसत्व-पार्थिवत्वादिनानारूपताश्रवणान्नैका जातिः सम्भवतीति वाच्यं। तावता पार्थिवत्वादिव्याप्यजातिचतुष्टयस्य शक्यतावच्छेदकत्वेऽपि वीजान्तरापेक्षया लघुत्वादिति भावः। ननु नानासर्गीयशिवशरीरे शिवत्वजातौ मानाभावः इदानीमपि बलेरिन्द्रत्वापत्तेश्च बलित्वमादाय साङ्कर्य्यप्रसङ्गात् खण्डशरीरमादायोपपत्त्यसम्भवादित्यत आह, 'अदृष्टेति, अदृष्टस्य विशेषोविजातीयत्वं तदुपगृहीतत्वं, परतोऽदृष्टानभ्युपगमेऽपि वारणादीनामदृष्टविशेषमादाय लक्षणसङ्गतिः बलेश्चेन्द्रतादशायां खण्डशरीरं तदवस्थमिति नोक्तदोष इति भावः।

केचित्तु पतितब्राह्मणे ब्राह्मणत्वस्येव बलेरपौन्द्रत्वमिदानीमस्त्येव व्यवहाराभावस्त्वधिकारविशेषविच्युतिप्रयुक्त इत्याहुः।

नन्वदृष्टोपगृहीतत्वं शरीरवृत्ति न त्वात्मवृत्ति तथाच परमात्मनो ब्रह्मणः कथं शिवत्वप्रवाद इत्यत आह, 'अदृष्टेति अदृष्टानुपगृहीतस्येत्यर्थः, 'ईश्वरस्य' परमात्मनः, 'न देवतात्वं' न शिवत्वं। नन्वेवमीशानः शिवइति कोषविरोध इत्यत आह, 'ईशानस्येति,

गौरवादिति भावः। ननु नानास्वरूपशिवे एकजातौ मानाभावः भावे वा वीजान्तराणामेव तथानुगमोऽस्त्वित्यत आह, 'अदृष्टेति, 'विशेषो जातिरूपइत्यनुगमः। न चेन्द्रपदे तथात्वादिदानीन्तनैतद्व्यवहारापत्तिः, उत्तरकालीनाखण्डशरीरस्यैवादृष्टोपगृहीतत्वेन तत्र तद्व्यवहारस्येष्टत्वादिति दिक्। 'ईश्वरस्येति, अदृष्टाभावेन तस्य हविरसम्बन्धात्तथाच याप्रीश्वरायाहुतिः साप्री-

**तद्भिन्न एव, तस्मान्मन्त्रकरणकहविस्त्यागभागित्वेनो-**

'तद्भिन्न एव' परमात्मभिन्न एव, ईशानलस्य शरीरवृत्तित्वादिति भावः । 'मन्त्रकरणकेति मन्त्रकरणकहविस्त्यागोद्देश्यत्वमित्यर्थः, 'हविःपदं स्वरूपकथनं, हविःपदस्य द्रव्यसामान्यपरतयाऽव्याप्तिविरहेऽपि व्यर्थत्वात्, उद्देश्यत्वञ्च यादाकादाचित्कं ग्राह्यं तेनोद्देश्यताविरहदशायामपि न देवतात्वविरोधः हविस्त्यागानुद्देश्यदेवे च मानाभावः अनन्तसंसारे याज्ञिकानामप्यनन्तत्वात् । न च यदाकदाचिदुद्देश्यत्वस्य देवतात्वरूपत्वे इन्द्राद्यात्मन इन्द्रादिशरीरानवच्छिन्नतादशायामपि देवतात्वापत्तिरिति वाच्यं । इन्द्रादिशरीरस्यैवोद्देश्यत्वाद्देवतात्वाच्च आत्मव्यावृत्तोद्देश्यताया लक्षणघटकत्वात् कदाचित् कस्यचिदात्मन उद्देश्यत्वेऽपि न क्षतिः। न चैवं देवताया अचेतनत्वापत्तिरिति वाच्यं । अवच्छेदकतासम्बन्धेन ज्ञानाधारतया शरीरस्यापि चेतनत्वात् । न चैवं गयाश्राद्धादौ मुक्तस्य पित्रादेर्देवतात्वप्रसङ्ग इति वाच्यं। इष्टत्वादिति भावः । फलतो 'मन्त्रकरण-

---

शानाय तस्येश्वरभिन्नस्य देवतात्वसम्भवात् । 'मन्त्रेति मन्त्रप्रयोज्यहविःसम्बन्धबलेनोद्देश्यत्वमित्यर्थः, हविष्ट्वञ्च त्यागकर्म्मत्वं, तदुपादानञ्च तादृशस्वर्गसम्बन्धसत्त्वेनोद्देश्यतया त्यागकर्त्तर्य्यतिव्याप्तिवारणाय । न चैवमपि प्रतिग्रहीतुः कोऽदादिति मन्त्रप्रयोज्यघृतादिसत्त्वसम्बन्धवत्त्वेनोद्देश्यतया देवतात्वापत्तिः, त्यागकर्त्तृमन्त्रप्रयोज्यत्वस्य विवक्षितत्वादित्याहुः । न चोद्देश्यपदं व्यर्थं, पार्व्वणादौ पित्रादेर्देवतात्वाभ्युपगमेऽपि तत्पत्न्या अपि देवतात्वापत्तिः, "न योषिद्भ्यः पृथगदद्यादित्यादिना तस्या अपि तत्र तादृशहविःसम्बन्धित्वप्रतिपादनात् । न चैवं शूद्रपित्रादेरपि देवतात्वेन तत्र मन्त्रप्रयोज्य-

द्देश्यत्वं देवतात्वं, अन्येषां हविःसम्बन्धे मन्त्रस्याहेतुत्वादिति।

क्वचिच्च वाक्यशेषाच्छक्तिग्रहः, यथा यवमयश्चरुर्भ-

---

केत्यस्य व्यावृत्तिमाह, 'अन्येषां हविःसम्बन्ध इति ब्राह्मणाद्युद्देश्यकद्रव्यत्याग इत्यर्थः, तथाच ब्राह्मणादावतिव्याप्तिवारणाय 'मन्त्रकरणकत्वं त्यागविशेषणं, "इन्द्राय स्वाहेत्यादेरेव मन्त्रत्वादिन्द्रादौ लक्षणसङ्गतिः, प्रेतश्राद्धकरणीभूतस्य च न मन्त्रत्वमतो न प्रेतस्य देवतात्वं। अस्तु वा तस्यापि देवतात्वं प्रेतपदोल्लेखस्तु वाचनिकः, एवं कन्यात्यागादावपि "कोऽदादित्यादिमन्त्रस्य प्रतिग्रहीतृपठनीयत्वेन न करणत्वमतो जामात्रादेर्न देवतात्वं, शूद्रादेश्च नमःपदस्यैव मन्त्रत्वात् पार्व्वणे तत्पित्रादेर्देवतात्वं, तत्प्रेतश्राद्धे तु नमःपदस्य मन्त्रत्वातिदेश इति भावः।

अर्थवादस्य शक्तिग्राहकत्वं व्युत्पाद्य प्रसङ्गाद्वाक्यशेषस्यापि शक्तिग्राहकत्वं व्युत्पादयति, 'क्वचिच्चेति, 'वाक्यशेषादिति वाक्यशेषसह-

---

त्वाभावादव्याप्तिः, तस्य देवतात्वानभ्युपगमात्, अभ्युपगमे वा तज्जातीयहविःसम्बन्धस्य विवक्षितत्वात्। प्रेतस्यैव देवतात्वमिष्टमेवेत्येके। तदन्यत्वेन विशेषणान्न तत्रातिव्याप्तिरित्यपरे। ननु नात्मनि देवतात्वं शरीरान्तरावच्छिन्नत्वदशायामतिप्रसङ्गात् किन्तु शरीरे तथाचात्मन्यतिव्याप्तिरिति चेत्, न, तथात्वे उद्देश्यत्वेनैव तद्वारणात् देवतामुद्दिश्य हविस्त्यागात्। वस्तुतस्तु विशिष्टस्यैवोद्देश्यत्वं देवतात्वञ्चेति नोक्तदोष इति दिक्। 'अन्येषामिति, उत्सर्गत इति शेषः।

'वाक्यशेषादिति, प्रयोजकत्वे पञ्चमी, तेनार्य्यव्यवहाराच्छक्तिग्रहइत्युपसंहारेण न विरोधः। 'सूकरस्येवेति, उपलक्षणं तत्, यवेनेव कङ्गु-

र्वति वाराही चोपानत् वैतसे कटे प्राजापत्यं चरुं चिनोतीत्यत्र यव-वराह-वेतसशब्दाः किं कङ्गु-वायस-जम्बूनां वाचकाः, उत दीर्घशूक-सूकर-वञ्जुलानामिति म्लेच्छार्य्यव्यवहारदर्शनाद्विप्रतिपत्तौ मुख्यार्थानध्यव-सायात् तत्पदे प्रामाण्यानिश्चये व्यवहाराद्व्युत्पत्तिः,

---

कृतव्यवहारादित्यर्थः, यथाश्रुते स्वर्गादिपदेऽपि विधिवाक्यशेषी-भूतादेव शक्तिग्रह इति पृथगुपादानासङ्गतेः 'आर्य्यव्यवहारात् शक्ति-ग्रह इति वक्ष्यमाणग्रन्थेन विरोधापत्तेश्चेति ध्येयं। अत्र मीमांसक-ग्रन्थं प्रमाणमाह, 'यथेति यस्मादित्यर्थः, 'वाराही चेति वराह-चर्म्मनिर्म्मिता चेत्यर्थः, 'वैतसे कट इति वेतसत्वचा निर्म्मिते कटे प्रजापतिदेवताकं द्रव्यं स्थापयतीत्यर्थः, 'कङ्गुः' सस्यविशेषः, काङन् इति यस्य प्रसिद्धिः, 'वायसः' काकः, 'जम्बुः' वृक्षविशेषः, याम् इति यस्य प्रसिद्धिः, 'दीर्घशूकः' यवः, 'वञ्जुलः' जलजोवृक्षविशेषः, वयला इति यस्य प्रसिद्धिः, 'म्लेच्छार्य्येति कङ्ग्वादौ म्लेच्छव्यवहारस्य दीर्घशूकादौ आर्य्यव्यवहारस्य दर्शनादित्यर्थः, 'विप्रतिपत्तौ' शक्ति-संशये, 'मुख्यार्थानध्यवसायात्' मुख्यार्थनिश्चयाभावात् तत्तदर्थे शक्ति-निश्चयाभावादिति यावत्, 'तत्पदे प्रामाण्यानिश्चय इति यवा-दिपदे तत्तदर्थप्रमाजनकत्वानिश्चय इत्यर्थः, तत्तदर्थाधिगम एव तत्तदर्थप्रमाजनकत्वनिश्चयसम्भवादिति भावः। इदञ्च व्यवहारादेव व्युत्पत्तौ हेतुः, तत्तदर्थप्रमाजनकत्वनिश्चय इति व्यवहारं विना-प्यनेनैव व्युत्पत्तिसम्भवादिति भावः। 'व्यवहाराद्व्युत्पत्तिः' इतर-

स चाविशिष्टः पिकादिपदेषु म्लेच्छव्यवहाराद्व्युत्पत्तेः शूकरस्येव चर्म्मणा काकस्याप्युपानहोः सम्भवादिति पूर्व्वपक्षे "वसन्ते सर्व्वसस्यानां जायते पत्रशातनं। मोदमानाः प्रदृश्यन्ते यवाः कणिशशालिनः"॥ "वराहं गावोऽनुधावन्ति"। "अम्बुजो वेतसः"। इति

---

व्यवहारादेव व्युत्पत्तिः, यवादिपदे वाच्येति शेषः। 'अविशिष्टः' उभयत्राविशिष्टः, तथाच तस्मादपि नागृहीताप्रामाण्यकशक्तिग्रह-सम्भव इति भावः। यद्यपि व्यवहारस्योभयत्राविशिष्टत्वेऽपि नानार्थ-न्यायेनोभयत्रैव शक्तिग्रहसम्भवस्तथाप्यन्यायस्यानेकार्थत्वमिति न्याये-नानेकार्थत्वाभावनिश्चयान्नोभयत्र तादृशशक्तिग्रहसम्भव इति हृदयं। ननु म्लेच्छव्यवहारो न शक्तिग्राहक इत्यत आह, 'पिकादीति, 'म्लेच्छव्यवहारात्' म्लेच्छव्यवहारादपि। ननु काकेनोपानहोरसम्भवा-देव वराहपदस्य शूकरे शक्तिनिश्चयः एवं जम्बुना कटासम्भवादेव वेतसपदस्य वञ्जुले शक्तिनिश्चय इत्यत आह, 'शूकरस्येवेति, 'काक-स्यापीति, चर्म्मणेति शेषः। 'उपानहोरिति षष्ठीद्विवचनं। इदमुप-लक्षणं वञ्जुलवल्कलेनेव जम्बुल्कलेनापि कटसम्भवादित्यपि बोध्यं। 'इति पूर्व्वपक्ष इति, यवमयश्चरुर्भवतीत्यादावित्यादिः, 'पत्रशातनं' पत्रशून्यत्वं, 'मोदमाना इति कणिशशालिनो मोदमाना ये तिष्ठन्ति ते यवपदवाच्या इत्यर्थः, "कणिशं शस्यमञ्जरी," 'वराहं गावो-ऽनुधावन्तीति, 'अनुधावन्ति' सदृशीकुर्व्वन्ति, वराहपदवाच्यसदृशा-गाव इत्यर्थः, गोसदृशो वराहपदवाच्य इति फलितार्थः, 'अम्बज-

**वाक्यशेषरूपवेदविरोधिनी म्लेच्छप्रसिद्धिः स्मृतिरिव वेदविरुद्धा हेयेति निरस्तायां म्लेच्छप्रसिद्धौ निष्प्रतिपक्षार्य्यव्यवहाराच्छक्तिग्रहः । ननु वाक्यशेषात् शूक-**

---

इति, वृच इति शेषः, 'वेतसः' वेतसपदवाच्यः, 'वाक्यशेषेति यवमयश्चरुर्भवतीत्यादिवाक्यशेषेत्यर्थः, 'वेदविरोधिनीति वेदबोधितार्थविरुद्धार्थसाधिकेत्यर्थः । यद्यपि वेदस्य दीर्घशूकादिशक्तिग्रहप्रयोजकत्वमात्रं न तु कङ्गादिशक्तिविरहबोधकत्वं नानार्थत्वेनाप्युपपत्तेरिति म्लेच्छप्रसिद्धेः कुतो वेदविरोधित्वं, तथापि उक्तक्रमेण नानार्थत्वाभावनिश्चये सति तत्सहकारेण दीर्घशूकादौ शक्त्यभावसाधकतया म्लेच्छप्रसिद्धेर्व्वेदविरोधित्वमिति भावः । 'स्मृतिरिवेति वेदविरुद्धा स्मृतिरिवेति योजना, 'हेया' वस्तुसाधिका, 'निरस्तायां म्लेच्छप्रसिद्धाविति म्लेच्छप्रसिद्धिविषये कङ्गादौ शक्त्यभावज्ञाने सतीत्यर्थः, 'शक्तिग्रहः' दीर्घशूकादावेव यवादिपदानां शक्तिग्रहः, इति मीमांसकसिद्धान्त इति शेषः । यथाश्रुते पूर्व्वपच इत्यस्यानन्वयापत्तेः । न च म्लेच्छप्रसिद्धिनिरासे वाक्यशेषादेवागृहीताप्रामाण्यकशक्तिग्रहसम्भवात् किमार्य्यव्यवहारेणेति वाच्यं । उपायान्तरस्य

---

नापि चरोः वञ्जुलवल्कलैरिव जम्बुवल्कलैरपि कटस्य सम्भवादित्यपि द्रष्टव्यं । 'वेदविरुद्धेति, यद्यपि वेदस्य दीर्घशूकादिशक्तिग्रहप्रयोजकत्वमात्रं न तु कङ्ग्वादिशक्तिविरहबोधकत्वं तथाच नानार्थत्वेऽप्युपपत्तेर्न वेदविरोधः, तथाप्यन्यायश्चानेकार्थत्वमिति निश्चये वेदस्य बलवत्त्वात् तत्सहकृतार्थव्यवहारस्यैव शक्तिग्राहकत्वमिति विनिगमकमुक्तमिति तात्पर्य्यं । 'नन्विति,

रादिषु तात्पर्य्यनिश्चयो न शक्तिनिर्णायकः काकादिसदृशतया शूकरादौ प्रयोगस्य गौण्यादिनापि सम्भवादिति चेत्, न, शूकरादौ तात्पर्य्यवच्छक्तेरपि निश्चयात्। तथा हि यद्यप्यनादिप्रयोगयोगिता न शक्तिनियता वैदिकगौण्यादिना व्यभिचारात् तथापि शक्तिरनादिप्रयोगनियता अतो वराहशब्दस्यानादि-

---

उपायान्तरादूषकत्वादिति हृदयं। 'तात्पर्य्यनिश्चय इति "वाराही चोपानदित्यादौ वराहपदादेः शूकरादौ तात्पर्य्यनिश्चय इत्यर्थः, तथाच वाक्यशेषे यवा इत्यादेर्यवादिपदतात्पर्य्यविषय इत्यर्थ इति भावः। ननु वृत्तिं विना तात्पर्य्यज्ञानमात्रात् कथमन्वयबोध-इत्यत आह, 'काकादीति, 'शूकरादौ प्रयोगस्येति, "वाराही चोपानदित्यादौ शूकरादेरन्वयबोधस्येत्यर्थः। तात्पर्य्यग्राहकत्वमेवाभ्युपेत्य समाधत्ते, 'शूकरादाविति, 'तात्पर्य्यवदिति "वाराही चोपानदित्यादौ वराहपदादेस्तात्पर्य्यवदित्यर्थः, 'अनादिप्रयोगयोगितेति, तात्पर्य्यविषयतासम्बन्धेन जन्यज्ञानाजन्यतत्पदयोगितेत्यर्थः, 'न शक्तिनियता' न तत्पदशक्तिनियता, 'शक्तिः' तत्पदशक्तिः, 'अनादिप्रयोगनियता' उक्तसम्बन्धेन जन्यज्ञानाजन्यतत्पदव्याप्या, चैत्रादौ च चैत्रादिपदस्य न शक्तिः किन्तु आधुनिकशङ्केत इति चैत्रादिपदस्य भगवदनुच्चरितत्वेऽपि न क्षतिरिति भावः। 'वराह-

---

वाच्यतादिप्रतिपादकास्मदादिशब्दाभावादिति भावः। 'शक्तिरिति आधुनिकचैत्रादिपदशक्तिभिन्नशक्तिरित्यर्थः। 'वराहशब्दादिति, न च शक्तिग्रह-

प्रयोगयोगिता शक्तिश्च काके कल्प्येति गौरवं शूक-रत्वेऽनादिवेदसम्बन्धात् प्रयोगोऽनादिसिद्ध एव शक्ति-मात्रं कल्प्यत इति लाघवमित्यनादितात्पर्य्यात् शूकरे शक्तिरेव। अथ काकवत् शूकरोऽप्यसदृश एव सुस-दृशस्य गवयादेः सत्त्वात् कथञ्चित् सादृश्यं काक-स्याप्यस्तीति चेत्, न, काक-शूकरयोर्वराहशब्दाद्-बुद्धिस्थत्वेऽनयोः को वाच्य इति जिज्ञासानुरोधात्

शब्दस्येति अनादिवराहपदयोगितेत्यर्थः, 'अनादिवेदसम्बन्धादिति "वाराही चोपानदित्यनादिवेदसत्त्वादित्यर्थः, 'प्रयोगोऽनादिसिद्ध-एवेति तात्पर्य्यविषयत्वसम्बन्धेनानादित्वेन सिद्धो वराहपदप्रयोगो-ऽस्त्येवेत्यर्थः, 'अनादितात्पर्य्यादिति अनादिवराहपदपर्य्यादित्यर्थः, 'शक्तिरेव' वराहपदस्य शक्तिरेव। ननु "वाराही चोपानदित्यत्र वैदिकवराहपदस्य शूकरवत् काकेऽपि तात्पर्य्यं शूकरवत् काकस्यापि यथाकथञ्चिद्गोसदृशतया "वराहं गावोऽनुधावन्तीतिवाक्यशेषेण गोसदृशत्वरूपेण तत्रापि वराहपदतात्पर्य्यबोधनादित्याशयेन शङ्कते, 'अथेति, 'असदृशएव' असुसदृश एव, 'वराहशब्दादिति "वाराही चोपानदित्यत्र वराहशब्दादित्यर्थः, 'बुद्धिस्थत्वे' स्मृतिविषयत्वे, 'को वाच्य इति वस्तुगत्या को वाच्य इत्यर्थः, इदञ्च वाक्यशेषस्य शक्ति-ग्राहकत्वपक्षे, तात्पर्य्यग्राहकत्वपक्षे तु कस्तात्पर्य्यविषय इति जिज्ञासा बोध्या, 'जिज्ञासानुरोधादिति जिज्ञासात्मकवाक्यशेषजन्यशाब्दबोध-

पूर्व्वं कथं ततस्तयोरुपस्थितिरिरिति वाच्यं। प्रथममुभयत्रैव शक्तिग्रहाभ्युपग-

**तयोरन्यान्यापेक्षया गोसादृश्यमुद्भूतं जिज्ञासमानस्य स्मृतिविषय इति तन्निरासादन्यथा तात्पर्य्यग्राहक-वाक्यशेषस्यापि निष्प्रयोजनत्वं स्यात् कथञ्चित् सादृश्यस्य सर्व्वत्र सत्त्वेन तात्पर्य्यानध्यवसायादिति। इतरान्विते शक्तिरित्यपि गुडजिह्विका, वस्तुतोऽन्वयेऽपि न**

---

प्रयोजकाकाङ्क्षानुरोधादित्यर्थः। अन्यथा यथाकथञ्चित् सादृश्यस्य वाक्यशेषार्थत्वे तादृशाकाङ्क्षाया अनिवृत्तेरिति भावः। 'तयोरन्योन्यापेक्षयेति गो-काकयोरन्योन्यसादृश्यापेक्षया उद्भूतं प्रकृष्टं यद्गोसादृश्यं तदेवेत्यर्थः, 'स्मृतिविषय इति "वराहं गावोऽनुधावन्तीत्यत्रानुधावनपदजन्यस्मृतिविषय इत्यर्थः, 'तन्निरासादिति काके वाक्यशेषाच्छक्त्यादिग्रहनिरासादित्यर्थः, तथाच प्रकृष्टसादृश्यमेवात्रानुधावनपदार्थ इति भावः। 'तात्पर्य्यग्राहकेति तात्पर्य्यादिग्राहकेत्यर्थः, आदिपदात् स्वमते शक्तिग्रहः, 'तात्पर्य्यानध्यवसायादिति ततोऽपि विशिष्य तात्पर्य्याद्यनिश्चयादित्यर्थः। कार्य्यत्वांशमपहाय लाघवादन्वितशाब्दज्ञानत्वावच्छिन्न एव पदानां शक्तिरन्वितत्वं वैशिष्ट्यावगाहित्वमिति पूर्व्वमुक्तमिदानीमन्वितत्वांशस्य न प्रवेशो गौरवादव्यावर्त्तकत्वाच्चेत्याह, 'इतरान्वितेति, 'इतरेति स्वरूपकथनं, अन्वितशाब्दज्ञानत्वं शक्यतावच्छेदकमित्यपीत्यर्थः, शक्यता कार्य्यता एव-

---

मात्, ततश्चोक्तन्यायेनैकार्थत्वनिश्चये कोऽनयोर्वाच्य इत्यत्र विनिगमकानुसरणमिति भावः। यत्र च विनिगमकाभावस्तत्र नानार्थत्वमिति ध्येयं। 'अन्यथा' उद्भूतत्वस्यापुरस्कार इत्यर्थः। नन्वन्यलभ्यत्वे गौरवमप्रयोजकं तथाच

शक्तिः । ननु व्यवहारेणानुमिते इतरान्वितज्ञाने पद-शक्यत्वग्रहात्[१] तत्रैव शक्तिं गृह्णाति उपस्थितत्वात् । न चाग्रे तत्त्यागो हेत्वभावात्, न तु पदार्थज्ञानमात्रे, व्यवहारात् तस्यानुपस्थितेः, उपायान्तरात्तदुपस्थित्य-न्तरकल्पने मानाभावात्, अत इतरान्वितस्वार्थज्ञान-शक्तत्वेन ज्ञातपदं स्वार्थान्वयानुभावकं[२] इत्यन्विता-भिधानमिति चेत्, न, इतरान्वितपदार्थज्ञानोपस्थितौ पदार्थज्ञानं विशेष्यमिति तदुपस्थितौ तस्यापि विषय-त्वात् विशिष्टज्ञानस्य विशेष्यविषयत्वनियमादिति

मग्रेऽपि सर्व्वत्र । 'वस्तुत इति, 'न शक्तिः' न शक्यतावच्छेदकता, गौरवादव्यावर्त्तकत्वाच्चेति भावः । 'शक्यत्वं' कार्य्यत्वं, 'तत्रैव' अन्वित-शाब्दज्ञानत्व एव, 'शक्तिं' शक्यतावच्छेदकतां, 'पदार्थज्ञानमात्र-इति शाब्दज्ञानत्व इत्यर्थः, एवमग्रेऽपि सर्व्वत्र पदार्थज्ञानपदं शाब्द-ज्ञानपरं, 'अत इति, अन्वयानुभावकत्वेन ज्ञानस्य शाब्दबोधे हेतु-तया अनुभाविकाया अपि शक्तेर्ज्ञानं शाब्दधीहेतुरिति मतेनेदं । 'व्यवहारात्तस्यानुपस्थितिरित्युक्तं दूषयति, 'इतरेति, 'पदार्थज्ञानो-पस्थितौ' शाब्दज्ञानत्वावच्छिन्नोपस्थितौ, 'पदार्थज्ञानं' शाब्दज्ञानत्वं, 'विशेष्यं' विशेष्यतावच्छेदकं, 'तस्यापि' शाब्दज्ञानत्वस्यापि, 'विशि-ष्टज्ञानस्येति तद्धर्म्मावच्छिन्नविशेष्यकज्ञानस्य तद्धर्म्मविषयत्वनियमा-

(१) पदकारणत्वग्रहादिति क०, ख०, ग० ।

(२) स्वार्थस्मरणद्वारानुभावकमिति क० ।

तत्रैव शक्तिं कल्पयति लाघवात्, न त्वन्वयांशेऽपि गौरवात्। अस्तु वा प्रथममितरान्वितज्ञाने शक्तिग्रहेऽग्रे तत्त्यागः अन्यलभ्यत्वप्रतिसन्धानात् अनन्यलभ्यस्यैव शब्दार्थत्वात्, प्रथमगृहीतमात्रञ्च न बलमित्युक्तमेव, तस्मात् सर्वैः प्रथमव्यवहारादुपस्थिते कार्य्यान्वितज्ञानेऽन्वितज्ञाने वा पदकारणत्वग्रहात्तत्र शक्तिग्रहोऽग्रेऽपि गौरवान्यलभ्यत्वप्रतिसन्धानेऽपि न तत्त्यागः पूर्व्वकल्पनाया विपरीतत्वादिति स्वशिष्यव्यामोहनं। अथ कार्य्यत्वस्येतरपदलभ्यत्वेन तथा न

दित्यर्थः, 'शक्तिं' शक्यतावच्छेदकतां, 'इतरान्वितज्ञाने' इतरशाब्दज्ञानत्वे, 'शक्तिग्रहे' शक्यतावच्छेदकताग्रहेऽपि, 'प्रथमेति सर्व्वैः प्रथमगृहीतमात्रञ्चेत्यर्थः, 'न बलमिति न बोधितत्वव्याप्यमित्यर्थः, 'उक्तमेवेति, आत्मनि शरीरभेदप्रत्ययादिविषये व्यभिचारादिति भावः। 'तस्मादिति 'इति स्वशिष्यव्यामोहनमित्यग्रेतनेनान्वयः, 'तत्र शक्तिग्रह इति कार्य्यत्वान्वितज्ञानत्वादौ शक्यतावच्छेदकताग्रह इत्यर्थः। 'अथेति, घटमानयेत्यादिवाक्य इति शेषः, 'इतरपदलभ्यत्वेनेति लिङादिपदेन ज्ञानसम्भवेनेत्यर्थः, 'तथेति पदसामान्यशक्यतावच्छेदकाप्रवेश इत्यर्थः, 'एवं' इतरपदलभ्यत्वं, 'अन्वये' कर्म्म-

तदानीमन्यलभ्यत्वप्रतिसन्धानाभावाच्छक्तिग्रहः स्यादित्यरुचेराह, 'अस्तु वेति।

त्वेवमन्वये तस्येतरपदाशक्यत्वाच्छक्यत्वे वा अविवादादिति चेत्, न, घटशक्तत्वेन ज्ञातं पदं स्वार्थस्मरणद्वारा आकाङ्क्षादिसहकारिवशात् समभिव्याहृतपदार्थेन सह स्वार्थस्यान्वयमनुभावयति स्वभावादित्यन्यथैवान्वयज्ञानलाभात् किं शक्त्या। अन्वयमात्रशक्तावप्यन्वयविशेषज्ञानार्थमाकाङ्क्षादेरवश्यमपेक्षणात्, क्रिया-कारकपदयोः प्रत्येकमितरान्वितस्वार्थबोधकत्वे

---

त्वादिनिष्ठघटाद्यन्वये, 'इतरपदाशक्यत्वादिति शाब्दज्ञानविषयतया अमादिपदशक्यतानवच्छेदकत्वादित्यर्थः, 'शक्यत्वे वा' अमादिपदशक्यतावच्छेदकत्वे वा, 'अविवादादिति, विनिगमनाविरहेण घटपदादीनामपि तदन्तर्भावेण शक्तिसिद्ध्या पदमात्रस्यैवान्वितज्ञाने शक्तिसिद्धेरिति भावः। 'आकाङ्क्षादीति आदिपदाद्योग्यता-तात्पर्य्यपरिग्रहः, 'स्वभावादिति तथैवाकाङ्क्षादेः कार्य्य-कारणभावादित्यर्थः। नन्वेवमाकाङ्क्षादेः सहकारित्वकल्पनायामेव गौरवमित्यत आह, 'अन्वयमात्रेति अन्वयसामान्येत्यर्थः, अन्वितज्ञानत्वमितरविशेषणकस्वार्थविशेष्यकबोधत्वं तदेव निखिलपदकार्य्यतावच्छेदकमित्यभिमानेन दूषणमाह, 'क्रिया-कारकपदयोरिति, घटमानयेत्यादौ कर्मतासंसर्गेण घटानयनयोरन्वयबोध इति प्राचां मते-

---

नन्वाकाङ्क्षादिसहकारित्वकल्पनायामेव गौरवमत आह, 'अन्वयमात्रेति, अन्वयसामान्येत्यर्थः। 'क्रियेति, यद्यप्येक एवान्वय उभयप्रतियोगिक इति न वाक्यार्थद्वयधीप्रसङ्गस्तथापि घटान्वितानयनस्यानयनान्वितघटस्य च विशे-

वाक्यार्थद्वयधीप्रसङ्गात्। न चैकमेवान्विताभिधायक-मितरत्तु प्रतियोगिस्मारकमिति वाच्यं। अविशेषादशक्यान्वयानुभवेऽतिप्रसङ्गात्। अन्वयेऽपि शक्तिरिति चेत्, न, अशक्यमपि हि शक्यान्वयं बोधयति

---

नेदम्। नव्यमते तु कारकविभक्ति-नामपदयोरिति बोध्यं। 'इतरान्वितेति इतरविशेष्यक-स्वार्थविशेष्यकबोधत्वस्य कार्य्यतावच्छेदकत्व-इत्यर्थः, 'वाक्यार्थद्वयेति घटवदानयनमानयनवान् घट इत्युभयविशेष्यकबोधापत्तेरित्यर्थः। नव्यमते तु घटवत्कर्म्मत्वं कर्म्मत्ववान् घट-इत्युभयविशेष्यकबोधापत्तेरिति द्रष्टव्यं। 'अन्विताभिधायकं' इतर-विशेषणकस्वार्थविशेष्यकबोधजनकत्वं, 'अन्वयप्रतियोगीति अन्वयप्रतियोगिस्वार्थस्मारकमात्रं न त्वितरविशेषणकस्वार्थविशेष्यकानुभव-जनकमित्यर्थः। 'अविशेषादिति सामग्र्या अविशेषादित्यर्थः। इदमापाततः आकाङ्क्षादिविरहेणैव सामग्रीविरहात्। वस्तुतस्तु गौरवमेव बाधकं सारं। 'अशक्यान्वयानुभव इति शाब्दज्ञानविषयतया शक्यतानवच्छेदकस्यापि तदनुभव इत्यर्थः, शक्यता जन्यता, एवमग्रेऽपि, 'अतिप्रसङ्गादिति घटमानयेत्यादौ पटादिसंसर्गस्यापि भान-प्रसङ्गादित्यर्थः, 'शक्तिः' शक्यतावच्छेदकता, 'अशक्यमपि' शक्यतानवच्छेदकमपि, 'शक्यान्वयमिति शक्त्या स्वस्मारितस्यान्वयमित्यर्थः, अप-

---

यथा-विशेष्यभावभेदेन भिन्नत्वात् तथात्वं बोध्यं। अन्वयप्रकारधीप्रसङ्ग-इत्यत्र तात्पर्य्यमित्यन्ये। 'अशक्येति प्रकृतपदप्रयोज्यनियतस्मृत्यविषयानुभव-इत्यर्थः। तेन तन्मते व्यक्तेरशक्यतया न दोष इति ध्येयं। इति प्रकाशः।

**नान्यत् शक्यान्वयत्वस्य स्वरूपतोनियामकत्वात्, अन्यथा तत्राप्यप्रतीकारात्। नन्वेवं पदानामन्वित-ज्ञानजनकत्वात् तत्र शक्तिरस्त्येव अशक्तस्याजनकत्वात्**

भ्रंशे शक्तिभ्रमादेव बोधो गौण-लाक्षणिकयोस्तु नानुभावकत्वमिति भावः। 'शक्यान्वयत्वस्येति शक्त्या पदस्मारिततत्तदर्थान्वयविषयक-बोधत्वस्येत्यर्थः, 'नियामकत्वादिति आकाङ्क्षादिधीजनकतावच्छेद-कत्वादित्यर्थः, 'अन्यथेति आकाङ्क्षादेरनियामकत्व इत्यर्थः, 'तत्रापि' अन्वयसामान्यस्य शक्यतावच्छेदकत्ववादिनस्तत्रापि, 'अप्रतीकारादिति अन्वयान्तरभानप्रसङ्गस्याप्रतीकारादित्यर्थः, अन्वयविशेषस्य भवन्मते-ऽपि शक्यतावच्छेदकत्वादिति भावः। पदानामन्वितज्ञानत्वावच्छिन्नं प्रति जनकतात्मिकां शक्तिं निरस्य पदार्थे स्मारकशक्तिवदन्वयेऽपि पदानां नित्यसम्बन्धविशेषरूपा शक्तिरस्तीति ये वदन्ति तन्मतमुप-न्यस्यति, 'नन्विति, 'तत्र' अन्वये, 'शक्तिरस्त्येवेति नित्यसम्बन्धरूपा शक्तिरस्त्येवेत्यर्थः, 'अशक्तस्येति तत्राशक्तस्य पदस्य लक्षणा-शक्तिभ्रमा-जन्यतच्छाब्दबोधाजनकत्वादित्यर्थः, एतन्मते जातिप्रकारेण व्यक्ता-वेव शक्तिः कार्य्यत्वादिवच्छक्तेरपि किञ्चिदवच्छिन्नत्वनियमेन केवल-जातौ शक्त्यभावात् परन्तु जातिनिष्ठत्वेन ज्ञाता व्यक्तिं स्मारयति

---

'नियामकत्वादिति, यद्यपि शक्यान्वयत्वं न कारणं न वा कारणतावच्छेदकं अन्वयबोधे तस्याकारणत्वात् अनवच्छेदकत्वाच्च, तथाप्यन्वयांशविषयक-ज्ञानत्वमपि न कार्य्यतावच्छेदकं गौरवात् अन्वये चाकाङ्क्षादिसामग्रीसत्त्वा-दन्यत्र तदभावान्नातिप्रसङ्ग इत्यत्र तात्पर्य्यं, 'अशक्तस्येति, अपभ्रंशे चैतन्मते जनकत्वेन न व्यभिचारः। तदभ्युपगमेऽपि शक्तिस्तत्रास्तीत्याह, 'तत्रा-

तथापि पदादन्वयबोध इतीश्वरेच्छासत्त्वादिति सत्यं, किन्तु अन्वयबोधे स्वरूपसती सा व्याप्रियते, न तु ज्ञाता घटज्ञानशक्तत्वेन ज्ञानादेव घटान्वयबोधोपपत्तेः, यथा तव जातिशक्तपदस्य आत्मव्यक्तिज्ञाने, दृष्टञ्च ज्ञातकरणे सामान्यसम्बन्धितया ज्ञातस्यापि

---

न तु व्यक्तिनिष्ठत्वेन ज्ञातेति न तत्र व्यभिचारः। 'अन्वयबोधः' अन्वयस्य बोधः, 'ईश्वरेच्छेति ईश्वरेच्छायाः शक्तेरन्वयेऽपि सत्त्वादित्यर्थः, परन्तु सा अस्मन्मते नित्यसम्बन्धरूपोऽतिरिक्तपदार्थ इत्येव विशेष इति भावः। इष्टापत्त्या परिहरति, 'सत्यमिति, 'अन्वयबोधे' अन्वयस्य बोधे, 'स्वरूपसती' अन्वयप्रकारेण ज्ञाता, 'सा' शक्तिः, 'व्याप्रियते' उपयुज्यते, 'घटज्ञानशक्तत्वेनेति घटज्ञानजनकत्वप्रकारकेच्छाविषयत्वेनेत्यर्थः, शक्तिप्रकारकं ज्ञानं हेतुरिति प्राचीनमतेनेदं, एवमग्रेऽपि, नव्यमते तु स्वज्ञानजनकत्वप्रकारकेच्छात्मकशक्तिसम्बन्धेन घटप्रकारकज्ञानस्य हेतुत्वं बोध्यं, लाघवाच्छक्तिसम्बन्धेन घटवत्ताज्ञानस्यैव हेतुत्वात्। 'जातिशक्तपदस्येति जातिशक्तत्वेन ज्ञातस्य पदस्येत्यर्थः, 'आत्मव्यक्तिज्ञान इति स्वाश्रयव्यक्तिज्ञान इत्यर्थः, जनकत्वमिति शेषः, स्वपदं जातिपरं। ननु व्यक्तिसम्बन्धितया ज्ञातस्य संसर्गबुद्धिजनकत्वं क्वाप्यदृष्टचरमित्यत आह, 'दृष्टञ्चेति, 'ज्ञातकरणे' ज्ञायमानकरणस्थले, 'सामान्यसम्बन्धितयेति

---

पीति, विषयाबाधादिति भावः। 'किन्त्विति, तथाच यद्विषयतया ज्ञाता शक्तिरनुभावयति स एव शक्य इत्युच्यत इति नान्वयः शक्य इत्यर्थः।

विशेषबुद्ध्युपायत्वं यथा वह्निसामान्यव्याप्ततया गृहीतधूमस्य वह्निविशेषबुद्धिजनकत्वं । अथ घटज्ञानत्वं इतरान्वितघटज्ञानेऽप्यस्तीति तेन रूपेणान्वितघटज्ञानेऽपि ज्ञाता शक्तिर्व्याप्रियत इति चेत्, सत्यं, किन्तु घटज्ञानत्वं शक्यतावच्छेदकं न त्वन्वितघटज्ञानत्वं गौरवात् अन्यलभ्यत्वाच्च । एवञ्च जातिवाचकपदस्य व्यक्ताविव एकैव शक्तिरन्वयांशे स्वरूपसती पदार्थांशे

---

व्यक्तिसम्बन्धितयेत्यर्थः, 'विशेषबुद्धीति संसर्गबुद्धीत्यर्थः, 'वह्निविशेषबुद्धिजनकत्वमिति वह्निसंसर्गबुद्धिजनकत्वमित्यर्थः । 'अथेति, घटज्ञानत्वरूपेण शक्तिज्ञानस्य हेतुत्व इति शेषः, 'तेन रूपेण' घटज्ञानत्वेन, 'अन्वितघटज्ञानेऽपीति अन्वितघटज्ञानप्रकारेणापीत्यर्थः, 'व्याप्रियते' व्याप्रियेत, हेतुः स्यादिति यावत् । 'शक्यतावच्छेदकमिति शक्तिज्ञानविशेषणतावच्छेदकीभूय कारणतावच्छेदकमित्यर्थः, 'अन्यलभ्यत्वादिति, तेन रूपेण शक्तिज्ञानं विनापि निरुक्तप्रणाल्या तल्लाभसम्भवादिति भावः । 'अन्वयांशे स्वरूपसतीति अन्वयप्रकारेणाज्ञातेत्यर्थः, 'पदार्थांशे ज्ञातेति पदार्थप्रकारेण ज्ञाते-

---

प्रतिबन्ध्यभिप्रायेण दृष्टान्तमाह, 'यथेति, 'वह्निविशेषेति पर्व्वतीयत्वादिविशिष्टेत्यर्थः । तत्तत्पदार्थसामान्यशक्तस्याप्यन्वितपदार्थबोधकत्वं तत्र पक्षधर्म्मताबलात् पर्व्वतादिसम्बन्धभानं अतएव योग्यतादिबलात् पदार्थान्वयभानमिति भावः । 'न त्विति, अन्वयांशे शक्तत्वज्ञानस्य गौरवेणाप्रयोजकत्वान्न तत्र शक्तिरिति भावः । 'व्यक्ताविति, तन्मत इति शेषः । वैषम्यं

ज्ञाता व्याप्रियते। जाति-व्यक्त्योः समानसंवित्संवेद्यत्वात् तथा घटज्ञानादिकन्तु नान्वयविषयतानियतं स्मरणे व्यभिचारादिति चेत्, घटानुभवविशेषं प्रति घटपदत्वेन कारणता स च शब्दानुभवोऽन्वयविषयतानियत एव केवलस्य शब्देनाननुभवात् स्मरणञ्च प्रति पदत्वेन न जनकता व्यभिचारात् किन्तु सम्बन्धितया

त्यर्थः। शङ्कते, 'जाति-व्यक्त्योरिति, 'तथेति जातिप्रकारेण ज्ञाता व्यक्तिं बोधयतीत्यर्थः, 'घटानुभवविशेषमिति, तथाच घटपदत्वावच्छिन्नकारणताप्रतियोगिककार्य्यताश्रयघटज्ञानमन्वयविषयतानियतमिति घटशक्तिज्ञानादेवान्वयभानमिति भावः। ननु घटानुभवविशेषं प्रति घटपदत्वेन हेतुत्वे स्मरणं प्रति केन रूपेण हेतुतेत्याकाङ्क्षायामाह, 'स्मरणञ्चेति, 'व्यभिचारादिति ज्ञायमानपदं विनापि सम्बन्धान्तरज्ञानेन पदार्थस्मरणोत्पत्त्या व्यतिरेकव्यभिचारात्तत्सत्त्वेऽपि कदाचित् पदार्थस्मरणानुत्पत्त्यान्वयव्यभिचाराच्चेत्यर्थः। 'सम्बन्धितयेति तत्तत्स्मृतित्वेन तत्तत्सम्बन्धिज्ञानत्वे-

शङ्कते 'जातीति, 'घटेति शब्दप्रयोज्यजातिविशेषविशिष्टघटानुभवं प्रतीत्यर्थः, एवञ्चान्वयविषयत्वमन्यथासिद्धतया न कार्य्यतावच्छेदकतया प्रविष्टं अतस्तत्र न शक्तिरिति। 'स्मरणञ्चेति, यद्यप्यत्रापि तत्त्वेन जनकत्वेऽननुगतस्यापि जन्यतावच्छेदकत्वात् प्रकृते न कोऽपि दोषः, तथापि स्मरणेनैकरूपेण जनकत्वमित्याकाङ्क्षायामेतदुक्तमित्येके। अन्ये तु यत्र पदत्वेन कारणता तत्रान्वयविषयतानियमः एवञ्च शब्दजानुभववत् तज्जन्यस्मरणेऽपि तथा स्यात् इत्याकाङ्क्षायामेतदुक्तमित्याहुः। 'किन्त्विति, यद्यप्येतददृष्टा-

ज्ञातत्वेन। स्यादेतत्, अन्वयतात्पर्य्यकतया तत्प्रतिपादकं पदमित्यविवादं, तात्पर्य्यनिर्व्वाहिका च वृत्तिः, सा चेह न गौणी न वा लक्षणेति शक्तिसिद्धिः। अथान्वये लक्षणैव स्वार्थसम्बन्धिनि तात्पर्य्यात् पदार्थेप-

नेत्यर्थः, यथाश्रुते अदृष्टादिकारितस्मृतौ व्यभिचारात्। नन्वन्वयांशेऽपि शक्तिज्ञानमावश्यकमित्याशङ्कते, 'स्यादेतदिति, 'अन्वयतात्पर्य्यकतयेति अन्वयतात्पर्य्यकत्वज्ञानसहकारेणेत्यर्थः, 'तत्प्रतिपादकं' अन्वयप्रतिपादकं, 'तात्पर्य्यनिर्व्वाहिका चेति तात्पर्य्यज्ञानाधीनतद्बोधनिर्व्वाहिका चेत्यर्थः, 'वृत्तिरिति तत्र तत्पदवृत्तिधीरित्यर्थः, एतन्मते व्यक्तावपि शक्तिज्ञानस्य हेतुतया न व्यक्तिशाब्दबोधे व्यभिचारः घटेन जलमाहरेत्यादौ छिद्रेतरत्वस्यापि योग्यताबलाज्ज्ञानमिति न तत्रापि व्यभिचारः। 'सा चेति, वृत्तिरिति शेषः, 'इह' अन्वये, 'शक्तिसिद्धिः' शक्तिज्ञानं, आवश्यकमिति शेषः। तटस्थः शङ्कते, 'अथेति, 'लक्षणैव' लक्षणाज्ञानमेव, ज्ञानजनकमिति शेषः, 'स्वार्थसम्बन्धिनीति स्वार्थसम्बन्धित्वरूपेणान्वये तात्पर्य्यग्रहादित्यर्थः,

दिकारितस्मरणे व्यभिचार्य्येव यदि च तद्विशेषहेतुत्वं तदा पदत्वेनापि तस्य हेतुत्वे तुल्यं, तथापि हस्त्यादिदर्शनस्य हस्तिपकादिस्मरणे सम्बन्धिज्ञानत्वेन हेतुत्वमावश्यकमिति सामान्यसामग्री एवञ्च तदुपपत्तौ विशेषसामग्र्यन्तरकल्पने मानाभाव इत्यत्र तात्पर्य्यं, 'ज्ञातत्वेनेति। यद्यपि चिरनष्टपदस्य न हेतुत्वं, तथापि सम्प्रदायमतेनेदं। प्रामाणिकं गौरवमित्याशयेन शङ्कते, 'स्यादेतदिति, तटस्थ आह, 'अथेति, 'तदन्वयोपपत्तेश्चेति, यथा पूर्वोप-

स्थित्यनन्तरं तदन्वयोपपत्तेश्च। न च वृत्तिद्वयस्य विरोधः, अन्वयविशेषणतया पदार्थोपस्थितेः। न च लाक्षणिकानामननुभावकत्वादन्वयानुभवः कथमिति वाच्यं। पदार्थस्य स्मरणादन्वये शक्तत्वाच्च पदानां

---

घटपदं घटसम्बन्धतात्पर्य्यकमिति तात्पर्य्यग्रहशरीरत्वात्तादृशतात्पर्य्यज्ञानजन्यत्वनियतमिति भावः। 'तदन्वयोपपत्तेश्चेति तदन्वयज्ञानोदयाच्चेत्यर्थः, तथाच यथा गङ्गायां घोषइत्यादौ स्वशक्यप्रवाहोपस्थित्यनन्तरं तीरान्वयबोधान्न लक्षणाज्ञानं तीरबोधजनकं तथाऽन्वयेऽपीति भावः। 'वृत्तिद्वयस्येति शक्त्या पदार्थस्य लक्षणया चान्वयस्य शाब्दबोधजननादिति भावः। 'अन्वयविशेषणतया' अन्वयनिरूपकतया, सर्व्वत्रेत्यादिः, 'पदार्थोपस्थितेरिति ·पदार्थानां बाधादित्यर्थः, तथाच फलात्तद्विरोध एव नाङ्गीक्रियतइति भावः। 'लाक्षणिकानां' लक्षणावृत्तीनां, 'अन्वयानुभवः' अन्वयस्यानुभवः, लक्षणयेति शेषः। 'पदार्थस्येति शब्दार्थस्य प्रवाहादेरित्यर्थः, 'स्मरणात्' स्मरणमात्रात्, मात्रपदाच्छाब्दानुभवव्यवच्छेदः, 'अन्वय इति शाब्दबोधविषये तीरादावित्यर्थः, 'पदानां' गङ्गादिपदानां, 'सर्व्वत्रेति

---

स्थित्यनन्तरं तीरान्वयबोधात् तत्र लक्षणा तथेहापीति भावः। 'अन्वयविशेषणतयेति, यद्यपि शक्यस्य शक्त्या विशेषणतयोपस्थितौ अदोषत्वे गङ्गायां घोष इत्यादावपि तथात्वापत्तिस्तथाप्यन्वयस्य सम्बन्धरूपतया यद्वि येन विना न भासते इति न्यायेन लक्षणयैव पदार्थोपस्थितिरिति न वृत्तिद्वयविरोधः। अतएव राजपुरुष इत्यादावपि तथा, गङ्गायामित्यादौ तु नैवमित्याहुः। ग्रन्थकारमते वृत्तिद्वयविरोधाभावादेतदुक्तमित्यन्ये।

शक्त्याननुभावकतया सर्व्वत्र लाक्षणिकस्यैवानुभावकत्वादिति। तन्न। वृत्तिर्हि ज्ञातोपयुज्यते न स्वरूपसत्यतिप्रसङ्गात्। न चेह स्वार्थसम्बन्धितयाऽन्वयः प्रागवगतः, वाक्यार्थस्यापूर्व्वत्वात्। किञ्च शक्यसम्बन्धितया अन्वये लक्षणार्थं पदार्थे शक्तिकल्पनं तद्वरं लाघवाद्-

---

गङ्गायां घोष इत्यादौ लाक्षणिकस्थले सर्व्वत्रेत्यर्थः, 'लाक्षणिकस्येति लक्षणावृत्तिज्ञानस्यैवेत्यर्थः, तत्र घोषादिपदशक्तिज्ञानमेवानुभावकं लक्षणाज्ञानन्तु तीरादिस्मारकतामात्रेणोपयुज्यते इति चेत्, किं प्रकृतेऽपि पदार्थशक्तिज्ञानमेवानुभावकमन्वये लक्षणाज्ञानन्तु अन्वयस्मारकतयोपयुज्यते स्मृतस्यापि तात्पर्य्यमर्य्यादया संसर्गतया भाने बाधकाभावादिति सुवचमिति भावः। 'अतिप्रसङ्गादिति अगृहीतवृत्तिकादपि पदाच्छाब्दबोधप्रसङ्गादित्यर्थः। नन्वेकपदार्थनिष्ठापरपदार्थनिरूपितसंसर्गत्वादिना प्रागनवगतत्वेऽप्याधेयत्वादिना सामान्यतः शक्यसम्बन्धिताज्ञानं सम्भवत्येवेत्यत आह, 'किञ्चेति, 'शक्यसम्बन्धितयेति, अभेदे तृतीया, तथाचान्वये शक्यसम्बन्धित्वरूपलक्षणासम्पत्त्यर्थमित्यर्थः, 'शक्तिकल्पनं' तत्र पृथक्शक्तिकल्पनं, आवश्यकमिति शेषः, 'लाघवात्' शक्त्यैक्यलाघवात्, 'अन्वये' पदार्थ-

---

'पदानामिति, यदि च पदार्थशक्त्यैव लाक्षणिकार्थानुभावकत्वं तदा प्रकृतेऽपि तथास्त्विति भावः। 'लाघवादिति, विशिष्ट एव शक्तिकल्पने लाघवं, गङ्गापदे च नानाशक्तिकल्पनाप्रसक्त्या न तथात्वमिति भावः। यद्यप्यन्वयस्य लक्षणालभ्यत्वे विशिष्टशक्तावेव गौरवं। अतएव शुक्लादिपदस्य

न्वयेऽपि शक्तिरस्तु किं वृत्तिद्वयकल्पनया, एवं स्थिते प्रयोगोऽपि अन्वयः पदशक्यः वृत्त्यन्तरं विना पद-प्रतिपाद्यत्वात् पदार्थवदिति । उच्यते । वृत्तिं विनापि तात्पर्य्यनिर्वाहात् किं वृत्त्या पदानामुक्तक्रमेणान्वय-

---

विशिष्टान्वये, 'किं वृत्तिद्वयेति। इदमापाततः अन्वये पदार्थ-विशिष्टे शक्त्यपेक्षया पदार्थमात्रशक्तस्यान्वये लक्षणायामेव लाघवात्। वस्तुतस्तु वक्ष्यमाणक्रमेण शक्तिवल्लक्षणां विनाऽप्युपपत्त्या लक्षणाया-मपि मानाभाव इत्येव तत्त्वं । 'अन्वय इत्यादि घटमित्यादौ घट-कर्म्मत्वयोरन्वयस्य बोधः तन्निष्ठघटपदाम्पदान्यतरशक्तिज्ञान-जन्यः तन्निष्ठतदन्यतरपदवृत्त्यन्तरज्ञानाजन्यत्वे सति तदन्यतरपद-जन्यतच्छाब्दबुद्धित्वात् यो यन्निष्ठयत्पदवृत्त्यन्तरज्ञानाजन्यत्वे सति यत्पदजन्ययच्छाब्दबोधः स तन्निष्ठतत्पदशक्तिज्ञानजन्यः घटपदादि-जन्यघटशाब्दबोधवदित्यर्थः, यथाश्रुतेऽन्वयादिपदशक्यत्वात् पूर्व्वं घटादिपदशक्यत्वाभ्युपगमाच्च सिद्धसाधनापत्तेरिति ध्येयं । 'वृत्तिं विनापीति घटमित्यादौ अन्वये घटादिपदवृत्तिज्ञानं विनापी-त्यर्थः । 'तात्पर्य्यनिर्व्वाहादिति घटादितात्पर्य्यज्ञानाधीनस्यान्वयस्य निर्व्वाहादित्यर्थः, 'किं वृत्त्या' किमन्वयवृत्तिज्ञानेन, 'उक्तक्रमेणेति आकाङ्क्षाज्ञानानामन्वयविशेषमन्तर्भाव्य कार्य्य-कारणभावबलेनेत्यर्थः,

---

न्वयलक्षणा तथाप्युक्तरीत्या लक्षणालभ्यत्वमेव नेति भावः। 'वृत्त्यन्तरं वि-नेति, यद्यपि तन्मते व्यक्तौ छिन्नेतरत्वादौ च व्यभिचारः, तथापि पररीत्या

बोधजनकत्वसम्भवादन्यथा शक्त्या तात्पर्य्यनिर्वाहोदृष्ट- इति लक्षणोच्छेदः । अथ शक्तिं विनापि शक्यसम्बन्धात् तन्निर्वाह इति न. तत्र शक्तिः, तर्हि वृत्तिं विनापि तन्निर्वाह इति किं वृत्त्या । अतएवानुमानमप्रयोजकं अन्यथा पदप्रतिपाद्यत्वादेव शक्तिसाधने वृत्त्यन्तरो- च्छेदः । अतएव धूमोऽस्तीत्यत्र धूमपदस्य वह्निबोधपर-

'अन्वयबोधेति अन्वयविषयकबोधेत्यर्थः, 'अन्यथेति क्वचित्तात्पर्य्य- ज्ञानाधीनस्य बोधस्य वृत्तिज्ञाननिर्व्वाह्यत्वदर्शनात् सर्व्वत्र तथा कल्पने इत्यर्थः, 'तात्पर्य्यनिर्व्वाहः' तात्पर्य्यज्ञानाधीनस्य बोधस्य निर्व्वाहः, 'दृष्टः' क्वचिद्दृष्टः, 'लक्षणोच्छेदः' तीरादावपि गङ्गा- दिपदस्य शक्यभावोच्छेदः, तीरादावपि गङ्गादिपदस्य शक्तिग्रहप्रसङ्ग- इति यावत् । 'शक्तिं विनापीति तीरादौ गङ्गादिपदस्य शक्तिं विनापीत्यर्थः, 'तन्निर्व्वाहः' तीरादेर्बोधनिर्व्वाहः, 'वृत्तिं विनापि' अन्वयवृत्तिज्ञानं विनापि, 'तन्निर्व्वाहः' अन्वयस्य ज्ञाननिर्व्वाहः, 'किं वृत्त्या' किं वृत्तिज्ञानेन । 'अन्यथेति, सहचारदर्शनमात्रादेव व्याप्त्यभ्युपगमे इत्यर्थः, 'पदप्रतिपाद्यत्वादेव' तत्पदप्रतिपाद्यत्वादेव, 'शक्तिसाधने' तत्पदशक्तिसाधने, 'वृत्त्यन्तरोच्छेदइति तीरादावपि गङ्गादिपदशक्यभावोच्छेद इत्यर्थः । तात्पर्य्यज्ञानाधीनत्वं यथाकथ- ञ्चित् तात्पर्य्यज्ञानप्रयोज्यत्वमित्यभिप्रायेणाह, 'अतएवेति तत्पद- तात्पर्य्यज्ञानाधीनस्य तद्बोधस्य तत्र तत्पदवृत्तिज्ञानानिर्व्वाह्यत्वादे-

तदनभ्युपगमेन आपातत इदमुक्तं । वस्तुतो अग्रे अप्रयोजकत्वाभिधानं

त्वेऽपि वह्नौ न लक्षणा शक्त्या धूमोपस्थितौ अनुमानद्वारा तत्प्रतीतिसम्भवात्। तथा "गच्छ गच्छसि चेत् कान्त पन्थानः सन्तु ते शिवाः। ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान्" इति॥ वाक्यस्य मा गच्छेत्यत्र तात्पर्य्येऽपि न लक्षणा गमनस्य प्रियामरणहेतुत्वं हि वाक्यार्थः, तेन गमनं मया न कर्त्तव्यं प्रियामरणहेतुत्वादित्यनुमानादेव गमने अकर्त्तव्यताबोधनेन

---

वेत्यर्थः, 'वह्निबोधपरत्वेऽपीति धूमशब्दबोधं जनयित्वा वह्निज्ञानं जनयत्विति तात्पर्य्येऽपीत्यर्थः, 'न लक्षणा' न लक्षणाज्ञानं, वह्निबोधनिर्व्वाहकमिति शेषः, 'धूमोपस्थितौ' उक्ततात्पर्य्यज्ञानाद्धूमशब्दबुद्धौ, 'तत्प्रतीतिसम्भवादिति लक्षणाज्ञानं विनापि तात्पर्य्यज्ञानाधीनस्य वह्निज्ञानस्य सम्भवादित्यर्थः। 'शिवाः' कल्याणरूपाः, 'गतः' गमिष्यति, 'न लक्षणेति तादृशबोधे न लक्षणाज्ञानं हेतुरित्यर्थः, 'वाक्यार्थ इति, यद्यपि मरणमेव न वाक्यार्थः कुतः प्रियामरणस्य तद्धेतुत्वं, तथापि मरणं विना पुनर्ज्जन्माभावात्तेन मरणमाक्षिप्यते ततश्च मनसा तद्धेतुत्वं उपस्थितमरणस्यैव प्रतीयत-

---

उपलक्षणं अत्रापि दूषणे तात्पर्य्यं,। 'गमनस्येति कान्तगमनस्येत्यर्थः। यद्यपि प्रियामरणहेतुत्वं न वाक्यार्थः पदार्थसंसर्गस्यैव वाक्यार्थत्वात् किन्तु मरणं विना जन्माभावात् तेन तदाक्षिप्यते, तथापि वाक्यप्रयोज्यज्ञानविषयत्वेन वाक्यार्थत्वं बोध्यं वाक्यतात्पर्य्यविषयत्वेन वा तदर्थत्वं। यदा च लिङ्गव्याप्त्याद्यप्रतिसन्धानात् नानुमानेन तात्पर्य्यनिर्व्वाहः तदा लक्षणाभ्युपगमे न क्षति-

तात्पर्य्यनिर्वाहात् । यत्र हि मुख्यया साक्षात्परम्परया वा न तात्पर्य्यनिर्व्वाहः[१] तत्र लक्षणा । ननु घटमानयेत्यत्र प्रत्येकमन्वयविशेषे जिज्ञासा भवति । न च सामान्यानवगमे विशेषे सा स्यात्, इत्यन्वयसामान्ये शक्तिरेवेति चेत्, न, कारकेण क्रियया च क्रिया-

इति परम्परया वाक्यार्थत्वमवगन्तव्यं । 'तात्पर्य्यनिर्व्वाहादिति तात्पर्य्यज्ञानाधीनस्याकर्त्तव्यताबोधस्य निर्व्वाहादित्यर्थः । 'यत्र हीति, 'मुख्यया' शक्त्या, 'परम्परया वेति, अन्वये साक्षाच्छक्त्या निर्व्वाहः धूमोऽस्तीत्यादौ वह्नौ परम्परया शक्त्या निर्व्वाह इति भावः । 'तात्पर्य्यनिर्व्वाह इति तात्पर्य्यज्ञानाधीनस्य बोधस्य निर्व्वाह इत्यर्थः । 'अन्वयसामान्ये शक्तिरेवेति, सामान्यतोऽन्वयस्मरणार्थमन्वयसामान्ये शक्तिधीरपेक्षितैवेत्यर्थः, 'कारकेणेति यथा यत् कारकं तत् सक्रियं या क्रिया सा सकारकेति व्याप्त्या कारकेण सामान्यतः क्रियानुमानं क्रियया च सामान्यतः कारकानुमानं, यथा यत् कारकं तत्क्रियासंसृष्टं या क्रिया सा कारकसंसृष्टेति सामान्यतो व्याप्त्या अन्वयमनुमाय तत्र विशेषतो जिज्ञासोपपत्तेरित्यर्थः, एतच्च 'क्रिया-कारकसामान्याक्षेपवत्तदुपपत्तेरिति पाठे, क्रिया-कारकसामान्या-

(१) न तात्पर्य्यं निर्व्वहतीति ख० ।

रित्याहुः । अतएवाह, 'यत्र हीति, 'क्रियेति क्रिया-कारकान्वयसामान्याक्षेपकत्वादित्यर्थः । नन्वेवमपि विशेषज्ञानं विना कथं विशेषजिज्ञासेति चेत्, न, अन्वयरूपधर्म्मिज्ञाने सति तत्र स्मृत्युपनीतविशेषजिज्ञासासम्भ-

कारकसामान्याक्षेपात्तदुपपत्तेः दृष्टे फलादौ रसविशेषजिज्ञासावत्। एतेन यदुक्तमन्वितपदार्थे मम त्वेकैव शक्तिस्तव त्वेका पदार्थेऽपरा त्वन्वय इति निरस्तं। अन्वये शक्त्यभावात्। न चैवमन्वयानुभवे पदविनियोगो न स्यादिति वाच्यं। अन्वयानुभवार्थमेव पदार्थे पदानां शक्तिकल्पनात्। तस्मात् पदं करणं

---

क्षेपात्तदुपपत्तेरिति पाठे तु क्रियायाः कारकस्य च सामान्यतः संसर्गाक्षेपादित्यर्थः, 'रसविशेषेति जम्बीरत्वादिना रससामान्यमनुमाय रसविशेषजिज्ञासावदित्यर्थः, 'अन्वितपदार्थ इति अन्वितपदार्थशक्तिज्ञानत्वेनैकेन रूपेण मम कारणतेत्यर्थः, 'एका पदार्थइति पदार्थशक्तिज्ञानत्वेनान्वयशक्तिज्ञानत्वेन चोभयरूपेण कारणतेत्यर्थः, 'अन्वये शक्त्यभावादिति अन्वये शक्तिज्ञानस्य हेतुत्वाभावादित्यर्थः। 'न चैवमिति, 'एवं' अन्वये शक्तिज्ञानाभावे, 'विनियोगः' उपयोगः, 'न स्यादिति, अन्वयस्मृतिद्वारैव तस्यान्वयानुभवे उपयोगित्वादिति भावः। 'पदार्थ इति, तथाच पदार्थस्मृतिद्वारैव तस्यान्वयानुभवहेतुत्वमिति भावः।

केचित्तु 'न स्यादिति, शक्तिज्ञानविषयतयैव तस्योपायोगादिति भावः। 'पदार्थ इति, तथाच पदार्थशक्तिज्ञानविषयतयैव पदानामन्वयानुभवे उपयोग इति भाव इत्याहुः।

---

वात्। अत एवानुरूपं दृष्टान्तमाह, 'दृष्ट इति रूपविशेषेणाक्षिप्तरससामान्ये स्मृत्युपनीतमधुरत्वविशेषजिज्ञासावदित्यर्थः। 'पदमिति, एतच्च

पदार्थस्मरणं व्यापारः आकाङ्क्षादिसहकारिवशात् स्मारितार्थान्वयानुभवः फलं पदार्थस्मरणं न व्यवधायकं व्यापारत्वात्। न च स्मरणद्वारा पदार्थ एव करणं, तस्यानागतत्वादिना स्वस्मरणे अन्वयानुभवे चाजनकत्वात्। तथापि पदार्थस्मरणमेव करणमस्तु आवश्यकत्वात्, अतएव चिन्तावशोपनीतपदार्थाना-मन्वयबोधात् काव्यादिरिति चेत्, न, स्मरणस्य नि-

---

'पदं करणमिति वृत्तिलक्षणसम्बन्धेन पदार्थविशेषणतया पदार्थविशेष्यतया वा पदज्ञानमित्यर्थः, 'पदार्थस्मरणमिति पदार्थ-मात्रस्मरणमित्यर्थः, 'मात्रपदादन्वयव्यवच्छेदः, 'स्मारितेति वृत्त्ये-त्यादिः, 'न व्यवधायकमिति न पदज्ञानस्यान्यथासिद्धिसम्पादक-मित्यर्थः, 'तस्य' पदार्थस्य, 'स्वस्मरण इति, तज्जनकत्वाभावे च तद्द्वारा कुतोऽन्वयबोधकारणत्वं स्यादिति भावः। शङ्कते, 'तथापीति, 'आवश्यकत्वादिति। न च व्यापारेण व्यापारी नान्यथासिद्ध इति वाच्यं। तद्व्यापारत्वस्यैवासिद्धेरिति भावः। पदज्ञानस्य व्यभिचारम-प्याह, 'अतएवेति, 'चिन्ता' उद्बोधकसमवधानं, पदज्ञानं विनापीति शेषः। 'स्मरणस्य' पदार्थस्मरणस्य। ननु व्यापाराभावेऽपि फलायोग-

---

सम्प्रदायमते, 'आकाङ्क्षादीति, स्वरूपसद्धेतुत्वपक्ष इदं, अन्यथा तज्ज्ञाने तात्पर्य्यं

भट्टमतमाशङ्क्य निराकरोति. 'न चेति, 'आवश्यकत्वादिति, तथाच पदानामर्थस्मरण एवोपक्षीणत्वादन्यथासिद्धत्वमिति भावः। व्यभिचारम-प्याह, 'अतएवेति, फलवैजात्यं नास्तीत्यभिमानः। 'स्मरणस्येति, तथा-

# व्यारत्वेनाकरणत्वात् अनन्यथासिद्धान्वय-व्यतिरेकाभ्यां आकाङ्क्षादिमत्पदस्यान्वयानुभवविशेषे कारणत्वात् पदार्थोपस्थितेः संसर्गधीमात्रहेतुत्वेऽपि शाब्दसंसर्ग-धीविशेषे पदस्यैव हेतुत्वात्, गौः कर्म्मत्वमानयन-मित्यत्र पदार्थज्ञानेऽपि अन्वयज्ञानानुदयात् पदवि-

व्यवच्छिन्नत्वेनैव कारणत्वं स्यादित्यत आह, 'अनन्यथेति, 'अन्वयानु-भवविशेषे' शाब्दानुभवे। ननु पदार्थस्मरणेनैवान्वय-व्यतिरेका-वन्यथासिद्धावित्यत आह, 'पदार्थेति, 'संसर्गधीमात्रेति विशेषण-ज्ञानविधया विशिष्टबुद्धिमात्रहेतुत्वेऽपीत्यर्थः, 'हेतुत्वात्' हेतुत्वा-वश्यकत्वात्, अन्यथा मनसोपनीतभानमात्र एव शाब्दयामीत्यनु-व्यवसायापत्तेरिति भावः। ननु शब्दजन्यपदार्थोपस्थितित्वेन हेतुत्वान्न सर्व्वत्र तादृशानुव्यवसाय इत्यत आह, 'गौरिति, 'पदविशेषेति

चानन्यगत्या पदानामेव कारणत्वं न तु स्मरणे तदुपक्षीणत्वमिति भावः। न चासत्तिज्ञानरूपस्तज्ज्ञानव्यापारोऽस्त्विति वाच्यं। तद्धेतुत्वस्य प्रागेव निराकृतत्वात्। क्रियया अयोगव्यवच्छेदेन सम्बन्धित्वं करणत्वमिति निर्व्या-पारमपि करणमस्तु स्मरणव्यापारकं मन एव वा करणमस्तु तद्धेतुत्वस्या-वश्यकत्वात् यथा चैवं न मानसत्वापत्तिस्तथोक्तमनुमानप्रकाशे, तथाच स्म-रण एव पदोपक्षय इत्यतो हेत्वन्तरमाह, 'अनन्यथेति, अतएव पदादमुमर्थं प्रत्येमीत्यनुभवोऽपीति भावः। 'विशेष इति शब्दप्रयोज्यजातिमतीत्यर्थः, तथाच नोक्तव्यभिचारोऽपीत्यर्थः। न च वैजात्यमसिद्धं, अनुभवसिद्धत्वात्। पदहेतुत्वे मानान्तरमाह, 'गौरिति त्वदुक्तसकलहेतुसत्त्वेऽप्यन्वयबोधानु-त्पादः पदविशेषहेतुत्वमाक्षिपतीत्यर्थः। अवच्छेदकत्वेनान्यथासिद्धिमाशङ्क्य

शेषोपस्थितपदार्थज्ञानस्य हेतुत्वे पदविशेषस्यैवावश्य- कत्वेन हेतुत्वाच्च। काव्यस्थले च पदार्थज्ञानव्यापारकं उत्प्रेक्षादिसहकृतं मन एवान्वयानुभवकरणं। न चैव-

---

गामानयेत्यादिपदविशेषजन्येत्यर्थः, 'आवश्यकत्वेनेति, लाघवेन चेत्यपि बोध्यं, 'हेतुत्वादिति वृत्त्यार्थजन्यपदार्थोपस्थितिसम्बन्धेन हेतुत्वादित्यर्थः, पदार्थोपस्थितेः शाब्दबोधस्य विशिष्टानुभवतया विशेषणादिज्ञानविधयैव हेतुत्वमिति भावः। एतेन वृत्त्या शब्दजन्यपदार्थोपस्थितिं विना पदज्ञानमात्राच्छाब्दबोधानुदयात्तद्धेतुत्वावश्यकत्वात्तचैव शब्दविशेषान्तर्भावसाचिव्यादिदमसङ्गतमिति परास्तं। इदमुपलक्षणं शब्दजन्यपदार्थोपस्थितेः कारणत्वे च तदवच्छेदककोटौ शब्दविशेषान्तर्भावो नोचितः आनुपूर्व्वीभेदेन पदार्थोपस्थितेर्गुरुतरानन्तकारणतावच्छेदकप्रसङ्गात्, आनुपूर्व्याः पृथक्प्रयोजकत्वे च जन्यत्वोपस्थितित्वादेरवच्छेदककोटावप्रवेशादनन्तकार्य्य-कारणभावाविशेषेऽपि कारणतावच्छेदकगौरवाभावात् पदार्थोपस्थितेश्च सर्व्वानुपूर्व्वीसाधारणशब्दजन्यपदार्थोपस्थितित्वेनैकेनैव लघुरूपेण सामान्यतो हेतुत्वादित्यपि बोध्यं। नन्वेवं काव्यस्थले चिन्तावशोपनीतपदानां कथमनुभव इत्यत आह, 'काव्येति, 'उत्प्रेक्षादीति, 'उत्प्रेक्षा' इच्छाविशेषः, आहार्य्यज्ञानस्थले सहकारिणी, 'आदिपदात् क्वचिद्-

---

निराचष्टे, 'पदविशेषेति। यद्यप्येवं तन्मतेऽपि काव्यस्थले व्यभिचारस्तथाप्यन्वयबोधविशेषे स्मरणविशेषस्यैव हेतुत्वं न तु पदस्येति भावः। 'हेतुत्वादिति, व्यापारावच्छेदकतया व्यापारिणोऽप्यन्यथासिद्धौ चक्षुरादेरपि तथा-

मुत्प्रेक्षयाः पृथक् प्रमाणत्वं, व्यभिचारिजातीयतया लिङ्गादाविव प्रमाकरणतावच्छेदकानतिप्रसक्तानुगत-रूपाभावान्निर्व्यापारत्वाच्च, किन्तु प्रमाणसहकारिणी सा। अतएव मानसे लिङ्गपरामर्शे व्याप्तिस्मृत्यादि न पृथक् प्रमाणं। अथ पदमन्तरेणापि योग्यतादि-

संसर्गाग्रहपरिग्रहः। 'न चैवमिति, यदसाधारणं सहकार्य्यभावेति न्यायादिति भावः। 'उत्प्रेक्षाया इति, इदमुपलक्षणं पदार्थोप-स्थितेरपि बोध्यं। 'व्यभिचारिजातीयतयेति उत्प्रेक्षायाः क्वचिद्भ्रमं प्रत्यपि जनकतयेत्यर्थः, 'लिङ्गादाविवेति लिङ्गपरामर्शादाविवेत्यर्थः, तच्च सल्लिङ्गपरामर्शस्येव शाब्दरूपत्वादिति भावः। 'करणता' कारणता, 'सेति, क्वचिदिति शेषः। अतिरिक्तनिर्व्वचनाय पुनः शङ्कते, 'अथेति, 'अन्वयबोधः' शाब्दानुभवः, 'पश्यतः श्वेतमा रूप-

त्वापत्तेः उक्तयुक्तेश्चेति भावः। 'व्यभिचारीति, ननु तत्तदुत्प्रेक्षातः कदाचित् प्रमोत्पत्तेः तत्तद्विशेषहेतुत्वमावश्यकमिति तथैव प्रमाणत्वमस्तु पदार्थज्ञानं वा तथास्तु यथा च चक्षुरादौ व्यभिचारिव्यावृत्तं निर्द्दोषत्वादिकमवच्छेदकं तथा प्रकृतेऽप्यस्तु। यदि च निर्व्यापारतया न तथात्वं तदा पदार्थोपस्थापक-चिन्तादेस्तथात्वमस्तु। न चाननुगमः, उपाधिविशेषस्य तथात्वापत्तेः। यदि च तस्य स्मरण एवोपक्षयः तदा पदेऽपि तुल्यं। किञ्चानुमितेः परा-मर्शव्यापारकमनःकरणकत्वपक्षे यथा परामर्शस्य प्रमाणान्तरत्वं तथा प्रकृतेऽप्यस्त्विति चेत्, नैवं, फलबलेन परामर्शस्य विजातीयप्रमाजनकत्वं प्रकृते च न तथेति प्रमित्यन्तरासाधारणकारणासहकृतमनोजन्यत्वेनास्य मानसत्वेन तत्करणस्यातथात्वात् अधिकमनुमानप्रकाशे विपञ्चितं। अन्वय-विरोधिपदाजन्यपदार्थोपस्थितिर्हेतुरित्याशयेन शङ्कते, 'अथेति। 'आ रूप-

ज्ञानेऽन्वयबोधो भवत्यतः पदार्थस्मरण एव पदानामुपक्षयः। तदुक्तं "पश्यतः श्वेतमा रूपं ह्रेषाशब्दञ्च शृण्वतः। खुरविक्षेपशब्दञ्च श्वेतोऽश्वोधावतीति धीः"॥ इति चेत्, सत्यं,(१) प्रयोजकवाक्योच्चारणानन्तरं प्रयोज्यव्यापारदर्शनात् अन्वितज्ञानोपपत्त्यर्थं पदस्यैव शक्तिः कल्प्यते प्रथमतस्तस्यैव कारणत्वावधारणात्

मिति श्वेतं रूपमा पश्यत इति योजना, आपदमीषदर्थकं, 'प्रयोजकेति प्रयोजकतत्तत्पदोच्चारणानन्तरमेवेत्यर्थः, 'प्रयोज्येति प्रयोज्येन खस्य तत्तत्पदार्थशाब्दबोधदर्शनादित्यर्थः, अन्वय-व्यतिरेकाभ्यमिति शेषः, 'अन्वितज्ञानेति तत्तत्पदार्थशाब्दात्मकोपस्थितावित्यर्थः, 'पदस्यैव' तत्तत्पदस्यैव, 'शक्तिः' ज्ञानविषयतया कारणतावच्छेदकता, 'प्रथमत इति आद्यव्युत्पत्तिसमय इत्यर्थः, 'तस्यैव' पदत्वावच्छिन्नस्यैव, 'कारणत्वावधारणादिति शाब्दबुद्धिसामान्यं प्रति

(१) इति चेत्, नेति क०।

मिति, 'आ' ईषत्, श्वेतं रूपं पश्यत इत्यर्थः, इत्येके। 'आ पश्यत इति व्यवहितोपसर्ग इत्यन्ये। आरूपशब्दोऽस्पष्टार्थक इत्यप्याहुः। तथा हेतुत्वे गौरवमित्याशयेनाह, 'प्रयोजकेति, 'प्रथमत इति। ननूपायस्यान्वयादेः साधारणतया प्रयोजकत्वमात्रमवधारयति, न तु कारणत्वं गृहीतमपि कारणद्वयकल्पनागौरवादग्रे त्याज्यं कार्य्यान्वितशक्तिवत्। न चैवं पदे शक्तिरपि न स्यात् इति वाच्यं। प्रयोजकत्वगर्भाया एवेश्वरेच्छायाः शक्ति-

पदार्थेषु शक्त्यन्तरकल्पने गौरवात्, तदाहुः, "प्राथम्यादभिधातृत्वात्तात्पर्य्योपगमादपि। पदानामेव सा

कारणतावच्छेदकत्वावधारणादित्यर्थः। नन्वस्तु पदज्ञानस्य करणत्वं तथापि पदार्थोपस्थितेरपि हेतुत्वं दुर्व्वारमन्वय-व्यतिरेकयोरविशेषादित्यत आह, 'पदार्थेष्विति, 'शक्त्यन्तरकल्पनइति तत्तच्छाब्दबुद्धित्वावच्छिन्नं प्रति ज्ञानविषयतया कारणतावच्छेदकत्वान्तरकल्पन-इत्यर्थः, अन्वय-व्यतिरेकयोर्ज्ञानस्य कारणतावच्छेदकसम्बन्धतया विशेषणज्ञानादिरूपतया वोपपत्तेरिति भावः। 'प्राथम्यादभिधातृ-त्वादिति, प्राथम्यमभिधातृत्वे हेतुः, 'अभिधातृत्वं' बोधकत्वं, तथाच प्रथमगृहीतत्वेन पदानां बोधकत्वावश्यकत्वादित्यर्थः, 'तात्पर्य्योपग-मादपीति पदविशेष्यकतात्पर्य्यज्ञानस्य शाब्दबोधे विशिष्य हेतुत्वो-पगमादपीत्यर्थः, 'पदानामेवेति, 'एवकारात् पदार्थव्यवच्छेदः, 'सा शक्तिः' शाब्दबुद्धिं प्रति विशेषतः शक्तिस्व ज्ञानविषयतया कारण-तावच्छेदकता। नन्वेवं श्वेतोऽश्वो धावतीति धीः कथं स्यादित्यत-

त्वाभ्युपगमादिति चेत्, न, अनन्यथासिद्धान्वयादेस्तद्ग्राहकत्वं व्यापारेण च मान्यथासिद्धिरित्यादिप्रागुक्ते तात्पर्य्यात्, 'शक्त्यन्तरेति,। ननु कारणता यदि शक्तिः सास्त्येव पदवत्, अतएव विषयाबाधादीश्वरेच्छापि। न चास्मा-च्छब्दादिति शब्दगर्भा सा, तर्हि तत्र बाधो न गौरवं पदार्थान्तरकल्पा तु पदेऽप्यनभ्युपगतेति चेत्, न, तद्विषयतया तदिच्छाया ज्ञानहेतुत्वे गौरवा-दित्यत्र तात्पर्य्यं। 'अभिधातृत्वादिति भट्टमते, लिङ्गादिपदाभिप्रायेणाभि-

शक्तिर्व्वरमभ्युपगम्यतां" ॥ इति, श्वेतोऽश्वोधावतीति धीश्च लिङ्गजा पदस्य क्लृप्तकारणभावस्याभावादिति ।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ शब्दाख्यतुरीयखण्डे कार्य्यान्वितशक्तिवादः ।

---

---

आह, 'लिङ्गजेति, अनुमानञ्चायं श्वेतोऽश्वो ह्रेषावत्त्वात् । न च ह्रेषाया ज्ञानेऽपि तद्वत्त्वं श्वेतेऽसिद्धमिति वाच्यं । ह्रेषाया आश्रयशरीराकाङ्क्षायामुपस्थितश्वेत एव मनसा तद्वत्त्वग्रहात् ततोऽयं श्वेतोऽश्वो धावति खुरविक्षेपशब्दविशेषवत्त्वात् पक्षधर्म्मतासिद्धिस्तु पूर्व्ववदिति भावः । इदमुपलक्षणं क्वचिन्मनसापि तादृशधीर्द्रष्टव्या ।

केचित्तु अयं श्वेतो धावदश्वः ह्रेषावत्त्वे सति खुरविक्षेपशब्दविशेषवत्त्वादित्यनुमानप्रकारमाहुः । तदसत्, तस्य श्वेतोऽश्वो धावतीत्याकारविरहादिति समासः ।

इति श्रीमथुरानाथ-तर्कवागीशविरचिते तत्त्वचिन्तामणिरहस्ये शब्दाख्यतुरीयखण्डरहस्ये कार्य्यान्वितशक्तिवादरहस्यं ॥

---

---

धाराश्लत्त वृत्तेरित्याहुः । 'लिङ्गजेति, अयं श्वेतो धावदश्वः ह्रेषाशब्दकारित्वे सति खुरविक्षेपविशेषकारित्वादिति लिङ्गजेत्यर्थः । इति प्रकाशः ।

# अथ जातिशक्तिवादः।

एवं पदार्थमात्रे शक्तौ[1] पदार्थो निरूप्यते। तत्र प्रा-

(१) कार्य्यान्वितशक्तिवादपर्य्यन्तं मूलं मथुरानाथकृतरहस्याभिधानव्याख्यया सहितं प्रकाशितं। तत्परवर्त्तिनः आख्यातवादपूर्व्ववर्त्तिनश्च मूलभागस्य मथुरानाथकृतरहस्यनामकव्याख्याया दुर्लभत्वेन मथुरानाथोपजीव्यजयदेवमिश्रकृतालोकाख्यव्याख्यासाहित्येन प्रकाशे प्रवृत्तमस्माभिरिति।

जातिशक्तिवादे 'एवमिति एवम्प्रकारेणेत्यर्थः, 'पदार्थमात्रे शक्तौ' स्वार्थशाब्दबुद्धित्वमात्रस्य पदानां कार्य्यतावच्छेदकत्वसिद्धौ, 'मात्रपदात् कार्य्यत्वान्वितत्वांशपरिग्रहः, 'पदार्थो निरूप्यत इति पदानां स्मारकशक्तिविशेष्यो विचार्य्यत इत्यर्थः, गवादिपदानां गोत्वादिजातावेव शक्तिर्न तु गवादिव्यक्तिषु व्यक्तीनामनन्ततया तत्र शक्तिसम्बन्धकल्पने गौरवात्। न च शक्तेर्गोशाब्दबुद्धौ बोद्धव्येत्यादीच्छारूपतया व्यक्तीनामपि शक्तिसम्बन्धित्वं दुर्व्वारमिति वाच्यं। शक्तेर्गोपदाद्गोत्वप्रकारकबोधो भवत्वित्यादीच्छारूपतया अतिरिक्तपदार्थरूपतया वा तादृशेच्छारूपत्वासिद्धेः। न च गोत्वादेः शक्यत्वे गोत्वत्वादिकं शक्यतावच्छेदकमिति महद्गौरवमिति वाच्यं। गोत्वादौ निरवच्छिन्नशक्त्यभ्युपगमात् शक्तेः किञ्चिदवच्छिन्नत्वनियमे मानाभावात्। किञ्च गोत्वप्रकारकगोशाब्दबुद्धौ गोत्वविशिष्टशक्तिज्ञानकारणत्वमपेक्ष्य लाघवाद्गोत्वशक्तिज्ञानमेव हेतुः। न चैवं गोपदं गव्यशक्तमिति ज्ञानेऽपि गोपदाद्गोशाब्दबोधापत्तिरिति वाच्यं। न्यायनयेऽपि गोपदं गोत्वाशक्तमिति ज्ञाने गोपदाद्गोत्वशाब्दबोधापत्तिरित्यनुयोगस्य तुल्यत्वात्।

भाकराः । यद्यप्यानयनादिव्यवहाराद्व्यक्तावेव शक्ति-रुचिता तथाप्यानन्त्य-व्यभिचाराभ्यां[१] तत्र न शक्ति-

अथ जातिशक्तिवादालोकः ।

'आनन्त्येति यदि यत्र शक्तिग्रहस्तत्र शाब्दधीस्तदानन्तासु व्यक्तिषु शक्तिग्रहाभावात् अगृहीतशक्तिके शाब्दधीर्न स्यात् यद्यन्यत्र शक्ति-

(१) आनन्त्याद्यभिचारादिति क० ।

न च न्यायनयेऽपि गोत्वविशिष्टशक्तिज्ञानं न गोत्वप्रकारकशाब्दबोधे हेतुर्मानाभावात् किन्तु पदार्थस्मृतावेव तत्तद्यक्तित्वेनोद्बोधकविधया हेतुरिति न कार्य्य-कारणभावे लाघव-गौरवावतार इति वाच्यं । तथापि पदार्थोपस्थितेः कार्य्य-कारणभावे लाघव-गौरवसत्त्वात् पदनिष्ठगोत्वविशिष्टवृत्तिज्ञानजन्यगवोपस्थितित्वेन हेतुत्वमपेक्ष्य पदनिष्ठगोत्ववृत्तिज्ञानजन्यगवोपस्थितित्वेन हेतुत्वे लाघवात् स्वरूपतो गोत्वनिष्ठशक्तिज्ञानाद्गोशाब्दबोधवत्तादृशगोत्वनिष्ठलक्षणाज्ञानादपि गोशाब्दबोधस्येष्टत्वात् । न चैवं गोपदं गोत्ववदित्याकारकं गोत्वं गोपदवदित्याकारकं वा शक्तिज्ञानं गोत्वप्रकारकगोशाब्दबोधे गोत्वप्रकारकगोस्मृतौ वा हेतुरिति फलितं, तथाच क्वचित् समवायेन गोत्वप्रकारकगोशाब्दधीः क्वचिच्च कालिकादिसम्बन्धेनेत्यत्र किं नियामकं एवं क्वचित् समवायेन गोत्वप्रकारिका गोस्मृतिः क्वचिच्च कालिकादिसम्बन्धेनेत्यत्र वा किं नियामकमिति वाच्यं ।

एतत्पर्य्यन्तं जातिशक्तिवादस्य रहस्यनामकव्याख्यानमस्माभिर्लब्धमित्येतद्विज्ञापनमेवैतत्खण्डितांशसन्निवेशनप्रयोजनमिति ।

'आनन्त्येति सर्व्वासामनन्तव्यक्तीनामुपस्थापनमशक्यमिति कस्याश्चिदेव शक्तिग्रहो वाच्यः स च व्यभिचारी व्यक्त्यन्तरस्याप्युपस्थितिदर्शनादित्यर्थः ।

ग्रहः, समुच्चयेन शक्यत्वे गां दद्यादित्यादौ सर्व्वोपादानासामर्थ्यं एकस्य शक्यत्वेऽनध्यवसायः। न च गोव्यक्तिमात्रमर्थः, मात्रशब्दस्य सर्व्वार्थत्वे उक्तदोषात्, सामान्यार्थत्वे व्यक्तेरप्रतीतेः, नानार्थत्वे च सर्वासां प्रत्येकं ज्ञातुमशक्यत्वं, शक्तौ शक्ये च गौरवं, अपूर्वगवि व्यवहाराभावश्च। नापि गोत्वेनोपलक्षिता

ग्रहोऽन्यत्र शाब्दज्ञानं तदा शक्तिधीः शाब्दज्ञाने व्यभिचारिणीत्यर्थः, यद्यन्यशक्तिज्ञानादन्यधीस्तदा 'व्यभिचारात्' व्यभिचारप्रसङ्गात्, शक्तिग्रहमात्रं विनापि स्यादित्यपि कश्चित्। 'अनध्यवसायः' का सा व्यक्तिर्या गोपदवाच्या इत्येवं रूपः। 'गोव्यक्तिमात्रं' गोत्वमित्यर्थः, 'नानार्थत्व इति, तत्तद्व्यक्तित्वस्य तदा प्रवृत्तिनिमित्तत्वादिति भावः। 'अपूर्व्वगवीति समासान्तविधेरनित्यत्वाद्बोध्यं। नन्वस्त्येव सामा-

केचित्तु एकव्यक्तेस्तदन्यसर्व्वव्यक्त्यव्याप्यत्वाद्व्यभिचारात्तद्व्याप्यत्वे चैकाधिकरण एव सर्व्वव्यक्तिसम्भवे सर्व्वग्रहसम्भवोऽपीति भावः। आनन्त्यदोषं सत्येव मिलितानां सर्व्वव्यक्तीनां शक्यत्वे दोषान्तरमाह, 'समुच्चयेनेति, अन्यतमव्यक्तिः शक्येति नोक्तदोषद्वयमित्यत आह, 'एकस्येति, इयं व्यक्तिः शक्या अन्या वेत्यनिर्धारणात् गां दद्यादित्यादावप्रवृत्त्यापत्तेरित्यर्थः, 'अप्रतीतेरिति अप्रतीत्यापत्तेरित्यर्थः, अतएवेति शेषः। अस्मन्न्यायेन व्यक्तित्वाभाभ्युपगमे वा मन्मतप्रवेश एवेति भावः। ननु तत्तद्रूपेण सर्व्वा व्यक्तिः शक्या तथाच गोपदं नानार्थं अतएव नानध्यवसाय इत्यत आह, 'नानार्थत्व इति, 'प्रत्येकमिति प्रत्येकरूपेणेत्यर्थः, 'शक्तौ' नानाशक्तौ, 'शक्ये' नानाशक्यतावच्छेदक इत्यर्थः, 'अपूर्व्वगवीति तत्र तेन रूपेण शक्तेरगृहीत-

व्यक्तिः शक्या धेनुपदवदतोन शक्यानन्त्यं, न व्यभिचारः, न सर्वासङ्ग्रहः, न नानार्थत्वं, गोत्वेन तासामैक्यादिति वाच्यं । रूपान्तरेण विज्ञातमन्येन रूपेण हि उपलक्ष्यते यथा काकेन गृहविशेषोगोत्वेन धानकर्म्मव्यक्तिविशेषः स्वतोविलक्षणः, न तु काकाद्याकारेणैव तत्प्रतीतिः । न च व्यक्तीनां जातिं विना रूपान्तरमेकमस्ति ज्ञायते वा, गोपदाद्गौरित्येव प्रतीतेः, गोत्वविशिष्टे च कार्य्यान्वयाद्गोत्वं विशेषणं नोपलक्षणं, तदन्येन कार्य्यान्वये उपलक्षणं, यथायं

---

वत्त्वादीत्यत आह, 'ज्ञायते वेति, तदेवोपपादयति, 'गोपदादिति ।

---

त्वाद्व्यवहाराभावप्रसङ्ग इत्यर्थः, एतच्च समासान्तविधिरनित्य इति साधु । 'न व्यभिचार इति, द्वितीयपक्षे दोषायेति शेषः । तन्मतेनाह, 'गोत्वेनेति । ननु तत्रोत्तृणत्वादिकमिवात्रापि सास्रादिमत्त्वादिकमस्तीत्यत आह, 'ज्ञायते वेति । ननु ज्ञायते चेत्यत आह, 'गोपदादिति यदि गोत्वोपलक्षितत्प्रकारावच्छेदेन शक्तिस्तदा तत्प्रकारिका धीः स्यादित्यर्थः । दोषान्तरमाह, 'गोत्वेति गां पश्येत्यादौ गोत्वविशिष्टे दर्शनाद्यन्वयादित्यर्थः, कार्य्यान्वयिविशेषणं तदन्वय्युपलक्षणमिति लक्षणानुसारेणेदं । उपलक्षणमुदाहरति, 'यथेति वाससि तत्पदवाच्यत्वानन्वये तस्योपलक्षणत्वमित्यर्थः ।

केचित्तु गोत्वं यदि वासोऽवच्छेदके गव्युपलक्षणं तदा देवदत्तपदजन्यज्ञाने वासस्तद्गोपदजन्यज्ञाने गोत्वमपि न स्फुरेदित्यत्र तात्पर्य्यादित्याहुः ।

वासस्वी देवदत्तशब्दवाच्य इत्यत्र वासः। न च गोत्वैकत्वेन व्यक्तीनामैक्यं क्रियते, अशक्यत्वात्। नापि ज्ञाप्यते, असत्त्वात्। न च तदेकत्वमेव व्यक्तेरेकत्वं, असम्भवात्। नापि व्यक्तिः शक्या गोत्वमवच्छेदकं कारणत्वे दण्डत्ववत्, एवं हि गोपदात् न गोत्वविशिष्टबुद्धिः स्यात् शक्तिग्रहाहितसंस्कारसचिवाद्गोपदादेव धेनुपदादिव गोत्वविशिष्टज्ञानं तदुद्बोधश्च तद्वदेव, परम्परासम्बन्धादिति चेत्, न, तत्र हि धानकर्म्मव्यक्तिविशेषस्यावश्यशक्यत्वेऽनुगमाय गोत्वमवच्छेदकमात्रं न तु वैपरीत्यं गोत्वस्य वृषभेऽपि सत्त्वात्, इह तु व्यक्तिरतिप्रसक्तेति जातिविशिष्टैव सा शक्या

---

गोत्वेन तासामैक्यादिति दूषयति, 'न चेति। 'एवमिति अवच्छेदकत्वेऽपि यथा दण्डत्वे न कारणत्वं तथा गोत्वेऽपि न शक्यत्वमिति तदुपस्थितिर्न स्यादित्यर्थः। अशक्यत्वेऽपि तदुपस्थितिः स्यादित्याह, 'शक्तीति, शक्यवृत्तित्वं परम्परासम्बन्धः। गुरुमतेन दूषयति, 'तत्र हीति। ननु लाघवाद्गोत्वमपि शक्यमस्त्वित्यत आह, 'न त्विति। ननु धानकर्म्मविशेषवदिहापि व्यक्तिविशेषाणां शक्यत्वमस्तु। न चाननुगमः, गोत्वेनैवानुगमात्। न हि धानकर्म्मविशेषेऽप्यन्यदनुगमकं, तथात्वे अनुगमार्थं गोत्वमवच्छेदकमित्यसङ्गतं स्यात्। न च तत्र तत्तद्धानकर्म्मत्वमपि शक्यमित्यनतिप्रसङ्गः इह तु व्यक्तिरतिप्रसक्तेति वाच्यं। तत्तत्प्रकारकप्रतीत्यापत्तेः, अन्यथा तत्रापि तत्तद्व्यक्तित्वं शक्यमिति सुवचं स्यादिति चिन्त्यं।

स्यात् । वस्तुतस्तु जातेः शक्योपलक्षणत्वे शक्त्यव-च्छेदकत्वे वावश्यकत्वात् लाघवाच्च जातिरेव शक्या स्यात् न तु व्यक्तिः, धेनुपदे तु गोत्वं न तथा अति-प्रसङ्गात् । अस्तु तर्हि जातिविशिष्टं शक्यं स्वव्यवहारेण च स्वहेतुतया जातिविशिष्टज्ञानस्यानुमितत्वादिति चेत्, न, विशेष्यभेदाद्विशिष्टानामनन्तत्वेन व्यक्तिवा-च्यत्वे उक्तदोषग्रासात् । विशेषणस्यैक्येन विशिष्टानामै-क्यस्योपलक्षणपक्षवद्दुष्यत्वात्, तस्माद्व्यक्तेरपदार्थत्वे जातिरेव पदार्थः । वस्तुतस्तु व्यक्तौ जातिरनुगमिका विशेषिका चावश्यं वाच्येति नागृहीतविशेषणान्यायेन सैव वाच्या । अथ जातावपि व्यक्तिरेव विशेषः धर्म्मा-न्तराभावात् गवेतरावृत्तित्वे सति सकलगोवृत्तित्वादे-रुपाधेरपि व्यक्तिघटितत्वात् नागृहीतविशेषणान्या-योव्यक्तावपीत्युभयमपि वाच्यमिति, न, जातेः स्वत-

केचित्तु एतदस्वरसादेवाह, 'वस्तुतस्त्विति । शक्तौ नावश्यकत्वमित्य-रुचेराह, 'लाघवाच्चेति, व्यक्तिधीश्च संस्कारादेवेति भावः । 'अतिप्रसङ्गा-दिति, वृषभ इति शेषः । यद्यपि लाघवादित्युक्तं तथापि विशिष्टस्यै-वोपस्थितत्वात् तत्र शक्तिरित्याह, 'अस्त्विति । नन्वेवमवच्छेदकैक्येन धान-कर्म्मविशेषाणामपि नैक्यमिति तव धेनुपदेऽपि तुल्यं दण्डत्वादिविशिष्ट-कारणत्वे का गतिरित्यत आह, 'वस्तुतस्त्विति, लाघवादिति भावः । 'विशेष इति विशेषिकेत्यर्थः, 'धर्म्मेति विशेषकेत्यर्थः, 'गवेतरेति, गोपद-मुभयत्र साक्षादिमत्परमिति नात्माश्रय इत्याहुः । 'उभयमपीति

एव व्यावृत्तत्वात् । अन्यथा जाति-व्यक्त्योर्व्यावृत्तत्वज्ञानादन्योन्यव्यावृत्तत्वबुद्धावन्योन्याश्रयः । स्वतोव्यावृत्तत्वञ्च न स्वयमेव स्वव्यावर्त्तकत्वं स्वस्मिन् स्वावृत्तेः । नापि व्यावर्त्तकं विनैव व्यावृत्तत्वं, असम्भवात् । किन्तु स्वाश्रयवत्स्वात्मनि व्यावृत्तधीजनकस्वभावत्वं परेषामन्त्यविशेषवत् । व्यावर्त्तकधर्म्मेऽपि धर्म्मान्तरादेव व्यावृत्तबुद्धावनवस्था स्यादतएव किञ्चिद्धि वस्तु स्वत एव विलक्षणमित्याहुः ।

अस्तु वा व्यक्त्या व्यावृत्ततया बोधिता जातिरेव पदार्थो लाघवात् न तु वैपरीत्यमुभयं वा गौरवात्, कुतस्तर्हि व्यक्तिधीः, जातिशक्तादेव कथमन्यशक्तादन्यधीः, स्वभावात्, तत्स्वभावत्वमेव व्यक्तिशक्तिं विना

---

ननु स्वतो व्यावृत्तायां जातौ विशेषणं व्यक्तिरवश्यं वाच्या व्यक्तिविशिष्टज्ञानाभावे निर्विकल्पकविषयीभूतायां जातौ शक्तिग्रहात्रिर्विकल्पकस्य व्यवहारालभ्यत्वात् तथाच नागृहीतविशेषणान्यायस्तुल्य इत्यत आह, 'अस्तु वेति, 'व्यावृत्ततया' विशेष्यतया, यद्वा स्वतएव

---

विनिगमकाभावादिति भावः । 'स्वस्मिन्निति, व्यावृत्तिसमानाधिकरणस्यैव व्यावर्त्तकत्वादिति भावः । 'नापीति, व्यावर्त्तकत्वञ्चात्र व्यावृत्त्यधिकरणतावच्छेदकत्वं न तु व्यावृत्तिधीजनकत्वमतो नाग्रिमग्रन्थविरोधः । 'गौरवा-

न निर्व्वहतीति चेत्, न, गोपदं हि नियमतोजाति-व्यक्ती बोधयति तत्रास्य जातिशक्तिधीरेव सहकारिणी कल्प्यते लाघवादावश्यकत्वाच्च, न तु व्यक्ति-शक्तिधीरपि गौरवात् । जातिशक्तिज्ञाने सति तां विना व्यक्तिबोधे विलम्बाभावात् यथा तव पदार्थ-शक्तादेवान्वयधीः । यद्वा जातिशक्तमेव पदं व्यक्तिं बोधयति अशक्यत्वेऽपि जात्याश्रयत्वमेव नियामकं यथा अशक्यमपि स्वार्थान्वयं बोधयति । तत्र प्रयोज-कत्वेन क्लृप्ता शक्तिरेवास्तु जात्याश्रयत्वस्य तथात्वकल्पने गौरवादिति चेत्, न, अन्यलभ्यस्यापदार्थत्वादन्यथा अन्वयोऽपि शक्यः स्यात् लक्षणाद्युच्छेदश्च । अथ वा

---

व्यावृत्ततया व्यक्तिविशेषणतयाप्युपस्थितेरित्यर्थः, 'लाघवादिति तथाच न्यायसाम्येऽपीदमेव विनिगमकमिति भावः । 'नियमत इति, जातिशक्तिज्ञानत्वं हेतुतावच्छेदकं जातिविशिष्टज्ञानत्वं कार्य्यताव-च्छेदकं इत्याद्यः कल्पः, 'यद्वेतिद्वितीयकल्पे जातिशक्तं पदं जातिं व्यक्तिञ्च बोधयति तत्र जातिबोधे जातिशक्तिधीः व्यक्तिबोधे

दिति व्यक्तेर्नानार्थत्वादित्यर्थः । 'अस्येति पदस्येत्यर्थः, यथा पदार्थशक्तादन्वय-बोधे आकाङ्क्षादिधीः सहकारिणी तथा अशक्यत्वाविशेषेऽप्यन्वयबोधे न सा सहकारिणीत्यत्र स्वभाव एव नियामक इति भावः । नियामका-न्तरमाह, 'यद्वेति, 'अन्येति, तथाच प्रामाणिकं गौरवमिति भावः । एकवित्तिवेद्यत्वमेव वा नियामकमित्याह, 'अथवेति, 'तद्विषयमिति, यद्यपि

जातिशक्तिज्ञानाज्जातिधीर्भवन्ती व्यक्तिमपि गोचरयति। व्यक्तिं विना जातेरभावात्, यो येन विना न भासते तद्धीहेतुस्तमवबोधयति, यथा ज्ञानधीहेतुस्तद्विषयं, यथा वा तत्राधिकरणसिद्धान्तो ज्ञानादिनित्यत्वं, अन्यथा पदं जातिमपि न बोधयेत् केवलाया अप्रतीतेः, तथाच जातिशक्तिकल्पनावैयर्थ्यं तस्मात् जातिज्ञानार्थं कॢप्ता शक्तिर्व्यक्तिमपि बोधयति एकवित्तिवेद्यत्वनियमात्। एतेनैकवित्तिवेद्यतैव व्यक्तिशक्तिं विना न स्यात् ज्ञापकाभावात्। न हि व्यक्तिज्ञानमहेतुकं जातिहेतुकं वा, सदातनत्वप्रसङ्गात्। नापि जातिधीहेतुकं, संविद्भेदापत्तेरिति निरस्तं। जाति-

---

स्वरूपसच्छक्यजात्याश्रयत्वं सहकारीति, 'अथ वेति तृतीयकल्पे जातिशक्तिज्ञानत्वं जातिबोधे कारणतावच्छेदकं व्यक्तिबोधस्तु सामग्रीमहिम्ना जातिबोधकस्य व्यक्तिबोधकत्वनियमादिति। 'अधिकर-

---

ज्ञानमस्तीत्यादौ व्यभिचारस्तथापि सविषयकमेव ज्ञानं तत्रापि भासत इति मतेनेदमित्येके। केचित्तु प्रत्यक्षाभिप्रायेणेदमित्याहुः। 'यथा वेति, 'अधिकरणसिद्धान्तः' पक्षधर्मताबललभ्योऽर्थः यथा ज्ञानादिनित्यत्वमादाय सिध्यतीत्यर्थः। स्वमतोपष्टम्भेनाह, 'अन्यथेति, 'सदातनत्वेति, 'अहेतुकमित्यत्र तन्मते प्रागभावाभावान्न व्यभिचारः, भावत्वेन विशेषणादित्यन्ये। अनादि स्यादित्यत्र तात्पर्यमित्यपरे। 'जातिहेतुकमित्यत्र यद्यपि जातिसाक्षात्कारे

शक्तेरेव व्यक्तिज्ञापकत्वात् । ननु जातिं विना प्रत्यक्षादिना व्यक्तिज्ञानादन्यैव व्यक्तिधीसामग्री जातिविशिष्टज्ञानञ्चोभयज्ञापकसामग्रीद्वयसमाजादार्थं । अतएव व्यक्तिं विना जातेरस्मरणेन जातिस्मरणस्य व्यक्तिविषयत्वनियमात् जातिज्ञापकमात्रमेव व्यक्तिज्ञापकं कल्प्यते सामान्यकल्पनायां बाधकाभावादिति परास्तं। जातिं विनापि व्यक्तिस्मरणात्तत्रान्यैव सामग्री जातिविशिष्टस्मरणञ्चोभयांशस्मारकसमाजादिति । अत्र ब्रूमः । जाति-व्यक्तिप्रत्यक्षादिबोधे तथैव सामग्रीद्वयस्य पृथगन्वय-व्यतिरेकग्रहाच्छाब्दे तु व्यक्तिबोधे जाति-

---

णेति पक्षधर्म्मताबललभ्योविशेष इत्यर्थः, 'जातिं विनेति जातिज्ञापकसत्त्वे जातिज्ञानापत्तेः तत्र जातिज्ञापकं विनैव व्यक्तिज्ञानमित्यर्थः । 'पृथगिति संयोगादेर्व्यक्तिग्राहकस्य संयुक्तसमवायादेर्जातिग्राहकस्य प्रत्येकं पृथगन्वय-व्यतिरेकग्रह इत्यर्थः, न तु जाति-व्यक्तिग्रहे पृथग्जातिग्रहस्य व्यक्तिव्यभिचाराभावादिति । 'शाब्दे त्विति, नन्वेवं पूर्व्वकल्पनादविशेषः शाब्दव्यक्तिज्ञाने जातिशक्तिज्ञानहेतुत्वे पर्य्यवसा-

---

व्यभिचारः जातिमात्रहेतुत्वमप्रसिद्धं, तथापि यदि व्यक्तिज्ञानं जातीतरानपेक्षं स्यादित्यत्र तात्पर्य्यं । न च जातीतरेति व्यर्थं, अखण्डाभावे तात्पर्य्यात् । 'अन्यैवेति, अन्यथेदं रजतमिति भ्रमस्थले व्यक्तिधीर्न स्यात् जातिधीसामग्र्यभावादिति भावः । 'सामग्रीद्वयस्येति, संयोगो व्यक्तेः, संयुक्तसमवायो-

शक्तिज्ञानमेव हेतुर्लाघवात् न सामग्र्यन्तरं, तत्सत्त्वे तेन विना विलम्बाभावात्। एवञ्च जातिशक्तत्वेन ज्ञातं पदं जातिविशिष्टस्य स्मारकमनुभावकञ्च। ननु ज्ञाने शक्तिः शक्यत्वात् तथाच यस्य ज्ञाने शक्तिस्तच्छक्यं जाति-व्यक्तिज्ञाने च शक्तिरिति जातिवद्व्यक्तिरपि शक्येति चेत्, न, यद्विषयतया हि ज्ञाता ज्ञाने शक्तिरुपयुज्यते तत् शक्तिज्ञाने विषयतया शक्यतावच्छेदकं शक्यं जातिज्ञानञ्च तथेति जातिरेव शक्या न तु व्यक्तिज्ञानत्वमप्यवच्छेदकं गौरवात्। न च शक्यज्ञाने नियतविषयत्वमेव शक्यत्वं व्यवहारानुमित-

---

नादिति, मैवं, स्मरणहेतुसंस्कारवज्जातिज्ञापकसामग्र्या व्यक्तिज्ञापकत्वकल्पनादिति सामान्य-विशेषभेदेन कल्पभेदोपपत्तेरिति। 'जातिज्ञानं' जातिज्ञानत्वं, 'तथा' अवच्छेदकं, 'ज्ञातशक्तीति स्वविषयज्ञातशक्तीत्यर्थः, अन्वये व्यभिचारवारणाय 'योग्यतादीति,

---

जातेरिति सामग्रीभेदस्य तत्र प्रमाणासिद्धत्वादित्यर्थः, 'न सामग्र्यन्तरमिति, यद्यपि जाति-व्यक्त्योरुपस्थित्यनन्तरमन्यतरत्र बाधावतारादन्यतरमात्रान्वयबोधसम्भवादत्रापि सामग्रीभेदसम्भवस्तथापि यत्रोभयत्र न सा बाधप्रतीतिस्तदभिप्रायेणेदमित्याहुः। एतन्मते चाकृतिभानं नेत्येके। व्यक्तिवदेव तद्भानमित्यन्ये। 'जातिज्ञानञ्चेति, जातिश्च तथेत्यत्र तात्पर्य्यं। 'तत्सम्बन्धीति अन्वयसम्बन्धीत्यर्थः।

शक्यानुभवविषयाणामन्वये तत्सम्बन्धिमिति-मातॄणा-मपि शक्यतापत्तेः, एवञ्च जाति-व्यक्तिज्ञानजनकत्वा-दुभयत्रापि शब्दशक्तिः। जात्यंशे सा ज्ञाता व्यक्त्यंशे स्वरूपसती हेतुर्लाघवादिति कुब्जशक्तिवादः। एवञ्च सैव तदैव तेनैव ज्ञाता अज्ञाता च वाचिका अवाचि-कावेत्यत्र जातिव्यक्त्यवच्छेदकभेदेनाविरोधः, त्वया-प्यन्वये कुब्जशक्तिस्वीकारात्। व्यक्तेः शक्यत्वेऽपि[१] ज्ञात-शक्तिशब्दजनितज्ञानविषयत्वलक्षणं वाच्यत्वं नास्ति। न चैवं परिभाषा, शब्दजन्यज्ञानविषयत्वेन वाच्यत्वे लाक्षणिकादेरपि वाच्यत्वापत्तेः, व्यक्तेः शक्यत्वेऽपि व्यक्तिशक्तिज्ञानं न कारणं व्यक्तिशक्तिज्ञानत्वं नाव-च्छेदकमिति लाघवं।

यत्तु तच्छक्तत्वेन ज्ञातादेव तदर्थबोधः शक्तिभ्रमा-दपि धीदर्शनात्। तथा योग्यताद्यन्वयानुपपत्तौ विना

(१) वाच्यत्वेऽपीति क० ।

यद्यपि अनिष्टापत्तिः, तथापि मिलितानां शक्यत्वापादने तदभाव इति भावः। 'मिति-मातॄणामिति स्वमतावष्टम्भेन। 'अन्वयेति, न्यायमते परमनिष्ठापा-दनं बोध्यं, 'ज्ञातशक्तीति, तद्विषयत्वेनेति शेषः। अधिकोपपत्तिवचनाय पूर्व्वोक्तमेव विवृतमिति न पौनरुक्त्यं दोषः। 'नावच्छेदकमिति न कारणता-वच्छेदकमित्यर्थः।

'ज्ञातादेवेति लक्षणादिकं विनेति शेषः। पक्षान्तरमाह, 'तथेति,

पदादुपस्थितिः शक्तिसाध्येति व्यक्तिरपि शक्येति। तन्न। अन्यलभ्ये शक्तेरकल्पनात्, अन्यथा तवान्वयेऽपि शक्तिर्लक्षणाद्युच्छेदश्च। ननु न जातिरर्थः व्यवहाराभावेन व्युत्पत्तेरसिद्धेः, कारकोपरक्तक्रिया हि व्यवहारगोचरः, जातिश्च न क्रिया नित्यत्वात्, कारकं न कर्त्रादि क्रियायास्तत्रासमवायात् परसमवेतक्रियाफलभागित्वाभावात् कर्तृव्यापारानाश्रयत्वात् अचेतनत्वात् तया सह विभागाभावात् क्रियानाधारत्वाच्चेति चेत्, न, व्यक्तिव्यवहारादेव उक्तन्यायेन जातौ

---

लक्ष्ये व्यभिचारवारणाया 'अन्वयानुपपत्ति इति, 'अन्यथेति अन्यलभ्येऽपि शक्तौ विशेषणद्वयं त्यक्त्वा पदादुपस्थितिरित्येवास्त्वित्यर्थः, 'न कर्त्रादीत्यत्र प्रत्येकं हेतुमाह, 'क्रियाया इति, एतच्च वैयाकरणमतेन अन्यथा कृतेरिति ध्येयं।

---

अन्वयलाक्षणिकार्थमादाय व्यभिचार इति विनान्तं। 'शक्तिसाध्येति तद्विषयतया ज्ञातशक्तिसाध्येत्यर्थः, 'अन्यथेति, तथाचोक्तनियमेनान्यलभ्यत्वस्यैवोपाधित्वादप्रयोजकत्वमिति भावः। 'न क्रियेति, अनित्यैव क्रियेत्यभिप्रायेणेदमित्येके। आनयनादिक्रियेत्यर्थ इत्यन्ये। प्रत्येकभेदे साध्ये क्रमेण हेतूनाह, 'क्रियाया इत्यादि कृतेरित्यर्थः, तेन पचतीत्यादौ पाकादेः कर्तृत्वसमवायान्न व्यभिचारः। न चैवं साध्यावैशिष्ट्यं, कर्तृपदवाच्यभेदस्य साध्यत्वेनोपाधिभेदात्, अन्योन्यात्यन्ताभावभेदाद्भेद इत्यप्याहुः। 'क्रियाफलेति जातेर्जन्यधर्म्मानाश्रयत्वादित्यर्थः, 'तयेति जात्येत्यर्थः, 'व्यक्तीति, जाति-

शक्तिग्रहात्, जातिसविकल्पकाद्यव्यावृत्ततया ज्ञातायां व्यक्तौ क्रियान्वयः, सविकल्पकञ्चालोचनद्वारा[१] जातिजन्यमिति परम्परया जातेरपि कारकत्वेनान्वयः। यद्वा न केवलव्यक्तेः कारकत्वं, न हि गौर्गच्छतीत्यत्र व्यक्तिमात्रं यातीति कस्यचित्प्रतीतिः, किन्तु जातिविशिष्टायाः, तथाचोभयमपि कारकं।

श्रीकरस्तु केवलजाति-व्यक्त्योरकारकत्वात् क्रियान्वयोव्यक्तेराश्रयतया जातेरवच्छेदकतया आरुण्यादिवत्, एवञ्च जातिशक्तपदात् जातेरनुभवः शाब्दोव्यक्तेरौपादानिकः अशक्यत्वादिति।

'श्रीकरस्त्विति, 'औपादनिक इत्येतावतैव पूर्व्वकल्पतोऽस्य भेदोऽवच्छेदकतायाः पूर्व्वकल्पेऽपि सत्त्वादिति।

(१) निर्व्विकल्पकद्वारेत्यर्थः।

व्यक्तिभावस्यैव नियामकत्वादिति भावः। 'आलोचनेति, यद्यपि तन्मते न निर्व्विकल्पकजन्यत्वं तथापि परमतेनेदं। अनुगतत्वबुद्धौ तद्धेतुरिति कृत्वा तथोक्तमित्यन्ये। ननु तथापि प्रकृतं शाब्दज्ञानं नालोचनजन्यं, किञ्चैवमपि जातेः सविकल्पके परम्परया कारकत्वेऽपि प्रकृतक्रियान्वये कारकत्वं नोपपादितमित्यरुचेराह, 'यद्वेति, 'किन्त्विति विशेषणे गोत्वेऽपि गमनक्रियान्वयावगमात् तदपि कारकमित्यर्थः। ननु बाधात् तत्र न तदन्वय इत्यरुचेराह, 'श्रीकरस्त्विति, 'आरुण्येति "अरुणयैकहायन्येत्यत्र गोः करणत्वेनारुण्यस्य चावच्छेदकत्वेन क्रियान्वयवदित्यर्थः। नन्वेवं गोत्वप्रकारकशाब्द-

अन्ये तु जातिशक्तमेव पदं जाति-व्यक्त्योः स्मारकमनुभावकञ्चेति व्यक्तेरपि शाब्दत्वं। न च वृत्तिं विनाऽन्वयानुभवेऽप्रवेशान्न व्यक्तेः शाब्दत्वं, वृत्तिं विनापि एकवित्तिवेद्यत्वनियमेन जातिशक्तादेव व्यक्तेरनुभवात्, अन्यथा जात्यन्वयोऽपि न स्यात् व्यक्तिं विना जातेरननुभवात्। अतएव जातिशक्तिरेव व्यक्तिं बोधयतीति गुरवः। किञ्च शक्त्योपस्थापितस्यान्वयानुभवं प्रति पदानां कारणत्वं अतो जातिवदुपस्थापिताया व्यक्तेरनुभवः पदात्, न तु तत्तच्छक्त्योपस्थापितस्य गौरवात्। न चैवमशक्यपरत्वे लक्षणा, यथा ह्यन्यत एव

---

'अन्ये त्वित्यनेन श्रीकरकल्पाड्भेदयितुं पूर्व्वोक्तं एवानूदितो-

---

ज्ञानानुपपत्तिरित्यरुचेराह, 'अन्ये त्विति, यद्यपि प्रागेतदुक्तं तथापि श्रीकरमतेनात्यन्ततो दोषदर्शनाय पुनरभिधानमिति मन्तव्यं, अत्र मते व्यक्त्यंशे स्वरूपसत्यपि न शक्तिरिति वा मतान्तरत्वाभिधानं। 'शाब्दत्वमिति शाब्दबोधविषयत्वमित्यर्थः। 'वृत्तिं विनेति स्ववृत्तिं विनेत्यर्थः, प्रत्युत स्वांशप्रवेशे गौरवमित्याह, 'किञ्चेति, 'अन्यत इति तुल्यवित्तिवेद्यत्वनियमादित्यर्थः। ननु जातिशक्तमिति ज्ञाने जातिविशेष्यकस्मरणात् कथं व्यक्तिविशेष्यकशाब्दधीरिति चेत्, न, शब्दशक्तिवैचित्र्यात् तदुपपत्तिरित्येके। गोपदेन गोत्वस्य विशेषणतयैवोपनयात् तद्विशेष्यकस्मरणासिद्धिरित्यन्ये। 'वस्तुतस्त्विति, नन्वत्र पौनरुक्त्यं कुत्र वा पूर्व्वपक्षे एतदुत्थानमिति चेत्, न, 'न चेत्यादिपूर्व्वपक्षे तृतीयसमाधिपरत्वात्। न च तत्रापि प्रथमसमाधिना

शानान्न शक्तिस्तथा लक्षणापि न तत् किमशक्योऽपि मुख्यः प्रयोगः, सत्यं, शक्त्या साक्षादुपस्थित एव तस्य मुख्यत्वात्त्वशक्त्येति त्वधिकं। वस्तुतस्तु जातिशक्तादेव व्यक्तिधीसम्भवान्न व्यक्तौ शक्तिः। यदि च ततो न तद्धीस्तदा तत्र शक्तिरेव स्यात्, अन्यथा तद्धीर्न स्यादेव। ननु पद-जातिभ्यामप्येकोजाति-व्यक्त्यनुभवः क्रियते, तत्र जात्यंशे पदस्य व्यक्त्यंशे जातेरनुभाव-कत्वमयमेव उपादानार्थ इति चेत्, तर्हि जातेः कारणत्वापेक्षया शक्तिज्ञाने उपस्थितव्यक्तेरवच्छेदकत्व-मात्रकल्पनैव लघीयसी जातेः प्रमाणान्तरत्वापातश्च। अतएव व्रीहीनवहन्तीत्यत्र व्यक्तौ न लक्षणा तत्साध्यो-

---

पौनरुक्त्यं, एकवित्तिवेद्यत्वेन व्यक्तिलाभाभिप्रायेण तस्योक्तत्वादस्य चान्यथा तल्लाभाभिप्रायकत्वादित्याहुः। केचित्तु 'तत्किमशक्योऽपीति शक्तिसाधक-पूर्व्वपक्षे समाध्यन्तरमिदमित्याहुः। 'अन्यथेति शक्त्यकल्पन इत्यर्थः, तथाच तत एव तद्धीरिति भावः। श्रीकरमतान्तरं शङ्कते, 'नन्विति, 'जातेरिति। ननु प्रमाणसहकारितया अस्याजनकत्वे कथं प्रमाणान्तरत्वं अन्यथा यो-ग्यताज्ञानादेरपि तथात्वापत्तेः, यदि च निर्व्यापारतया तस्य न तथात्वं तदात्रापि तुल्यमिति चेत्, न, तदंशे स्वातन्त्र्येणैव तद्धेतुत्वं निर्व्यापारस्य करणत्वमित्यभ्युपगन्तारं प्रति तदापादनात्। वस्तुतो जातिशक्त्यैव तथा धीसम्भवे जातेः करणत्वकल्पने गौरवादित्यत्र तात्पर्य्यं। 'अतएवेति यत-एव जातिशक्तादेव व्यक्त्यन्वयबोध इत्यर्थः, श्रीकरमते तु व्रीहित्वाश्रययावद्-घातस्य शब्दात् प्रतीतेर्लक्षणा स्यादिति भावः। ननु तथापि व्यक्तिमात्रा-

पस्थितेर्जातिशक्तित एव सिद्धेः। अस्तु वा गवावच्छेदकत्वेनारण्यादिवद्व्रीहित्वेऽप्यवघातान्वय इति। अत्रोच्यते। गोत्वज्ञाने गोज्ञाने वा शक्तं पदमित्याकारः शक्तिग्रहः तथाच शक्यज्ञाने विषयतया जातेरवच्छेदकत्वं व्यक्तिमादायैव प्रतीयते न केवलायाः व्यक्तिं विना जातेरप्रतीतेः, तथाच जातेरवच्छेदकत्वेनागृहीतविशेषणान्यायेन व्यक्तेरवच्छेदकत्वं वज्रलेपायितमिति शक्तिज्ञाने विषयतया अवच्छेदकत्वात् जातिवत्सापि शक्या तस्मात् परिहरैकवित्तिवेद्यत्वनि-

---

ऽन्यथा पूर्व्वनिर्व्विशेषत्वे पौनरुक्त्यापत्तेरिति ध्येयं। 'गोत्वेति गोत्वज्ञानत्वमवच्छेदकं न तु विशिष्टविषयत्वं अतः स्वविषयज्ञातशक्तिशब्दजन्यज्ञानविषयत्वं शक्यत्वं न व्यक्तावित्युक्तं, तत्रेदमुच्यते गोत्वज्ञानत्वेऽवच्छेदके विशिष्टविषयत्वमेवावच्छेदकं निर्व्विशेषणस्य तस्यानुपस्थितेरुपस्थितौ वा न समानवित्तिवेद्यत्वं तथाच व्यक्तिभानार्थमेव शक्तिरित्युभयथापि व्यक्तावुक्तरूपं शक्यत्वमित्यर्थः। ननु विशिष्टमेव गोत्वं ज्ञानविषयत्वेनोपस्थितं तत्रावच्छेदकत्वं विशेषणीभूतां

---

न्वये तन्मात्रोपस्थित्यर्थं लक्षणैव स्यादत आह, 'अस्तु वेति, ज्ञानशक्तिपक्षमाश्रित्याह, 'गोत्वज्ञान इति, मतभेदेनोभयोपन्यासः, उभयमते व्यक्तेरवच्छेदकत्वमित्याह, 'तथाचेति, 'नागृहीतेति। ननु यत्र प्रथमोपस्थितत्वं तत्र तन्न्यायावतारो न चात्र तथेति चेत्, न, तद्ग्रहं विना यत्र विशेष्यस्य ग्रहो न सम्भवति तत्रैव तन्न्यायप्रवृत्तेः, यत्र व्यक्त्या व्यावृत्ता जातिस्त-

यमं स्वीकुरु वा व्यक्तेर्व्वाच्यत्वं। अपि च यद्धर्म्मवत्तया ज्ञात एव यत्र यस्य ज्ञानं स तत्रावच्छेदकः व्यक्तिज्ञानत्वेन ज्ञात एव तत्र ज्ञाने शक्तिधीरिति व्यक्तिरपि शक्या। नन्वाद्यव्युत्पत्तौ मिति-मातृविषयत्वेन ज्ञात एव ज्ञाने प्रवर्त्तकत्वं ज्ञातं न च तयोर्ज्ञानं प्रवर्त्तकमतो व्यभिचारः, अन्यथा प्रवर्त्तकत्वेन मिति-मातृज्ञानमपि प्रयोज्यस्यानुमाय बालस्तत्रापि शक्तिं गृह्णीयात्, एवं तवापि कार्य्यान्वितज्ञान एव शक्तिः स्यात् तत्त्वेन ज्ञात एव ज्ञाने शक्तिग्रहादिति चेत्, मिति-मातृज्ञानत्वं कार्य्यान्वितज्ञानत्वञ्च विनापि प्रवर्त्तकज्ञाने घटज्ञानत्वादिकं ज्ञातुं शक्यमिति तयोर्नावच्छेदकत्वं किन्तु घटज्ञानत्वादिकमेव लाघवात् तयोरपि तत-

---

व्यक्तिमपहाय विशेष्यीभूतजातेरेव लाघवादित्यस्वरसादाह, 'अपि चेति। ननु स्वज्ञानस्य प्रवृत्तिं प्रति कारणत्वग्रहे मिति-मातृविष-

---

यत्वेन ग्राह्या तत्र प्रथमं व्यक्तिज्ञानमावश्यकमित्यप्याहुः। ननु जातिव्यक्त्योरवच्छेदकत्वप्रतीतावपि व्यक्त्यंशे तद्ज्ञानं भ्रमः लाघवेन जातेरेवावच्छेदकत्वादित्यत आह, 'अपि चेति, तथाच विषयाबाधात् तत्प्रमैवेति भावः। 'मिति-मातृज्ञानत्वमिति, तथाच नियतोपस्थित्यभावादेव कारणघटितोक्तदोषाभावात् न व्यभिचार इति भावः। 'तयोरपीति, मिति-मातृज्ञानलाभ इति तु परकीयोक्तं। ननु 'यद्धर्म्मवत्तयेत्यत्र लघुत्वं धर्म्मविशेषणमतो न व्यक्तेरवच्छेदकत्वं तस्या नानात्वेन गुरुत्वात्। न च तत्प्रवेशे गौरवं, एवं हि

एव प्राप्तेश्च। किञ्च पदं व्यक्तिज्ञानार्थं शक्यज्ञाने विषयतया व्यक्तेरवच्छेदकत्वमात्रं कल्पयति लाघवात् जातिविषयत्ववद्व्यक्तिविषयत्वस्य ज्ञानवित्तिवेद्यत्वेनावश्यं शीघ्रोपस्थितत्वात्, न तु जातिशक्तिस्तद्बोधे कारणान्तरं वा तदवच्छेदकं गौरवाच्छक्तिग्रहकाले कल्पनीयोपस्थितिकत्वाच्च।

यतया ज्ञात एव जाने प्रवृत्तिहेतुताग्रहः स्वज्ञानग्रहस्य च तद्वि-

एवकारस्याप्यप्रवेशे मिति-मात्रज्ञानत्वादावतिप्रसङ्गात्। किञ्चैवं धूमत्वादिकमवच्छेदकं न स्यात् इदन्त्वादिनोपस्थिते व्याप्तिग्रहसम्भवात्। यदि वा नियतोपस्थितत्वेऽप्यनुगतत्वात् लघुत्वाच्च तस्यैवावच्छेदकत्वं तदा नियतोपस्थितिकत्वेऽपि तत एव जातिरेव तथा, अपि च शक्तिग्रहविषयीभूते शाब्दज्ञाने उभयविषयत्वनियमेऽपि व्यक्तिज्ञानत्वं विनापि जातिज्ञानत्वं अनुमानेन शक्यग्रहमिति कार्य्यत्वादिवत् न व्यक्तिः शक्या। न च व्यवहारानुमिते तदज्ञाने शक्तिग्रहव्यवहारस्य व्यक्तिविषय इति तद्विषयत्वेनावश्यं तदुपस्थितिरिति वाच्यं। लिङ्गाभासादिना जातिविषयत्वमात्रेणानुमिते तत्र शक्तिग्रहे बाधकाभावात् मानान्तरेणापि तत्सम्भवाच्च उत्सर्गतोभानं कार्य्यत्वविषयत्वेनापीत्यरुचेराह, 'किञ्चेति, तथाचोभयविषयशाब्दज्ञानत्वावच्छिन्ने पदस्य करणतया तदवच्छेदकत्वेनोभयत्रैव शक्तिरिति भावः। न चान्वयविषयताया नियमेऽपि तद्विषयत्वं यथा नावच्छेतकं तथा व्यक्तिविषयत्वमपीति वाच्यं। तस्यावश्यकाकाङ्क्षादिलभ्यत्वात् व्यक्तेस्तानन्यलभ्यत्वात् तल्लाभार्थमनावश्यककारणान्तरकल्पने गौरवमित्यनुपदमेव स्फुटं। 'ज्ञानवित्तीति, यद्यपि प्रत्यक्षे तथात्वेऽपि अनुमाने तथात्वानियमः तथाप्युत्सर्गतस्तथात्वं बोध्यं। 'कारणान्तरं' जात्याश्रयत्वादि, 'शक्तिग्रहेति, यद्यप्युत्तरकालं तद्-

**अन्ये तु प्रथमं व्यवहारानुमितव्यक्तिज्ञाने शब्दानुविधानात् पदं शक्तमित्यवधारयति न तु जातिज्ञाने,**

षयतानियतत्वादित्यरुचेराह, 'किञ्चेति, 'अन्ये त्वित्यस्वरसोद्भावनं, तद्बीजन्तु व्यक्तिज्ञाने कारणत्वग्रह उपजीव्यो न तु व्यक्तिज्ञानत्वेन,

ग्रहे न दोषः तथापि गौरवमेव मूलं। नन्वव्युत्पन्नस्य शाब्दानुभवाभावाच्छक्तिबोधोऽवश्यं हेतुः। न च पदार्थस्मरण एव तदुपक्षयः, तथापि प्रयोजकत्वसम्भवात् एवञ्च जातिशक्तिधीरवश्यं प्रयोजिकेति तत एव व्यक्तिधीः। किञ्च जातिरिव व्यक्तिरपि शक्यज्ञानमवच्छिनत्तु तथापि न व्यक्तिर्वाच्या शक्तिज्ञानं यद्विषयत्वेनाङ्गं तदेव शक्यं जातिश्च तथेति लाघवात् सैव शक्या। अतएवान्वयो न शक्यः व्यक्तिविषयत्वेन च तस्य ज्ञानं सामग्रीबलात् सम्पातायातं न तु तथात्वेन तदङ्गं गौरवात् व्यक्तिधीश्च तुल्यवित्तिवेद्यत्वादिति चेत्, न, शक्तिबोधस्य प्रयोजकत्वेऽपि व्यक्तिशाब्दबोधहेतुत्वकल्पनायां गौरवतादवस्थ्यात् जातिशाब्दानुभवे पदं व्यक्तिशाब्दानुभवे च जातिशक्तिबोधो हेतुरिति सामग्रीद्वयकल्पने गौरवाच्च, तथाचानन्यलभ्यत्वाद्व्यक्तिरपि शक्या, एवञ्च लाघवाद्यक्तेरवच्छेदकत्वकल्पने विशिष्टशक्तिज्ञानमङ्गं गौरवञ्च प्रामाणिकं। न च तुल्यवित्तिवेद्यत्वाद्यक्तिरपि शक्या, एवञ्च लाघवाद्यक्तेरवच्छेदकत्वकल्पने विशिष्टशक्तिज्ञानमङ्गं गौरवञ्च प्रामाणिकं। न च तुल्यवित्तिवेद्यत्वाद्यक्तिलाभः, शक्तिं विना ज्ञापकत्वाभावे तथात्वासिद्धेः जातिशक्तिग्रहे तथात्वस्यापास्तत्वात्। किञ्चैवं वैशिष्ट्यलाभो न स्यात्, न हि तदपि तुल्यवित्तिवेद्यं, आलोचने तदभानेऽपि तज्ज्ञानात् शाब्दे तथात्वस्य निर्बीजत्वात्। न च गोपदं स्वभावादेव गोत्वविशिष्टज्ञापकं तत्र च जातिशक्ततया ज्ञातत्वमेव प्रयोजकं लाघवादिति वाच्यं। वैशिष्ट्यशक्ततया ज्ञातत्वस्यैव तथात्वापत्तेः तस्यापि समवायरूपस्यैकत्वप्रसाधनाद्विशिष्टलाभः एवं सति तस्मादिति तुल्यं स्वभावाद्विशिष्टबोधकत्वमित्यपि तुल्यमिति दिक्।

व्यवहाराजनकत्वेन तदा तस्यानुपस्थितेः, पश्चाद्व्यक्ति-व्यावृत्त्यर्थं अनुगमार्थञ्च जातिरपि तद्विषय इति मानान्तरेण ज्ञात्वा जातिज्ञानेऽपि तत्पदस्य कारणतां प्रत्येति, तथाच व्यक्तिशक्तिज्ञानमपि कारणं न तु जातिशक्तिज्ञानेनान्यथासिद्धिः व्यक्तिज्ञानकारणतां उपजीव्य जातिज्ञाने कारणताग्रह इत्युपजीव्यविरोधात्। एतेन जातिरेव शक्या लाघवात् शक्तिग्रहजन्यसंस्कारस्य व्यक्तिविषयत्वनियमेन पदात् जातिस्मरणमुत्पाद्यमानमवश्यं व्यक्तिविषयं, संस्कारस्यानियतोद्बोधकत्वेऽपि जात्यंशोद्बोधकादेव व्यक्त्यंशोद्बोधनियमकल्पना, यथा पदेनोद्बुद्धसंस्कारादेव नियता शक्तिस्मृतिः

---

तथाच जातिज्ञानस्य कारणत्वग्रहेऽपि नोपजीव्यविरोधः तेन रूपेणापि व्यक्तिधीहेतुत्वस्य वक्ष्यमाणत्वादिति। वयन्तु न जातिरेव पदार्थः जातिविशिष्टव्यक्त्यनुभवानुपपत्तेः(१)। न च समानवित्तिवेद्यतया व्यक्तिलाभः, वैशिष्ट्येन सह तथालाभावात् अन्यथा निर्विकल्पको-

(१) जातिविशिष्टव्यक्तिलाभानुपपत्तेरिति ख०।

---

'अन्ये त्विति, 'उपजीव्यविरोधादित्यन्तमेतन्मतं। अत्रायमस्वरसः, न ह्यनेनैव न्यायेन जातिशक्तिकल्पना येनोपजीव्यतानियमः, किन्तु लाघवादिना प्रकारान्तरेणापि, तथाचान्यलभ्यत्वे प्रथमक्लृप्ता व्यक्तिशक्तिधीस्त्याज्या अनन्यलभ्यत्वे किमनया कुसृष्ट्येतीति प्रकाशः।

पदं विनापि च सर्व्वा जातिस्मृतिर्व्यक्तिविषया, अन्यथा केवलजातिमात्रस्मरणापत्तेः। संस्कारसहितात् पदादेव जातिविशिष्टानुभवोऽपीन्द्रियादिव प्रत्यभिज्ञा। अत एव भाष्यं, "संस्कार-शब्दशक्तिभ्यां विशिष्टानुभव-इत्युन्नीतमतमपास्तं", उक्तन्यायैर्जातिवद्व्यक्तेरपि शक्यत्वात् विशिष्टानामानन्त्येऽपि एकत्र विशिष्टे तत्त्वं विहाय गोत्वमादाय गोत्वविशिष्टं शक्यमिति शक्तिग्रहः, यथा च क्वचिदेव धूमे धूमोवह्निव्याप्य इति बुद्धिः, यथा वा तवैव कार्य्याणामानन्त्येऽपि क्वचित् कार्य्ये तत्त्वं तटस्थीकृत्य कृतिमादाय धर्म्मिणि कार्य्यं शक्यमिति लिङ्गादेरपूर्व्वे शक्तिग्रहः, अवच्छेदकैक्याच्छक्तेरेकत्वं तद्वदेव, यथा वा व्यक्तिवाचकपश्वादि-

---

च्छेदापत्तेः। तथाच नियमतोजातिविशिष्टव्यक्तिलाभाद्विशिष्टे शक्तिः

---

'तत्त्वमिति तद्व्यक्तित्वादिकमित्यर्थः, तथाचैकव्यक्तावेव शक्तिग्रहः समानप्रकारकत्वनियामक इति तन्मतमालम्बरोक्तं। 'यथा वेति जाति-साङ्कर्य्येण शरीरत्वादिवत् पशुत्वादिजातेरभावात् लोमवल्लाङ्गूलयोगित्व-लक्षणोपाधिमादाय व्यक्तावेव पशुपदशक्तिग्रह इत्यर्थः। न चैवं छिन्न-लाङ्गूलानां पशुत्वेन व्यवहारो न स्यादिति वाच्यं। तादृशलाङ्गूलवदवृत्त्य-न्त्यावयविमात्रवृत्तिजातिमत्त्वे तात्पर्य्यादित्येके। अदृष्टविशेषोपगृहीतभूत-भेदारब्धत्वमित्यन्ये। यत्तु अनुव्यञ्जकाभावान्न पशुत्वं जातिरिति, तन्न,

पदानां, अथ वा गोत्वेन सामान्यलक्षणया ज्ञाते सर्व्वत्र गवि गोत्वमादाय शक्तिग्रहः, प्रमेयत्वेन च सर्व्वज्ञाने सार्व्वज्ञ्यमिष्यत एव, नेष्यते तु घटत्वादि-सर्व्वप्रकारकज्ञानवत्त्वेन, सर्व्वैकोदासीनगोः शक्यत्वाद्-यत्किञ्चिदेकोपादानेऽपि गोरूपादानादन्योपादाना-शक्यत्वं एकोपादानेऽनध्यवसायो वा। अन्यथा तवा-प्येकवित्तिवेद्यतया सर्व्वैकपरत्वे उक्तदोषे का गतिः, का वा गतिर्व्यक्तिवाचकपश्वादिपदानां। भट्टमते तु जातिरेव शक्या लाघवात् व्यक्तिस्त्वाक्षेपलभ्या। ननु नाक्षेप एकवित्तिवेद्यत्वात्तयोः, समानानां हि भावः सामान्यं तच्च व्यक्तिं विना न भासते इति चेत्, न,

---

अन्यथा समूहालम्बनरूपनिर्व्विकल्पकापत्तेरिति ब्रूमः। 'पश्वादीति, इदञ्च तन्मते, पशुत्वं न जातिः उच्चैःश्रवःशरीरादिवृत्तित्वात् योग्यसंस्थानव्यङ्ग्यत्वनियमाच्च जातेः, अस्माकन्तु जातिरेव पशुत्वं अश्वत्वादिव्यापिका लोमवल्लाङ्गूलवत्त्वव्यङ्ग्येति ध्येयं। 'नेष्यते त्विति,

---

उक्तोपाधेरेव तथात्वोपपत्तेः, अन्यथा किमवच्छेदेन व्यक्तावपि शक्तिः स्यात्, अस्मन्मते पशुत्वस्य जातित्वेऽपि परानभ्युपगतत्वेन तथोक्तमित्यप्याहुः।

स्वमतमाह, 'अथ वेति, 'लाघवादिति, आवश्यकत्वान्नागृहीतविशेषणान्यायाच्चेत्यपि बोध्यं। तदुक्तं, "विशेष्यं नाभिधा गच्छेत् क्षीणशक्ति-र्विशेषणे इति। सामान्यत्वपुरस्कारेण सामान्यं शक्यं तच्च व्यक्तिं विना न भासत इति भ्रान्तः शङ्कते, 'नन्विति, 'न भासत इति, सामान्यत्वेनेति

स्वरूपेण शक्या जातिः, न च सामान्यत्वं तस्याः स्वरूपं, तद्धर्म्मत्वात्, अन्यथा आलोचनेऽपि सा न भासेत। कथं सामान्यत्वेनाप्रतीता जातिर्व्यक्तितोभिन्नतया शब्देनाभिधातव्येति चेत्, न, शब्देन व्यक्तितो भिन्नतया जातेरबोधनात्। ननु व्यावृत्ता जातिर्व्याच्या व्यावृत्तबुद्धिं विना व्यक्तिविशेषानाक्षेपात् व्यावर्त्तिका च तत्र व्यक्तिरेव अनुगतत्वमप्यनुगम्यमानं विना न भासत इति जातिवित्तिवेद्यैव व्यक्तिरिति चेत्, न, स्वतोव्यावृत्तजातिस्वरूपस्य वाच्यत्वात्। व्यक्तेर्धर्म्मान्तरस्य वा व्यावर्त्तकत्वेऽन्योन्याश्रयोऽनवस्था वा। ननु गौरितिपदात् जाति-व्यक्त्योर्युगपत्प्रतीतिः। न च सूक्ष्मकालभेदाग्रहात् सा भ्रान्ता, बाधकाभावात्, तथाच गोपदाद्गोत्वधीस्ततः क्रमेण व्याप्ति-पक्षधर्म्मताज्ञानं ततो व्यक्त्यनुमितिरिति ज्ञानपरम्पराकल्पनाद्वरं जातिवित्तिवेद्यत्वं व्यक्तेरिति चेत्, न, व्युत्पत्त्यधीनं हि शब्दस्य बोधकत्वं, अतो व्युत्पत्तिपर्य्यालोचनया युगपज्ज्ञानमसिद्धं। अतएव ज्ञानपरम्परा-

सर्व्वशब्दात् सर्व्वज्ञानात्त्वयाप्येवं मन्यमानत्वादिति भावः।

---

शेषः। भ्रान्त एव शङ्कते, 'कथमिति, अनुगतत्वस्य व्यावर्त्तकत्वे व्यक्तिविशेषणाक्षेपदोषे सत्येवाह, 'अनुगम्यमानमिति, 'युगपत्प्रतीतिरिति यौगपद्यधी-

कल्पनमपि युक्तं, अन्यथा कर्त्तुरप्याक्षेपोन स्यात् शब्दात् सकर्तृकाया एव क्रियाया अवगमात्। न च जातिज्ञानत्वेन व्यक्तिविषयतानियमः, प्रत्यक्षादौ तस्य व्यक्तिधीहेतुसमाजाधीनत्वात्। अतएव न जातिधीहेतौ व्यक्तिधीहेतुसहकारितानियमः समाजस्यार्थसिद्धत्वात् गोत्वं गवाविषयप्रतीतिविषयः जातित्वात् गोभिन्नभावत्वाद्वेति जातिमात्रधीसिद्धेश्च। अथ यत् यत्परतन्त्रं तत् तेनैकवित्तिवेद्यं यथार्थपरतन्त्रं ज्ञानमर्थेन जातिश्च परतन्त्रेति व्यक्तौ भासमा-

---

'जातित्वादिति, न च शवत्वादौ व्यभिचारः, बाल्य-कौमारादिना तन्मते शरीरभेदाभावेन तज्जातित्वासिद्धेः। नित्यत्वे सति समवेतत्वस्यैव सामर्थ्ये व्यर्थविशेषणत्वमित्यरुचेराह, 'गोभिन्नेति, भावत्वं गोनिरूपणानधीननिरूपणत्वं गवाभाववद्गोशादृश्यादावपि व्यभिचारात् तत्त्वञ्च गव्येव व्यभिचारीति गोभिन्नत्वं विशेषणमिति भावः।

---

रित्यर्थः, 'व्युत्पत्त्यधीनमिति लाघवेन जातिमात्रस्यैव शक्यतया पदादुपस्थितेरित्यर्थः। 'अवगमात्' अवगमाभ्युपगमप्रसङ्गादित्यर्थः, यदि च यौगपद्यधीस्तत्र भ्रमस्तदा प्रकृतेऽपि तुल्यमिति भावः। 'गोत्वमिति, न च नित्यपदादिना गवादिविषयकप्रतीतिविषयत्वात् सिद्धसाधनमिति वाच्यं। जातिज्ञानस्य व्यक्तिविषयतानियमाभ्युपगन्तारं प्रत्येव तदनुमानावतारेणापाततस्तदसिद्धेः, अतएव सामान्यत एव तत्सिद्धिं वक्ष्यति, 'जातिमात्रधीसिद्धेश्चेति हेतौ जातित्वनिर्व्वचने यावदेव व्याप्यं तावदेव विवक्षितं, 'गोभिन्नेति। ननु भाव-

नायामेव भासत इति चेत्, न, परतन्त्रत्वं हि न परसमवेतत्वं गन्धादिना व्यभिचारात्, न तद्धी-निरूप्यत्वं असिद्धेः, नापि तस्मिन् भासमान एव भासमानत्वं साध्याविशेषात्, नापि विशेषणत्वेनैव-ज्ञानं गौरित्येव प्रतीतेः। गवि गोत्वमिति कश्चित् प्रत्येतीति चेत्, न, आलोचने विशेषणत्वं विनापि

'विशेषणत्वेनैवेति यत् प्रतीयमानं यद्विशेषणत्वेनैव भासते तद्विशेष्य-समानवित्तिवेद्यमिति नेत्यर्थः, 'गौरितीति, तथाच न व्यक्तिवित्ति-वेद्या जातिरिति भावः। 'गवीति, गोवि गोत्वमित्येव प्रतीतिरिति, 'कश्चित्' परः, विशेषणत्वेनैवेत्यादिनियमवादीति यावत्, 'प्रत्येति' स्वीकरोति, तेन गौरित्येव प्रतीतिरिति परं प्रत्यसिद्धं तेन गवि गोत्वमित्येव प्रतीतिस्वीकारादिति भावः[१]। 'आलोचन इति,

(१) स्वीकारादित्यर्थ इति ख०।

पदं व्यर्थं निषेधपदादिना अभावमात्रस्यैव गवादिविषयकप्रतीतिविषयतया तत्र व्यभिचाराभावात्, अन्यथा गोसादृश्यादौ व्यभिचारतादवस्थ्यापत्तेः। न च प्रतीतिपदं प्रत्यक्षपरं भावपदञ्चेतरनिरूपणानिरूप्यपरमिति वाच्यं। बाधापत्तेः, किञ्च गोघटितोपाधेरपि नियमतो गोविषयकप्रतीतिविषयतया तत्र व्यभिचार इति। मैवं। भावपदस्याखण्डभावपरत्वेनोक्तदोषनिरासात्। 'नापि विशेषणत्वेनैवेति, व्यक्तिविशेषणत्वेनैव जातेर्ज्ञानं तस्याः व्यक्तिपार-तन्त्र्यमित्यपि नेत्यर्थः, 'गौरित्येवेति गोपदादिना गौरित्याकारिकायाः प्रतीतेर्दर्शनात् तस्याः स्वव्यक्त्याक्षेपवादिना मया जातिमात्रविषयत्वेनाप्युप-पाद्यत्वादित्यर्थः। 'गवीति, गवि गोत्वमिति प्रतीतौ गवीत्यंशो गोत्वा-

स्वरूपतः प्रतीतेः जातिमात्रशक्तात् पदात् जातेः स्मरणमालोचनमेव जातिविशिष्टगोचरसंस्कारादेव पदेन जात्यंशोद्बोधे सति जातिमात्रस्मरणात्। अतएव ततो जातिं विनापि कदाचित् व्यक्तिस्मृतिः। अस्तु वा गुरोरिवालोचनमपि संस्कारजनकं शब्दव्युत्पत्तिबलेन

---

गवि गोत्वमित्येव प्रत्यय इति तेनापि स्वीकार्य्यं विशेषणज्ञानं विना विशिष्टज्ञानानुदयादिति आलोचने नियमभङ्गस्य ध्रुवत्वादिति भावः। ननु विशिष्टज्ञानस्यैव संस्कारजनकत्वेन तेन समानप्रकारकस्मरणजननात् जातिमात्रस्मरणमसिद्धं, अतएव तथा शाब्दानुभवोऽपि नेत्यत आह, 'जातीति, संस्कारसत्त्वेऽपि तदुद्बोधकविलम्बेन व्यक्त्यंशस्मरणाभावादिति भावः। नन्वेकदेशोद्बोधकादेवापरांशस्मृतिः अन्यथा सदृशदर्शनादिना धर्म्मिस्मरणेऽपि तद्धर्म्मास्मरणापत्तेः, अतएवेत्यादिकमसिद्धमेव, न हि जातिविशिष्टानुभवेन कदापि व्यक्तिमात्रस्य स्मृतिरित्यरुचेराह, 'अस्तु वेति, 'विशे-

---

न्वयार्थं व्यक्तिभानस्यावश्यं वाच्यत्वात् तत्र च गोत्वस्य विशेषणत्वेनैव भावस्वीकार इति गौरित्याकारकप्रतीतावपि तथैव तज्ज्ञानस्वीकारः विभक्त्यर्थभेदेऽपि प्रकृत्यर्थोल्लेखे विशेषज्ञानाभावादिति भावः। एवकारान्वितो हेतुस्तथाप्यसिद्ध एवेत्याह, 'आलोचन इति निर्व्विकल्पक इत्यर्थः। नन्वेवं पदान्निर्व्विकल्पकापत्तिरित्यत्रेष्टापत्तिमाह, 'जातिमात्रेति। 'अतएवेति संस्कारोद्बोधकप्रतिनियमादेवेत्यर्थः, 'गुरोरिवेति, यद्यपि तन्मते तदनभ्युपगमः, तथापि व्यक्तिविशेषानवगाहिज्ञानं तस्य निर्व्विकल्पकत्वेन बोध्यं, तदेकदेशिमतेनेत्यन्ये। 'शब्दव्युत्पत्तीति जातिमात्रशक्तपदात तन्मात्र-

जातिमात्रस्मरणसिद्धेः। न च स्मरणस्य विशिष्टज्ञानत्वमेव, अनुभवस्यापि तथात्वेन निर्व्विकल्पकासिद्धिप्रसङ्गात् एकवित्तिवेद्यत्वेऽपि प्रथमदर्शनवत् शब्दाद्गोत्वस्मरणमालोचनमेव गोत्वे गोव्यक्तिवृत्तित्वादिवैशिष्ट्यस्याशक्यत्वेन तदविषयत्वात्। न चालोचनस्येन्द्रियजन्यत्वात् न स्मृतित्वं, ज्ञानत्वसाक्षाद्व्याप्यधर्म्मत्वेन स्मृतित्वस्यालोचनवृत्तित्वात्। नन्वाक्षेपाद्व्यक्तिधीर्न व्यक्तित्वेन न वा रूपान्तरेण गौरित्येव प्रतीतेः, नापि गोत्वेन गोत्वस्य गोत्वविशिष्टाभेदेनाक्षेपाभावादिति चेत्, न, विशेषण-विशेष्ययोर्भेदेनानुमानाविरोधात्। अतएव गोत्वं व्यक्त्याश्रितं जातित्वा-

षणेति गोत्वं गवाश्रितं गोत्वत्वादित्यत्र गोत्वत्वे गवाश्रितत्वप्रवेशेऽपि विशिष्टाविशिष्टभेदादित्यर्थः, 'अतएव' विशिष्टाविशिष्टभेदादेव, 'जातित्वादिति अत्रानेकव्यक्तिवृत्तित्वगर्भतया जातित्वस्य साध्यप्रवेशेऽपि विशिष्टस्य हेतुत्वादित्यर्थः। ननु द्वयमप्यनुपपन्नं प्रथमे पत्र-

विषयकसंस्कारोद्बोधात् तन्मात्रस्मरणसिद्धेरित्यर्थः। अभ्युपेत्याह, 'एकेति, 'ज्ञानत्वेति, अनुमित्यादौ व्यभिचारादाह, 'साक्षादिति, यदि चानुमितिविशिष्टस्मरणान्यतरत्वादिकमपि साक्षाद्व्याप्यं तदा धर्म्मपदं जातिपरं बोध्यं। 'गोत्वविशिष्टाभेदेनेति आक्षेप्यगोत्वविशिष्टान्तर्गतत्वेनेत्यर्थः, तथाच न गोत्वांशाक्षेपकत्वमभेदादिति भावः। गोत्वांशस्य नाक्षेप्यत्वमित्याह, 'विशे-

दिति पक्षधर्म्मताबलात् गोत्वाश्रयव्यक्तिसिद्धिः, अर्थापत्तेर्व्वा तत्सिद्धिः। ननु व्यक्त्या विना किमनुपपन्नं व्यक्तिं विनापि गोत्वस्य तद्बुद्धेश्च सिद्धेः कथमर्थापत्तिरिति चेत्, न, व्यापकं विना व्याप्यस्यासिद्धेः। उच्यते। गामानयेत्यतो गोत्वविशिष्टस्य क्रियान्वयबोधाद्गौरित्याकारकगोविशेष्यकबुद्धिः कारणं सा च न शब्दं विना आक्षेपाद्व्यक्त्याश्रितं गोत्वमिति धीर्न तु गौरिति। न चैवं व्यक्तेः क्रियान्वयोऽपि, गोत्वाश्रिततया निराकाङ्क्षत्वात् राजपुरुषमानयेत्यत्रेव

तावच्छेदकस्य हेतुत्वं यच्च विशिष्टाविशिष्टभेदेन समाधानं तदविशिष्टेन हेतुना विशिष्टसाध्यसिद्धौ सम्भवति विशिष्टस्यासिद्धत्वेन सिद्धसाधनाभावात् न त्वविशिष्टसाध्ये विशिष्टहेतौ सिद्धसाधनादित्यरुचेराह, 'अर्थापत्तेरिति, गां विना गोत्वमनुपपन्नमित्यर्थापत्त्या गोत्वविशिष्टसिद्धिरित्यस्मन्मतेऽनुपपत्तिज्ञानमपेक्षितं न तु व्याप्त्यादिकमपि व्यधिकरणस्यैव जीविगृहाभावस्य वहिःसत्त्वं विनाऽनुपपत्तिज्ञानेन वहिःसत्त्वसिद्धेरिति भावः। 'व्यापकमिति व्याप्तिरवश्यम्भावः तथाच व्यापिकां व्यक्तिं विना व्याप्यगोत्वान्वयोऽनुपपन्न-

मणेति। तर्हि कथं गोत्वाश्रयव्यक्तिसिद्धिरित्यत आह, 'अतएवेति अभेदेनाक्षेप्यत्वविरोधादेव, पक्षधर्म्मताबलात् तत्सिद्धिरित्यर्थः। 'न तु गौरिति, अनुमितेर्व्यापकतावच्छेदकप्रकारकत्वनियमादिति भावः। 'न

राशः, अन्वये वा व्यक्तिमानयेति धीः स्यात् न तु गामिति। किञ्च गोत्वं न व्यक्तिव्याप्यं, न हि यत्र यदा वा गोत्वं तत्र तदा व्यक्तिर्यत् सामान्यं सा व्यक्तिरिति वा नियमः, व्यभिचारात्। नापि गोत्वं गवाश्रितं गोत्वादित्यनुमितिः, व्याप्तिग्रहशरीरत्वात्। न च जातित्वं व्यक्त्याश्रितत्वे लिङ्गं, जातित्वस्य पदादनुपस्थितेः, तथात्वे वा जातिवित्तिवेद्यैव व्यक्तिः। अपि

---

इत्यर्थः। यद्गोत्वं सा गौरिति यत्र गोत्वतादात्म्यं तत्र गोतादात्म्यं सम्बन्धसामानाधिकरण्यस्यैव सम्बन्धिव्याप्तित्वादिति भावः। 'व्याप्तीति, पक्षतावच्छेदकस्यैव हेतुत्वादिति भावः। ननु साधनशब्दं विनेत्यनुपपन्नं गां विना गोत्वमनुपपन्नमिति ज्ञानाद्गोत्वविशिष्टस्यैव सिद्धेः, अतएव व्यक्त्याश्रितं गोत्वमित्याद्यनुक्तोपालम्भः, गोत्वं न

---

हीति, यद्यपि प्रलयाभावाद्यदा गोत्वं तदा गौरिति व्याप्तिरस्त्येव तथापि स्वमतावष्टम्भेनेदमुक्तं। 'गोत्वादिति गोत्वत्वादित्यर्थः, गोत्वत्वस्य गोपदादनुपस्थितेरिति दोषे सत्येव दोषान्तरमाह,, 'व्याप्तीति हेतोरेव पक्षतावच्छेदकतया व्याप्तिग्रहकाल एवोद्देश्यसिद्धेः सिद्धसाधनादित्यर्थः, 'जातित्वस्येति, तथाच गोपदश्रवणानन्तरं नियमतो व्यक्तिधीरनुभवसिद्धा न स्यात् प्रकारान्तरेण तदुपस्थितेरनावश्यकत्वादिति भावः। 'तथात्वे वेति जातित्वस्य व्यक्तिघटितत्वादित्यर्थः। ननु गोत्वमेव लिङ्गं तच्च पदादुपस्थितमेवेत्यत आह, 'अपि चेति व्यधिकरणयोर्न गम्य-गमकभाव इत्यर्थः। 'प्रकृत्यर्थत्वं' प्रकृतिप्रतिपाद्यत्वं, नन्वेतावतापि न लक्षणोच्छेदस्तात्पर्य्यनिर्व्वाहार्थमेव तत्-

च लिङ्गं व्याप्यमनुपपन्नं स्वाश्रये व्यापकमुपपादकञ्च बोधयति। न चेह गोत्वाश्रये व्यक्तिबुद्धिः। वयन्तु ब्रूमः, व्यक्तेरपदार्थत्वे विभक्त्यर्थसङ्ख्या-कर्म्मत्वादेर्व्यक्तावनन्वयः स्यात् सुब्विभक्तीनां प्रकृत्यर्थान्वितस्वार्थबोधकत्वस्य व्युत्पत्तिसिद्धत्वात्प्रकृतितात्पर्य्यविषये तदन्वयव्युत्पत्तौ लक्षणोच्छेदो गौरवञ्च। आख्यातार्थसङ्ख्यापि नानुमितेनान्वेति, किन्तु भावनान्वयिना शुद्धेन प्रथमान्तादुप-

व्यक्तिव्याप्यमित्यपि तथा व्याप्तिनैरपेक्षेणार्थापत्तेरेरभावात् गोत्वं गवाश्रितमित्यपि तथा जातित्वेनाक्षेपस्त्वप्रसक्त एव शब्दाज्जातित्वानुपस्थितिस्तु गोत्वत्वेऽपि तुल्या, परन्तु विशिष्टोपस्थितये सप्रकारकः प्रसज्यते जातित्वेनाप्रसङ्ग एव न किञ्चित्, 'अपि चेत्यादि यदुक्तं तदपि न श्रुतार्थापत्तौ तथा नियमस्य तन्मतेऽभावादित्यस्वरसादाह, 'वयन्त्विति, 'सुब्विभक्तीनामिति, लिङ्ग-सङ्ख्ययोः प्रकृत्यर्थान्वयादिशेषनियमः सोऽपि पाचक-पश्वादिपदे व्यक्तिवाचके व्यवस्थित इति भावः। इदमुपलक्षणं "शाब्दी ह्याकाङ्क्षा शब्देनैव प्रपूर्य्यते" इति व्युत्पत्तेश्चेत्यपि हेतुर्द्रष्टव्यः। अतएव तद्व्यभिचारमाशङ्क्योद्धरति, 'आख्यातार्थसङ्ख्यापीति। ननु विशिष्टलक्षणावादे

कल्पनादित्यरुचेराह, 'गौरवञ्चेति तत्प्रतीतीच्छयोच्चरितत्वस्योच्चरितत्वगर्भत्वे गुरुत्वादित्यर्थः। नन्वाक्षिप्ते कर्त्तर्य्याख्यातार्थसंख्यान्वयवद्व्यक्तावप्याक्षिप्तायामन्वयोऽस्तु 'सुब्विभक्तीनां इत्यादिव्युत्पत्तिस्वासिद्धेवेत्यत आह, 'आख्यातेति,

स्थितेन पदान्तरादुपस्थितिरेव तत्राक्षेपार्थः। अतएव न व्यक्तेराक्षेपः किन्तु लक्षणया गोपदाद्गौरिति व्यक्तिधीरिति मण्डनः। यदाह, "जातावस्तित्व-नास्तित्वे न हि कश्चिद्विवक्षति। नित्यत्वाल्लक्ष्यमाणाया व्यक्तेस्ते हि विशेषणे" इति॥ उच्यते। स्वार्थादन्येन रूपेण ज्ञाते भवति लक्षणा, तीरत्वेन ज्ञाते गङ्गापदस्येव। न चेह गोत्वादन्येन रूपेण व्यक्तेरुपस्थितिः, किन्तु गोत्वेनैव, व्यक्तित्वेन सास्नादिमत्त्वेन चोपलक्ष्यत्वे गोपदाद्व्यक्तित्वादिरूपेण धीः स्यान्न तु गौरिति। नापि गोत्वसम्बन्धिनि गोत्वविशिष्टे लक्षणा, गोत्वे हि न साक्षादानयनाद्यन्वय इति व्यक्त्यवच्छेदकतया तस्यान्वयेऽमुख्यत्वं। लक्षणयापि गोत्वावच्छिन्नैव व्यक्तिः क्रियान्वयिनी प्रतीयते न केवला व्यक्तिरिति गोत्वविशिष्टस्य

---

शक्योपस्थितिर्लक्षणयैवेति गोत्वेऽपि लक्षणायामिष्टापत्तिरित्यरुचे-

शाब्दी ह्याकाङ्क्षा शब्देनैव पूर्य्यत इति न्यायात् अतएव श्रुतार्थापत्तिरिति भावः। 'अतएवेति विभक्त्यर्थान्वयादेवेत्यर्थः, 'अस्तित्व-नास्तित्वे' उत्पाद-विनाशौ, तथाच गौरुत्पन्ना गौर्विनष्टेत्यादौ जातौ तदन्वयानुपपत्त्या व्यक्तौ लक्षणेत्यर्थः। ननु स्वार्थादन्येनेत्यप्रमाणकं तथाच गोत्वेनैव व्यक्तेरुपलक्ष्यत्वमस्त्वित्यत आह, 'नापीति, 'गोत्वसम्बन्धिनीति शक्यसम्बन्धो दर्शितः, 'लक्ष्यत्वे' उपस्थाप्यत्वे। ननु लक्षणयैव विशिष्टोपस्थितौ नोक्तविरोध इत्यत-

लक्ष्यत्वे युगपद्वृत्तिद्वयविरोधः, गोत्वेऽपि वा लक्षणा। अपि च जातिमात्रे न शक्तिर्न वा व्यक्तौ लक्षणा जातौ मुख्यप्रयोगाभावात्, तयोस्तन्मूलकत्वात्, प्रयोगो हि व्यवहारहेतुज्ञानार्थः। न च जातिमात्रनिर्विकल्पकाद्व्यक्तिमनादाय केवलजातौ व्यवहारः, तस्य विशिष्टज्ञानसाध्यत्वात्, गां पश्य गौरस्तीत्यादावपि गोत्वविशिष्टस्यैव ज्ञानं व्यवहारश्च। तस्मादेकवित्तिवेद्यत्व-

राह, 'अपि चेति, किञ्च मुख्यार्थान्वयानुपपत्त्या लक्षणा तथाच यत्र न सा तत्रापि व्यक्तिधीरिति सापि शक्येत्याह, 'गां पश्येति,

आह, 'गोत्वेऽपि वेति, सा च न सम्भवति अभेदे शक्यसम्बन्धाभावादिति भावः। ननु विशिष्टस्य केवलादन्यत्वात् गोत्वविशिष्टे लक्षणास्तु अतएव गुणवाचकस्य नीलादिपदस्य नीलादिविशिष्टे लक्षणेति सिद्धान्तः, तथाच स्वार्थादन्येनेत्ययुक्तं। न च तत्र नीलादिसम्बन्धित्वेनोपलक्ष्यत्वं सम्बन्धिलक्षणयैव "यद्धि येन विनेत्यादिन्यायेन नीलादिभानमिति वाच्यं। प्रकृतेऽपि गोत्वसम्बन्धित्वेन तथात्वापत्तेः। गोपदेन गोत्वमात्रप्रकारकानुभवान्न तथेति यदि तदा नीलादिपदेनापि नीलादिमात्रप्रकारकानुभवात् तत्तुल्यं। यदि च केवलवाचकस्य न विशिष्टे लक्षणा तदा 'प्रकृष्टजये लक्षणेति वक्ष्यमाणविरोधस्तेत्यरुचेराह, 'अपि चेति, 'तयोरिति शक्ति-लक्षणयोः प्रयोगमूलकत्वादित्यर्थः, मुख्यप्रयोगाच्छक्तिः मुख्यार्थान्वयानुपपत्त्या अन्यत्र प्रयोगाल्लक्षणेत्यर्थः। ननु गां पश्येत्यादावेव जातौ मुख्यप्रयोगोऽस्तीत्यत आह, 'गामिति, अत्र जातेरप्यन्वययोग्यत्वादन्वयानुपपत्त्यभावे लक्षणाविरहात् तद्विशिष्टलाभोऽनुभूयमानो न स्यात्। न च तात्पर्य्यानुपपत्त्यैव यष्टीः

नियमात् जातिविशिष्टं शक्यं। यदि च तृतीयायाः करणैकत्व इव गो-गोत्वे शक्ये तदा गोत्वं गोव्यक्तिश्चेति धीः स्यात् न तु गौरिति, वैशिष्ट्यञ्च सम्बन्धो वा ज्ञातो घट इत्यत्रैव विशेषणताविशेषोऽर्थान्तरं वेत्यन्यदेतत्। जातिविशेषवदवयवसंयोगरूपाकृतिरपि

---

'जातिविशेषेति जातिविशेषवानवयवसंयोग इत्यर्थः,। नन्वन्यतरकर्म्मजत्वादिव्याप्याया नानाजातेः कथमनुगमकं विना पदादुपस्थितिः, मैवं, अनुभवसिद्धतत्तज्जातिव्यञ्जकतत्तत्संस्थानवैजात्यव्याप्यनानान्यतरकर्म्मजत्वादिस्वीकारात् न तु वैपरीत्यं, तत्तज्जाता-

प्रवेशयेतिवक्तव्यलक्षणास्त्विति वाच्यं। उभयसाधारणतात्पर्य्याग्रहेऽपि विशिष्टानुभवात् तदिदमुपसंहरन्नेव स्पष्टयति, 'तस्मादिति, एवञ्च गौर्नित्येत्यादौ जात्यादिपरत्व एव लक्षणेत्यवधेयं। अत्रेदं चिन्त्यं शक्तिग्रहकाले लाघवज्ञाने लक्षणां विना विशिष्टलाभोऽसिद्ध एव तदप्रतिसन्धाने च शक्तिभ्रमात् तल्लाभोऽन्यथा सिद्ध इति क्वचित् लक्षणया क्वचिच्छक्तिभ्रमात् व्यक्तिलाभइति जातिरेव शक्येति। अनुभवबलादेवानन्यलभ्यं तद्वैशिष्ट्यमपि शक्यमित्याह, 'यदि चेति, न चान्वयवदन्यलभ्यमिति वाच्यं। अन्वयो हि स्मर्य्यमाणपदार्थयोर्योग्यतादिबललभ्यः। न च प्रकृतेऽपि तथा, निर्व्विकल्पकोपस्थितयोर्जाति-व्यक्त्योर्योग्यतादिप्रतिसन्धानासम्भवात् तत्प्रतिसन्धानेऽपि विशिष्टोपस्थितेश्च। अतएव पदाद्विशिष्टस्यैव स्मरणमपि न तु निर्व्विकल्पकं। न चैवमाकृतिवैशिष्ट्यमपि शक्यमिष्टत्वात्, 'जातिविशेषवदिति जातिविशेषवान् योऽवयवसंयोगः संस्थानविशेषस्तद्रूपेत्यर्थः, तथाच जातिविशेषस्यैवानुगमकतया व्यक्तिवदननुगतानां संयोगानां कथं शक्यत्वमिति

पदशक्या गोपदात् जात्याकृतिविशिष्टस्यैवानुभावात्, पिष्टकमय्यो गाव इत्यादौ गवाकृतिसदृशाकृतौ लक्षणा पिष्टकसंयोगविशेषस्याशक्यत्वात्। जात्याकृति-व्यक्तीनां

वनुगतप्रत्ययाभावप्रसङ्गादन्यतरकर्म्मजत्वेन उपाधिना तत्रानुगतबुद्धि-सम्भवात् । अतएव गत्वं कत्वं न नाना किन्तु तत्तद्व्याप्यं भावत्वमेव। न चेन्द्रिय-मनःसंयोगेन जातिभेद इत्याशङ्कायामन्यतरकर्म्मजत्वव्याप्य-जातिनानात्वे परीहारानुपपत्तिः तत्र तादृशजातेरेवानुगतबु-द्ध्यभावादिति । नन्वाकृतेः शक्यत्वे पिष्टकमय्योगाव इत्यत्र लक्षणा न स्यात् इत्यतआह, 'पिष्टेति। ननु कारणत्वे सति जातिविशे-

निरस्तमिति वदन्ति, तच्चिन्त्यं। अन्यतरकर्म्मजत्वादिना सङ्करेण तादृश-जात्यसिद्धेः। केचित्तु जातिविशेषवद्गोत्वादिवदिति दृष्टान्त इति, तदपि न, तथाप्यननुगतानां कथं शक्यत्वमिति दोषस्यापरिहारात् । न च जातिपदं धर्म्ममात्रपरं तथाचोपाधिविशेष एवानुगत इति वाच्यं। तादृशोपाधेरनि-रुक्तेः। न च जातिविशेषवत्त्वमवयवविशेषणं तथाच कपालसंयोगादिकमेव तथेति वाच्यं। गवादिपदे साक्षाद्यवयवस्याप्यननुगतत्वेन दोषतादवस्थ्या-दिति। अत्र वदन्ति जातिविशेषवतो गवादेरवयवसंयोगरूपेत्यर्थः, वि-शेषपदोपादानेन पृथिवीपदादौ नाकृतिः शक्येति सूचितं, तथाच गवावयव-संयोगत्वादिकमेवानुगमकं । न चैवं तत्प्रकारिका धीः स्यादिति वाच्यं। इष्टापत्तेः, अतएव तथा सति साक्षाद्यवयवस्यापि शक्यता स्यादित्यपास्तं। गवादावाकृतिवैशिष्ट्यस्य परम्परासम्बन्धात्मकत्वेन तद्घटकतया तच्छक्यत्व-स्यावश्यकत्वाच्च । अन्यथा गोत्वविशिष्टमात्रमेवानुभूयते न त्वाकृतिरित्य-स्यापि वाचालवचसोऽवकाशापत्तेरिति दिक् । 'सदृशेति, तथाच सादृश्यमेव शक्यसम्बन्ध इति भावः। 'जातीति, यद्यपि गोरुत्पन्न इत्यादौ व्यक्तिमात्र-

प्रत्येकमात्रपरत्वे लक्षणैव प्रत्येकस्य जात्याकृतिविशिष्टादन्यत्वात्, यथा गुरूणां कार्य्यशक्ताया लिङो लोके कार्य्यत्वपरत्वे। अतएव व्यक्त्याकृति-जातयस्तु पदार्थ-इति पारमर्षसूत्रं, एकयैव शक्त्या एकवित्तिवेद्यत्वसूचनाय पदार्थ इत्येकवचनं। एवं पद्मं पङ्कजपदशक्यं ततो नियमतः पङ्कजनिकर्तृपद्ममिति प्रतीतेः, अवयवानां तत्रासामर्थ्यात् रूढिं विना योगमात्रात्

---

षवत्संयोगवद्वयवकत्वमाकृतिविशेषणत्वेन शक्या सा च पिष्टकमय्यो-गाव इत्यत्राप्यस्तीति कथं लक्षणेत्यत आह, 'प्रत्येकेति समुदायशक्तस्य पदस्य प्रत्येके लाक्षणिकत्वमिति पिष्टकमय्यो गाव इत्यत्रैव लक्षणे-त्यर्थः। 'एवमिति यतो नियमतो यत् प्रतीयते तत् तत्पदशक्य-

---

परत्वेऽपि न लक्षणा व्यक्तेः स्वातन्त्र्येणैवोपस्थितेः गोत्वस्य चावच्छेदकतया-प्यन्वयात्तथापि तत्र व्यक्तिमात्रपरत्वमेव नास्ति जातेरप्यन्वयात् तथाच व्यक्तित्वादिना तदुपस्थितौ यत्र तात्पर्य्यं तत्र लक्षणा मात्रपदव्यवच्छेद्यञ्च गोत्वादिकमतो व्यक्तिशक्तिवादिमतमादायात्रापि न व्यक्तिमात्रपरत्वमित्य-पास्तं। 'अतएवेति प्रत्येकवाच्यत्वे पदार्था इति स्यादित्यर्थः।

प्रसङ्गाद्योगरूढिं साधयति, 'एवमिति, तत्र पङ्कजसमुदायः पद्मे शक्तो न वेति विप्रतिपत्तिः, 'तत इति, प्रामाणिकानामिति शेषः, तेन शक्तिभ्रमादन्यादृशप्रतीत्या न व्यभिचारः। यद्यपि पद्ममित्येव वक्तुमर्हति प्रकृतसाध्यव्याप्यत्वात् तथापि योगरूढ़त्वसाधनाय विशिष्टमुपात्तं, अन्य-थोद्भिदादिवद्यौगिकरूढ़त्वशङ्का स्यादिति। 'अवयवानामिति पङ्कादि-पदानां पद्मत्वे शक्त्यभावादित्यर्थः, 'रूढ़िं विनेति, गृहीतपद्मप्रयोगस्यापीति

कुमुदे प्रयोगधीप्रसङ्गाच्च। ननु रूढावपि योगात् कुमुदे तौ कुतो न स्यातां, रूढ्या प्रतिबन्धादिति प्राञ्चः। वयन्तु नियमतो रूढ्या स्मृतं पद्ममेव व्यक्तिवाचक-डप्रत्ययेन पङ्कजनिकर्त्तृतयानुभाव्यते, बाधकं विना व्यक्तिवचनानां सन्निहितविशेषपरत्वनियमात् यथा-श्येयीति ढगन्तपदेन प्रकरणादिना सन्निहिता ढगभि-हिता ऋगव्यक्तिर्बोध्यते, एवञ्च सर्व्वत्र पद्मानुभवसाम-ग्र्येवेति न कुमुदे धीर्न वा तदर्थप्रयोगः। नन्वेवं रूढि-

मित्यस्मिन् सतीत्यर्थः, 'तत्र' पद्मांशे, 'प्रयोगप्रसङ्गादित्युपलक्षणं पद्मा-ननुभवप्रसङ्गादित्यपि द्रष्टव्यं। ननु सामग्र्यां सत्यां फलाभावे प्रति-बन्धकत्वं कल्प्यते न तु कारणाभावे कार्य्याभाव इत्यरुच्या कारणा-भावमेव सिद्धान्तयति, 'वयन्त्विति। ननु पङ्कजं द्रव्यमित्यादौ यत्र सामान्यवचनत्वं तत्र कुमुदसाधारणबोधापत्तिः, मैवं, चैत्रो दण्डी द्रव्यमित्यत्रेव सामान्यवचनतापि विशिष्टे पर्य्यवस्यति, न हि दण्डि-मात्रे सामान्यवचनत्वं, किन्तु विशिष्टप्रतिपादकोभयपदे तेन याव-

शेषः, 'रूढ्येति ज्ञातयेत्यर्थः। ननु रूढिज्ञानं ग्राह्याभावानवगाहितया जनकज्ञानाविघटकतया च न प्रतिबन्धकं ज्ञानस्य मणिमन्त्रादिवत् प्रति-बन्धकत्वानभ्युपगमात्। वक्ष्यमाणयुक्त्या सामग्रीविरहादेव कुमुदे प्रती-त्यादिविरहोपपत्तौ तत्तथात्वे मानाभावस्तेत्यरुचेराह, 'वयन्त्विति, 'व्यक्ति-वाचकेति कर्त्तृरूपव्यक्तिवाचकेत्यर्थः, 'व्यक्तिवचनानामिति किञ्चिद्व्यक्ति-तात्पर्य्यकाणामित्यर्थः, सन्निहितत्वं बौद्धं बोध्यं। घटेन जलमाहरेत्यत्र

रेवास्तु तत एवोभयलाभात् किं योगरूढ्या, न, अवयवशक्तेः क्लृप्तत्वात् यौगिकार्थानुभवाच्च । यदि च रूढ्यर्थ एव यौगिकार्थ एव वानुभूयेत, तदा विवाद एव न स्यात् अनुभवेनैव तद्विच्छेदात् ।

अत्र मीमांसकाः । न तावत् स्मृत्यर्थं शक्तिः पङ्कजपदप्रयोगविषये नियतपद्मानुभवजनितसंस्कारात् स्मृतेरेवोपपत्तेः स्मृतेस्तज्जन्यत्वनियमात् । नाप्यनुभवार्थं, नियमतः स्मृतं पद्ममादाय व्यक्तिवचनन्यायेना-

---

दण्डिचैत्रनिष्ठं द्रव्यत्वं प्रतीयते, न तु परस्परनिर्मुक्तोभयविषयकद्रव्यत्वं प्रतीयते, वाक्यभेदापत्तेः, तथेहापि पङ्कजनिष्ठकर्तृत्वविशिष्टपद्मप्रतिपादके पङ्कजपदे सामान्यपरत्वमपि यावद्विशिष्टपरतायामेव पर्य्यवस्यति, न तु यावत्पङ्कजनिष्ठकर्तृत्वमात्रपरतायां, वाक्यभेदापत्तेः । यदि वाक्यभेद एवाभ्युपेतस्तात्पर्य्यवशादिना न परस्परमन्वयबोधः, तदा दण्डिपदस्य दण्डिमात्रपरत्ववदस्तु पङ्कजपदेऽवयवानां यावत्पङ्कजनिकर्तृमात्रपरत्वे कुमुदसाधारणतापि किञ्चिच्छिन्नमिति, वस्तुतः साकाङ्क्ष-योग्यासन्नपदसमुदाये परस्परार्थान्वयनियम एव चैत्रो दण्डीतिवदिति तत्त्वं । 'तत एवेति, धेनुपदवदिति भावः । 'अवयवेति, धेनुपदे तु प्रत्ययशक्तेरकल्पनादिति

---

च्छिदस्य प्रथमोपस्थितत्वेऽपि नान्वय इति व्यभिचारवारणाय 'बाधकं विनेत्युक्तं । यद्यप्येवं पङ्कजं प्रमेयमित्यादौ व्यक्तिवचनत्वाभावे कुमुदसाधारणबोधः स्यादेव तथापि 'व्यक्तिवचनानामिति क्वाचित्काभिप्रायं । बाधकं विना

वयवैः पङ्कजनिकर्तृ पद्ममित्यनुभवसम्भवात्, स्मृतिश्च रूढ्या अन्यथा वेति न कश्चिद्विशेषः। शक्तिं विना

वक्ष्यत इति भावः। 'रूढ्या अन्यथा वेति, तन्मते शाब्दी ह्याकाङ्क्षा शब्देनैवेत्यादिनियमासिद्धेरिति भावः। 'शक्तिं विनेति ज्ञापकं

पदानां पदोपस्थिताकाङ्क्षादिविशिष्टान्वयबोधकत्वनियमादित्यत्र तात्पर्य्यं, तथाच पङ्कजं प्रमेयमित्यादावपि पद्मान्वयात् तत्रैव प्रमेयत्वान्वयो न कुमुदेऽपीति। वस्तुतोऽस्यापि व्यक्तिवचनत्वमेव कर्त्तृविशेषीभूतपङ्कजन्मकर्त्तृपरत्वादिति। आग्नेयीति वैदिकः, घटादीति लौकिको दृष्टान्तः, "आग्नेय्या अग्नीध्रमुपतिष्ठते" इत्यत्र प्रकरणासन्निहितैव घटादिव्यक्तिर्बोध्यत इत्यर्थः। अत्रेदं चिन्त्यं, यदि रूढ़िर्न प्रतिबन्धिका तदा पङ्कजपदस्य यत्र पद्मे तात्पर्य्याभावः कुमुदे तात्पर्य्यञ्च गृह्यते तत्र लक्षणां विनैव कुमुदबोधः स्यात् तथाच वक्ष्यमाणविरोधः। न हि तत्रापि पद्मानुभवसामग्री, पद्मे तात्पर्य्याभावनिश्चयस्यैव बाधकत्वात् बाधकं विनैव व्यक्तिवचनानां सन्निहितपरत्वाभ्युपगमात् कुमुदं पङ्कजमित्यत्र कुमुद एव प्रथमसन्निहितत्वसम्भवाच्च। न च तत्र कुमुदं भिन्नपदोपस्थाप्यमिति वाच्यं। प्रथमोपस्थितिमात्रस्यैव तन्त्रत्वात् अवयवापेक्षया समुदायस्यापि भिन्नत्वाच्च। ननु तादृशस्थले शक्त्यैव कुमुदान्वयबोधोऽस्तु पङ्कजपदस्य कुमुदे लक्षणेति सिद्धान्तस्य क्वाचित्काभिप्रायेणाप्युपपत्तेः। सम्प्रदायमते सर्व्वत्र लक्षणाभ्युपगमेऽपि सामग्रीबलात् पद्मान्वये कुमुदान्वयमभ्युपगच्छतो मणिकृतस्तादृशान्वयोन्नयनात् एवञ्च सर्व्वत्र पद्मानुभवसामग्रेग्रवेत्यपि तदभिप्रायकमेवेति चेत्, मैवं, तथा सति क्वचिदपि लक्षणानापत्तेः। न च यत्र पद्मान्वयानन्तरं कुमुदतात्पर्य्यधीस्तत्र स्मृतत्वोपस्थितये लक्षणा स्यादिति वाच्यं। तत्रापि पङ्कजन्मकर्त्तृत्वस्य कुमुदान्वयतात्पर्य्यग्रहकाले पुनः स्मृतेन पङ्कजपदेन शक्त्यैव तदुपस्थापनसम्भवात्। न हि तदापि तस्य पद्म एवान्वयः, तत्र तात्पर्य्याभावनिश्चयात् कुमुदे ता-

नियमतः प्रयोग एव कुत इति चेत्, न, पूर्व्वप्रयोग-मपेक्ष्य अवयवानामुक्तन्यायेन पद्मानुभवजनकत्वनि-यमात्। पूर्व्वप्रयोगोऽपि तत्पूर्व्वप्रयोगमपेक्ष्येत्यना-दितैव। अथानियतोद्बोधस्य संस्कारस्य शक्तिं विना नियतोद्बोधे हेत्वभावात् नियता स्मृतिरेव न स्यादिति

सम्बन्धमपश्यतोऽनेनेदं ज्ञानं जनयितव्यमित्यज्ञात्वा तज्ज्ञापनाय प्रयोगोऽनुपपन्न इत्यर्थः, 'पूर्व्वेति विशेषतस्तद्ग्रहेऽपि सम्बन्धं विना ज्ञापनाय कथं पूर्व्वप्रयोग इति पूर्व्वप्रयोगादेव ज्ञापकसम्बन्धनिश्चयः शक्तेरपि सामान्यत एव ज्ञानं न विशिष्येति वक्ष्यते सम्बन्धश्च न शक्तिः किन्तु प्रयोग एव परिशेषादित्यर्थः, 'शक्तिं विनेति सम्ब-न्धग्रहे सति सम्बन्धितावच्छेदकावच्छिन्नज्ञानात् संस्कारोद्बोधे

त्पर्य्यनिश्चयाच्च, अन्यथा लक्षणाया अप्यसम्भवात्। ननु तथापि लाघवात् लक्षणास्तु लक्षणाया पङ्कजन्मकर्त्तृत्वस्य पदार्थविधया लघूपस्थितिकत्वात्, अवयवशक्त्या च योग्यतादिबलेन वाक्यार्थविधया प्रथमोपस्थितिकत्वादिति चेत्, न, पङ्कजन्मकर्त्तारमानयेत्यादिवाक्यमात्र एवं लक्षणापत्तेः, यदि च प्रत्येकशक्त्यैवावश्यकयोग्यतादिबलात् तल्लाभान्न तथा तदा प्रकृतेऽपि तुल्यं, तस्मात् रूढिज्ञानप्रतिबन्धकत्वपक्ष एव लक्षणा युज्यते। न च विरोध्य-विषयतया तन्न प्रतिबन्धकं, अनुमितौ साध्यज्ञानवत् तथात्वसम्भवादिति, तदिदं नव्यमते वक्ष्यति, स्मृतपद्मत्वस्यान्वयानुपपत्त्यनन्तरमेव कुमुदधीरिति तत्र लक्षणाव्यवहारो वस्तुतो मुख्यतैवेत्यादि। 'उभयलाभादिति पद्मानु-भवस्य कुमुदधीप्रतिबन्धस्य च लाभादित्यर्थः। 'यदि चेति, योगार्थानुभवा-नभ्युपगमे पद्मानुभवार्थमेव परेण रूढिस्वीकारप्रसङ्गादिति भावः। 'कुत-

चेत्, न, कदाचिच्छक्तितोऽपि उद्बोधाभावेन शक्त्या-स्मरणात् शक्तिं विनापि नियमतः शक्तिस्मरणाच्च। उद्बोधकञ्च न नियतं सदृश-पदशक्ति-सम्बन्धिज्ञानानां प्रत्येकं व्यभिचारात्, किन्तु यत्र स्मृतिस्तत्र तत्-कालोत्पन्नमनियतमेवोद्बोधकं कल्प्यते फलबलात्, कार्य्योन्नेयधर्म्माणां यथाकार्य्यमुन्नयनात्। न च पद्म-त्ववत्तद्व्यापकादेरपि स्मृतिप्रसङ्गः, स्मृतिबलेनोद्बोधक-ल्पनमिति तत्र स्मृत्यभावेन तदुद्बोधाभावात्, तस्मा-च्छक्तिं विना शक्तेरिव पद्मत्वस्य नियता स्मृतिः।

---

स्मरणं सम्बन्धस्मात्र शक्तिरेव तस्यैव पदे क्लृप्तत्वात् प्रयोगादीनां तथात्वेनाकल्पनादित्यर्थः। ननु शब्दस्थले शक्तेः स्मारकत्वेऽस्मारकत्वे उभयतोनियमव्यभिचार इत्याह, 'कदाचिदिति, 'कार्य्येति, तथा-चात्र पूर्व्वप्रयोगादिकं अन्यत्राक्लृप्तमप्यनन्यगतिकतया स्मरणाय कल्प्यमिति भावः। ननु पदादशक्यस्यापि स्मृतौ पद्मत्ववत्तद्व्या-पकस्यापि स्मृतिप्रसङ्ग इत्याशङ्क्य निषेधति, 'न चेति। पदाद-

इत्याक्षेपे, तथाच शक्तिं विना नियतप्रयोग एव न स्यादित्यर्थः, प्रश्नार्थत्वे-नेत्यस्यासङ्गतत्वापातादिति। शक्तेरन्वयव्यभिचारमाह, 'कदाचिदिति, व्य-तिरेकव्यभिचारमाह, 'शक्तिं विनापीति। नन्वेवमपि नियतसंस्कारोद्बोध-कानुपपत्तिस्तदवस्थैवेत्यत आह, 'उद्बोधकञ्चेति, फले च वैजात्यमिति भावः। 'तद्व्यापकादेरिति पङ्कजपदप्रयोगविषयत्वे कुमुदत्व-पुण्डरीकत्वादेरप्यनुभवा-पातादित्यर्थः। 'स्मृतिबलेनेति, कदाचित् सामग्रीबलात् तत्तत्स्मृतौ तात्प-

न चैवं गवादिपदेऽपि न शक्तिः स्यात् व्यवहार-कालीनसंस्कारादेव गवादिस्मृतिसम्भवादिति वाच्यं। न हि तत्र स्मृत्यर्थं शक्तिः, किन्त्वनुभवार्थं पदादन्यतो गवादेरनुभवासम्भवादव्युत्पन्नस्य ततोऽनुभवासम्भवाच्च, पद्मानुभवश्च योगादेवेति न समुदायो हेतुरन्यथासिद्धत्वात्, अतो नानुभवबलात् समुदाये शक्तिकल्पनं। नन्वेवं गवादिपदानां प्रमेयत्वे शक्तिरस्तु गवादिस्मृतिः संस्कारादिति चेत्, न, गोव्यवहारेण स्वोप-

---

न्यतोऽननुभवात् अस्तु पदमनुभावकं तावतापि तत्र शक्तिर्न सिद्ध्यतो हेत्वन्तरमाह, 'अव्युत्पन्नस्येति, 'व्युत्पत्तिः' शक्तिग्रहः, तथाच शक्त्यभावे व्युत्पत्त्यपेक्षा न स्यादित्यर्थः, 'पद्मेति। ननु चागृहीतपद्मप्रयोगनियमस्य पद्मानुभवनियमः कुमुदसाधारणबोधात् प्रयोगनियमग्रहे तु स एवानुभवनियामकः, तथाच गवादिपदेऽपि

---

र्थाभावान्न तत्प्रकारिका धीः तद्ग्रहे चेष्टापत्तिः अन्यथा तत्रापि लक्षणा न स्यादिति भावः। 'किन्त्विति, शक्तस्यैवानुभावकत्वादिति भावः। नन्वेवमपि गवादिपदे अनुभवजनकतावच्छेदकत्वेन शक्तिरस्तु तज्ज्ञानस्य च प्रयोजकत्वे मानाभावः उक्तन्यायेन गवादिस्मृतिसम्भवादित्यरुचेराह, 'अव्युत्पन्नस्येति अगृहीतशक्तेरित्यर्थः, तथाचान्वय-व्यतिरेकाभ्यां तद्धेतुत्वमिति भावः। अनुभवजनकतावच्छेदकमपि शक्तिमत्तया ज्ञातत्वमेव अन्यथा अपभ्रंशस्यानुभावकत्वानुपपत्तेः। न च साधुशब्दस्मरणं, तद्विरहिणामप्यनुभवादित्यपि द्रष्टव्यं। 'योगादेवेति अन्वयादेवेत्यर्थः, अर्थाध्याहारवदन्वयबोध इति भावः। 'अनुभवबलादिति अनुभवार्थमित्यर्थः, 'गोज्ञान-

पादके गोज्ञाने पदस्य शक्तिकल्पनं न त्वनुपपादके प्रमेयत्वेन गोज्ञाने गोपदात् प्रमेयो गौरित्यननुभवाच्च। अथैवं संस्कारादेव तीरादिस्मृतिसम्भवे गौणलाक्षणिकोच्छेदः, तीराद्यनुभवार्थं हि न तत्कल्पनं तदनुभवस्येतरपदादेव सिद्धेः[१] तयोरननुभावकत्वात्, तस्मान्नियता स्मृतिः वृत्तिसाध्येति तयोः कल्पनात्, तथाच नियतपद्मस्मृत्यर्थं पङ्कजपदेऽपि वृत्तित्वेन शक्तिकल्पनमावश्यकं लक्षणाद्यभावादिति चेत्, न, गङ्गायामित्यादौ वृत्तिं विना तीरादेरपदार्थत्वे विभक्त्यर्थान्वयस्तत्र न स्यात् विभक्तीनां प्रकृत्यर्थगतस्वार्थान्व-

स एवास्तु अनुभवनियामकः, मैवं, शक्तिर्हि अनुभावकतावच्छेदको धर्म्मः तं विना नानुभावकत्वमिति शक्तस्यावयवस्यास्त्वनुभावकत्वं न त्वशक्तस्य गोपदस्य, स्मारकता तु तं विनापि प्रयोगादिनियमादपि सम्बन्धमात्रादेव स्मृत्युपपत्तेरिति। ननु गोज्ञाने शक्तिं कल्पयित्वा पश्चाल्लाघवात् सर्व्वपदानां प्रमेयत्वे शक्तिं कल्पयत्वित्यतो हेत्वन्तरमाह, 'प्रमेय इति, पदस्य शक्योपस्थापकत्वनियमादिति भावः। 'विभक्तीनां' सुब्विभक्तीनां, 'प्रकृत्येति। ननु प्रकृत्यर्थत्वं वृत्त्या प्रकृ-

(१) इतरपदादेव सम्भवादिति क०।

इति गोत्वप्रकारकज्ञान इत्यर्थः, तर्हि तदनुभवार्थमेव तत्कल्पनमस्त्वित्यत आह, 'तीरादीति, 'विभक्तीनामिति प्रकृत्यर्थान्वितेत्यर्थः, तेन तिङामपि

यबोधकत्वव्युत्पत्तेः। पद्मस्य तु पङ्कजवाक्यप्रतिपाद्यत्वेन पाचकादेरिव विभक्त्यर्थान्वयोपपत्तिः।

यत्तु शब्दोपस्थित एव शाब्दान्वयबोधः अन्यथा प्रत्यक्षोपस्थिते कलाये पचतीत्यन्वयबोधः स्यादिति। तन्न। पदस्य तत्र तात्पर्य्याग्रहात् तद्ग्रहे भवत्येव किं पचसीत्युक्ते बधूपदर्शितकलायादौ, अन्यथा दैवात् श्रुत-स्मृतकलायपदात् कुतो नान्वयबोधः। द्वारमित्यादावपि न पिधेहिपदाध्याहारः किन्तु तदर्थस्यैव

त्युपस्थाप्यत्वं वृत्तिश्च शाब्दानुभवानुकूलपदार्थस्मृतिजनकः पद-पदार्थसम्बन्ध इति वक्ष्यते, तथाच संस्कारवशादुपस्थितेऽपि प्रकृत्यर्थत्वमस्त्येव, न हि संस्कारमात्रात् स्मृतिः, किन्तूद्बुद्धसंस्कारात्, उद्बोधकञ्च सम्बन्धिज्ञानं प्रकृत्या स्मरणे यः कश्चित् सम्बन्धस्तत्रा-

---

तथात्वान्न व्यभिचारः। सुपामिति शेष इत्यन्ये। 'पङ्कजवाक्येति पङ्कजरूप-वाक्येत्यर्थः।

'अन्यथेति तात्पर्य्यग्रहमनपेक्ष्यैव शब्दोपस्थितत्वमात्रादर इत्यर्थः। 'गौरवादिति लक्षणया कुमुदादिपरस्यापि पद्मादिपदस्य पद्मानुभावकत्वापत्त्या पद्मान्वयबोधतात्पर्य्यकत्वस्यावश्यकत्वादिति भावः। न चैतच्छुकवाक्ये व्यभिचारि तन्मते तत्र तात्पर्य्याभावादिति वाच्यं। तद्भिन्नस्थले तद्धेतुत्वस्य विवक्षितत्वात्। वस्तुतो लाघवादर्थाध्याहारसिद्धौ पद्मोपस्थापकपदत्वं व्यभिचारीति भावः।

योगमात्राभ्युपगमपक्षे परमयं दोषो न तु योगरूढिपक्ष इति भ्रमवान्

लाघवात्। न च पद्ममानयेत्यादौ शाब्दानुभवे पद्मोपस्थापकपदजन्यत्वादन्यत्रापि तथेति वाच्यं। शाब्दपद्मानुभवे हि तदन्वयबोधतात्पर्य्यकपदत्वेन कारणता न तु पद्मोपस्थापकपदत्वेनापि गौरवात्।

अथैवं जनिकाल एव प्रयोगः स्यात् न तदत्ययेऽपि, न ह्यसति हि दण्डे दण्डीति व्यपदिश्यत इति चेत्, न, पाचकादिपद इव प्रत्ययस्य योग्यताशक्तत्वात् तस्य-

---

वश्यं वाच्य इति, मैवं, प्रकृत्या शक्त्युपस्थाप्यस्य प्रकृत्यर्थत्वात् शक्तिश्च क्वचित् साक्षात् क्वचित् परम्परया वा इत्यन्यदेतत्, पाचकादिप्रकृतेरप्यवयवशक्तिभिर्वाक्यार्थोपस्थितेस्तत्र शक्त्युपस्थाप्यत्वं। न चावयवो न प्रकृतिः समुदाये च न शक्तिरिति कथं पङ्कज-पाचकादिप्रकृतिशक्त्युपस्थाप्यता वाक्यार्थ इति वाच्यं। यावदवयवघटितत्वात् समुदायस्य तत्प्रकृतित्वेऽवयवस्यापि तत्प्रकृतित्वात्। अतएव कृत्तद्धित-समासाश्चेत्यर्थवादादिसूत्रप्रपञ्चतया सिद्धान्तितं। अन्यथा समुदायस्यानर्थकतया अर्थवादादिसूत्रेणासंग्रहात् कृदित्यादिसूत्रं विधायकमेव स्यात्। अतएव गवादिपदानां शक्तिकल्पनं तेन विना तदर्थस्य प्रकृत्यर्थत्वात् अन्यथा तत्र शक्तौ प्रमाणाभावः स्मरणस्य संस्कारवशादनुभवस्य विभक्तिबलादुपपत्तेः पङ्कजादिपदेऽपि आवश्यकयोगबलादेवानुभवसम्भवे समुदायशक्त्यभाववत्सुब्विभक्तिमा-

शङ्कते, 'अथैवमिति कर्त्तृत्वशक्तस्य डप्रत्ययस्य कृतिविरहदशायां न प्रयोग इत्यर्थः, 'प्रत्ययस्य' डप्रत्ययस्य, 'योग्यतेति कृतियोग्यताविशिष्टशक्तत्वादि-

धकत्वाद्वा उपसर्गादौ तथा निर्णयात्, अन्यथा योगरूढावपि जनिकाल एव प्रयोगः स्यात्, योगत्यागे केवलरूढिवादे विवादाभावश्च, तथापि कुमुदे लक्षणा न स्यात् योगार्थस्याबाधादिति चेत्, न, वक्ष्यते हि तत्र तस्यासाधुत्वं ।

नव्यास्तु नियमतः स्मृतपद्मस्यान्वयानुपपत्त्यनन्तरमेव कुमुदधीरिति न तत्र लक्षणाव्यवहारः वस्तुतो मुख्यतैव तवापि पद्मत्वस्यायोग्यतया अनन्वये योगादेव कुमुदधीर्न लक्षणयेति। उच्यते । अस्ति व्युत्पन्नस्य पदज्ञानानन्तरं नियमतोऽन्वयप्रतियोगिस्मृतिरतस्तद्धेतुसंस्कारोद्बोधकं प्रतिबन्धकं विना पदज्ञानमेव दृष्टानुविधानत्वादनुगतत्वाल्लघुत्वाच्च, न तु प्रति-

---

च्चादेवानुभवसम्भवे गवादिपदानामपि शक्तिर्न कल्प्येत, नहि सुब्विभक्तिं विना कृतं किञ्चिद्वाक्यमिति दिक् । 'शब्देति शब्देन शक्त्योपस्थापित एवेत्यर्थः, तथाचास्तु तीरस्य पदान्तरादनुभवो न पद्मस्येति भावः । 'पदज्ञानमिति पदत्वं शब्दत्वं तथाच शक्त्याश्रयताव-

---

त्यर्थः, 'तवापीति व्यक्तिवचनन्यायात् पद्मान्वयेन कुमुदानन्वयस्वीकर्त्तुरित्यर्थः । 'व्युत्पन्नस्येति गृहीतशक्तिकस्येत्यर्थः, 'प्रतिबन्धकं विनेति बाधकं विनेत्यर्थः, 'पदज्ञानमिति गृहीतशक्तिकपदज्ञानमित्यर्थः । 'दृष्टेति गवादिपदे दृष्टान्वय-व्यतिरेकत्वादित्यर्थः, 'लघुत्वाच्चेति दृष्टेनैवोपपत्तावदृष्टस्य तथात्वकल्पने गौरवमित्यर्थः । ननूक्तरीत्या पद्मानुभवोपपत्तौ पद्मेन समं

पदार्थस्मृति-तत्कालोत्पन्नमनन्तमदृष्टचरमनिर्व्वचनीयं गौरवात्, अतः पद्मस्मृतावपि गृहीतसम्बन्धं पङ्कजपदमपि तथेति सम्बन्धत्वेन शक्तिसिद्धिः। एवञ्च रथकारशब्देऽपि जातिविशेषे रूढिर्न स्यात् संस्कारादेव तदुपस्थितिसम्भवात्। तथाच "वर्षासु रथकारोऽग्नीनादधीतेत्यत्र रूढ्यर्थस्य बलवत्त्वेन शीघ्रमुपस्थितत्वात् जातिविशेषवत एवाधानं विधीयत इति राद्धान्तव्या-

च्छेदकावच्छिन्नज्ञानमित्यर्थः। ननु रथकारशब्दे अनुभवार्थमेव शक्तिर्न हि पङ्कजपदवत्तत्रावयवानामनुभावकत्वमिति न राद्धान्तव्याघातो न वास्तीत्यादिसमाधानमिति पूर्व्वपक्षानास्कन्दनादित्य-

पङ्कजपदस्य गृहीतसम्बन्धत्वेनासिद्धं अन्यथा गृहीतसम्बन्धस्य तस्य स्मारकत्वे शक्तिसिद्धिस्तत्सिद्धौ च गृहीतसम्बन्धस्य स्मारकत्वमित्यन्योन्याश्रयापत्तिरित्यरुचेराह, 'एवमिति, 'जातिविशेषः सङ्करजातिविशेषः। तदुक्तं, "शूद्रायां करणो वैश्यान्माहिष्यो विटस्त्रियां नृपात्। रथकारस्तु माहिष्यात् करण्यां यस्य सम्भवः" ॥ इति, 'तथाचेति, अतएव तत्र विद्याप्रयुक्तिकल्पनमपि, अन्यथा योगेन त्रैवर्णिकपरत्वेन तदपि न स्यादिति भावः। ननु जातिविशेषस्य संस्कारोपस्थितावपि तदनुभवार्थमेव रूढिरुक्ता। न हि तस्यापि पद्मत्ववदवयवैरेवानुभवः, अवयवार्थानुपस्थितस्यैव जातिविशेषस्य नित्यमवगतेः। न च पङ्कजपदवत्तत्रापि रूढि-योगयोरविरोधेन योगार्थोपहितरूढ्यर्थप्रतीतौ बाधकाभावात् रथकरणयोग्यजातिविशेषवत एवाधानविधिरिति वाच्यं। परस्यैवमनभ्युपगमात्। अतएव रूढ्यर्थस्य शीघ्रमुपस्थितत्वादित्युक्तं। अन्यथा योगार्थसाहित्येनैवोपस्थितौ तदनुपपत्तेः।

घातः। यथाच शाब्दः सन्निधिरन्वयबोधाङ्गं तथोक्त-मासत्तिप्रस्तावे। स्यादेतत्, पद्मे नियतप्रयोगरूपसम्बन्धेन पङ्कजपदादेव पद्मस्मृतिरस्तु, एवञ्च पद्मे विभक्त्यर्थान्वयः शाब्दानुभवप्रवेशश्चोपपद्यते पङ्कजपद-प्रतिपाद्यत्वात्। न च प्रतिपाद्यता वृत्त्यैव तदुपयोगिनी, पाचकमानयेत्यादौ वाक्योपस्थाप्ये तदभावात्। न च पदाद्वृत्त्यैव स्मृतिः, किन्तु सम्बन्धिज्ञानाद्वृत्ते-रपि सम्बन्धत्वेन स्मृत्युपयोगात्, अन्यथा पदाच्छक्तेः स्मृतिर्न स्यात्, गवादिपदे त्वेवं स्मृतिसम्भवेऽप्यन्वयानु-भवार्थं शक्तिरित्युक्तं। एतेन पङ्कजपदान्नियमतः पद्मज्ञानं न वृत्तिं विना अतोलक्षणाद्यभावे शक्तिरि-

---

स्वरसादाह, 'यथाचेति, तथाच शक्तिं विना उपस्थितपद्मस्य शाब्दा-नुभवप्रवेश एव न स्यादिति शक्तिसिद्धिरिति भावः। उक्तसमा-धिमबुद्धा यथाश्रुते शङ्कते, 'स्यादेतदिति, 'नियतप्रयोगेत्युपलक्षणं उक्तक्रमेणेत्यपि द्रष्टव्यं, 'पाचकमित्यापाततः, वस्तुतोऽवयवशक्त्युप-स्थाप्यत्वमेवेति, 'अनुभवार्थमित्युपलक्षणं विभक्त्यर्थान्वयार्थमित्यपि

अन्यथा पङ्कजपदवत् तत्रापि योगरूढिरेवेति क्वचित् परस्य तदभ्युपगमः क्वचिन्नेति असम्भवदुक्तिकमापाद्येतत्यनुशयानः शब्दाध्याहारयुक्तिमेव स्मार-यति, 'यथा चेति, शब्दाश्रयत्वे शक्तिरित्येव मतं सम्यगिति भावः। अस्तु गृहीतसम्बन्धं पङ्कजपदं पद्मस्मारकं तथापि न शक्तिसिद्धिरित्याह, 'स्यादे-तदिति, तथाच न शाब्दसन्निधिभङ्गोऽपीति भावः। 'वृत्त्यैवेति, यद्यपि शाब्द-

त्यपास्तं। ज्ञानं हि स्मृतिरनुभूतिश्च शक्तिं विनाप्युपपन्ना न तां कल्पयति अनन्यलभ्यस्यैव शब्दार्थत्वात्, अन्यथा शक्तिं विना पदान्नोपस्थितिरित्यन्वयेऽपि शक्तिर्लक्षणोच्छेदश्च। पङ्कजं पद्ममुच्यत इति प्रसिद्धार्थपदसामानाधिकरण्यात् पद्मस्य ज्ञापकं तत् सिध्यति न तु तच्छक्तं। अत एव पङ्कजपदं पद्मशक्तं नियमतस्तत्स्मारकत्वात् पद्मपदवदिति निरस्तं। शक्तौ व्यभिचारात् अनन्यलभ्यत्वस्य पद्मानुभावकत्वस्य चोपाधित्वाच्चेति। उच्यते। नियतपद्मस्मृतेरुक्तसम्बन्धेन

द्रष्टव्यं। 'अनन्येति अनन्यलभ्यार्थकत्वं, तदपि सामान्यव्याप्तौ यत् यत्रानन्यलभ्यबोधकं तत्तत्र शक्तमित्यत्र,[१] विशेषव्याप्तावुपाधिमाह, 'पद्मेति, 'नियतेति, अत्र पद्मस्मृत्यर्थं न सम्बन्धापेक्षा उपदात् कर्तृत्वेन स्मरणस्य समुदायाद्वाक्यार्थोभावेन चानुभवस्य सम्भवात्

[१] यत् यत्र नियतस्मारकं तत् तत्र शक्तमित्यत्रेति ख०।

बोधहेतुपदार्थोपस्थित्यनुकूलपद-पदार्थसम्बन्धत्वं वृत्तित्वमत्रापि, तथापि वृत्तिपदमत्र शक्ति-लक्षणान्यतरपरं, साक्षादिति शेषः। अन्यथा पाचकस्यापि परम्परया वृत्त्युपस्थाप्यत्वेनाग्रिमदोषस्यासङ्गतत्वापत्तेः। 'नोपस्थितिरिति नानुभव इत्यर्थः, पदादन्वयस्मृतेरभावात्। 'अतएवेति नियमतस्तत्स्मारकत्वस्य हेतोरन्यथासिद्धत्वादित्यर्थः। लाक्षणिके व्यभिचारवारणाय 'नियमत इत्युक्तं। दोषान्तरमाह, 'शक्ताविति, सामान्यव्याप्ताविति शेषः। विशेषव्याप्तावाह, 'अनन्येति अनन्यलभ्यार्थकत्वस्येत्यर्थः, 'पद्मेति, पङ्कजशब्दे

पङ्कजपदसाध्यत्वे पद्मवत्तद्व्याप्य-व्यापकयोरपि नियमतः स्मृतिप्रसङ्गः। अथ पद्मे प्रयोग एव पद्म एव प्रयोग-इति नियतसम्बन्धेन पद्मेतरव्यावृत्तेन पद्मस्यैव पदात् स्मृतिः। न चैवं नियतप्रयोगादेव शक्तिसिद्धिः, अनन्यलभ्यस्यैव पदार्थत्वादिति चेत्, न, तर्हि ज्ञानस्यास्य हेतुत्वे सकलप्रयोगादर्शिनो बहुधा पद्म एव गृहीत-प्रयोगस्य समव्याप्तिज्ञानाभावान्न नियता पद्मस्मृतिः स्यात् स्वरूपसतस्तथात्वे वा अगृहीतपद्मप्रयोगस्यापि ततो नियतपद्मस्मृतिप्रसङ्गः। अथ यादृशः प्रयोगस्त्वया

तथाच पद्मत्वस्मृत्यर्थं सम्बन्धानुसरणं तेन नियतपङ्कजपदप्रयोगविषयवृत्तित्वमुक्तसम्बन्धो वाच्यः तथाच तन्निष्ठरूपादि-प्रमेयत्वयोरपि स्मरणप्रसङ्ग इति भावः। 'अथेति यद्विशिष्टे प्रयोग एव यद्विशिष्ट-एव प्रयोग इत्येवंरूपसम्बन्धेनेत्यर्थः, तेन प्रमेयत्वविशिष्टे पङ्कज-पदप्रयोग एवेत्यसिद्धं घटादौ तदप्रयोगात् तत्रैव प्रयोग इत्यनेन रूपादिवारणं तत्त्यागेन पद्मान्तरेऽपि प्रयोगादित्युभयानतिप्रसङ्ग-

---

शक्तानामवयवानामेवानुभावकत्वमतः पङ्कजसमुदाये पक्षे न साधनव्यापकत्व-शङ्कापीति भावः। यद्यपि शक्तिवदनुभावकत्वमपि सन्दिग्धं तथापि सन्दिग्धोपाधिः स्यादिति भावः। 'पद्मवदिति पद्मत्ववदित्यर्थः। पङ्कजपदप्रयोग-विषयवृत्तित्वेन सम्बन्धेन यदि स्मारकता तदेदं दूषणं, यदि पद्मत्वविशिष्टे नियतप्रयोगरूप एव सम्बन्धस्तथा तदा तत्प्रकारकप्रतीत्यापत्त्या कुमुदत्वा-दिविशिष्टे तत्प्रयोगाभावात् न तन्नियतस्मृतिप्रसङ्गः, एवञ्च तत्र वक्ष्यमाणा-

शक्तिग्राहकत्वेनाभिमतः स एव पद्मस्मारकोऽस्तु। न च पद्मत्वस्येव प्रयोगसमव्याप्तत्वेन गृहीतस्य सौरभादेरुपाधेस्ततः स्मृतिप्रसङ्गः, तवापि शक्तिग्रहप्रसङ्गात्। तयोस्तुल्यत्वेऽपि शक्तिग्राहकप्रमाणे लाघवादितर्कावतारान्नोपाधौ शक्तिरिति यदि तदा तर्कसहकृतएव शक्तिग्राहकत्वाभिमतः सम्बन्धः पद्मस्मृतिहेतुरस्तु, तर्काद्यनवतारेऽपि बहुधा गृहीतप्रयोगस्य पद्मस्मृतिदर्शनान्न तथेति चेत्, तर्हि तवापि तर्कं विना शक्तिग्राहकाभावात् कथं पद्मस्मृतिरिति तुल्यं। न चैवं तत एव शक्तिग्रहोऽपि स्यात्, अनन्यलभ्यस्यैव शब्दार्थत्वादिति, मैवं, एवं गवादिपदेऽपि शक्तिग्राहकत्वाभिमतादेवंविधप्रयोगादेव ज्ञाताद्गवादेः स्मृत्य-

---

इति भावः। 'पद्मेतरेति पद्मत्वतरेत्यर्थः, एवमग्रेऽपि, 'सौरभादेः'

---

दोषो बोध्यः, 'अस्येति समनियमस्यैवेत्यर्थः। 'सौरभादेरिति सौरभविशेषवत्त्वादेरित्यर्थः, तथाच पद्मेतरव्यावृत्तत्वमप्यसिद्धमिति भावः। 'तयोरिति पद्मत्व-सौरभविशेषवत्त्वयोरित्यर्थः, 'तदेति, यद्यपि स्मारकसम्बन्धे सति गुरोरपि स्मरणान्न तर्कस्य प्रतिबन्धकत्वं तथात्वादर्शनात् शक्तिग्रहस्तु पद्मत्वे लघुनि युज्यते, तथापि लघुत्वे सति नियतप्रयोगविषयवृत्तित्वमेव स्वसम्बन्धः स्मारकः स च सौरभविशेष इति तात्पर्य्यं। 'तत एवेति तादृशप्रयोगविषयत्वादेवेत्यर्थः, 'स्मृत्यनुभवाविति, शक्तिवत्तस्याप्यनतिप्रसक्तत्वादिति भावः। ननु शक्तिग्राहकत्वाभिमतप्रयोगान्न शक्तेरन्यथासिद्धिः, न

नुभवौ स्यातां किं शक्त्या, तस्मात् पदाधीना नियता स्मृतिः शक्तिसाध्या वा नियतसम्बन्धसाध्या वा वृत्तिसाध्या वा, तत्र परिशेषादिह शक्तिसाध्यैव। न च शक्तिस्मृतौ व्यभिचारः, शक्तिस्मारकत्वाभिमताद्धि

सौरभविशेषवत्त्वादेः, 'किं शक्त्येत्यापाततः, वस्तुतः प्रयोगविषयवृत्तित्वस्य स्मारकत्वे तर्कापेक्षाया अदृष्टचरत्वात् सम्बन्धिज्ञानात् सम्बन्धिसहस्रस्य गुरोर्लघोश्च युगपत् स्मरणदर्शनात् शक्तौ च तदपेक्षायाः प्रामाणिकत्वात्। किञ्च प्रामाणिकं सम्बन्धमपश्यत आप्तस्य तादृशप्रयोगाभावेन सम्बन्धान्तरस्य तदुपजीव्यस्यावश्यकत्वात्। अत एवाप्ततात्पर्य्यमात्रादेव नार्थोपस्थितिरिति वक्ष्यत इति दिगिति तत्त्वं। 'नियता' आवश्यकी, 'नियतेति प्रयोगादिनियामकसम्बन्ध-

हि शक्तिः प्रयोगादेव ज्ञायते, तथाच व्यवहारादिना शक्तिग्रहेऽन्वयबोधो न स्यात् न स्याच्च सादिदेवदत्तादिपदादन्वयबोधो नियतप्रयोगाज्ञानादिति चेत्, न, प्रकृतेऽपि तुल्यत्वात्। किञ्चैवं गवादिपदे पदाधीननियतस्मृतित्वावच्छेदेन शक्तेः प्रयोजकत्वकल्पनादत्रापि तथा, तदिदमाह, 'तस्मादिति, 'शक्तिसाध्येति शक्तिप्रयोज्येत्यर्थः, तेन लाक्षणिकार्थस्मृतौ न व्यभिचारः शक्योपस्थितिद्वारा शक्तेस्तत्रापि प्रयोजकत्वात्। यद्वा नियतगर्भहेतोरेव तत्राभावान्न व्यभिचारः। न च समवायेन पदादाकाशस्मृतौ व्यभिचारः, पदाधीनत्वेन शाब्दबोधानुकूलत्वस्य विवक्षितत्वात्, एवञ्च 'न चेत्यादिग्रन्थो यथाश्रुत इति बोध्यं। अग्रिमसाध्यद्वयेऽपि सामान्येन रूपेण शक्तिरेव सिध्यतीत्याह, 'परिशेषादिति, नियतप्रयोगादिसम्बन्धस्य दूषितत्वात् लक्षणादेश्चाभावादिति भावः। 'हेत्वभावादिति शक्तिस्मरणानुकूलशक्त्यभावादि-

पदात् पदार्थस्यैवाहत्य स्मरणं न शक्तेर्हेत्वभावात् कल्पनागौरवाच्च सम्बन्धिनं विना सम्बन्धस्यास्मरणेन प्रथमं पदार्थस्मरणस्यावश्यकत्वाच्च। पदार्थस्मृतेश्च शक्तिविषयत्वे मानाभावात् उद्बुद्धसंस्कारविषयत्वाद्-यदि शक्तिरपि तद्विषयः, तथापि पदार्थशक्तत्वेनैव ज्ञातस्य पदस्य शक्तिस्मारकता न तु शक्तिसम्बन्धित्वेन

साध्येत्यर्थः। ननु पदार्थस्मृत्यनन्तरं शक्तिस्मृतिं न ब्रूमः किन्त्वेकैव उभयस्मृतिरित्यत आह, 'पदार्थेति सम्बन्धिस्मृतेः सम्बन्धविषयत्वानियमेन शक्तिविषयत्वनियमे मानाभावादित्यर्थः(१)। 'न त्विति, तथाच शक्तिसाध्यत्वेनैव नियमो न तु तच्छक्तिसाध्यत्वेनेति भावः। ननु पदात्तच्छक्त्येति नियमः शक्तिमात्रेण वा आद्ये शक्तिस्मृतावेव व्यभिचारः अन्त्ये चेष्टापत्तिरवयवशक्तेरेव परम्परया पदत्वस्मार-

(१) सम्बन्धिस्मृतेः सम्बन्धविषयत्वे मानाभावादित्यर्थ इति ख०।

त्यर्थः, तत्कल्पने तु गौरवमित्याह, 'कल्पनेति, 'सम्बन्धिनमिति। यद्यपि संयोगादिपदजन्यस्मृतौ व्यभिचारः, तथापि सम्बन्धिघटितरूपेण सम्बन्धस्मरणे तथा नियमः, शक्तित्वस्य सम्बन्धिघटितत्वादिति भावः। नन्वेवं विस्मृतशक्तेरपि पदात् पदार्थस्मृतिः स्यात् तथाच शक्त्यंशेऽपि संस्कारोद्बोध आवश्यक इति सामग्रीबलादेव विशिष्टस्मरणं। न च प्रथमं पदार्थास्मरणे विशेषणज्ञानाभावान्न विशिष्टस्मरणं गवादिपदादपि विशिष्टस्मरणाभावापत्तेः। यदि च स्मरणे तन्न हेतुः पूर्व्वानुभवरूपएव वा हेतुस्तदा प्रकृतेऽपि तुल्यमिति शक्तिस्मृतौ व्यभिचारतादवस्थ्यमित्याह, 'उद्बुद्धेति, निराकरोति, 'तथापीति, तथाचानन्यगत्या पदार्थशक्तत्वेनैव ज्ञातं पदं

अन्यथासिद्धत्वात् । यद्वा पदान्नियमतः स्मृतिर्नियतसम्बन्धसाध्या शक्त्यापि समं पदस्य शक्त्याश्रयत्वमेव नियतः सम्बन्धः। अपिच कुमुदेऽवयवशक्तिप्रतिबन्धार्थं रूढिः। न च नियतपद्मस्मृतिरेव प्रतिबन्धिका, रूढिं

कत्वात् इत्यरुचेराह, 'अपि चेति, तथाच 'नियतेत्यपरान्वयव्यवच्छिन्ना अपरान्वयप्रतिबन्धिकेति यावत् । न च शक्तिस्मृतिः पद्मस्मृतिवदन्यान्वयप्रतिबन्धिकेति भावः। ननु रूढ़िजा पद्मस्मृतिर्न तत्र तन्त्रमपि तु पद्मस्मृतिरेवेति कथं विशिष्टा स्मृतिः रूढ़ौ लिङ्गं इत्याशङ्क्य निषेधति, 'न चेति, 'रूढ़िं विनेति, पद्मस्मृतिरेव

शक्तेरपि स्मारकं कल्प्यत इति शक्तिस्मृतिरपि शक्तिसाध्येति न व्यभिचारः। न हि स्वशक्तिसाध्येति साध्यमिति भावः। 'न त्विति, येन शक्तिनिरूपितसम्बन्धस्य शक्तिभिन्नत्वेन व्यभिचारशङ्का स्यादिति भावः। 'अन्यथेति पदार्थशक्त्यैवान्यथासिद्धत्वादित्यर्थः। ननु पदस्यापि सम्बन्धित्वेन स्मारकता न तु पदत्वेन मानाभावात् गौरवाच्च । न च शक्तिसम्बन्धित्वेन पदं ज्ञातमतो न तत् स्मारकमित्यरुचेराह, 'यद्वेति, उक्तबाधकान्नियतप्रयोगरूपसम्बन्धेन नार्थान्तरं, 'सम्बन्धसाध्या' सम्बन्धज्ञानसाध्येत्यर्थः, तेन शक्तिभ्रमजन्यस्मृत्यादौ न व्यभिचारः। यद्यपि शक्तेः सम्बन्धत्वाच्छक्तिग्रहकाले तत्सम्बन्धस्यापि भाने मानाभावः, तथापि शक्तेः स्वरूपतो ज्ञानं नान्वयबोधप्रयोजकं किन्त्वनुभवजनकतावच्छेदकत्वेनेति पदस्य तद्वत्त्वेन भाने शक्तेरपि सम्बन्धो भासत इति भावः । न चैवं पदविशेष्यकमेव स्मरणं स्यान्न पदार्थविशेष्यकमिति वाच्यं। हस्त्यादिना हस्तिपकादिस्मृतेर्हस्त्यादिगोचरत्वादर्शनेन तदंश एव संस्कारोद्बोधकल्पनात् । पदार्थविशेष्यकसंस्कारानन्तरमेव पदमुद्बोधयतीत्यपि कश्चित् । 'रूढ़िं विनेति, उक्तयुक्तेरिति भावः । 'अतएवेति

विना नियतस्मृतेरभवात्। अत एव न व्यक्तिवचनन्या योऽपि। नचैकं पदमेकदैकेनैव रूपेण प्रवर्त्तते अतो न पद्मत्व-पङ्कजत्वयोर्धीरिति वाच्यं। अवयव-समुदाययोर्भेदात् लम्बकर्णादिपदे व्यभिचाराच्च। तर्हि तद्वदेव रूढ्या नावयवशक्तिप्रतिबन्ध इति चेत्, न, तत्रा-

रूढौ कार्य्यतया लिङ्गं सा स्वभावात् कुमुदान्वयप्रतिबन्धिका अतः शक्तिस्मृतावेव व्यभिचारवारणाय तादृशस्मृतिर्लिङ्गमिति भावः। नन्वेकं पदं इत्यत्र न पदत्वं शक्तत्वं अपि तु विभक्त्यन्तत्वं तथाचैकं पदं योग-रूढ्योरन्यतरेणैव रूपेण प्रवर्त्तत इत्यत्र व्याप्तौ नायं दोषः इत्यरुचेराह, 'लम्बेति, तन्मते बहुव्रीहावन्यपदार्थे रूढिमत्त्वादिति भावः। 'तर्हीति, इतरान्वयप्रतिबन्धकरूढि-योगयोरन्यतरप्रवृत्तिनियमो न रूढि-योगमात्रयोरिति न व्यभिचार इति भावः। 'तत्रावयवेति, प्रकृतेऽपि न रूढिः प्रतिबन्धिका अपि तु स्मारिका सती यत्राकाङ्क्षादिसमवहिता तमनुभावयति तत्समवधानञ्च पद्म एव न कुमुदे-

रूढिं विना नियतस्मृतेरभावादेवेत्यर्थः। 'लम्बकर्णेति समासशक्तिवादिनः परस्य मते तद्गुणसंविज्ञानबहुव्रीहौ योग-रूढिभ्यां लम्बकर्णवत्पुरुषप्रतीतेरित्यर्थः।

केचित्तु लम्बकर्णपदं कर्णाढ्ये रूढं लम्बकर्णवति यौगिकमिति लम्बकर्णत्वेन कर्णाढ्यत्वेन च युगपदेव प्रवर्त्तत इत्याहुः।

'तद्वदेवेति लम्बकर्णादिपदवदेवेत्यर्थः, 'तत्रेति, फलबलेन क्वचिदेव प्रतिबन्धो न सर्व्वत्रेति भावः। अत्रापि प्रतिबन्धः कुमुदमभिप्रेत्य पद्मेऽवयवा-

वयवार्थक्रियान्वयेनाप्रतिबन्धान्नानार्थे च नानार्थानुभवात् नैकशक्त्यान्यशक्तिप्रतिबन्धः ।

यत्तु अवयवशक्तिस्मृतिकाले समुदायशक्तिस्मृतिनियमे हेत्वभावान्न तया प्रतिबन्ध इति । तन्न । समुदायस्य तावदवयवरूपत्वेन सर्व्वावयवादेर्वोभयशक्तिस्मृतिसम्भवात् मण्डपपदे तथा दर्शनात् ।

अथ पङ्कोत्तरजपदं प्रतिबन्धकं गो-वलीवर्द्दवत पङ्कजनिपदप्रयोगे उप्रत्ययस्य कर्तृविशेषपद्मपरत्वं वा

---

ऽपौत्यन्यदेतत् । अत्र च क्रियया समं तत्समवधानात्तया सहान्वय इति न क्वचित् रूढेः प्रतिबन्धकत्वमिति विशेषणप्रक्षेपेऽपि प्रकृते व्यभिचार एवेति भावः । ननु सकृदुच्चरितात्सकृदर्थप्रत्ययनियमादेकरूढिरेवापरान्वयप्रतिबन्धिकेत्यत आह, 'नानेति, सैन्धवमानयेति युगपदुभयार्थतात्पर्य्यग्रहेऽन्वयानुभवदर्शनात् सकृदित्याद्यसिद्धेरिति भावः । ननु पङ्कोत्तरजपदमित्यत्र पदं वर्णः स चेत् पद्मेतरान्वयप्रतिबन्धकः तदा चैत्रवदाधुनिकसङ्केतितपङ्कजपदादपि तदनुभवो न स्यादिति कल्पान्तरमाह, 'गो-वलीवर्द्देति । नन्वत्र न्याये पौनरुक्त्यापत्तिर्मानं तेन विशेषपदसमभिव्याहार एव सामा-

---

र्थस्य भानादिति ध्येयं । 'मण्डपेति, अन्यथा मण्डपानकर्त्तरि रूढ़िपूर्व्विका लक्षणापि न स्यादिति भावः । 'अथेति, तथाच न प्रतिबन्धार्थं रूढ़िः अन्यथासिद्धेरिति भावः । 'गो-बलीवर्द्दवदिति बलीवर्द्दपदसमभिव्याहृतस्य

जनेः पद्मजनिविशेषपरत्वं वा स्वभावादेव कुमुद-बोधाजनकत्वं वा चक्षुष इव रसे कुमुदेऽवयवशक्ति-कुण्ठनं वा कल्प्यतां तेन कुमुदे न धीरिति चेत्, तर्ह्यज्ञातपद्मप्रयोगस्य कुमुदसाधारणबोधो न स्यात्। न भवत्येवेति चेत्, किमवयवव्युत्पन्नस्य। ततोऽर्थप्रत्यय एव न भवति, यद्वा पङ्कजत्वेन पद्ममेवानुभूयते, आद्ये मन्दुरजादिपदादिव सामग्रीसत्त्वे कथं नानुभवः, द्वितीये कुमुदमप्यनुभूयेताविशेषात्। न चैवं पङ्कज-शब्दस्य सामान्यशब्दत्वात् तात्पर्य्यवशेन विशेषतः पद्म-कुमुदधीसम्भवात् न रूढिर्न वा लक्षणा स्यादिति वाच्यं। न हि प्रयोजनक्षतिभयेन सामग्री नानुभा-वयति। यदि च पद्म-कुमुदयोस्तुल्यता तदा अश्व-

---

न्यपदस्य तदितरविशेषस्मारकत्वमित्यरुच्या कल्पान्तरमाह, 'स्व-भावादिति। नन्ववयवानां शक्तिमत्त्वे कुमुदबोधजनकत्वस्वभावतोऽभि-भानाजनकत्वस्वभावतेत्यवयवानामेव शक्तिकुण्ठनमाह, 'अवयवेति,

---

गोपदस्य स्त्रीगवीमात्रपरत्वादित्यर्थः, 'तेनेति धर्म्मिकल्पनात इति न्याया-दित्यर्थः। 'न चैवमिति, 'एवं' कुमुदसाधारण्येन बोधकत्वे, पाचकशब्दव-दिति भावः। 'न हीति, तथाचावयवव्युत्पन्नस्य कुमुदसाधारणबोधः स्यादेव सामग्र्याः सत्त्वादित्यर्थः। कुतस्तर्हि पद्मे शक्तिः कुमुदे वा लक्षणा सामान्य-शब्दत्वेनैवोभयबोधोपपत्तेरित्यत आह, 'यदि चेति, कुण्ठने दोषान्तरमाह,

हीतपद्मप्रयोगस्य पद्मान्वयानुपपत्तिपुरःसरैव कुमुद्धीर्न स्यात् स्याच्च कदाचिद्वैपरीत्यं अतः पद्मे रूढिरेव, कुमुदे यथा लक्षणा तथा वक्ष्यामः। कुण्ठनञ्च शक्तिवृत्तिधर्म्मान्तरं वा शक्तेरनुद्भवो वा अभिभवो वा तच्च कारणान्तरं वा अदृष्टचरं कल्प्यं। रूढेः प्रयोगप्रतिबन्धकत्वं मण्डपादौ दृष्टमेव। अतएव पङ्काद्यवयवैः पद्ममेवानुभाव्यत इति, अवयवनियमस्य कल्पनान्न कुमुदे धी-प्रयोगौ। अन्यथा रूढावपि योगान्न कुतस्तौ कुमुदे, यथा उद्भित्पदस्य योगात् खनित्रे रूढ्या कर्म्मविशेषे प्रयोग इति निरस्तं। अगृहीतनियतपद्मप्रयोगस्य कुमुदसाधारणबोधदर्शनात्, रूढिवादे तु सैव प्रतिबन्धिका मण्डपपदवत्, ज्ञातस्य चावयवनियमस्य प्रयोजकत्वे पद्मे शक्तिरेव पद्मज्ञानजनकत्वज्ञानस्य शक्तिनिर्व्वाह्यत्वात्, उद्भित्प-

---

'एवमिति अविशेष इत्यर्थः, 'ज्ञातस्येति, अस्मात् पदादयमर्थो-

---

'कुण्ठनञ्चेति, 'धर्म्मान्तरमिति पदार्थान्तरमित्यर्थः, 'कारणान्तरं' अभिभवादिकारणान्तरं, पदार्थान्तरञ्चादृष्टचरमित्यर्थः, 'अवयवनियमस्येति पद्मानुभवजनकत्वस्येत्यर्थः, नियमगर्भस्य प्रयोजकत्वे मानाभावात् गौरवाच्च, अतएवाह, 'पद्मज्ञानजनकत्वज्ञानस्येति, 'शक्तीति जनकतावच्छेदकशक्तिं विना जनकत्वस्यासम्भवादित्यर्थः, तथाचात्र सैव प्रतिबन्धिकेति भावः। उद्भित्पदे तु न रूढेः प्रतिबन्धकत्वं तद्धि योगरूढ्यर्थयोर्विशिष्टप्रतीतिविर-

द्रे त्ववयवार्थः कर्मण्ययोग्यत्वादेव नान्वीयते न तु रूढ्या प्रतिबन्धात्। अवयवान्वययोग्ये खनित्रेऽपि न प्रतिबन्धः योगेन खनित्रेऽपि प्रयोगात्। एवञ्च रूढि-योगाभ्यामुद्भित्पदस्य नानार्थतुल्यतैव उभाभ्यामेका-र्थानवगमात्। ननु गृहीतपद्मप्रयोगस्यावयवैः सह प्रयोगे पद्ममेवानुभाव्यत इति स्वभावकल्पनमस्तु। नचैवं व्युत्पत्त्यन्तरं, स्वरूपसत एव प्रयोगग्रहस्य शक्ति-ग्रहस्यैवोपसन्धानत्वात् उपसर्गस्येव धातोः प्रकर्षादि-बोधकत्वे, उपसन्धानं विना कुमुद्बोधोभवत्येव।

ऽनुभूत इत्यस्य ज्ञातस्य शक्तिकल्पकत्वादनुभवजनकतावच्छेदकं विना अनुभावकत्वाभावेनावच्छेदकतया शक्तिकल्पनमिति भावः। 'नानार्थेति, एकत्र वर्णे शक्तिद्वयाभावात्तुल्यत्वमिति द्रष्टव्यं। 'व्युत्पत्त्यन्तरं' ज्ञापकसम्बन्धान्तरकल्पनं।

ढ्या वा योगेनान्यप्रयोगाभावेन वा कल्प्यं, तथाचाद्ये अन्यथासिद्धिमाह, 'अयोग्यत्वादिति, अन्त्ये असिद्धिमाह, 'योगेनेति। शक्ततावच्छेदकक-रूपाभावादस्तुतो न नानार्थत्वमिति विभावयन्नाह, 'तुल्यतैवेति, 'उभाभ्या-मिति, यद्यप्येवमुद्भित्पदवुल्ययोगक्षेमतया मण्डपपदेऽपि लक्षणा न स्यात्, तथापि तत्र रूढ्यर्थान्वयानुपपत्तिपुरःसरमेव योगार्थभानमिति विशेष-इति वदन्ति। उद्भित्पदे तु कथं न तथेति चिन्त्यं। नन्ववयवैः सह प्रयोगे गृहीतपद्मप्रयोगस्य पद्ममेव समुदायेनानुभाव्यत इति स्वभावकल्पने समु-दाये शक्तिरेव स्यादित्यत आह, 'न चैवमिति, 'व्युत्पत्त्यन्तरं' अवयव-शक्तिग्रहापेक्षया शक्तिग्रहान्तरमित्यर्थः, 'स्वरूपसत एवेति, व्युत्पत्तेश्च

यत्तु पदानां स्वार्थान्वयबोधसामर्थ्यं उपजीव्य कुमुदाबोधार्थं नान्विताभिधानेऽवयवनियमः कल्प्यते उपजीव्यविरोधात्, किन्तु समुदायस्य कुमुदे स्वार्थत्वाभाव एवेति। तन्न। एवं स्वार्थत्वाभावेन समुदायात् कुमुदधीर्न स्यात् अवयवेभ्यस्तु स्यादेवेति।

मैवं। न हि पदानां स्वभावाधीनं बोधकत्वं किन्तु शक्तिज्ञानाधीनं अज्ञातशक्तेरबोधकत्वाच्छक्तिभ्रमेण बोधकत्वाच्च। तथाच बोधकशक्त्यभावादेवाबोधकत्वं कार्य्याभावे हेत्वभावस्यैव तन्त्रत्वात्। धातोश्चोपसर्गा-

'धातोश्चेति, तथाच तत्र तदुत्तरत्वेन शक्तिरेवान्यादृशस्योप-

ज्ञाताया एव प्रयोजकत्वादिति भावः। 'उपसन्धानत्वात्' सहकारित्वात्, उपसन्धानं सान्निध्यमिति कश्चित्। न चैतददृष्टचरमित्याह, 'उपसर्गस्येति, 'उपसन्धानं विनेति पद्म प्रयोगग्रहं विनेत्यर्थः, पूर्व्वं प्रयोगग्रहस्य उपसन्धानत्वं नाशङ्कितमित्यपौनरुक्त्यं। 'पदानामिति अन्यथा कुमुदबोधस्याप्रसक्तत्वे तद्बोधार्थं नावयवनियमः कल्प्येतेत्यर्थः, एवं सति कुमुदाबोधमुपपादयति, 'किन्त्विति, 'कल्प्यत इत्यनुषज्यते, 'एवमिति, तथाच कुमुदाबोधार्थमवयवनियम एव कल्प्यते न रूढिर्गौरवादिति भावः। 'अबोधकत्वं' कुमुदस्येति शेषः। बोधकशक्तिमत्त्वाच्च पद्मबोधकत्वमित्यपि बोध्यं। न चोक्तप्रयोगग्रहादेवोभयोपपत्तिरिति वाच्यं। गवादिपदेऽपि शक्तिविलयापत्तेः पद्मत्वस्य पदादनुपस्थितौ तेन रूपेणानुभवानुपपत्तेश्चेति भावः। तर्हि पदानुपस्थितप्रकर्षस्य कथमनुभव इत्यत आह, 'धातोश्चेति, 'उच्चा-

पसन्धानात् प्रकर्षादौ शक्तिरेव। स्यादेतत् यथा सर्व्व-नामत्वमहम्पदेषु बुद्धिस्थत्व-सम्बोध्यत्वोच्चारयितृत्वानि प्रयोगोपाधयस्तेन बुद्धिस्थादिकमेव तद्बोधयति तत्रैव प्रयुज्यते च न तु बुद्धिस्थत्वादिकं शक्यं तेन रूपेण ज्ञानाभावात् तथा पद्मत्वमपि प्रयोगोपाधिरिति चेत्, न, तेन हि नावयवशक्तिर्व्विच्छिद्यते पद्मे ततसत्त्वात्। नापि कुमुदे तात्पर्य्यमपोद्यते, बाधकं विना तस्यौत्स-र्गिकत्वात्। नाप्यवयवाधीनज्ञानं प्रतिबध्यते, शक्त्या-काङ्क्षादि-तात्पर्य्याणां सत्त्वे अन्वयज्ञानस्यावश्यकत्वात्

---

सन्धानस्य क्वचिदप्यदर्शनात्तदुपसन्धानस्य नियतानुभावकत्वकल्पन-मित्येव व्युत्पत्त्यन्तरकल्पनमितिभावः। ननु शक्यतावच्छेदकातिरिक्त-नियामकत्वकल्पनादन्यत्र क्वचिदप्यदर्शनाद्व्युत्पत्त्यन्तरकल्पना गौरवाय। न च तस्या अदर्शनमिति शङ्क्यते, 'स्यादेतदिति, त्वमहमितियुष्म-दस्मदर्थकनिपातद्वयं। नन्वेवं पङ्कजनिकर्तृत्वेन पद्मानुभवो न पद्मत्वेन बुद्धिस्थत्ववदप्रकारीभूतस्य प्रयोगोपाधित्वादित्यनुभवविरोधं दोषं

*

रयितृत्वं' स्वतन्त्रोच्चारयितृत्वं। यद्यपि पद्मत्वं शब्दानुभवगोचरत्वेन धेनुपदे गोत्ववच्छक्त्युपाधिः, तथापि अहमादिपदेषु उच्चारयितृत्वादिवदतिप्रसङ्ग-भञ्जकत्वेन प्रयोगोपाधित्वं न तत्र शक्त्युपाधित्वं शक्येऽनुगमार्थं गोत्ववत्तद-कल्पनात्। अनुगमस्य पङ्कजनिकर्तृत्वेनैव भावात् कुमुदधीप्रयोगप्रसङ्ग-प्रतिबन्धस्य तावतैव सिद्धौ पद्मत्वस्यानुभवगोचरत्वमनङ्गीकृत्यैवास्योक्तत्वा-

उपाधेरन्वयबोधप्रतिबन्धाहेतुत्वात्[१]। नापि प्रयोगो-वार्य्यते, इष्टकुमुदधीहेतुतया इष्टसाधनताज्ञानस्य तल्लिङ्गककार्य्यताज्ञानस्य वा प्रयोगहेतोः सत्त्वे अप्र-योगस्याहेतुत्वात्। अहमादिपदे त्वात्ममात्रशक्तेे

स्फुटतयोपेक्ष्य दोषान्तरमाह, 'तेन हीति। 'उपाधेरिति, आकाङ्क्षा-दिसत्त्वे मण्यादिवत् पद्मत्वज्ञानमात्रस्य तदितरान्वयप्रतिबन्धकत्वा-सम्भवात् क्वचिदप्येवमदर्शनादिति भावः। 'इष्टेत्यादिकल्पद्वयं मतभे-देन द्रष्टव्यं। 'आत्मेति, अन्यस्य सम्बोध्यतोच्चारयितृत्वाभावादिति भावः। 'शक्तेति, शक्यतावच्छेदकोपलक्षणतया स्वरूपसदेव शक्य-तावच्छेदकत्वेनागृहीतमेव स्वभावात् शब्दान्तरे एवमकल्पनेऽप्यत्रैव-प्रकारकज्ञानसामार्थ्यकल्पनादिति भावः। इदमत्राकूतं सर्व्वनाम्नां

(१) अन्वयबोधाप्रतिबन्धकत्वादिति ख०।

दिति, 'पद्म इति, पङ्कजनिकर्तृत्वेनैव तदनुभवादिति भावः। 'उपाधेरिति, तथा अदर्शनात् उच्चारयितृत्वादिवत् स्वरूपसत एव तथात्वेऽवयवव्युत्पन्न-स्यापि कुमुदसाधारणबोधो न स्यात् तदिदं वक्ष्यति 'पद्मत्वं न तथेत्यादि, 'अहमादीति, सर्व्वनामादिपदेभ्यो बुद्धिस्थत्वादिना नोपस्थितिः किन्तु देव-दत्तत्वादिनेत्यनुभवसिद्धं तत्र देवदत्तत्वादीनामननुगमाद्बुद्धिस्थप्रकारत्वाद्यनु-गतीकृततत्तद्देवदत्तत्वाद्युपाधिविशिष्टेऽनन्यगत्या शक्तिग्रहः। न चैवं बुद्धि-स्थत्वादिनैवोपस्थितिः स्यात् तेनैव रूपेण शक्तिग्रहादिति वाच्यं। न हि येन रूपेण शक्तिर्गृह्यते तेनैव धीः, ज्ञाने पदानां शक्तिग्रहे ज्ञानत्वस्यापि धी-प्रसङ्गात्, किन्तु यत्प्रकारकज्ञानजनकत्वं यस्य गृहीतं ततस्तादृशानुभव-

शक्तिग्रहसहकारितया स्वरूपसदेव उच्चारयितृत्वादिकं धीनियामकं स्वभावान्नियमतस्तस्यैव बोधनादिति स्वरूपसत एवोपाधित्वं। पद्मत्वन्तु न तथा, कुमुदसाधारणबोधदर्शनात्। ननु कुमुदे पूर्व्वेषामप्रयोगादाधुनिकानामप्रयोगः। न च प्रयोगमात्रे कोहेतुरिति वाच्यं। प्रयोगाणां हि न मेलनकार्य्यता किन्तु प्रत्येकं, तत्रोत्तरस्य पूर्व्वो हेतुः यथा पूर्व्वगौरुत्तरस्य, अन्यथा गोमात्रे कोहेतुरित्यत्र किमुत्तरं तवेति चेत्, न, प्रयोगहेतोः सत्त्वात् पूर्व्वप्रयोगस्य चाहेतुत्वात् पूर्व्वप्रयोगमज्ञात्वाप्यवयवव्युत्पन्नेन पाचकादिपदानां नवकाव्यानां गौणलाक्षणिकदेवदत्तादिपदानाञ्च प्रयोगात्। स्यादेतत्, ग्रामगामादिपदेऽन्वयबोधाभा-

सर्व्वेषां बुद्धिस्थमात्रवाचकता, बुद्धिस्थत्वञ्च न प्रवृत्तिनिमित्तं तेन रूपेणानुपस्थितेः सर्व्वेषां पर्य्यायतापत्तेश्च, किन्तूपलक्षणं, तेन तदुपलक्षितेषु चैत्र-मैत्रादिषु शक्तिग्रहः प्रत्येकन्तत्र तत्र शक्तिग्रहासम्भवात् अपूर्व्वव्यक्तिलाभासम्भवाच्च। तथाच बुद्धिस्थप्रकारावच्छिन्नमेतेषां पदानां वाच्यमित्याकारके शक्तिग्रहे योयदा बुद्धिस्थस्तत्प्रकारिका धीस्तैस्तैः पदैर्जन्यते, न च पर्य्यायता, बुद्धिविशेषेणैव विशेषात्। तथाहि

इति भावः। 'स्वरूपसत इति, न तु गोत्वादिवज्ज्ञायतयापीत्यर्थः। 'प्रयोगहेतोरिति पूर्व्वोक्तस्येत्यर्थः, 'पूर्व्वेति, मानाभावादिति भावः। व्यभिचार-

वात् साधुत्वज्ञानमपि हेतुः। न चैवं तदेव हेतुरस्तु किं शक्त्या गौण-लाक्षणिकविवेकश्च सोपाधित्वानुपाधित्वाभ्यामेवास्तु इति वाच्यं। प्रथमं व्यवहारेण शब्दस्य ज्ञानकारणतावगमात् तत्रैव शक्तिकल्पनं ततो ग्रामगामादौ व्यभिचारादाकाङ्क्षादेरिव साधुत्वज्ञानस्य हेतुत्वकल्पनात्। साधुत्वञ्च न पूर्व्वप्रयोगप्रवाहाविच्छेदः नवकाव्यादौ तदभावात्, किन्तु भ्रमादिजन्यत्वाभावः। कुमुदे च तत्प्रयोगोबोधकत्वभ्रमात्। न चैवं भ्रमजन्यत्वादबोधकत्वं अबोधकत्वे च

उद्देश्यतावच्छेदकबुद्धिविषया यावन्तस्तावत्प्रकारेषु सर्व्वपदं, प्रश्नेऽपि क्रमबुद्धिविषयप्रकारे किम्पदं, उद्देश्यबुद्धिविषये यत्पदं, अवान्तरवाक्योद्देश्यविषये तत्पदं, प्रत्यक्षबुद्धिविषये इदमेतत्पदयोः, व्यवहितबुद्धिविषये अदःपदस्य शक्तिग्रहः, तथाच तैः तैः पदैस्तत्प्रकारिका तदा तदा धीः, एवं त्वमहम्पदयोरपि नात्ममात्रशक्यत्वं नात्मत्वं वा प्रवृत्तिनिमित्तं, तेन रूपेणानुपस्थितेः अन्यथा त्वमहं वेति विकल्पा-

मप्याह, 'पूर्व्वेति, 'साधुत्वज्ञानमपीति, एवञ्च तदभावान्न प्रकृते कुमुदधीरिति भावः। 'सोपाधित्वेति इतरान्वयानुपपत्तिप्रतिसन्धानानन्तरमेव यतोऽन्वयधीः स गौणादितया व्यवहर्त्तव्य इत्यर्थः। अगृहीतशक्तेः साधुत्वज्ञानेऽप्यन्वयाबोधात् तदावश्यकत्वमित्यभिप्रेत्याह, 'प्रथममिति, 'व्यभिचारादिति इतरकारणे सत्यपि साधुत्वज्ञानं विना तत्रान्वयबोधापत्तेरित्यर्थः। 'किन्त्विति, न च शुकोक्तग्रामगामपदेऽतिप्रसङ्गः, भ्रमादिजन्यजातीयत्वा-

भ्रमजन्यत्वं[१] इत्यन्योन्याश्रयः, पूर्व्वभ्रमजन्यत्वेनोत्तरं प्रति बोधकत्वभ्रमात् उत्तरस्य प्रयोगोभ्रमजन्यः, एवं पूर्व्वस्यापीति तत्र भ्रमपरम्परैव मूलं एवं ग्रामगामादेरपि। कथमिदं ज्ञातव्यमिति चेत्, ग्रामगमनकर्त्तरि ग्रामगामपदस्येव प्रामाणिकानां कुमुदे तस्य निरुपाधिप्रयोगाभावात्। अतएव साधुत्वभ्रमात् कुमुद-

---

नुपपत्तेः प्रकारविरोधं विना तदसम्भवाद्द्वयोः पर्य्यायतापत्तेश्च। न च सम्बोध्यत्वमुच्चारयितृत्वं तथा, 'स्वरूपसदेवेति ग्रन्थविरोधात्। न च स्वरूपसन्नियामकत्वे तयोरसम्बोध्ये अनुच्चारयितरि च तदुभयत्र भ्रमेण ताभ्यां पदाभ्यां अनुपस्थापनापत्तिरिति वाच्यं। तावतापि ग्रन्थविरोधानुद्धारात्, तथाचात्र सम्बोध्यतावच्छेदकबुद्धिविषयप्रकारावच्छिन्ने त्वम्पदस्य उच्चारयितृतावच्छेदकधीविषयप्रकारावच्छिन्ने अस्मत्पदस्य शक्तिस्तच्च चैत्रत्वाद्येवेति न काप्यनुपपत्तिर्न वा ग्रन्थविरोधः, शक्यतावच्छेदकत्वेनाग्टहीतत्वमात्रस्य तदर्थत्वेनोक्तत्वादत एव विकल्पोऽपि सङ्गच्छते। उच्चारयितृत्वञ्च स्वातन्त्र्येण विवक्षितं

(१) बोधकत्वभ्रमजन्यत्वमिति ख०

भावस्य विवक्षितत्वात्। 'निरुपाधीति लक्षणां विनेत्यर्थः, एवञ्च लक्षणां विनापि यदि तत्र धीस्तदा साधुत्वभ्रमादित्याह, 'अतएवेति। यद्यपि कुमुदबोधकत्वे विषयाबाधात् बोधकत्वभ्रमासम्भवे साधुत्वभ्रमासम्भवस्तथापि बोधकत्वं बोधजननस्वरूपयोग्यता विवक्षिता सा च प्रामाणिकानां निरुपाधिप्रयोग एवेति तद्भ्रमात् साधुत्वभ्रम इति भावः। समुदायशक्त्या

साधारणोबोधोऽपि। कुमुदे ह्यसाधुत्वात् समुदायेन तत्र पङ्कजन्मकर्तृत्वं लक्ष्यते। न चासाधुत्वे ग्रामगामपदवत् लक्षणापि न स्यात्, पद्मे तस्य साधुत्वात्। उच्यते। पङ्कजन्मकर्त्तरि तत्प्रयोगस्य भ्रमाद्यजन्यत्वेन साधुत्वं। कुमुदे न तथेति चेत्, न, पुण्डरीकवन्नवपद्मवच्च तस्य व्यक्तिस्थानीयत्वात्, प्रतिवाक्यार्थञ्च साधुत्वज्ञानस्य हेतुत्वे अभिनवव्यक्तौ भ्रमाद्यजन्यत्वस्य ग्रहीतुमशक्यतया पाचकादिपदप्रयोगो न स्यात्, पा-

तेनानुवादे वाच्यस्त्वया मद्वचनात् स राजेत्यादौ न कवेरेव मत्पदोपस्थाप्यतातिप्रसङ्ग इति(१) सङ्क्षेपः। पद्मत्वन्तु न तथा स्वरूपसच्छक्यतावच्छेदकत्वेनाऽगृहीतमेव नियामकं तथात्वे कुमुदसाधारणबोधानुपपत्तेरिति ध्येयं। ननु कुमुदावगमप्रतिबन्धार्थं न पद्मे रूढिः तदनवगमस्यान्यथासिद्धेरित्याशङ्कते, 'स्यादेतदिति। 'समुदायेनेति वाक्यलक्षणापक्षमाश्रित्य, अन्यथा रूढ्यभावे समुदायस्या-

(१) कविरेव मत्पदोपस्थाप्य इतीति ख०।

बोधकत्वभ्रमात् साधुत्वभ्रम इत्यन्ये। साधुत्वभ्रमविरहदशायान्तु लक्षणयैव तद्धीरित्याह, 'कुमुदे हीति, यद्यपि समुदाये शक्त्यनभ्युपगमान्न तत्र लक्षणा तथापि वाक्यलक्षणावादिमतेनेदं। 'साधुत्वमिति साधुत्वाश्रयत्वमित्यर्थः, अतो न साध्याविशेषः, अन्यथा पङ्कजनिकर्तृतया पद्ममपि नानुभावयेदिति भावः। ननु साधुत्वनिश्चयत्वेन न हेतुता किन्तु तज्ज्ञानत्वेन लाघवात् तथाच तत्सन्देहमादायाभिनवव्यक्तौ नान्वयप्रतिबन्धः कुमुदे चासाधुत्व-

ककत्वजातीये भ्रमाद्यजन्यत्वस्य सुग्रहत्ववत् पङ्कज--
कर्त्तृजातीयेऽपि सुग्रहत्वात् येन रूपेणान्वयबोधस्तस्य
कुमुदवृत्तित्वात् ।

अथ पङ्कजपदं कुमुदे वृत्त्यन्तरं विना न साधु वृत्त्य-
न्तरं विना वृद्धैस्तत्राप्रयुज्यमानत्वात्, यः शब्दो यत्र
वृत्त्यन्तरं विना वृद्धैर्न प्रयुज्यते स तत्र वृत्त्यन्तरं विना
न साधुः यथा गङ्गापदं तीरे, यथा वा ग्रामगामपदं
ग्रामगमनकर्त्तरि, न प्रयुज्यते च वृत्त्यन्तरं विना पङ्क-
जपदं कुमुदे, तस्माद्वृत्त्यन्तरं विना न तत्र साध्विति
चेत्, न, व्यर्थविशेषणत्वात् तत्राप्रयुज्यमानत्वस्यैव व्या-
प्यात्वत् आकाङ्क्षादिमद्वाक्यासाधुत्वे अवयवार्थान्वया-

ग्रहत्वे लक्षणानुपपत्तेरित्यवधेयं । 'येन रूपेणेति अन्वयितावच्छेदक-
धर्मावच्छिन्ने भ्रमाद्यजन्यत्वग्रहस्य तन्त्रत्वादिति भावः । 'यथा वेति,
सामान्याभावादेव ग्रामगामे विशेषाभावादिति भावः । 'आकाङ्क्षा-

निश्चयान्न तथेत्याह, 'अथेति, बाधवारणाय साध्ये वृत्त्यन्तरं विनेति,
असिद्धिवारकतया सार्थकत्वमभ्युपेत्य हेतौ तदुक्तं, विशेषव्याप्तिसत्त्वेऽपि
दृष्टान्तसौकर्य्याय सामान्यव्याप्तिमाह, 'य इति, विशेषणाभावेन विशिष्टा-
भावाद्दृष्टान्तमुक्त्वा विशेष्याभावाद्विशिष्टाभावेन तमाह, 'यथा वेति, अ-
सिद्धिवारकं न सार्थकमित्यभिप्रेत्याह, 'व्यर्थेति, 'तत्रेति, तत्र स्वरूपासि-
द्धमेवेति भावः । असाधुपदे अवयवाप्रसिद्धेः साध्याव्यापकत्वादाकाङ्क्षादि-
मद्वाक्यत्वं पक्षधर्म्मं साध्यावच्छेदकमाह, 'आकाङ्क्षादीति । यद्यपि वाक्य-

बोधकत्वस्य व्याकरणस्मृत्यनुपगृहीतत्वस्य पक्षधर्म्मावच्छिन्नसाध्यव्यापकस्योपाधित्वाच्च। पक्षे उभयाभावेन साधनाव्यापकत्वात्। पङ्कजशब्दः कुमुदे साधुः साधुत्वे सति कुमुदबोधप्रयोजकाकाङ्क्षादिमद्वाक्यत्वात्, साधुत्वे

---

दीति अत्र वाक्यत्वमात्रपक्षधर्म्मावच्छिन्नव्यापकत्वादाकाङ्क्षादीति समव्याप्तमभिप्रेत्यान्यथाकाङ्क्षाद्यभावे यत्राबोधकत्वं तत्र साधुत्वसत्त्वाद्व्यभिचारः, आकाङ्क्षादिमद्वाक्यत्वावच्छिन्नाबोधकत्वेऽसाधुत्वनियमः कारणान्तरबाधकत्वे साधुत्वं विना फलाभावाभावात्, अत्र यदवच्छिन्नसाध्यव्यापकत्वं तदवच्छिन्नस्यैव साध्यव्याप्यत्वे समव्याप्तत्वादिति

त्वमात्रेणैव तन्निरासस्तथापि साधुत्वभ्रमेणान्वयबोधकतया ग्रामगामवाक्ये साध्याव्यापकत्वादाकाङ्क्षादीत्युक्तं। तत्र च नाकाङ्क्षादीति मतेनेदं, तदिदं वक्ष्यति तत्राकाङ्क्षैव नास्तीति, एवञ्च वाक्यत्वं स्वरूपनिर्वचनं। न चैवमाकाङ्क्षादिमद्वाक्यासाधुत्वमप्रसिद्धं, पाचकादेरपि घटादौ वृत्त्यन्तरं विना असाधुत्वात् तत्रावयवार्थान्वयाबोधकत्वाच्च।

केचित्तु गङ्गायां घोष इत्यत्र वृत्त्यन्तरं विना असाधुत्वं तीरे सामर्थ्यरूपावयवार्थान्वयबोधकत्वञ्चेति साध्याव्यापकत्वादाकाङ्क्षादीत्युक्तं, गौणलाक्षणिकयोरननुभावकत्वपक्षे च तत्र नाकाङ्क्षेत्याहुः।

आकाङ्क्षादिमत्त्वं वाक्यत्वञ्च पक्षधर्म्मद्वयमेवेत्यन्ये।

'अवयवेति स्वावयवेत्यर्थः, 'व्याकरणेति, बाधति-ग्रामगाम इत्यादौ चानभिधानेन निषेधान्न व्याकरणस्मृत्युपसङ्ग्रह इति भावः। ननु गङ्गायामित्यत्र साध्याव्याप्तिः सामीप्यविवक्षादिना लाक्षणिकस्यापि व्याकरणस्मृत्युपगृहीतत्वादित्यत आह, 'पक्षधर्म्मेति आकाङ्क्षादिमत्त्वेत्यर्थः, 'उभ-

सति यद्वाक्यं यद्बोधप्रयोजकाकाङ्क्षादिमद्भवति तत्तत्र साधु यथा तरुप्रसूनशब्दः कुसुमे, यथा वा पाचकशब्दः पाककर्त्तरि, तथा पङ्कजपदं कुमुदे तस्मात्तथेति सत्प्रतिपक्षत्वाच्च। वस्तुतस्तु साधुत्वज्ञानं न हेतुः अवय-

---

भावः। 'वस्तुतस्त्वित्यादि वस्तुगतिमनुरुध्य, असाधुत्वनिश्चयप्रतिबन्धकत्वेऽपि पूर्व्वप्रयोगतः कुमुदेऽसाधुत्वनिश्चये ततएव कुमुदान्वयेन तत्प्रतिबन्धकपद्मरूढ्याकल्पनरूपपूर्व्वपचानास्कन्दितत्वादिति ध्येयं। 'संशयस्येति, अतएव साधुत्वनिश्चयो न हेतुः यत्संशय-व्यतिरेकनिश्चयौ यत्प्रतिबन्धकौ तन्निश्चयस्यैव तत्र हेतुत्वादिति भावः।

---

येति। यद्यपि वृत्त्यन्तरं विनापि कुमुदेऽप्रयुज्यमानत्वं पङ्कजशब्दस्य कुमुदेऽवयवार्थान्वयाबोधकत्वञ्च सन्दिग्धं तथापि सन्दिग्धोपाधित्वं स्यादिति भावः। 'कुमुद इति, वृत्त्यन्तरं विनेति शेषः, तेन न सिद्धसाधनं। अतएव पूर्व्वसाध्यविपरीतत्वाभावात् न सत्प्रतिपक्षतेत्यपास्तं। अत्र वाक्यत्वं शब्दत्वमिति, कुमुदबोधकापभ्रंशे व्यभिचारवारणाय साधुत्वे सतीति।

यत्तु ग्रामगामपदेऽप्याकाङ्क्षेतिमते सामान्यव्याप्तौ तत्र व्यभिचारात् तदुपादानमिति, तन्न, ग्रामगामपदस्यापि कदाचिद्व्युत्पत्त्या क्वाप्यर्थे साधुत्वेन दोषतादवस्थ्यात् तदर्थसाधुत्वविवक्षायाञ्च व्यर्थविशेष्यत्वात्।

कुमुदत्वात्क्षणिके पद्मादिपदे व्यभिचारादाह, 'आकाङ्क्षादीति, आकाङ्क्षादिमत्त्वं नैकस्यैव पदस्येतीतरपदं। नन्वस्तु सत्प्रतिपक्षस्तथापि सन्देह एव न तु साधुत्वनिश्चयत्वेन हेतुत्वमित्यर्थः, संशयसाधारणन्तु तज्ज्ञानं हेतुरेव अन्यथा असाधुत्वनिश्चयस्यैव प्रतिबन्धकत्वानुपपत्तेः, जनकज्ञानं विघटयत एव ज्ञानस्य प्रतिबन्धकत्वात्। अतएव च तत्-

वादिव्युत्पन्नेन भ्रमाद्यजन्यं पूर्व्वप्रयोगमज्ञात्वापि नव-काव्यादिप्रयोगात्, कुतस्तर्हि ग्रामगामादौ नान्वयबोधः, असाधुत्वनिश्चयादिति ब्रूमः, साधोरप्यसाधुत्वनिश्चयेनाबोधकत्वात् अभिनवकाव्यादौ नासाधुत्वनिश्चयः, संशयश्च न प्रतिबन्धकः, अन्यथा योगरूढिसंशये सत्यभिनवव्यक्तौ पाचकादिप्रयोगो न स्यात्।

अन्ये तु ततोऽन्वयबोधोभवत्येव, अपभ्रंशादिव यथा तव साधुत्वभ्रमात्, साधुत्वं तस्य नास्ति तद्वदेव।

---

'अन्ये त्विति अस्वरसोद्भावनं तद्वीजं दृढमेव, यदसाधुत्वनिश्चयेनापभ्रंशादप्यन्वयधीस्तन्निश्चये तु भवन्त्यन्वयधीस्तदसाधुत्वनिश्चय-

---

संशयेऽप्यन्वयबोधं वक्ष्यति 'संशयश्च नेति, तदभावकारणत्वापेक्षया साधुत्वज्ञानहेतुत्वे लाघवाच्च। अन्यथा योग्यताज्ञानस्यापि हेतुत्वं न स्यात्। न च साधुशब्दमजानतां पामराणामन्वयबोधाद्यभिचारः, उक्तयुक्त्या तद्धेतुत्वसिद्धौ साधुत्वभ्रम-संशयान्यतरकल्पनात्। अन्यथा योग्यताज्ञानेऽपि-तुल्यत्वात्। व्युत्पन्नस्य चापभ्रंशस्थले साधुशब्दस्मरणमेव। एतदपि वक्ष्यमाणव्याकरणोपग्टहीतत्वरूपसाधुत्वमभिप्रेत्योक्तं। भ्रमादिजन्यत्वाभावज्ञानन्तु न हेतुरेवेत्याह, 'अवयवादीति, 'भ्रमादीति प्रयोगे भ्रमादिजन्यत्वाभावमज्ञात्वापीत्यर्थः। 'असाधुत्वेति व्याकरणानुपग्टहीतत्वनिश्चयादित्यर्थः।

केचित्तु अनुमितौ साध्यज्ञानवदस्य साक्षाद्विरोधित्वं, साक्षाद्विरोधिन एव जनकज्ञानविघटकतया प्रतिबन्धकत्वमेवञ्च साधुत्वसंशयस्तथापि तत्प्रयोजक इति इति क्त्वोक्तं।

अपरे त्वत्राकाङ्क्षैव नास्ति घटः कर्म्मत्वमानयनमित्य-त्रेव।

यत्तु गमाद्यनुत्तराणत्वेन गमादिपूर्व्वेतराणत्वेन वा शक्तिः काशपूर्व्वेतरकुशत्वेनेवेति। तन्न। कर्म्मोपपदधातूत्तराणत्वेनैव शक्तेर्न तु तत्तद्धात्वनुत्तराणत्वेन गौरवात्, तत्तद्धातूनां विशिष्याज्ञाने शक्तिग्रहानुपपत्तेः कर्म्मण्यणिति सूत्रार्थमजानतः कुम्भकारादिपदप्रयोगानुपपत्तेश्च शक्तिसन्देहात्।

असाधुत्वञ्च न भ्रमादिजन्यत्वं अनाप्तोक्ते असाधुत्वापत्तेः शुकाद्युदीरिते ग्रामगामादौ भ्रमाद्यजन्य-

प्रतिबन्धकतायां पर्य्यवस्यति न साधुत्वनिश्चयहेतुतायामिति। 'अपरे'त्वित्यत्र योग्यतादिसकलकारणोच्छेदोऽस्वरसवीजं व्यक्तं।

'तत इति ग्रामगामादेरित्यर्थः, 'साधुत्वभ्रमात्' व्याकरणोपग्टहीतत्वभ्रमात्, तत्संशयादित्यपि बोध्यं, तथाच तज्ज्ञानं हेतुरेवेति भावः।

'यत्त्विति, तथाच शक्तिविरहादेव ततो न ग्रामगमनकर्त्तृत्वपस्थितिरित्यर्थः। 'काशपूर्व्वेतरेति, काश इति पूर्व्वं यस्य तदितरकुशत्वेन द्वन्द्वसमासशक्तिपक्षे कुश-काशमित्यत्र शक्तिः, न तु काशकुशमित्यत्र लघ्वक्षरं पूर्व्वमिति सूत्रात्, क्वचित् 'कुशपूर्व्वेतरेति पाठस्तत्र कुशस्यपूर्व्वो यः काशस्तदितरकाशत्वेनेत्यर्थ इति फलतो न कश्चिद्विशेषः, एतच्चाभ्युपेत्य समाहितं।

वस्तुतस्तु त्वदुक्तं नासाधुत्वमित्याह, 'असाधुत्वञ्चेति, वाक्यस्येति शेषः। ननु व्याकरणस्मृतिर्न निषेधिकेत्यरुचेराह, 'तदिति, तथाच

त्वाच्च। किन्तु महाजनपरिगृहीतव्याकरणस्मृतिनिषिद्धत्वं तदपरिगृहीतत्वं वेति वक्ष्यते। पदस्य साधुत्वं वृत्तिरेव वृत्तिश्च शाब्दबोधहेतुपदार्थोपस्थित्यनुकूलपद-पदार्थयोः सम्बन्धः, वाक्यसाधुत्वञ्चाकाङ्क्षादिमत्-स्वार्थान्वयबोधकत्वे सति व्याकरणस्मृत्यनिषिद्धत्वं, तस्मात् कुमुदे पङ्कजशब्दस्य साधुत्वे सति प्रयोगप्रतिबन्धकत्वेन समुदायशक्तिसिद्धिरिति। न चैवं लाघवात् जशब्द एव शक्तिरस्तु न समुदाये, मन्दुरजादौ पद्म-

---

'आकाङ्क्षादीति, अत्र सत्यन्तं वाक्यलक्षणमविशिष्टं साधुत्वस्येति स्मर्त्तव्यं। ननु प्रतिबन्धकत्वं रूढेस्तद्बुद्धेर्वा तज्जन्यपद्मत्वस्मृतेर्वा, आद्ये कदापि कुमुदसाधारणबोधो न स्यात्, अन्त्ययोर्मानाभावः, ज्ञानस्य हि प्रतिबन्धकताविषयविरोधेन बाधवत्कारणविरोधेन वाव्यभिचारादिज्ञानवदनयोस्तु नैकमपीति दूषणं स्फुटतयोपेक्ष्य

---

महाजनपरिगृहीतत्वं साधुत्वमिति भावः। व्याकरणत्वञ्च प्रकृति-प्रत्यय-विभागकल्पनया शब्दार्थाख्यापकत्वं, एवञ्च कल्पितव्याकरणव्युत्पाद्येऽतिव्याप्तिवारणाय महाजनपरिगृहीतत्वं विशेषणं। 'वृत्तिरेवेति, न तु पूर्वोक्तमतः पदविशेषे तस्याव्याप्तिर्न दोष इति भावः। 'वृत्तिश्चेति, आकाशपदे आकाशोपस्थित्यनुकूलः समवायोऽपीत्यतिव्याप्तेराह, 'हेत्वन्तं पदार्थोपस्थितिविशेषणं। न च वृत्तिजन्योपस्थितित्वेनैव शाब्दबोधहेतुत्वं ग्राह्यमित्यन्योन्याश्रयः, शक्तिजन्योपस्थितित्वादिना शाब्दबोधविशेषजनकत्वग्रहानन्तरं तद्ग्रहसम्भवात् दण्डादीनामभिजननत्ववत्। 'वाक्येति, घटः

धीप्रसङ्गात्। पङ्कोत्तरजपदत्वेन शक्तिरिति चेत्तर्हि सर्व्वत्र तत्तद्वर्णोत्तरान्त्यवर्ण एव शक्तिरिति समुदायशक्त्युच्छेदः, न चैवं, विनिगमकाभावादिति सम्प्रदायः।

अत्र ब्रूमः ज्ञाता हि या शक्यमनुभावयति सा शक्तिः। न च समुदायः पद्मानुभवहेतुः, अवयवादेव तदुपपत्तेः। एवञ्च प्रतिबन्धकमात्रे शक्तिपदं पारिभाषिकं, शक्तित्वादनुभावकत्वसाधनेऽन्योन्याश्रयः प्रतिबन्धकत्वेनावगते शक्तित्वासिद्धिश्च। मण्ड-

दोषान्तरमाह, 'ज्ञातेति, यत्सम्बन्धावच्छिन्नतया ज्ञातस्य शब्दस्यानुभावकत्वमिति भावः[१]। अनुभवजनकतावच्छेदकोऽन्यसम्बन्ध इति

(१) शब्दस्यानुभावकत्वमित्यर्थ इति ख०।

कर्म्मत्वमित्यादिवाक्येऽतिव्याप्तिराह, सत्यन्तं। यद्यपि तस्य साधुत्वमेव तथाप्याकाङ्क्षादिमद्वाक्यस्य साधुत्वमिदमुक्तमित्याहुः। ग्रामगामादावप्याकाङ्क्षेतिमते तत्रातिव्याप्तिराह, विशेष्यमिति।

केचित्तु घटः कर्म्मत्वमित्यादि साध्वेवेति ग्रामगामव्यावर्त्तनार्थमेवाकाङ्क्षादीत्युक्तं, तत्र नाकाङ्क्षेतिमताभ्युपगमादेवस्य लक्षणद्वये तात्पर्य्यमित्याहुः।

'विनिगमकेति, यद्यपि शक्तिरीश्वरेच्छा अव्यासज्यवृत्तिरित्येकवर्णवृत्तितया मन्दुरजादावतिप्रसङ्गस्तदवस्थ एव तथाप्यपेक्षाबुद्धिवदीश्वरेच्छापि व्यासज्यवृत्तिरिति भावः। 'पारिभाषिकमिति शक्तिभिन्नस्यापि प्रतिबन्धकत्वसम्भवादित्यर्थः, 'प्रतिबन्धकत्वेनेति शक्तेरनुभवप्रयोजकतया प्रति-

पादौ त्वनुभावकत्वेनैव शक्तिसिद्धिः। किञ्च रूढि-योगयोर्व्विरोध एव परं रूढ्या योगप्रतिबन्धः मण्ड-पादौ तथा निर्णयात्। अन्यथा लम्बकर्णादावपि योगप्रतिबन्धः स्यात्। न चेह विरोधः, पद्मे समा-वेशात् योगादर्थधीश्चोभयत्र तुल्या।

यत्तु पङ्कजमानयेत्यादौ रूढ्या शीघ्रोपस्थितं पद्ममेव क्रिययान्वीयते, न पङ्कजन्मकर्तृ, तस्य वाक्यार्थत्वेन

यावदिति भावः। नन्वेवं गोपदाहीनपदादेरपि पङ्कजपदवदस्तु योगरूढता तथाच केवलरूढोच्छेदः, अहीनपदे च यौगिके द्वादशो-

बन्धकत्वविरोधादित्यर्थः, 'मण्डपादौ त्विति गृह्वविशेषेऽवयवार्थान्वयाननु-भवादित्यर्थः। ननु प्रतिबन्धार्थं कल्पितापि समुदायशक्तिरवयवशक्तिवदनु-भावयिष्यति अविशेषात् अन्यथा स्मृत्यर्थं कल्पिताया अननुभावकत्वेन सिद्धान्तेऽप्यगतेः। न च शक्तिभिन्नस्यापि प्रतिबन्धकत्वसम्भवाच्छक्तित्वेन तत्कल्पनमेव न स्यादिति वाच्यं। अगृहीतसमुदायशक्तेः कुमुदसाधारणा-धीदर्शनात्, अतएव नान्योन्याश्रयः अवयवशक्तिप्रतिबन्धकतया शक्तित्वेनैव तत्कल्पनात्, प्रतिबन्धकत्व-प्रयोजकत्वयोश्चावच्छेदकभेदेनाविरोधात् अन्यथा मण्डपादावपि रूढेर्योगप्रतिबन्धकत्वानापत्तेः। किञ्च स्मृत्यर्थमेव कल्पि-ताया रूढेः कुमुदे योगप्रतिबन्धकत्वमित्यत्र नैवमपि दोषाभिधानमित्य-रुचेराह, 'किञ्चेति, यद्यप्येवमपि यदवच्छेदेन विरोधस्तदवच्छेदेन प्रति-बन्धकत्वं स्यात् कुमुदे समावेशाभावात् रूढ्या योगप्रतिबन्धः स्यादेव तथापि व्यक्तिवचनन्यायेन पद्मान्वयात् कुमुदान्वयोपपत्तौ रूढिप्रति-बन्धकत्वे मानाभाव इति निगर्वः। अत्र विरोध एवेत्यभिधानादविरोधे

विलम्बितप्रतीतिकत्वात्। एवञ्चाविरोधेऽपि रूढेर्योगापहारितेति। तन्न। क्रियापद-तदर्थयोग्यतादिज्ञानाधीनत्वेन क्रियान्वयबोधस्य विलम्बितत्वात् रूढ्यवयवार्थयोरन्वयबोधस्य सामग्रीसत्त्वेन प्राथमिकत्वात्। तस्मान्न प्रतिबन्धकत्वेन रूढिसिद्धिर्न वा तया योगप्रतिबन्ध इति। अत्रोच्यते। नियमतः पद्मस्मृत्यर्थमेव रूढिः रूढ्या च नियमतः स्मृतं पद्ममेवावयवैः पङ्कजनिकर्तृत्वेनानुभाव्यते, बाधकं विना व्यक्तिवचनानां सन्निहितविशेषपरत्वनियमात्। अतः सर्व्वत्र पद्मानुभवसामग्र्येवेति न कुमुदे धी-प्रयोगौ। न

---

पसन्दोऽहीनस्येत्यत्र न हीनोऽहीन इति योगदर्शनात् वक्रियागमात्रस्य न द्वादशोपसत्ता अपि तु रूढाहीनपदोपस्थाप्ययागविशेष-

---

प्रतिबन्धाभाव इत्यत्र तात्पर्य्यं न तु विरोधे प्रतिबन्ध एवेति उद्भिदादौ व्यभिचारात् योगेनापि प्रयोगेन फलकल्प्यप्रतिबन्धकत्वस्य तत्रानभ्युपगमात्। 'अविरोधेऽपीति पद्मेऽपि रूढेर्योगापहारितेत्यर्थः, 'विलम्बितत्वादिति, यद्यपि रूढ्यवयवार्थान्वयबोधेऽपि योग्यतादिज्ञानापेक्षास्त्येव तथापि योगापहारितानियमखण्डने तात्पर्य्यं। अवयव-समुदाययोरेकैवोपस्थितिः क्रियापदस्य चोपस्थित्यन्तरमिति विलम्ब इत्यन्ये। 'पद्मस्मृत्यर्थमेवेति, यद्यपि शक्तिकल्पनसमये व्यवहारहेतुतया पद्मस्मृतिर्नोपस्थिता किन्तु तदनुभव इत्यनुभवार्थमेव रूढिरुचिता, तथापि प्रकारान्तरेणोपस्थापितस्याप्यवयवैरनुभव इति पराभ्युपगमादाहृत्य न तदर्थं तत्कल्पना किन्तु पदान्नियतस्मृतिः शक्तिसाध्येति समर्थनात प्रकारान्तरोपस्थितिरतन्त्रमिति

चैवमनुभवाजनकत्वेन न सा शक्तिः या ज्ञाता नियमतः शक्यं ज्ञापयति सैव हि शक्तिः, ज्ञप्तिश्च स्मृतिरनुभूतिश्चेति नियतस्मारिकापि शक्तिः। वस्तुतः स्वार्थस्मृतिद्वारा अवयवानामिव समुदायस्य स्वार्थानुभावकत्वमविशेषादिति पश्चादनुभाविकापि रूढिः पङ्कजमानयेत्यादावानयनादिना स्वार्थान्वयानुभवे समुदायावयवयोर्हेतुत्वाच्च तस्मान्नियतस्मृतिहेतुत्वेनैव रूढिसिद्धिः न तु प्रतिबन्धकत्वेन। यदि च नियता स्मृतिः प्रकारान्तरेण भवति तदा योग एव न रूढिः। रूढिरेवेति सिद्धान्तो भज्येत, अस्ति भवोऽश्वीन इत्यत्रापि योगसत्त्वेन

---

नियतस्मृत्यर्थं स्मृता समुदायरूढिरवयवशक्तिवदविशेषादनुभाविकापीति समुदायार्थः। अतएव वक्ष्यति यदि च नियता स्मृतिः प्रकारान्तरेणेत्यादि, 'या ज्ञातेति, सामान्यबाधके सत्येव विशेषनिष्ठत्वकल्पनादिति भावः। 'समुदायावयवयोरिति, विनिगमनाविरहादिति भावः। नन्वेवं लक्षणैवास्तु न रूढिरन्यलभ्यत्वात्। न च शक्त्यभावे लक्षणापि न स्यादिति वाच्यं। पङ्काद्यवयव एव तदभ्युपगमात्। न चैवं युगपद्वृत्तिद्वयविरोधः शक्यलक्ष्यसाधारणतादृशैकरूपाभावाच्च नाजहत्स्वार्थेति वाच्यं। मणिकृन्मते तद्विरोधाभावात्। न चैवं शक्यसम्बन्धग्रहं विनापि तदुपस्थितिदर्शनात् रूढिरिति वाच्यम्। शक्तिभ्रमादपि तदुपपत्तेः। अन्यथा गङ्गापदमपि तीरशक्तं स्यात्। न चैवं लम्बकर्णादिपदेऽपि रूढिर्न स्यादिति वाच्यम्। इष्टत्वात्, अतएव समासेऽपि शक्तिं नाङ्गीकुरुषे। न चैकपदेन वृत्तिद्वयोपस्थापितयोः परस्परमनाकाङ्क्षेति वाच्यम्। रथो गच्छतीत्यादौ

न्यायेनैव कुमुदे धी-प्रयोगयोरभावादिति। गोपदस्य गवि वेदेऽह्हीनपदस्य कर्म्मविशेषे रूढिरेव लाघवात्। न तु गमेर्डोरह्नः खः क्रतावित्यनुशासनाद्योगोऽपि, डोः-खप्रत्यययोर्लोके कर्त्तरि कर्म्मविशेषे च शक्तिर्न क्लृप्ता अतः प्रत्यये शक्तिः नियामकञ्च गमिपदोत्तरत्वं अहःपदोत्तरत्वञ्च[१] कल्प्यं, तथाच गौरवं। एवं धेनुपदेऽप्येकैकस्यातिप्रसक्तत्वात् गोत्वविशिष्टधानकर्म्मणि

विनिगमनाविरहादित्यत आह, 'गोपदस्येति, 'अलवडिति अलं

(१) गवाह्नःपदोत्तरत्वञ्चेति ख० ।

वर्त्तमानत्व-व्यापारयोर्व्यभिचारादिति, मैवं, शक्यान्वये बाधकाभावेन लक्षणोपनीतानपेक्षणे कुमुदसाधारणबोधापत्तेः। तदाह, "श्रुतान्वयादनाकाङ्क्षमित्यादि। न च तात्पर्य्यानुपपत्त्या यष्टीः प्रवेशयेतिवल्लक्षणास्तु, कुमुदेऽपि कदाचिल्लक्षणया पद्म-कुमुदयोस्तुल्यत्वापत्तेः। अतएव प्रागुक्तं 'यदि च पद्म-कुमुदयोस्तुल्यता तदा गृहीतपद्मप्रयोगस्य पद्मान्वयानुपपत्तिपुरःसरैव कुमुदधीर्न स्यात् स्याच्च कदाचिद्वैपरीत्यमिति। अतएव शक्तिभ्रमोऽप्यपास्तः, कुमुदेऽपि कस्यचिद्भ्रमस्य सम्भवेन तुल्यत्वापत्तेः। किञ्चैवं तमःपदादेरालोकाभावत्वादिविशिष्टे शक्तिर्न स्यात् तदिदं वक्ष्यति औपाधिककारणादिपदानां विशिष्टे शक्तिर्न स्यादिति। विशेष्यशक्तस्य लक्षणया शक्तिभ्रमेण वा तदुपस्थापकत्वसम्भवादतएव धेनुपदेऽपि गोत्वं शक्यमित्यनुपदमेव स्फुटमिति दिक्। नन्वेवं गवादिपदमपि योगरूढमस्त्वित्यत आह, 'गोपदस्येति, 'कर्म्मविशेषे' क्रतुविशेषे। 'डोः-खेति, अतएव गमनकर्त्तृत्वादिना ततो नोपस्थितिरिति भावः। 'एकैकस्येति गोत्वस्य वृषभे धानकर्म्मत्वस्य महि-

रूढिरेव नियमतो गोत्वविशिष्टोपस्थितेः, न तु योगो-ऽपि, दानु-भानु-कृशान्वादौ भिन्नार्थत्वेन नुप्रत्ययशक्ते-रकल्पनात् गमेर्डोरत्रः खः क्रतौ दा-भाभ्यां नुर्धेट-इश्चेत्यादिस्मृतिश्चालवड्डादिवत् कथञ्चिद्व्युत्पादन-परा, अतएव भगवान् पाणिनिरर्थाननुगमात् समु-दायशक्त्यपेक्षया गौरवादुणादिप्रत्ययेषु न शक्तिरिति पञ्चपादिकाविहितानुणादिप्रत्ययान् उणादयो बहु-लमित्येकेनैव सूत्रेण विहितवान्, यत्र तु प्रत्यये शक्तिस्तत्र प्रत्येकमेवासूत्रयत्।

यत्तु धेनुपदे गोत्वं न शक्यं, किन्तु शक्योपलक्षण-तया शक्त्युपाधिः, यत्र गोत्वं तद्धानकर्म्म शक्यं शक्या-स्तूपलक्ष्या महिष्यादिव्यावृत्ता धानकर्म्मव्यक्तिविशेषा-एव, अनुगमस्तूपलक्षणैक्यात्। न चैवं लाघवाद्गोत्वं शक्यं धानकर्म्मत्वमुपाधिः, उपलक्ष्यस्य गोत्वस्यातिप्रस-

---

वदतीति अलवत् तं डाति चिपतीति अलवड्ड इत्यर्थः, 'उपलक्ष्य-

---

ष्यादावित्यर्थः, 'भिन्नार्थत्वेनेति नानार्थत्वापत्त्येत्यर्थः, दानुरित्यादौ कर्त्तृत्वं धेनुरित्यादौ कर्म्मत्वं तदुत्तरत्वञ्च नियामकमिति गौरवमिति भावः। 'अलवड्डादिवदिति, अलवड्डादेः क्वचिदर्थे कथञ्चिद्व्युत्पादनसम्भवेऽप्यवयवान-पेक्षस्यैव काष्ठप्रतिमाकारवाचित्वं तथोणादिकप्रत्ययान्तस्यापीति। आड-व्डादिवदिति पाठे आट-अव अट इत्यादेरशक्तस्यैव यथा शक्तसाधुत्वार्थ-मनुशासनं तथा प्रकृतेऽपीत्यर्थः। गुरुमतमाह, 'यत्त्विति, 'धानकर्म्मत्व-

क्तत्वात्। गोत्वविशिष्टधानस्मृतिस्त्वेकैव शब्द-संस्काराभ्यां जन्यते न तूभयस्मृत्यनन्तरं परस्परमन्वयबोधः अवयवशक्तेरभावादिति। तन्न। शक्तिं विना नियत-

क्येति, गोत्वस्य शक्यत्वेन गोव्यक्तिः शक्या गोपदवदनन्यलभ्यत्वात् नागृहीतविशेषणान्यायाच्चेति गोत्वमात्रं वृषभेऽतिप्रसक्तं धानकर्म्मत्वशक्यत्वे तस्योपाधितया नान्यतो व्यक्तिलाभः पश्वादिवदतो धानकर्म्मत्वादिविशिष्टव्यक्तिविशेष एवानतिप्रसक्तः शक्योऽतोऽनुगमार्थं गोत्वमुपाधिरित्यर्थः, 'शब्देति, धानकर्म्मणि शक्त्युद्बोधितसंस्कारात् गोत्वांशे च केवलसंस्कारात् कथं एकदेशोद्बुद्धसंस्काराद्विशिष्टस्मृतिरिति चेत्, नैवं, विशिष्टविषयकसंस्कारस्य एकदेशोद्बोधकादेवोद्बुद्धसंस्काराद्विशिष्टस्मृतिरित्यर्थात्। 'अवयवेति, अनुभवोगोत्वांशे समुदायशक्त्या आधानांशे चावयवशक्त्या वाच्योऽन्यथा समुदायेनैव धानकर्म्मोपस्थापनेन गोत्वस्य शक्यतावच्छेदकत्वाभावेनाशक्यानुभवस्या-

---

मिति तद्धानकर्म्मत्वमित्यर्थः, अन्यथा गोत्ववदस्यापि महिष्यादावतिप्रसक्तत्याग्रिमग्रन्थस्यासङ्गतेः अस्यैवानुगततयाननुगमशङ्काविरहे पूर्व्वग्रन्थासङ्गतेश्च। अतएव महिष्यादिव्यावृत्तधानकर्म्मत्वेऽपि न शक्तिरिति सिद्धान्ते वक्ष्यति। यद्वा तत्तद्धानकर्म्मविशेषा इत्यर्थः, तथाच ये तद्धानकर्म्मविशेषास्तद्वृत्तिगोत्वं शक्यमिति तेषामेव शक्योपलक्षणत्वमिति वैपरीत्यमेवास्त्विति शङ्कार्थः। न चैवं गोपदवद्धेनुपदादपि गोत्वमात्रप्रकारकप्रत्ययापत्तिः, धानस्याशक्यस्यापि प्रकारत्वादिति, 'अवयवशक्तेरिति, यद्यपि तदभावेऽपि समुदायशक्त्युपस्थापितमेव धानकर्म्मत्वमादाय स्मृत्यन्तरोपस्थितगोत्वेनान्वयः सम्भवत्येव, तथापि योग्यतादिप्रतिसन्धानं विनैव विशि-

गोत्वोपस्थित्यभावादुपलक्षणैक्येन उपलक्ष्यैक्याभावाच्च। अन्यथा महिष्यादिव्यावृत्तधानकर्म्मत्वेऽपि न शक्तिः धान-गोत्वे शक्त्युपाधी, अग्रे च संस्कारादुपस्थितयोस्तयोः कर्म्मणि धेनुपदादन्वयोभासत इति धानमपि न शक्यं। यदि चानुगतं विशेषणं शक्त्युपाधिर्व्विशेष्ये च शक्तिरननुगमातिप्रसङ्गाभावश्चोपाधिनैव, तदौपाधिककारणादिपदानां विशिष्टे शक्तिर्न स्यात्।

नन्ववयवात् पङ्कजनिकर्तृत्वानुभवः समुदायाच्च पद्मस्मरणं स्यान्न तु पङ्कजनिकर्तृ पद्ममित्यनुभव इति चेत्, न, अवयव-समुदायस्मारितपङ्कजनिर्तृपद्मानां

---

नुक्तिसम्भवात्तथासतीदमुत्तरमित्यर्थः, 'शक्यमिति, पदान्नियमतः स्मृतेः शक्तिसाध्यत्वादिति भावः। 'उपलक्षणेति, गोत्वविशिष्टं धानकर्म्म शक्यमित्याकारके शक्तिग्रहे गोत्वं विशेषणमेव, धानकर्म्म शक्यमित्याकारके तु गोत्वस्य तज्ज्ञानागोचरतायां तदैक्येन धानकर्म्मैक्यापत्तिरिति भावः। ननु गोत्वविशिष्टं धानकर्म्म शक्यमित्याकारकेऽपि लाघवाद्गोत्वांशे न शक्तिरित्यत आह, 'अन्यथेति शक्तिग्रहगोचरस्याप्यशक्यत्वे इत्यर्थः, 'अन्वयो भासत इति तदुभयवैशिष्ट्यं

स्योपस्थितेर्न तथात्वमन्यथा तथापि वैशिष्ट्यमशक्यं स्यादिति भावः। नन्वाकाशपदाच्छब्दाश्रयत्ववदस्यापि नियतोपस्थितिः स्यादुपलक्षणैक्यं प्रयोजकमिति भ्रमः किन्त्वननुगमनिवारकमित्यरुचेराह, 'अन्यथेति, शब्दाश्रयत्वञ्च शक्यमेवेति भावः। तटस्थः शङ्कते, 'नन्विति, 'अवयवेति, अत्र वाशब्दो-

पङ्कजनिकर्तृ पद्ममित्यनुभवोऽवयव-समुदायाभ्यां सम्भूय जन्यते समुदायोपस्थितपद्मेन समं स्वार्थान्वयोऽवयवैर्व्वा अवयवजनितानुभवोपस्थितपङ्कजनिकर्तृत्वेन समं स्वार्थान्वयः समुदायेन वा अनुभाव्यते, आकाङ्क्षाद्युपेतशब्दानां तात्पर्य्यविषयोपस्थापितस्वार्थान्वयबोधकत्वनियमात् । न च वाक्यान्तरे तथात्वादर्शनेन नैवं व्युत्पत्तिरिति वाच्यं। वाक्यान्तरे हि समुदायशक्त्यभावेन तथा अत्र तु समुदायशक्तिबलात् पदविधया वाक्यविधया वा एकस्मादेवोपस्थितयोः पङ्कजनिकर्तृ-पद्मयोरन्वयोबोध्यते समुदायेन पदैकवाक्यतावत् पङ्कजं कुमुदमित्यत्र समुदायेनैव पङ्कजनिकर्तृत्वमशक्यं स्वार्थपद्मसम्बन्धि लक्ष्यते। कुमुदे

---

स्मर्य्यते तदुभयविशिष्टोऽर्थः स्मर्य्यत इति यावत्, न त्वन्वयानुभवो जन्यत इति भ्रमः कर्त्तव्यः अनुभवस्य पदाभ्यामेव सम्भवादिति । 'अवयवैर्वा समुदायेन वेत्यनास्थायां वा, अनयोरन्यतरेणैवानुभाव्यतां तावतापि समीहितसिद्धिः । वस्तुतस्तु उभाभ्यामेवानुभवो विनिगमकाभावादिति ध्येयं । 'समुदायेनैवेति, अवयवानां तत्र लच-

---

ऽनास्थायां सर्व्वथेष्टसिद्धिरिति भावः। सर्व्वत्र हेतुमाह, 'आकाङ्क्षेति, 'पदैकवाक्यतावदिति भिन्नश्रुतपदवाक्यैकवाक्यतावदित्यर्थः, 'योगादेवेति, तच्च तस्य साधुत्वादिति भावः। प्राचीनमतेन समाधत्ते, 'कुमुद इति।

साधुत्वात् कथं तत्र लक्षणेति चेत्, न, समुदायस्य तत्रासाधुत्वात्।

यत्तु तत्र पद्मत्वमयोग्यतया नान्वेति योगादेव मुख्यया वृत्त्या कुमुदे पङ्कजनिकर्तृत्वं अनुभूयते इति तन्न, कुमुदेऽवयवशक्तेः समुदायशक्त्या ज्ञातया प्रतिबन्धात् तथैव तदवगमात्।

ननु यदा व्यक्तिवचनन्यायात् न कुमुदे धीर्न्नत्ववयवशक्तिप्रतिबन्धात् तदा पङ्कजशब्दादुपस्थिते पङ्कजं पद्ममिति वाक्यार्थेऽयोग्यतया पद्ममपहाय पद-वाक्यैकवाक्यतया पङ्कजनिकर्तृ कुमुदमित्यनुभव इति चेत्, तर्हि पद्मान्वितत्वेनोपस्थितस्य पङ्कजनिकर्तृत्वस्या-श्रयाकाङ्क्षा नास्तीति स्वतन्त्रोपस्थित्यर्थमवश्यं लक्षणा, यथा पुरोडाशकपालपदेऽधिष्ठानलक्षणा। ननु[१] प्रथ-ममेवावयव-कुमुदपदैरन्वययोग्यतया स्मृतं पद्मं त्यक्त्वा स्वार्थान्वयानुभव इति चेत्,[२]। कुमुदपद-तदर्थयोग्य-तादिज्ञानात् पूर्व्वमेव पङ्कजशब्दात् पङ्कजं पद्म-

णायां वृत्तिद्वयविरोधात् पद्मत्वोपस्थितौ कुमुदानन्वयापत्तेश्चेति

(१) न चेति क०।

(२) वाच्यमिति क०।

मणिकृन्मते लक्षणानुपपत्तिमाशङ्कते, 'नन्विति, तन्मतेनैव समाधत्ते,

मित्यनुभवात् विलम्बे हेत्वभावात्, स्थलपङ्कजन्तु विजातीयमेव, साजात्येऽपि तत्र लक्षणा ।

यत्तु अयोग्यतया योगार्थोनान्वेति किन्तु योग्यतया रूढ्युपस्थितं पद्मत्वमेवान्वीयते इति । तन्न । पद्मत्वस्य योगार्थगतत्वेन उपस्थित्या निराकाङ्क्षत्वात् । स्वतन्त्रोपस्थितये लक्षणाया अवश्यं वाच्यत्वादिति ।

नन्वेवं पङ्कजपदस्येवापभ्रंशानामपि शक्तिस्ततो नियमेनार्थप्रतीतेः व्यवहाराधीनव्युत्पत्तेरविशेषात्

द्रष्टव्यं(१) । 'विलम्ब इति, यदि च तात्पर्य्यादिविलम्बात् तदन्वयधीविलम्बस्तदा लक्षणां विनापि पङ्कजनिकर्तृत्वं कुमुदेऽन्वेत्युत्सर्गतस्तल्लक्षणेति प्रकृतग्रन्थार्थः । 'विजातीयमेवेति, अतोऽशक्यत्वात्तत्र लक्षणेति भावः । 'स्वतन्त्रेति स्वतन्त्रपङ्कजपदेन पद्मत्वं लक्ष्यते न तु

(१) कुमुदानन्वयप्रसङ्गाच्चेत्यपि द्रष्टव्यमिति ख० ।

'तन्नेति, 'स्थलेति, तथाच तत्र पद्मत्वजातेरभावात् सर्व्वेषामेव पद्मवाचिपङ्कजादिपदानां पद्माकृतिसदृशाकृतौ स्थलपद्मत्वविशिष्टे वा लक्षणेत्यर्थः । यदि चानुगतप्रतीतिबलात् तत्रापि सा जातिस्तदापि स्वतन्त्रोपस्थितये लक्षणैवेत्याह, 'साजात्येऽपीति । अत्रैव प्रकृते, 'यत्त्विति, 'स्वतन्त्रेति । यद्यपि शक्ये पदे समुदायस्य लक्षणा न युक्ता स्वार्थादन्येनेति पूर्व्वोक्तेन विरोधश्च । न चान्येनैव रूपेण तदुपस्थितिः, स्वतन्त्रोपस्थितय इत्यनेन विरोधात्, तदा ह्युपस्थित्यर्थमेव लक्षणा स्यात् तथापि कर्त्तृवाचके डप्रदएव लक्षणेत्याहुः । ननु मणिकृन्मते कुमुदे लक्षणा न स्यादिति प्रागेव

अन्यथा असति वृत्त्यन्तरे तेभ्योऽर्थधीर्न स्यात्। न च लक्षणा, मुख्यार्थबाधात् न चापभ्रंशेन स्मारितसाधुशब्दादन्वयबोधः, साधुशब्दमजानतामपि पामराणां ततोऽर्थप्रतीतेः तदर्थकसंस्कृतेनार्थाप्रतीतेश्च। शक्त्यारोपात्ततोऽर्थप्रत्यय इति चेत्, न, मानाभावात् व्यवहारादिनावृत्तशक्तिग्रहे बाधकाभावाच्च। न च शक्तिसाध्यं शक्त्यारोपाद्भवितुमर्हति, आरोपितादपि दहनाद्दाहापत्तेः।

अथ ज्ञायमानकरणे प्रयोजकरूपवत्तया ज्ञायमानादेव फलं वाच्ये धूमारोपाद्वह्न्यनुमितिवदिति चेत्,

---

समुदायेनोक्तयुक्तेः यदि च कारणाभावात् पङ्कजनिकर्तृत्वानन्वयस्तदा पूर्ववच्छक्त्यैवान्वयधीरित्यवधेयं। एवञ्च प्रथममिति प्रकृताभिप्रायं, व्युत्पन्नस्य साधुस्मरणादन्यस्य शक्त्यारोपादिति भावः। अत्र वदन्ति ननु गावीशब्दात् अर्थानुभवश्चेत्तदा शक्तिरेवास्माच्छब्दादयमर्थो

---

विपश्चितं तन्न्यायेनैवात्रापि सा न युक्ता स्थलपदसमभिव्याहारेण पङ्कजनिकर्तृत्वस्य पद्मान्वयतात्पर्य्याभावग्रहे तदनन्वितपद्मस्य साकाङ्क्षत्वात् यत्रापि प्रथमं तदन्वयस्तत्रापि स्थलीयपद्मतात्पर्य्यग्रहानन्तरं पुनः स्मृतेन तत्पदेन लक्षणया स्वतन्त्रपद्मोपस्थितिर्वाच्या, एवञ्च तदा शक्त्यैव तदुपस्थितिरस्तु अयोग्यतया योगार्थस्यानन्वयात्। किञ्च श्येनेनाभिचरन् यजेतेत्यत्र यथा विशेषयागस्यायोग्यतया अनन्वयेऽपि विशेष्यान्वयस्तथा प्रकृतेऽप्यस्तु। न च योगार्थस्यैव विशेष्यत्वं तथासति पङ्कजं कुमुदमित्यत्र तस्य साकाङ्क्षता, लक्षणानुपपत्तेरिति चिन्त्यं। 'एवं' पदान्नियतोपस्थितेः शक्तिसाध्यत्वे।

न, तर्हि तद्दद्देव फलस्यायथार्थत्वापत्तिः। अन्यथा अपभ्रंश एव शक्तिः साधुशब्द एव तथेति किं न स्यात्। न च सादित्वात् देवदत्तादिशब्दवदाधुनिका एव तत्र शक्तेताः गवादिपदे त्वनादित्वात् शक्तिरिति वाच्यं। सजातीयप्रयोगजन्यप्रयोगत्वस्य भ्रमाद्यजन्यत्वस्य वा अनादित्वस्यापभ्रंशेऽपि सत्त्वात्। तत्तद्देशीयापभ्रंशेऽपि शक्तेतयितॄणामस्मरणाच्च। न चापभ्रंशानां देशभेदेन एकत्रार्थे बहुत्वात् संस्कृतस्यैकत्वाल्लाघवेन तत्रैव शक्तिः, प्रमाणवतो गौरवस्यापीष्टत्वात्। अन्यथा नानार्थोच्छेदः प्रतीत्यन्यथानुपपत्तिस्तुल्यैव। ननूभयोः शक्तत्वे साध्वसाधुविभागाभावात् तद्व्यवहारविरोधः साधु-

---

बोद्धव्य इतीश्वराभिप्रायसम्भवात् ईश्वरेच्छायाः सर्व्ववस्तुविषयत्व-नियमात्। किञ्च गावीपदे लक्षणा न स्यात् अपभ्रंशस्य बोधकतया स्वज्ञाप्यसम्बन्धसत्त्वात् गम्भीरायां नद्यामित्याद्यनुरोधेन शक्यसम्बन्धस्यालक्षणात्वात् तथाच गावीपदं लक्ष्यसाध्वपि स्यात् वृत्तेरेव

'तद्दद्देवेति, निर्व्विह्निस्थलाभिप्रायेण लिङ्गोपहितलैङ्गिकभानमतेन वेदं। ननु विषयाबाधादत्र याथार्थ्यं स्यादित्यरुचेराह, 'अन्यथेति तथा शक्त्यारोप इत्यर्थः। 'शक्तेतयितॄणामिति, स्मरण इव देवदत्तादिशब्दवच्छक्तत्वेऽप्यविरोध' इत्यपि बोध्यं। 'प्रमाणेति, शक्तिग्राहकमानस्याविशेषादिति भावः। वृत्तितद्विरहनिबन्धन एव साध्वसाधुव्यवहार इति मन्वानः शङ्कते, 'नन्विति। न चैवं नानार्थोच्छेदः, तत्र विनिगमकाभावादिति भावः। अत्र विनिगमक-

भिर्भाषितव्यं नापभ्रंशितवै न म्लेच्छितवै इत्यादिकवैदिकविधि-निषेधानुपपत्तिश्चेति चेत्, तर्हि शक्तत्वाविशेषेऽपि तदभियुक्तेन्द्रपाणिन्यादिप्रणीतव्याकरणोपगृहीतानामेव संस्कृतानां साधुत्वमस्तु, न ह्यपभ्रंशैः साधुत्वं स्मर्य्यते, तद्विषया एव साधुभिर्भाषितव्यमित्यादिविधयः तेषामेव धर्म्मोपयोगित्वं स्वभावात् वीजस्येवाङ्कुरे, तस्मादपभ्रंशोऽप्यर्थप्रत्यायकत्वाच्छक्त इति। उच्यते। एकत्र शक्त्याप्यन्यत्र तदारोपात्तदर्थप्रतीत्युपपत्तावेकत्रैव शक्तिर्लाघवात् अनन्यलभ्यस्यैव शब्दार्थत्वात्। अन्यथा वृत्त्यन्तरोच्छेदः। तदाह भगवान् जैमिनिः "अन्यायश्चानेकशब्दत्वमिति। सा च शक्तिः संस्कृत एव सर्व्वदेशे तस्यैकत्वात् नापभ्रंशेषु तेषां प्रतिदेशमेकत्रार्थे भिन्नभिन्नरूपाणां तावच्छक्तिकल्पने गौरवात् पर्य्यायबहुतरत्वञ्चोभयत्रापि। न च देशभेदेऽपि प्राकृतस्यैकरूपत्वात् तत्रैव शक्तिः, संस्कृत-

---

पदसाधुत्वरूपत्वादिति। अत्र ब्रूमः। अस्मात् पदादयमर्थोबोध्यव्य इतीच्छयेश्वरेण स्वातन्त्र्येणोच्चरितत्वमेव शक्तिः ईश्वरेच्छायाः स्वविषयशक्तिबोधादिना नियन्त्रितत्वादपभ्रंशादौ न दोषः। न च चैत्रादिपदाव्याप्तिः, "द्वादशेऽह्नि पितेत्यादितो नामत्वेन तेषामपी-

मस्तीत्याह, 'सा चेति। न चोभयत्रारोपः, तस्य प्रमापूर्व्वकत्वात्, एत-

प्रभवतत्समदेशिभेदेन तस्याप्यनेकत्वात्। एवमेकच शक्त्यारोपादर्थप्रत्ययोपपत्तौ नापभ्रंशे शक्तिः। ननु म्लेच्छादीनां संस्कृतमजानतां कथं तच्छक्त्यारोपः। उच्यते। केनचिद्गौरिति शब्दे प्रयोक्तव्ये प्रमादाद्गावीशब्दे प्रयुक्ते व्युत्पन्नस्तेन गोशब्दं ज्ञात्वा (?) नीय ततो गां प्रतीत्य व्यवहृतवान्, यथाहुः, "अम्बाम्बेति यदा बालः शिक्ष्यमाणः प्रभाषते। अव्यक्तं तद्विदां तेन व्यक्ते भवति निर्णयः"॥ इति पार्श्वस्थश्च व्युत्पित्सुर्गावीशब्दादेव अयं गां प्रतीतवान् इत्यवगम्य गावीशब्दमेव गोशक्तत्वेन प्रतीत्य अन्येषां व्युत्पादको बभूवेति

मयोच्चरितत्वात्। न च नापभ्रंशेत्यादिश्रुतेरपभ्रंशस्यापि तदुच्चरितत्वं, तच तदिच्छयोच्चारणाभावादिह तु नामपदाशोचनयैव तथा-

देवाभिप्रेत्य शङ्कते, 'नन्विति, 'गोशक्तत्वेनेति। ननु व्युत्पित्सोर्बालस्य गोशक्तत्वप्रमाविरहे कथं तत्त्वेन भ्रमः कथं वा सोऽन्येषां पामराणां व्युत्पादकस्तेषामप्युक्तन्यायेन शक्तत्वभ्रमासम्भवादिति चेत्, मैवं, न हि शक्तित्वेन शक्तिज्ञानं प्रयोजकं, अन्यथा मीमांसकस्यातिरिक्तशक्तिज्ञानादन्यस्येश्वरसङ्केतज्ञानादर्थप्रत्यय इति व्यभिचारापत्तेः, किन्तु तद्धीजनकतावच्छेदकत्वेन, तच्च कस्यचिच्छक्तिः, कस्यचित् सङ्केत इत्यन्यदेतत्। तथाच गावीशब्दस्य गोज्ञानजनकत्वज्ञानानन्तरं तदवच्छेदकरूपवानयमिति भ्रमः सम्भवत्येव तस्य गोप्रत्ययजनकगवादावेव प्रसिद्धत्वात्। यद्वा तद्धीजनकत्वज्ञानानन्तरं ज्ञानजनकता ज्ञाप्यसम्बन्धाधीनेति प्रत्यक्षादौ दर्शनात् तत्सम्बन्ध-

ततः प्रभृत्यपभ्रंशे शक्तत्वभ्रमः। एवञ्च प्रथमव्यु॰ ' अस्या-पभ्रंशादेव स्मारितसाधुशब्दादर्थप्रत्ययस्तन्मूलकश्चान-

---

तात्पर्य्यकोच्चारणसत्त्वात् लक्षणा च शक्यसम्बन्धो न तु ज्ञाप्यसम्बन्धः, तथाच शक्तिप्रयोजकसम्बन्धाश्रयसम्बन्धः पर्य्यवसन्नस्तेन साक्षात्-

---

त्वेन शक्तिज्ञानं प्रयोजकं प्रकृते च गोज्ञानजनकताप्रयोजकसम्बन्धवानय-मित्यारोपः सम्भवत्येव अस्यापि गव्येव प्रसिद्धेः, तदिदं वक्ष्यति तत्रापि ज्ञान-जनकत्वज्ञानेनैव प्रत्यक्षादिवदत्रापि सम्बन्धत्वेन शक्तिकल्पनादिति । ननु तथापि कथमपभ्रंशात् तद्भ्रमः ततोऽर्थप्रत्यये अस्मादयमर्थोबोध्य इति ईश्वरेच्छाया विषयाबाधेन सत्त्वात् तत्सत्त्वे च विषयाबाधेन शक्तिग्रहस्यापि प्रमात्वादिति चेत्, अत्र वदन्ति, तदिच्छया ईश्वरोच्चरितत्वं शक्तिर्न चाप-भ्रंशे तदिति तद्भ्रम इति तच्चिन्त्यं, तदुच्चरितत्वं हि न तज्जन्यत्वमपभ्रंशेऽपि गतत्वात् । नापि तत्कण्ठताल्वाद्युदीरितत्वं आधुनिकपदाव्यापनात् । न च "द्वादशेऽहनि पिता नाम कुर्य्यादिति नामत्वेन तदुच्चारणमस्त्येवेति वाच्यं । नापभ्रंशितवै इत्यादिना अपभ्रंशत्वेन तदुच्चारणमादाय तत्रातिव्याप्तेः हेऽरयो हेऽलय इत्यपभ्रंशेऽलिशब्दे गतत्वाच्च । वयन्तु ब्रूमः, तादृशेश्वरेच्छा-रूपपद-पदार्थसम्बन्धत्वं शक्तित्वं, अतएव पद-पदार्थयोः सम्बन्धो वृत्तिरिति प्रागुक्तं, सम्बन्धत्वेन शक्तिकल्पनादिति च वक्ष्यति, अपभ्रंशे तादृशेश्वरे-च्छायाः सत्त्वेऽपि तस्याः सम्बन्धत्वे मानाभावः । उक्तरीत्यैव ततोऽर्थप्रत्ययो-पपत्तेः । तथाच सम्बन्धत्वाभावेन शक्तिविरहात् तद्भ्रमः यथा घटवति भूतलाभावस्वरूपयोः सम्बन्धत्वाभावादेव घटाभावभ्रमः । साधिमैत्रादिपदे चान्यथानुपपत्त्या सम्बन्धत्वं कल्प्यते अन्यथा अपभ्रंशवन्निरर्थकात् तस्माद् प्रातिपदिकाधिकारीया विभक्तिर्न स्यात्, न स्याच्च यज्ञादौ तत्प्रयोगः । एवं लाक्षणिकेऽपि तस्याः सम्बन्धत्वाभावादेव शक्तिविरहः वक्ष्यमाणरीत्या तत्राप्यर्थप्रत्ययोपपत्तौ तत्सम्बन्धत्वाकल्पनात् । न च लाक्षणिकस्यानुभाव-

नुसंहितसाधुशब्दानामपि शक्तिभ्रमात् शक्तिमत्तया ज्ञायमानस्यैव शाब्दज्ञानहेतुत्वात्।

यत्तु जनकज्ञानस्य भ्रमत्वे शाब्दज्ञानायथार्थत्वं लिङ्गभ्रमजन्यानुमितिवदिति, तन्न, न हि शक्तिज्ञानयथार्थत्वं शाब्दप्रमायां प्रयोजकं, अनाप्तोक्ते व्यभिचारात्। नापि जनकज्ञानभ्रमत्वेन अयथार्थत्वं भ्रमानुव्यवसाये व्यभिचारात्। प्रमाजनकत्वञ्चापभ्रंशस्यावश्यकशाब्दप्रमाप्रयोजकयोग्यतादेर्यथार्थतद्बोधाद्वा न तु शक्तिज्ञानयथार्थत्वं तन्त्रं गौरवात्। अबाधितसंसर्गज्ञानजनकपदार्थोपस्थापकत्वादित्यन्ये। संसर्गबाधकप्रमाविरहादित्यपरे। ननु साधुत्वं न प्रति-

---

परम्परासाधारणशक्तिविषयसम्बन्धपर्य्यवसन्न एवेति नातिप्रसङ्गः। न च गौरवं, व्यवहाररूपप्रमाणसत्त्वादिति। ननु लिङ्शब्देनानादि:

---

कत्वे तादृशेच्छैव तत्र नेति वाच्यं। अन्योन्याश्रयापत्तेः अननुभावकत्वे तादृशेच्छारूपशक्तिविरहस्तत्र चाननुभावकत्वमिति। न च शक्तिसाध्यमित्यादि दूषयति, 'शक्तिमत्तयेति। 'अनाप्तोक्त इति वह्निना सिञ्चतीत्यादावन्वयव्यभिचारात् इत्यर्थः। 'भ्रमेति, शक्तिज्ञानस्य तज्जनकत्वमपि नेत्यपि बोध्यं। 'अबाधितेति, जनकान्तं पदार्थोपस्थितिविशेषणं। प्रमाजनकत्वमेव प्रमाजनकतावच्छेदककोटिप्रविष्टं पर्य्यवस्यतीत्यनुशयमाविष्करोति, 'अन्य इति। प्रमेयं वाच्यमित्यादावव्याप्तेरनुशयान आह, 'अपर इति। साधुभिर्भाषितव्यमित्यत्र किं साधुत्वमित्याक्षिपति, 'नन्विति, पूर्व्वस्य पङ्क्ज-

पादकत्वं अपभ्रंशे तिव्याप्तेः। नापि यस्य यत्रानादिप्रयोगः स तत्र साधुः, हेऽरयो हेऽलय इति वदन्तोऽसुराः पराबभूवुरिति वेदे श्रवणात् अलिशब्देऽपभ्रंशे गतत्वात्, संज्ञाशब्दाव्यापनात् लौकिकगौण-लाक्षणिकयोरसाधुत्वापत्तेश्च। तथाभ्युपगमे वेदेऽपि तयोः साधुत्वं न स्यात्। अनादित्वं सजातीयप्रयोगपूर्व्वकत्वं अपभ्रंशेऽपि नियमतस्तथात्वञ्च सर्गादौ स्वतन्त्रपुरुषप्रयोगेऽव्यापकं भ्रमाद्यजन्यत्वमपभ्रंशेऽपि। ननु साधुत्वं जातिर्गत्वादिव्यापिका। न चानुपलब्धिबाधः, व्याकरण-

प्रयोगो वेदे तदंशेऽनुवादरूपत्वादतो हेत्वन्तरमाह, 'संज्ञेति। ननु नामत्वेन तस्याप्यनादिः प्रयोग इत्यत आह, 'लौकिकेति। ननु गौणाद्यसाध्वेवेत्यत आह, 'तथेति। नन्वनादिगौणं साध्वेव न तु सादीत्यत आह, 'अनादित्वमिति। ननु गत्वादिव्यापकत्वे प्रत्येकवर्णे साधुत्वप्रत्य-

यस्य कुमुदसाधुत्वप्रसङ्गेन तच्चिन्तेति न पौनरुक्त्यशङ्केति ध्येयं। नन्वलिशब्दस्य साधुत्वमेवेत्यत आह, 'अपभ्रंश इति अरौ तस्यासाधुत्वमेवेत्यर्थः, 'तथेति असाधुत्वाभ्युपगम इत्यर्थः। 'वेदेऽपि' यजमानः प्रस्तर इत्यादौ, 'अव्यापकमिति। न च संसर्गान्तरप्रयोगमादायादोषः, तस्य तज्जातीयत्वे मानाभावादन्यथा अपभ्रंशेऽपि तुल्यत्वादिति भावः। 'गत्वादिव्यापिकेति बहुव्रीहिः, अपभ्रंशे गत्वसत्त्वे तदभावे तद्व्यापकत्वाभावात् आदिपदाच्च गत्वघत्वादिव्याप्यं नानैव तदिति सूचितं, अन्यथा ककारादौ तदभावप्रसङ्गात् व्याकरणसंस्कृतश्रोत्रग्राह्यजातिमत्त्वेनानुगमादनुगतसाधुत्वव्यवहार इति

संस्कृतश्रोत्रग्राह्यत्वात्। न च संज्ञाशब्दानामसाधुत्वापत्तिः, तत्रापि प्रकृति-प्रत्ययोरसम्भवात्। गाव्यादिशब्देऽपि तत्सम्भवात् साधुत्वञ्च स्यादिति चेत्, न, यत्रार्थे तथा सम्भवः तत्र तथैव गवादौ न तथेति तत्रासाधुत्वमिति चेत्, न, जातिरूपत्वे सप्रतियोगिकत्वानुपपत्तौ सर्व्वस्य सर्व्वत्र साधुत्वापत्तेः। ननु गोशब्दः अश्वे प्रयुक्तः साधुरेव ज्ञापकस्तु न भवति तच्छक्तत्वेनाज्ञानादिति चेत्, एवं गावीशब्दोऽपि कयाचिद्व्युत्पत्त्या क्वचित् साधुरिति साधुत्वजातियोगात् गव्यपि साधुः स्यात्, प्रतिशब्दञ्च भिन्नतद्विषयजाति-

यापत्तिर्वाक्ये तथा प्रत्ययानुपपत्तिः देवदत्तीयत्वाद्यनुमापकजातिसङ्करापत्तिश्चेति दूषणत्रयं स्फुटतयोपेक्ष्य दूषणान्तरमाह, 'जातीति, 'एवं गावीति गं गणपतिं अवितुं प्रीणयितुं शीलमस्येति गावीशब्देऽपि साधुना क्वचित् साधुत्वादेव च गव्यपि साधुत्वं प्रतिपादकता चा-

भावः। अर्थविशेषे अपभ्रंशस्यापि साधुत्वमेवेत्यग्रे स्फुटमिति यथाश्रुतेऽप्यदोष इत्यन्ये। 'संज्ञेति, तत्र व्याकरणसंस्काराभावादिति भावः। 'यत्रार्थइति गां अवतीत्यादिव्युत्पत्त्येत्यर्थः, 'गव्यपीति, तच्च व्यवहारविरुद्धमिति भावः। 'प्रतिशब्दमिति गोप्रतिपादकशब्देषु गोसाधुत्वं जातिरित्यादिक्रमेणेत्यर्थः। न चोक्तरूपेणानुगमः, तदप्रतिसन्धानेऽप्यनुगतव्यवहारादिति भावः। ननु जातिर्यदि न सप्रतियोगिका तदा तारत्वादिकं कथं जाति-

स्वीकारेऽननुगमः। तारत्वादेस्तु जातित्वेऽप्युत्कर्षरूपतया अवधिनिरूप्यत्वं। नापि यज्ञप्रयोगार्हत्वं साधुत्वं एकमवच्छेदकं विना प्रतिशब्दमर्हत्वस्य दुर्निरूप्यत्वात्। साधुत्वेनैव यज्ञे विधानात्। चाण्डालाद्युच्चार्य्यमाणस्यापि साधुत्वात्। यज्ञाग्रहणेऽपि साधुत्वव्यवहाराच्च। नापि धर्म्मजनकशब्दत्वं अपभ्रंशेऽपि गतत्वात् पतितोच्चार्य्यमाणस्यापि साधुत्वाच्च। नापि वेदस्थश-

---

स्तीति गोपदवद्गावीशब्दः गव्यपि साधुः स्यादित्यर्थः। ननु जातिर्यदि न प्रतियोगिनिरूपणनिरूप्या तदा तारत्वजातिरपीतरनिरूपणनिरूप्या न स्यादित्यत आह, 'तारत्वादेरिति, कुत्रापि जातिर्नेतरनिरूपणनिरूप्या किन्तु तदुत्कर्षवत्त्वं तथेत्यर्थः, 'साधुत्वेनैवेति "साधुभिर्भाषितव्यमित्यादिश्रुतित एवेत्यर्थः, 'चाण्डालेति, एतच्च फलोपधानपक्षे, स्वरूपयोग्यताया अर्हत्वस्येत्यनेनैव निरस्तत्वादित्यर्थः, 'अपभ्रंश इति, परोपकारार्थकस्य व्यापारमात्रस्य तथात्वादिति भावः। 'पतितेति, घटमानयेत्यादेरिति शेषः। इदमपि द्वयं फलोप-

---

रित्यत आह, 'तारत्वादेरिति, एतच्चाभ्युपेत्योक्तं। वस्तुतस्तदपि नावधिनिरूप्यं किन्तु सजातीयसाक्षात्कारप्रतिबन्धकतावच्छेदकजातित्वं तस्योत्कर्षत्वं तदेव तन्निरूप्यमिति बोध्यं। 'साधुत्वेनैवेति, "साधुभिर्भाषितव्यमित्यादिनेति शेषः, तथाचात्माश्रय इति भावः। 'अपभ्रंश इति, आर्त्तत्राणाद्यर्थमुच्चारित इति शेषः। अथाशिमाह, 'पतितेति, न च जनकत्वं स्वरूपयोग्यत्वं तच्चापीति वाच्यं। तदवच्छेदकाग्रहादिति भावः। 'वेदस्थेति वेदस्थ-

ब्दत्वं अपभ्रंशेऽलिशब्देऽपि गतत्वात्, संज्ञाशब्दे तद-भावात्। भाषायां सदवसश्रव इत्यादेः साधुत्वानुशा-सनविरोधात् सर्व्वेषां साधुत्वेन सप्रतियोगिकत्वानुप-पत्तेश्च। न हि क्वचिद्विषये तद्वेदस्थं क्वचिन्नेति युज्यते, विरोधात्। नापि व्याकरणव्युत्पाद्यशब्दत्वं संज्ञाशब्दे तदभावात् साधुत्वेन सिद्धे व्याकरणप्रवृत्तेः साधुत्वाव्या-व्यापकस्य व्याकरणशब्दवाच्यत्वात्। उच्यते। यः शब्दो यत्रेश्वरेण सङ्केतितः स तत्र शक्तः साधुरित्युच्यते,

धानपक्षे स्वरूपयोग्यतापक्षे तदवच्छेदकरूपाज्ञानादसम्भवः सम्भवे वा तदेव लक्षणमुपजीव्यत्वादित्यपि द्रष्टव्यं। नन्वननुवादतया वेदस्थत्वं विवक्षितमतो दोषान्तरमाह 'संज्ञेति। ननु नामत्वेन तदपि वेद-स्थमतो दोषान्तरमाह, 'भाषायामिति। ननु संज्ञाशब्दे निर्वि-भक्तिकेऽसाधुत्वमेव सविभक्तिके तु व्याकरणव्युत्पाद्यत्वमेव तथेति कुतोऽव्याप्तिरत उत्पत्तावन्योन्याश्रयरूपं दोषान्तरमाह, 'साधुत्वेनेति,

---

शब्दजातीयत्वमित्यर्थः, 'भाषायामिति, भाषामात्रप्रयुक्तसाधुशब्दाव्याप्ति-रिति भावः। 'संज्ञेति, प्रकृत्याद्यूहकल्पने मानाभावादिति भावः। 'य-इति, सप्रतियोगित्वार्थं यत्र तत्रेत्युक्तं, ईश्वरपदञ्चात्र वादिसङ्केतितापभ्रंश-वारणार्थं, "एकादशे द्वादशे वाह्नि पिता नाम कुर्य्यादित्यादिना सामा-न्यत ईश्वरसङ्केतान्न चैत्रादिशब्दाव्याप्तिरित्यग्रे स्फुटं। यत्र च नामद्वया-दिकं कृतं तत्र प्राथमिक एव तत्सङ्केतः, "नाम कुर्य्यादित्येकवचन-स्वरसात्। न हि हविरुभयत्ववदत्रापि एकत्वमविवक्षितमिति वाच्यं, हविर्विधायकवाक्यानुसारेण तत्र द्वित्वस्याविवक्षणात्, विनिगमका-

परेषां शब्दार्थयोः स्वाभाविकसम्बन्धवत् अस्माकमीश्वरसङ्केतस्य नियामकत्वात् यथा या काचिदोषधी नकुलदंष्ट्रास्पृष्टा सा विषं हन्ति तथा प्रतिपादकत्वाविशेषेऽपि ईश्वरसङ्केतिता एव शब्दा धर्म्मोपयोगिनः स्वभावात् तद्विषया एव "साधुभिर्भाषितव्यमित्यादिविधयः। ईश्वरसङ्केतज्ञानञ्च व्यवहारात् उपमानात् प्रसिद्धार्थपदसामानाधिकरण्यात् आप्तोपदेशात् यववराहेन्द्रादिशब्देषु वाक्यशेषात् कोषात् तदभियुक्तेन्द्रपाणिन्यादिप्रणीतशब्दानुशासनाच्च तेषां साध्वसाधुविभाग एवाधिकारात्। तदुक्तं "तत्र तत्त्वमभियोगात् स्यादिति। "अभियुक्ताश्च ये यत्र यन्निबद्धप्रयोजनाः। ते तत्र गुण-दोषाणां ज्ञाने चाधिकृता मताः"॥ इति। न च साधुत्वे सिद्धे शब्दानुशासनं तस्मिंश्च सति

---

'आप्तोपदेशादित्यन्तेनैव, त्रिप्रमाणीकथनादवशिष्टं त्रयमेतत्प्रपञ्चस्तत्रापि यव-वराहादौ वाक्यशेषस्य व्यवहारयोः सत्प्रतिपच्चितयोरेकतरस्मिन्ननुकूलतर्कोपस्थापकतया व्यवहारादेव शक्तिग्रहः स चानुमानात्मा कोष-व्याकरणे तु शब्दविधया प्रसिद्धार्थपदसामा-

---

भावात् सर्व्वत्रैवेश्वरसङ्केत इत्यप्याहुः। 'ईश्वरेति, तदुक्तं, "शक्तिग्रहं व्याकरणोपमान-कोषाप्तवाक्य-व्यवहारतश्च। वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः" इति कोषादेराप्तोपदेशत्वेऽपि गो-वृषन्या-

तद्धीरित्यन्योन्याश्रयः, पूर्व्वपूर्व्वशब्दान्वाख्यानेन साधुत्वमवगम्य उत्तरोत्तरानुशासनप्रवृत्तेः। सर्गादौ भगवत एव तत्प्रणीतव्याकरणाद्वा साधुत्वनिश्चयेन उत्तरव्याकरणप्रवृत्तिः। विश्राम-विश्रमशब्दयोश्च साधुत्वे पाणिनि-चन्द्रगोमिव्याकरणविरोधे "वौ श्रमेर्व्विकल्प इष्यत इति महाभाष्यकारवचनादुभयमपि साधु। ननु मैत्रादिशब्दानामीश्वरसङ्केताभावादसाधुत्वे यज्ञादौ न प्रयोगः स्यादिति चेत्, न, "द्वादशेऽहनि पिता नाम कुर्य्यादित्यनेन सामान्यतस्तेषामपीश्वरसङ्केतविषयत्वात्। ननु वासुदेवशब्दस्य वसुदेवापत्ये व्याकरणेन व्युत्पादनात् तत्रैव साधुत्वं न त्वाधुनिकसङ्केतविषये। अथ तत्र प्रकृति-प्रत्ययविभागपरिकल्पना कर्त्तव्या, तर्हि गाव्यादिशब्देऽपि तथात्वं सम्भवतीति तस्यापि साधुत्वं स्यादिति चेत्, न, "द्वादशे-

---

माधिकरणविधया वा आप्तोपदेशोऽनुमानं वेति, प्रत्यक्षन्तु न तत्र सम्भवत्येवेति ध्येयं। 'प्रकृति-प्रत्ययेति, वासुदेवादिपदं प्रकृतिः, 'प्रत्ययः' विभक्त्यादिः, यथाश्रूयमाणस्तत्र लुप्तः कल्प्यत इत्यर्थः, 'तर्हीति, 'गावीतिपदं प्रकृतिस्ततो विभक्तिरिति तत्रापि सम्भवतीत्यर्थः, 'द्वादश इति, तथाचार्थवत्त्वेन(१) मैत्रादिशब्दस्यास्तीति

(१) तथाचार्थपरत्वेनेति ख०

ऽहनि पिता नाम कुर्य्यादिति सामान्यतः तस्येश्वर-सङ्केतितत्वेन तस्य साधुत्वनिश्चयात् व्याकरणस्य तद्विशेषविषयत्वमस्तु न तु गावीशब्दे तथा। अथ शास्त्रकारसङ्केतितशब्दादश्वादिषु सङ्केतितगवादिशब्दाद्वा कथमर्थप्रत्ययः शक्ति-तदारोप-वृत्त्यन्तराणामभावादिति चेत्, न, येन शब्देन उपस्थितेऽर्थे गवादिशब्द-सङ्केतग्रहः तस्मादेव गवादिपदेन स्मारितादर्थप्रत्ययात् चेष्टास्मारितपदादिवेति सम्प्रदायः।

अत्र वदन्ति, नेश्वरसङ्केतितत्वं साधुत्वं तस्य निष्पृतियोगिकत्वेन सर्व्वत्र सर्व्वस्य साधुत्वापत्तेः। नापि यः शब्दः यत्रेश्वरेण सङ्केतितः स तत्र साधुः गौण-लाक्ष-

प्रकृतित्वमतो विभक्तिकल्पना युक्ता न तु गावीशब्दे तस्यानर्थकत्वेन प्रतिपादकत्वाभावादित्यर्थः। 'शक्तीति, शक्तिरीश्वराभिप्रायः, पराभिप्रायनिश्चयादेव न तदारोपः, शक्त्यभावादेव न वृत्त्यन्तरमित्यर्थः, 'येनेति, यत्र पराभिप्रायनिश्चयः तन्मूलकाधिमशब्दप्रयोगे तु

---

यात् पृथगुपन्यासः। 'व्याकरणस्येति, वासुदेवशब्दस्य सार्थकतया प्रातिपदिकाधिकारीयविभक्तिविधानादिति भावः। 'शास्त्रकारेति नदी-वृद्धादिशब्दादित्यर्थः, 'तदारोपेति, विशेषदर्शनादिति भावः। ननु पदसाधुत्वमिदं तथाच बाधत इत्यादावव्याप्तावपि न दोषः। न च बाधतीत्यादावतिव्याप्तिः, प्रकृत्यादेः प्रत्येकं साधुत्वात्। समुदाये शक्त्यभावादिति यदि ब्रूयात् तदाह, 'ईश्वरेति, प्रकृत्यादेः प्रत्येकं साधुत्वे यज्ञादौ प्रयोगापत्तिरित्यपि बोध्यं।

णिकयोरसाधुत्वापत्तेः। केवलयोः प्रकृति-प्रत्यययोः बाधति-ग्रामगाम इत्यादेश्च साधुत्वापत्तेः। बाधतीत्यादौ समुदायस्यासङ्केतितत्वादसाधुत्वे बाधत इत्यस्यापि साधुता न स्यात् प्रकृति-प्रत्यययोः प्रत्येकं सङ्केतितत्वात् अन्वयस्य प्रत्येकशक्तिलभ्यत्वात् प्रत्युत प्रकृति-प्रत्यय-समुदायो न साधुः स्यात् समुदायस्यासङ्केतितत्वात् ईश्वरसङ्केतमज्ञात्वापि व्याकरणव्युत्पाद्यत्वमवधार्य्य साधुत्वव्यवहाराच्च। शक्तत्वं साधुत्वमित्यपि न, ईश्वरसङ्केतोक्तदोषग्रासात्। उच्यते। व्याकरणव्युत्पाद्यत्वं

तदारोपः, एवं क्वचिद्वृत्त्यन्तरमपीति भावः। नन्वीश्वरसङ्केतबलादर्थोपस्थापकत्वं साधुत्वं तच्च साक्षात् परम्परया वेति क्व गौणाद्यव्याप्तिरित्यस्वरसात् दोषान्तरमाह, 'केवलेति। ननु पदसाधुत्वं सङ्केतितत्वं बाधतीत्यादि वाक्यं तत्साधुत्वं अन्यदेवेत्यपरितोषादाह, 'ईश्वरेति, 'शक्तत्वं' सङ्केतितत्वमित्यर्थः, 'व्याकरणेति, अस्यायमाशयः ईश्वरसङ्केतितत्वं वृत्तिमत्त्वं वा पदसाधुत्वमिति न युक्तं केवलस्य सा-

मीमांसकमतमाह, 'शक्तत्वमिति। न च सर्व्वापभ्रंशस्य नामत्वेन शक्तत्वसम्भवात् "साधुभिर्भाषितव्यमित्यादौ व्यावर्त्त्याप्रसिद्धिरिति वाच्यं। यस्य यत्र शक्तिः तत्र तत् साध्विति तात्पर्य्यात्। 'ईश्वरेति गौणाद्यव्याप्तेरित्यर्थः। न च वृत्तिमत्त्वं तत्त्वं, साधुत्वसामान्यस्यैव लक्ष्यत्वेन अव्याप्तेरिति। अतएव वाक्यसाधारणमेव सिद्धान्तलक्षणमाह, 'व्याकरणेति, घटः कर्म्मत्वमित्यादौ च साधुत्वमिष्टमेव आकाङ्क्षादिगर्भञ्च पूर्व्वोक्तलक्षणं मतान्तरेण

साधुत्वं यः शब्दो यस्मिन्नर्थे व्याकरणव्युत्पादितः स तत्र साधुः। अतएव गावीशब्दोव्याकरणोक्तव्युत्पत्त्या यमर्थं प्रतिपादयति स तत्र साधुरसाधुरन्यत्र नाम्नामप्युणादयो बहुलमित्यादिना व्युत्पादनात्। केवलप्रकृतिप्रत्यययोर्व्वाधति-ग्रामगाम इत्यादेश्च न व्युत्पाद्यत्वं तत्प्रयोगस्यानभिधानात् निषेधाच्च। गौण-लाक्षणिकयोश्च यथा प्रतिपादकत्वं तद्व्युत्पादनमपि तत्र तथेति तयोरपि साधुत्वं तस्माच्छक्तत्वमीश्वरसङ्केतितत्वं वा

धुत्वापत्तेः। न चेष्टापत्तिः, केवलस्यापि यज्ञे प्रयोगापत्तेः तदर्थमेव साधुत्वविचारणादन्यथा प्रतिपादकत्वाविशेषे तद्विचारस्य काकदन्तविचारत्वापत्तेः, प्रयोगस्तु वाक्यस्यैवेति तत्साधुत्वमेवेह विचार्य्यं तन्नेश्वरसङ्केतितत्वमसम्भवात्ततो व्याकरणव्युत्पाद्यत्वमेव साधुत्वं। किन्तु वाक्यसाधुत्वार्थं तस्यावश्यं त्वया निर्व्वाच्यत्वमतो न पदसाधुत्वाय लक्षणान्तरं। यत्तु पदसाधुत्वे ईश्वरसङ्केतितत्वमज्ञात्वेत्यादि दूषणं। तन्न। तदज्ञाने व्याकरणव्युत्पादनस्याज्ञानात् प्रातिपदिकत्वाज्ञाने प्रत्ययाज्ञानादिति। 'नाम्नामपीत्यादि समाधिसौकर्य्यादुक्तं, केवलस्या-

बोध्यं। मैत्रादिपदाव्याप्तिमाशङ्क्याह, 'नाम्नामपीति, एवञ्च विभक्तिशून्यस्यापि यज्ञादौ प्रयोगमाशङ्क्याह, 'केवलेति, एवञ्च यद्यपि वाक्यसाधुत्वमात्रमेवात्र लक्ष्यं इति पर्य्यवस्यति, तथापि सुवन्तादिमात्रस्य पदत्वाभ्युपगमादुभयसाधारण्यं बोध्यं। 'गौणेति, यद्यपि गङ्गायामित्यादिपदं न तीरे व्याकरणेन व्युत्पादितं तथाप्यर्थवतः सुपो विधानादर्थवत्त्वेन सामान्यतस्तत्रापि

अज्ञात्वापि साधुत्वव्यवहारात् ज्ञात्वाप्यव्यवहाराच्च न तत्साधुत्वं किन्तु व्याकरणपरिगृहीतत्व-तदभावाभ्यामेव प्रामाणिकानां साध्वसाधुव्यवहारात् तावेव ते। न च साधुशब्दव्युत्पादकत्वमेव व्याकरणत्वं इत्यात्माश्रयः, शब्दगुण-दोषविद्भिरभियुक्तैः प्रकृति-प्रत्ययादिकल्पनया शब्दान्वाख्यायकस्य व्याकरणत्वात्। न च साधुत्वे सिद्धे व्याकरणव्युत्पाद्यत्वं तद्व्युत्पाद्यत्वे साधुत्वं इत्यन्योन्याश्रयः, पूर्व्वपूर्व्वव्याकरणतः साधुत्वमवगम्य उत्तरोत्तरव्याकरणेन व्युत्पादनमित्युक्तत्वात्। ननु तद्वीजनकतावच्छेदिकायाः शक्तेः तद्वीजनकताविषयकेश्वरसङ्केतस्य वा ज्ञानादर्थप्रत्यय इत्यावश्यकत्वात् लाघवाच्च तद्वीजनकत्वज्ञानमेवार्थप्रतीतौ हेतुरस्तु किं शक्तेरीश्वरसङ्केतस्य वा ज्ञानेन अन्यथा

साधुत्वादिभक्त्यन्तस्य व्याकरणव्युत्पाद्यत्वेनार्थवत्त्वात् प्रातिपदिकादिभक्तिविधानादतो नामांशस्य व्याकरणाव्युत्पाद्यत्वेऽपि चतेरभावादिति ध्येयं। ज्ञप्तावन्योन्याश्रयमाशङ्क्य निषेधति, 'न चेति, 'शब्दगुणेति। न च गुणवत्त्वं दोषवत्त्वञ्च साध्वसाधुत्वमिति तथैवान्योन्या-

तात्पर्य्यं कल्पितं, व्याकरणातिव्याप्तेराह, 'शब्देति। न च व्याकरणैकदेशेऽतिव्याप्तिः, तस्यापि व्याकरणत्वात्। सिंहावलोकितन्यायेन तटस्थः शङ्कते, 'नन्विति, 'शक्तेरिति स्वाभाविकसम्बन्धरूपाया इत्यर्थः, 'अन्यथेति। नन्वे-

मीमांसकस्य शक्तिज्ञानादर्थप्रत्ययो नैयायिकस्येश्वरसङ्केतज्ञानादिति व्यभिचारेणैकस्यापि कारणता न स्यादिति, अतएव लौकिकानां शक्तीश्वरसङ्केताज्ञानेऽपि वृद्धव्यवहारादर्थज्ञाने शब्दस्य जनकत्वमवधार्य्य अग्रे शब्दादर्थप्रत्ययः। न चैवं लक्षणोच्छेदे गङ्गापदात् विलम्बितार्थधीर्न स्यादिति वाच्यं। लाक्षणिकस्याननुभावकत्वात्, तथात्वेऽपि तीरज्ञानजनकत्वेन ज्ञातस्य न तीरज्ञापकत्वं किन्तु प्रवाहज्ञानजनकत्वेन लाघवात्। अथ ज्ञानजनकता ज्ञाप्यसम्बन्धाधीना प्रत्यक्षादौ तथा दर्शनादिति सम्बन्धत्वेन शक्ति-सङ्केतयो-

---

अयत्नमिति वाच्यं। धर्म्मजनकत्वाधर्म्मजनकत्वयोरेव गुण-दोषत्वादिति भावः। उत्पत्तावन्योन्याश्रयमाशङ्क्य निषेधति, 'न चेति, तद्बीजनकत्वं तद्बीजननस्वरूपयोग्यत्वमेव यदि स्वरूपयोग्यतावच्छेदकोधर्म्मः स च प्रातिस्विकेन रूपेणोपस्थितो हेतुरित्यर्थः, तेन रूपेण ग्रहे व्यभिचारान्तरमाह, 'अतएवेति। 'न त्विति, हेतुरित्यन्तो शेषः।

---

वमिष्टसाधनताज्ञानमपि प्रवर्त्तकं न स्यादिति चेत्, भ्रान्तोऽसि, न हि मीमांसकस्य तत्सामग्रीवैकल्यमेव, किन्तु तत्प्रवर्त्तकतायामनभ्युपगममात्रं, अत्र शक्ति-सङ्केतयोरन्योन्यस्य बाधात् तज्ज्ञानासम्भवेन व्यभिचारादिति। एतदपि शक्तित्वादिना तज्ज्ञानहेतुत्वमभ्युपेत्य। सम्बन्धत्वादिना तज्ज्ञानहेतुत्वपक्षे दोषाभावादिति। एतदभिप्रायेणैवाह, 'अतएवेति, 'लाक्षणिकस्येति तथाच न तद्बीजनकत्वं तस्येति न सामग्रीतौल्यमिति विलम्ब-

रन्यतरसिद्धिरिति चेत्, न, तद्धीजनकत्वेन ज्ञातत्वस्यैव सम्बन्धत्वात्। न च तद्धीजनकत्वमेव न गृह्यते सम्बन्धज्ञानं विनेति वाच्यं। तत्रापि ज्ञानजनकत्वज्ञानेनैव प्रत्यक्षादिवदत्रापि सम्बन्धत्वेन शक्तिकल्पनात्, अन्यथा अन्योन्याश्रयः सम्बन्धज्ञाने सति ज्ञानजनकत्वज्ञानं तस्मिन् सति सम्बन्धज्ञानात्। यथार्थतद्धीजनकत्वज्ञानं यत्र भवति तत्र तत्पूर्व्वं सम्बन्धोऽस्त्येवेति चेत्, अस्त्येव पूर्व्वपूर्व्वेषां तद्धीजनकत्वेन ज्ञातत्वस्य पूर्व्वमपि सत्त्वात्। एतावतापि शक्तिः सङ्केतो वा सम्बन्धोऽस्तु तथात्वेऽपि तद्बोधस्य नार्थप्रत्यायकत्वं गौरवात्, किन्तु तद्विषयधीजनकत्वज्ञानस्यैव, एवञ्च तद्धीजनकत्वेन ज्ञातं यत्पदं यदनुभवं जनयति तस्यैव तत्र शक्तत्वं न तु शक्तिरीश्वरसङ्केतो वेति। उच्यते। देव-

'देवदत्तेति, तद्धीजनकत्वं जननयोग्यता सा च तदवच्छेदकोधर्म्मः

---

इत्यर्थः। ननु शक्तत्वेनानुभावकत्वानभ्युपगमे तदेवासिद्धमित्यत आह, 'तथात्वेऽपीति शक्तिस्थानीयतद्धीजनकत्वज्ञानात् पूर्व्वोपस्थितौ ज्ञाप्यसम्बन्धेन तीरधीरन्यथासिद्धेति युक्तो विलम्ब इत्यर्थः, 'पूर्व्व-पूर्व्वेषामिति। ननु ज्ञातत्वं ज्ञानं तच्चास्माकमसम्भवात् सर्गादावीश्वरस्यैव वाच्यमितीच्छातौल्यमिति चेत्, न, तद्धीजनकत्वज्ञानस्योपस्थितत्वेन तत्रैव सम्बन्धकल्पनात्। यद्वा एतदस्वरसादाह, 'एतावतापीति, 'एवञ्चेति, न चैवमपभ्रंशे शक्त्यापत्तिः, इष्टत्वादिति भावः। 'देवदत्तादिपदादिति। ननु गवादिपदे सङ्केत-

दत्तादिपदादर्थबुद्धौ सङ्केतज्ञानस्य कारणतावधारणात् अन्यत्रापि तत्कल्पनं न। न ह्यस्माच्छब्दादयमर्थो-

---

ऽवच्छिन्ना वा बेत्युभयथा तद्धर्मज्ञानमपेक्षते तज्ज्ञानमपि न

---

कल्पकस्य मानान्तरस्याभावाद्देवदत्तादिपदे सङ्केतज्ञानस्य हेतुत्वं यावन्नावधार्य्यते तावत्तद्धीजनकत्वज्ञानादेव गवादिपदादर्थधीरिति व्यभिचारेण सङ्केतज्ञानं न हेतुः किन्तु तद्धीजनकत्वज्ञानमेव। न च देवदत्तादिपदे तस्यापि व्यभिचार इति वाच्यम्। अस्मादयमर्थो बोद्धव्य इति सङ्केतज्ञाने तत्पदे तद्धीजनकत्वविशिष्टस्यावश्यं भानात्। न चैतदर्थज्ञानमेतच्छब्दजन्यत्वेनेच्छाविषय इति ज्ञाने कथं तद्भानमिति वाच्यम्। तृतीयार्थप्रकारत्वभानवद्वैशिष्ट्यभानस्यावश्यकत्वात् स्वातन्त्र्येण तु वैशिष्ट्यं न भातमित्यन्यदेतदिति चेत्, अत्र ब्रूमः, स्वातन्त्र्येण तद्धीजनकत्ववैशिष्ट्यावगाहिज्ञानस्यैव परेण हेतुतया स्वीकार्य्यत्वादन्यथेदं न तद्धीजनकमिति विशेषदर्शनेऽपि अस्मादयमर्थो बुद्ध एतदर्थज्ञानमेतच्छब्दजन्यत्वेन ज्ञानविषय इति ज्ञानेऽपि कथञ्चित्तद्वैशिष्ट्यज्ञानात्ततस्तद्बुद्ध्यापत्तिः। यदि च न तत्र तद्भानं पारतन्त्र्येण वा तद्भानं तदा प्रकृतेऽपि तुल्यं तस्मादिदं तद्धीजनकमित्याकारकं ज्ञानं तद्धेतुरिति वाच्यं तच्च देवदत्तादिपदे व्यभिचार्य्येव तदिदमाह, 'तद्ग्रहस्य वा सम्भवादिति। न च सङ्केतज्ञानस्यापि व्यभिचारः, सङ्केतत्वेन तज्ज्ञानहेतुत्वस्यानभ्युपगमे तेन रूपेण व्यभिचारेऽप्यदोषात् तद्धीजनकतावच्छेदकत्वादिना च तज्ज्ञानहेतुत्वस्य पूर्व्वमपि सम्भवेन तेन रूपेण व्यभिचाराभावात् अन्यथा लाघवावतारपूर्व्वं भेदाग्रहादेव प्रवृत्तिर्जातेति व्यभिचाराद्विशिष्टज्ञानं तद्धेतुर्न स्यात्। यदि च लाघवात्तद्धेतुत्वे निश्चिते पूर्व्वमपि तत एव प्रवृत्तिरभूदिति कल्पनान्न व्यभिचारावकाशस्तदा देवदत्तादिपदे तद्धेतुत्वनिर्णये पूर्व्वमपि तद्धीजनकतावच्छेदकत्वादिना सङ्केतज्ञानादेव तद्धीरभवदिति तत्कल्पनान्न तथेति तुल्यं तदिदमाह, 'अन्यत्रापि तत्कल्पना-

**बोद्धव्य इति यस्तत्र सङ्केतः तद्बोधं विना ततस्तदर्थ-**

विशेषाकारेण प्रत्येकज्ञानव्यभिचारस्योक्तत्वादिति। घटपदं घटानुभवजनकतावच्छेदकधर्म्मवदित्याकारकः शक्तिग्रहः स एव चावच्छेदकधर्म्मः पदार्थसम्बन्धरूपस्य, तथाच तथा शक्तिग्रहे तत्सम्बन्धिता-

दिति। इदन्तु चिन्त्यं देवदत्तादिपदे यथा तद्बोधजनकत्वादिज्ञानं तथा तद्बोधजनकतावच्छेदकत्वादिप्रकारकज्ञानमपीत्यनुभवसिद्धं, तज्ज्ञानेनैव तदवच्छेदकतया तन्निर्व्वाहकसम्बन्धत्वेन वा तत्कल्पनात् किन्तु विशेषप्रकारकसङ्केतज्ञानादेव ततोऽर्थप्रत्ययः, तदिदमाह, 'न ह्यस्माच्छब्दादयमर्थो बोद्धव्य इति, 'यस्तत्र सङ्केतस्तद्बोधं विना ततस्तदर्थप्रत्यय इति, तथाच तादृशसङ्केतज्ञानस्य व्यभिचारो दुर्व्वार एव गवादिपदे व्यवहारकाले तज्ज्ञानासम्भवात्, तदिदमुक्तं 'लौकिकानां शक्तीश्वरसङ्केताज्ञानेऽपि वृद्धव्यवहारादर्थज्ञाने शब्दस्य जनकत्वमवधार्य्याग्रे शब्दादर्थप्रत्यय इति। किञ्चैवमपीश्वरेच्छारूपसङ्केतज्ञानादेव शाब्दबोध इति सिद्धान्त उभयत्रैव। न च सङ्केतज्ञानत्वेन हेतुत्वं तच्चाधुनिकसङ्केतसाधारणमिति वाच्यं। गवादावाधुनिकाश्वादिपदसङ्केतस्यापि शक्तित्वापत्तेः। न चेष्टापत्तिः कथमन्यथा शास्त्रकारसङ्केतितनदी-वृद्ध्यादिपदानां प्रातिपदिकसंज्ञा स्यात् इति वाच्यं। गवादौ गाव्यादिपदस्याधुनिकसङ्केतसम्भवेन शक्ततया साधुत्वापत्तेः। तथाच साध्वसाधुव्यवहारोच्छेदः। अतएव 'चैत्रास्मारितपदादिव ततोऽर्थप्रत्यय इत्युक्तं। एवञ्च तत्र प्रातिपदिकसंज्ञाविरहेऽपि न क्षतिः, लक्षणया वा तथात्वं। न च सादिपदेऽपीश्वरेच्छैव सङ्केतस्तज्ज्ञानादेव चार्थप्रत्यय इति वाच्यं। आधुनिकसङ्केताज्ञाने ततोऽर्थप्रत्ययानुदयात् तज्ज्ञाने चेश्वरेच्छाज्ञानं विनापि तदुदयाच्च। किञ्च तज्ज्ञानात् ततोऽर्थप्रत्यये नियतपदविषया भगवदिच्छा न निर्व्वाहिका तत्पूर्व्वं तस्याः साधारणत्वात्। न चाधुनिकसङ्केतज्ञानादग्रे यतो यदर्थधीस्तद्विषया प्रागपि तदिच्छा तस्या अनागतविषयत्वादिति

प्रत्ययः, सङ्केतज्ञानात् पूर्व्वं तद्वीजनकत्वस्य तद्ग्रहस्य वा असम्भवात्। सादिपदे तथा अनादिपदे त्वयं-प्रत्ययस्य अन्यथापि भावात् न तत्कल्पनेति चेत्, न, पदत्वस्यैव प्रयोजकत्वे सम्भवति तत्र विशेषणे गौरवात् सङ्केत एव मुख्या वृत्तिः तात्पर्य्यनिर्व्वाहकत्वात् अन्वय-

वच्छेदकोत्तरघटत्वज्ञाने सम्बन्धिनोऽर्थस्य स्मरणं सम्बन्धितावच्छेदक-हस्तित्वावच्छिन्नत्वग्रहे हस्तिपकस्मृतिवदवच्छेदकत्वेन गृहीतः सम्बन्धः शक्तिरूपपदार्थान्तरं वा भगवदिच्छा वा पर्य्यवस्यतीतिसन्देहे इच्छायास्तथात्वकल्पनात् सैव कल्प्यते क्लृप्तायाश्च तस्यास्तत्तदिच्छाया-अननुगमेन लाघवादनुगतत्वाच्च भगवदिच्छैव कल्प्यत इत्यर्थः। ननु

वाच्यं। तर्हि तादृशतदिच्छायामाधुनिकसङ्केतज्ञानमुपजीव्यमिति तद्धेतुत्व-ध्रौव्यात् तस्मात् सादिपदे आधुनिकसङ्केतज्ञानमनादिपदे च तद्धीजनकत्व-ज्ञानं विशेषसामग्री सामान्यसामग्री च योग्यतादिज्ञानमित्येवास्तु। न च गौरवं, प्रामाणिकत्वात्। न च तद्धीजनकतावच्छेदकत्वादिना ईश्वरसङ्केत-ज्ञानमेव तत्र विशेषसामग्र्यस्त्विति वाच्यं। गौरवात्। न च सादिपदे क्लृप्तत्वात् तथेति वाच्यं। तेन रूपेण तथा अकल्पनादिति। न च तद्धी-जनकत्वं न फलोपधानं प्रथमं दुर्निरूपत्वात् किन्तु स्वरूपयोग्यता तदवच्छे-दकः सङ्केत एव सादिपदे क्लृप्तत्वादिति वाच्यं। तथापि तज्ज्ञानहेतुत्वे मानाभावात् गौरवाच्च। न चावच्छेदकाग्रहे तदेव दुर्ग्रहं, अवच्छेदकग्रहस्य ह्यारणि-मणिवद्भावात् तद्विषयत्वेन तथाप्यहेतुत्वादिति। 'पूर्व्वमित्युप-लक्षणं सङ्केतज्ञानेऽपि तद्विषयत्वासम्भवादित्यपि बोध्यं। 'तात्पर्य्येति, सा-

प्रतियोग्युपस्थापकत्वाच्च। लक्षणा च वृत्त्यन्तरं यत्र वाच्यार्थान्वयानुपपत्त्या वाच्यसम्बन्धोपस्थापिते वाक्यार्थान्वयः, यथा गङ्गायाङ्घोष इत्यत्र गङ्गापदस्य तीरे। तदुच्यते, "वाच्यस्यार्थस्य वाक्यार्थे सम्बन्धानुपपत्तितः। तत्सम्बन्धवशप्राप्तस्यान्वयात् लक्षणोच्यते"॥

---

मुख्येति विशेषणस्य व्यावर्त्त्याप्रसिद्धिरत आह, 'लक्षणा चेति, सर्व्वमतसाधारणं लक्षणास्वरूपमाह, 'यत्रेति, 'वाच्यस्येति, 'वाक्यार्थे सम्बन्धानुपपत्तिः' विधेयार्थेऽन्वयानुपपत्तिः। एतेन "विधौ न परः शब्दार्थ इति सूचितं। न च गौण्यादावतिव्याप्तिः, तस्या अपि लक्षणाप्रभेदत्वात् सादृश्यात्मकशक्यसम्बन्धस्वरूपत्वात् गो-बलीवर्दन्यायात् गौण-लाक्षणिकव्यवहारोबलीवर्दव्यावृत्तस्तोगवीवत्त्व गौणीव्यावृत्तविशेषस्याग्रे निर्व्वचनं न तु लक्षणे, लक्षणस्य तस्य तूक्तस्यैवानुसर्त्तव्यत्वात्। यद्वा गौण्युपचारादीनां भेदेऽपि विभाजकोपाधिरयं

त्वादिति शेषः। ननु मुख्येति व्यर्थमव्यावर्त्तकत्वादित्यत आह, 'लक्षणा चेति, एवञ्चाग्रे तद्व्यावृत्तं लक्षणं मतान्तरेण बोध्यं। एवं लक्षितलक्षणापि लक्षणैव लक्ष्यभ्रमरपदघटितपरम्परासम्बन्धेन द्विरेफपदस्य मधुपार्थोपस्थापकत्वात् शक्यसम्बन्धमात्रस्यैव लक्षणात्वात्। न च लक्ष्यपदादेव तदुपस्थितिः, द्विरेफपदसमभिव्याहृतविभक्त्यर्थस्य तत्रान्वयप्रसङ्गात्। 'वाच्येति, 'वाक्यार्थे सम्बन्धानुपपत्तिः विधेयार्थेऽन्वयानुपपत्तिरित्याङः। तच्चिन्त्यं, लिङादिलक्षणायां तदभावात्। न च न विधौ परः शब्दार्थः, सुब्विभक्तिवदत्र लक्षणाबाधकाभावेन तत्प्रवादस्याप्रामाणिकत्वात् तथाच

इति। अथ तीरे शक्तिरेव शक्तिग्राहकव्यवहारस्य मुख्य-लक्ष्यसाधारणत्वात् पदानां सम्भूय वाच्यार्थान्वयबोधकत्वव्युत्पत्तेः पदजन्योपस्थितेः शक्तिसाध्यत्वात्। अन्यथा न तत्र शाब्दत्वं तात्पर्य्यं वा तयोः शक्तिनियतत्वात्। किञ्च तीरे यदि तात्पर्य्यमवश्यं तदा तन्निर्व्वाहकत्वेन शक्तिरेव कल्प्या क्लृप्तत्वादक्षादिपदवन्नानार्थतैव युक्ता न त्वक्लृप्तवृत्त्यन्तरं कल्प्यत इति। उच्यते। गङ्गापदस्य लक्षणीयतीरादिसहस्रेषु प्रत्येकं शक्तिकल्पनं तद्ग्रहार्थं लक्षणीयेषु प्रत्येकं वृद्धव्यवहारान्तरापेक्षा स्यात् तथा च गौरवमननुभवश्च,

---

साधारणोनिरूढ़ इति द्वे एव वृत्ती विवेचिते अग्रे तु व्यावर्त्तकं लक्षणमुक्तं, लक्षितलक्षणा तु स्फुटैव लक्षणालक्ष्यपदं सम्बन्धमन्तर्भाव्य द्विरेफपदेनार्थोपस्थापनात्। नच लक्ष्यपदादेवार्थोपस्थितिः, द्विरेफपदसमव्याहृतविभक्तेस्तदुपस्थापितभ्रमरपदानुगतस्वार्थबोधकत्वे व्युत्पत्तिविरोधादिति भावः। 'सम्भूयेति, लाक्षणिकत्वे त्वननुभावकतया तद्भङ्ग इति भावः। हेत्वन्तरमाह, 'पदेति शाब्दबोधानुकूलपदजन्योपस्थितेरित्यर्थः, अत्र चकारः पूरणीयः, 'लक्षणीयतीरादीति।

---

वाक्यार्थपदं तात्पर्य्यविषयपरं बोध्यं। तटस्थः शङ्कते, 'अथेति, हेत्वन्तरमाह, 'पदानामिति, लाक्षणिकत्वे अननुभावकतया तद्भङ्गइति भावः। हेत्वन्तरमाह, 'पदेति, शाब्दबोधानुकूलपदजन्योपस्थितेरित्यर्थः, तत्र

लक्षणा तु शक्यसम्बन्धस्वरूपैका लक्षणीयविषयकदृष्ट-व्यवहारान्तरानपेक्षा चेति लाघवात् सैव युक्ता। न च गौरवमपि नाय्यं प्रामाणिकत्वात् लक्ष्यत्वाभिमता-

न च लक्ष्यसहस्रस्य प्रथमलक्षणाकल्पनकालेऽनुपस्थितिः, तदानीं शक्तिकल्पनेऽपि यदोक्तगौरवप्रतिसन्धिस्तदा तत्कल्पनमित्यग्रे स्फुट-मेवेति भावः। 'सैवेति, वस्तुतः शक्यसम्बन्धस्तस्य सम्बन्धिस्मारकत्वञ्च

---

चकारः पूरणीय इत्याहुः। 'लक्षणा त्विति, ननु शक्तिरपीश्वरेच्छारूप-तया क्लृप्ता एका च। न च तीरादिसम्बन्धिभेदात् तद्भेदः, लक्षणायामपि तुल्यत्वात् पूरप्रतियोगिकतीरादिसंयोगस्य स्वरूपतोऽपि नानात्वाच्च। शक्यसम्बन्धत्वेनानुगमे शक्तित्वेनानुगमस्य तुल्यत्वात्। एतेन शक्यसम्बन्ध-स्तस्य सम्बन्धिस्मारकत्वञ्च न कल्प्यं क्लृप्तत्वात् तज्जन्यस्मृतेः शाब्दबोधा-नुकूलत्वं धर्म्ममात्रं कल्प्यते न तु शक्तिरूपधर्म्मिकल्पनमिति निरस्तं, ईश्वरेच्छाया अपि क्लृप्तत्वात्। न चास्मादयमर्थो बोध्य इत्याकारा शक्ति-स्तादृशी चाक्लृप्तैवेति वाच्यं। गङ्गापदात् तीरान्वयबोधे सर्व्वविषयतया तस्यास्तादृशत्वध्रौव्यात्। न च लाक्षणिकस्याननुभावकतया न तथात्वमिति वाच्यं। अन्योन्याश्रयात् अननुभावकत्वे शक्त्यभावः तस्मिन् सत्यननुभावक-त्वमिति। अत्र ब्रूमः, अपभ्रंशे शक्तिभ्रमानुरोधेन तादृशेच्छामात्रं न शक्तिः किन्तु सम्बन्धत्वगर्भा प्रागुक्ता तथाच तस्यां तत्तदनन्ततीरादिनानासम्बन्धत्व-कल्पनं तज्जन्यस्मृतेः शाब्दबोधानुकूलत्वकल्पनञ्चेति गौरवं प्रकृते च क्लृप्त-सम्बन्धस्य तदनुकूलत्वमात्रकल्पनमिति। किञ्च वक्ष्यमाणरीत्या अध्याहृत-वदितरपदैस्तादृशानुभवोपपत्तौ तस्यां तादृशाकारत्वमक्लृप्तमेव कल्प्यमित्यपि गौरवं। यदि च नान्यथा तदुपपत्तिस्तदा प्रामाणिकतया गौरवं परिभूय शक्तिः स्यादेव। अतएव तदेवाशङ्क्य निराकरोति, 'न चेति, प्रामाणिकत्व-

न्वयबोधस्य शक्तिं तद्ग्रहं वा विनानुपपत्तेः लक्षणायाः क्वापि कारणत्वाग्रहादिति वाच्यं। शक्तिं विनापि तीरान्वयबोधोपपत्तेः। तथाहि व्युत्पन्नोनिरूपितास्तभावस्य गङ्गायां घोषः प्रतिवसतीति वाक्यं श्रुत्वा विमृशति इदं प्रमाणं आप्तोक्तत्वात् सम्भवति चेदं तथा, यथा वस्त्रेण पिधेहीत्यत्र कर्म्मत्वापन्ने द्वारे अध्याहृते योग्ये इतरपदैः स्वार्थान्वयो बोध्यते तथा शक्त्या गङ्गापदस्मारितमुख्यार्थस्मारिते तीरे योग्या-

---

न कल्प्यं क्लृप्तत्वात् तज्जन्यस्मृतेः शाब्दबोधानुकूलत्वं धर्म्ममात्रं कल्प्यते न तु शक्तिर्धर्म्मिण्यपीति लाघवं। किञ्च गङ्गापदजन्यतीरस्मृतेः शाब्दबोधानुकूलत्वमुभयपक्षसाधारणात् क्लृप्तमेव तस्यास्तु स्वरूपतः कारणतश्च क्लृप्तशक्यसम्बन्धजन्यत्वं कल्प्यते न त्वक्लृप्तशक्तिजन्यत्वं गौरवादग्रे मम मतेप्येष एव निगर्वः। शब्दश्राविणोऽर्थानुभवादर्थापत्त्या हि कारणता कल्पनीया क्लृप्तायाश्च तस्यामवच्छेदक-

---

मेवाह, 'लक्ष्यत्वेति, 'इदं प्रमाणमिति, तच्च सम्भय विशिष्टैकार्थानुभावकमित्यपि बोध्यं। 'अध्याहृत इति, एतच्चाध्याहारमतमाश्रित्योक्तं। वस्तुतः शब्दाध्याहारेऽपि तदुपपादकशब्दत्वेनाक्षेपात्, तत्त्वञ्च शक्त-लाक्षणिकसाधारणमिति, शक्तत्वेनानिश्चयात् तस्याननुभावकतया इतरपदैरेवान्वयानुभव इति भावः। 'तथेति, शक्तिप्रयोज्यपदार्थोपस्थितित्वेनैव प्रयोजकत्वं न तु शक्तिजन्यत्वेन। अनन्यथासिद्धांशप्रवेशे गौरवादिति भावः। अर्थस्मारकत्वपक्षे चात्रान्वयप्रतियोग्यस्मारकतया निर्व्यापारत्वेन लाक्ष-

काङ्क्षिते इतरपदैः स्वार्थान्वयबोधोऽपि सम्भवति इति ततोमुख्यार्थस्मारिते तीरे घोषादिपदैः स्वार्थान्वयबुद्धिरस्य उत्पद्यते। एवञ्च तीरान्वितवाक्यार्थबुद्धिः तीरप्रतिबद्धवृद्धव्यवहारादिदर्शनं विनैव जायते पदानां स्मृतयोग्यान्वितस्वार्थप्रतिपादनस्य प्रागेव व्युत्पन्नत्वात्। एवञ्च तीरस्मृत्यनुभवयोः शक्यसम्बन्धज्ञाना-

---

तया पदार्थान्तरमीश्वराभिसन्धिर्वा शक्तिपदार्थः कल्पनीयः सैव च तद्भावभावित्वमात्रेण न शक्तिकल्पना तावन्मात्रेण पौर्व्वापौर्य्यनियममात्रसिद्धेः स च कारण-तत्कारणसाधारण इत्यन्यथासिद्धिशङ्कानवकाशे अनन्यथासिद्धतया प्रथमकल्पो व्यवतिष्ठते, प्रकृते लब्धात्मतवत्स्मृतस्य पदान्तरैरेवानुभवसम्भावनया अन्यथासिद्धतया स्मारकतामात्रेण हेतु-हेतुतया शक्तिकल्पनानन्तर्य्यनियमेन प्रकृतेऽन्यथासिद्धिग्रहध्रौव्यादित्यखण्डतात्पर्य्यार्थः एवमग्रेऽप्ययमेव भावः। 'शक्तीति, शक्यान्वयानुपपत्तिज्ञानस्य लक्ष्यानुभवे कारणत्वादिति

---

णिकपदं नानुभवकरणमिति सूचितं। 'तत इति पूर्व्वोक्तविमर्शानन्तरमित्यर्थः। ननु विमर्शस्य कथमपेक्षा सम्बन्धिदर्शनजन्यायाः स्मृतेस्तदनपेक्षत्वात् स्मृतपदार्थान्वयानुभवस्यापि यो[illegible]ज्ञानस कारणोपपत्तौ तदनपेक्षणात्। न चार्थजन्यस्मृतेरन्वयबोधानुकूलत्वकल्पनायां तदपेक्षा, तद्बोधस्यान्वयबोधानङ्गत्वात्। न च योग्यतादिप्रतिसन्धान एव तदपेक्षा, तस्य प्रागेव जातत्वात्, तदिदमाह, 'योग्याकाङ्क्षित इति। न च तात्पर्य्यज्ञाने तदुपयोगः, तदनङ्गत्वाभ्युपगमस्याग्रे स्फुटत्वात्, तथाच स्मृत्यादिप्रतिसन्धानात्मकविमर्शस्य कथमुपयोग इति चिन्त्यं। 'तीरप्रतिबद्धेति, शक्तिपक्षे

देवोपपत्तेः न शक्तिः स्वार्थसम्बन्ध एव च लक्षणा पश्चात्तु परम्परया गङ्गासम्बन्धितीरप्रतिपत्तये अनेनानेन गङ्गापदं प्रयुक्तमिति तात्पर्य्यधीर्जायते । गङ्गास्मारिततीरान्वयबोधश्च न तात्पर्य्यज्ञानमपेक्षते न्यायत एव तीरस्य प्रथमं वाक्यार्थान्वयबोधोत्पत्तेः । अथवा निश्चिते स्वार्थसम्बन्धिनोऽन्वये तद्विशेषज्ञानार्थं तदपेक्षास्तु, न च तदर्थमपि, योग्यतादेरेव तद्विशेषलाभात् । अन्यथानुपस्थिते विशेषे तात्पर्य्यस्यावगन्तुमशक्यत्वात् । शक्तिस्मारितशक्यसम्बन्धो वा तज्जन्या शक्यसम्बन्धस्मृतिर्वा लक्षणा उभयथापि लक्षकपदस्य लक्ष्ये तात्पर्य्यज्ञानं लक्षणायामनुपयुक्तमेव । उक्तन्यायेन शब्दात् परम्परया अशक्यस्मृतेस्तात्पर्य्यग्रहात्

---

भावः । 'पश्चात्त्वित्यादि, तात्पर्य्यग्रहं विना लक्षणाकल्पणमन्वयानुभवश्च न भवतीति न न्यायतोयोग्यतावशतश्च भवेत् क्वचित्तात्पर्य्यतोविनिगमनापि तन्नियामकं कल्पयति तत्रापि वा तद्ग्राहक-

---

तद्ग्रहार्थं तदपेक्षायां गौरवमिति भावः । 'स्वार्थसम्बन्ध एवेति, व्यञ्जनादिकमपि लक्षणैवेति भावः । 'न्यायत एवेति तात्पर्य्यग्राहकप्रकरणादित एवेत्यर्थः, 'अथ वेति शक्यसम्बन्धिनो योग्यस्यान्वय इति सामान्यतो निश्चये तद्विशेषतीरादिज्ञानार्थं तदपेक्षेत्यर्थः । 'अस्त्वित्यरुचौ तामेवोद्भावयति, 'न चेति, प्रकरणादित एव तल्लाभादिति भावः । 'अन्यथेति, तथाचा-

पूर्व्वमेव क्लृप्तकारणादुपपत्तेः। शक्त्योपस्थापितार्थे शाब्दतात्पर्य्यात् लक्षणेति तात्पर्य्याद्धि वृत्तिरिति च लक्षणास्थले लक्ष्ये वस्तुतस्तात्पर्य्यमस्तीत्येवम्परं। नन्वेवं तात्पर्य्यानपेक्षणे यत्र तीरं नीरञ्चान्वययोग्यं तत्र कदाचित्तीरान्वयोऽपि बोध्येतेति चेत्, न, शक्त्युपस्थापितेन योग्याकाङ्क्षितेनैवान्विताभिधानमिति व्युत्पत्तेः शाब्दत्वन्तु तीरस्याध्याहृतस्येव इतरपदैस्तीरान्वितस्वार्थान्वयाभिधानात्। तदेवं वृद्धव्यवहारादिदर्शनं विनैव तीरादौ लक्षणेति स्थितं। अथ वा गङ्गायां घोषः प्रतिवसति तमानयेति वाक्यश्रवणानन्तरं प्रयोज्यस्य तीरोषितघोषानयने प्रवृत्तिमुपलभ्य किं तीरेऽपि गङ्गापदस्य शक्तिरुत स्वार्थेन सम्बन्धात्

---

प्रकारणादिनैव तत्सम्भवादिति भावः। ननु स्वार्थानुभवे पदानां हेतुत्वान्नाचणिकस्याशक्तत्वे तदनुभावकशब्दाभावात् कथं शाब्दत्वमित्यत आह, 'शाब्दत्वमिति, इतरान्वितस्वार्थानुभावकत्वस्य पदे क्लृप्तत्वात् तीरान्वितानुभवस्येतरपदादेव भावादिति भावः। 'अध्या-

---

न्योन्याश्रयः स्यादिति भावः। 'शक्त्येति, तदन्वयस्यौत्सर्गिकत्वादिति भावः। नन्वेवमुभयोरन्वययोग्यत्वे यत्र तीर एव तात्पर्य्यज्ञानं तत्र न तीरान्वयबोधः स्यात्, किञ्च प्रकरणादीनामननुगततया तैस्तदन्यथासिद्ध्यभावात् तात्पर्य्यज्ञानं हेतुरिति प्रागेव निर्णीतमित्यरुचेस्तद्धेतुत्वमभ्युपगम्याह, 'अथ वेति,

स्मारिततीरे तात्पर्य्यमात्रं, तीरान्विताभिधानन्तु पदान्तरैः, एवमप्ययोग्यार्थपरत्वाभावेन प्रामाण्यादाप्तोक्तत्वोपपत्तेरिति विचिकित्सन् बालः तीरादौ न शक्तिः तथासत्येकार्थसम्बन्धिषु बहुष्वेकपदस्य बह्वी शक्तिरेवं पदान्तरेष्वपि तेषु तेषु च शक्तिग्रहार्थं वृद्धव्यवहारापेक्षा च, तथाच गौरवमतः स्वार्थसम्बन्धिनि तीरादौ तात्पर्य्यमात्रं लाघवादिति तत्र तत्र लक्षणामेव कल्पयति। यस्य चैवं विमर्शः प्रथमं लाक्षणिकपदश्रवणेन जायते तस्य तत्र शक्तिबुद्धावपि यदा लक्षणाख्यव्यावृत्त्यन्तरज्ञानं पूर्व्वोक्तन्यायेन जायते तदा प्रथमावगतशक्तिज्ञानं मम भ्रम इति कल्पयति लाघवात्।

ष्टतस्यैवेति, यद्यर्थाध्याहारस्तदा स्फुटमेव यदि च पदाध्याहारस्तदाप्यन्वयप्रतियोग्युपस्थापकत्वेनाक्षेपात्तत्त्वञ्च शक्त-लाक्षणिकसाधारणमेवेति शक्तत्वेनाज्ञानात् तस्याननुभावकत्वादुभयथापि पदान्तरादेवानुभव इति भावः। 'यस्य चैवमित्याद्युपलक्षणं, यदा प्रथमं लक्ष्य एव शक्तिं शक्य एव लक्षणां कल्पयति तदा प्रथमकल्पनं भ्रमइत्यपि कल्पयतीति द्रष्टव्यं। एवमुभयशक्तत्वेनादिपदेऽपि, यद्येकत्र लक्षणां कल्पयति तदा तत्रापि विशेषदर्शने प्रथमकल्पनां त्यजती-

'लक्षणामेवेति, लक्षणात एव प्रयोज्यस्य तीरधीर्न तु तत्र शक्तिरिति कल्पयतीत्यर्थः। 'भ्रम इति, अपभ्रंशवत् सम्बन्धत्वांशे भ्रमो बोध्यः, 'एवञ्च

अन्यत्र तु यत् प्रथमावगतस्य सत्यत्वकल्पनं तदुपपादककल्पनञ्च तल्लाघवादेव अत्र तु न तथा। अन्यथा सम्बन्धिसहस्रेष्वपि शक्तिकल्पनाप्रसङ्गात्। एवञ्च लक्षणास्थले यस्य प्रयोज्यव्यवहारादाद्या व्युत्पत्तिः तीरादौ स यदा तीर-नीरयोरन्वयबोधयोग्यप्रयोगे तीरे व्यवहारं पश्यति तदा तत्रैव शक्तिः तीरधीस्तु प्रयोज्यस्य लक्षणावशात् मम तदनाकलनात्तत्र शक्तिज्ञानं भ्रम-इति कल्पयति। यदा तूभयानुगतमेकमेवावच्छेदकमस्ति उभयत्र प्रयोगश्च तत्रोभयत्र शक्तिरेव न लक्षणा तुल्यवद्व्युत्पत्तेरेकत्र मुख्यत्वोपमर्दे हेत्वभावात्।

---

त्यपि द्रष्टव्यं। 'अन्यत्र' अन्यथाख्यात्यादौ, 'तदुपपादकेति दोषकारणत्वमित्यर्थः। 'तत्रोभयत्रेति, यद्यप्येतावतैव सम्यक् तथापि यत्रोभयत्र

---

लक्षणास्थल इति, गवादिपदवत् विचिकित्सां विनैवेति शेषः, तेन न पौनरुक्त्यं। 'स यदेति, ननु नीरतात्पर्य्यादेव तीरव्यवहारोऽन्यथासिद्धो न शक्तिकल्पकः अन्यथा तीरव्युत्पन्नस्य तीर-नीरयोरन्वययोग्यप्रयोगे तात्पर्य्यवशेन नीरव्यवहारात् तत्रैव शक्तिकल्पने नीरशक्तिधीरेव भ्रम इति वैपरीत्यकल्पनापत्तेः। यदि च लक्षणयापि तात्पर्य्यनिर्व्वाहात् न तीरे शक्तिः तदा नीरेऽपि तुल्यं तस्मात् सर्व्वस्य न प्रथमं नीरेऽपि व्युत्पत्तिः केषाञ्चित् तीरेऽपीति विनिगमकाभावादन्यतरशक्तिग्रहभ्रमत्वकल्पकाभावादद्धादिपदवन्नानार्थतैव युक्तेति चेत्, न, तदनुशयेनैव 'किञ्चेत्यग्रिमग्रन्थावतारात्। नन्वेवं नील-पीतघटयोरपि द्वयोर्न शक्तिः स्यादित्यत आह, 'यदा त्विति,

यत्र तु न तथा तत्रानेकार्थत्वमेव। अक्षादिपदे तावद्न्यतरत्वं तत्राप्यनुगतमस्तीति चेत्, न, तावदन्योन्याभाववदन्यत्वं हि तत्। न च तावदन्योन्याभाववदन्यत्वेन रूपेण तावतामक्षपदादवगतिः, किन्तु पाशकत्वादिनैव। किञ्च यदि तीरेऽपि शक्तिस्तदा न तीर-

---

तुल्यः प्रयोग इत्येव व्यापकं, तद्विभागस्तु यद्येकमवच्छेदकं तदा न नानार्थता, यदि तु तन्नाना तदा नानार्थतेति भावः। 'यत्र तु न तथेति, तुल्यवत्प्रयोगे नैकमवच्छेदकमिति भावः। 'न च तावदिति, वस्तुतस्तावदन्यान्यत्वं न सर्व्वनानात्वव्यापकं अर्थशब्दस्य धन-प्रमेयवाचकस्य तावदन्याप्रसिद्ध्या तदभावेन नानार्थत्वस्यैर्य्यादिति द्रष्टव्यं। एकत्र शक्तिनिश्चये सत्यपरत्र प्रयोगाप्राचुर्य्यं लक्षणावीजमुक्तलाघवस्यापि तदपेक्षणादन्यथा वेलापदादावुभयत्र शक्तावन्यत्र लक्षणायां विनिगमकं न स्यादित्यवधेयं। एतदवष्टम्भेनैव 'किञ्चेत्यादिग्रन्थः, अन्यथा मत्सरशब्दादौ धर्म्मिणि शक्तिर्न स्यात् यदि प्रयोगप्राचुर्य्यं

---

'यत्र तु न तथेति तुल्यवत्प्रयोगे नैकमवच्छेदकमित्यर्थः, विनिगमकाभावादिति भावः। 'किन्त्विति. ननु बुद्धिस्थप्रकारकज्ञानजनकत्ववत् तावदन्यान्यत्वप्रकारकज्ञानजनकत्वग्रहात् तत्पदे बुद्धिस्थत्ववदन्यान्यत्वस्य स्वरूपसत एव शक्यतावच्छेदकतया कथमक्षादिपदं नानार्थं। न च तावदन्यान्यत्वं न सर्व्वनानार्थव्यापकं अर्थशब्दस्य धन-प्रमेयवाचकस्य तावदन्याप्रसिद्ध्या तदभावेन नानार्थत्वस्यैर्य्यादिति वाच्यं। तस्य प्रकारानुगमकतया धनत्व-प्रमेयत्वप्रकारान्यप्रसिद्ध्या तत्सम्भवात् अक्षादिपदे तथापि नानार्थत्वानुपपत्तेश्च।

मात्रे किन्तु गङ्गातीरे तथाच विशिष्टशक्तौ विशेषणे शक्तिरावश्यकी नागृहीतविशेषणान्यायात्। अथ लक्षणापक्षे यथा प्रवाहेणोपलक्षणेन व्यावृत्ततीरविशेषस्या-

---

न सहकारि भवेदिति। 'आवश्यकीति, तथाच तच्छक्त्यैवोक्तक्रमेण तीरोपस्थितिर्लाघवादिति भावः। ननु शब्दाश्रयत्वस्यापि विशेषणत्वं सम्भवत्येव अर्थगौरवात्तदसम्भवस्य प्रकृतेऽपि तुल्यत्वादित्युपलक्षणत्वं

---

एकार्थत्वसम्भवे नानार्थत्वस्यान्याय्यत्वादिति चिन्त्यं। 'आवश्यकीति, तथाच तच्छक्त्यैवोक्तक्रमेण तीरधीसम्भवे तत्रापि न शक्तिरिति भावः। अतएव वेलादिपदवदुभयत्र शक्तिरस्त्वित्यपास्तं। तस्य स्वातन्त्र्येण तीर-नीरशक्ततया विशिष्टशक्त्यभावेन तन्न्यायानवतारात्। नन्वेवं मत्सरशब्दादावपि धर्म्मिणि शक्तिर्न स्यात्, अतएव गुणशक्तनीलादिपदस्य न गुणिशक्तत्वं। यदि चोक्तन्यायात् लाघवेन विशेषणमात्रे शक्तिस्तदा मत्सरशब्देऽपि तुल्यं। एतेन प्रयोगप्राचुर्य्यं शक्तिनियामकं मत्सरशब्दस्य च धर्म्मिणि तुल्यवत्प्रयोगात् तत्रापि शक्तिरित्यपास्तं। नीलादिपदस्य गुणिनि प्रयोगप्राचुर्य्येऽप्यशक्तत्वात् समासस्य तथात्वेऽप्यशक्तत्वाच्च। लक्षणयैवोपपत्तौ न शक्तिरिति तुल्यमिति चिन्त्यं। ननु तीरे शक्त्यन्तरं तत्र विशिष्टशक्यत्वे गौरवादुपलक्षणत्वं स्यादित्यत आह, 'किञ्चेति, शक्यतावच्छेदकत्वे गोत्वादिवच्छक्तौ विशेषणत्वमेव स्यादन्यथा शब्दात् तदुपस्थितिर्न स्यात् तथाच पूर्व्वोक्तगौरवाद्विशेषणमात्रे शक्तिरेवास्त्वित्यर्थः, शक्युपाधावपि गौरवेण शक्तेरस्वीकारे धेनुपदात् गोत्वप्रकारिका धीर्न स्यात् अन्यथा धानमपि शक्यं न स्यात् धानोपस्थित्यर्थं निमित्तान्तरकल्पनागौरवञ्च गोत्वेऽपि तुल्यमिति भावः। कथं न कल्पयेत् यदि नोक्तं गौरवं बाधकं प्रतिसन्दध्यादिति शेषः। प्रथमं तीरव्युत्पन्नस्य व्यवहारवैपरीत्यमेवेत्यपि बोध्यं। 'किन्त्विति, एतच्च यत्र तीरत्वेन पूर्व्वं तज्ज्ञानं तदभिप्रेत्य,

न्वयोन तु तीरान्तरस्य तथा प्रवाहोपलक्षिते तीरे शक्तिरस्तु न तु तीरे प्रवाहेऽपीति चेत्, न, गङ्गापद-शक्तौ प्रवाहस्य शक्यत्वेन विशेषणत्वे सम्भवति नोप-लक्षणत्वं विशेषणत्वासम्भवे सत्येव उपलक्षणत्वादतः प्रवाह एव शक्तिः। किञ्च तीरशक्तौ उपलक्षणत्वं

विकल्पयति, 'किञ्चेति, व्यक्तयः शक्याः व्यवहारात्तासामानन्त्येन व्यभिचारेण च पदशक्तिग्रहासम्भवादुपलक्षणस्य परिचायकत्वमस्य व्याव-र्त्तनार्थमनुगमार्थञ्च अपेक्ष्यते यथा गोपदे गोत्वस्येति वा। अथ वा शक्तावुपलक्षणत्वमविषयं धेनुपदे परमते यथा गोत्वस्याद्यशक्य-त्वमेवान्यथा शब्दात्तदनुपस्थित्यापत्तेः अन्यस्य गौरवेणास्वीकारः, अन्यथा धानमपि न शक्यं स्याद्धानोपस्थित्यर्थं निमित्तान्तरकल्पना-गौरवञ्च गोत्वेऽपि तुल्यमित्युक्तमिति भावः। कथं न कल्पयेत् यद्यु-

यदा तु गङ्गासम्बन्धितीरत्वेन ज्ञानं तदा तेनापि प्रकारेण तज्ज्ञानसम्भवात् सम्बन्धिदर्शनं हि येन प्रकारेण सम्बन्धी ज्ञातस्तत्प्रकारकसंस्कारमुद्बोध्य तत्प्रकारिकामेव स्मृतिं जनयति। न च गङ्गासम्बन्धित्वावच्छेदेनापि कथं गङ्गासम्बन्धानुभवः स्यादिति वाच्यं। घटेन घटवद्भूतलमितिवद्गङ्गास-म्बन्धीति बुद्धिसम्भवात्। न च वृत्तिद्वयविरोधः, गङ्गाया अप्युक्तक्रमेण लक्ष-णयैवोपस्थितेः, शक्यसम्बन्धो हि तीरे वर्त्तमानस्तत् स्मारयन् तीरत्ववदुक्त-क्रमेण गङ्गासम्बन्धित्वमुपस्थापयतीति किमनुपपन्नं। न हि तीरत्वोपस्थित-येऽप्युक्तकल्पादन्यः कल्पोऽस्ति, शक्यतावच्छेदको शक्तिवत् लक्ष्यतावच्छेदकेऽपि लक्षणाया अभावादिति वदन्ति। तत्र ब्रूमः एवं हि गोत्वादावपि शक्तिर्न कल्प्येत उक्तक्रमेणैव तत्प्रकारकस्मृतिसम्भवात्। यदि च वृत्त्युपस्थापितस्यै-

प्रवाहस्य न शक्यतावच्छेदकत्वं, नापि धेनुपदे गोत्वस्येव शक्त्युपाधित्वं गौरवात् ।

अन्ये तु तीरे नीरे च व्यवहार एव विलक्षणः नीरे त्वनुपपत्तिं विनैव व्यवहारो निरुपाधिकत्वाच्छक्त्युपपाद्यः, तीरे त्वनुपपत्त्या ह्यौपाधिक एव व्यवहारः, स च शक्त्यभावोपपाद्य इति, तन्न, लक्षणायामव्युत्पन्नो बालः प्रयोज्यस्य तीरान्वितानयनादिरूपं व्यवहारं पश्यन्नन्यत्र दृष्टां शक्तिं कथं न कल्पयेत् ।

---

कारूपं बाधकं न प्रतिसन्दध्यादिति शेषः । 'तीरान्तरेति, न च गङ्गातीरान्वयापत्तिरिति तुल्योऽनुयोगः, तत्रापि योग्यतासत्त्वे गङ्गातीरानुभववत्तीरान्तरानुभवाभावेन तस्याप्यापाद्यत्वादिति भावः।

---

वार्थस्यान्वय इति तत्र शक्तिस्तदा तीरत्वेऽपि तुल्यं तस्मात् तीरत्वेऽपि परम्परासम्बन्धात्मिका लक्षणैव । न च गङ्गासम्बन्धित्वेऽपि तथैवास्त्विति वाच्यं । तत्र तत्सम्बन्धाभावात् तदिदं वक्ष्यति तत्सम्बन्धे तत्सम्बन्धाभावादिति । न च संयोगे समवायवत् तत्सम्बन्धेऽपि तत्सम्बन्धान्तरं अन्यथा गङ्गायाः सम्बन्ध इत्यत्र षष्ठ्यर्थानुपपत्तिरिति वाच्यं । गङ्गांशे तथापि तदनुपपत्तेरिति । इदन्तु स्यात् नीलोघट इत्यादाविव विशिष्ट एव लक्षणास्तु अन्यथा तत्रापि वृत्तिद्वयविरोधस्य वज्रलेपत्वापत्तेः । केवलादिविशिष्टस्यान्यत्वात् प्रजयतीत्यत्राग्रे तस्य स्फुटत्वात्, एवं यथा व्यक्तौ शक्तिस्तथोक्तं । यद्वा तत्सम्बन्धे तत्सम्बन्धान्तरसम्भवात् लक्षणैव, यद्धि येन विनेत्यादिन्यायेन गङ्गांशलाभोऽप्यस्तु । अतएव राजपुरुष इत्यत्रापि राजसम्बन्धित्वेनैव पुरुषानुभवः । तस्मात् यद्रूपेण पूर्वं तीरभानं तेनैवाग्रे तदनुभव इति सत्यं किन्तु तल्लाभउक्तप्रकारेण न किन्त लक्षणयैवेति ।

अथ लक्षणया तीरत्वेनोपस्थितौ तीरान्तरान्वयोऽपि स्यात् गङ्गातीरत्वेनैवोपस्थितौ युगपद्वृत्तिद्वयविरोधः गङ्गोपस्थितेः शक्तिसाध्यत्वादिति चेत्, लक्षणाधीनतीरस्मृतेर्न गङ्गासम्बन्धित्वेन तीरं विषयः, किन्तु यद्वस्तुगत्या गङ्गासम्बन्धि तदेव तीरत्वेन परिचीयते सम्बन्धिदर्शनजस्मृतेस्तत्सम्बन्ध्यविषयत्वात् यथा

---

'न तीरमिति, नियमत इति शेषः। 'किन्त्विति, सम्बन्धिदर्शनं संस्कारोद्बोधकं येन रूपेण सम्बन्धी प्राक् ज्ञातस्तत्प्रकारकसंस्कारमुद्बोध्य तत्प्रकारिकां तद्गोचरामेव स्मृतिं जनयति न त्वन्यप्रकारिकां अन्यविषयां वा तथाच तीरत्वेन सम्बन्धिज्ञाने तत्प्रकारिकैव तन्मात्रगोचरैव स्मृतिः, यदा तु गङ्गासम्बन्धितीरत्वावच्छेदेन तीरत्वानुभवस्तदा तथैव स्मृतिर्न प्रकारान्तरेण। न च गङ्गासम्बन्धित्वावच्छेदेन कथं तत्सम्बन्धित्वानुभव इति वाच्यं। घटेन घटवद्भूतलमितिवद्गङ्गासम्बन्धि तीरं गङ्गासम्बन्धीति बुद्धिसम्भवात्। न च वृत्तिद्वयविरोधः, गङ्गाया अप्युक्तक्रमेण लक्षणयैव उपस्थितेः शक्यसम्बन्धो हि तीरवर्त्तमानस्तत्स्मारकस्तीरत्ववदुक्तक्रमेण गङ्गासम्बन्धित्वमुपस्थापयतीति किमनुपपन्नं, न हि तीरत्वोपस्थितावप्युक्तप्रकारादन्यप्रकारोऽस्ति शक्यतावच्छेदके शक्तिवृत्त्यतावच्छेदकेऽपि लक्षणाया अभावादिति सर्व्वं सुस्थमिति। 'तत्सम्बन्ध्यविषय-

---

केचित्तु मणिकृन्मते वृत्तिद्वयविरोधस्यादोषत्वेन उपस्थिततीर-नीरयोरन्वयस्य गङ्गातीरत्वेनानुभव इत्याहुः।

'तत्सम्बन्ध्यविषयत्वात्' सम्बन्धिविषयत्वानियतत्वादित्यर्थः। 'न पद-वृत्ति-

पद-हस्तिदर्शनात् पदार्थ-हस्तिपकस्मृतेर्न पद-हस्ति-विषयत्वं। अतएव तीरान्वितवाक्यार्थबोधेऽपि न गङ्गासम्बन्धित्वेन तीरं विषयः। अपि च गङ्गायामित्यादिपदानां आप्तोक्तत्वेन प्रामाण्यात् संभूय पदप्रतिपाद्यान्वयबोधकत्वमेकवाक्यत्वमवगतं मुख्यार्थश्चायोग्य इति योग्य आकाङ्क्षितश्चामुख्यार्थोऽपि पदप्रतिपाद्यः कल्प्यते, अन्यथैकवाक्यत्वभङ्गप्रसङ्गात्। न चापदा-

---

त्वात्' सम्बन्धिविषयत्वानियतत्वादित्यर्थः, 'न पद-हस्तिविषयत्वं' नियतमिति शेषः। 'तीरं विषयः', नियमेनेति शेषः। नन्वध्याहृत-तीरपदाभ्यामेव शक्त्यैव प्रामाण्ये किं वृत्त्यन्तरेणेत्युक्तलाघवे व्युत्पत्त्य-नुपपत्तिमपि सहायमाह, 'अपि चेति। वस्तुतस्तदेकवाक्यत्वग्रहेऽपि शब्दार्थोभयकल्पनापेक्षाया अर्थकल्पनापक्षे लाघवमित्येव वीजमध्या-हारकल्पने तु शब्दकल्पना गौरवमिति वृत्त्यन्तरमेव कल्प्यमिति तत्त्वं।

---

विषयत्वं', नियतमिति शेषः। 'तीरं विषयः', नियमेनेति शेषः। ननु नीलो घट-इत्यादावपूर्व्वनीलधर्म्मानुभवो न स्यात् तत्र नीलसम्बन्ध्यग्रहेण तदनुप-स्थितेरिति चेत्, नीलसम्बन्धित्वेन सामान्यतस्तत्सम्बन्धिमात्रोपस्थित-योग्यताबलेन विशेषलाभात्। ननु गङ्गायां जलं तीरे घोष इत्यध्याहृतपदा-भ्यामेवोक्तवाक्यप्रामाण्योपपत्तौ किं लक्षणाकल्पनेनेत्यत्र चेत्युक्तन्यायानुग्राहकं सिंहावलोकितन्यायेनाह, 'अपि चेति, 'अन्यथेति अध्याहारादिकल्पन-इत्यर्थः। न चेष्टापत्तिः, तस्यौत्सर्गिकत्वात्, अध्याहारे शब्दार्थोभयकल्पन-मिति गौरवमपि बोध्यं। 'गङ्गापदेत्यापाततः शब्दानुपस्थाप्यस्य शाब्द-

र्थेनैव योग्यतादिमतान्वयबोधकत्वमस्त्विति वाच्यं। गङ्गापदवैयर्थ्यप्रसङ्गात्। प्रतिपाद्यता च लक्षणीयस्य लक्षणैव स्वार्थसम्बन्धेन न तु शक्त्या गौरवात्तदन्वयबोधश्चेतरपदेनैव। शक्त्योपस्थितस्य पदेनान्वयो बोध्यतेऽन्यत्र तथा दर्शनात् इति चेत्, न, लाघवेन पदोपस्थापितत्वस्यैव तन्त्रत्वात्। यद्यपि लाक्षणिकस्य पदान्तरेण सम्भूय न प्रतिपादकत्वं अननुभावकत्वात् लक्ष्यस्मृतौ च न सम्भूयकारित्वं अतएव नैकवाक्यत्वमपि, तथापि घोषादिपदानां समभिव्याहृतपदप्रतिपाद्यान्वयबोधकत्वमवगतं तच्च न लक्षणां विनेति तां कल्पयति।

यत्तु सामान्यतो गङ्गादिपदार्थान्वयो ज्ञात इति

'गङ्गापदेत्यापाततः, शब्दानुपस्थाप्यस्य शाब्दधीवहिर्भाव एवाकाङ्क्षाविरहादिति परमार्थः। 'लाघवेनेति, पदत्वावच्छिन्नोपस्थापितत्वापेक्षया शक्तिपुरस्कारेण पदत्वावच्छिन्नोपस्थापितत्वस्य गुरुत्वादिति भावः। वस्तुतः शक्त्या पदोपस्थापितत्वं तन्त्वं लाघवात् न तु स्वशक्त्या पदोपस्थापितत्वं गौरवादस्ति च प्रवाहशक्त्या तीरोपस्थापकत्वं गङ्गापदस्य अतएवाकाशपदोपस्थाप्यशब्दाश्रयत्वस्यान्वयधीविषयत्व-

बोधवहिर्भावापत्तेरित्यपि बोध्यं। 'शक्त्येति स्वशक्त्येत्यर्थः, परशक्त्या गङ्गापदस्यापि तीरोपस्थापकत्वात् स्वांशप्रवेशे गौरवमित्याद्यलाघवेनेति। 'ल

तद्रक्षार्थं परम्परया गङ्गादिपदार्थस्मारिते तीरादौ लक्षणा कल्प्यत इति, तन्न, प्रथमं गङ्गापदार्थान्वयबोधकाभावादन्वयबोधेऽपि लक्षणया गङ्गापरिचिततीरस्य घोषान्वयबोधेऽपि गङ्गाया अन्वयबोधाविषयत्वेन तदन्वयस्यारक्षणात् ।

यत्तु गङ्गायां घोष इत्यादेरेकवाक्यत्वं पदस्मारितार्थान्वयबोधकत्वरूपमवगतं तच्च यद्यपि गङ्गापदार्थस्य साक्षाद्घोषाधारत्वायोग्यत्वात् न सम्भवति, तथापि गङ्गासम्बन्धितीरे योग्ये घोषान्वयात् तीरावच्छेदकतया गङ्गापदार्थस्य घोषान्वयादेकवाक्यत्वं सम्भवति । अत एवैकवाक्यत्वस्य सामान्यतोऽवगतपदार्थान्वयस्य च रक्षार्थं गङ्गापदस्मारितस्वार्थस्मारिते तीरे वृत्त्यन्तरं लक्षणा कल्प्यते तयोरन्यथा भङ्ग-

---

मिति । 'लक्ष्येति प्रकृताभिप्रायं, सामान्यत एव स्मृतिं प्रति पदानां सम्भूयाजनकत्वादिति । 'गङ्गादिपदार्थेति प्रवाहेत्यर्थः, एवमग्रेऽपि । ननु गङ्गातीरत्वेनान्वयबोधनियम एव तदुभयरक्षा । न च सम्बन्धितावच्छेदकतया गङ्गातीरत्वभाने तद्धीनियमः, तीरत्वमात्रेणापि तत्सम्बन्धिग्रहादतः प्रकृत्या प्रवाहो लक्षणया तीरत्व-

---

क्ष्येति प्रकृताभिप्रायकं, स्मृतिमात्र एव सम्भूयाजनकत्वात् । 'गङ्गादिपदार्थेति प्रवाहेत्यर्थः, 'प्रथममिति, अयोग्यत्वादिति भावः । 'गङ्गाया इति तीरत्वेन

प्रसङ्गादिति, तन्न, तीरार्थस्य घोषान्वयबोधेऽपि गङ्गापदार्थस्य तदन्वयबोधाविषयत्वात्।

अथ गङ्गातीरत्वेनोपस्थिते घोषान्वयबोधात् भवति गङ्गायास्तीरावच्छेदकतया अन्वयबोधविषयत्वमिति चेत्, न, गङ्गापदाद्गङ्गा-तीरयोर्युगपदुपस्थितौ वृत्तिद्वयविरोधात्। न ह्युभयोः शक्त्या लक्षणया वोपस्थितिः सम्भवति। अथ लक्षणास्वाभाव्यात् लक्षकपदेन स्वार्थसम्बन्धित्वेनैव लक्षणीयतीरादेरुपस्थितिः, अन्यथा तीरमात्रान्वयप्रसङ्गात्। तथाच लक्षणयैव गङ्गोपस्थितिरिति चेत्, न, गङ्गासम्बन्धात् तीरस्य स्मृतिः सम्भवति न तु गङ्गासम्बन्धस्य तत्सम्बन्धे तत्सम्बन्धाभा-

मित्युभयवृत्तियौगपद्यनियमात्तथा धीनियमो वाच्यः। न चैवं सम्भवतीत्याह, 'गङ्गेति, 'वृत्तिद्वयेति वस्तुगतिमनुरुध्य, वस्तुतो वृत्तिद्वयप्रवृत्तावपि स्वतन्त्रपदार्थद्वयोपस्थित्या घटः कर्म्मत्वमित्यत्र घटकर्म्मत्ववद्गङ्गासम्बन्धितीराप्रवृत्तेरिति दूषणं द्रष्टव्यं। ननु शब्दस्य स्वभावाधीनं न बोधकत्वमपि तु बोधकसम्बन्धबोधाधीनं तथाच गङ्गासम्बन्धित्वं तीरत्ववत्सम्बन्धबोधप्रकारत्वेन भासत इति यद्यभिमतं तदा नियमो न स्यादित्युक्तं। तथाच लक्षणयैव तीरवदुपतिष्ठत इति तथा सत्याह, 'न तु गङ्गासम्बन्धस्येति, 'सम्बन्धि-

पूर्व्वं तज्ज्ञानपक्षे इदं। तदभिप्रायेणैवाह, 'तीरस्येति, 'तत्सम्बन्ध। इति, आत्माश्रयादिति भावः। एतच्च लक्ष्यसम्बन्धस्यैव लक्षणात्वे, अन्यथा सम्बन्ध-

वात्। अतएव एकसम्बन्धिज्ञानात् अपरसम्बन्धिस्मृतेरपरसम्बन्धिसम्बन्धाविषयत्वनियमः यथा पद-हस्तिज्ञानात् पदार्थ-हस्तिपकयोः स्मृतौ न पद-हस्तिनोर्विषयत्वं पदे पदस्य हस्तिनि हस्तिनः सम्बन्धाभावात्। सामान्यतो गङ्गापदार्थान्वयो नावगम्यते बोधकाभावात, लक्षणा च शब्दात् परम्परया अशक्यासदृशस्यान्वयपरोपस्थितिरूपा शक्यसम्बन्धादशक्या-

सम्बन्धाविषयत्वनियमः' सम्बन्धिसम्बन्धविषयत्वानियमः, नञ्व्यत्यासात्, 'न पद-हस्तिनोर्विषयत्वं', नियमेनेति शेषः। नन्वेवं लक्षणाकल्प्येताध्याहारतोऽपि प्रामाण्यसम्भवादित्यत आह, 'सामान्यत इति, उक्तरूपैकवाक्यत्वग्रहो न कल्पनामूलं किन्तु घोषादिपदानां समभिव्याहृतपदस्मारितार्थविशिष्टस्वार्थानुभावकत्वलक्षणैकवाक्यत्वग्रह-एवेति भावः। 'परम्परयेति शक्यसम्बन्धेनेत्यर्थः, अत्र गौणोप-

सम्बन्धस्य भिन्नत्वेन तदभावात् अतएव वक्ष्यति, 'राजनिरूपितपुरुषसम्बन्धस्येत्यादि। 'सामान्यतोऽवगतेत्याद्युक्तं दूषयति, 'सामान्यत इति। प्राचीनमतमाह, 'लक्षणा चेति, शब्दाजन्यापि तादृशतीराद्युपस्थितिर्लक्षणा स्यादत-उक्तं, 'शब्दादिति। घटपदशक्तिभ्रमात् पटोपस्थितावतिव्याप्तेराह, 'परम्परयेति। अन्वयपरत्वं अन्वयानुकूलत्वं कारणकारणसाधारणं तेन शक्तिस्मृतिरपि तथाभूता लक्षणा स्यादत उक्तं, तदित्यन्ये। शक्तिस्मृतिजन्यत्वमते शक्यस्मृतावतिप्रसक्तेराह, 'अशक्येति, गौणोपस्थितिवारणाय 'असदृशपदं सादृश्यान्यसम्बन्धेन तदुपस्थितिरूपेत्यर्थः। एतेन प्रमेयत्वादिना सर्व्वत्र सादृश्यादसदृशाप्रसिद्धिरित्यपास्तं। नन्वन्वयपरत्वमन्वयानुकूलत्वं

सदृशान्वयपरोपस्थितिरूपा वा अशक्यासदृशान्वयप्रतियोग्युपस्थितिहेतुः स्वशक्यसम्बन्धो लक्षणेति परमार्थः, उपस्थितिहेतुर्हि वृत्तिः शक्तिवत्। अतएव क्लृप्तेन स्वार्थसम्बन्धेन लक्ष्योपस्थितिसम्भवात् न तदर्थं शक्तिः। न चैवं राजपुरुषादौ षष्ठ्यर्थलक्षणाद्यव्याप्तिः

---

स्थितिवारणाय असदृशस्येति, अत्र सादृश्यस्यैव सम्बन्धत्वात्। न चासदृशाप्रसिद्धिः, असदृशस्येत्यर्थविशेषणेन सादृश्यान्यशक्यसम्बन्धत्वाभात्। न चाशक्यपदवैयर्थ्यं, शक्तेरपि शक्यसम्बन्धत्वात् तदर्थोऽपि शक्यान्यत्वं पर्य्यवसितं, तथाच शक्ति-सादृश्यान्यशक्यसम्बन्धेन शब्दजन्यान्वयपरोपस्थितिरिति विवक्षितविवेकेन लक्षणं एवमग्रेऽपि। न चाभेदः, तत्रान्वयप्रतियोगित्वेनैवानतिप्रसङ्गे शब्दपदपरित्यागेन विशेषादिति। 'अशक्येति शक्तिसादृश्यान्यान्वयपरोपस्थितिहेतुः स्वशक्यसम्बन्ध इत्यर्थः, तादृगुपस्थितिहेतुरिति हेतुगर्भविशेषणमतस्तद्विवृणोति, 'उपस्थितीति, 'अतएवेति, यत्क्लृप्तं तत्स्थानीयेन

---

तत्तात्पर्य्यकत्वं वा, नाद्यः शब्दपदवैयर्थ्यापातात्, नान्त्यः घटपदादिना समवायघटितपरम्परासम्बन्धेनाकाशधर्म्मोपस्थितावतिप्रसक्तेः आहत्य पदार्थस्यैव स्मरणमिति प्रागुक्तेरशक्यपदवैयर्थ्याच्चेत्यरुचेराह, 'शक्यसम्बन्धादिति, शक्तिरपि शक्यसम्बन्ध एवेति नाशक्यपदवैयर्थ्यतादवस्थ्यं, तथाच शक्ति-सादृश्यान्यशक्यसम्बन्धेनान्वयानुकूलोपस्थितिरूपा वेत्यत्र तात्पर्य्यं। 'अशक्येति शक्तिसादृश्यान्वयानुकूलोपस्थितिहेतुशक्यसम्बन्ध इत्यर्थः। 'अतएवेति शक्यन्यथासिद्धिप्रयोजकतया कल्प्यमाना लक्षणा तत्कार्य्यकारितया शक्य-

राजसम्बन्धे राजसम्बन्धाभावादिति वाच्यं। शक्येन राज्ञा स्वसम्बन्धं विना सम्बन्धस्य लक्षयितुमशक्यत्वात्, अन्यथातिप्रसङ्गात्। न चात्माश्रयः, राजनिरूपित-पुरुषसम्बन्धस्य स्वसम्बन्धसम्बन्धस्य च भिन्नत्वात्। अथैवं मुख्यपरत्वेऽपि लक्षणा स्याच्छक्यसम्बन्धस्य तीरादौ सत्त्वादिति चेत्, न, लक्षणायां तात्पर्य्याभावेन शक्ते-

तस्यान्यथासिद्धिरतो यदुपस्थितिर्लक्षणा कथं तया शक्त्यन्यथासिद्धि-रतत्कार्य्यकारित्वात् तथाच लक्षणया तदन्यथासिद्धिस्तदा स्यात् यदि सा तत्कार्य्यकारिणी तच्च तदा यदि सम्बन्धरूपा स्यादिति भावः। एवं सम्बन्धस्य लक्षणात्वे मन्मते तूपस्थितिस्तचाविरुद्धेति भावः। न चायं तुल्योऽनुयोगः, 'शक्यसम्बन्धादिति शक्यसम्बन्धज्ञाना-दित्यर्थः। तथाच विनापि सम्बन्धं सम्बन्धज्ञानादुपस्थितिस्तचाविरुद्धा न तु वस्तुभूतः सम्बन्ध इति तात्पर्य्यात्। 'शक्येनेति, विना सम्बन्धं तज्ज्ञानं न सम्भवति। न च भ्रमरूपं तत्, क्वचिद्भ्रमस्य विशेष-दर्शनबलेनासम्भवादिति भावः। शक्ये सति उपस्थितिहेतुतया त्वयापि सम्बन्धाभ्युपगमादिति भावः। 'अथैवमिति, उपस्थितिरत्र नास्ति तद्धेतुश्च सम्बन्धोऽस्तीति भावः। उपस्थितिहेतुः शक्यसम्बन्धोलक्ष-णेति स्वरूपयोग्यतागर्भं यदि लक्षणार्थमापाद्यते तदेष्टापत्तिः फलो-

सम्बन्धरूपैव न तदुपस्थितिरूपेत्यर्थः। 'एवं' शक्यसम्बन्धस्य लक्षणात्व-इत्यर्थः, 'शक्येनेति, उपस्थितिलक्षणात्वपक्षेऽपि तद्धेतुतयावश्यमभ्युपगमा-दिति भावः। 'अथैवमिति, उपस्थितिश्च तदा नास्तीति तन्मते दोषाभाव-

रिव मुख्यपरत्वेऽपि लक्षणाया मूकत्वात् वृत्तेस्तात्पर्य्या-नुरोधित्वात्। तदुक्तं "तात्पर्य्याद्धि वृत्तिर्न तु वृत्ते-स्तात्पर्य्यं" इति, गोपदादेश्च स्वपरत्वे लक्षणैव न शक्तिः स्वार्थसम्बन्धेनैव स्वोपस्थितिसम्भवात्।

अन्ये तु पदानामौत्सर्गिकमर्थपरत्वं तदभावे स्वप-रत्वं गामुच्चारयेत्यादौ वाच्याविवक्षया पदेन स्वान्वि-ताभिधानादिति, तन्न, वृत्तिं विना स्वपरत्वस्यानिर्वा-हात् अन्यथा वृत्त्यन्तरोच्छेदः तत्पदादेव तदन्विताभि-धानसम्भवात्।

पधानगर्भं नास्त्येवेत्याह, 'लक्षणायामिति, 'तात्पर्य्याद्धि वृत्तिरित्युप-स्थितान्वयपरसम्बन्धाभिप्रायेण। ननु यदि शक्ति-सादृश्यान्यः सम्बन्धो लक्षणा तदा स्वपरत्वे शक्तिरेवार्थेन समं पदे शक्तेरेव सम्बन्धस्य सत्त्वादिति तत्र लक्षणेति कथमित्यत आह, 'गोपदेति, स्वार्थसम्बन्ध-रूपा हि शक्तिस्तत्र न तु शक्तित्वेन विषय एव शक्तेस्तत्त्वेन सम्बन्धत्वात्। न च पदं तद्विषयः, किन्तु तदाश्रयः, तदुक्तं 'स्वार्थेति, स्वशक्ति-विषयेति यावदिति भावः। 'वृत्त्यन्तरेति, अत्रान्तरशब्दः सम्पाता-

---

इति भावः। 'लक्षणायामिति तात्पर्य्याभावेन लक्षणास्थले शक्तेरिव मुख्य-परत्वेन लक्षणाया मूकत्वादिति भावः। ननु यदि शक्ति-सादृश्यान्यशक्य-सम्बन्धो लक्षणा तदा पदस्य स्वपरत्वेऽपि लक्षणैव स्यादित्यत्रेष्टापत्तिमाह, 'गोपदेति। 'तदभावे' अनुपपत्त्यादिना अर्थपरत्वाभावे, तदेव दर्शयति, 'गामिति वाच्यार्थे उच्चारणानुपपत्तेरित्यर्थः, तथाच किं लक्षणयेति भावः।

ननु पदगोचरश्रोत्रजनितप्रत्यक्षोपस्थितस्वपरत्वमेव पदानां, तदन्वितस्वार्थाभिधानन्तु पदान्तरेण। न च वृत्त्युपस्थितेनैव स्वार्थान्वयः पदेनाभिधीयत इति व्युत्पत्तिः, किन्तूपस्थितिमात्रेण लाघवादध्याहारे तथैव स्वीकारात् लक्षणादीनाञ्चोपस्थितिरूपतया तद्द्वारा चान्विताभिधानोपयुक्तत्वात् लक्षणात्वाद्यसाधारण-रूपेण तदुपयोगे परस्परव्यभिचारादिति चेत्, न, वर्णानां अयौगपद्येन पदगोचरप्रत्यक्षस्याभावात्, भावे

---

यातः, वस्तुतः तात्पर्य्यान्यथासिद्धौ शक्तेरप्युच्छेदसम्भवादिति ध्येयं। 'अध्याहार इति स्वमते। ननूपस्थितिमात्रस्य तन्त्वत्वे किं लक्षणा-वृत्त्येत्यत आह, 'लक्षणादीनामिति, तत्रोपस्थितेरेव तां विना असम्भवादिति भावः। 'उपस्थितिरूपतया', उपस्थापकसम्बन्धरूपतया वेति शेषः। उपस्थितित्वेनैव जनकत्वे वीजमाह, 'लक्षणात्वेति, वृत्तित्वं यदि शाब्दान्वयबोधानुकूलोपस्थितिगर्भं तदान्योन्याश्रय इति लक्षणा-त्वादिपरं वाच्यं तथाचाननुगमादुपस्थितित्वेनैव जनकत्वमिति भावः। ननु तदुपनीता च श्रोत्रविषय इत्युक्तमत एव पदं शृणोमीत्यबा-धितानुव्यवसाय इत्यत आह, 'भावे वेति। ननु प्रत्यक्षमूलिका स्मृतिः

---

नन्वेवमन्वयप्रतियोग्यनुपस्थापकतया तदनुभावकं न स्यादित्यत आह, 'तद-न्वितेति, 'अध्याहारे' अर्थाध्याहारे। शक्यसम्बन्धो लक्षणेतिमतमाश्रि-त्याह, 'तद्द्वारा चेति उपस्थितिद्वारा चेत्यर्थः, सा चोपस्थितिः प्रत्यक्षेणैव यदि सिद्धा तदा किं लक्षणयेति भावः। 'लक्षणात्वेति, तथाचोपस्थिति-त्वेनैव हेतुत्वमिति भावः। 'भावे वेति, उपनयवशादिति भावः। ननु

वा योग्यतादिविमर्शापेक्षया प्रत्यक्षस्यातीतत्वात्। किञ्चैवं गामुच्चारयेत्यादौ विकृतं गांपदमेव उच्चारण-कर्म्म स्यात् तस्यैव श्रोत्रप्रत्यक्षत्वात् न त्वविकृतं गोपदं, एकमुच्चारयेत्युक्तौ च न प्रकृतं पदान्तरमुच्चारणकर्म्म स्यात् किन्त्वेकमुच्चारयेति पदमेव, सत्यन्वययोग्यसम-भिव्याहृते प्रकरणादेरनुपयुक्तत्वात्। अपि चाध्या-हारे वृत्त्युपस्थापितेनान्विताभिधानमस्तु तस्यापदार्थ-त्वेऽपीतरपदैरन्वयबोधात् अत्र तु स्वरूपस्य पदार्थत्व-मवश्यं वाच्यं तच्च वृत्त्यन्तर्भावादेव, अन्यथा गामु-च्चारयेत्यादौ द्वितीया अच्छावाकीयं सामेत्यादौ च छ-

---

स्यादित्यपरितुष्यन्नाह, 'किञ्चेति। ननु विकृतस्य प्रत्यक्षोपस्थितस्यापि कर्म्मत्वेनानुपस्थितेर्नोच्चारणान्वयः किन्त्वविकृतस्य तस्य तत एवद्विती-याश्रुतेरित्यस्वरसादाह, 'उच्चारयेत्युक्ताविति, इदमपि न प्रक-रणस्य तात्पर्य्यग्राहकत्वेन बलवत्त्वादित्यस्वरसादाह, 'अपि चेति, 'वृत्तीत्यस्मन्मते। नन्वर्थत्वं प्रतिपाद्यत्वं तच्च शाब्दबोधानुकूलोपस्थिति-

---

प्रत्यक्षमूलिका स्मृतिः स्यादित्यरुचेराह, 'किञ्चेति। ननु विकृतस्य प्रत्य-क्षोपस्थितस्यापि कर्म्मत्वेनानुपस्थितेर्नोच्चारणान्वयः किन्त्वविकृतस्य तत एव द्वितीयाश्रुतेरित्यरुचेराह, 'उच्चारयेत्युक्तौ चेति। ननु प्रकरणस्य तात्पर्य्य-ग्राहकत्वेन बलत्वमित्यरुचेरर्थाध्याहारमभ्युपेत्याह, 'अपि चेति। 'अच्छा-वाकीयमिति, अच्छावाकशब्दस्य यदि लक्षणया न स्वपरत्वं तदा निरर्थकात् तस्मात् शब्दार्थप्रत्ययो न स्यादिति तदीयत्वेन सामान्यान्वयो न स्यादि-

प्रत्ययो न स्यात् अर्थशून्यत्वेनाप्रातिपदिकत्वात् तस्माच्च छप्रत्ययानुशासनात्। किञ्च गौरस्तीत्यादौ उभयपरत्वसम्भवे स्वपरत्वमेव स्यात् स्वस्य प्रत्यक्षेण शीघ्रमुपस्थितत्वात्। प्रत्यक्षमूलकस्मृतपदार्थस्यान्वयो भवतीति चेत्, न, उक्तदोषात् पदार्थस्मरणस्य अन्वयपरत्वानिश्चयाच्च तत्परसन्निधानस्य अन्विताभिधानोपयोगात्। किञ्च विभक्त्युपनीतान्वयप्रकारकर्म्मत्वादिनानुपस्थितस्याकाङ्क्षाविरहेण क्रियाद्यन्वयो न स्यात्। स्मृतपदे द्वितीयार्थकर्म्मत्वान्वय इति चेत्, न, विभक्तेः

विषयत्वं तच्च प्रत्यक्षोपस्थिते तदनुकूलत्वे नास्तीत्यरुचेराह, 'किञ्चेति, प्रत्यक्षमूला स्मृतिरङ्गं न तु प्रत्यक्षं सा च न शीघ्रेत्याशङ्कते, 'प्रत्यक्षेति, 'उक्तदोषादिति तादृशस्मृतेरप्यर्थोपस्थित्यपेक्षया शीघ्रत्वादित्यर्थः। ननु तात्पर्य्यग्रहाद्विलम्बितापि सा बलवतीत्यत आह, 'पदार्थेति उभयत्र तात्पर्य्यानिश्चयेऽप्यर्थानुभवस्यैव सर्व्वत्रानुभविकत्वादित्यर्थः। ननु व्युत्पत्तिबलादेवार्थान्वयबोधकत्वमत एवौत्सर्गिकं तदित्यत आह, 'किञ्चेति। 'प्रकृत्यर्थेति प्रकृतिशक्त्युपस्थापितेत्यर्थः, तच्चोभय-

त्यर्थः, स्मृतत्वे हेतुमाह, 'प्रत्यक्षेति प्रत्यक्षमूलकस्मृतिविषयपदार्थस्येत्यर्थः, शक्तिग्रहकाले गोः प्रत्यक्षत्वादिति भावः। 'उक्तदोषादिति तादृशस्मृत्यपेक्षया प्रत्यक्षोपस्थितेः शीघ्रत्वादित्यर्थः। ननु तात्पर्य्यग्रहाद्विलम्बितापि सा बलवतीत्यत आह, 'पदार्थेति प्रथमं शीघ्रोपस्थितस्वपरत्वस्यैव निश्चयात्

प्रकृत्यर्थान्वितस्वार्थान्वयबोधकत्वस्य व्युत्पत्तिसिद्धत्वात्। अतएव गङ्गायामित्यत्र सप्तम्यर्थान्वयार्थं तीरे लक्षणा अन्यथा स्मृत्युपनीततीरस्यान्वयबोधसम्भवे लक्षणोच्छेदः। नन्वेवं जवगड़दशमाहेत्यादौ निरर्थकेषु लक्षणा न स्यात् स्वार्थसम्बन्धाभावात् प्रत्यक्षोपस्थिते स्मृते वा स्वरूपे क्रियान्वय इति दूषितमेवेति चेत्, न, न हि जवगड़दशमाहेत्यत्र समुदाये क्रियान्वयः, समुदायस्योच्चारणासम्भवात्, किन्तु द्वन्द्वानन्तरश्रुतक्रियापदेन प्रत्येकवर्णे स्वार्थान्वयबोधनं, प्रत्येकवर्णस्य च शक्तत्वेन स्वार्थसम्बन्धादेव स्वस्मिन् लक्षणा स्तोभेऽप्येवं, स्वार्थसम्बन्धाग्रहे च स्वरूपोपस्थितिः शक्ति-

वृत्तिसाधारणं तत्तात्पर्य्यविषयत्वादिकञ्च तत्साधारणं गुर्व्विति भावः। 'लक्षणोच्छेद इति पदनिष्ठलक्षणारूपवृत्त्युच्छेद इत्यर्थः। 'उच्चारणासम्भवादिति सम्भवप्राचुर्य्यादुक्तं। वस्तुतो जवगड़दशाः

तस्यैवान्वयः स्यादित्यर्थः, 'प्रकृत्यर्थेति तच्च वृत्तिं विना नेति स्वपरत्वे लक्षणैवेत्यर्थः, 'उच्चारणासम्भवादिति सम्भवप्राचुर्य्यादुक्तं। वस्तुतो जवगड़दशाः प्रमेया इत्यत्रापि प्रत्येकमेवान्वयस्तावतैव स्वार्थसम्बन्धेनान्वये मिलिते तस्मिन् शक्तेरकल्पनादिति। न च ते षड़ित्यत्र षट्त्वान्वयो न प्रत्येकं व्यासज्यवृत्तित्वादिति वाच्यं। तत्रापि प्रत्येकलक्षणाभिरुपस्थापितेषु षट्त्वान्वयसम्भवात् घट-पटौ द्वाविितिवत् उक्तलक्षणयैवोपपत्तौ शक्तिकल्पने मानाभाव इत्यनुशयमाविष्करोति, 'आङरिति, ।

भ्रमात्, निरर्थकस्य स्वरूपे शक्तिरेव इत्त्यन्तरं विनै-वोपस्थितेः शक्तिसाध्यत्वात् इत्यप्याहुः ।

अन्ये तु पदस्य स्वबोधकत्वं वृत्तिं विनैव स्वभावात् अन्येन ह्यन्यबोधनेऽतिप्रसङ्गात् शक्तिकल्पनं स्वबोध-कत्वे च न तथा, यथा घटस्य स्वबोधकत्वं स्वसम्बन्धं विनैव। एवञ्च स्वबोधिते स्वस्मिन् विभक्त्यर्थान्वयोऽपि। न च पदस्य स्वभावात् स्वबोधकत्वे सर्व्वत्र स्वबोध-प्रसङ्गइति वाच्यं। इत्यादिपदस्य स्वार्थान्वयानुप-पत्त्यादेः सहकारित्वात् यथा घटस्य स्वबोधकत्वे इन्द्रियसम्बन्धाद्यपेक्षेति ।

यत्तु स्वार्थसम्बन्धिनि तात्पर्य्यमेव लक्षणा तत्-तात्पर्य्यञ्च तत्प्रतीतिमुद्दिश्योच्चरितत्वमिति, तन्न, लक्ष्यस्मृतये लक्षणा सा च स्वार्थसम्बन्धज्ञानादेवेत्य-

---

प्रमेया इत्यत्रापि प्रत्येकमेवान्वयः तावतैव स्वार्थसम्बन्धेनान्वये मिलिते स्वस्मिन् शक्तेरकल्पनादिति तत्त्वं। अतएवास्वरसादेक-देशिमतेऽस्वरसोऽपि नादृतः। 'अन्येत्विति, स्वबोधकत्वेऽपि स्वस्य प्रकृत्यर्थत्वाभावेन विभक्त्यर्थानन्वय इति तथाच व्युत्पत्त्यन्तरकल्पन-मित्यस्वरसो द्रष्टव्यः ।

'अन्ये त्विति, एवमपि स्वस्य प्रकृत्यर्थत्वाभावेन विभक्त्यर्थानन्वय इत्यस्वर-सोऽत्र बोध्यः। 'अधिकस्य' तात्पर्य्यस्य, 'अन्योन्येति लक्ष्यानुपस्थितौ तात्पर्य्य-

धिकस्य व्यर्थत्वात्। सम्बन्धधीः स्मृतिहेतुः क्लृप्ता न तु तात्पर्य्यधीरपि तस्या लक्ष्यस्मृतिजन्यत्वेनान्योन्याश्रयप्रसङ्गात्। तात्पर्य्यज्ञानञ्च लक्षणावीजानुपपत्तिज्ञानेऽन्वयानुभवे चोपयुक्तमतोऽशक्योपस्थितिस्तद्धेतुः शक्यसम्बन्धो वा लक्षणेति तत्स्वरूपे तात्पर्य्यमनुपयुक्तमेव। लक्ष्ये तात्पर्य्यात् लक्षणा "तात्पर्य्याद्धि वृत्तिरिति च लक्षणास्थले, वस्तुतो लक्ष्ये तात्पर्य्यमस्तीत्येवम्परं। किञ्चैवं मुख्येऽपि तत्तात्पर्य्यकत्वमेव वृत्तिरस्तु किं शक्त्या, तात्पर्य्यमेव वृत्तिं विना न निर्वहतीत्युच्यत-

'अधिकस्य' तत्प्रतीतीच्छयोच्चरितत्वस्य, 'अन्योन्येति, उपस्थितौ तत्र तात्पर्य्यधीस्तस्याञ्च सेत्यभ्युपगमादिति भावः। नन्वेवं लक्षणास्थले तात्पर्य्यार्थविधानं कोपयुक्तमत आह, 'तात्पर्य्येति, 'अत-इति, मतभेदेन कल्पद्वयेऽप्युभयथा तात्पर्य्यं न लक्षणेति भावः। 'अनुपयुक्तमिति न स्वरूपं न वा कल्पनावीजमित्यर्थः, कल्पनावीजत्वे तद्ग्रहावश्यकतया तत्स्वरूपत्वशङ्काप्यवतरेत् तदपि नेति भावः। ननु यदि न तद्वीजं तदा ग्रन्थविरोध इत्यत आह, 'तात्पर्य्यादिति, सोऽपि स्वरूपनियममाह न तु धीनियमं यतो विरुध्येतेति भावः।

स्यापि ग्रहीतुमशक्यत्वादित्यर्थः। नन्वेवं लक्षणास्थले तात्पर्य्यान्वयाद्यनुविधानं न स्यादित्यत आह, 'तात्पर्य्यज्ञानञ्चेति, 'लक्षणावीजेति लक्षणाकल्पनावीजेत्यर्थः। पूर्व्वेषां ग्रन्थविरोधं परिहरति, 'लक्ष्य इति, अन्यथा

इति चेत्, तर्हि लक्षणापि तन्निर्वाहिकैव न तु तद्देव। अपि च तात्पर्य्यानुपपत्तिर्लक्षणावीजं न तु तदनुपपत्तिरेव तद्बीजं विरोधात्। अतएवाशक्ये तात्पर्य्यं न लक्षणा वृत्तेस्तात्पर्य्यनिर्वाहकत्वात्। निर्वाहकसम्बन्धमपश्यत आप्तस्य तात्पर्य्याभावात्। शक्त्या शक्यसम्बन्धेन वा पदादमुमर्थं जानात्वित्यभिप्रायेण पदप्रयोगो न तु तात्पर्य्यादेवायममुमर्थं ज्ञास्यतीति बुद्ध्या तात्पर्य्यमात्रस्य वृत्तित्वे सर्वस्य सर्वत्र प्रयोगो नानार्थोच्छेदश्च। स्वार्थसम्बन्धेनेदं पदमर्थं बोधयिष्यतीति वक्तुरभिप्रायो लक्षणा तदभिप्रायज्ञानं विना श्रोतुर्लक्ष्यानुपस्थितेरित्यन्ये। तन्न। अयं ह्यभि-

---

'एवं' तात्पर्य्यस्य वृत्तित्वे, 'अपि चेति, यद्यपि तात्पर्य्यानुपपत्तिर्लक्ष्यतात्पर्य्यज्ञानमेव पर्य्यवसितं न तु लक्षणावीजमित्यस्यापि न लक्ष्यानुभवे कारणमित्येवार्थ इति न कल्पनान्तरं, तथापि सामान्यतोऽन्वयानुभवमात्रे तात्पर्य्यधीर्हेतुर्लक्ष्यानुभवरूपे विशेषे वेति मतभेदेन कल्पभेदोपादानं द्रष्टव्यं। 'विरोधात्' एकस्योपपादकोपपाद्यत्वविरोधादित्यर्थः। 'शक्यसम्बन्ध एवेति, सम्बन्धिज्ञानमात्र-

पद्मम्यनन्वयोऽपि स्यादिति भावः। 'अतएवाशक्य इति, अत्र पूर्व्वोक्तं वैयर्थ्यं नावतरतीति विशेषः। 'सर्व्वस्येति, शक्यसम्बन्धग्रहं विनापीति शेषः, 'नानार्थेति, उक्तलक्षणयैव शक्तेरन्यथासिद्धेरिति भावः। ननु प्रयोगनिमि-

प्रायः प्रयोगनिमित्तं यथा शक्त्यायमर्थं बोधयिष्यतीत्यभिप्रायः न तु स एव लक्षणा गौरवात्, किन्तु स्वार्थसम्बन्ध एव लक्षणा तत एव लक्ष्योपस्थितिसम्भवात् वृत्तेस्तत्रैवोपयोगात् तस्य चाबोधकत्वे स्वार्थसम्बन्धेनायं बोधयिष्यतीत्यभिप्रायवान् वक्ता नाप्तः स्यात् । तात्पर्य्यधीस्त्वन्वयबोधे हेतुरित्युक्तम् । शक्यसम्बन्धश्चाविनाभाव एव यष्टीः प्रवेशय मञ्चाः क्रोशन्तीत्यत्रापि प्रवेशन-क्रोशनसमये यष्टिधर-मञ्चस्थपुरुषयोर्यष्टि-मञ्चाविनाभाव एव। एवञ्च छत्रिणोयान्ति काकेभ्योदधि रक्ष्यतामित्यत्राजहत्स्वार्थलक्षणायामपि छत्रिणस्तत्समूहानन्तर्गतेनाच्छत्रिणाप्यविनाभाव एव। काक-कुक्कुरादीनां दध्युपघातकत्वेन युगपदुपस्थितिसमये काकस्य कुक्कुराद्यविनाभावः । यत्र तूपघातकत्वेन काकमात्र-

---

स्यैवापरसम्बन्धिस्मारकत्वात्ता विनाभूतज्ञानमात्रस्यैवेत्यर्थः, 'अविनाभाव एवेति, गङ्गागदस्य तीरवन्मत्स्यादावप्यविनाभावादिति भावः।

त्त्वेऽपि तत्त्वविरोध इत्यत आह, 'गौरवादिति, तस्य च तदुपस्थापकत्वं त्वयापि मन्तव्यमेवेत्याह, 'तस्य चेति, 'अविनाभाव एवेति, अन्यथातिप्रसङ्गादिति भावः। 'अच्छत्रिणेति, गमनसमय इति शेषः। ननु छत्रिशब्दे न लक्षणा वाक्यत्वात्, नापि छत्रपदे तदर्थस्य त्यागादजहत्स्वार्थतानुपपत्तेः। किञ्चैकसार्थगन्तृत्वं न लक्ष्यतावच्छेदकं गन्तृत्वेनोपस्थितस्य गमनाकाङ्क्षाविरहेण यान्तीत्यनेनानन्वयापत्तेरिति, अत्राहुः, छत्रपद एव लक्षणा, एकसार्थ-

मुपस्थितं न कुक्कुरादि तच्च काकपदेऽप्युपघातकत्वेन लक्षणापि नास्ति दध्युपघातकत्वेनातर्कितात्लक्षणोपदेशानर्हत्वादिति सम्प्रदायः।

वस्तुतः शक्यसम्बन्धएव लक्षणा अतिप्रसङ्गश्च सम्बन्धस्याविनाभावस्वरूपत्वेऽपि, तात्पर्य्यादन्वयनियमः शक्यसम्बन्धमात्रलक्षणापक्षेऽपि, लक्षणावीजं तात्पर्य्यानुपपत्तिः पदस्य वृत्तिं विना लक्ष्ये तात्पर्य्यानिर्वाहात्, न तु शक्यान्वयायोग्यत्वं वीजं यष्टीः प्रवेशयेत्यत्राजहत्स्वार्थायाञ्च शक्यस्यान्वययोग्यत्वेऽपि लक्षणासत्त्वात्तात्पर्य्यानुपपत्तिस्तत्रापि लक्ष्ये तात्पर्य्यं विना लक्षणानुदयादिति सम्प्रदायः।

वस्तुतोऽविनाभावस्य लक्षणात्वे स्वपरत्वे लक्षणा न स्यादर्थेन समं पदस्य देशतः कालतोवाऽविनाभावाभावात् स्वार्थसम्बन्धस्तु शक्तिलक्षणस्तत्रापि। न चैवं मुख्य एव प्रयोगः शक्तेरेव तत्त्वत्वादिति वाच्यं। शक्तिविषये प्रयोगस्य मुख्यत्वात् पदस्य तु तदाश्रयत्वावत्त्वमेव लक्ष्यं, तथाचैकसार्थवन्तो यान्तीत्येतद्वाक्यार्थः, अजहत्स्वार्थतोक्तिस्तु क्वचिद्वाक्यलक्षणाभिप्रायेणार्थपदस्य प्रतिपाद्यपरत्वाभिप्रायेण वेति।

एकसार्थवत्त्वेन छत्रस्याप्यन्वयात् तथात्वमत एव शक्य-लक्ष्यसाधारण्यमुपपद्यत इत्यन्ये।

केचित्तु न प्रकृतौ लक्षणा किन्तु प्रत्यय एवेत्याहुः।

'अतिप्रसङ्ग' इति, पूरस्य तीरवन्मत्स्यादावप्यविनाभावादिति भावः।

वस्तुतोऽन्वयपरप्रमाणशब्दस्य मुख्येऽन्वयायोग्यत्वमेव लक्षणावीजम् गङ्गायां घोषइत्यादौ पूर्वोक्तन्यायेन लक्ष्ये तात्पर्य्यग्रहात्पूर्वमेव मुख्यस्यान्वयायोऽग्यत्वज्ञानेन लक्षणोपपादनात् । अस्तु वा तत्रापि लक्ष्ये तात्पर्य्य-ग्रहः तथापि मुख्येऽन्वयानुपपत्तिरेव लक्षणावीजं प्रथमोपस्थितत्वात् तात्पर्य्यानुपपत्तिं विनैव लक्षणावीजत्वसम्भवाच्च । यष्टीः प्रवेशयेत्यत्राजहत्स्वार्थायाञ्च मुख्यस्यान्वयानुपपत्तिरेव तथाहि प्रकरणादिना प्रवेशयेत्यस्य भोक्तृप्रवेशनपरत्वं यान्तीत्यस्य छत्रि-तदितर-घटितसमूहगमनकर्त्तृपरत्वञ्च ज्ञातम् । तादृशप्रवेशन-

दिति सम्बन्धमात्रं लक्षणा । 'प्रकरणादिनेति, तात्पर्य्यं लक्षकपदे ब्रुवता अपरपदेऽपि तद्ग्राह्योवाच्योऽन्यथा घोषादिपदस्य जलादिपरत्वे

'तात्पर्य्यग्रहात्पूर्व्वमेवेति, मुख्यार्थान्वय औत्सर्गिक इति तदन्वयानुपपत्ति-ज्ञानानन्तरमेव लक्ष्ये तात्पर्य्यधीरिति भावः । तात्पर्य्यग्रहस्य सामान्यत एव शाब्दबोधहेतुत्वं प्रागुक्तमभिप्रेत्याह, 'अस्तु वेति, 'तात्पर्य्येति, तात्पर्य्यग्रहेऽपि न तदनुपपत्तिज्ञानं भिन्नग्रहसामग्रीकत्वादिति भावः । 'प्रकरणादिनेति, लक्षकपदवदितरपदेऽपि तात्पर्य्यग्रहो वाच्यः, अन्यथा घोषपदस्यैव जलपरत्वे गङ्गापदे लक्षणा न स्यादिति भावः । ननु तुल्यन्यायेन लक्षकपदस्यापि लक्ष्ये तात्पर्य्यग्रहात् तदनुपपत्तिरेव तद्बीजमित्याह, 'अथेति, 'तथापीति । ननु यत्र दैवाद्यष्टिधरे तात्पर्य्यज्ञानं न तु प्रवेशयेत्यस्य भोक्तृप्रवेशनपरत्वज्ञानं तत्रान्वयानुपपत्तिज्ञानं विनैव तात्पर्य्यानुपपत्तिरेव तद्बीजमिति कृत्स्नत्वं तुल्यमेव तस्मात् कल्पकस्याननुगमो न दोषः इत्युभयो-

गमनयोरन्वयायोग्यावेव यष्टि-च्छत्रिणौ। अथ प्रकरणादिनैवेतरपदवत् यष्टि-च्छत्रिपदयोरपि लक्ष्ये तात्पर्य्यमवगतमतस्तदनुपपत्तिरेव तद्वीजमिति चेत्, न, लक्षणातः पूर्वमवश्यं लक्ष्योपस्थितौ तत्र तात्पर्य्यग्रहे मानाभावात् लक्षणाया अन्यथाऽपि सम्भवात्। भावे वास्तु तत्रोभयानुपपत्तिस्तथाप्यन्वयानुपपत्तिरेव लक्षणावीजं, गङ्गायां घोषइत्यादौ पूर्वोक्तन्यायेन लक्ष्ये

गङ्गापदादौ सा न स्यात् तथाच प्रकरणात् प्रवेशनादिविशेषे तात्पर्य्यग्रहात् तत्र चायोग्यावेव यष्टि-च्छत्रिणावित्यर्थः। ननु यत एव प्रकरणात् तयोर्विशेषे तात्पर्य्यग्रहस्तत एव लक्षकपदस्य लक्ष्येति तात्पर्य्यानुपपत्तिरेव वीजमित्याशङ्कते, 'अथेति। ननु

लक्षणावृत्तित्वकल्पकत्वाविरोधः। न ह्यन्वयानुपपत्तेरपि तत्कल्पकत्वादन्यत् तद्वीजत्वं नाम। न च स्वतन्त्रान्वयानुविधायितया अनुपपत्तिज्ञानं लक्ष्यान्वयबोधे हेतुरित्येव तद्वीजत्वमिति वाच्यं। लक्ष्ये तात्पर्य्यग्रह एव तस्योपक्षीणत्वात्, अतएव शब्दादिना तद्विनैव यत्र लक्ष्ये तत्पर्य्यग्रहस्तत्रापि तदन्वयबोधोऽनुभवसिद्धस्तथाच व्यभिचारोऽपि। न च तदनुपपत्तेस्तथात्वेहेतुत्वे यत्रोभयोर्योग्यत्वं तत्र कदाचिल्लक्ष्यान्वयोऽपि स्यादिति वाच्यं। लक्ष्ये तात्पर्य्याग्रहात् तद्ग्रहे च युगपच्छक्य-लक्ष्ययोरन्वयबोधस्येष्टत्वात् तस्मान्मुख्यार्थान्वयानुपपत्तेर्मुख्यार्थान्वयबोधप्रतिबन्धकत्वं न तु लक्ष्यान्वयबोधकत्वं, एवञ्च पूर्व्वोक्तविमर्षस्यापि लक्ष्यतात्पर्य्यग्रह एवोपयोगः। न च पूर्व्वोक्ता मौक्तिकवाक्यत्वादिज्ञानं तर्हि लक्षणावृत्तित्वकल्पन एवोपयुक्तं तच्च नान्वयबोधाङ्गमिति कथं तदपेक्षा, तदनपेक्षायाञ्च अनाप्तवाक्येऽपि लक्षणा

तात्पर्य्यग्रहात्पूर्वमेव मुख्यार्थाऽनुपपत्तेः क्लृप्तत्वात्। ननु पदार्थविशेषस्मृतौ तदन्वयबोधे वा प्रकरणादेः सह-कारिता न तु तात्पर्य्यग्रह इति चेत्। न। शब्दसह-कारित्वेऽननुगमात् तात्पर्य्यग्रहे तु तद्व्याप्यत्वेनानु-गमः तात्पर्य्यव्याप्यत्वग्रहे तात्पर्य्यग्रहः सम्भवत्येव। बहुव्रीहौ चित्रगोपदार्थस्यान्वयायोग्यत्वादन्यपदार्थे तात्पर्य्यानुपपत्तिरेव लक्षणावीजमिति चेत्। न। तत्रापि चित्रगोस्वाम्यानयनपरानयनपदार्थान्वयानु-पपत्तेः। यद्यपि लक्षणायामन्वयायोग्यत्ववन्निराकाङ्क्ष-

---

प्रकरणादिविशेषे तात्पर्य्यग्रहो न सम्भवतीति शङ्कते, 'नन्विति। ननु यदि तात्पर्य्यानुपपत्त्युपजीव्यतया अन्वयानुपपत्तिर्वीजं तदा तदनु-पपत्त्युपजीव्यतया तदयोग्यत्वं वीजमस्तु न तु सेत्यत आह, 'यद्य-पीति। वस्तुतस्तु लक्षणावीजं यदि लक्ष्यान्वयबोधहेतुरित्यर्थस्तदा अन्वयानुपपत्तिरपि न वीजं, न हि शक्यान्वयाऽनुपपत्तिर्लक्ष्यान्वय-धीहेतुः मानाभावादपि तु तदन्वयानुपपत्त्या तदन्वयो न भवति तदन्वयाभावे क्लृप्तसामग्र्यैव लक्ष्यान्वयबोधः। न च तदनुपप-

स्यात् तस्यापि तात्पर्य्यग्रहोपजीव्यत्वाभ्युपगमे यत्रानाप्तवाक्येऽपि तद्ग्रह-स्तत्रापि सा स्यादिष्टापत्तौ सिद्धान्तविरोध इति वाच्यं। अन्वय-व्यतिरेकाभ्यां तस्यापि लाक्षणिकार्थानुभवहेतुत्वात् तदवच्छेदकत्वादेति विपश्चिद्भिः परि-चिन्तनीयमिति। तटस्थः शङ्कते, 'नन्विति, यद्यप्यननुभावकत्वरूपाकाङ्क्षा

त्वमप्यस्ति तथाहि गङ्गायां घोष इत्यत्र घोषस्य निविडाधाराकाङ्क्षितत्वेन न प्रवाहाकाङ्क्षा एवं समूहगमनस्य छत्रिषु नाकाङ्क्षा तेष्वपरिसमाप्तेः, तथापि नोभयं निमित्तम् अन्यतरज्ञानेऽपि लक्षणासम्भवात्। नैकैकमेव निमित्तम् अननुगमात्। अन्वयानुपपत्तिव्याप्यत्वेन वानुगमेऽन्वयानुपपत्तिरेव लक्षणावीजं तस्या उभयत्र सत्त्वात्। लक्षणास्थले च स्मृतशक्यान्वयानुपपत्तिज्ञानानन्तरं गङ्गापदात्पुनः शक्यस्मृतिः स्मृतशक्यात्स्वसम्बन्धेन तीरस्मृतिः शक्तेः शक्यस्मृतौ

---

त्तेस्तत्रातन्त्रत्वे यत्रोभयोर्योग्यत्वं तत्र कदाचिल्लक्ष्यान्वयोऽपि स्यादिति वाच्यं। तत्तात्पर्य्यग्रहविलम्बेन तदुपजीव्यप्रकरणादिविलम्बेन वा विलम्बात्। अत एवोभयत्र तात्पर्य्यग्रहे युगपच्छक्यलक्ष्योभयान्वयबोधाविरोध इत्याकरसिद्धान्तः, तात्पर्य्यग्रह एव तत्र नान्वयानुपपत्तिं विनेत्यन्यदेतत्। न चोपजीव्यतयास्यैव हेतुरस्त्विति वाच्यं। शब्दादिना तात्पर्य्यग्रहेऽपि लक्ष्यान्वयबोधसम्भवेन व्यभि-

---

तत्रापि अन्यथा वह्निना सिञ्चतीत्यत्रापि सेकस्य द्रवद्रव्याकाङ्क्षत्वेन निराकाङ्क्षतयैवान्वये योग्यताया अनङ्गत्वापत्तेः, तथाप्यभ्युपेत्याह, 'तथापीति, 'अन्वयानुपपत्तिरेवेति। यद्यपि यथा तात्पर्य्यानुपपत्त्युपजीव्यतया अन्वयानुपपत्तिर्वीजं तथा तदुपजीव्यतया तदयोग्यत्वमेव वीजमस्तु, तथापि यत्र योग्यताग्रहेऽपि तात्पर्य्याद्यभावान्मुख्यार्थानन्वयस्तत्साधारण्यादेतदुक्तं, तदिदमाह, 'तस्या इति। यद्यपि सम्बन्धिदर्शनस्य तत्तत्सम्बन्धित्वेन स्मारकत्वं

प्रवाहस्य स्वसम्बन्धेन तीरस्मृतौ सामर्थ्यावधारणात् । अतः शक्यस्मारिततीरस्येतरपदादेवान्वयबोधः । अत-एव लाक्षणिकं पदं नानुभावकम् अन्वयप्रतियोगि-नस्तीरस्य ततोऽनुपस्थितेः अन्वयप्रतियोग्युपस्थापक-त्वेन पदानामन्वयानुभावकत्वात् । न च गङ्गा-पदात्स्वशक्यसम्बन्धेन प्रथमं तीरस्मृतिरेव पुनः शक्य-स्मरणे गौरवादिति वाच्यम् । गङ्गापदस्य स्वशक्यस-म्बन्धेनान्वयप्रतियोगिस्मारकत्वाकल्पनात् । न चेहैव तत्कल्पनं, क्लृप्तकारणताकस्मृतिद्वयादेव तीरोपस्थिति-सम्भवादिति प्राञ्चः । तन्न । गङ्गापदात्तीरस्यानु-

---

चारात् । यदि च लक्षणावीजं लक्षणाया वृत्तित्वकल्पकं तदोभयो-रपि वीजत्वं न त्वसाधारणमुभयज्ञानतः प्रत्येकमेव तत्कल्पनात् आप्तवाक्यत्वेन प्रतीतप्रामाण्यनिर्व्वाहायान्वयानुपपत्त्या प्रकारान्तरप्र-तीताप्तलच्यतात्पर्य्यनिर्व्वाहाय च तत्कल्पनस्यावश्यकत्वात् कल्पकान-नुगमस्यादोषत्वादिति सारं । 'अतएवेति अन्वयानुभावकत्वं पदाना-मौत्सर्गिकं बाधकेन लक्षणास्थले त्यज्यते तत्रान्वयप्रतियोगिपदार्थ-स्मारकः पदार्थ एवेति पदस्य तत्स्मारकत्वाभावान्नानुभावकतेत्यर्थः । 'गौरवादिति प्रकृत्यर्थत्वस्य प्रकृत्युपस्थाप्यत्वात्मकतया तदर्थप्रतिपाद-

---

न कल्प्यते गौरवादननुगमाच्च, किन्तु सामान्यतस्तथाच शक्यसम्बन्धेनापि स्मारकत्वं क्लृप्तमेव, तथापि समाधिसौकर्य्यादाह, 'गङ्गापदादिति, 'गौरवा-

पस्थितौ तत्र सप्तम्यर्थान्वयानुपपत्तेः विभक्तेः प्रकृत्युपनीतस्वार्थान्वयबोधकत्वव्युत्पत्तेः प्रकृत्यर्थोपस्थाप्यस्य विभक्त्यर्थान्वयेऽतिप्रसङ्गोऽननुगमश्च। न च प्रकृतितात्पर्य्यविषयस्वार्थान्वयबोधकत्वं विभक्तीनां, गौरवात्। एवञ्च प्रकृत्यर्थे विभक्त्यर्थान्वयनियमाच्छक्यसम्बन्ध एव क्लृप्तस्तीरस्मारकत्वेन कल्प्यते। न चैवं गङ्गापदात् साक्षात्तीरोपस्थितौ शक्तिः, तां विनापि तदुपस्थितिसम्भवात्। नन्वेवमन्वयप्रतियोग्युपस्थापकतया इतरपदवल्लाक्षणिकमप्यनुभावकं स्या-

नेच्छोच्चरितप्रकृतिकत्वस्य गुरुत्वादित्यर्थः। वस्तुतस्तु प्रकृतितात्पर्य्यविषये विभक्त्यर्थान्वये धूमोऽस्तीत्यत्र वह्नितात्पर्य्यकधूमपदोत्तरविभक्त्यर्थान्वयस्य वह्नौ भानापत्तेः, तथाच प्रकृत्यर्थ एव तदन्वय इति तत्त्वं। 'तीरस्मारकत्वेन' विशेष्यस्मारकत्वेनेत्यर्थः, परम्परासम्बन्धस्यापि स्मारकत्वकल्पनाच्छाब्दबोधानुकूलतत्स्मारकत्वं प्रकृते कल्प्यत इति भावः। 'तां विनेति, तथाच शब्दात् साक्षादुपस्थितिः शक्तिसाध्यैव अन्यथा शब्दात् साक्षादुपस्थितौ शक्तिकल्पने परम्परासम्बन्धेन उपस्थितौ लक्षणेति धूमोऽस्तीत्यत्रापि लक्षणा स्यादित्यपि द्रष्टव्यं।

---

दिति प्रकृतिप्रतिपाद्यत्वापेक्षया तत्प्रतिपादनेच्छोच्चरितत्वस्य गुरुत्वादित्यर्थः। यद्यप्यतिप्रसङ्गभिया वृत्त्या तत्प्रतिपाद्यत्वं वाच्यं तथाच वृत्तित्वविवेचने गौरवं तुल्यं, तथापि वह्नितात्पर्य्यके धूमोऽस्तीति वाक्ये धूमपदोत्तरविभ-

दिति चेत्, न, इतरपदार्थैः सह स्वशक्यान्वयानुभावकत्वेन कूमादितरपदादेव तीरानुभवसम्भवेन लाक्षणिकस्याननुभावकत्वात् स्वशक्यान्वयानुभवे पदानां कारणत्वावधारणाच्च । अथ यदि गङ्गापदं नान्वयबोधकं तदा गङ्गापदान्तर्भावेन सम्भूयान्वयबोधकत्वलक्षणं नैकवाक्यत्वं स्यान्न वा प्रमाणत्वं तथाच तदुभयरक्षार्थं न लक्षणाकल्पनम् । न च परम्परया

---

'इतरपदार्थैरिति, न च स्वशक्यानुभवत्वापेक्षया स्वोपस्थाप्यानुभवत्वमेव सामान्यतो लघु अतएव स्वशक्यानुभव इत्याद्यपि हेत्वन्तरं हेयमिति वाच्यं । तथासत्यतिप्रसङ्गात् । न च वृत्त्युपस्थाप्यत्वं तत्, सा हि शाब्दबोधानुकूलपदार्थोपस्थितिगर्भा, तदनुकूलत्वञ्च यदि वृत्तिनिबन्धनं तदान्योन्याश्रय इति शक्तिगर्भं वाच्यं तथाचो-

क्तयर्थस्य वह्नावन्वयापत्तिरिति दूषणं बोध्यं । 'इतरपदार्थैरिति, न च स्वशक्यानुभावकत्वापेक्षया स्वोपस्थाप्यानुभावकत्वमेव सामान्यतो लघु अतएव स्वशक्यान्वयानुभव इत्यादि हेत्वन्तरमपि हेयमिति वाच्यं । तथा सत्यतिप्रसङ्गात् । न च वृत्त्योपस्थापकत्वं तत्, सा हि शाब्दबोधानुकूलपदार्थोपस्थितिगर्भा, तदनुकूलत्वञ्च यदि वृत्तिनिबन्धनं तदान्योन्याश्रय इति शक्तिगर्भं वाच्यं तथाच प्रथमोपस्थितत्वादुपजीव्यत्वाच्च स्वशक्यान्वयानुभावकत्वमेव पदानां कूप्तं । किञ्च शक्तेरीश्वराभिप्रायस्य पदार्थान्तरस्य वा तत्त्वेन ज्ञानं नानुभवप्रयोजकं व्यभिचारात् किन्तु अनुभवजनकतावच्छेदकत्वेन ज्ञानं तथाच शक्तिं विना अनुभवजनकत्वमवच्छेदकं विना जनकत्वमिति पर्य्यवसितं, तथाच व्याघात इति वदन्ति । तत्र ब्रूमः, शक्तित्व-लक्षणात्वाभ्यां

साक्षाद्वान्वयप्रतियोगिस्मृतिहेतुत्वेन प्रमाणत्वं, स्मृतेर-प्रमाणत्वात्। न चैकवाक्यत्वं, वाक्यभेदेऽपि पदार्थ-स्मृतिसत्त्वादिति चेत्, न, अप्रोक्तत्वात् गङ्गापदान्त-र्भावेनान्वयप्रमाप्रयोजकत्वं सम्भूयान्वयबोधप्रयोजक-त्वञ्च गृहीतं तदुभयमपि तीरोपस्थितिद्वारा निर्व-हति।

---

पजीव्यत्वात् प्रथमोपस्थितत्वात् लाघवाच्च स्वशक्यानुभावकत्वमेव पदानां क्लृप्तं। किञ्च शक्तेरीश्वराभिप्रायस्य पदार्थान्तरस्य वा ज्ञानं नानुभावकं व्यभिचारादिति वक्ष्यते किन्त्वनुभवजनकतावच्छेदक-त्वेन ज्ञानं तथाच शक्तिं विनानुभावकत्वं अवच्छेदकं विना जनकत्व-मिति पर्य्यवसितं, तथाच व्याघातः तस्मात् शक्यस्यैव जनकतावच्छेद-कावच्छिन्नस्यैवानुभावकत्वं न तु लाक्षणिकस्य, इदमेवारुचिबीजमग्रे नवीना इत्यनेन सूच्यत इति ध्येयं। 'तदुभयमपीति समाधिस्तौ-

शाब्दबोधविशेषजनकत्वग्रहानन्तरं तयोः शाब्दबोधानुकूलत्वगर्भवृत्तित्वग्रहे अन्योन्याश्रयानवकाशात् तृणत्वादिना वह्निविशेषानुकूलत्वग्रहानन्तरं तृणा-दीनां वह्न्यनुकूलत्वग्रहवत्, यदि च शक्तिगर्भमेव शाब्दबोधानुकूलत्वं तदा तद्गर्भवृत्तिलक्षणा लक्षणायामव्याप्तमेव स्यात्, अतएव 'किञ्चेत्याद्यप्ययुक्तं शक्तेः शाब्दानुभवविशेषजनकतावच्छेदकत्वेऽपि शक्तिं विना तदतिरिक्तानुभव-विशेषजनकत्वे व्याघातविरहात्। वस्तुतोऽनुभवजनकतावच्छेदकत्वं न शक्ते-रन्यथा अशक्येऽपि शक्तिभ्रमेणान्वयबोधकत्वे उक्तव्याघातापत्तेः, किन्तु शक्ति-मत्तया ज्ञातत्वं तथा, एवञ्च वृत्तिमत्तया ज्ञातत्वमेव तथास्तु, सामान्यत्वेन लाघवात्, अतएव तैरप्युक्तं 'सामान्यतो लक्षितेति।

नव्यास्तु लाक्षणिकमप्यनुभावकम्। न चैवं ज्ञाने शक्तिः शक्यत्वादिति लक्ष्यमपि शक्यं स्यात्, प्रवाहशक्तत्वेन ज्ञातादेव गङ्गापदाच्छक्तिं विनापि तीरानुभवसम्भवात्। यथा परेषां जातिशक्तत्वेन ज्ञातादेव व्यक्त्यनुभवसम्भवात् यथा वास्माकं पदार्थशक्तत्वेन ज्ञातादेवान्वयानुभवसम्भवान्न व्यक्त्यन्वययोः शक्तिरिति। क्वचिद्योगार्थान्वयसम्भवेऽपि रूढ़िपूर्विका लक्षणा यथा मण्डपं भोजयेत्यत्र रूढ्यर्थगृहविशेषस्यान्वयायोग्यत्वात् रूढ्यर्थगृहसम्बन्धिजनज्ञानं लक्षणया

कर्य्यादुक्तं। वस्तुतस्तु घोषादिपदे गङ्गापदार्थान्वितस्वार्थान्वयानुभावकत्वमेवैकवाक्यत्वं प्रमाणत्वञ्च गृहीतं तदुभयरक्षार्थमेव लक्षणाकल्पनमिति सारं। 'क्वचिदिति, अत्रानुभवोमा निर्णायकः अनुभवएव विमतेः मीमांसकस्य मते सम्बन्धितावच्छेदकमण्डपानकर्तृत्वचैत्रत्वादिना उपस्थितिः यौगिकार्थान्वये योगोपस्थितमण्डपानकर्तृ-

एतदनुरोधादेव स्वमतमाह, 'नव्यास्त्विति। एतेन लाक्षणिकाननुभावकत्वप्रवादोऽन्वयप्रतियोग्यनुपस्थापकतया प्राचीनमतेनेति सूचितं। यदि च नैवं तदा नीलं घटं करोतीत्यादौ नील-घटशब्दयोर्लाक्षणिकत्वेन तदुपस्थाप्ययोरभेदानुभवो न स्यात् तस्य स्वशक्यान्वयाभावेन विभक्त्यापि तदनुपपत्तेः, नदीत्यादौ प्रकृति-प्रत्यययोरपि लाक्षणिकत्वसम्भवाच्च। तथाचार्थस्मारकतायां प्राचीनमते विभक्त्यर्थान्वयानुपपत्तिवत् लक्ष्ययोरन्वयानुपपत्तिरपि दोषो द्रष्टव्य इति युक्तमुत्पश्यामः। 'योगार्थान्वयसम्भवेऽपीति, तथाचान्वयानुप-

मण्डपपदेन क्रियते न तु योगान्मण्डपानकर्त्तुरिति मीमांसकाः। ननु रूढिपूर्विका लक्षणा न युक्ता श्रौतार्थपरत्वे सम्भवति लक्षणाया अन्याय्यत्वात् रूढ्या योगापहारान्न मुख्यतेति चेत्। न। अपहारो हि न यौगिकार्थस्मृतिः, स्मारकसम्बन्धस्य शक्तेः रूढ्यर्थ इव यौगिकेऽपि सत्त्वात्। नापि योगार्थस्य प्रथममस्मृतिः, यदैव हि समुदायेन स्वार्थस्मरणं तदा अवयवैरपि स्मारकसमुदायज्ञाने अवयवानामपि विषयत्वात्, प्रत्युतावयवैरेव शीघ्रं स्वार्थस्मरणम् अवयवज्ञानपूर्वकत्वात् समुदायज्ञानस्य। विलम्बेऽपि यदा रूढ्यर्थेन लक्षणया स्वार्थसम्बन्धिस्मरणं तदा यौगिकार्थस्मरणं

त्वेनैव। न च मण्डपानकर्तृत्वेनोपस्थितौ द्वयोरविशेषः, तन्मते मण्डपानकर्तृत्वस्य पदार्थत्वादन्यत्र वाक्यार्थत्वादिति भावः। 'स्मारके-ति, ननु शक्त्यभावादस्मृतिर्नोक्ता अपि तु रूढ्यर्थस्मृत्या वा तत्सा-मग्र्या वा प्रतिबन्धात् जात्यपहारस्य प्रतिबन्धपर्य्यायत्वात् तथाच किं शक्तिमत्त्वकथनेनापीति, मैवं, भावानवगमात् प्रतिबन्धो हि ज्ञानात् तत्सामग्र्या वा फलविरोधे सति स्यात्। न च स प्रकृते,

---

पत्तिरेव न लक्षणावीजमित्यभिसन्धिप्रसङ्गादिदमुक्तमित्यन्ये। नैयायिकः प्रङ्क्ते, 'नन्विति, 'अवयवज्ञानपूर्व्वकत्वादिति। यद्यपि समूहालम्बनस्मृतौ न तत्पूर्व्वकत्वं, तथापि पूर्व्ववर्णानां उत्तरवर्णानुभवविषयत्वमभ्युपेत्येदमुक्तं,

वाच्यं तथाचौत्सर्गिकान्वयाभिधायकत्वानुरोधादयौगिकार्थान्वयावबोधोऽस्तु। नापि स्मृतस्याप्यवयवार्थस्यान्वयबोधबहिर्भूतत्वमपहारः, योग्यतादिबलादवयवार्थस्यान्वयबोधः स्यादेव, न तु रूढ्यर्थस्यायोग्यत्वात्। नापि लक्षणया स्मारितस्यार्थस्य, लाक्षणिकस्यानभिधायकत्वात्। अथ मण्डपशब्दस्य गृहविशेषे प्रयोगदर्शनादवयवशक्त्या च तदनिर्वाहात्तच समुदाये

---

समूहालम्बनसम्भवात्, जात्यपहारः फलाभावो वा स्तः स च सामग्रीसत्त्वे सम्भवतीति एवमग्रेऽपि। 'तथाचेति अन्वयानुभावकत्वं पदानामौत्सर्गिकं तद्बाधकेन लक्षणास्थले त्यज्यते तत्रान्वयप्रतियोग्युपस्थापकः पदार्थ एवेति तत्स्मारकत्वाभावान्नानुभावकत्वं इत्यर्थः। 'योग्यतेति, अत्रापहारः फलाभावो यदि कारणाभावात् तच्चेदमुत्तरं, अथ प्रतिबन्धात् तत्राह, 'न त्विति, रूढ्यर्थान्वयसामग्र्याः प्रतिबन्धिकाया अभावादिति भावः। 'न तु रूढ्यर्थस्येति, अत्रान्वय इति शेषः, एवमग्रेऽपि, तथाच तदनुभवसामग्र्यपि न प्रतिबन्धिकेति भावः। ननु प्रतिबन्धः फलाभावकल्प्यो न तु फलविरोधमात्रकल्प्यः फलाभावः प्रयोगान्निश्चीयत इति स्मारकशक्तेः सत्त्वमेव यदुक्तं तन्नेत्याशङ्कते, 'अथेति, तप्ते पयसि दध्यानयती-

---

'लाक्षणिकस्येति, तथाचौत्सर्गिकं पदानामन्विताभिधायकत्वं भज्येतेति भावः। मीमांसकः शङ्कते, 'अथेति, 'प्रयोगदर्शनादिति पराभिमानः। अवयवमात्रव्युत्पन्नस्य तत्प्रयोगे बाधकाभावात् प्रयोगप्राचूर्य्याभावमभ्युपेत्येदमित्यन्ये।

शक्तिकल्पना तथाच मण्डपानकर्त्तरि सत्यपि योगे प्रयोगादर्शनात्तत्रावयवशक्तिकुण्ठनमपि कल्प्यं कार्यानुरोधित्वात् कल्पनायाः। अन्यथा अनेकार्थरूढाक्षादिपदादिव क्वचित् मण्डपानकर्त्तुरप्यवगमः स्यात्। बहुव्रीहौ समुदायशक्तावपि नावयवशक्तीनां कुण्ठनम् अवयवार्थे लम्बकर्णादौ प्रयोगप्राचुर्य्यात्, कुण्ठनस्य प्रयोगाभावकल्प्यत्वात्, एवञ्च मण्डपादिपदेऽवयवशक्तेः कुण्ठितत्वात् रूढ्यर्थस्योपस्थितस्य परम्परयापि वाक्यार्थप्रतीत्यन्वयाय तत्पूर्विका लक्षणेति चेत्, न, तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमित्यत्रामिक्षाया उत्पत्तिशिष्टत्वेन विश्वेदेव-

त्यादेर्द्रव्यदेवतासम्बन्धात्मकयागप्रथमप्रापकत्वेन उत्पत्तिवाक्यत्वं प्रथमयागप्रापकवाक्यस्यैव उत्पत्तिवाक्यत्वात् तथाच तेनोत्पत्तिवाक्येन तप्ते पयसीत्यादिनैकदेशेनामिक्षाया उत्पत्तिशिष्टत्वं विहितं, तप्ते पयसि दध्यानयतीत्यादिना वाक्येनामिक्षोत्पत्तिः कथ्यते तथाचोत्पत्तिरुत्पत्तिवाक्यं। तेनैव विश्वेदेवदेवताकत्वमनुशिष्यते इति तदनुशिष्टत्वेनामिक्षाया विश्वेदेवदेवताकत्वं इति धीरुत्पत्तिशिष्टत्वेनेत्यादिफक्किकार्थः, एकत्रामिक्षाया अपरत्र विश्वेदेवदेवताकत्वं

आमिक्षाधिकरणविरोधमाह, 'तप्त इति, 'उत्पत्तीति, आमिक्षायोगोत्पत्तिवाक्यप्रतिपादितत्वेन द्रव्यदेवतासम्बन्धप्रतिपादकवाक्यस्योत्पत्ति-

देवताकत्वं, वाजमन्नमामिक्षारूपं तद्येषामस्ति ते विश्वे-देवा देवता इति चतुर्थ्यन्तवाजिपदाद्योगेनामिक्षा-रूपान्नयोगिनां विश्वेदेवानामुपस्थितेर्वाजिनस्यापि विश्वेदेवदेवताकत्वमेव। ननु वाजिपदात् रूढ्योपस्थि-तानामश्वानां वाजिने देवतात्वमिति सिद्धान्तः स न स्यात् रूढ्या योगापहारादश्वानामेव तत्र देवतात्वा-पत्तेः। न ह्यत्र लम्बकर्णादिवद्वाजिपदस्य विश्वेदेवेषु

विशेषणमिति विशेषः। 'वाजिनस्यापीति अन्योद्देशप्रवृत्तकृति-साध्यत्वेन क्व नाश्यतां क्व दूष्यतामित्याकाङ्क्षायां देवतान्तरकल्पने गौरवादुपस्थितानां विश्वेदेवानामेव कथञ्चिद्वाजिपदादुपस्थितानां तद्देवतात्वं कल्प्यत इति सिद्धान्तोऽत एव वाजिनापचारे पुनस्त-दुपादाने न प्रयत्नः तदुपादनस्याशास्त्रार्थत्वात् आमिक्षोत्पादनस्य विनियुक्तत्वात्। यदि च तत्र देवतान्तरं कल्प्येत तदा वाजिनाप-चारे तद्धोमाभावात् पुनर्वाजिनापचारावश्यकतापत्तौ शिष्टाचार-

वाक्यत्वादिति भावः। 'चतुर्थ्यन्तेति, तद्धिते चतुर्थ्यां वा देवतानुशिष्टप्रत्ययत्वस्य तुल्यत्वादिति भावः। 'वाजिनस्यापीति क्षीरसारपानीयस्यापीत्यर्थः। अन्योद्दे-शप्रवृत्तकृतिसाध्यतया क्व नाश्यतां क्व दूष्यतामित्याकाङ्क्षायां देवतान्तरकल्पने गौरवादुपस्थितानामेव विश्वेदेवानां योगेन वाजिपदादुपस्थितानां देवतात्वं कल्प्यत इति सिद्धान्तः, अतएव वाजिनापचारे न पुनस्तदुत्पादनप्रयत्नः तस्याशास्त्रार्थत्वात् आमिक्षोत्पादनस्य विनियुक्तत्वात्। यदि च तत्र देवतान्तरं कल्प्येत तदा वाजिनापचारे तद्धोमाभावात् पुनर्वाजिनावश्यकता-

प्रयोगप्राचुर्य्यमस्ति। अथान्वयप्रकारोविभक्त्योपनीयते, सा च यतः समभिव्याहृता तस्यान्वयं बोधयति विभक्तिश्च समुदायात्, अतः समुदायोपनीतस्य रूढ्यर्थस्यैवान्वयबोधोनावयवोपनीतस्येति चेत्, न, पङ्कजनिकर्तुरिव मण्डपानकर्तुरप्यन्वयबोधसम्भवात्। नन्ववयवार्थानां परस्परमन्वयोयोग्यतादिसापेक्षतया विलम्बितः रूढ्यर्थधीस्तु न तथेति चेत्, अस्तुतावदवयवार्थस्यान्वयधीर्विलम्बिता न तु स्मृतिरूपापि सा तथा, सा चान्वयबोधोपयोगिनी, एवञ्च यथा पङ्कजमानयेत्यत्र प्रथमं डार्थ-वाक्यार्थान्वयधीः ततस्तद-

---

विरोधः। न च विश्वेदेवदेवताकत्वेऽपि स दोषः, तदामिक्षयैव तत्प्रीतिसम्भवेनान्यथासिद्धोत्पत्तिकस्य वाजिनस्यापचारेऽपि न पुनस्तदाचरणं, स चायमनन्यथासिद्धोलाघवाद्युपष्टब्धः सिद्धान्तोभवदुक्तयुक्त्या नश्येदिति भावः। 'पङ्कजनीति, यद्यपि मन्दुरजेत्याद्युदाहरणं भवितुमर्हति पङ्केत्यादेः समुदायार्थपद्मविशेषणत्वे नीलं घटमित्यत्रेव साक्षात्तत्र विभक्त्यर्थानन्वयात्, तथापि पङ्केत्यादिविशेषणत्वं

पत्तौ शिष्टाचारविरोधः। न च विश्वेदेवदेवताकत्वेऽपि स दोषः, तदामिक्षयैव तत्प्रीतिसम्भवे अन्यथासिद्धोत्पत्तिकस्य वाजिनस्यापचारेऽपि न पुनस्तदाचरणं सोऽयं तव सिद्धान्तस्त्वदुक्तयुक्त्या भज्येतेति भावः। विश्वदेवतात्वाङ्गीकर्त्तृमिश्रमतन्तु न सिद्धान्त उक्तयुक्तेरिति निर्गर्वः। 'रूढ्यर्थस्यैवेति, परम्परयापीति शेषः।

न्वितजन्मधीः तदनु च परम्परया तथाभूतजन्मनि पङ्कपदार्थान्वयधीः कार्यान्वितव्युत्पत्त्यनुसारात् न तु सिद्धपङ्कजन्मकर्तृत्वानां प्रथममन्वयधीः तथा मण्डपादिपदेऽप्यस्ति। यदि च सिद्धार्थेऽप्यन्वयधीर्योग्यतादिवशात्तदा रूढ्यर्थावयवार्थानां स्मृताववयवार्थान्वयबोधसम्भवात्। रूढ्यर्थान्वितबोधस्येतरपदात्तदर्थस्मरणाकाङ्क्षा-योग्यतादिज्ञानसापेक्षतया विलम्बितत्वात्। अथ यावत्सु वर्णेष्वेका शक्तिस्तावतां वर्णानां स्मृतिरप्येकैव कार्यबलात् कल्प्यते, अत एकदा स्मृतसमुदायनिष्ठशक्तिस्मृतिः शीघ्रा अवयवशक्तीनान्तु स्मृतिर्विच्छिद्य कतिचिद्वर्णस्मृताविति विलम्ब इति चेत्, न, यथा हि मण्डपसमुदायगोचरैका स्मृतिस्तथा मण्डादिपदविषयापीति न कश्चिद्विशेषः अतः कथं योगाद्रूढेर्बलवत्त्वमिति। उच्यते। यदा मण्डपपदाद्गृहविशेषस्मृतिस्तदैव प्रथमं मण्डार्थोपस्थितिः तदुत्तर-

---

पक्षस्यापि सम्भवति। कामचारादित्यभिप्रेत्योक्तं 'उच्यत इति, मीमांसकैरर्थात् तत्सिद्धान्तमुपक्रम्यैव पूर्व्वपक्षावतारात्। 'प्रथमं मण्डार्थोपस्थितिरिति यद्यदाकाङ्क्षितमित्यादिक्रमेणान्वयधीरिति

---

'उच्यत इति, मीमांसकैरिति शेषः, 'तदुत्तरमिति, यद्यप्येतत्पराभिमानमात्रं मण्डपसमुदायगोचरस्मृतेर्मण्डादिगोचरतया तदैव तावद्गोचरसमूहालम्बनस्मृतिसम्भवात् तदिदं वक्ष्यति, 'प्रथमं रूढ्यर्थस्मृतिकाले

म्पिवत्यर्थस्य तदनन्तरं प्रत्ययार्थस्य ततो मण्डपानकर्तृत्वेन ज्ञातस्य स्मृतिः तदेवं रूढि-यौगिकयोर्बलाबलं शीघ्रविलम्बितधीकृतमेव, तथाच रूढ्यर्थस्य शीघ्रोपस्थितत्वाद्बलवत्त्वमौत्सर्गिकम्। यत्र तु प्रकरणादिना यौगिकार्थस्य शीघ्रन्धीविषयता तत्र रूढेर्योग एव बलवान्। यथा "अग्निर्वसुभिः सोमो रुद्रैरिन्द्रो मरुद्भिर्वरुण आदित्यैर्बृहस्पतिर्विश्वेदेवैरित्यत्र विश्वेदेवपदाद्योगेन सकलदेवप्रतिपादकात् प्रकरणवशेन सन्निहितवसु-रुद्र-मरुदादित्यरूपसकलदेवतानां शीघ्रं बुद्धि-

---

मते, यदा तु समूहालम्बनस्मृत्या युगपदेवान्वयधीस्तदापि वाक्यार्थोपस्थित्यपेक्षया पदार्थोपस्थितिस्त्वरितेति द्रष्टव्यं। अतएवाग्रे कल्पद्वयं स्वयमेव वक्ष्यति 'विश्वेदेवपदादिति। यद्यपि "आदित्या विश्ववसव इत्यादिकोषदर्शनाद्विश्वपदस्यैव पुरूरवोमाद्रवःप्रभृतिगणवाचित्वान्न रूढियोगसम्भवः उभयथापि विश्वदेव इति योग एव परन्तु पूर्व्वस्य विश्वपदस्य सकलवाचित्वं गणवाचित्वञ्चेत्यत्रपदस्यैव

---

वा स्मृतस्य मण्डाद्यवयवार्थस्येति, तथापि वाक्यार्थोपस्थित्यपेक्षया पदार्थोपस्थितिः शीघ्रा इत्यत्र तात्पर्य्यं। 'ज्ञातस्येति, यद्यपि ज्ञानमित्येव वस्तुसत् तथापि महावाक्यार्थानुभवकाले अवान्तरवाक्यार्थज्ञानस्यातीतत्वात् स्मृतिपर्य्यन्तमुक्तं, एवञ्च सिद्धान्तविरोधं परिहरति, 'यत्र त्विति, अतएवोत्सर्गोऽन्यथा नियम एव स्यादिति भावः। ननु सकलवाचिविश्वपदार्थानन्वयान्न यौगिकार्थान्वय इत्यत आह, 'सन्निहितेति, यथा सर्व्वेषां घटेन जलमाहर सर्व्वं ब्राह्मणं भोजयेत्यादौ प्रकरणाद्युपस्थिता-

ख्यता प्रकरणादवयवार्थे संस्कारोद्बोधात्, न तु पूरु-रवोमाद्रवःप्रभृतिषु गणेषु रूढादपि विश्वेदेवपदात्तेषां धीः। एवं सा वैश्वदेव्यामिक्षा वाजिभ्योवाजिनमित्यामिक्षारूपार्थस्योत्पत्तिशिष्टविश्वेदेवदेवताकत्वं ज्ञातं, वाजिभ्य इति चतुर्थ्यन्तपदादश्वे रूढादपि वाजमन्नं तद्यस्यास्तीति व्युत्पत्त्या वाजनामकामिक्षारूपान्नयोगिनां विश्वेदेवानाञ्च प्रकरणात् शीघ्रमुपस्थितिः। न च रूढ्याश्वानां, तेन वाजिनस्यापि विश्वेदेवदेवताकत्वं प्रतीयते। ननु रूढेर्बलवत्त्वादत्रापि रूढ्यर्थधीरेव स्यादिति चेत्, न, द्वयोरुपस्थितयोरनुपस्थितयोर्वा रूढिर्बलीयसी। अत्र तु प्रकरणरूपहेत्वन्तरादुद्बुद्धसंस्कारेण योगार्थ एव ज्ञाने सम्भृतसामग्री-

---

नानार्थतयैकार्थोपस्थापकप्रकरणापेक्षा, अतएव विश्वेभ्योदेवेभ्य इत्यादित्यागोऽन्यथा विश्वदेवेभ्य इति स्यात्। न चैवं देवेभ्य इति व्यर्थं, अग्नये कव्यवाहनायेति वच्चतुर्थीद्वयस्यैव देवतात्वादिति, तथापि विश्वदेवपदस्यापि तद्रूढत्वमस्तीति तदुदाहृतं। अतएव वा अस्वरसादाह, 'एवमिति, 'उपस्थितयोरिति उपस्थापकप्रकरणादिमतोरदतोर्वेत्यर्थः। 'अत्र त्विति योग एव प्रकरणसाचिव्यादुभयत्र न तत्सत्त्वं

नामेवान्वयस्तथात्रापीति भावः। 'उपस्थितयोरिति उपस्थापकप्रकरणादिमतोरतद्वतोरित्यर्थः, 'योगार्थ एवेति तत्रैव प्रकरणसाचिव्यादुभयत्र न

कः। ननु शाब्दानुभवे शब्दकारिता स्मृतिरुपयोगिनी न तु प्रकरणादिकारितापि उच्छृङ्खलज्ञानकारितायास्तस्या अन्विताभिधानानुपयोगादिति चेत्, न, प्रकरणादुद्बुद्धसंस्कारस्यैव शब्दादप्युद्बोध इति प्रकरणसहकृतशब्दादवयवार्थसंस्कारोद्बोधादवयवार्थस्मृतिः शब्दकारिता शीघ्रा वा न तु रूढ्यर्थस्मृतिः तत्र च संस्कारोद्बोधकाभावात्। न चैवं लोकेऽपि मण्डपादौ योगस्य बलवत्त्वान्न लक्षणेति वाच्यम्। प्रकरणाद्यभावे हि शीघ्रं रूढ्यर्थोपस्थितौ रूढिपूर्विका लक्षणा प्रकरणादिसत्त्वे तु मण्डपादिपदेऽपि योगार्थ एव बलीयानिति न लक्षणा। अतएव रूढिच्युतकप्रकरणादिसत्त्वेन रूढ्यर्थास्मरणान्न लक्षणा किन्तु योग एव। तस्मा-

---

न वोभयत्र तदभाव इत्यर्थः। 'तत्रेति संस्कारोद्बोधकप्रकरणाद्यभावादित्यर्थः। यद्यपि पदज्ञानमेवोद्बोधकं तथाप्यन्यतरस्मृतिमात्रहेतुसंस्कारोद्बोधकं प्रकरणाद्येव तच्चात्र प्रकृतमतस्तदभाव उक्तोऽन्यतरप्रकरणजन्यस्मृतेरपरस्मृतिप्रतिबन्धकत्वादिति भावः। 'अतएवेति,

---

तत्सत्त्वं न वा तदभाव इति रूढेर्बलवत्त्वमित्यर्थः। 'तत्रेति संस्कारोद्बोधकप्रकरणाद्यभावादित्यर्थः। यद्यपि पदज्ञानमेव तदुद्बोधकं अतएव प्रकरणादिकं विनापि पदात् पदार्थस्मृतिरनुभवसिद्धा, तथापि तत्प्रकरणस्यैव प्रतिबन्धकत्वमिति पराभिसन्धिः। 'अतएवेति, एवं तत्र रूढिच्युतकं

त्प्रकरणाद्यभावे रूढ्यर्थस्य शीघ्रमुपस्थितत्वाद्रूढिपूर्विका रूढ्यर्थसम्बन्धिनि लक्षणा प्रकरणादिसद्भावे तु रूढ्यर्थस्य न स्मृतिरिति योग एवेति तत्त्वम्। न चैवं प्रोद्गातॄणामित्यत्रोद्गीथाख्यसामभागयोगिनां त्रयाणां प्रकृतत्वाद्योगस्यैव बलवत्त्वं स्यात् न तु रूढिपूर्विकानुवाके लक्षणेति वाच्यम्। तत्र हि रूढौ योगे च प्रकरणस्य तुल्यत्वाद्रूढ्यर्थस्य शीघ्रोपस्थितत्वेन बलवत्त्वाद्रूढिपूर्व्विका लक्षणैव। अत्र वदन्ति। भवतु रूढ्यर्थस्य शीघ्रमुपस्थितिस्तथापि तस्यायोग्यत्वादनन्वयेन शक्त्योपस्थापितावयवार्थस्यैव योग्यतादिमत्त्वादन्वयबोधो भवेत्

न च तत्रापि लक्षणैव, तथा सति रूढिच्युतकस्य गुणत्वापत्तेः न हि महीमहेन्द्र इत्यत्र सहस्राचे रूढिच्युतौ दोषः, किन्तु तुल्यलक्षणया गुणत्वं। यदि परमेश्वरार्थकोयोगोभवेत्तदा योगार्थस्य

दूषणमपि नेति भावः। 'प्रकरणादिसद्भाव इति योगार्थसंस्कारोद्बोधकप्रकरणादिसत्त्वे तेनैव प्रतिबन्धान्न रूढ्यर्थस्मृतिरित्यर्थः। 'न चैवमिति, प्रोद्गातॄणां प्रथमभक्ष्यश्चमस इत्यत्रोद्गीथाख्यसामभागयोगिनामुद्गातृ-प्रस्तोतृ-प्रतिहर्त्तॄणां त्रयाणां प्रकृष्टोद्भावनयोगित्वेन योगार्थानामेव सताश्चमसरूपभक्ष्यान्वयः स्यात् तेषां प्रकृतत्वेन योगस्य बलवत्त्वात् न त्वेकस्मिन्नेवोद्गातरि रूढ्यर्थे बहुत्वान्वयानुपपत्त्या एकानुवाकगायकत्वेनोक्तत्रिषु लक्षणा स्यादित्यर्थः, 'अनुभावक इति क्वचित् पाठः तदापि प्रस्तोत्रादावित्यर्थः। 'अत्र वदन्तीति, नैयायिका इति शेषः, 'लाक्षणिकार्थस्येति मुख्यार्था-

प्रतिबन्धकस्य रूढ्यर्थान्वयबोधस्याभावात् लाक्षणिकार्थस्य विलम्बितोपस्थितिकत्वात्। नन्वेवं मण्डपं भोजयेत्यत्रावयवार्थपरत्वेऽवयवार्थानां प्रथममेकमन्विताभिधानं तदनन्तरं तस्य वाक्यार्थेऽपरमन्विताभिधानमिति तात्पर्य्ये गौरवं रूढिपूर्वकलक्षणायान्तु एकत्रान्विताभिधाने तात्पर्य्यमिति लाघवमिति चेत्। न। सामग्रीसत्त्वेनावयवार्थान्वयबोधस्यागौरवेणापहस्तयितुमशक्यत्वात्। लक्षणीये तात्पर्यग्राहकस्याभावात् भावे वा न्यायाभिधानस्य व्यर्थत्वात्। ननु रूढ्यर्थस्य प्रथमं स्मृतत्वात्तस्य च लक्षणया परम्परयापि प्रयोजकत्वसम्भवे तत्त्यागायोगाद्वरं लक्षितस्यान्वयबोध इति चेत्, तर्हि, प्रथमं रूढ्यर्थस्मरणसमकालं

---

विलम्बितोपस्थित्या स दोषो भवतीति भावः। नन्वयोग्यताज्ञानं रूढ्यार्थान्वयबोधप्रतिबन्धकं योगार्थधियोनाशकञ्च तथाच कथं योगार्थान्वयधीस्तथाच रूढिपूर्व्विका लक्षणैव युक्तेत्यत आह, 'लाक्षणिकेति, तया रूढ्यर्थोपस्थितेरपि नाशात् गुरुपदे ... त्यन्तरकल्पने

---

न्वयानुपपत्तिप्रतिसन्धानाद्यपेक्षया विलम्बादित्यर्थः। ननु लक्षणीये तात्पर्य्यग्रहादवयवार्थे च तदभावात् सामग्रीवैकल्यमित्यत आह, 'लक्षणीय इति, 'भावे वेति, न तर्हि न्यायलभ्या लक्षणा किन्तु तात्पर्य्यानुपपत्त्यैव तत्र चेष्टापत्तिरित्यर्थः। ननु रूढ्यर्थस्मृतिरेव प्रतिबन्धिका सामान्यतस्तथात्वे

वा स्मृतस्य मण्डाद्यवयवार्थस्य बाधकं विनान्वयरक्षार्थं तत्त्यागोऽपि नोचितः तत्त्यागहेतोः रूढ्यर्थान्वयबोधस्याभावात्। अथ रूढ्यर्थस्योपस्थितिरेव योगार्थान्वयबोधप्रतिबन्धिका न तु रूढ्यर्थान्वयबोधे गौरवात् यत्र च प्रकारणादिना योगार्थान्वयबोधस्तत्र रूढ्यर्थस्य स्मृतिरेव नास्ति संस्कारोद्बोधाभावात् किन्तु प्रकरण-शब्दाभ्यामवयवार्थस्य संस्कारोद्बोधनादवयवार्थस्यैव स्मृतिरिति चेत्, न, अवयवार्थस्य स्मृतावन्वयबोधे वा रूढ्यर्थस्य स्मृतेः प्रतिबन्धकत्वे मानाभावात् मण्डपपदस्य गृहपरत्वे रूढ्यर्थस्यान्वयबोधो योग्यत्वात् स्मृतस्याप्यवयवार्थस्य नान्वयबोधः

---

योगार्थधीरेव शीघ्रा अन्वयानुपपत्तिपुरःसरलक्ष्योपस्थितेर्विलम्बितत्वादिति भावः। 'प्रतिबन्धकत्वे मानाभावादिति साक्षादविरोधिनो ज्ञानस्य जनकज्ञानं विघटयत एव ज्ञानस्य प्रतिबन्धकत्वं तथाच रूढ्यर्थान्वयबोधोयोगार्थे आकाङ्क्षाविघटनद्वारा प्रतिबन्धको भवति जनितान्वयबोधस्य निराकाङ्क्षत्वात् न तु तदुपस्थितिमात्रमित्यर्थः। ननु परपदेन सहाक्षनाकाङ्क्षिता रूढ्यर्थेनैव कुतो न योगार्थान्वयो-

---

लाघवादित्याह, 'अथेति, 'प्रतिबन्धकत्वे मानाभावादिति, साक्षादविरोधिनो जनकज्ञानविघटकस्यैव प्रतिबन्धकत्वात् तदान्वयबोधे च जनितान्वयबोधत्वेन निराकाङ्क्षतया तथात्वमिति भावः। अनुमितौ च सिद्धेः प्रति-

क्लृप्तकारणयोग्यताविरहान्न तु रूढ्यर्थस्मृत्या प्रतिबन्धात्। इह तु रूढ्यर्थस्यायोग्यत्वान्नान्वयबोधः अवयवार्थस्य योग्यतादिसामग्रीसत्त्वादन्वयबोधो भवत्येव। यदि च रूढ्यर्थस्मृत्या प्रतिबन्धान्नावयवार्थस्मृतिरन्वयबोधो वा तदा त्वन्मते लम्बकर्णमानयेत्यत्र तद्गुणसंविज्ञाने बहुव्रीहाववयवार्थान्वयबोधो न भवेत् किन्तु रूढ्यर्थान्यपदार्थस्यैव। तस्माद्रूढेर्योगापहारिता रूढि-योगयोर्विरोधे मण्डपादौ न तु लम्बकर्णादौ। अपहारोऽप्ययमेव यद्योग्यतया रूढ्यर्थस्यान्वयबोधो भवति नावयवार्थस्यायोग्यत्वात्, न तु योग्यतादिमतोऽप्यवयवार्थस्यान्वयबोधो भवति अनन्वितरूढ्यर्थस्मृत्या प्रतिबन्धात्। तस्मान्न न्यायलभ्या रूढिपूर्विका लक्षणा किन्तु यत्र रूढ्यर्थसम्बन्धिनि तात्पर्य्यं माना-

---

यदि न रूढ्यर्थोपस्थितिमात्रं प्रतिबन्धकमत आह, 'मण्डपेति, 'किन्तु यत्रेति, 'प्रोद्गातॄणामित्यत्रापि रूढ्यर्थसम्बन्धिनि तात्पर्य्यग्रहात् लक्षणा अन्यथा तत्रापि योगार्थ एव बलवान् स्यादिति

---

बन्धकत्वं। रूढेर्योगापहारितेति प्रवादं सङ्गमयन्नाह, 'तस्मादिति, प्रकारान्तरेण रूढिपूर्व्विकां लक्षणामुपपादयन्नुपसंहरति, 'तस्मादिति, रूढ्यर्थग्रहसम्बन्धिपुरुषज्ञानञ्च पूर्व्वगृहीतसम्बन्धितावच्छेदकप्रकारकमित्यवधेयं। 'प्रोद्गातॄणामित्यत्रापि रूढ्यर्थसम्बन्धिनि तात्पर्य्यग्रहादेव लक्षणेति बोध्यं।

न्तरादवधार्य्यते तत्र रूढिपूर्व्विका लक्षणा रूढ्यर्थसम्बन्धिविशेषज्ञापनार्थं विशेषे तात्पर्य्यग्रहस्यावश्यकत्वात्। यत्र तु प्रकरणाद्यभावान्न योगबलवत्त्वं तत्र रूढ्यर्थस्य शीघ्रोपस्थितत्वात्तेनैवेतरपदार्थान्वय इति रूढेर्य्योगापहारः। उपपदधातुप्रत्ययार्थानां स्मृतिस्ततस्तेषां योग्यतादिज्ञानं ततोऽवयवार्थान्वयबोध इति यौगिकार्थस्य विलम्बितोपस्थितिकत्वात् यथा "वर्षासु रथकार आदधीतेत्यत्र रथकारशब्दाद्रूढ्या जातिविशेषवत्प्रतीतेः शीघ्रत्वात्तस्यैवाधानं प्रतीयते तदर्थं तदनुकूलविद्याप्रयुक्तिरपि तस्याक्षिप्यते न तु रथकारशब्दस्य योगोपस्थितरथकरणयोग्यान्यतोलब्धविद्यत्रैवर्णिकपरत्वं, विद्याप्रयुक्तिकल्पनातो रथकारशब्दे योगसङ्कोचमात्रस्य लघुत्वादिति युक्तं, शब्दार्थानु-

भावः। 'जातिविशेषेति "वैश्या-शूद्र्योस्तु राजन्यान्माहिष्यौ तौ सुतौ स्मृतौ। वैश्यात्तु करणः शूद्र्यां" इत्यादि जातिविशेषवाक्यतः "माहिष्येन करण्यान्तु रथकारः प्रजायते" इति जातिविशेषवाक्यतस्य शक्तिनिश्चयात्तत्तत्पदं रूढमित्यर्थः, 'न त्विति, तथासति "कृतेनाप्यन्त्यजन्मन इत्यादिश्रुतावप्यन्त्यजन्मपदं विद्याप्रयुक्तिकल्पना-

'न त्विति, अन्यथा "कृतेनाप्यन्त्यजन्मन इति श्रुतेरन्त्यजन्मपदं विद्याप्रयुक्तिभयेन लक्षणादिनान्यपरम्भवेदिति भावः। श्राद्धादौ तु शूद्रादीनां न विद्या-

रोधेन हि कल्पना न तु कल्पनाभयेन शब्दार्थत्यागः प्रमाणशब्दमूलकत्वेन फलमुखगौरवस्यादोषत्वात्। अतएव च क्रतुविशेषे "हिरण्मयौ प्राकाशावध्वर्यवे

---

भयेन लक्षणादिनाप्यन्यपरं भवेदिति भावः। 'फलमुखेति विद्याप्रयुक्तिकल्पनाया हि रथकारस्य जातिविशेषवत एवाधानप्राप्तिः फलं तथाच तत्फलमाश्रित्य यद्गौरवज्ञानं तत्तामेव न व्याहन्त्युपजीव्यविरोधादित्यर्थः, 'हिरण्मयाविति, ज्योतिष्टोमे प्रकृतौ तं शतेन दीक्षयतीति शतं गावोदक्षिणात्वेन श्रुताः, तत्र शोडषर्त्विजः किं समुदायेन सम्प्रदानमेकदेशस्य वैकदेशेन वा इति संशये "परिषदि दत्तमदत्तमिति सूत्रेण समुदायदानं निषिद्धं, दानं हि यमुद्दिश्य त्यागस्तस्य स्वीकारेण निर्व्वहति, न हि चैत्रमुद्दिश्य त्यक्ते मैत्रस्वीकारेण दाननिर्व्वाहः, स्वीकारश्च ज्ञानविशेषः। न च समुदायमुद्दिश्य त्यक्तेऽपि समुदायस्य स्वीकारः सम्भवति, ज्ञानस्य प्रत्येकनिष्ठत्वेन समुदायवृत्त्यभावात् तथाच एकदेशस्य सम्प्रदानता वाच्या सा च "समं स्यादश्रुतत्वादितिन्यायेन समांशकल्पनया वाच्या समांशता चासम्भाविनी शोडषसु षट्कृत्वा भागपरिकल्पनया गोषतुष्टयस्योद्वृत्तत्वात्, तथाच "सर्व्वेषामर्द्धिनोमुख्या द्वितीयास्तु तदर्द्धिनः। तृतीयिनस्तृतीयास्तु स्तुर्यास्त्वेकपादिनः" ॥ इह षोडशर्त्त्विजां

---

प्रयुक्तिकल्पनं "अमन्त्रस्य तु शूद्रस्येतिविशेषश्रुतेरिति ध्येयं। 'फलमुखेति, विद्याप्रयुक्तिकल्पनाया रथकारस्याधानप्राप्तिः फलं, तथाच तत्फलमाश्रित्य यद्गौरवज्ञानं तत्तज्ज्ञानमेव न व्याहतं उपजीव्यविरोधादित्यर्थः। न च निषेधविरोधः, न हिंस्यादित्यादिवत्तस्य विशेषपरत्वात्। 'अतएवेति,

चत्वारोमुख्यास्तेषामर्द्धभागप्राप्तौ भागानुरोधादेकदेशवाचकार्द्धपदेनाष्टचत्वारिंशद्गोरूपस्थापनादपरचतुर्णां चतुर्विंशतिरपरचतुर्णां षोडश अपरचतुर्णां द्वादशेति कृत्वा भागकल्पना एवं सत्यध्वर्य्यीयजुर्वेदिकुण्डमुख्यस्य प्राकाशस्वत्वविधिना तदीयभागद्वादशगोषु न गोशतं दक्षिणा, तथाहि कात्यायनसूत्रं "द्वादश द्वादशान्येभ्यः षट् षट् द्वितीयेभ्यश्चतस्रश्चतस्रस्तृतीयेभ्यस्तिस्रस्तिस्र इतरेभ्यः" इत्यादिक्रमेण षोडशानां भागाः कृप्तास्तद्विकृतावभिषेचनीये प्रकृतिधर्म्मग्राहकतया तद्वदेव दक्षिणाप्राप्तौ हिरण्मयौ प्राकाशावध्वर्य्यवे दक्षिणां ददातीत्यध्वर्य्यो प्राकाशस्वत्वविधौ ब्राह्मणेभ्योदधि दीयतां तक्रं कौण्डिन्यायेतिवत् सामान्य-विशेषन्यायेन सामान्यदक्षिणायां तस्य भागबाध इत्यर्थः। ननु स्वत्वलक्षणः सम्बन्धोविधीयत इत्यसङ्गतं

---

क्रतुविशेषे ज्योतिष्टोमविकृतिभूते अभिषेचनीये प्रकृतौ ज्योतिष्टोमे तं शतेन दीक्षयतीति शतं गावो दक्षिणात्वेन श्रुताः, तत्र षोड़शर्त्विजः किं समुदायेन सम्प्रदानमेकदेशेन वेति संशये परिषदि दत्तमदत्तमिति समुदायदानं निषिद्धं, दानं हि यमुद्दिश्य स्वस्वत्यागस्तत्स्वीकारेण निर्व्वहति, न हि चैत्रमुद्दिश्य त्यक्ते मैत्रस्वीकारेण दाननिर्व्वाहः, स्वीकारश्च ज्ञानविशेषः। न च समुदायमुद्दिश्य त्यक्ते समुदायस्य स्वीकारः सम्भवति, ज्ञानस्य प्रत्येकनिष्ठत्वेन समुदाये वृत्त्यभावात् तथाचैकदेशस्य सम्प्रदानता वाच्या सा च "समं स्यादश्रुतत्वादिति समांशकल्पनया प्रसक्ता, समांशता चासम्भाविनी। षोड़शसु षट् कृत्वा भागकल्पनया गोचतुष्टयस्योद्वृत्तत्वात् "सर्व्वेषामर्द्धिनो मुख्याः द्वितीयास्तु तदर्द्धिनः। तृतीयिनस्तृतीयास्तु चतुर्थास्त्वेकपादिनः"॥ इत्यादि मुख्यानामध्वर्य्युप्रभृतीनां चतुर्णामर्द्धभागानुरोधादष्टचत्वारिंशद्गोषु साम्ये तथा द्वितीयानां प्रस्तोत्रादीनां चतुर्णां तदर्द्धे साम्ये

दक्षिणां ददातीति श्रूयते, तत्राध्वर्युशब्दाद्रूढ्या ऋत्विग्विशेषस्य शीघ्रमुपस्थितेः तस्यैव प्राकाशस्य स्वत्वलक्षणसम्बन्धो विधीयते ददातीत्यनुवादः। तेन क्रतुदक्षिणायामध्वर्युभागमात्रबाधः अन्येषामृत्विजां प्राकाशस्वत्वाभावात् क्रतुदक्षिणायामन्वयः। यदि चा-

---

ददातीतिश्रुतेर्दानस्यैव विधेयत्वादित्यत आह, 'ददातीति सामान्यतोयज्ञाङ्गवस्तूनामृत्विग्भ्योदानस्य विधानादित्यर्थः, 'यदि चेति, यस्मै कस्मैचित् ऋत्विजे प्राकाशदाने तस्य तद्भागबाधापत्तेः तथा-

---

तथा तृतीयानां नेत्रादीनां चतुर्णां दक्षिणार्द्धस्य तृतीयांशे साम्ये तथा चतुर्थानामुन्नेत्रादीनां चतुर्णां दक्षिणार्द्धस्य चतुर्थांशे साम्ये तद्विकृतावभिषेचनीये प्रकृतिधर्म्मग्राहकतया तद्वदेव दक्षिणाप्राप्तौ "हिरण्मयौ प्रकाशावध्वर्य्यवे दक्षिणां ददातीत्यादिना अध्वर्य्वोः प्राकाशयोश्च नैरन्तर्य्येणोपस्थितयोः सम्बन्धयोग्ययोरन्वयाकाङ्क्षिणोः स्व-स्वामिभावेनान्वयो विधीयते। तथाच प्राकाशावध्वर्य्वोः स्वीकार्य्यावित्यर्थः पर्य्यवस्यति। न च तस्मै तावद्दत्तौ स्वीकर्त्तुं प्रभवति, इत्यर्थत एव तस्मै तयोर्दानेऽप्यवगते पश्चादर्थापत्तिप्रतीतार्थसमर्पणाय ददातिरयमर्थवादविधया प्रवर्त्तत इत्यनुवाद इत्युच्यते, एवञ्चाध्वर्य्वोः प्राकाशस्वत्वविधौ ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेतिवत् सामान्यविशेषन्यायेन सामान्यदक्षिणायामध्वर्युभागमात्रबाध इत्यखण्डनकार्थः।

केचित्तु सामान्यतो यज्ञवस्तूनां ऋत्विग्भ्यो दानस्य विधानात् अत्र दानं न विधेयं किन्तु स्वत्वलक्षणः सम्बन्ध एवेति ददातीत्यर्थानुवाद इत्याहुः।

एवञ्चाभिषेचनीये अध्वर्युभागन्यूनैव दक्षिणा तद्भागो मुख्यैरेव वा त्रिभिर्ग्राह्य इति विद्वद्भिर्विवेचनीयं। 'यदि चेति, यदि च परिषदि न दानं

ध्वरं युनक्तीतियोगोपस्थित ऋत्विङ्मात्रे प्राकाशसम्बन्धविधिः स्यात्तदा सर्वेषामेव ऋत्विजां क्रतुदक्षिणाबाधो नाध्वर्युभागमात्रस्य। नन्वेवं स्वर्गकामो यजेतेत्यत्र स्वर्गकामशब्दात् स्वर्गकामत्वेन स्त्री-शूद्रयोरप्युपस्थितेरधिकारो बोध्येत शब्दार्थानुरोधाद्विद्याप्रयुक्तिरपि तयोराक्षिप्येतेति चेत् । न । स्त्री-शूद्रयोर्विद्यानिषेधात् स्वर्गकामपदस्य स्त्री-शूद्रेतरपरत्वं तेन

---

चाचारविरोधोऽन्यथा इष्टापत्तिरिति भावः । 'स्त्री-शूद्रयोरिति, न च विद्यापदमेव यज्ञाङ्गभूतविद्यातिरिक्तविद्यापरं कल्प्यतां, यद्वा स्त्री-शूद्रपदं स्वर्गकामेतरस्त्री-शूद्रपरं रथकारादिविद्याप्रयुक्तिकल्पनानुरोधेन स्त्री-शूद्रपदसङ्कोचस्यावश्यकत्वादिति वाच्यं । प्रसक्तं हि प्रतिषिध्यते, न च स्त्री-शूद्रयोः स्वर्गकामत्वेन सामान्यतो विधिं विना अन्यत् प्रसञ्जकमस्ति, विद्यायास्तदध्यापनस्योपनयनाभावेन निषेधात्तदध्ययनाप्रसक्तेस्तथाच स्वर्गकामत्वेन सामान्यतः प्रसङ्गेन स्त्री-

---

यस्मै कस्मैचित् ऋत्विजे प्राकाशदाने तद्भागबाधापत्तेस्तत्रापि भागकल्पनापत्तेर्वेति भावः । 'स्त्री-शूद्रयोरिति, न च विद्यापदमेव यज्ञाङ्गभूतविद्यातिरिक्तविद्यापरं कल्प्यतां, स्त्री-शूद्रपदं वा स्वर्गकामेतरस्त्री-शूद्रपरं, रथकारादिविद्याप्रयुक्तिकल्पनानुरोधेन स्त्री-शूद्रपदसङ्कोचस्यावश्यकत्वादिति वाच्यं । प्रसक्तं हि प्रतिषिध्यते, न च स्त्री-शूद्रयोः स्वर्गकामत्वेन सामान्यतो विधिं विना अन्यत् प्रसञ्जकमस्ति, विद्यायाः तदध्यापनस्योपनयनाभावेन निषेधादध्ययनाप्रसक्तेः तथाच स्वर्गकामत्वेन सामान्यतः प्रसक्ते स्त्री-शूद्रयो-

स्वर्गकामपदार्थे सङ्कोचमात्रं न बाधः सङ्कोचे च न शब्दार्थहानं स्वर्गकामत्रैवर्णिकस्याधिकारबोधनात् रथकारशब्दे च पदार्थमात्रस्यैव बाधः स्यात्। यद्यपि सङ्कोचोऽप्येकदेशबाध एवेति सोऽपि न युक्तः तदंशे शब्दार्थहानप्रसङ्गात्, तथापि सामान्यबाधादेकदेशबाध एव लघुरिति। लक्षणा च पदवृत्तिर्वृत्तित्वात् शक्तिवत्। ननु गभीरायां नद्यां घोष इत्यत्र नैकपदे लक्षणा तीरस्यानदीत्वादगभीरत्वाच्च मुख्य-लक्ष्ययो-

---

शूद्रयोस्तन्निषेधो न वैपरीत्यं कल्पयत्युपजीव्यविरोधादिति भावः। 'पदवृत्तिः' शक्यवच्छेदकावच्छिन्नवर्णवृत्तिः, गम्भीरपदलक्षणायां तेन तीरस्य लक्ष्यत्वे नदीपदं प्रकृतमेव, तथाच तयोरन्वये दोषमाह, 'तीरस्येति, एवमग्रेऽपि। 'वाक्यार्थेति वाक्यार्थोगम्भीरनदी-तत्स-

---

त्तन्निषेधो न वैपरीत्यं कल्पयतीत्युपजीव्यविरोधादिति वदन्ति। तच्चिन्त्यं, रागादिप्राप्तनिषेधेनापि चरितार्थत्वादिति। 'तथापीति, यद्यप्येकत्रोभयप्रसक्तौ लाघवमिदं विनिगमकं स्यादत्र च विषयभेदस्तथाचैकदेशबाधोऽप्युक्तयुक्तेरसङ्गतस्तथापि विद्यानिषेधादेवैकदेशबाध इत्यत्रैव तात्पर्य्यं। न च विद्यानिषेधेऽपि श्राद्धवदमन्त्र एव यागस्तयोरस्त्विति वाच्यं। अमन्त्रश्राद्धाभिप्रायकशब्दवदमन्त्रयागाभिप्रायकशब्दाभावादिति भावः। 'पदवृत्तिः' शक्ततावच्छेदकावच्छिन्नवर्णवृत्तिरित्यर्थः, तेन वाक्यवृत्तित्वेऽपि पदवृत्तित्वान्न सिद्धसाधनं। पदस्यैव वृत्तिरित्यर्थ इत्यन्ये। गम्भीरपदलक्षणायां तेन तीरस्य लक्ष्यत्वे नदीपदं प्रकृतमेव तथाच तयोरन्योन्यान्वये दोषमाह,

रनन्वयापत्तेः। नापि पदद्वये प्रत्येकशक्त्या सम्बन्धिनो गभीरनदीतीरस्याप्राप्तिप्रसङ्गात्। तस्माद्गभीर-नद्यो-रन्वयबोधानन्तरं वाक्येन स्वज्ञाप्यगभीरनद्यास्तीरं लक्ष्यते। वाक्यार्थगभीरनदीसम्बन्धिनस्तीरत्वेन प्रतीतेः। न च वाक्ये शक्त्यभावात्तत्सम्बन्धं विना न लक्षणेति वाच्यम्। स्वज्ञाप्यसम्बन्ध एव हि लक्ष्यस्मृतौ

---

म्बन्धिन इत्यर्थः, 'स्वज्ञाप्येति स्वज्ञापकतावच्छेदकसम्बन्धविषयसम्बन्ध-इत्यर्थः, अन्यथा यथाश्रुते अपभ्रंशगङ्गापदेन समभिव्याहृतघोष-पदादौ स्वज्ञाप्यसम्बन्धेन तीरज्ञापकापभ्रंशस्य लाक्षणिकत्वे साधुत्वस्यापि वज्रलेपतया यज्ञप्रयोगापत्तेः, विवक्षिते तु ज्ञापकतावच्छेदकसम्बन्धः शक्तिस्तच्च नास्ति किन्तु तदारोपादुपस्थापकत्वमिति नातिप्रसङ्गः, प्रकृते च गम्भीरपदसमभिव्याहृतनदीशक्तत्वमेव विशिष्टबोधकतावच्छेदकं नदीपदस्य तद्विषयश्च गम्भीरपदोपस्थापितार्था-

---

'तीरस्येति। नदीपदलक्षणायां दोषमाह, 'अगभीरत्वाच्चेति 'वाक्यार्थेति वाक्यार्थो गभीरनदी तत्सम्बन्धिन इत्यर्थः, 'स्वज्ञाप्येति। नन्वेवमपभ्रंशेऽपि लक्षणा स्यात्। न चेष्टापत्तिः, तथा सति वृत्तिमत्त्वेन तस्यापि साधुत्वापत्तौ यज्ञप्रयोगापत्तेः वृत्तेरेव पदसाधुत्वात्मकत्वादिति चेत्, न, सिद्धान्तस्यापि दोषस्य बोध्यत्वात्। न चोक्तदोषभिया सिद्धान्तेऽपि स्वज्ञाप्यसम्बन्ध एव तथा वाच्यः तथाच दोषतौल्यं अतएव स्वज्ञाप्यगभीरनद्यास्तीरं लक्षयतीति वक्ष्यतीति वाच्यं। स्वशक्तिज्ञाप्यत्वस्य तदर्थत्वात्। न च गौरवं, उक्तदोषापत्त्या प्रामाणिकत्वादिति।

केचित्तु स्वशक्यसम्बन्ध एव तदर्थः, नद्या इव गभीरनद्या अपि शक्य-

तत्त्वं। न तु सम्बन्धविशेषः शक्तिर्गौरवात्‌ लाघवञ्च स्वशक्यवद्वाक्यार्थोऽपि। घोष-नद्योरन्वयबोधाद्गभीर-नद्योरन्वयबोध एव नेति चेत्‌, न, प्रथमोपस्थितत्वेन गभीर-नद्योरन्वयबोधस्य शीघ्रत्वात्‌। घोषे तदनुपपत्तिज्ञानाधीनतया तीरस्मृतिविलम्बेन नदी-घोषयोरन्वयबोधे विलम्बात्‌। न चैवं वाक्यभेदः, कर्त्तव्यान्विताभिधानान्तरानुकूलत्वेन वाक्यैकवाक्यतावच्छेदे-

मत्तिमती नदीति न काप्यनुपपत्तिः। अतएव 'न तु सम्बन्धविशेषः शक्तिरित्यग्रिमग्रन्थोऽपि सङ्गच्छते, अन्यथा प्राक्‌ सम्बन्धस्याप्रवेशे कस्य विशेषः शक्तिर्येन गौरवं निर्वहेदिति भावः। 'प्रथमोपस्थितत्वेनेत्यापाततः, वस्तुतस्तु नदी-घोषयोरन्वयबोधे विशिष्टनदीसम्बन्धितीराप्राप्तिप्रसङ्गादित्युक्तमेव दूषणं अन्यथा घोषोनद्यां गभीरायामित्यत्र का गतिरित्यवधेयं। 'वाक्यैकवाक्यतावदिति वाक्यैकवाक्यतायामवान्तरवाक्यार्थो महावाक्यार्थे विशेषणतया भासते इह तु

त्वात्‌, तात्पर्य्यवशेन चान्वयनियमात्‌ अन्यथा तीरान्तरान्वयोऽपि स्यात्‌, तात्पर्य्यग्राहकञ्च गभीरपदमित्याहुः।

तदर्थत्वमेवाशङ्क्य आपातत उक्तमेव गौरवमाह, 'न त्विति न तु शक्तिगर्भसम्बन्धविशेष इत्यर्थः, यथाश्रुतस्यालग्नकत्वात्‌। 'प्रथमोपस्थितत्वेनेत्यापाततः, वस्तुतो गभीर-नद्योरन्वयबोधाभावे विशिष्टनदीसम्बन्धितीराप्राप्तिप्रसङ्गादित्युक्तमेव दूषणमन्यथा घोषो नद्यां गभीरायामित्यत्र का गतिरित्यवधेयं। 'वाक्यैकवाक्यतावदिति, तत्रावान्तरवाक्यार्थो विशेषणतया

कवाक्यत्वादिति। अत्र नव्याः। वाक्यस्य शक्याभावेन शक्यसम्बन्धाभावान्न लक्षणा। अथान्वयबोधकं वाक्यं पदानि हि सम्भूयार्थान्वयं बोधयन्ति न प्रत्येकमात्रमिति चेत्। न। पदं हि स्वार्थान्वयं बोधयति न तु समूहः समूहे स्वार्थाभावात्। न च पदेषु व्यासज्यवृत्तिर्बोधकता, न वेतरपदावच्छिन्न इतरपदे गौरवात्। किञ्च गभीरायां नद्यामित्यत्र विभक्तिं विना अन्वयबोधाभावाद्विभक्त्यन्तर्भावेन वाक्यत्वं, तथाच लक्ष्ये विभक्त्यर्थान्वयो न स्यात् लक्षकार्थस्य लक्ष्येऽनन्वय-

न तथेत्यभिप्रायः, साम्यन्तु महावाक्यार्थबोधानुकूलत्वमात्रेणेत्यर्थः, समुदितानि पदानि वाक्यमतस्तत्र लक्षणा तस्य शक्यसत्त्वात् समुदायोवाक्यमेव न तस्याशब्दात्मकत्वादित्यस्वरसं 'नव्या इत्यनेन सूचयन्नेव सिद्धान्तयति, 'अत्रेति। ननु समुदायोऽस्त्वनर्थकः समुदितानामर्थोऽस्त्येवेत्यत आह, 'न च पदेष्विति, 'गौरवादिति, पदत्वेनैवानुभावकत्वादिति भावः। ननु बोधकता यदि स्वरूपयोग्यता तदेदं यदा तु फलोपधानं तदा इतरपदावच्छिन्ने एवमुक्तमित्युक्तिसम्भवमात्रास्वरसादाह, 'किञ्चेति, फलोपधानस्य विभक्तिसाध्यत्वादिति भावः। 'लक्षकार्थस्य' लक्षकपदशक्यस्य, 'लक्ष्य इति शक्ताभिप्रायं,

---

भासते इह तु नेति तद्वदित्युक्तं, साम्यन्तु महावाक्यार्थबोधानुकूलत्वमात्रेणेति ध्येयं। ननु फलोपधानरूपबोधकत्वमितरपदावच्छिन्न एवेत्यरुचेराह, 'किञ्चेति, 'लक्षकार्थस्य' लक्षकपदशक्यस्य। ननु अभेदान्वये विभक्तिरपि

नियमात्। नापि गभीरायां नदीतिविभक्तिशून्ये लक्षणा अन्वयस्य तद्व्याप्यत्वाद्विभक्तिश्च प्रकृतिनदीगतं स्वार्थमभिदध्यान्न गभीरनदीगतं तस्या अप्रकृतित्वात्। वस्तुतः पदलक्षणयैवोपपत्तौ न वाक्यलक्षणा, तथा हि गभीर-नद्योरन्वयबोधोत्तरं नदीपदं गभीरपदं वा स्वव्याप्यगभीरनद्यास्तीरं लक्षयति न वाक्यम्। न च विनिगमकाभावात् पदयोर्लक्षणाद्वयं वाक्ये चैकैव लक्षणेति युक्तं, पदे क्लृप्तत्वाद्वाक्यापेक्षया लघुत्वाच्च पदएव लक्षणा अन्यथा विनिगमकाभा-

---

वस्तुतोलक्ष्योपस्थितौ वृत्तिद्वयविरोधेन शक्यानुपस्थित्या शक्यान्वयनियमादित्येव विवेचितं। ननु अभेदान्वये विभक्तिरपि न बोधिकेत्यरुचेर्दोषान्तरमाह, 'विभक्तिश्चेति। नन्वेवं नीलं घटमानयेत्यत्रापि विशिष्टकर्म्मता न प्रतीयेतेत्यरुचेर्मूलसिद्धान्तमाह, 'वस्तुत इति। ननु ज्ञापकत्वं लक्षणामूलं तच्चेद्वाक्य-पदसाधारणं तदुभयत्रापि साम्यादित्याशङ्क्य निषेधति, 'न चेति, 'पदे क्लृप्तत्वादिति, वृत्तेरिति शेषः,

न बोधिकेत्यरुचेराह, 'विभक्तिश्चेति, 'प्रकृतिनदीगतमिति प्रकृत्यर्थनदीगतमित्यर्थः, 'अप्रकृतित्वात्' अप्रकृत्यर्थत्वादित्यर्थः। नन्वेवं नीलं घटमानयेत्यत्रापि विशिष्टकर्म्मताप्रतीतिर्न स्यात् इति नव्यमते अतुष्यन् सिद्धान्तसारमाह, 'वस्तुत इति, 'स्वव्याप्येति। ननु नीलं छिद्रेण मानयेत्यादौ लाक्षणिकपदद्वये तदितरविशिष्टसम्बन्धिलक्ष्यत्वे स्वव्याप्याप्रसिद्धिः लाक्षणिकस्याननुभावकत्वात्। न च स्वशक्तिव्याप्यत्वं विवक्षितमिति

वाक्यलक्षणाद्द्वयं पदे एका वाक्ये चापरा लक्षणेति गौरवं स्यात् । अन्वयबोधपूर्विका प्रत्येकं पदद्वये लक्षणैव वाक्ये लक्षणेति च परिभाषा पद-वाक्ययोर्भिन्नत्वात्, वस्तुतस्तु गभीरपदात् स्वार्थपरम्परासम्बन्धेन लक्ष्योपस्थितौ विलम्बान्नदीपदात् स्वार्थसाक्षात्सम्बन्धेन शीघ्रं तीरोपस्थितिसम्भवात्तत्रैव लक्षणा । अथ "पदं पांशु-

'गौरवं स्यादिति, तत्रापीति शेषः । ननु भवतु पद-वाक्यभेदः भवतु चाक्लृप्तत्वाद्वाक्यलक्षणायां गौरवं तथाप्येकलक्षणातो नानालक्षणाकल्पने गौरवमित्यरुचेराह, 'वस्तुत इति । ननु स्वज्ञाप्यसम्बन्धो लक्षणा विशिष्टार्थज्ञापकता चोभयत्र तुल्या तथाच किं विनिगमकं । न च नीलायां यमुनायां घोष इत्यादौ नीलपदस्य गुणिपरत्वेन लक्षणायां तत्र विशिष्टतीरलक्षणायां लक्षितलक्षणेति गौरवाद्विशेष्ये लक्षणाकल्पनादन्यत्रापि तथैवेति वाच्यं । तत्र हि लाक्षणिकस्याननुभावकतया स्वज्ञाप्यतैव न विशिष्ट इति विशेष्ये लक्षणा इह तूभयोर्ज्ञापकत्वादुभयत्रापि लक्षणा । न च गभीरपदोत्तरसप्तमीविशेषणविभक्तिः शब्दसाधुत्वार्थमतो नदीपदोत्तरसप्तम्या नदीपदार्थानुगतस्वार्थमात्रबोधकत्वात्तत्रैव लक्षणेति वाच्यं । एकयैवोपपत्तौ हि

वाच्यम् । शक्तेरपि तत्सहकारित्वेनैव अभिप्रयोजकत्वात्, तथाच तुल्यमिति चेत्, न, अतएव तदननुभावकत्वमित्युक्तत्वादिति । 'पदे लृप्तत्वादिति, लक्षणाया इति शेषः, 'गौरवं स्यादिति, तत्रापीति शेषः । ननु तथाप्येकलक्षणातो नानालक्षणाकल्पने गौरवमेवेत्यत आह, 'वस्तुतस्त्विति, एतच

ना यूपमनक्ति सप्तमं पदं गृह्णातीत्यत्र पदस्य ग्रहणकर्मानर्हत्वेन ग्रहणकर्माहेंष्टकाञ्जनसाधनत्वेन निरूढेषु सोमक्रयार्थानीयमानैकहायन्युपलक्षितसप्तम-

नोभयार्थः साधुस्तथाचान्यत्र विशेषणविभक्तेरिवात्र विशेष्यविभक्तेरेव तथात्वमस्तु प्राथम्यात् गभीरपद एव लक्षणया तदुत्तरविभक्तेरेवार्थसाधुत्वौचित्यादिति, मैवं, अनवबोधात् गभीर-नद्योरभेदेन तीरसम्बन्धस्य साम्येऽपि गभीरत्वविशिष्टनदीसम्बन्धस्य प्रतीतौ गभीरार्थस्य तीरे परम्परासम्बन्धभानात् तथाच तद्रूचानुरोधात् सर्व्वत्र परम्पराप्रतीतेः सर्व्वत्र विशेष्यपदे लक्षणेति दिक् । मुख्यार्थान्वयानुपपत्तिमाह, 'ग्रहणेति, उपलक्षणञ्चैतत्, सप्तमत्वासम्भवेने-

गम्भीरपदस्य नीलादिपदवद्गुणमात्रवाचकत्वमभ्युपेत्योक्तं । वस्तुतस्तु तस्य गाम्भीर्य्यगुणविशिष्टवाचकत्वमेव गुणमात्रे नीलादिपदवदप्रयोगात्, अन्यथा धीरोदारपदस्य पदमात्रस्यैव वा धर्म्मिवाचकत्वं न स्यात्, तथाचात्रापि तीरे स्वार्थसाक्षात्सम्बन्ध एव, तस्माद्विशेषणविभक्तिः साधुत्वार्थमित्यभ्युपगमान्नदीपदलक्षणायामेव विभक्त्यर्थान्वय इति विशेष्यवाचिपद एव लक्षणा। न च प्राथम्याद्गम्भीरपद एव लक्षणास्तु तथाचान्यत्र तथात्वेऽप्यत्र विशेष्यविभक्तेरेव शब्दसाधुत्वं कल्प्यमिति वाच्यं । विशेषणविभक्तित्वेन सामान्यत एव तथात्वकल्पनात् । किञ्च शुक्लायां नद्यामित्यादावक्तयुक्त्या विशेष्यपद एव लक्षणाकल्पनादन्यत्रापि तथा । न च शुक्लपदस्य लाक्षणिकत्वेनानुभावकत्वाभावेन स्वरूपाप्याभावान्न लक्षणेति वाच्यं । सुतरां तर्हि विशेष्यपद एव लक्षणाकल्पनं । वस्तुतस्तु तदनुभावकमेवेत्युक्तमित्यत्र तात्पर्य्यं । उदाहरणभेदेनाशङ्कते, 'अथेति । मुख्यान्वयानुपपत्तिमाह, 'पदस्येति, 'निरूढेषु' नि-

पदपांशुषु सप्तमार्थान्वितपद-पदार्थान्वयबोधके सप्तमं पदमिति वाक्ये लक्षणेति चेत्, न, अत्रापि हि सप्तमपदयोरन्वयबोधानन्तरं सप्तमपदार्थान्वितस्वार्थबोधके पदे लक्षणा न तु वाक्ये। अतएव "पुरोडाशकपालेन तुषानुपवपतीत्यत्रावघातजनितव्रीहितुषाणां पुरोडाशकपालेनोपवापो विधीयते पुरोडाशश्रपणप्रयोजनत्वेनोपस्थिते च कपाले नोपवापप्रयोजनाकाङ्क्षा। न ह्येकप्रयोजनस्य किं प्रयोजनमित्याकाङ्क्षा भवति। अन्यत्र विनियुक्तत्वेन शब्दादन्यत्राकाङ्क्षाविरहेण विनियोगाप्रतीतेरेव हि विनियुक्तविनि-

त्यपि द्रष्टव्यं। 'अञ्जनसाधनत्वेनेति, पूर्व्वत्रानुपपत्तिर्द्रष्टव्या, पुरोडाशपाकार्थमेवावहतव्रीहितुषाणां कथमुपवाप इत्याकाङ्क्षायामपि पुरोडाशाय कपालमिति तादर्थ्यचतुर्थ्यर्थलक्षणया तत्प्रयोजनतयोपस्थितं कपालं किमप्यस्य प्रयोजनमिति नाकाङ्क्षेति उभयाकाङ्क्षायाश्चान्वयधीर्न त्वन्यतराकाङ्क्षायां अतः षष्ठीतत्पुरुषेण भविष्यत्पुरोडाशाश्रयकपालेनेत्यर्थोऽवगम्यते, अतएव च न कपालपदे

स्थितेषु। पूर्व्वोक्तरीत्यैव परिहरति, 'अत्रापि हीति, 'न हीति, पुरोभाशाय कपालमिति तादर्थ्यचतुर्थ्यर्थभाने तत्प्रयोजनतयोपस्थितं कपालं न प्रयोजनान्तरमाकाङ्क्षति अन्यतरमात्राकाङ्क्षायाश्च नान्वयधीरिति भावः। एवञ्च घटार्थेन दण्डेन गामभ्याजेत्यादौ यथा नाकाङ्क्षानुपपत्तिस्तथोक्तं। उक्तदोष-

योगविरोधः। अत-आकाङ्क्षोत्थापनार्थं पुरोडाशकपालवाक्यस्य पुरोडाशार्थाधिष्ठाने आश्रयस्वरूपे लक्षणेति निरस्तम्। अत्रापि हि पुरोडाशपदेन पुरोडाशश्रपणप्रयोजनकाधिष्ठानमाश्रयस्वरूपं लक्ष्यते। कपालपदञ्च तत्र कपालत्वविशिष्टबोधकमिति पुरोडाशपदे लक्षणा न पुरोडाशकपालवाक्ये।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ शब्दाख्यतुरीयखण्डे शक्तिवादः।

---

लक्षणा तथामति पुरोडाशपदस्य तदर्थकत्वपर्य्यवसाने अनुपपत्त्यपरीहारात्। एतेन घटजनकेन दण्डेन गामभ्याजेति लौकिकवाक्यदर्शनात् तदर्थकतयोपस्थितेनाप्यपरान्वय इति निरस्तं। तत्र न्यायानपेक्षणात् इह तु न्यायार्थसाधिततात्पर्य्यकतयैव तादृशाकाङ्क्षानिर्व्वाहादित्यखण्डनकार्थः।

इति श्रीजयदेवमिश्रविरचिते तत्त्वचिन्तामण्यालोके शब्दाख्यतुरीयखण्डालोके शक्तिवादालोकः।

---

भयादाह, 'आश्रयस्वरूपमिति अधिष्ठानत्वादिनैव तस्य तस्य लक्ष्यत्वान्नोक्तदोष इत्यर्थः, एवञ्चात्र कर्म्मधारयो न पुनश्चतुर्थीतत्पुरुष इत्यवधेयं। इति प्रकाशः।

## अथ समासवादः ।



ननु बहुव्रीहौ चित्रगुमानयेत्यत्र वाक्यार्थचित्रगोस्वामिनः सम्बन्धितया अन्यपदार्थस्य प्रतीतेर्वाक्य एवान्यपदार्थे लक्षणा। अथ चित्रा गौर्यस्येति विग्रहवाक्यस्थं लुप्तं यत्पदं स्मृतमन्यपदार्थं बोधयति यथा दधि पश्येत्यादौ लुप्ता द्वितीया स्मृता कर्मत्वं अन्यथा तत्र कर्मत्वे लक्षणापत्तेः। अज्ञातविग्रहस्य बहुव्रीहौ शक्तिभ्रमादन्यपदार्थधीरिति चेत्, न, स्मृतयत्पदात् सम्बन्धितयोपस्थिते अन्यपदार्थे कर्मत्वेनोपस्थितिं विना आनयनान्वयानुपपत्तेः राज्ञः पुरुषमानयेत्यत्र राज्ञ-

---

उपोद्घातसङ्गत्या समासविचारमवतारयति, 'नन्विति, 'चित्रगोस्वामिन इति, चित्रगोस्वामिनोऽन्यपदार्थस्य सम्बन्धितया प्रतीतेरिति योजना, 'अन्यपदार्थस्य' समस्यमानपदातिरिक्तपदार्थस्य, 'सम्बन्धितया' चित्रगोसम्बन्धित्वरूपेण, 'वाक्य एवेति, तथाच वाक्ये लक्षणा नास्तीति प्राक् कथमुक्तमिति भावः। 'लुप्तमिति प्रकृतवाक्यघटकत्वेनाश्रुतमित्यर्थः, एवमग्रेऽपि। 'बोधयतीति पुरुषत्वेन बोधयतीत्यर्थः, 'बहुव्रीहाविति चित्रगुवाक्य इत्यर्थः, 'स्मृतयत्पदादिति स्मृतार्थकयत्पदादित्यर्थः, 'सम्बन्धितया' षष्ठ्यर्थसम्बन्धविशेषणतया, 'उपस्थिते' अवान्तरवाक्यार्थबोधविषये, 'कर्म्मत्वेनोपस्थितिं विनेति कर्म्मत्वसंसर्गक-धात्वर्थविशेष्यक-नामार्थप्रकारकशाब्दबोधानुकूलकर्म्मत्वोपस्थित्यभावेनेत्यर्थः, 'आनयनान्वयेति कर्म्मत्वसंसर्गेण विशेष्यतया

इव विशेषणत्वेनोपस्थिते क्रियान्वयाभावाच्च। विभक्तिशून्ययत्पदादुपस्थिते च चित्रगुपदेन क्रियया चान्वयो न स्यात् अन्वयप्रकारबोधकविभक्त्यभावात्। न च चित्राया गौर्य इति विग्रहे स्मृतप्रथमान्त-य इति पदादुपस्थितिः प्रथमान्तेनानयनानन्वयात्। प्रथमान्त-

---

अथ समासवादालोकः।

'राज्ञ इति पूर्व्वमन्वयबोधानुकूलोपस्थित्यभावादनाकाङ्क्षत्वम-

---

'राज्ञ इति, पूर्व्वमन्वयबोधानुकूलोपस्थित्यभावादनाकाङ्क्षत्वमचेतरान्वितत्वेनेति विशेषः। यद्यप्यरुणयेत्यादौ लम्बकर्णमानयेत्यादौ च विशेषणेऽपि

---

आनयनबोधानुपपत्तेरित्यर्थः। भेदसंसर्गेण नामार्थविशेष्यक-नामार्थप्रकारकशाब्दबोधे तन्नामोत्तरविभक्तिजन्यभेदसंसर्गोपस्थितेस्तन्त्रत्वादिति भावः। इदमुपलक्षणं प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमेन कर्म्मत्वेऽपि तदन्वयानुपपत्तेश्चेत्यपि बोध्यं। 'विशेषणत्वेनेति कर्म्मत्वेतरस्य षष्ठ्यर्थस्य विशेषणत्वेनेत्यर्थः, 'क्रियान्वयेति कर्म्मतासंसर्गेण विशिष्टतया क्रियाया बोधासम्भवाच्चेत्यर्थः, पूर्व्वं कर्म्मत्वसंसर्गबोधानुकूलकर्म्मत्वोपस्थित्यभावान्निराकाङ्क्षत्वमत्र कर्म्मत्वेतरविशेषणत्वेनोपस्थित्या निराकाङ्क्षत्वमिति भावः। ननु विभक्तिशून्ययत्पदमनुषञ्जनीयमतो न कर्म्मत्वेतरविशेषणत्वेनोपस्थितिरित्यत आह, 'विभक्तिशून्येति, 'चित्रगुपदेन' चित्रगुपदार्थेन चित्रगवा, 'अन्वयप्रकारेति यत्पदोत्तरं स्वत्व-कर्म्मत्वरूपसंसर्गोपस्थापकविभक्तिविरहादित्यर्थः, नामार्थयोर्नामार्थ-धात्वर्थयोश्च भेदसंसर्गकान्वयबोधे नामोत्तरविभक्तिजन्यसंसर्गोपस्थितेस्तन्त्रत्वात् चित्रपदोत्तरद्वितीयायाश्च यत्पदानुत्तरत्वादिति भावः। 'उपस्थितिः' स्वामिनः पुरुषस्योपस्थितिः, 'प्रथमान्तेनेति, धात्वर्थ-नामार्थयोर्भे-

विग्रहे तदभियुक्तैर्बहुव्रीहेः साधुत्वनिषेधाच्च। न च चित्रा गौर्यस्य तमानयेति तत्पदार्थस्य क्रियान्वय इति वाच्यम्। तथाननुभवात् चित्रगोसम्बन्धिनमानयेति हि वाक्यार्थधीः विग्रहे तत्पदस्याप्रयोगेण स्मृत्यभावाच्च। यत्तदोर्नित्यसम्बन्धात्तत्पदस्मरणमपीति चेत्, न, अध्याहारापत्तेः, तथापि चित्रगुमानयेत्यत्र विभक्तिस्तत्पदार्थगतं न स्वार्थमुपनयेत् किन्तु

---

चेतरान्वितत्वेनेति विशेषः। 'तथाननुभवात्' वाक्यार्थद्वयान्वयाननुभवात्, 'अध्याहारापत्तेः', तथाच तदपेक्षया लक्षणाया एव कल्प-

---

क्रियान्वयस्तथापि पूर्व्वदोष एव तात्पर्य्यं, 'प्रथमान्तेति। यद्यपि पुत्रेण सहागतः पिता सपुत्रक इत्यादौ प्रथमान्तविग्रहेऽपि बहुव्रीहिरिति व्यभिचारस्तथापि तदतिरिक्ते नियमो बोध्यः इत्याहुः। 'तथाननुभवादिति वाक्यार्थद्वयाननुभवादित्यर्थः। नन्वेतदेव कुत इत्यत आह, 'चित्रेति, 'अध्याहारेति, पदकल्पनापेक्षया च लक्षणया पदार्थमात्रकल्पनस्य लघुत्वादन्यथा

---

देनान्वये विभक्तिजन्यसंसर्गोपस्थितेस्तन्त्रत्वादिति भावः। ननु प्रथमाया एव कर्म्मत्वे लक्षणेत्यत आह, 'प्रथमान्तेति। यद्यपि पुत्रेण सह वर्त्तते यः स सपुत्रक इत्यादौ प्रथमान्तविग्रहेऽपि बहुव्रीहिर्दृष्टस्तथापि तदतिरिक्तस्थले नियमो बोध्यः। 'तत्पदार्थस्येति स्मृततत्पदेनोपस्थापितस्यार्थस्येत्यर्थः। 'तथाननुभवादिति अन्यपदार्थस्य सम्बन्ध-कर्म्मत्वोभयविशिष्टत्वेनाननुभवादित्यर्थः, 'यत्तदोरिति तत्पदं विना यत्पदस्य निराकाङ्क्षत्वादित्यर्थः, 'तत्पदस्मरणमपीति विग्रहवाक्यस्थयत्पदानुषङ्गेन तत्पदस्मरणमपीत्यर्थः। 'अध्याहारापत्तेरिति तत्स्मरणकल्पनापत्तेरित्यर्थः, तथाचैतद्गौरवभयादेव

गो-गतमेव विभक्तेः प्रकृत्यर्थगतस्वार्थबोधजनकत्वव्युत्पत्तेः। अत एवान्यपदार्थोपस्थापकेन समासेनोक्तार्थत्वात् यत्पदाप्रयोगः। अन्यथा यत्पदप्रयोगोऽपि स्यात्। न च यत्पदप्रयोगः सधुत्वार्थमेव स्त्रीप्रत्ययस्येवेति वाच्यम्। "गो-स्त्रियोरुपसर्जनस्येत्यनुशासनबलात्तथैव साधु यत्पदे तूक्तार्थत्वं विना असाधुत्वादन्वये न निमित्तान्तरमस्ति, बहुव्रीहेर्नित्यसमासत्वेन विग्र-

---

नौचित्यात्पदकल्पनापेक्षया पदार्थमात्रकल्पनस्य लघुत्वादन्यथा लक्षणोच्छेदापत्तेरिति भावः। ननु यत्र पदं कल्प्यं तत्रेयं व्यवस्था इह तु तत्पदाध्याहारस्याप्यावश्यकत्वान्नैवमित्यरुचेराह, 'तथापीति।

---

लक्षणोच्छेदापत्तेरिति भावः। ननु यत्र पदं कल्प्यं तत्र तथास्तु प्रकृते च तत्पदाध्याहारस्यावश्यकत्वान्नैवमित्यरुचेराह, 'तथापीति, 'उक्तार्थत्वादिति, उक्तार्थानामप्रयोग इत्यभिधानादिति भावः। 'बहुव्रीहेरिति, चित्रा गौर्य-

---

यत्पदमपि नानुषज्यते तदनुषङ्गे आकाङ्क्षासम्पादनाय तत्पदस्मरणस्यावश्यकत्वात् इति भावः। ननु लुप्तसमासस्थपदोपस्थितेस्तदर्थोपस्थितेरेव वा तत्पदादिविषयकत्वकल्पनान्न गौरवमित्यरुचेर्दोषान्तरमाह, 'तथापीति तत्पदस्मरणेऽपीत्यर्थः, 'विभक्तेः' वाक्यसमभिव्याहृतविभक्तेः। 'अतएवेति यत एव बहुव्रीहावन्यपदार्थे लक्षणेत्यर्थः, 'उक्तार्थत्वात्' बोधितार्थकत्वात्, 'स्त्रीप्रत्ययस्येवेति चित्रपदोत्तरं स्त्रीप्रत्ययस्येवेत्यर्थः, 'उपसर्ज्जनस्येति, परतः स्त्रीप्रत्ययोलोप्योभवतीति शेषः, 'उपसर्ज्जनं' विशेषणं, 'तथैवेति स्त्रीप्रत्ययप्रयोगं विनेत्यर्थः। ननु तं यस्येतिपदं अन्यपदार्थं बोधयतीत्यत्र दोषमाह, 'बहुव्रीहेर्नित्यसमासत्वेनेति चित्रगवादिवाक्यस्यैव चित्राभिन्नगोस्वामित्वादि-

ग्रहाभावाच्च। चित्रा गौर्यस्येति वाक्यं बहुव्रीहेरन्यपदार्थकथनाय। अन्यथा चित्रगुमानयेत्यत्र प्रक्रान्त-प्रकां-

ननु यदि विग्रहोनास्ति तदा चित्रा गौर्यस्येत्यादिकिमित्यत आह, 'चित्रेति, समस्यमानपदैर्नैवार्थकल्पनस्य विग्रहवाक्यत्वादिह त्वसमस्यमानेनापि यत्पदेनार्थकथनादिति भावः। अत्र च नित्यसमासत्वमस्तीत्युपन्यस्तं, वस्तुतोनित्योऽस्त्वनित्यो वा समास उभयथापि विग्रहानुभवनियमोनास्ति येन तत्स्मरणं कल्प्यत इति ध्येयं। ननु मा भूदयं विग्रहः तत्प्रतिरूपकस्याप्यनुभवनियमेन स्मृतयत्पदादन्यपदार्थोपस्थितिस्तदा स्यात् यदि बुद्धिस्थः कोप्यन्यः स्यात् तदा यत्पदस्य तत्रैव शक्तिर्यदि तु लक्षणयान्यपदार्थधीस्तदा पूर्व्वमबुद्धिस्थस्यापि चित्रगोस्वामित्वेनोपस्थितस्य लक्ष्यस्यान्वयधीरित्याह, 'अन्यथेति,।

स्येत्यादि तु न विग्रहः समस्यमानपदैर्नैवार्थकथनस्य विग्रहत्वादत्र त्वसमस्यमानयत्पदेनाप्यर्थकथनादिति भावः। वस्तुतो विग्रहसत्त्वेऽपि तस्य नियमतः प्रागुपस्थितौ मानाभावादन्यपदार्थे लक्षणैव अन्यथा षष्ठीतत्पुरुषेऽपि सा न स्यादिति ध्येयं। एतेन विग्रहप्रतिरूपकतद्वाक्यस्थमेव यत्पदमादायान्वयोऽस्त्विति परास्तं। विग्रहवत्तस्यापि नियमतोऽनुपस्थितेः। 'प्रक्रा-

प्रकारकबोधसाकाङ्क्षवाक्यत्वेनेत्यर्थः, 'विग्रहाभावाच्चेति तादृशवाक्यार्थबोधसमर्थयत्पदघटितवाक्यान्तराभावाच्चेत्यर्थः। नन्वेवं चित्रा गौर्यस्येति वाक्यं किमित्यत आह, 'चित्रेति। न च विग्रहाभावेऽपि विग्रहप्रतिरूपकैतद्वाक्यस्थयत्पदादेवान्यपदार्थलाभोऽस्त्विति वाच्यं। एतद्वाक्यस्य नियमत उपस्थितौ मानाभावादिति भावः। 'अन्यथेति यदि विग्रहवाक्यस्थयत्पदादन्य-

स्यमानयोरभावे यत्पदार्थव्यवहारो न स्यात्। न च चित्रापदं चित्रगोस्वामिलक्षकं, तत्र गोपदार्थानन्वयात्। नापि गोपदं लक्षकं, गोस्वामिनि चित्रापदार्थानन्वयापत्तेः। तस्माद्वाक्यार्थचित्रगोसम्बन्धितया पुरुषस्य प्रतीतेर्बहुव्रीहौ वाक्य एव लक्षणेति। वार्त्त-

---

न्तेति, यद्यप्ययं चित्रा गौरस्येत्यर्थकथनवाक्य एव कथं यत्पदार्थान्वयस्तथापि तत्र तमानयेत्याद्यध्याहारात् तथा प्रकृते च तस्य दूषितत्वादिति भावः।

---

पदार्थप्रत्ययस्तदेत्यर्थः, 'यत्पदार्थव्यवहार इति यत्पदार्थशाब्दबोध इत्यर्थः, यत्पदस्य सर्व्वनामतया प्रक्रान्त-प्रक्रंस्यमानान्तरस्यैव परामर्शकत्वादिति भावः। 'प्रक्रान्तं' शब्दान्तरेण पूर्व्वोक्तं, 'प्रक्रंस्यमानं' शब्दान्तरेणानुपदं वक्ष्यमाणं। नन्वेवं चित्रा गौर्य्यस्येत्यर्थकथनवाक्य एव कथं यत्पदार्थान्वय इति वाच्यं। समासादेरन्यपदार्थस्य प्रक्रान्तत्वात् तस्य तदर्थकथनरूपत्वादिति हृदयं। 'अनन्वयात्' अन्वयासम्भवात्, न च गोपदं तात्पर्य्यग्राहकमिति वाच्यं। तथापि विभक्त्यर्थान्वयासम्भवात् प्रकृत्यर्थान्वितस्वार्थबोधकत्वात् प्रत्ययानामिति भावः। 'तत्र गोपदार्थेति, गोस्वामिनस्तन्त्वाभावादिति भावः। न च गोपदार्थस्य गोस्वामिन एकदेशे गवि चित्रपदार्थस्याभेदेनान्वयः घटात्परः चैत्रस्य नप्तेत्यादाविव पदार्थैकदेशेनान्वयस्याप्यत्र व्युत्पन्नत्वादिति वाच्यं। पदार्थैकदेशे भेदेनान्वयस्य क्वचिद्व्युत्पन्नत्वेऽप्यभेदान्वयस्यात्यन्तमव्युत्पन्नत्वादन्यथा गौर्नित्या द्रव्यं नित्यमित्यादौ गोत्व-द्रव्यत्वादावपि नित्यान्वयापत्तेरिति हृदयं। यदि च व्युत्पत्तिवैचित्र्यात् अभेदेनाप्येकदेशेऽन्वयोऽभ्युपेयते तदा त्वयमपि पक्षः साधीयानिति मन्तव्यं। 'वाक्य एवेति, न च चित्रपदस्य च स्वामिनि लक्षणया चित्रगोस्वामिनो लाभसम्भवात् कथं वाक्ये लक्षणेति वाच्यं। पदार्थैकदेशान्वयस्य नामार्थयोर्भेदान्वयस्य चाव्युत्पन्नतया गोपदार्थैकदेशे स्वामित्वे चित्रगोरन्वयासम्भवात्। एतेन चित्रपदं चित्रगोपरं गोपदञ्च स्वा-

मेतत्, वाक्ये निरर्थकतया स्वार्थसम्बन्धाभावेन लक्ष-
णानिषेधात् अत्रापि पदलक्षणयैवोपपत्तेश्च। तथा
हि चित्र-गोपदयोरन्वयबोधानन्तरं गोपदं चित्रगो-
स्वामिलक्षकं स्वशक्याचित्रगोसम्बन्धेन तत्स्वामिस्मार-
कत्वात्। चित्रापदं गवान्वितस्वार्थबोधकतया मुख्या-
र्थमेव। कर्त्तव्यान्वयबोधानुकूलत्वेन न वाक्यभेदोऽपि।

---

पदलक्षणां दूषयन्नेव वाक्यलक्षणां व्यवस्थापयति, 'न चेति, 'कर्त्तव्येति सम्ब-
न्धोपस्थितिहेतुचित्रगवोपस्थित्यनुकूलत्वादित्यर्थः, 'गोपदस्येति गोपदमात्र-

---

मित्वपरमित्यपि प्रत्युक्तं नामार्थयोर्भेदान्वयस्याव्युत्पन्नतया स्वामित्वे चित्र-
गोरन्वयासम्भवात् धर्मिणः स्वामिनोऽलाभप्रसङ्गाच्चेति भावः। 'निरर्थकत-
येति शक्तिशून्यतयेत्यर्थः, 'स्वार्थेति अशक्यतयेत्यर्थः। ननु शक्यप्रणाल्या स्वशक्या-
प्यसम्बन्ध एव लक्षणाऽस्त्वित्यरुचेराह, 'अत्रापीति बहुव्रीहावपीत्यर्थः, 'चित्र-
गोपदयोरिति चित्रपदार्थ-गोपदार्थयोरित्यर्थः, 'अन्वयबोधानन्तरमिति
अभेदान्वयबोधानन्तरमित्यर्थः, 'चित्रगोस्वामिलक्षकमिति लक्षणया चित्र-
गोस्वामिबोधकमित्यर्थः, एतच्च यत्र मुख्यार्थस्यापि क्रियाद्यन्वयो न बाधित-
स्तत्सामग्री च प्राथमिकी तदभिप्रायेणोक्तमन्यत्र तु चित्रपदं तात्पर्य्यग्रा-
हकं, अन्यत्र च चित्रगोस्वामिलक्षकमिति मन्तव्यं। 'स्वार्थबोधकतयेति
चित्रगुणविशिष्टबोधकतयेत्यर्थः, 'मुख्यार्थमेवेति। यद्यपि चित्रपदस्य चित्रगुण-
विशिष्टबोधने लक्षणैव लाघवाच्चित्रगुण एव शक्तेः "गुणिलिङ्गास्तु तद्वतीत्य-
मरकोषस्तु निरूढलक्षणाप्रतिपादक इति कुतो मुख्यार्थत्वं, तथापि 'मुख्या-
र्थमेवेत्यस्यामरकोषादिबोधितार्थकमेवेत्यर्थः। ननु चित्रपद-गोपदयोर्विभि-
न्नान्वयबुद्धिजनकत्वे भिन्नवाक्यत्वापत्तिरित्यत आह, 'कर्त्तव्येति चित्रपदस्या-
पि तात्पर्य्यग्रहद्वारा कर्त्तव्यान्वयबुद्धिप्रयोजकत्वादित्यर्थः, एकान्वयबुद्ध्यप्रयो-

**न चैवमेकस्यैव गोपदस्यान्यपदार्थे वृत्तौ समासो न स्यात् अनेकस्यान्यपदार्थे वर्त्तमानस्य समासानुशासनादिति वाच्यम्। चित्रापदस्यापि परम्परया अन्यदार्थबोधकत्वात्। अस्तु वा चित्रापदेऽपि लक्षणा चित्रापदार्थस्य परम्परया चित्रगोस्वामिसम्बन्धात्।**

स्येत्यर्थः। चित्रपदस्य गुणमात्रवाचित्वमाश्रित्याह, 'परम्परयेति, 'चित्रेति, अयञ्चाभ्युपगमवादोऽस्तु वेत्युपक्रमात्। वस्तुतः साक्षात्सम्बन्धेन उपस्थाप-

---

जकत्वस्यैव भिन्नवाक्यतारूपत्वादिति भावः। 'वृत्तौ' लक्षणायां, 'अन्यपदार्थे वर्त्तमानस्येति अन्यपदार्थबोधकस्येत्यर्थः, 'परम्परयेति तात्पर्य्यग्रहादिद्वारेत्यर्थः, चित्रपदं चित्रगोसम्बन्धित्वेन चित्रगोसम्बन्धिनं गोपदञ्च पुरुषत्वेन पुरुषं लक्षयतीति पदद्वय एव लक्षणा अन्वयधीरपि चित्रगोसम्बन्ध्यभिन्नं पुरुषमानयेत्याकारेत्यभिप्रायेणाह, 'अस्तु वेति। ननु चित्रपदस्य चित्रगोस्वामिनि स्वशक्यसम्बन्धाभावात् कुतो लक्षणेत्यत आह, 'चित्रापदार्थस्येति चित्रपदशक्यस्य चित्ररूपस्येत्यर्थः, 'परम्परया' स्वाश्रयस्वामित्वलक्षणपरम्परासम्बन्धेन। न च तथापि चित्रगुः पुरुष इत्यादौ पृथक् पुरुषवाचकपदसत्त्वे पदद्वये न लक्षणासम्भव इति वाच्यं। तत्रापि चित्रगोस्वाम्यभिन्नपुरुषाभिन्नः पुरुष इत्यन्वयबोधसम्भवेन पदद्वये लक्षणासम्भवात्। यदि चोद्देश्यतावच्छेदकस्य विधेयतावच्छेदकान्तर्भाव एव निराकाङ्क्षत्वं दण्डोरक्तदण्डः घटो नीलघट इत्यादयोऽपि व्यवहारा निराकाङ्क्षास्तदा तु तत्र गोपदस्य पुरुषत्वातिरिक्तत्वेन मनुष्यत्वादिना पुरुषे लक्षणेति न क्वाप्यनुपपत्तिरिति भावः। एवञ्चारूढवानरो वृक्ष इत्यादावपि आरूढपदं तात्पर्य्यग्राहकं वानरपदञ्च वानरारोहणकर्म्मणि लाक्षणिकं तस्य च वृक्षे अभेदेनान्वयः। यद्वा आरूढपदं प्रकृति-प्रत्ययविभागेन वानरारोहणकर्म्मपरं वानरपदञ्च देशपरं तथा-

न चैवमेकपदे लक्षणायामितरपदवैयर्थ्यम्, इतरपद-महिम्नैव विशेषस्य लक्षणीयत्वात् । न चैवं वाक्यार्थ-बोधकपदलक्षणाद्द्वयमेव वाक्यलक्षणा, पद-वाक्ययो-र्भिन्नत्वात् ।

यत्तु चित्रापदेन गोपदसन्निधानात् स्वार्थसम्बन्धि-नी गौर्लक्ष्यते चित्रगवा च स्वामी लक्षित इति

'चित्रगवेति लक्ष्यचित्रगोद्वारा तत्सम्बन्धीत्यर्थः, लक्ष्यमेक-मन्तरा कृत्वा पदेन परम्परासम्बन्धेन लक्षणाया एव लक्षितलक्ष-

कत्वाद्गोपद एव लक्षणा अतएव तत्रैव दूषणमाशङ्क्य परिहरति, 'न चैव-मिति, एवं सर्व्वनामपदद्वयेन बहुब्रीहावपि लक्षणैव । न च सर्व्वनाम्नि न लक्षणा, निरूढलक्षणातिरिक्तलक्षणायामेव तथा नियमात् । अतएव तत्-पुत्र इत्यादौ षष्ठीतत्पुरुषेऽपि लक्षणेति वदन्ति । 'गोपदेति, तथा च तात्पर्य्यग्राहकतया न गोपदवैयर्थ्यमिति भावः । 'चित्रगवेति, लक्षितार्थस्य

च वानरारोहणकर्म्माभिन्नो वृक्ष इत्यन्वयबोधः । अथ वा वानरपदं वान-रारोहणकर्म्मपरं आरूढपदं प्रकृति-प्रत्ययविभागेन कर्तृपरं तस्य चैकदेशे वानरे अन्वयः पदार्थैकदेशान्वयस्यापि क्वचिदभ्युपगमात् तथाचारोहणक-र्त्रभिन्नवानरारोहणकर्म्माभिन्नो वृक्ष इत्यन्वयबोध इत्यादि स्वयमूह्यं । पूर्व्व-स्मिन् कल्पे शङ्कते, 'न चैवमिति, 'एकपद इति उत्तर इत्यर्थः, 'इतरपदेति, यत्र पूर्व्वपदार्थोत्तरपदार्थयोरभेदेनान्वयबोधे न तात्पर्य्यं तत्र पूर्व्वपदवैयर्थ्य-मित्यर्थः, 'विशेषस्य' चित्रगोस्वामित्वादिरूपविशेषस्य, तथाच तात्पर्य्यग्राहक-कतया पूर्व्वपदसार्थकतेति भावः । उत्तरकल्पे शङ्कते, 'न चैवमिति ।

'स्वार्थसम्बन्धिनीति चित्राभिन्नेत्यर्थः, 'चित्रगवा चेति लक्षितेन चित्राभिन्नगवा चेत्यर्थः, 'स्वामीति चित्रगोस्वामित्वेन चित्रगोस्वामीत्यर्थः,

लक्षितलक्षणया अन्यपदार्थधीरिति। तन्न। एकपद-लक्षणातोलक्षितलक्षणायाजघन्यत्वात्। भुवादयोधा-तवः चैत्रादीन् भोजय लम्बकर्णमानयेत्यादितद्गुणसं-

---

लक्षकतया लक्षितलक्षणेति भावः। वस्तुतो लक्ष्यचित्रगोघटितपरम्परासम्बन्धेन चित्रापदस्यैव तल्लक्षकत्वं लक्षणायाः पदधर्म्मत्वात्। 'एकेति, गौरवादिति भावः। न च परम्परासम्बन्धेन तदुपस्थापकत्वसम्भवादेकैव लक्षणास्त्विति वाच्यं। साक्षात्सम्बन्धेन गोपदस्य तदुपस्थापकत्वे लाघवादित्युक्तत्वात्, अन्यपदार्थस्य च सम्बन्धितावच्छेदकतया पूर्व्वं भातेन स्वामित्व-चैत्रत्वादिनैव भानं तीरत्ववच्चित्रगोसम्बन्धित्वेनैव वा गङ्गातीरत्ववदिति ध्येयं। नन्वेवं चित्रगुमानयेत्यत्रेव लक्षकपदार्थे भुवादय इत्यादावपि कार्य्यान्वयो न स्यादित्यत आह, 'भुवादय इति, अजहत्स्वार्थायामेव तथेति भावः। 'क्रिया-

---

गोपदस्य तु तात्पर्य्यग्राहकतया सार्थकतेति भावः। 'अघन्यत्वादिति गौरवादिति भावः। इदमुपलक्षणं वस्तुतो लक्षितस्य चित्रगोर्लाक्षणिकत्वे विभक्त्यर्थान्वयानुपपत्तिः प्रकृतीभूतेन गोपदेनानुपस्थितत्वात्। किञ्च वृत्त्या पद-जन्यपदार्थोपस्थितेरेव शाब्दधीहेतुतया अर्थोपस्थापितस्य चित्रगोस्वामिनः शाब्दानुभव एवानुपपन्नः। न च लाघवात् पदज्ञानप्रयोज्यपदार्थोपस्थितिरेव शाब्दबोधाङ्गमिति वाच्यं। तथासति शाब्दबोधजन्यसंस्काराधीनपदाजन्योपस्थितेरपि शाब्दबोधापत्तेरित्यपि बोध्यं। ननु भुवादयोधातवोभवन्ति चैत्रादीन् भोजयेत्यत्र तद्गुणसंविज्ञानबहुव्रीहौ लक्षणया आदिपदोपस्थापितस्यान्यपदार्थस्यैव क्रियान्वयसम्भवात् कथं भू-चैत्रादेरपि क्रियान्वयः, न हि चित्रगुमानयेत्यत्र चित्रेण क्रियान्वय इत्यत आह, 'भुवादयोधातव इति, भवन्तीति शेषः, तेनाग्रे क्रियान्वय इति सङ्गच्छते, 'तद्गुणेति, यत्र पूर्व्वपदार्थस्यापि क्रियान्वये तात्पर्य्यं तदेव तद्गुणसंविज्ञानबहुव्रीहिः, 'विशेषणा-

विज्ञानबहुव्रीहौ चित्रादेर्विशेषणस्यापि कार्य्यान्वयात् । क्रियावाचित्वनियन्त्रितत्वादिरूपेणाजहत्स्वार्थलक्षणेति सम्प्रदायः ।

---

णत्वादिति भावः । 'आदौति लम्बकर्णावयविनो यः सम्बन्धस्तदवच्छिन्नत्वादिनेत्यर्थः, 'सम्प्रदाय इत्यस्वरसोद्भावनं, तद्वीजन्तु लम्ब-

---

वाचित्वेति, अत्र च लक्षकसम्बन्धस्यैव लक्ष्यतावच्छेदकतया क्रियावाचित्वादिकमेव शक्यसम्बन्धः आदिपदाच्च लम्बकर्णावयविनो यः सम्बन्धः तदवच्छिन्नत्वादिपरिग्रहः,'सम्प्रदाय इत्यस्वरसोद्भावनं, तद्वीजन्तु लम्बकर्णमानयेत्यादौ यद्यजहत्स्वार्था तदोभयसाधारणेनोक्तरूपेण लम्बकर्णस्याप्यन्वये तस्यापि विशेष्यत्वेनैवान्वयः स्यात् चैत्रवत्, न चेष्टापत्तिः, अनुभवविरोधात्, तथाचोभयत्रापि अजहत्स्वार्थैव विशेष्यत्वेन विधेयान्वये स्वार्थत्यागात् विशेषणत्वेनापि स्वार्थस्य विधेयान्वय इति तद्गुणसंविज्ञानोक्तिः, लम्बकर्णसम्बन्धित्ववत् चित्रगोसम्बन्धित्वेन उपस्थितावपि स्वार्थस्योपलक्षणतया विधेयानन्वयेनातद्गुणसंविज्ञानोक्तिस्तत्रेति वदन्ति ।

केचित्तु विशेष्यतया विशेषणतया वा स्वार्थान्वयादेवाजहत्स्वार्थेत्याहुः ।

---

स्येति पूर्व्वपदार्थस्येत्यर्थः, 'कार्य्यान्वयात्' क्रियान्वयात्, 'क्रियावाचित्वेति वाच्यतासम्बन्धेन क्रियावत्त्वेत्यर्थः, तेन नातिप्रसङ्गः, क्रियावत्त्वञ्च सङ्केतविशेषसम्बन्धेन क्रियापदवत्त्वं, एतच्च भुवादयोधातव इत्यत्रोक्तं, चैत्रादीन् भोजयेत्यत्राह, 'नियन्त्रितत्वेति, नियन्त्रितत्वञ्च चैत्रविषयकबुद्धिविशेषविषयत्वं, 'आदिपदात् लम्बकर्णमानयेत्यत्र लम्बकर्णावयविनो यः सम्बन्धः तन्निरूपकत्वस्य लम्बकर्ण-पुरुषोभयसाधारणस्य परिग्रहः । 'अजहत्स्वार्थलक्षणेति आदिपदे भू-चैत्रादिपूर्व्वपदसाधारणी लक्षणेत्यर्थः, भू-चैत्रादिकन्तु तात्पर्य्यग्राहकमिति भावः । 'सम्प्रदायः' नैकसम्प्रदायः ।

अत्राहुः अनस्तमितपद-पदार्थविभागस्य चित्रगुसमुदायस्यान्योन्यान्वितावयवार्थसम्बन्धिन्यन्यपदार्थे शक्तिः कल्प्येत अतोनानेकार्थत्वम् न वा अवयवार्थत्यागो न वा तद्गुणसंविज्ञाने लक्षणा योगरूढिस्वी-

---

कर्णमित्यादौ यद्यजहत्स्वार्थलक्षणाया एव लक्षितलक्षणात्वादिति तदुपस्थितिस्तदा विशेष्यत्वेनैवोभयान्वयापत्तिः ।

---

'अत्राहुरिति, वैयाकरणा इति शेषः। योगार्थभानार्थमाह, 'अनस्तमितेति, 'अत इति, सम्बन्धित्वेन शक्तिर्न चैत्रत्वादिनेत्यर्थः। 'तद्गुणेति अन्यथा अन्यपदार्थस्यैव शक्यत्वे समुदायस्यावयवार्थे लक्षणा स्यादित्यर्थः, उभयसिद्धावयवार्थभानार्थं 'तद्गुणेत्युक्तं। अन्यथा अन्यत्रातद्गुणाभ्युपगमा-

---

'अत्राहुरिति, वैयाकरणा इति शेषः, 'अनस्तमितेति प्रतीयमानावयवार्थस्येत्यर्थः, 'अन्योन्यान्वितेति चित्राभिन्नगोसम्बन्धिनीत्यर्थः, 'शक्तिः कल्प्येतेति चित्राभिन्नगोसम्बन्धित्वरूपेण शक्तिः कल्प्येतेत्यर्थः, शक्ततावच्छेदकन्तु चित्रगुपदत्वमेवेति भावः। 'अत इति यतश्चित्रगोसम्बन्धित्व-लम्बकर्णसम्बन्धनिरूपकत्वादिना शक्तिर्न तु चैत्र-मैत्रत्वादिनेत्यर्थः,'अनेकार्थत्वं' चित्रगुपद-लम्बकर्णपदादेरनेकार्थत्वं। 'न वा अवयवार्थेति, चैत्रत्व-मैत्रत्वादिना शक्तावयवार्थत्यागापत्तिरिति भावः। 'तद्गुणसंविज्ञान इति लम्बकर्णादिपद इत्यर्थः, 'लक्षणेति, चैत्रत्व-मैत्रत्वादिना अन्यपदार्थस्य शक्यत्वे अवयवार्थभानार्थं समुदायस्यावयवार्थे लक्षणा स्यादिति भावः। 'तद्गुणसंविज्ञान-इत्युपलक्षणं, अतद्गुणसंविज्ञाने चित्रगवादिपदेऽपि चैत्रत्व-मैत्रत्वादिना शक्यत्वे अवयवार्थभानार्थं समुदायस्यावयवार्थे लक्षणा स्यादित्यपि बोध्यं। न च तथापि भुवादयो धातवः चैत्रादीन् भोजयेत्यादौ का गतिः तत्र क्रियावाचित्व-नियन्त्रितत्वादिना शक्त्यभ्युपगमे अवयवार्थत्यागापत्तेरिति वाच्यं।

**कारात् अवयवार्थाज्ञाने तत्सम्बन्धिनोऽज्ञानात् । मण्डपादौ तु अवयवार्थनिरपेक्षैव गृहविशेषधीरित्यवयवार्थत्याग एव समुदाये रूढिः ।**

---

देव तदनापत्तिरित्यपि परोब्रूयादिति, 'अवयवार्थेति । न चैवं चित्रगुमानयेत्यादावप्यवयवार्थात्यागे तद्गुणातद्गुणविभागो न स्यादिति वाच्यं । विधे-

अनायत्या तत्रावयवार्थत्यागाभ्युपगमात् भूत्व-सत्त्व मैत्रत्व-चैत्रत्वादिना नानार्थत्वाभ्युपगमाद्वेति भावः । सर्व्वत्र हेतुमाह, 'योगरूढीति योगार्थान्तर्भावेन रूढिस्वीकारादित्यर्थः । योगार्थान्तर्भावे हेतुमाह, 'अवयवार्थेति, 'तत्सम्बन्धिनोऽज्ञानादिति तत्सम्बन्धित्वेनाज्ञानापत्तेरित्यर्थः । नन्वेवं मण्डपादिपदेऽपि योगार्थान्तर्भावेन रूढ्यापत्तिरित्यत आह, 'मण्डपादाविति, 'निरपेक्षैव' अविषयिकैव, 'अवयवार्थत्याग एवेति अवयवार्थानन्तर्भावेनेत्यर्थः ।

केचित्तु पङ्कजादिवच्चित्रगवादिपदमपि योगरूढं अवयवशक्त्या चित्रगवादेः समुदायशक्त्या च सम्बन्धित्वेन सम्बन्धिन उपस्थितेः अवयवार्थ-समुदायार्थयोः परस्परमन्वयाच्च चित्रगोसम्बन्ध्यादेर्विशिष्टस्य लाभः । न च नामार्थयोर्भेदेनान्वयस्याव्युत्पन्नतया कथमवयवार्थ-रूढ्यर्थयोः परस्परमन्वयः पङ्कजपदे त्वभेदसंसर्गेणैवान्वय इति नानुपपत्तिरिति वाच्यं । समासातिरिक्तस्थले तथा व्युत्पत्तेरिति वैयाकरणमतमाशङ्कते, 'अत्राङ्गरिति, अतएव 'योगरूढ़िस्वीकारादिति यथाश्रुतं सङ्गच्छते । 'अन्योन्यान्वितेति सम्बन्धित्वरूपेणान्योन्यान्वितावयवान्वयिनीत्यर्थः, 'शक्तिः कल्प्येतेति सम्बन्धित्वेन रूढ़िः कल्प्येतेत्यर्थः, 'अत इति यतः सम्बन्धित्वेन रूढ़िर्न तु चैत्र-मैत्रत्वादिनेत्यर्थः, 'नानेकार्थत्वं' चित्रगवादिसमुदायस्य नानेकार्थत्वं । योगादरे हेतुमाह, 'अवयवेति । नन्वेवं मण्डपादिपदेऽपि योगरूढ़त्वं कुतो नाभ्युपेयत इत्यत्र आह, 'मण्डपेति, 'रूढ़िरिति, बोधिकेति शेषः, अन्यत्सर्व्वं पूर्व्ववदित्याहुः ।

तथाह्यस्ति चित्रग्वादिपदस्यान्यपदार्थे तात्पर्यमेव तत्रैव च तात्पर्यं नियमतोऽन्यपदार्थस्य प्रतीतेः तदन्या-

---

किञ्चैवं लोहितोष्णीषा इत्यत्र गुणविधिर्न स्यात् लौहित्यामत्य-थायुगपद्वृत्तिद्वयविरोधेन जहत्स्वार्थाभ्युपगमात्। अपि च लक्षणया अन्यपदार्थस्य चित्रग्वादिनोपस्थितौ शक्त्या लम्बकर्णप्रतीतौ प्रतीति-

---

यान्वये विशेषणत्व-उपलक्षणत्वाभ्यामेव तदुपपत्तेरिति भावः। नन्वन्यलभ्य-तया न रूढ़िरित्यत आह, 'तथाहीति, 'चित्रग्वादिपदस्येति। यद्यपि शक्त-स्यापि शक्ये तात्पर्यानियम एव लक्ष्येऽपि तात्पर्यात् तथाचोक्तनियततात्प-

---

ननु समुदायशक्तिं विनाप्युक्तक्रमेणैवोपपत्तिसम्भवात् किं समुदाय-शक्त्या शक्त्यन्तरकल्पने गौरवान्मानाभावाच्च। न चैवं घटादिपदेऽपि समु-दायशक्तिर्न स्यादेकाक्षरकोषेण प्रत्येकशक्तिव्युत्पादनादुत्तरवर्णे लक्षणयैव घटादिबोधोपपत्तेः पूर्ववर्णानान्तु चित्रादिपदवत् तात्पर्यमात्रग्राहकतायाः सुवचत्वादिति वाच्यं। प्रत्येकवर्णशक्तिमविदुषः प्रत्येकवर्णलक्षणाप्रतिसन्धानं विनापि घटपदश्रवणानन्तरं घटादेरुपस्थितेस्तत्र समुदायशक्तेरावश्यकत्वा-दिह तु चित्रादिप्रत्येकपदशक्तिमविदुषोऽन्यपदार्थबोधस्यासिद्धत्वादित्यतः समुदायशक्तौ वैयाकरणोक्तं युक्त्यभावं व्युत्पादयति, 'तथाहीति, 'चित्रग्वादि-पदस्येति सतात्पर्यकचित्रग्वाद्यानुपूर्व्या इत्यर्थः, 'अन्यपदार्थे' यत्पदार्थे, 'तात्पर्यमेवेति समस्यमानपदार्थान्यतात्पर्यकत्वव्याप्यत्वमित्यर्थः, शुकाद्यु-च्चरितातात्पर्यकचित्रग्वादिपदे व्यभिचारवारणाय सतात्पर्यकेत्यानुपूर्वी-विशेषणं, 'तत्रैवेति समस्यमानपदार्थातिरिक्तेतरतात्पर्यकत्वाभावव्याप्यत्व-मित्यर्थः, कदाचिदपि चित्ररूपप्रतीतिर्जायतां गोसदृशप्रतीतिर्जायतामित्या-दीच्छया चित्रग्वादिपदानुच्चारणादित्यभिमानः। यद्यपि चित्रगोसम्बन्धा-दावन्यपदार्थतात्पर्येऽपि विशेषणविधया चित्ररूपादौ तात्पर्यमस्त्येव तथापि

प्रतीतेश्च, नियततात्पर्यं विना अन्यपदार्थे बहुव्रीहौ नियमतोलक्षणापि न स्यात् । तस्मान्नियततात्पर्य्यनिर्वाहिका बहुव्रीहेरन्यपदार्थे शक्तिरेव, लक्षकपदस्य लक्ष्ये

---

कलहादेव विवादविच्छेदे विनिगमकन्यायाभिधानानौचित्यात् तस्मान्न तद्गुणसंविज्ञाने अजहत्स्वार्था न वा अतद्गुणसंविज्ञाने जहत्स्वार्थेति विभागः, किन्तूभयत्र जहत्स्वार्था उभयत्र च लम्बकर्णसम्बन्धित्वेन चित्रगोस्वम्बन्धित्वेन चोपस्थितिर्विशेषणत्वोपलक्षणत्वभेदादुभयभेदः, उपलक्षणत्वन्तु विधेयापेक्षया ज्ञाने तूभयोर्विशेषणत्वमेव । न च वृत्तिद्वयविरोधः, सम्बन्धलक्षणयैव सम्बन्धिनोभानात्, यद्धि येन विना न भासते तद्धीहेतोस्तद्बोधकत्वनियमेन सम्बन्ध-

---

र्थस्य शक्तिनिर्व्वाह्यत्वं नोभयसिद्धं तत्रैव तथात्वकल्पने निरूढलक्षणानिर्व्वाह्यत्वं नोभयसिद्धं तत्रैव तथात्वकल्पने निरूढलक्षणानिर्व्वाह्यत्वकल्पनेऽपि तुल्यं, तथाप्यापातत इदं, अतएवाग्रे तदेवाशङ्क्य युक्त्यन्तरं वक्ष्यति । इष्टा-

---

विशेषणविधया तात्पर्य्येतरतात्पर्य्याभावस्य विवक्षितत्वाददोषः । अन्यपदार्थतात्पर्य्यव्याप्यत्वमन्यपदार्थेतरतात्पर्य्याभावव्याप्यत्वञ्चोपपादयति, ‘नियमत' इति, तात्पर्य्यप्रमात इति शेषः, ‘तदन्याप्रतीतेश्चेति अन्यपदार्थान्याप्रतीतेश्चेत्यर्थः, तात्पर्य्यप्रमात इत्यत्रापि सम्बध्यते, ‘नियततात्पर्य्यं विनेति अन्यपदार्थेतरतात्पर्य्यकत्वाभावव्याप्यत्वानभ्युपगम इत्यर्थः, ‘अन्यपदार्थ इति, तात्पर्य्यप्रमात इति शेषः, ‘लक्षणापि न स्यादिति लक्षणया शाब्दबोधजनकता भवन्मतेऽपि न स्यादित्यर्थः । क्वचित् तात्पर्य्यप्रमातोऽन्यपदार्थेतरस्यापि प्रतीतिः स्यादिति भावः । नन्वेतावता चित्रगवाद्यानुपूर्व्व्या अन्यपदार्थे नियमतस्तात्पर्य्यमस्तु तत्र तच्छक्तिः कथं स्यादित्यत उपसंहरति, ‘तस्मादिति, ‘नियततात्पर्य्यनिर्व्वाहिकेति चित्रगवाद्यानुपूर्व्व्या अन्यपदार्थ-

तात्पर्यानियमात् तात्पर्य्यनियमे च क्वचिद्बहुव्रीहे-

लक्षणयैव सम्बन्धिनोभानात्तीरलक्षणया तीरलस्यैव तेन विना तीराम्मरणात् निर्व्विकल्पकरूपायाः स्मृतेरभावादित्यपि द्रष्टव्यं। तत्र तात्पर्य्यमेव तत्रैव तात्पर्य्यमिति नियमौ प्रत्येकमेव शक्तिनियतौ न तु व्यापकौ प्रकृतानुपयोगात् नानार्थे व्यभिचाराच्च। प्रकृत-

---

तात्पर्य्यकत्वस्य तदितरतात्पर्य्यकत्वाभावस्य वा व्याप्यत्वनिर्व्वाहिकेत्यर्थः, 'बहु-व्रीहेः' चित्रगवाद्यानुपूर्व्व्यादेः, तत्तात्पर्य्यकत्वव्याप्यसतात्पर्य्यकानुपूर्व्वीकत्वस्य तदितरतात्पर्य्यकत्वाभावव्याप्यानुपूर्व्वीकत्वस्य वा तच्छक्तत्वव्याप्यत्वादिति भावः। ननु तत्तात्पर्य्यकत्वव्याप्यानुपूर्व्वीकत्वस्य तच्छक्तत्वव्याप्यत्वं कुत्रावधृतं न तावद्घटादिपदे तत्र लक्ष्ये तत्तात्पर्य्यदशायां शक्ये तात्पर्य्याभावेन शक्य-तात्पर्य्यकत्वव्याप्यत्वस्यैवाभावादेवं तदितरतात्पर्य्यकत्वव्याप्यानुपूर्व्वीकत्वस्य तच्छक्तत्वव्याप्यत्वमपि न कुत्रापि दृष्टं घटादिपदे लक्ष्ये तात्पर्य्यदशायां शक्येतरतात्पर्य्यकत्वभावे शक्येतरतात्पर्य्यकत्वाभावव्याप्यत्वस्यैवासिद्धेरिति चेत्, न, योऽपूर्व्वपदविशेषः शरीरविशेषशक्तो लक्ष्यपरतया तात्पर्य्यसामान्यं विना च न प्रयुक्तस्तस्यैवोभयत्र दृष्टान्तत्वसम्भवात्।

केचित्तु अन्यपदार्थतात्पर्य्यकत्वव्याप्यानुपूर्व्वीकत्व-तदितरतात्पर्य्यक-त्वाभवाव्याप्यानुपूर्व्वीकत्वयोरन्यपदार्थशक्तत्वस्यान्वयव्याप्तिग्रहस्थलाभावेऽपि व्यतिरेकव्याप्त्या अन्यपदार्थशक्तत्वमनुमेयमिति भावः।

नन्वत्र तत्तात्पर्य्यकत्वव्याप्यानुपूर्व्वीकत्वं न तच्छक्तत्वव्याप्यं लक्षकपदस्य लक्ष्यतात्पर्य्यकत्वादिव्याप्यानुपूर्व्वीकत्वेऽपि तच्छक्तत्वाभावादित्यत आह, 'लक्षकपदस्येति, 'लक्ष्ये तात्पर्य्यानियमादिति लक्ष्यतात्पर्य्यकत्वस्य लक्ष्येतर-तात्पर्य्यकत्वाभावस्य वा व्याप्यत्वविरहादित्यर्थः, केवललाक्षणिकानुपूर्व्व्या-प्रसिद्धत्वादिति भावः। ननु बहुव्रीहेरनन्यतात्पर्य्यपदार्थनियमोऽसिद्ध इत्यत-आह, 'तात्पर्य्यनियमे चेति, बहुव्रीहेरपीत्यादिः, 'बहुव्रीहेः' सतात्पर्य्यक-

रन्यपदार्थपरत्वमपि न स्यात्। अथ क्वचिद्बहुब्रीहे-रन्यपदार्थे तात्पर्यमेव न भवति यथा "यजमान-पञ्चमा ऋत्विजो लोहितोष्णीषा ऋत्विज इत्यत्र यज-मानपञ्चमत्व-लौहित्ययोर्विधेयत्वेन प्राधान्यात्तत्परत-या अन्यपदार्थे तात्पर्याभावादेवं क्वचिल्लोकेऽपीति चेत्, तर्हि तत्रान्यपदार्थे तात्पर्याभावात् तदनुपपत्तिं विना लक्षणाविरहादन्यपदार्थे शक्तिरेव। अन्यथा

---

नियमस्त्वेकार्थ एव सुग्रहः। न च प्रथमनियमोऽसिद्धः, लक्ष्यता-त्पर्य्येऽपि वाक्यतात्पर्य्यसम्भवात् शक्यसम्बन्धिनि वाक्याविशेषणत्वादि-ति भावः। लक्ष्यतात्पर्य्यविशेषत्वेनापि लक्ष्यतात्पर्य्यनियमादित्यत्र

पत्तिमाशङ्कते, 'अथेति, 'अन्यपदार्थ इति, "सोष्णीषा ऋत्विजः प्रचरन्ती-त्यादिना उष्णीषस्यान्यपदार्थस्य प्राप्तत्वेन विधेयत्वाभावादिति भावः। तात्पर्य्यानुपपत्तिरेव लक्षणाबीजमितिमतमाश्रित्याह, 'तर्हीति, 'आभि-

बहुब्रीहेः, 'अन्यपदार्थपरत्वमपि न स्यादिति अन्यपदार्थतात्पर्य्याभाववत्त्वमपि स्यादित्यर्थः। अत्रेष्टापत्तिमाशङ्कते, 'अथेति, 'तात्पर्य्यमेव न भवतीति तात्पर्य्या-भावोऽस्त्येवेत्यर्थः। 'यजमानेति यजमानपञ्चमा ऋत्विजः प्रचरन्ति लोहितो-ष्णीषा ऋत्विजः प्रचरन्तीत्यर्थः, प्रचरन्तीत्यस्य यज्ञशालायां गच्छेयुरित्यर्थः, 'यजमानपञ्चमत्व-लौहित्ययोः' यजमानपञ्चम-लोहितोष्णीषयोः, प्रचरणस्यै-वेति शेषः, 'विधेयत्वेन' पूर्व्वाज्ञातत्वे सति ज्ञापनीयत्वेन, ऋत्विक्प्रचरणस्य प्रकारान्तरेणापि लब्धत्वादिति भावः। 'प्राधान्यात्' अननूद्यत्वात्, 'क्वचिल्लोकेऽपीति लम्बकर्णमानयेत्यादावपीत्यर्थः, 'तदनुपपत्तिं विना' तदनुपपत्तिज्ञानं विना, 'लक्षणाविरहात्', 'शक्तिरेवेति, बोधिकेति शेषः।

तत्रान्यपदार्थबुद्ध्यनुदयापत्तिः। न च तत्रान्यपदार्थबुद्धि-राभिधानिक्येव न भवतीति युक्तम्, ऋत्विग्भिः सा-मानाधिकरण्यानुदयात् तस्माद्बहुव्रीहेर्नियमतोऽन्य-पदार्थबुद्ध्युदयात्तत्र शक्तिरेव। यद्यपि शक्तस्य शक्ये न तात्पर्यनियमः लक्ष्येऽपि क्वचित् तात्पर्यात्। तथापि

---

नियम उभयरूपोवाच्यः, अग्रे चान्यपादार्थपरत्वमपि न स्यादित्युप-लक्षणमन्यपरत्वमपि स्यादित्यपि द्रष्टव्यं। 'आभिधानिकीति शा-ब्दीत्यर्थः। ननु वस्तुगत्या शक्यसम्बन्धिनि तात्पर्य्याद्विशेषणत्वेनापि शक्ये तात्पर्य्यनियम इत्यभिसन्धाय नियमपदमुत्सर्गपरतया नियमे-ऽन्तर्भावयति, 'यद्यपीति, तादृशोत्सर्गस्य शक्तिनियमादिति भावः। शक्तिमित्यापाततः परमार्थतस्तु लाक्षणिकत्वपक्षे बहुव्रीहिस्थपदे लक्षणा वाच्या तच्च केवललाक्षणिकमेव नगरादिपदानां शक्तत्वादि-

---

एतच्च लाक्षणिकान्वयबोधं प्रत्येवानुपपत्तिज्ञानद्वारा लक्षणाज्ञानं जनयित्वा तात्पर्य्यज्ञानं हेतुर्न शक्यान्वयबोधे इत्यभिप्रायेण, यथाश्रुते तत्पर्य्यज्ञानं विना शक्तिरेव कथं बोधिका स्यादित्यसङ्गतत्वापत्तेः, 'अन्यथा' शक्तेरबोधकत्वे, 'आभिधानिकीति शाब्दीत्यर्थः, 'सामानाधिकरण्यानुदयादिति बहुव्री-ह्यर्थस्याभेदान्वयबोधानुदयप्रसङ्गादित्यर्थः, यजमानादिना ऋत्विजामभेद-विरहादिति भावः। 'शक्तिरेवेति तात्पर्य्यमेवेत्यर्थः। ननु तथापि यथा घटादिपदस्य न घटादितात्पर्य्यकत्वनियमः क्वचिल्लक्ष्ये तात्पर्य्यात् तथा चित्रगवाद्यानुपूर्व्व्या अपि कथमन्यपदार्थतात्पर्य्यकत्वनियमोऽभवन्मतेऽपि लक्षणया अन्यपदार्थादन्यत्र कदाचित् तत्प्रयोगादित्यत आह, 'यद्यपीति, 'शक्तस्य' शक्तपदान्तरस्य, तथापीति, पदान्तरस्थानुपूर्व्व्या इति शेषः,

शक्ये तात्पर्यमौत्सर्गिकं क्वचिदन्यत्र प्रयोगादपोद्यते। बहुव्रीहौ चान्यपदार्थादन्यत्राप्रयोगाच्छक्यार्थेऽपि तात्पर्यनियमो भवति।

यत्तु केवललाक्षणिकस्याभावाद्बहुव्रीहौ शक्यनियमे परिशेषादन्यपदार्थ एव शक्य इति। तन्न। शक्तिं विनापि तात्पर्यनिर्वाहात्।

अत्र ब्रूमः। बहुव्रीहौ न वाक्ये लक्षणा किन्तु पदे

---

धानिकी' शाब्दी, 'तथापीति, 'औत्सर्गिकं' औत्सर्गिकमेव, तात्पर्य्यं शक्तिनियतमिति भावः। 'बहुव्रीहाविति, यजमानपञ्चमा इत्यादावप्युक्तसामानाधिकरन्यानुपपत्त्या अन्यपदार्थान्वये तात्पर्य्यमस्त्येव विधेयतया परं न तत्र तात्पर्य्यमित्यवधेयं।

'केवलेति अशक्तेत्यर्थः, शक्यसम्बन्धस्य लक्षणात्वादिति भावः। 'शक्तिमिति समुदायशक्तिं विनाप्यवयवलक्षणयैव तात्पर्य्यनिर्व्वाहादित्यर्थः।

---

'औत्सर्गिकं' औत्सर्गिकमेव, भूयः सहचरितमेवेति यावत्, एवकारादव्यापकत्वव्यवच्छेदः, 'अपोद्यते' अभ्युपगम्यते, 'अप्रयोगात्' लक्षणाद्यप्रयोगात्।

'केवललाक्षणिकस्येति अशक्तलाक्षणिकस्येत्यर्थः, 'शक्यनियमे' लक्षणावादिमते शक्यनियमे, 'शक्तिं विनापि' समुदायशक्तिं विनापि, 'तात्पर्य्यनिर्व्वाहादिति अवयवलक्षणयैव तात्पर्य्यविषयान्वयबोधनिर्व्वाहादित्यर्थः, लक्षणायामेव समुदायशक्तेरावश्यकत्वादितिभावः। वैयाकरणमतं दूषयति, 'अत्र ब्रूम इति, 'लक्षणेति न्यायनयेऽपि लक्षणया अन्यपदार्थशाब्दबुद्धिजनकतेत्यर्थः, तथाच तस्यान्यपदार्थशाब्दबुद्धिजनकत्वाभावान्न तत्र तात्पर्य्यनियम इति भावः। ननु बहुव्रीहिस्थपदे तात्पर्य्यनियमात् तस्यैव तत्र

तस्य च नान्यपदार्थे तात्पर्यनियमः क्वचिच्छक्येऽपि तात्पर्यात्। अथास्ति बहुव्रीहिस्थपदद्वयस्यान्यपदार्थे तात्पर्यनियमः ततोऽन्यत्राप्रयोगनियमात् अतस्तन्निर्वाहिका पदद्वये शक्तिः सैव च वाक्ये वाक्यस्य पदद्वयात्मकत्वादिति चेत्, अस्तु तर्हि बहुव्रीहिस्थपदद्वये निरूढा लक्षणा तयैवान्यपदार्थे तात्पर्यनियमोपपत्तौ समुदायशक्तौ मानाभावात्।

नवीनास्तु बहुव्रीहावन्यपदार्थस्य लक्ष्यत्वे नियम-

त्यपि द्रष्टव्यं। 'निरूढेति पदान्तरसमभिव्याहारनियमे लक्ष्यमात्र-तात्पर्य्य एव निरूढलक्षणा, यथा यत्नार्थकपदसमभिव्याहारे कर्म्म-

'बहुव्रीहाविति, तथाचावयवतात्पर्य्यनिर्व्वाहाय न समुदायशक्तिरिति भावः। अस्तु तर्हि समुदायतात्पर्य्यनिर्व्वाहाय शक्तिरिति शङ्कते, 'अथेति, अन्यलभ्यत्वान्न शक्तिरित्याह, 'अस्त्विति, नियततात्पर्य्यं न शक्तिनियतं ज्ञानलाक्षणिके हेतुवाक्ये घटं करोतीत्यादाववयवलाक्षणिके च व्यभिचारादिति भावः। प्रामाणिकेन तदर्थमात्रपरतया लक्षणया प्रयुज्य-

शक्तिरस्त्वित्यत आह, 'तस्य चेति पदस्य चेत्यर्थः, 'अन्यत्राप्रयोगनियमादिति, साक्षात् परम्परया अन्यपदार्थशाब्दबोधानुकूलत्वाच्चेत्यपि बोध्यं। 'पदद्वयइति, 'निरूढा लक्षणा' उक्तक्रमेणान्यपदार्थे निरूढा लक्षणा, 'तयैवेति, नियततात्पर्य्यं हि न शक्तिमात्रनियतमपि तु शक्ति-लक्षणान्यतरव्याप्यमिति भावः। 'मानाभावादिति, गौरवाच्चेत्यपि बोध्यं।

'नवीनाः' वैयाकरणनवीनाः, 'लक्षणीयपदेति लक्षणीयवाचकपदेत्यर्थः।

तोलक्षणीयपदलिङ्गता न स्यात् लक्षकपदस्य लक्षणीयपदलिङ्गाग्राहकत्वनियमात् स्वलिङ्गापरित्यागाच्च । अतोऽन्यपदार्थे शक्तिरेवेति । अत्र ब्रूमः । बहुव्रीहेर्लाक्षणिकत्वेन विशेषणपदत्वनियमान्नियमतो लक्षणीयविशेष्यपदलिङ्गकत्वं । समानाधिकरणस्य समानवि-

---

विभक्त्यन्तस्यावयवे घटं करोतीत्यादौ लक्षणेति भावः । 'समानाधिकरणस्येति तत्राद्यं पदं चैत्रस्य पत्न्याः स्वमित्यत्र व्यभिचारवार-

---

मानत्वं निरूढलाक्षणिकत्वं, अतएव निरूढलक्षणा शक्तितुल्येति वदन्ति । ननु मञ्चाः क्रोशन्तीत्यत्र लक्षणीयपुरुषपदलिङ्गग्राहकत्वात् व्यभिचार इत्यरुचेराह, 'स्वलिङ्गेति । ननु स्त्रियो मञ्चा इत्यादौ व्यभिचार इत्यत आह, 'बहुव्रीहेरिति, तथाच बहुव्रीहावयं नियम इत्यर्थः, 'समानाधि-

---

ननु मञ्चाः पुरुषाः क्रोशन्तीत्यत्र लक्षणीयवाचकपुरुषपदलिङ्गग्राहकत्वाद् व्यभिचार इत्यरुचेराह, 'स्वलिङ्गेति, 'विशेषणपदत्वनियमादिति विशेषणवाचकपदत्वनियमादित्यर्थः । न च मञ्चाः क्रोशन्तीत्यादौ मञ्चादिपदस्य लाक्षणिकत्वेऽपि विशेषणशब्दत्वाभावाद्व्यभिचार इति वाच्यं । तत्रापि किञ्चिद्विशेष्यवाचकपदाध्याहारनियमेन विशेषणवाचकत्वादित्यभिमानः । यद्वा 'लाक्षणिकत्वेनेतिविशेषणपदत्वनियमेन हेतुरपि तु विशेषणे तृतीयया लाक्षणिकत्वेन विशिष्टस्य बहुव्रीहेरित्यर्थः, तथाच बहुव्रीहेरेव विशेषणवाचकपदत्वनियमः चित्रगुरस्तीत्यादावपि यत्किञ्चिद्वाचकपदाध्याहारादिति भावः । 'लक्षणीयविशेष्यपदलिङ्गकत्वमिति अध्याहृतस्य श्रुतस्य वा लक्षणीयोपस्थापस्थापकविशेष्यपदलिङ्गग्राहित्वमित्यर्थः, 'समानाधिकरणस्येत्यादि, तस्य दीर्घिकायां पय इत्यत्र तच्छब्दस्य विशेष्यपदलिङ्गग्राहकत्वाद्व्यभिचारवारणाय आद्यं षष्ठ्यन्तं, अभेदान्वयबुद्धिसाकाङ्क्षस्येति, तदर्थः,

**भक्तिकस्य विशेषणपदस्य विशेष्यपदलिङ्गत्वनियमात्। भिन्नविभक्तिकयोरिव भिन्नलिङ्गकयोरपि सामाना-धिकरण्येन विशेषण-विशेष्यपदभावाभावात्। अजह-**

णाय, द्वितीयन्तु चैत्रोगच्छतीत्यत्रेत्यर्थः, विपक्षबाधकमाह, 'भिन्नेति, 'अजहदिति, तथाच विशेषानुशासनावतार इति पूर्व्वनियमे विशे-षणं देयमिति भावः।

करणस्येति, एतच्च मैत्रस्य पत्न्याः स्वामीत्यत्र व्यभिचारवारणाय, मैत्रः पचतीत्यत्र तद्वारणाय 'समानविभक्तिकस्येति सुप्तिङोस्तु न समानत्व-मित्यर्थः। न च कर्त्तुरवाच्यतया तत्र सामानाधिकरण्यमेव नेति वाच्यं। समानसंख्याभिधायकविभक्तिप्रकृतित्वस्य तत्त्वात् तस्य च तत्रापि सत्त्वात्। ननु विशेषणविभक्तेः साधुत्वार्थत्वेन न तथात्वमिति चेत्, न, तदभिधानस्य विशेष्यविभक्त्यर्थातिरिक्तार्थनिषेधपरत्वात् मतान्तरत्वाद्वा। अतएव वक्ष्यति, एकसङ्ख्यावाचकमेव हि शाब्दसामानाधिकरण्यमिति। अप्रयोजकत्वं निरस्यति, 'भिन्नेति, 'अजहदिति, तथाच लिङ्गनियमानुशासनाभावे सतीति स्तोकं पचतीत्यादौ स्तोकशब्दे विशेष्यस्य धातोर्लिङ्गविरहाद्विशेष्यपद-लिङ्गकत्वाभावेन व्यभिचारवारणाय द्वितीयं षष्ठ्यन्तं। न च तथापि लिङ्गरहितयुष्मदादिविशेषणे त्वमुत्तम इत्यादौ व्यभिचारः सलिङ्गविशेष्यक-त्वेन विशेषणपदविशेषणे द्वितीयषष्ठ्यन्तवैयर्थ्यापत्तेरिति वाच्यं। युष्मदादेरपि सलिङ्गकत्वात् लिङ्गाधिकारविहितटाप्ङीबादिशून्यत्वेन चालिङ्गकत्वव्यप-देशादिति भावः। यद्यप्येवं नेयं नवधकामेत्यादिबहुव्रीहौ स्त्रीलिङ्गकत्वानुप-पत्तिस्तत्र नञो विशेष्यपदत्वात् समानाधिकरणविशेषणत्वाभावाच्च। तथापि नेयं दण्डिनीत्याद्यबहुव्रीहाविव तत्रापि व्युत्पत्त्यन्तरं कल्प्यमिति हृदयं। उक्तनियमे विपक्षबाधकमाह, 'भिन्नविभक्तिकयोरिति भिन्नविभक्तिकनामार्थ-योरित्यर्थः, 'भिन्नलिङ्गकयोः' तदर्थयोः, 'सामानाधिकरण्येन' अभेदसंसर्गेण।

ल्लिङ्गे तु लिङ्गविशेषनियमानुशासनान्न तथा, अन्य-दन्यस्य लिङ्गं गृह्णातीत्यत्र विशेषण-विशेष्यपदस्य भावत्वमेव नियामकम्। अथ नियमतोविशेष्यलिङ्गतैव

---

यत्तु अजहल्लिङ्गत्वं प्रकृतेऽपि चित्रगुपदेऽपि गोपदादेरजहल्लि-ङ्गत्वमिति, तन्न, तत्र विभक्त्यन्तस्य पदतया गोपदमात्रस्यापदत्वात् समुदायस्य विभक्त्यन्तत्वादत एव परवल्लिङ्गमित्यादौ वतिः परवत्-समुदाये लिङ्गमित्यर्थादिति। 'अन्यदिति विशेषानुशासनाभावे विशेषणपदं विशेष्यपदलिङ्गग्राहकमित्यर्थः। ननु शक्लत्वमलाचणि-

पूर्व्वनियमे विशेषणमिति भावः। न च चित्रगुपदेऽपि गोपदमज-हल्लिङ्गमेवेति वाच्यं। विभक्त्यन्तत्वेन समुदायस्यैव तत्परत्वात्। 'विशेषणेति तादृशविशेषण-विशेष्यपदस्वभावत्वमेवेत्यर्थः। परोक्तनियमे व्यभिचारमप्याह,

ननु समानाधिकरणस्येत्यादिनियमे परमेश्वरः प्रमाणं रूपं गुण इत्यादौ कथं नपुंसकलिङ्गकत्वमित्यत आह, 'अजहदिति, तथाचोक्तनियमे अजहल्लिङ्ग-कतत्तत्पदभिन्नत्वेन विशेषणीयमिति भावः। अतएव पङ्कजपदादेर्मतुस्यादौ लक्षणायामपि अयं पङ्कजमित्यादिकं साधु पङ्कजपदादेरजहल्लिङ्गकत्वादेवं खट्वादिकं यदा पुंसो नाम तदापि अयं खट्वेति स्त्रीलिङ्गतैव साध्वी। नन्वेवं दृष्टसागरा योषित् लब्धधनः पुमानित्यादौ सागरशब्द-धनशब्दयो-रजहल्लिङ्गत्वाद्विशेष्यलिङ्गग्राहित्वानुपपत्तिः सागरशब्द-धनशब्दादेरजह-ल्लिङ्गत्वेऽपि तद्भेदप्रवेशे जलमेतत् सागरः पुत्रो धनमित्यादावसमासेऽपि विशेष्यलिङ्गग्राहित्वापत्तिरिति चेत्, न, दृष्टसागराद्यानुपूर्व्वीघटकसागरा-दिशब्दभेदस्य निवेशनीयत्वादिति न काप्यनुपपत्तिः। नन्वेवमन्यदन्यलिङ्गं गृह्णातीति सामान्यतोऽनुशासनानुपपत्तिरित्यत आह, 'अन्यदिति, 'विशे-षणविशेष्यपदेति निरुक्तविशेषणविशेष्यपदत्वमेव नियामकं निरुक्तविशेषण-

विशेषणपदस्य बहुब्रीहेः शक्तिं विना न निर्वहतीति चेत्, न, विशेषणपदत्वमेव हि विशेष्यलिङ्गकत्वे तन्त्रं न तु शक्तत्वे सति गौरवात्। दण्ड्यादिवाक्यस्याशक्तस्यापि पुरुषादिविशेष्यलिङ्गकत्वात्, गुणवाचिशुक्लादिपदानां शुक्लः पट इत्यादौ लक्षणया विशेषणानां विशेष्यलिङ्गत्वाच्च। ननु शुक्लादेर्गुणिपरत्वे लाक्षणिक-

---

कत्वं दण्ड्याद्यपि तथा, न च गौरवं, गम्भीरनद्यां देशे घोष इत्यादौ वाक्ये परलिङ्गग्रहणादित्यतो व्यभिचारान्तरमाह, 'गुणेति, गभीर-

'गुणेति, 'विशेषणानामिति विशेषणोपस्थापकानां विशेष्यपदलिङ्गकत्वादित्यर्थः। 'नन्विति, तथाच ममापि लिङ्गानुशासनाभावे सतीति विशे-

---

पदं विशेष्यपदलिङ्गं शक्तातीत्येवार्थ इति यावत्, अन्यथा अतिप्रसङ्गादिति भावः। इदञ्चापाततः सर्व्वत्र बहुब्रीहौ विशेष्यपदाध्याहारे मानाभावात्। वस्तुतो दण्ड्यादिवद्बहुब्रीहेरपि त्रिलिङ्गकत्वं वक्तृविवक्षया च प्रयोगनियमः विशेष्यपदसत्त्वे तु समानाधिकरणस्येत्यादिनियम एव वक्तृविवक्षा बाधिकेत्येव तत्त्वं। 'विशेषणपदस्येति बहुब्रीहेर्विशेषणं, 'शक्तिं विनेति, पदत्वस्य शक्तिमत्त्वरूपतया शक्तिं विना विशेषणपदत्वस्यैवासम्भवादिति भावः। 'विशेषणपदत्वमेवेति विशेषणोपस्थापकशब्दत्वमेवेत्यर्थः, 'शक्तत्वे सतीति शक्तत्वे सति विशेषणोपस्थापकत्वमित्यर्थः, 'दण्ड्यादीति, तथाच शक्तत्वप्रवेशे एषामसंग्रह इति भावः। 'गुणवाचीति, यद्यपि शुक्लादिशब्दानां प्रकृते लक्षणायामपि शक्तत्वमस्त्येवेतिनैतद्दूषणं घटते तथापि लक्षकपदेन स्वलिङ्गं न परित्यज्यत इति परोक्तनियमे व्यभिचारपरोऽयं ग्रन्थो न तु शक्तत्वप्रवेशे दूषणपर इत्यवधेयं। अतएवाग्रेऽ शङ्कते, 'नन्विति,

त्वेन स्वलिङ्गप्राप्तौ "गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वतीत्यनुशासनाल्लाक्षणिकस्यापि विशेष्यलिङ्गकत्वम्। न च बहुव्रीहौ तथानुशासनमस्तीति चेत्, न, तस्य न्यायप्राप्तानुवादकत्वात्। अतएव शुक्लं रूपमिति शुक्लगुणवाचकत्वेऽपि लिङ्गानुशासनं परिभूय विशेषणपदत्वात् शुक्लपदं विशेष्यरूपपदस्यैव लिङ्गं

नद्यादावसमासेऽजहल्लिङ्गतया समासे कर्मधारयस्यापि तत्पुरुषप्रभेदत्वेन परवल्लिङ्गमित्याद्यनुशासनेनैव व्यभिचाराभावेन विशेषणान्तरदानाभावाच्चेति भावः। 'तस्येति व्याकरणसिद्धमनूद्यते कोषेण, न हि कोषस्य तदनुशासनसामर्थ्यमिति भावः। शुक्लोरूप-

---

मर्णमिति भावः। 'तस्येति उक्तन्यायसिद्धमनूद्यते कोषेण न तु तस्य तदनुशासनसामर्थ्यमित्यर्थः। नन्वेतदेव कुत इत्यत आह, 'अतएवेति उक्तकोषस्य स्वातन्त्र्येण तदनुशासनसामर्थ्याभावादेवेत्यर्थः। ननु "गुणे शुक्लादय इत्यस्य गुणे विशेष्यपदे इत्यर्थः, अत्र च रूपं विशेष्यपदमित्यरुचेराह,

---

'स्वलिङ्गप्राप्ताविति स्वलिङ्गप्राप्तेरुचितत्वेऽपीत्यर्थः, 'लाक्षणिकस्यापीति, तस्येति शेषः। 'तथानुशासनं' लिङ्गानुशासनं, 'तस्य' "गुणे शुक्लादयः पुंसीत्यादेः, 'न्यायप्राप्तेति, समानाधिकरणस्येत्याद्युक्तन्यायसिद्धत्वानुवादकत्वं न तु स्वातन्त्र्येण लिङ्गविधायकत्वमित्यर्थः। 'अतएवेति यत एव न स्वातन्त्र्येण तस्य लिङ्गविधायकत्वमत एवेत्यर्थः। अथ "गुणे शुक्लादयः पुंसीत्यत्रासति गुणवाचकविशेष्यपदासन्निधाने इति विशेषणान्नैतादृशः प्रयोग-

गृह्णातीति। अन्यथा शुक्लोरूपमिति स्यात्। किञ्च बहुव्रीहेर्लिङ्गानुशासनाभावेन स्वलिङ्गाभावाद्विशेषणोपस्थापकवाक्यत्वाच्च विशेष्यपदलिङ्गतैव युक्ता यथा दण्डी पुरुष इत्यादौ। वस्तुतो बहुव्रीहेरन्यपदार्थे शक्तावपि कथं नानालिङ्गकत्वं तथा लिङ्गानुशासनाभावात्। अथ विशेषणपदत्वाद्विशेष्यपदलिङ्गता विशेष्यपदञ्च नानालिङ्गमतो नानालिङ्गतेति चेत्, तर्हि लाघवाल्लक्षणैवास्तु उक्तन्यायेनैव लक्षणीयविशेष्यपदलिङ्गत्वोपपत्तेरिति।

---

मिति नान्वयः, गुणे शुक्लादय इत्यस्य गुणविशेष्य इत्यर्थ इत्यरुचेराह, 'किञ्चेति।

---

'किञ्चेति, 'तर्हीति। नन्वेवं चित्रगुधनमित्यादौ बहुव्रीहिलक्षणानन्तरं तत्पुरुषलक्षणायां लक्षितलक्षणा स्यात्। न च परम्परासम्बन्धादेकैव लक्षणा अन्यपदार्थसम्बन्धिनि बहुव्रीहेरनुशासनाभावात् तस्माद्बहुव्रीहौ शक्तिरेवेति चेत्, न, बहुव्रीहिलक्षणया चित्रगुपदस्य अन्यपदार्थपरत्वे तत्सम्बन्धिनि परम्परासम्बन्धेन तत्पुरुषलक्षणायाश्च लक्षणाद्वयादेव युगपदन्वयबोधोपपत्तेः युगपद्वृत्तिद्वयविरोधस्य मणिकृन्मतेऽभावादिति।

---

इत्यत आह, 'किञ्चेति, 'स्वलिङ्गाभावादिति, तथाच लाक्षणिकपदे स्वलिङ्गापरित्याग इति नियमस्यात्रानवकाश इति भावः। 'तथा लिङ्गानुशासनेति नानालिङ्गविधायकानुशासनाभावादित्यर्थः, 'लाघवादिति, अतिरिक्तशक्तिकल्पने गौरवादिति भावः। इति बहुव्रीहिरहस्यं।

**तत्पुरुषेऽपि राजपुरुष इत्यादौ पूर्वपदस्य षष्ठ्यर्थ-सम्बन्धे निरूढलक्षणयैव राजसम्बन्धिपुरुषबुद्ध्युपपत्तेर्न समासे शक्तिरनन्यलभ्यस्य शब्दार्थत्वात्।**

---

ननु तत्पुरुषस्थले समासत्वेनैव शक्तिकल्पनाद्बहुव्रीहावपि शक्तिरित्यत आह, 'तत्पुरुषेति, 'षष्ठ्यर्थसम्बन्धे' सम्बन्धिनीत्यर्थः,

---

ननु तत्पुरुषस्थले समासत्वेनैव शक्तिकल्पनाद्बहुव्रीहावपि शक्तिरित्यत-आह 'तत्पुरुष इति। ननु कर्म्मधारयस्यापि तत्पुरुषतया तत्साधारण्येन लक्षणोपपादनमयुक्तमित्यतोविशिनष्टि, 'राजपुरुषइत्यादाविति, 'षष्ठ्यर्थसम्बन्ध-इति सम्बन्धिनीत्यर्थः, द्वयोः प्रातिपदिकार्थयोरभेदान्वयबोध एव सामर्थ्यं

---

ननु तथापि तत्पुरुषस्थले समुदायशक्तिरावश्यकीत्यत आह, 'तत्-पुरुषेऽपीति, कर्म्मधारयस्यापि तत्पुरुषतया तत्र लक्षणाविरहात् तद्व्या-वर्त्तनायाह, 'राजपुरुषइत्यादाविति, 'पूर्व्वपदस्येति राजपदस्येत्यर्थः, 'षष्ठ्यर्थ-सम्बन्ध इति षष्ठ्यर्थराजसम्बन्धिनि लक्षणेत्यर्थः, तस्य चाभेदेन पुरुषेऽन्वय-इति भावः। यथाश्रुतन्तु न सङ्गच्छते राजसम्बन्धलक्षणायां तस्याश्रय-तया पुरुषे अन्वयः तादात्म्यसम्बन्धेन वा, नाद्यः नामार्थयोरभेदाति-रिक्तसम्बन्धेनान्वयस्याव्युत्पन्नत्वादन्यथा राजसम्बन्धः पुरुष इत्यत्राप्याश्र-यतया अन्वयापत्तेः, नान्त्यः बाधितत्वात्। न च राजसम्बन्धिनि लक्ष-णायां नीलोत्पलमित्यादाविव कर्म्मधारयत्वापत्तिरभेदेनान्वयस्य तुल्यत्वा-दिति वाच्यं। किञ्चिद्विशिष्टद्वितीयादिविभक्त्यर्थतावच्छेदकविशिष्टवता यत्र नाभेदधीस्तत्रैव कर्म्मधारयाभ्युपगमात्, अतएव राजपुरुषेत्यत्र राजप्रकारेण राजवति लक्षणायां कर्म्मधारयत्वं, नीलोत्पलमित्यत्र नीलपदस्य नील-गुणप्रकारेण लक्षणायामेव कर्म्मधारयत्वं नीलसम्बन्धित्वेन लक्षणायान्तु तत्पुरुषत्वमेव राजपदस्य सम्बन्धिमात्रपरत्वे कर्म्मधारयतासम्पत्तये किञ्चि-

यत्तु समस्यमानपदातिरिक्तं न समासपदं समस्य-

---

द्विशिष्टेत्युक्तं, पाकरक्तो घटः शोभनराजपुरुष इत्यादौ तु रक्तपद-राज-पदादेरेव पाककरणकरक्तत्वाश्रय-शोभनराजसम्बन्ध्यादिषु लक्षणा पाक-पद-राजपदादिकन्तु तात्पर्य्यग्राहकं।

यत्तु पाकपदं पाककरणकपरमेव तस्य चाभेदेन रक्तपदार्थैकदेशे रक्तत्वे तादात्म्येनान्वयः, एवं शोभनराजपुरुष इत्यादावपि राजपदं राज-सम्बन्धिपरमेव तदेकदेशे राज्ञि शोभनस्याभेदेनान्वय इति। तदसत्। अभेदेन पदार्थैकदेशान्वयस्यात्यन्तमव्युत्पन्नत्वात्।

उपाध्यायास्तु निपातातिरिक्त इव समासातिरिक्त एव नामार्थ-योर्भेदान्वयस्याव्युत्पन्नतया राजपुरुष इत्यादौ राजादिपदस्य राजसम्बन्धादा-वेव लक्षणा तथाच षष्ठ्यर्थसम्बन्ध इति यथाश्रुतमूलमेव साधु। अतएव कर्म्म-धारय-षष्ठीतत्पुरुषयोर्भेदोऽपि स्फुटतरमुपपद्यते, कर्म्मधारयेऽभेदः संस-र्गोऽत्र तु भेद इति भेदात्। न च समासातिरिक्त एव नामार्थयोर्भेदान्वय-स्याव्युत्पन्नत्वे राज-पुरुषयोः संसर्गमर्य्यादयैव सम्बन्धभानसम्भवात् सम्बन्ध-लक्षणापि वृथेति वाच्यं। विग्रह-समासयोस्तुल्यार्थकत्वानुरोधेन सम्बन्ध-लक्षणाभ्युपगमादित्याहुः। तदसत्। व्युत्पत्तिसङ्कोचे मानाभावाद्गौरवाच्च विग्रह-समासयोस्तुल्यार्थकत्वस्य चासिद्धत्वादिति दिक्।

'अनन्यलभ्यस्येति, न च लक्षणया राजसम्बन्ध्यभिन्नपुरुषबुद्ध्युपपा-दनेऽपि राजपुरुष इत्यादौ राजवत्पुरुषबोधस्यानुभवसिद्धस्य न तयोपपत्ति-रिति तदर्थं समुदायशक्तिरावश्यकीति वाच्यं। तादृशबोधस्यैवासिद्धेः तादृश-बोधस्यानुभवसिद्धत्वेऽपि पुरुषपदस्य राजवत्पुरुषे लक्षणा राजपदं तात्पर्य्य-ग्राहकमित्यस्य सुवचतया समुदायशक्त्यसिद्धेः। न चैवं घटादिपदेऽपि समुदायशक्त्युच्छेदः तत्राप्यन्तिमवर्णलक्षणयैव घटादिबोधोपपत्तेरिति वाच्यं। तत्रैकाक्षरकोषमविदुषोऽन्त्यवर्णलक्षणाप्रतिसन्धानं विनापि घटादिबोध-स्यानुभवसिद्धतया समुदायशक्तिसिद्धेरिति भावः। 'समस्यमानपदाना-

मानपदानां प्रत्यभिज्ञानादतो न समासे शक्तिरिति। तन्न। पद-तत्समुदाययोर्भिन्नत्वात्।

नन्वनुपपत्तिं विना कथं षष्ठ्यर्थे लक्षणेति चेत्,

---

द्वयोः प्रातिपदिकार्थयोः स्वभावादभेदान्वयबोध एव सामर्थ्यं अत एव विभक्त्यादिपदेषु सम्बन्धादिधर्म्मपरोक्तप्रातिपदिकार्थान्वयबोधकत्वं अर्थविशेषबोधे पदविशेषस्य तन्त्रत्वादत एव व्यासेन तदर्थ-

---

स्वभावादत एव नीलो घट इत्यत्राभेदोपचारोऽन्यथा समवायस्यैव गुण-गुणिसंसर्गत्वसम्भवादिति वदन्ति, तच्चिन्त्यं घटो नेत्यत्र प्रातिपदिकयोर्भेदेनाप्यन्वयदर्शनेन तथा अनियमात्। यदि च नञादिपदे भिन्नैव व्युत्पत्तिरिति तदितरत्र तथा नियम इति मन्यसे तदा समासेऽपि भिन्नैव व्युत्पत्तिरिति तदितरत्र तथा नियम इति तुल्यं। किञ्चैवं राजसम्बन्धी पुरुष इति विग्रहवाक्यं स्यान्न तु राज्ञः पुरुष इति समाससमानार्थ-समासारम्भकपदसमूहस्यैव विग्रहत्वात् तथा सति च कर्म्मधारयत्वापत्तौ षष्ठीसमासोच्छेदापत्तेः। न च शक्त्या अभेदप्रतियोग्युपस्थापने कर्म्मधारय इति वाच्यं। नीलोत्पलमित्यादौ तदभावापत्तेः नीलपदस्यौपचारिकत्वात् तस्मात् सम्बन्ध एव लक्षणा राजसम्बन्ध-पुरुषयोश्च धर्म्म-धर्म्मिभाव एवान्वय इति युक्तमुत्पश्यामः। न च षष्ठ्यर्थस्य लक्षणाया नामार्थत्वे भेदेनाप्यन्वयोन स्यात् विभक्त्यर्थापेक्षो भेदेन नामार्थयोरन्वय इति वक्ष्यमाणव्युत्पत्तिविरोधादिति वाच्यम्। तस्य विभक्त्यर्थातिरिक्तनामार्थान्वयपरत्वात्।

मिति समस्यमानपदत्वस्यानुभवसिद्धत्वादित्यर्थः, 'न समासे शक्तिरिति न समासस्य विशिष्टार्थे शक्तिरित्यर्थः, समस्यमानपदानां प्रत्येकमन्यत्र शक्तिकल्पनादिति भावः। 'भिन्नत्वादिति भिन्नानुपूर्व्वीकत्वादित्यर्थः।

'षष्ठ्यर्थ इति षष्ठ्यर्थसम्बन्धप्रकारेण लक्षणेत्यर्थः, एवमग्रेऽपि। राज-

यदि षष्ठ्यर्थो न लक्ष्यते तदा राजपुरुषादौ लाघवादिना प्राक्सामानाधिकरण्यावगमाद्राजत्वविशिष्टपुरुषस्यैव वैभक्तिकोऽन्वयः स्यात्, राजवाहनमानयेत्यादौ वाहनपदे वाहनवल्लक्षणा स्यात्। अथ राजत्वविशिष्टेऽस्मदाद्यानयनान्वयोऽयोग्य इति चेत्, तर्ह्यन्वयैवानुपपत्त्या तात्पर्यानुपपत्त्या वा षष्ठ्यर्थे लक्षणा, विभ-

---

बोधनमन्यथा स एवार्थोऽभावसदृशादिपदेनान्यथा बोध्यते क्वचित् संसर्गविधया क्वचित् प्रकारतया सम्बन्धभानात् अतः पटोनेत्यादौ न षष्ठी पटस्याभाव इत्यादौ षष्ठी। न च राजपदादेः सम्बन्धिपरत्वे कर्मधारयापत्तिः, समासपूर्व्वं तत्परत्वाभावात् सति तत्पुरुषेऽनु-

---

पूर्व्वोक्तरीत्या राजपदार्थस्यापि भानमतो विग्रहसमानार्थत्वं वृत्तिद्वयविरोधेन तवापि सममिति दूषणमनवकाशं बोध्यं। 'यदीति, यत्र तत्सम्बन्धिनि तात्पर्य्यग्रहस्तत्रैव षष्ठ्यर्थलक्षणा अन्यत्र तु कर्म्मधारयादभेदान्वयधीरिष्टैवेति भावः। 'विभक्त्यर्थेति, नामार्थयोर्भेदेनान्वयो विभक्त्यर्थद्वारैवेति व्युत्पत्तेरिति भावः। न च भेदेनेति व्यर्थं, नीलोघट इत्यादौ व्यभिचारवारक-

---

सम्बन्धिपुरुषबुद्ध्यनुपपत्त्या लक्षणेति समाधत्ते, 'यदीति, 'षष्ठ्यर्थो न लक्ष्यत इति षष्ठ्यर्थप्रकारेण लक्षणा न क्रियत इत्यर्थः, 'लाघवादिनेति, लुप्तषष्ठीस्मरणकल्पने गौरवादिति भावः। 'आदिपदात् सर्व्वत्र लुप्तषष्ठीस्मरणे मानाभावस्य परिग्रहः, 'प्राक्सामानधिकरण्येति प्रथमं राज-पुरुषयोरभेदान्वयबोधादित्यर्थः, 'वैभक्तिकोऽन्वय इति विभक्त्यर्थान्वय इत्यर्थः। अनुपपत्त्यन्तरमाह, 'राजवाहनेति वाहनेन समं राज्ञोऽभेदान्वयबोधासम्भवादिति। 'तात्पर्य्यानुपपत्त्येति तात्पर्य्यविषयीभूतस्य राजकीयपुरुषबोधस्यानुपपत्त्येत्यर्थः। ननु विग्रहवाक्यस्थषष्ठ्यर्थसम्बन्धेन पुरुषे राज्ञोऽन्वयादेव राज-

क्त्यर्थापेक्षो हि सर्वच नामार्थान्वयः । अतः श्रुतविभक्त्यर्थासम्भवे विभक्त्यर्थलक्षणैवोचिता । अथ राजपुरुषादावन्वयप्रकारतया षष्ठ्यर्थसम्बन्धबुद्धिरतो न

---

पपत्त्या सम्बन्धलक्षणापर्य्यवसानादिति भावः । 'नामेति, इदन्तु समाधिसौकर्य्यादुक्तं । वस्तुतः षष्ठ्यर्थोपस्थितावपि नामार्थयोर्नान्वय-

---

त्वात् विशेषणविभक्तेः साधुत्वार्थत्वात् तस्या अभेदार्थकत्वस्यैकदेशिमतत्वात् अन्यथा नीलघट इत्यादौ कर्म्मधारये विग्रहसमानार्थतया विभक्त्यर्थलक्षणापत्तौ निषादाधिकरणविरोधापत्तेः । एवञ्च कर्म्मधारयेऽपि व्यभिचारवारकं तदिति ध्येयं । नन्वेवमपि भूतले घटो नास्तीत्यादौ व्यभिचारः तत्र षष्ठ्यर्थलक्षणानभ्युपगमात् । न चाव्यय-निपातातिरिक्तस्थले उक्तव्युत्पत्तिरिति वाच्यम् । अघट इत्यादौ सम्बन्धलक्षणाभावप्रसङ्गादिति चेत्, न, घटो नास्ति घटो नष्ट इत्यादौ विभक्त्यर्थसङ्ख्यान्वयस्यानुभविकत्वेन तद्द्वारैवोक्तव्युत्पत्तेरप्रत्यूहत्वात् । अतएव तत्र विभक्तिप्रयोगः साधुरेवेत्यपास्तं । तथा च तत्रान्वयप्रकारतयैव सम्बन्धो भासते घटस्य नेत्यादिर्न प्रयोगः असाधुत्वात् । न चैवमपि तद्धनमित्यादौ व्यभिचारः सर्व्वनाम्नि लक्षणाविरहादिति वाच्यम् । तत्रापि तस्या व्यवस्थापितत्वात् । न च सम्बन्धस्य तत्पदशक्यतया तत्र न लक्षणेति वाच्यम् । शक्यसम्बन्धस्य तत्राप्यनपायादिति दिक् । 'अन्वयप्रकारतयेति छिद्रेतरत्ववत् प्रकारान्तरोपस्थितस्यैवान्वयप्रतियोगितयेत्यर्थः । ननु तदनुपस्थितौ तत्र तात्पर्य्याग्रहे तत्र लक्षणापि

---

कीयपुरुषबोधोपपत्त्या किं लक्षणयेत्यत आह, 'विभक्त्यर्थापेक्षो हीति विभक्त्यर्थविशेष्यको हीत्यर्थः, 'नामार्थान्वयः' भेदेन नामार्थप्रकारकोऽन्वयः, 'श्रुतविभक्त्यर्थेति विग्रहवाक्यश्रुतविभक्त्यर्थसम्बन्धेनान्वयासम्भव इत्यर्थः । 'विभक्त्यर्थलक्षणैवेति, 'अन्वयप्रकारतया' राज-पुरुषयोरन्वयप्रतियोगितया, राज-पुरुषयोर्विशेष्य-विशेषणतयेति यावत्, 'षष्ठ्यर्थसम्बन्धबुद्धिरिति छिद्रेत-

पूर्व्वपदे लक्षणा न, वा समासे शक्तिरिति। तन्न। नामार्थयोरन्वयाभिधानेऽन्वयप्रकारतया नियमतः षष्ठ्यर्थोपस्थितौ हेत्वभावात् शब्दादनुपस्थितस्यान्वयप्रकारतया भाने मानाभावाच्च। चैत्रस्य नप्तेत्यादौ पुत्रस्य नप्तृपदाच्छक्यतावच्छेदकतयोपस्थितस्यान्वयप्रकारत्वेन ज्ञानं।

प्रकारतया तज्ज्ञानं अभेदेनैव तयोरन्वयबोधकत्वव्युत्पत्तेः, अन्यथा नीलोघट इत्यत्राभेदोपचारो न कल्प्येत समवायस्यैव गुण-गुणिसंसर्गत्वसम्भवादिति तत्त्वं। 'नप्तृपदादिति, षष्ठ्यर्थपरम्परासम्बन्धे पुत्रस्य सम्बन्धघटकतया भानादिति भावः।

न स्यादिति तदुपस्थितिरावश्यकी। किञ्च पटो नेत्यत्रैवान्वयरूपतयैव तज्ज्ञानमस्त्वित्यत आह, 'शब्दादिति। न च तत्प्रकारकानुभवोऽसिद्ध एवेति वाच्यम्। विग्रहतुल्यप्रकारकज्ञानजनकत्वात् विभक्त्यर्थोपस्थितिं विना भेदेनान्वये पूर्व्वव्युत्पत्तिविरोधाच्च। 'नप्तृपदादिति पुत्रपुत्रस्य शक्यत्वे पुत्रस्यावच्छेदकत्वमित्यर्थः।

रत्ववत् प्रकारान्तरोपस्थितस्यैव षष्ठ्यर्थसम्बन्धस्य बुद्धिरित्यर्थः। 'नामार्थयोः' राज-पुरुषयोः, 'अन्वयाभिधाने' शाब्दबोधे, जायमान इति शेषः। 'अन्वयप्रकारतयेति अन्वयप्रकारीभूतधर्म्मप्रकारेणेत्यर्थः। ननु भवतोनियमतो लक्षणाया सम्बन्ध्युपस्थितिवत् नियमतः स्वतन्त्रसम्बन्धस्मृतिरपि यथायकश्चित् स्यात् कार्य्योन्नेयधर्म्माणां यथा कार्य्यमुन्नयनादित्यत आह, 'शब्दादिति, 'मानाभावाच्चेति सामग्र्यभावाच्चेत्यर्थः, पदजन्यपदार्थोपस्थितेरेव शाब्दधीहेतुत्वादिति भावः। नन्वेवं चैत्रस्य नप्तेत्यादौ चैत्रपुत्रस्य शब्दादनुपस्थितस्य कुतोऽन्वयप्रकारतया भानमित्यत आह, 'चैत्रस्येति, 'शक्यतावच्छेदकतयेति,

राज्ञः पुरुष इत्यादौ विग्रहे समासाभिधानाल्लुप्ता स्मृता षष्ठ्येव सम्बन्धस्मारिका अतो न लक्षणा न वा शक्तिरित्येके । तन्न । राजपुरुषमानयेत्युक्ते पूर्वं नियमेन विग्रहाश्रवणात् । शाब्दिकानान्तु विग्रहाभिधानं

---

'विग्रहाश्रवणादिति । न च दधि पश्येत्यादाविव लुप्तविभक्तेर्नियतोपस्थितिः स्यादिति वाच्यम् । तत्र क्रिया-कर्म्मभावेनान्वयस्य विभक्तिं विनाकाङ्क्षाविरहेणानुपपत्तेः घटः कर्म्मत्वमित्यत्रेव समासे तु विभक्तिमन्तरेणाप्याकाङ्क्षादर्शनात् लाघवेन लक्षणाकल्पनात् तदिदमुक्तं अग्निकरणकौदन-

---

पुत्रपुत्रत्वरूपेण शक्तौ पुत्रस्यावच्छेदकत्वादिति भावः । 'अन्वयप्रकारत्वेन ज्ञानमिति अन्वयबोधे प्रकारतया भानमित्यर्थः ।

केषाञ्चिन्मतं दूषयितुमाशङ्कते, 'राज्ञ इति । न चैवं षष्ठीतत्पुरुषेऽपि लक्षणाविरहे "निषादस्थपतिं याजयेदित्यत्र कुतो निषादस्य चाण्डालस्य स्थपतिः निषादस्थपतिरिति षष्ठीतत्पुरुषमपहाय निषादश्चासौ स्थपतिश्चेति कर्म्मधारयादरः कर्म्मधारये निषादस्य चाण्डालस्यापि वैदिकमन्त्राध्ययनप्रसक्त्या "स्त्री-शूद्रौ नाधीयेतामिति विधिसङ्कोचापत्त्या तत्पुरुषस्यैवोचितत्वात् लक्षणाविरहस्य चोभयत्राविशिष्टत्वादिति वाच्यं । लुप्तविभक्तिस्मरणकल्पनाप्रसङ्गादेव तत्पुरुषपरित्यागात् वेदे तत्पुरुष-कर्म्मधारययोरुभयोः सम्भवे कर्म्मधारय एवाद्रियते न तत्पुरुष इति सकलमीमांसासिद्धनियमबलेन परित्यागाच्च, अन्यथा षष्ठीतत्पुरुषे लक्षणापत्तेऽप्यनिस्ताराच्छक्ति-लक्षणयोरुभयोरेव वृत्तिरूपतया लक्षणाकल्पनस्यादोषत्वाद्विधिसङ्कोचकल्पनस्यैव च दोषत्वादिति भावः । 'विग्रहाश्रवणादिति, तथाच यत्र न विभक्तिस्मरणं तत्र लक्षणावश्यकीति भावः । ननु यदि विग्रहाप्रतिसन्धानेऽप्यन्वयधीस्तदा विग्रहप्रतिसन्धानार्थं समासस्थले शाब्दिकानां विग्रहप्रतिसन्धानवैयर्थ्यमित्यत आह, 'शाब्दिकानान्त्विति, 'विग्रहाभिधानं'

समासार्थकथनपरं विभाषाधिकारे च समासानुशासनं समास-विग्रहयोः पर्यायत्वं साधुत्वं वा बोधयितुम्। विशेषस्तु विग्रहे सोऽर्थो नाम-विभक्त्यादिभिः शक्त्याभिधीयते समासे तु राजादिपदेन लक्षणया।

'कथनपरमिति न तु समानार्थकेऽन्यतरोपस्थितावपरोपस्थितिनियम इत्यर्थः। नन्वन्यत्रानियमेऽपि अत्र विभाषाश्रवणान्नियम इत्यत आह, 'विभाषेति, 'बोधयितुं', न तूभयोपस्थितिनियमं

कर्म्मकपाकविषयककृतिरिष्टसाधनमिति तु वाक्यमिति। यत्र च दैवाद्विभक्त्युपस्थितिस्तत्र समासशक्तिभ्रमवत इव लक्षणाविरहेऽपि न क्षतिरित्यपि वदन्ति। 'कथनपरमिति, न च समानार्थकत्वे अन्यतरोपस्थितावपरोपस्थितिनियम इति भावः। अन्यथा अपभ्रंशे स्मृतसाधुशब्दवद्विग्रह एव

अस्मिन् विग्रहे अयं समास इत्यभिधानं, 'समासार्थकथनपरमिति समासस्य तात्पर्य्यविषयीभूतोऽयमर्थ इति प्रतिपादनार्थमित्यर्थः, न तु समासार्थबोधपूर्व्वं विग्रहप्रतिसन्धानार्थमिति भावः। ननु यदि विग्रहप्रतिसन्धाननियमो नास्ति तदा तदर्थं विभाषया समासानुसरणमफलमित्यत आह, 'विभाषेति, 'बोधयितुमिति, न तु नियमत उपस्थित्यर्थमिति भावः। यद्यपि विग्रहसमासयोः कथं पर्य्यायत्वमर्थभेदात्। न च विग्रहेऽपि सम्बन्धिनि षष्ठ्या लक्षणेति वाच्यं। 'शक्त्याभिधीयत इत्यग्रिमग्रन्थविरोधापत्तेः सुबर्थ-नामार्थयोरभेदान्वयबोधस्याव्युत्पन्नतया अनन्वयापत्तेश्च, अन्यथा प्रमेयं ग्रामं घटस्य संयोग इत्यादौ ग्रामकर्म्मत्वाभिन्नः प्रमेयः घटसम्बन्ध्यभिन्नः संयोग इत्यन्वयबोधापत्तेस्तथापि पर्य्यायत्वं एकमुख्यविशेष्यकबोधजनकत्वं, साधुत्वं एकमुख्यविशेष्यकशाब्दबोधसाकाङ्क्षत्वं। यद्वा पर्य्यायत्वं अन्यूनानतिरिक्तविष-

बहुव्रीहौ तु नित्यसमासत्वाभिधानं विग्रहस्यासाधुत्व-ख्यापनार्थम् चित्रा गौर्यस्येति विग्रहाभिधानं बहु-व्रीह्यर्थकथनपरम्। स्यादेतत् "विभाषेति सूत्रेण

---

कर्त्तुमिति भावः। नन्वेवं समासोऽप्ययं नित्य एव विग्रहपूर्व्वकत्वा-नियमादिति बहुव्रीहौ विशेषविधिर्विरुद्ध इत्यत आह, 'बहुव्री-हाविति' 'ख्यापनार्थमिति, तथाच विग्रहसाधुत्वासाधुत्वप्रयुक्तएवा-नित्यत्व-नित्यत्वविभाग इति भावः। 'अर्थकथनेति, समस्यमान-

---

बोधकोन समास इत्यपि कल्प्येतेत्यपि बोध्यं। 'विग्रहस्येति समाससमा-नार्थकसमस्यमानपदमात्रस्येत्यर्थः। 'चित्रेत्युपलक्षणं चित्राया गोः सम्बन्धी-त्यादिकमपि न विग्रह इत्यपि बोध्यं। तथाच विग्रहसाधुत्वासाधुत्वन्तु न एव

---

यकशाब्दबोधजनकत्वं, साधुत्वं तादृशबोधसाकाङ्क्षत्वं, सम्बन्धितादात्म्यस्य सम्बन्धात्मकतया समासेऽप्यतिरिक्ताभानादिति हृदयं।

केचित्तु ननु यदि विग्रहप्रतिसन्धाने नियमो नास्ति तदा समासार्थ-बोधे विग्रहस्योपयोगिताबोधनार्थं विभाषया समासानुशासनमफलमित्यत-आह, "विभाषेति, न तु समासार्थबोधे विग्रहस्योपयोगिताज्ञापनार्थमिति भाव इत्याहुः।

नन्वेवं बहुव्रीहौ विग्रहाभावरूपनित्यसमासानुशासनं समासान्तरे नियमतो विग्रहप्रतिसन्धानख्यापनार्थं तच्चासङ्गतमित्यत आह, 'बहुव्रीहौ त्विति, 'असाधुत्वख्यापनार्थमिति समासे यो मुख्यविशेष्यस्तन्मुख्यविशेष्य-कान्वयबोधे निराकाङ्क्षत्वख्यापनार्थमित्यर्थः, सपुत्रक इत्यादिप्रथमान्तान्य-पदार्थबहुव्रीहिस्तु न नित्यसमास, इति भावः। नन्वेवं चित्रा गौर्यस्येति वाक्यस्य कुतो बहुव्रीहिसमासमुख्यविशेष्यकज्ञानजनकत्वमित्यत आह, 'चित्रेति, 'विग्रहाभिधानं' विग्रहवाक्यं, 'बहुव्रीह्यर्थकथनपरमिति बहु-

वाक्य-समासयोस्तुल्यार्थता दर्शिता वाक्ये च मुख्या वृत्तिरतः समासेऽपि सैव वृत्तिः अन्यथा अतुल्यार्थतापत्तेः वाचकस्यैवानुशासनाच्च यथा लिङादेः। न च लाक्षणिकं वाचकम्, अन्यथा गाव्यादेरप्यनुशासनापत्तेः। अथ वाचकव्युत्पादनवल्लाक्षणिकव्युत्पादनमपि उभयोरपि ज्ञानयोः पदार्थोपस्थापकत्वादिति चेत्, न, वाचकत्वज्ञानं विना वाच्याज्ञानाद्युक्तं वाचकत्वानुशासनं, लाक्षणिकञ्च शक्यव्युत्पत्त्यैव परम्परया लक्ष्यस्मारकमतो न तस्य व्युत्पत्त्यन्तरापेक्षा। न च प्रयोगानुशासनं व्याकरणं स च लक्षणायामप्यस्ति अतस्तस्याप्यनुशासनं घोषसमभिव्याहारे गङ्गापद-

---

नित्यत्वानित्यत्वविभाग इति भावः। ननु तुल्यार्थत्वं न तुल्यप्रवृत्तिनिमित्तकत्वं वाक्ये शक्त्यभावेन तदभावात् किन्तु तुल्यप्रतिपाद्यकत्वं, तच्च लक्षणायामपि तुल्यमित्यरुचेराह, 'वाचकस्यैवेति, 'अन्यथेति अवाचकस्याप्यनुशासने

व्रीह्यर्थमात्रबोधकं, न तु बहुव्रीहिसमानमुख्यविशेष्यकज्ञानजनकत्वमित्यर्थः, 'सैव वृत्तिरिति वाक्यसमानार्थे सैव वृत्तिरित्यर्थः। ननु तुल्यार्थकत्वं तुल्यप्रतिपादकत्वं तच्चोत्तरपदे राजसम्बन्धवत्पुरुषे लक्षणायामपि निर्व्वहतीत्यत आह, 'वाचकस्यैवेति तद्वाचकस्यैव तत्रानुशासनादित्यर्थः, 'लाक्षणिकं वाचकमिति तल्लाक्षणिकं तद्वाचकमित्यर्थः, 'अन्यथा' अवाचकस्याप्यनुशासने, 'वाच्याज्ञानात्' वाच्यास्मरणात्, 'शक्यव्युत्पत्त्यैवेति शक्ये शक्तिग्रहेणैवेत्यर्थः, 'परम्परया' शक्यस्मृतिद्वारा, 'व्युत्पत्त्यन्तरापेक्षेति लक्ष्ये लक्षणाग्रहापेक्षेत्यर्थः, 'अस्ति' भवति, 'समभिव्याहार इति तथाच ग

स्येवेति वाच्यम्। गङ्गायामितिमात्रं ह्यनुशिष्टं तच्च स्नातिसमभिव्याहारेऽप्युपपन्नं न तु तत्तद्वाक्यस्थत्वेन। किञ्च गङ्गायामितिपदं नानुशिष्टं किन्तु विभक्तिः सा चोभयत्र वाचिकैवेति न प्रातिपदिकवृत्तेर्मुख्याया वा लक्षणाया वा अपेक्षा, अतएव विभक्तौ न लक्षणा अवाचकस्याननुशासनादिति। उच्यते। साधुपदस्यानुशासनं व्याकरणं तस्य साधुत्वज्ञापकत्वेनैव प्रामाणिकप्रसिद्धिसिद्धत्वात्। अतएव न गाव्यादेरनुशासनं तस्यासाधुत्वात्। अस्ति च समासः साधुरतोयुक्तं तस्य साधुत्वानुशासनम्। साधुता च लाक्षणिकेनापि

इत्यर्थः, 'गङ्गायामिति गङ्गायामितिपदमेवेत्यर्थः। ननु सामीप्ये तदनुशासनादर्थप्रतिपत्तिवद्वाक्यस्थत्वेनाप्यनुशासनमित्यरुचेराह, 'किञ्चेति, 'प्रातिपादिकेति गङ्गापदवृत्तेरित्यर्थः। अतएवेत्यस्य परामर्शनीयमाह, 'अवाचकस्येति, टाप्ङीवादीनां गङ्गानद्यादिपदे शूद्रा-ब्राह्मण्यादौ तु स्त्रीत्ववाचकत्वमेव तयोरित्याहुः। 'अतएवेति व्याकरणस्य वाचकमात्रानुशासकत्वा-

ल्लाक्षणिकमिति भावः। 'तत्तद्वाक्यस्थत्वेनेति गङ्गायां घोष इति वाक्यस्थत्वेनेत्यर्थः, 'किन्तु विभक्तिरिति, अधिकरणत्वेऽनुशिष्टेति शेषः, इदमुपलक्षणं, गङ्गापदस्य प्रवाहेऽनुशिष्टमित्यपि बोध्यं। 'उभयत्र' गङ्गापदस्य लाक्षणिकत्वे शक्तत्वे च, 'वाचिकैव' अधिकरणत्ववाचिकैव, 'प्रातिपदिकवृत्तेः' गङ्गापदवृत्तेः, 'न लक्षणेति संख्यायां कर्म्मत्वादौ वा न लक्षणेत्यर्थः, 'अतएवेत्येव विवरणेति, 'अवाचकस्येति तदवाचकस्य तत्रानुशासनादित्यर्थः, 'साधुपदस्यानुशासनमिति पदानां साधुताबोधकमित्यर्थः, साधुत्वञ्च बोधकानुपूर्व्वी-

सम्भवति पदवाचकता चानन्यलभ्यत्वादवगम्यते, न तु व्याकरणं वाचकत्वानुशासनम्, प्रयोगमात्रे साधूनां टाप्ङीवादीनां शपश्यनादिविकरणानां इ-ई-नुमाद्यागमानां वर्णविकारषकार-णकारादीनां निरर्थकानामपि साधुत्वार्थमनुशासनात्। अतएव "द्येकयोरित्याद्यनुशासनस्यैकत्व एवैकवचनप्रयोगः साधुरिति साधुत्वज्ञापनार्थत्वेन सार्थकता, अन्यथैकत्वे एकवच-

पदेनैवार्थकथनस्य विग्रहत्वाद्बहुव्रीहौ लसमस्यमानयस्येत्यादिपदेनापि तदर्थकथनादविग्रहत्वमिति भावः। 'टाप्ङीवादीना-

---

भावादेवेत्यर्थः। 'अन्यथेति, यद्यपि स्वादिसूत्रेण स्वादिमात्रं विवक्षितं न त्वेकत्वादावेकवचनत्वादिकं, तथापि "तान्येकवचन-द्विवचनेत्यादिसूत्रेणान्वर्थ-

मत्त्वं ननु व्याकरणस्य साधुतामात्रानुशासनत्वे पदानां वाचकतासिद्धिः कथं स्यादित्यत आह, 'पदवाचकता चेति, 'वाचकत्वानुशासनमिति वाचकत्वानुशासनमिवेत्यर्थः। 'प्रयोगमात्रे साधूनामिति प्रयोगसाधुतासम्पादकानामित्यर्थः, 'टाप्ङीवादीनामिति, यद्यपि शूद्रा-ब्राह्मणीत्यादौ टाप्ङीवादीनां स्त्रीत्वमेवार्थः। न च तत्र शूद्र-ब्राह्मणादि सामान्यशब्दस्यैव सामान्यरूपेण शूद्रादिस्त्रियां विशेषे तात्पर्य्यमिति वाच्यं। हतशूद्रवधे शूद्रावधोनास्तीति नञर्थान्वयानुपपत्तेः शूद्रवधत्वावच्छिन्नप्रतियोगिताकाभावस्य बाधितत्वात्। न च शूद्रादिपदस्यैव शूद्रादिस्त्रियां लक्षणा टावादयस्तु द्योतका इति वाच्यं। सुवादेरपि संख्याशक्तिविलयापत्तेः, तथापि श्रद्धा-तटीत्यादिपदमभिप्रेत्य इदमुक्तं। 'अतएवेति व्याकरणस्य वाचकतामात्रानुशासकत्वाभावादेवेत्यर्थः, 'द्येकयोरिति, द्विवचनैकवचन इति शेषः, 'आदिपदाद्-

नस्य स्वादिसूत्रेण विहितत्वाद्वैयर्थ्यं स्यात्। द्वित्वादा-वशक्तत्वाद्वैकवचनाप्रयोग इति चेत्, न, लक्षणया

---

मिति गङ्गा-नद्यादिपदे, शूद्रा-ब्राह्मणादौ तु स्त्रीत्ववाचकत्वमेव तयोरित्यवधेयं । 'स्वादिसूत्रेण' "तान्येकवचनेत्यादिसूत्रेणेत्यर्थः ।

---

संज्ञाविधाने तल्लाभे तद्वैयर्थ्यशङ्केति ध्येयं । सुब्विभक्तौ तथा सत्यसाधुत्वा-पत्तेरिति भावः । नन्वेकस्यां पाथःकणिकायामाप इति प्रयोगानुपपत्तिः । न चावयवमादाय तत्र बहुत्वान्वय इति वाच्यं । एकस्मिन् पाथःपरमाणौ तथाप्यगतेः दारा इत्यत्रागतेश्च । न च तत्रापि तद्गतबहुत्वपादिकमादाय बहुत्वान्वयः, तस्य प्रकृत्यर्थत्वाभावात् । न च प्रकृतिलक्षणयैव तदुपपत्तिः, तथाचाजहत्स्वार्थतापत्त्योभयसाधारणरूपाभावादिति । मैवं, तत्र बहु-वचनस्य प्रयोगसाधुत्वात् । अतएव प्रमाणोपाये वर्द्धमानचरणास्तथैवाहु-रिति ।

बहुषु-बहुवचनमित्यस्य परिग्रहः । 'एकत्व एवेत्येवकारात् द्वित्वादि-व्यवच्छेदः, 'स्वादिसूत्रेण विहितत्वादिति तान्येकवचन-बहुवचनानीति संज्ञासूत्रे योगार्थमर्य्यादया प्राप्तत्वादित्यर्थः । यथाश्रुतन्तु न सङ्गच्छते स्वादिसूत्रं हि "सुप् औ जस् अम् औट् शसित्यादिसूत्रं तच्च नैकत्वे एक-वचनविधायकमिति मन्तव्यं । ननु भवन्मतेऽपि द्वित्वादावेकवचनस्यासाधुत्वं शक्त्यभावादेव भविष्यतीति व्यर्थं तदर्थं सूत्रं इत्याशङ्कते, 'द्वित्वादाविति, 'न लक्षणेति यत्र यत्रार्थेऽनुशासनं तदतिरिक्ते लक्षणेत्यर्थः, "द्वेकयो-रित्याद्यनुशासनबलाद्विभक्तेः स्वानुशासितातिरिक्तेऽर्थे न लक्षणया साधुत्व-मिति सामान्यतो नियमलाभादिति भावः । "स्वानुशासितातिरिक्त इत्यनु-शासनात् सुब्विभक्तेर्व्ययानुशासितेऽर्थे लक्षणया साधुत्वेऽपि न क्षतिः, लक्षणयेत्युपादानात धान्येन धनवान् इत्यादावननुशासितेऽप्यभेदादौ

द्वित्वादौ प्रसक्तः प्रयोगोऽसाधुरितिज्ञापकत्वेन सार्थक-

वस्तुतोऽन्वर्थसंज्ञयैव वाचकत्वसिद्धिरिति तत्त्वं । 'द्वित्वादाविति,

केचित्तु एवं सति रथो गच्छतीत्यादावपि प्रयोगसाधुत्वापत्तौ लक्षणा न स्यात् तथाच विभक्तौ लक्षणा नेति न नियमः किन्तूत्सर्ग इत्याहुः। 'तृतीयाया अपीति, ननु रथेन गम्यते इत्यादौ व्यभिचारः रथो गच्छती-

तृतीयादेः साधुत्वेऽपि न क्षतिः, प्राचीननये अभेदादावपि तृतीयादेः शक्त्यभ्युपगमात् उक्तनियमेन प्रामाणिकतया गौरवस्यादोषत्वात् । न चैवं रथेन गम्यते रथो गच्छतीत्यादावाख्यातादेः कृत्यतिरिक्तव्यापारे लक्षणाया कथं साधुत्वं कथं वा चतुर्विंशतिर्गुणा इत्यादावपेक्षाबुद्धिविशेषविषयत्वे लक्षणाया साधुत्वमिति वाच्यं । तत्राप्यनायत्या तेषां शक्तिस्वीकारात्, एवं गुरौ वा यत्र यत्रार्थे विभक्तेः प्रसिद्धप्रयोगोवर्त्तते विशिष्य च नानुशासनं तत्र सर्व्वत्रैव तस्याः शक्तिः एवमेकस्यां पाथःकणिकायामेकस्मिन् पाथः-परमाणौ वा यत्रापः सन्तीति प्रयोगस्तत्रापि बहुवचनस्य नैकत्वे लक्षणा अपि तु प्रकृतिविशेषसमभिव्याहारेण बहुवचनमेकत्वे शक्तं प्रयोग-साधुत्वार्थं वा तत्र बहुवचनमेवं दारा इत्यादावपीति ग्रन्थकृतोनिगर्व्वः। एतच्चापाततः, "द्व्येकयोरित्याद्यनुशासनवैयर्थ्यभिया द्वित्वादावेकवचनादे-र्लक्षणाया न साधुत्वमित्येव नियमोऽस्तु अन्यथा सामान्यतो नियमकल्पने अभेदादिष्वपि तृतीयादेः शक्तिकल्पनापत्तेरित्यवधेयं ।

केचित्तु विभक्तेर्निरूढ़लक्षणेतरलक्षणायां न साधुत्वमिति नियमः तेन रथेन गम्यते रथोगच्छतीत्यादौ तृतीयादेर्व्यापारलक्षणायामपि न क्षतिः तल्लक्षणाया निरूढ़त्वादेवमन्यत्रापि, अतएव सुब्विभक्तेर्थ्यन्त्ययानु-शासितेऽर्थे लक्षणायामपि न क्षतिः तदर्थस्यानुशासितत्वेन तत्र लक्षणाया-अपि निरूढ़त्वादित्यर्थः ।

**त्वम्। एवञ्च विभक्तौ न लक्षणा लिङादेस्त्वपूर्व्वे का-**

---

तथांसत्यसाधुतापातादिति भावः। 'विभक्ताविति, अनुशासनं विना नियमाभावादिति भावः। 'एवञ्चेति विभक्तेरर्थविशेषशक्तत्वप्रति-

त्यत्रैव कर्त्तृत्वशक्तायास्तृतीयायाव्यापारे लक्षणया प्रयोगादिति चेत्, न, प्रकृतिलक्षणयैवोपपत्तौ तत्रापि लक्षणाविरहादित्याहुः।

वस्तुतो विभक्तौ न लक्षणेत्यनुशासनं विरुद्धार्थपरं। प्रकृते च कर्त्तृ-करणयोस्तृतीयेत्यादौ कर्त्तृपदस्य क्रियानुकूलव्यापारभागिपरतया नानुशासनविरोधः। न चैवमुभयसाधारणशक्तौ लक्षणैव न स्यादिति वाच्यं। अनुशासनस्योभयत्र साधुत्वमात्रबोधकत्वात् शक्तेस्तु लाघवानन्यलभ्यत्वादिकल्प्यत्वेन कर्त्तृत्व एव कल्पनात्। एवं यत्र यत्र प्रयोगो दृश्यते विशिष्य नानुशासनं तत्र व्यत्ययो बहुलमिति बहुलग्रहणेन समर्थनीयमिति।

केचित्तु विभक्तेः स्वानुशासितातिरिक्ते स्वसमानजातीयविभक्त्यन्तरानुशासनविषयेऽर्थे न साधुत्वमिति नियमार्थः, तेन धान्येन धनवानित्यादावभेदादौ तृतीयादेर्लाक्षणिकत्वेऽपि न क्षतिरभेदादेर्विभक्त्यन्तरार्थत्वेनानुशासितत्वाभावादेव रथेन गम्यते रथो गच्छतीत्यादौ तृतीयाख्यातादेर्व्यापारे लक्षणायामपि न क्षतिः, व्यापारस्य सजातीयविभक्त्यन्तरानुशासनविषयत्वाभावात्, साजात्यञ्च सुप्-तिप्त्वादिनेति प्राहुः। तदसत्, 'लिङादेरित्यग्रिमग्रन्थासङ्गतेः।

नन्वेवं मीमांसकनये लौकिकलिङः कथं क्रियाकार्य्यत्वे लक्षणेत्यत आह, 'लिङादेस्त्विति, 'अपूर्व्वे' अपूर्व्वमात्रे, 'अनुशासनं' शक्तिविधायकं सूत्रं, 'अलक्षणेत्यकारप्रश्लिष्टः पाठः, 'न लक्षणा' किन्तु शक्तिरेवेत्यर्थः, क्वचित्तु 'न लक्षणेत्येव पाठः, तदा तु नन्वेवं मीमांसकनये लौकिकलिङः कथं क्रियाकार्य्यत्वे लक्षणा अपूर्व्व एवानुशासनसत्त्वेन क्रियाकार्य्यत्वस्याननुशासितत्वादित्यत आह, 'लिङादेस्त्विति, 'अपूर्व्वे इति किन्तु क्रियाकार्य्यत्व-

**ष्यनुशासनं नास्तीति लोके क्रियाकार्यत्वे न लक्षणा[१] एवञ्च तृतीयाया अपि लक्षणया न कर्मत्वादौ प्रयोगः सामान्यतः साधुः "कर्त्तृ-करणयोस्तृतीयेत्यनु-**

---

पादकत्वासम्भवादर्थविशेषसाधुत्वनियमबोधकत्वेनार्थान्तरेऽसाधुत्वनियमान्न क्वापि लक्षणेत्यर्थः, 'लिङादेरिति। नन्वेवं रथोगच्छतीत्यादौ व्यापारलक्षणायामसाधुत्वापत्तिः "कर्तृ-कर्मणोरित्यनुशासनबलादिति चेत्, न, यत्रानुशासनान्नियमस्तत्र तथा यथा योगबलादेकत्वाद्यर्थत्वे "द्व्येकयोरित्यादि, इह तु प्राप्तकर्तृत्वादिवाचकत्वमित्यादि सूत्रार्थ इति लक्षणा न बाधिता एवञ्च लिङादावप्युक्तसमाधौ लिङादीति समाधिसौकर्य्यादित्यवधेयं। नन्वेवं "कर्तृ-करणयोस्तृतीयेत्यनुशासनस्यापि तदर्थविधायकत्वादेवञ्चेत्यादिकमयुक्तं व्यत्ययानुशासनबलेन तस्यापि नियमात्मकत्वादत एवाह, 'सामान्यत इति।

---

(१) क्रियाकार्य्यत्वेऽलक्षणेति पाठान्तरं।

केचित्तु यत्रानुशासनान्नियमस्तत्र तथा यथा प्रयोगबलादेकाद्यर्थत्वे द्व्येकयोरित्यादि इह तु प्राप्तकर्त्रादिवाचकत्वमेव सूत्रार्थ इत्यत्र न लक्षणाबाध इत्याहुः।

'सामान्यत इति अनुशासनविरोधो यत्रेत्यर्थः।

एवानुशासनमस्तीत्यर्थः, तथाच क्रियाकार्य्यत्वमनुशासितमेवेति भाव इति व्याख्येयं। यन्मते नियमे लक्षणापरं निरूढ़लक्षणेतरलक्षणापरं तन्मते त्वत्र लक्षणापदं निरूढ़लक्षणापरमित्यवधेयं। 'सामान्यतः' सामान्यनियमतः, 'कर्त्तृकरणयोरिति, तथाच कर्त्तृत्वादेरेवानुशासितत्वेन कर्म्मत्वादेरननु-

शासनबलात् । व्यत्ययेऽपि च साधुत्वमनुशासनान्तर-बलात् । तस्माद्यदि समासोनानुशिष्येत तदा तस्य लोके साधुत्वं न ज्ञायेत प्रत्युत गाव्यादिशब्दवदप-शब्दतैव स्यात् । यदि च विभाषेति सूत्रं न प्रणीयेत तदा तथाभूतेऽर्थे समासस्यैव साधुत्वं ज्ञायेत न वाक्य-स्य तदभिधानशक्तस्यापि शैवाल इव पङ्कजादेः । विभाषाशब्दः समास-विग्रहयोः साधुत्वज्ञापनार्थो न तु विकल्पेन समासस्य साधुत्वबोधकः । अवाचकः शब्दः समासोऽतोऽसाधुर्गाव्यादिपदवत्, वाक्यमेव वाचक-त्वात्साध्विति शङ्कां "तुल्यार्थौ वाक्य-समासाविति

'न त्विति, अन्यथा समासः साधुरसाधुश्चेति सूत्रार्थे विरोधः स्यादिति

---

शासितत्वमिति भावः । 'व्यत्ययेऽपि चेति, 'साधुत्वं' लक्षणया साधुत्वं, 'अनु-शासनान्तरेति, अनुशासितातिरिक्तार्थ एव लक्षणया साधुत्वाभावनियमा-दिति भावः । 'अपशब्दतैवेति अपशब्दताबुद्धिरेवेत्यर्थः । ननु तथापि "विभाषेति सूत्रं व्यर्थमेव समाससाधुत्वस्य समासविधायकसूत्रादेव सिद्धे-रित्यत आह, 'यदि चेति, 'तदभिधानशक्तस्यापीति तद्बोधनसमर्थस्यापी-त्यर्थः । ननु "विभाषेति सूत्रादेव कथं वाक्यस्य साधुत्वसिद्धिस्तेन समास-स्यैव विकल्पेन साधुत्वबोधनादित्यत आह, 'विभाषाशब्द इति, 'साधुत्व-ज्ञापनार्थः' साधुत्वबोधकः । 'न त्विति, एकत्र साधुत्वासाधुत्वयोर्विरोधा-दिति भावः । 'अवाचक इति राजसम्बन्धावाचक इत्यर्थः, 'असाधुरिति राजसम्बन्धविषयकबोधे असाधुरित्यर्थः, 'वाचकत्वादिति राजसम्बन्धवाचक-पदघटितत्वादित्यर्थः, 'साध्विति राजसम्बन्धविषयकबोधे साध्वित्यर्थः, तथाच

बोधयद्विभाषापदमेव निराकरोति। न च साधुत्वादेव शक्तत्वम्, अन्यलभ्यत्वेन शक्तिनिरासात् तिङन्त-सुबन्तयोर्व्यभिचाराच्च। तत्र हि समुदाये साधुत्वं प्रत्येकं शक्तिरसाधुत्वञ्च। ननु नामार्थयोः राजसम्ब-न्धि-पुरुषयोर्विभक्तिं विना अन्वयाभावाद्राजसम्बन्धि-पुरुषाप्रतीतेः विभक्तेः प्रकृत्यर्थगतस्वार्थबोधकत्वव्युत्प-

---

'अन्येति अनुशासनबलात् साधुत्वमात्रं न तु शक्तत्वं सिद्ध्यति सिद्धे च तत्रानन्यलभ्यत्वप्रतिसन्धानाच्छक्तत्वमिति पर्य्यवसितार्थः। ननु राजसम्बन्धिपुरुषे विभक्त्यर्थान्वयः विशिष्टञ्च विशेषणविभक्तिं विना नोपस्थितमतोविशिष्टे कथमन्वय इति यदि समासे शक्ति-रास्थीयते तदा विशिष्टं पदार्थतयैवोपस्थितं भवतीत्याह, 'नन्विति। नन्वेवं कर्म्मधारयेऽपि विभक्तिं विना विशिष्टानुपस्थितेः समासमात्र-एव शक्तिरभ्युपेया तथाचार्थवदधातुरप्रत्यय इति सूत्रतएव प्राति-

---

समासासाधुत्वबोधकमनुशासनमप्रमाणं वाक्यसाधुत्वबोधकं विभाषासूत्रमेव प्रमाणमिति भावः। 'इति शङ्कां' इति पूर्व्वपक्षं, 'तुल्यार्थाविति अन्यूना-नतिरिक्तविषयकशाब्दबोधजनकावित्यर्थः, सम्बन्धितादात्म्यस्य सम्बन्धात्मक-तया समासस्यानतिरिक्तविषयकशाब्दबोधजनकत्वमिति भावः। 'विभाषा-पदमेवेति प्रमाणत्वेनोभयसिद्धं विभाषासूत्रमेवेत्यर्थः। व्यभिचारमेव विवृ-णोति, 'तत्रेति। शक्तेरपि साधुत्वव्यभिचारमाह, 'असाधुत्वञ्चेति प्रत्येकम-साधुत्वञ्चेत्यर्थः, 'अन्वयाभावादिति अन्वयासम्भवादित्यर्थः। नीलं घटमानये-त्यादौ नामार्थयोरन्वयबोधमात्रे विभक्तेः सहकारित्वकल्पनादित्यभिमानः। युक्त्यन्तरमाह, 'विभक्तेरिति, 'प्रकृत्येति, प्रकृतिर्हि अत्र समासवाक्यं, तच्च

न्नेश्च राजसम्बन्धिपुरुषे समासस्य शक्तिरेव, एवं बहुव्रीहि-कर्मधारयादावपि सार्थकत्वेऽपि प्रातिपदिकत्वविधानमर्थवदादिसूत्रस्य प्रपञ्च इति चेत्। उच्यते। नीलं घटमानयेत्यादौ नामार्थयोर्विशेषण-विशेष्ययोरन्वयबोधे आकाङ्क्षादिकमेव हेतुर्न तु विशे-

---

पदिकसंज्ञायां सिद्धायां "कृत्तद्धितेत्यादि सूत्रमनर्थकं स्यादित्यत आह, 'एवमिति, 'नीलं घटमित्यादि, यत्रापि विशेषण-विभक्तिस्तत्रापि साधुत्वाय नार्थं ब्रुते अभेदस्तु विशेषण-विशेष्य-पदाभ्यामेवानुभाव्यते प्रकृते च साधुत्वविभक्तिं विनापि समासानुशासनबलात् अभेदस्तु व्यासवदुभाभ्यामेव, यदि च विभक्तेरभेदार्थः तदा तदभावात् समासे अभेदः प्रकारो न स्यात् संसर्गविधया तु भासत एव विभक्तिं विनापि इष्ट-स्वर्गयोरभेदानुभवादित्यखण्डनकार्थः। 'न तु विशेषणविभक्तिरपीति, इष्ट-स्वर्गयोरभेदानुभवे

भावः। राजसम्बन्धिपुरुषयोरित्यत्र तात्पर्य्यं विशेषणविभक्तिः साधुत्वार्थमिति मतमाश्रित्य नामार्थयोर्विभक्तिं विनान्वय इति दर्शयति, 'नीलमिति।

तन्मते निरर्थकमेव, राजपुरुषमानयेत्यादौ कथं द्वितीयाद्यर्थान्वयः स्यादिति भावः। नन्वेवं समासस्यापि सार्व्वत्रिकत्वे "अर्थवदधातुरप्रत्ययः प्रातिपदिकमित्यनेनैव प्रातिपदिकत्वे सिद्धे "कृत्तद्धितसमासाश्चेत्यत्र समासग्रहणमनर्थकमेवेत्यत आह, 'एवमिति, 'प्रपञ्चः' विवरणं, 'न तु विशेषण-विभक्तिरपीति, मानाभावादिति भावः। ननु तत्र कर्म्मतासंसर्गेण नीलस्य घटेऽन्वयात् कर्म्मत्वोपस्थापकत्वेन विभक्तेरवश्यं हेतुत्वं नामार्थयोरभेदान्वय-

षणविभक्तिरपि नीलस्य घटकर्मत्वाभावात् शब्दा-त्तथाऽननुभवाच्च, नीलविशिष्टस्य कर्मत्वं विभक्त्यर्थ-वहिर्भावेनैव नील-घटयोरन्वयबोधे स्यान्न त्वन्यथा। न च विभक्तिं विना समस्यमानपदानां साधुत्वन्नेति वाच्यम्। विभक्तिं विनापि समासस्य साधुत्वानुशास-

---

व्यभिचारादिति भावः। 'नीलस्येत्यादि तु वस्तुगतिमनुरुध्य, तत्-कर्मत्वेऽपि तद्बोधार्थं तदपेक्षा न त्वभेदानुभवार्थमिति प्रकृते तु तदुपन्यासवैयर्थ्यात् एवमग्रेऽपि तस्मादभेदानुभवार्थं न विशेषण-विभक्तिरपेक्ष्यते किन्तु साधुत्वायैव इति हृदि निधायाह, 'नीलेति, तर्हि तदर्थमेव प्रकृतेऽप्यपेक्ष्यतामित्यत आह, 'विभक्ति-

---

यत्रापि विशेषणे विभक्तिस्तत्रान्वयो विशेषणविशेष्यपदाभ्यामेवानुभाव्यते तस्याः साधुत्वार्थत्वात् प्रकृते च विभक्तिं विनापि समासानुशासनबलाद-न्वयानुभवस्तु व्यासवदुभाभ्यामेवास्त्वित्यर्थः। 'नीलस्येति, तथाच न नीलमात्रस्य

---

बोधे विभक्तिजन्यसंसर्गोपस्थितेर्हेतुत्वादित्यत आह, 'नीलस्येति, 'घटकर्म्म-त्वाभावादिति, तथाच तत्र बाधान्न कर्म्मतासंसर्गेण नीलस्य घटेऽन्वय इति भावः। 'घटवत्कर्म्मत्वाभावादिति पाठस्तु प्रामादिकः। ननु बाधेऽपि भ्रमात् तथान्वयबोध इत्यत आह, 'शब्दादिति, 'नीलविशिष्टस्येति तादात्म्यसम्ब-न्धेन नीलविशिष्टस्य घटस्येत्यर्थः, 'कर्म्मत्वं' कर्म्मत्वान्वयबोधः, 'विभक्त्यर्थव-हिर्भावेनेति द्वितीयाविभक्त्यर्थकर्म्मतासंसर्गव्यतिरेकेणेत्यर्थः। 'न त्वन्यथेति न तु कर्म्मतासंसर्गेण नील-घटयोरन्वयबोध इत्यसाधुत्वं अभेदान्वयबोधे सा-काङ्क्षत्वमेव नेत्यर्थः, नामार्थयोरभेदान्वयबोधे विशेषण-विशेष्ययोः समानवि-भक्तिकत्वस्य तन्त्रत्वादिरुद्धविभक्तिराहित्यस्य तन्त्रत्वे घटं नीलं पश्येत्यादावपि नील-घटयोरन्वयापत्तेरिति भावः। 'विभक्तिं विनापीति, तथाच समासा-

नात्। तस्मान्नामार्थयोरन्वयबोधे विशेषणविभक्तिः साधुत्वार्था न तु कर्मत्वोपनायिका। एवञ्च राजसम्बन्धिपुरुषस्य विभक्तिं विनापि पुरुषपदादुपस्थितिः। अतएव तादृशपुरुषपदार्थे विभक्त्यर्थान्वयः। यदि च

मिति, पुरुषपदादुपस्थितिरनुभवरूपा लाक्षणिकस्याननुभावकत्वेन शक्तस्य पुरुषपदस्यैव विशिष्टानुभावकत्वादिति भावः। 'यदि चेत्यभ्युपगमवादः, अरुणान्यायोऽपि यत्र विशेषणविभक्तिस्तत्र विशेषण-

कर्म्मत्वेनान्वयो येनान्वयस्य विभक्तिनिर्व्वाह्यतानियमः स्यादिति भावः। 'उपस्थितिः' अनुभवः, लाक्षणिकस्याननुभावकतया शक्तस्य पुरुषपदस्यैव विशिष्टानुभावकत्वादिति भावः। परमतेनापि सङ्गमयति, 'यदि चेति,

व्यतिरिक्तस्थल एव समानविभक्तिकत्वं तन्त्रं नीलोत्पलमित्यादौ लुप्तविभक्तिस्मृतिविधुराणां समुदायस्य विशिष्टार्थे वृत्तिप्रतिसन्धानविधुराणामपि विशिष्टार्थान्वयबोधस्यानुभवसिद्धत्वादिति भावः। 'तस्मादिति, नीलघटमानयेत्यादाविति शेषः, 'उपनायिका' उपस्थापिका, प्रकृते उपसंहरति, 'एवञ्चेति, 'पुरुषपदादिति राजसम्बन्ध्युपस्थापकराजपदसहितपुरुषपदादित्यर्थः, 'उपस्थितिः' शाब्दानुभवः। प्रागुक्तं विभक्त्यर्थानन्वयप्रसङ्गमुद्धरति, 'अतएवेति, राजसम्बन्धिपुरुषस्य प्रकृतीभूतपुरुषपदार्थत्वादेवेत्यर्थः, 'तादृशेति राजसम्बन्धिपुरुषरूपे पुरुषपदार्थे इत्यर्थः, तथाच न प्रकृत्यर्थतावच्छेदकरूपेणैव विभक्त्यर्थान्वयनियमोमानाभावात् राज्ञः पुरुषमानयेत्यादौ व्यभिचाराच्चेति भावः। नामार्थयोः परस्परमन्वय एव नास्तीति नीलघटमानयेत्यादौ च नील-घटयोर्नान्वयोऽपि तु नीलकर्म्मत्व-घटकर्म्मत्वयोरुभयोरेव क्रियायामन्वयोऽन्यथा विशेषणवैयर्थ्यापत्तेरिति मीमांसकमतेनापि तत्पुरुषस्थले अन्वयबोधमुपपादयति, 'यदि चेति, 'विभक्तिबलादिति विशेषण-

विभक्तिबलात् क्रियान्वयो नीलमित्यस्यारुणयान्याया-दार्थः समाजस्तथापि राजसम्बन्धिपुरुषयोः क्रिया-न्वयादार्थः समाजोऽस्तु। न च राजसम्बन्धिनः कर्मत्वे-नानुपस्थितेर्न क्रियान्वय इति वाच्यम्। समस्यमान-पदार्थान्वयार्थं समासाद्विभक्त्यनुशासनमतो विशेषणे-

विभक्तेरर्थसाधुत्वानुरोधादिह विशिष्टानुभवस्यापि सर्वसम्मतत्वादिति ध्येयं। नन्वनन्तशक्तिकल्पनवदनन्तव्युत्पत्तिकल्पनमपि सामान्यतोऽय-थैकं तर्हि समासत्वेन समस्यमानपदार्थे विशिष्टे शक्तिरिति शक्त्य-

'राजसम्बन्धीति राजसम्बन्ध्येत्यर्थः। न च सम्बन्धे आनयनाद्यन्वयविरोधः, नीलं घटमित्यादौ परम्परया नील-तदन्वयवदुपपत्तेः। 'समासादिति, प्रकृत्यर्था-न्वयव्युत्पत्तिस्तु समासातिरिक्तविषयेति भावः। नन्वनन्तशक्तिकल्पनवदनन्त-व्युत्पत्त्यन्तरकल्पनं तुल्यं, यदि च समासत्वेन सामान्यतस्तत्कल्पनं तदापि

विभक्तेः सार्थक्यानुरोधादित्यर्थः। नन्वेवं नील-घटयोः परस्परमन्वये नील-विशिष्टघटकर्म्मतावैशिष्ट्यप्रत्ययः क्रियायां कथं स्यादित्यत आह, 'अरुणया-न्यायादिति यथा "अरुणया गवा क्रीणातीत्यादौ आरुण्यकरणकत्व-गोकरण-कत्वयोः प्रत्येकं क्रियान्वयानन्तरं मनसा क्रयणादावारुण्यविशिष्टगोकरणक-त्ववैशिष्ट्यप्रत्ययस्तथेहापि प्रत्ययान्मानसोयथोक्तविशिष्टवैशिष्ट्यप्रत्यय इत्यर्थः, 'क्रियान्वयात्' प्रत्येकं क्रियान्वयानन्तरं, 'आर्थः समाजोऽस्तु' मानसोराजस-म्बन्ध्यभिन्नपुरुषवैशिष्ट्यप्रत्ययोऽस्तु, 'कर्म्मत्वेनानुपस्थितेरिति पुरुषपदोत्तरद्वि-तीयाविभक्त्यर्थेन कर्म्मत्वेनानन्वयादित्यर्थः, 'न क्रियान्वय इति, धात्वर्थ-ना-मार्थयोर्भेदेन साक्षादन्वयस्याव्युत्पन्नत्वादिति भावः। 'समस्यमानेति क्रिया-यां समस्यमानपदार्थान्वयार्थमित्यर्थः, 'विशेषणेऽपीति पर्व्वपदार्थेऽपीत्यर्थः।

ऽपि विभक्त्यर्थान्वयादन्यलभ्ये शक्त्यभावनियमात्। समासान्निरर्थकाद्विभक्तिश्च समस्यमानपदार्थमात्र-गतमेव स्वार्थमाह तथैव व्युत्पत्त्यन्तरकल्पनात् समासेष्वनन्तशक्तिकल्पनातो लघुत्वात्। यद्वा विभक्तेः

---

कमपीत्यस्वरसादाह, 'यद्वेति, न चार्द्धपिप्पल्यादौ पूर्व्वपदार्थप्रधान-समासे तदसम्भवः, तथापि सन्निधानादानुशासनिकसन्निधेर्विवक्षित-त्वात् तथाच यत्पदानन्तरमनुशिष्टा या विभक्तिः सा तद्गतं स्वार्थं बोधयतीत्यर्थः पर्य्यवसितः, समासे च समस्यमानपदोत्तरमेवानु-शासनमतस्तदनुगतं स्वार्थं बोधयति अत्र च पूर्व्वोत्तरपदयोर्योग्य-

---

तुल्यमित्यरुचेराह, 'यद्वेति। न चोपकुम्भमर्द्धपिप्पलीत्यादौ पूर्व्वपदार्थ-प्राधान्ये व्यभिचारः, तत्रापि सन्निधानादानुशासनिकसन्निधेर्विवक्षितत्वात् तथाच यत्पदानन्तरमनुशिष्टा तद्गतं स्वार्थं बोधयतीत्यर्थः पर्य्यवस्यति। समासे च समस्यमानपदोत्तरमेवानुशासनमतस्तदर्थगतमेव स्वार्थं बोधयति तत्र च पूर्व्वोत्तरपदयोर्योग्यतादिकमेव विनिगमकमिति भावः। बहुव्रीह्य-

नन्वेतादृशकल्पनापेक्षया समासस्यैव विशिष्टे शक्तिः कल्प्यतामित्यत आह, 'अन्यलभ्य इति। ननु प्रकृत्यर्थान्वितस्वार्थबोधकत्वात् प्रथमं पूर्व्वपदार्थे कथं विभक्त्यर्थान्वय इत्यत आह, 'समासादिति, 'निरर्थकात्' वृत्तिशून्यात्, 'समस्यमानपदार्थमात्रगतमिति, समस्यमानपदार्थस्य पूर्व्वपदार्थोऽपीति भावः। 'तथैवेति, तथाच प्रकृत्यर्थान्वितेत्यादिव्युत्पत्तिः समासातिरिक्तस्थल एवेति भावः। अस्तु वा प्रकृत्यर्थान्वितेत्यादियथाश्रुतव्युत्पत्त्यनुरोधात् राजपुरुष-मानयेत्यादावुत्तरपद एव राजसम्बन्धवत्पुरुषादौ विशिष्टे लक्षणा पूर्व्वपदन्तु तात्पर्य्यग्राहकमित्यत आह, 'यद्वेति, 'सन्निहितपदार्थेति अव्यवहितपर्व्वप-

सन्निहितपदार्थगतस्वार्थबोधकत्वमतो बहुव्रीह्यादावन्वयबोधपूर्वकोत्तरपदलक्षणायां षष्ठीतत्पुरुषे च विभक्तिसन्निहितोत्तरपदार्थगतस्वार्थबोधकत्वं, विभक्तिसन्निहितपदस्यार्थश्च मुख्यया लक्षणया वा ।

---

तादिकमेव विनिगमकमिति भावः । ननु बहुव्रीहौ नान्यपदार्थः समस्यमानपदार्थः तथासत्यन्यपदार्थतैव न स्यात् तत्पदार्थेऽन्यपदार्थलाभावादित्यत आह, 'लक्षणया वेति । 'एवमिति सन्निहितप-

---

नुरोधादाह, 'लक्षणया वेति, 'न शक्तिरिति, अभेदबोधनायेति शेषः ।

---

दार्थेत्यर्थः, 'बहुव्रीह्यादाविति, 'बहुव्रीहिपदं चित्रग्वादिबहुव्रीहिविशेषपरं, तेनादिपदादारूढवानरेत्यादिबहुव्रीह्यन्तरपरिग्रहः । 'अन्वयबोधपूर्वकेति राजसम्बन्धादिप्रकारेण राजसम्बन्धवत्पुरुषादावुत्तरपदे लक्षणायामित्यर्थः, 'सन्निहितोत्तरपदेति पूर्वपदन्तु तात्पर्य्यग्राहकमित्यर्थः, 'मुख्यया' शक्त्या, यद्यप्येवंरूपेण राजपुरुषमित्यादावन्वयबोधापत्तिसम्भवेऽपि पिप्पल्या अर्द्धमर्द्धपिप्पलीत्यादौ पूर्वपदार्थप्रधानतत्पुरुषे का गतिः । न च तत्राप्युत्तरपदे पिप्पल्यादौ लक्षणा पूर्वपदं तात्पर्य्यग्राहकमिति वाच्यं । पूर्वपदार्थप्रधानत्वव्याघातात् पूर्वपदार्थप्रधानत्वं हि पूर्वपदोपस्थापितार्थविशेष्यकान्वयबोधजनकत्वं, तथापि यत्र पूर्वपदार्थप्रधानत्वमनुशासनसिद्धं तत्र प्रकृत्यर्थान्वितेत्यादिव्युत्पत्तिः परित्यज्यते किन्तु पूर्वपदार्थस्याप्रकृत्यर्थत्वेऽपि तत्रैव विभक्त्यर्थान्वयः, एवञ्च अर्द्धपिप्पल्यादौ मीमांसकमते अर्द्धादिपूर्वपदस्यैव पिप्पल्यादौ लक्षणा पिप्पल्याद्युत्तरपदन्तु तात्पर्य्यग्राहकं, समासोत्तरविभक्त्यर्थस्य चाप्रकृत्यर्थे पूर्वपदार्थ एवान्वयः । न्यायमते तु पिप्पल्याद्युत्तरपदस्य पिप्पल्यादिसम्बन्धिनि लक्षणा तस्य चार्द्धादौ पूर्वपदार्थेऽभेदान्वयः विभक्त्यर्थोऽपि पूर्वपदार्थ एवान्वेति, एवमुपकुम्भमित्यादावव्ययीभावे-

एवं नीलोत्पलमानयेत्यादौ कर्मधारये विभक्तिं विनैव नामार्थयोरन्वयबोधानन्तरं विशिष्टस्य कर्मत्वेन क्रियान्वयः। कर्मधारये तु न शक्तिर्न वा लक्षणा ताभ्यां विनापि विवक्षितार्थान्वयबोधोपपत्तेः। ननु

दार्थगतेत्यादिव्युत्पत्तेरित्यर्थः, 'विभक्तिं' विशेषणविभक्तिं, इदमपि वस्तुगतिमनुरुध्य, वस्तुतोऽव्यासेऽपि विशेषणविभक्तेः सत्त्वेऽपि साधुत्वमात्रप्रयोजकत्वादिविशिष्टस्य विशेष्यपदार्थस्य कर्मत्वं तदुत्तरद्वितीययैव बोध्यत इति ध्येयं। ननु विशेषणविभक्तिरभेदार्था न प्रयोगसाधुत्वार्था तथाच कर्मधारये पूर्व्वपदार्थे तत्पुरुषे षष्ठ्यर्थ इव विभक्त्यर्थेऽभेदे लक्षणा वाच्या तथाच नीलाभिन्नाभिन्नत्वेन घटधीः स्यान्न तु नीलाभिन्नत्वेन पदार्थसंसर्गस्यानुभवविषयत्वात् ततोऽनुभवानुरोधाद्विशिष्टे कर्म्मधारये शक्तिरेव वाच्या सा च समासत्वेनैव लाघवात् कल्प्यतां न विशेषतः कर्मधारयत्वेनेत्यत आह, 'कर्म्मेति,

ऽपि तत्राप्युपपदस्य सामीप्याश्रयैकदेशे सामीप्ये कुम्भपदार्थस्य विशेषणतयान्वयः विभक्त्यर्थस्य चाप्रकृत्यर्थे पूर्व्वपदार्थसामीप्याश्रये अन्वयः पूर्व्वपदार्थप्राधान्यानुरोधात्। मीमांसकमते तु उपपदस्यैव कुम्भसमीपे लक्षणा उत्तरपदन्तु तात्पर्य्यग्राहकं विभक्त्यर्थस्य पूर्व्वपदार्थ एवान्वेति न काप्यनुपपत्तिः। समाप्तश्चायं षष्ठीतत्पुरुषवादः, समाप्तश्च षष्ठीतत्पुरुषवादरहस्यं।

'विभक्तिं विनैवेति विशेषणविभक्तिं विनैवेत्यर्थः, 'कर्म्मधारये त्विति नीलोत्पलसमुदाये त्वित्यर्थः, 'न शक्तिरिति, गौरवादिति भावः। 'न वा लक्षणेति न नीलादिप्रत्येकपदेषु लक्षणेत्यर्थः, 'ताभ्यां विनापीति पाठः, 'तेन विनापीतिपाठस्तु प्रामादिकः। यद्यपि नीलादिपदस्य लाघवाद्गुणवाचकतया

नील-घटयोः सामानाधिकरण्यप्रतीतेस्तत्र लक्षणैव अन्वयप्रकारत्वादिना च तस्य भाने राजपुरुषादौ षष्ठ्यर्थोपस्थितिरपि तथास्तु। अत्र ब्रूमः। कर्मधारये सामानाधिकरण्यं नामार्थयोरभेदो वा गुण-गुणिनोः समवायो वा अनुभूयते स चान्वय एव न त्वन्वयप्रतियोगी अतोऽन्वयप्रतियोगिनोरुपस्थितिर्नामपदात् श-

न शक्तिर्गौरवात् न वा लक्षणा विशेषणविभक्तेरभेदवाचकत्वपक्षेऽपि समासे पूर्व्वपदार्थसंसर्गस्यैवानुभवसिद्धत्वेनाभेदपदार्थाननुभवादेव लक्षणाकल्पकाभावादित्यसमास-समासयोः सर्व्वत्र प्रतीतिभेदात्, न हि राज्ञ इत्यत्रापि सम्बन्धी भासते, अपि तु सम्बन्धः, प्रातिपदिकार्थयोरेवाभेदान्वयबोधव्युत्पत्तेरिति भावः। 'गुण-गुणिनो-

---

एवञ्च पुरुषव्याघ्र इत्यादौ सादृश्यलक्षणा निरूढेति ध्येयं। परमतमभ्युपगमवादेनाह, 'गुण-गुणिनोरिति। 'राजसम्बन्धीति राजसम्बन्धेत्यर्थः, 'अनुभूयत इत्यनेनानुभव एवात्र नियामक इति सूचितं। अन्यथा षष्ठ्यर्थोऽप्य-

---

गुणिनि लक्षणैव तथापि कोषस्य शक्तिग्राहकतया गुणिन्यपि नीलादिपदस्य शक्तिरित्यभिमानेनेदं। 'तत्र' सामानाधिकरण्ये, 'लक्षणैव' नीलपदस्य लक्षणैव, 'अन्वयप्रकारत्वादिनेति संसर्गविधयेत्यर्थः, 'आदिपदात् लुप्तविभक्त्या तदुपस्थितेः परिग्रहः, 'तथास्त्विति, किं राजपदस्य राजसम्बन्धिनि लक्षणयेति भावः। सामानाधिकरण्यपदार्थं विकल्प्य दूषयति, 'कर्म्मधारय इति, 'नामार्थयोरिति नीलपद-घटपदार्थयोः नीलरूपाश्रय-घटयोरित्यर्थः, 'गुणगुणिनोरिति नीलपद-घटपदार्थयोः नीलरूप-घटयोरित्यर्थः, 'स चान्वय-

त्रयैवेति न तदर्थं लक्षणा ! राजपुरुष इत्यत्र तु राज-सम्बन्धि-पुरुषयोरन्वयोऽनुभूयते राजसम्बन्धिनश्चान्वय-प्रतियोगिन उपस्थितिर्न राजपदे षष्ठ्यर्थलक्षणां विना राज्ञः पुरुषं राजसम्बन्धिनं पुरुषं राजपुरुषमानये-त्यादौ पर्य्यायत्वात्। राजसम्बन्धिनः पुरुषेऽन्वयोऽनु-

रिति मतभेदेन, प्रातिपदिकयोः स्वार्थाभेद एव व्युत्पत्तेः, 'राजेति, अत्रोक्तयुक्त्या अभेदानुभव एव व्युत्पत्तेरिति भावः। 'पर्य्यायत्वा-दिति, इदञ्च राजसम्बन्धपुरुषविषयतामात्रेण न त्वन्यूनानतिरिक्त-

न्वय एव न त्वन्वयप्रतीयोगीति न लक्षणा स्यादिति ध्येयं। 'राजसम्बन्धिन-इति राजसम्बन्धस्येत्यर्थः। अतएवाह, 'राज्ञः पुरुषमिति, 'पर्य्यायत्वादिति, एतच्च सम्बन्धप्रकारतामात्रेण, न त्वन्यूनानतिरिक्तविषयतया, द्वितीये मतुपः सम्बन्धिवचनतया राजसम्बन्धाश्रयाभेदः संसर्ग इत्यर्थातिरेकादिति भावः।

एवेति स च संसर्ग एवेत्यर्थः। यद्यपि नामार्थयोर्भेदान्वयस्याव्युत्पन्नतया नीलरूप-घटयोः समवायस्य कथं संसर्गमर्य्यादया भानं, तथापि समासाति-रिक्तस्थलएव सा व्युत्पत्तिरिति मतेनेदं, 'उपस्थितिः' शाब्दानुभवः, 'नाम-पदादिति नीलादिप्रत्येकपदादित्यर्थः, 'लक्षणेति नीलादिप्रत्येकपदे लक्षणे-त्यर्थः। नन्वेवं राजपुरुष इत्यादावपि संसर्गमर्य्यादयैव सम्बन्धभानमस्तु किं राजसम्बन्धिनि लक्षणयेत्यत आह, 'राजपुरुष इति, एतच्च समासातिरिक्त-स्थल एव नामार्थयोर्भेदान्वयोऽव्युत्पन्न इति मतेनेदं समाहितं, सर्व्वत्र तस्याव्युत्पन्नत्वमते तु राज-पुरुषयोः संसर्गमर्य्यादया सम्बन्धभानासम्भवादेव राजसम्बन्धिनि लक्षणाभ्युपगम इत्यपि बोध्यं। ननु राजपुरुष इत्यत्र राज-सम्बन्धि-पुरुषयोरन्वयोऽनुभूयत इत्येवासिद्धमित्यत आह, 'राज्ञ इति, 'पर्य्यायत्वादिति, पर्य्यायत्वस्य सर्व्वसिद्धत्वादिति भावः। यद्यपि पर्य्यायत्वं

भूयते राजसम्बन्धी अन्वयप्रतियोगित्वेन। एवञ्च बहुव्रीहौ सर्वपदानां षष्ठीतत्पुरुषे पूर्वपदस्यान्यपरतया लाक्षणिकत्वात्ताभ्यां कर्मधारयो बलवान् तत्र सर्वेषां पदानां स्वार्थपरतया मुख्यत्वात्। अतएव

विषयतया प्रथमे षष्ठ्यर्थस्य सम्बन्धस्य पुरुषे आश्रयत्वं संसर्गो द्वितीये मतुपः सम्बन्धिवचनतया राजसम्बन्धसम्बन्धिनोऽभेदः संसर्गः समासे राजसम्बन्धिनोऽभेद इत्यस्य नून्याधिकभावादिति भावः। 'एवञ्च' समासे ग्रन्थभावव्यवस्थितौ, समासग्रन्थौ सर्व्वेषां तुल्यत्वाद्बलाबलानिरूपणं स्यादिति भावः। 'सर्व्वपदानामिति, "अनेकमन्यपदार्थे इति सूत्रानुरोधात् द्रष्टव्यं। वस्तुतस्तत्रान्यपद एव लक्षणेत्युक्तत्वात्। 'अतएवेति, "वास्तुमयं चरुं निर्व्वपेदित्यनेन बोधितायामिष्टौ "एतयैव निषादस्थपतिं याजयेदित्यनेनानयैवेष्ट्या निषादस्थपतिमि-

'एवञ्चेति समासग्रन्थभावव्यवस्थितावित्यर्थः, समासग्रन्थौ सर्व्वेषां तुल्यत्वात् बलाबलानिरूपणादिति भावः। 'सर्व्वपदानामिति "अनेकमन्यपदार्थे इति

नान्यूनानतिरिक्तविषयकज्ञानजनकत्वं राजसम्बन्धिनमित्यत्रार्थघटकतया सम्बन्धनिरूपितसम्बन्धस्यापि सम्बन्धभानेनापीति विवेकात्, तथापि राजसम्बन्धप्रकारकज्ञानजनकत्वं पर्य्यायत्वमिति भावः। 'सर्व्वपदानामिति, एतच्च चित्रगुरित्यादौ चित्रपदस्य चित्रगोसम्बन्धिनि गोपदस्य गोसम्बन्धिनि लक्षणेति क्रमेण पदद्वय एव लक्षणेति द्वितीयमतेन, पूर्व्वमते तु विशेष्यपदस्यैव लाक्षणिकत्वं बोध्यं। 'लाक्षणिकत्वादिति सर्व्वत्र लाक्षणिकत्वादित्यर्थः, 'ताभ्यामिति, क्वचिदिति शेषः, 'तत्र' कर्म्मधारये, 'मुख्यत्वात्' मुख्यत्व-

"एतया ऋचा निषादस्थपतिं याजयेदित्यत्र कर्मधारयएव मुख्यत्वे शब्दस्वरसात् षष्ठीतत्पुरुषे च षष्ठ्यर्थलक्षणापत्तेः । एवञ्चेश्वरनिषादप्रतीतेस्तस्यैवाधिकारात्तदपूर्वेण स्वनिर्वाहकतयैवेश्वरनिषादस्यैव यागानुकूलविद्याप्रयुक्तिराक्षिप्यते, अन्यथा मुख्यार्थहानिप्रसङ्गात् । नन्वत्र षष्ठ्यर्थलक्षणया लब्धविद्यस्त्रैवर्णिक एव निषादानामीश्वरोऽधिकारी बोध्यते न त्वीश्वरनिषादोऽकृतविद्याप्रयुक्तिकल्पनातः षष्ठ्यर्थलक्षणाया लघुत्वादिति चेत् । उच्यते । मुख्यार्थान्वयाधीनकल्पनागौरवेण मुख्यार्थो न हीयते किन्तु बाधकं विना मुख्यार्थान्वयबोधस्य प्राथमिकत्वात्तदनुरोधेन तदुपपादकं कल्प्यते फलमुखञ्च गौरवं न दोषाय प्रमाणत्यर्थकेन निषादस्थपतेरधिकारोबोध्यते । अत्र सन्देहः, किन्निषादानामीश्वरस्त्रैवर्णिकः, उत निषाद ईश्वरो वा यस्य तादृक् चैव-

---

सूत्रानुरोधादुक्तं । वस्तुतस्तु विशेष्यपद एव लक्षणेत्युक्तत्वात् षष्ठीत्युपलक्षणं बहुव्रीहावन्यपदार्थलक्षणापत्तेरित्यपि बोध्यं । ननु गौरवमेव बाधकमस्त्वित्यत आह, 'फलमुखञ्चेति, 'शूद्रपद इति । ननु शूद्रपदे रथकारनिषादेतरपरतायां निषादादेः सर्व्ववेदपाठाधिकारापत्तिः वेदपाठनिषेधक-

---

स्यापि सम्भवात्, 'कर्म्मधारय एवेति निषादश्चासौ स्थपतिश्चेति कर्म्मधारयएवेत्यर्थः, 'निषादः' चाण्डालः, 'स्थपतिः' ईश्वरः, 'मुख्यत्व इति, इति रहस्यं।

वतो गौरवस्य न्याय्यत्वात्। न चाक्लृप्तकल्पनाप्रसङ्ग एव मुख्यार्थान्वये बाधकः, अक्लृप्तस्य प्रागनवगमात् मुख्यार्थान्वयबलादेव तदवगमे उपजीव्यविरोधात्। अन्यथा प्रतीतानुपपत्तिबलात् कल्पना क्वापि न स्यात् अक्लृप्तकल्पनागौरवेण कल्पकस्य बाधितत्वात्। अथ शूद्रस्य वेदपाठनिषेधादीश्वरनिषादोऽधिकारी बोधयितुं न शक्यत इति मुख्ये बाधकान्न कर्म्मधारयः। न चेश्वरनिषादे विधिबलाद्वेदपाठनिषेध एव बाध्यत इति युक्तम्। षष्ठ्यर्थलक्षणया अबाधे सम्भवति निषेधकवेदबाधकल्पनाया अन्याय्यत्वादिति चेत्, न, सामान्यनिषेधस्य तद्विशेषविधाने तदितरपरत्वात्। यथा "न हिंस्यात्सर्वाभूतानि" श्वेतं छागमालभेतेत्यत्र। एवं निषादपदस्य मुख्यत्वे शूद्रपदे सङ्कोचमात्रम्। शूद्र-

---

णिकः, उत निषादरूप ईश्वरः, तत्रोक्तयुक्त्या चरमः कल्प आद्रियत इति भावः। षष्ठीत्युपलक्षणं, बहुव्रीहावपि तदापत्तेरिति ध्येयं। एवमग्रेऽप्युपलक्षणं द्रष्टव्यं। 'शूद्रपद इति, ननु शूद्रपदे निषादेतरपरतायां निषादस्य सर्व्ववेदाधिकारापत्तिः। न च शूद्रपदस्येत्य-

---

वाक्ये वेदपदस्यैव प्रकृतोपयोगिवेदेतरवेदपरतायां तद्वेदस्य सर्व्वशूद्रपाठ्यत्वापत्तिरिति चेत्, न, वेदपदस्य विशेषतः प्राप्तेतरवेदपरत्वात् तेन निषादादीनां विशेषतो यावत्प्राप्तिस्तावदन्यपाठनिषेधः शूद्रान्तरस्य यावत एव वेदराशेस्तदितरतया अर्थात सर्व्वनिषेध इत्याहुः।

पदस्य निषादपरत्वे निषादपदस्य मुख्यत्वबाध एव। यद्यपि सङ्कोचेऽप्येकदेशबाध एव तथापि सङ्कोचेऽद्वयोरपि मुख्यत्वरक्षणादबाधाच्च सङ्कोच एव ज्यायान्।

अन्ये तु। नात्र षष्ठ्यर्थो लक्ष्यते अनुपपत्त्यभावात्। अतः समासस्य षष्ठ्यर्थमन्तर्भाव्य शक्तिरेव। अन्यथा कर्म्मधारयेऽपि पदार्थसामानाधिकरण्यप्रतीतेः तत्रापि लक्षणेति तुल्यम्। अथान्वयप्रकारतया सामानाधिकरण्यप्रतीतेर्न तत्र लक्षणा, तर्हि षष्ठ्यर्थेऽपि तथैव न

---

स्य शूद्रपदसमभिव्याहृतवेदपदस्येत्यर्थः तेन शूद्रवेदपाठनिषेधकवाक्ये वेदपदं प्रकृतोपयोगिवेदेतरवेदपरमिति वाच्यं। तथासति तद्वेदस्य सर्व्वशूद्रसंग्राह्यतापत्तेरिति, अत्राहुः, वेदपदस्य विशेषतः प्राप्तेतरवेदपरत्वं तेन निषादस्थपतिरथकारादीनां विशेषतो यावत्प्राप्तिस्तावदन्यवेदपाठनिषेधः शूद्रान्तरस्य तु यावत एव वेदराशेस्तथात्वात् सर्व्ववेदनिषेधः। ननु विशेषत इत्यधिकं प्राप्तेतरेत्यस्यैव सम्यक्त्वात् तथाच स्वर्गकामो यजेतेत्यत्र स्वर्गकामत्वेन स्त्रीशूद्रयोरपि वेदप्राप्तेर्यागोपयोगिवेदान्यवेदपाठनिषेधः स्यादिति तयोरपि यागाधिकारोऽस्तु न तु वेदपाठनिषेधात्तयोर्यागानधिकारः पाठनिषेधकवाक्ये वेदपदस्य सङ्कोचावश्यकत्वे स्वर्गकामादि-

'तुल्यमिति, तथाच न कर्म्मधारयस्य बलवत्त्वमित्यर्थः। 'न चेति, यद्यपि तात्पर्य्यान्नियमः सम्भवत्येव तथाप्यापातत इदं, एवं सति कर्म्मधारयस्य बलवत्त्वप्रवादं समर्थयति, 'कर्म्मधारये त्विति। नन्वेवं कथं

णक्षणा। नचान्वयप्रकारतया नियमतोविशेषोपस्थितौ प्रमाणं तस्मादुभयत्र समासस्यैव बोधकत्वम्, कर्मधारये तु बलवत्त्वमुत्सर्गतः सामानाधिकरण्यस्योचितत्वात्। निषादस्थपतौ तु स्थपतिपदार्थस्येश्वरस्य प्रतियोग्यपेक्षत्वात्तत्पूरणसमर्थः षष्ठीतत्पुरुष एव निष्प्रतियोगिके कर्म्मधारयः नीलोत्पलमित्यादावुत्पलस्य निष्प्रतियोगिकत्वात्। तथाच निषादेश्वरस्याधिकारः, ऐश्वर्यस्य

पदे सङ्कोचस्यान्याय्यत्वात्(१)। मैवं सामान्यतः प्राप्तस्यैव निषेधकवाक्येन निषेधात्, न हि उपनीताधिकारित्वेन प्राप्तस्य वेदाध्ययनस्य तयोः प्रसङ्गो येन निषिध्येत्, किन्तु स्वर्गकामो यजेतेत्यादिना सामन्यतः सर्व्वस्य च यागप्राप्त्या प्रसक्तो वेदपाठः प्रतिषिध्यते, अतः स्वर्गकामपदे युक्तः सङ्कोचः, अन्यथा अप्रसक्तत्वेन प्रतिषेधानुपपत्तिः। न च जीविकात्वेन पाठप्रसङ्गः, तस्याध्यापनादिवाधेन प्रवृत्त्यभावानिष्टप्रसङ्गसम्भवेन तच्छङ्कानुदयात्। ननु विद्याप्रयुक्तिबाधेन यागबाधः श्राद्धवत् तद्रहितक्रियाया अबाधनात् अन्यथा स्त्रीशूद्रयोः श्राद्धेऽप्यनधिकारापत्तेरिति कथं स्वर्गकामपदसङ्कोच इति चेत्, न, तत्र तूष्णीमेव "शूद्रोऽप्यमन्त्रवदित्यादिना वैदिकमन्त्रशू-

(१) अप्रामाणिकत्वादिति क०

निषादरूपेश्वरलाभ इत्यत आह,'तथा चेति, निषादेश्वरस्यात्रैवर्णिकस्येत्यर्थः, 'ऐश्वर्यस्येति, उत्सर्गत इति शेषः, तेन गजपतिपदादौ न व्यभिचारः।

सजातीयापेक्षत्वात्। नरपतिपदान्नरपतेर्नरस्येव नि-षादस्थपतिपदान्निषादस्येश्वरस्य प्रतीतेरिति। तन्न। राजवाहनादौ पूर्वपदे षष्ठ्यर्थलक्षणयैव राजसम्बन्धि-प्रतीतेः समासे शक्त्यभावात् अनुपपत्तिरुक्तैव।

उपकुम्भमित्याद्यव्ययीभावोऽर्द्धपिप्पलीत्यादिश्च तत्-

---

न्यश्राद्धादिप्राप्तेः। न च यागेऽपि तथा शब्दोऽस्तीति, करणबाधेन क्रियाया एव बाधादिति। न च पत्ये भार्य्येत्यङ्गवाक्यात् स्त्रियाः श्राद्धाधिकारप्राप्तौ रथकारादिवत् विद्याप्रयुक्तिरपि कल्प्यतां "शूद्रोऽप्यमन्त्रवदित्यादिवदत्र पर्य्युदासाभावादिति वाच्यं। 'शूद्र-पदस्य वर्णसङ्करादिसङ्ग्रहानुरोधेनाविद्यमात्रपरत्वात्।

ननूपकुम्भादौ समासे तदर्थे शक्तिकल्पनादन्यत्रापि समासे शक्तिरित्यत आह, 'उपकुम्भमिति। अत्र वदन्ति तत्पुरुषे भवति षष्ठ्यर्थे लक्षणा न त्वव्ययीभावे अव्ययस्य विभक्त्यन्तरान्तपदेनानन्व-यात्, न हि भवति घटञ्च पटञ्च इतिवत् घटस्य पटस्य चेति प्रयोगः, तस्मिन् एवार्थे पदान्तरप्रयोगे घटस्य समुच्चयः पटस्य समुच्चय इति। तदुक्तं प्रयोगे स्वार्थादभिद्यमानरूपा निपाता इति, तथाच कुम्भस्य समीप इति भवतु षष्ठी न तु शब्दे निपाते षष्ठ्यन्तमाकाङ्क्षता यतस्तदर्थं लक्षणा कल्प्येतेति, मैवं, यत्र यथा

---

अनुपपत्त्यभावादित्यत्राह, 'अनुपपत्तिरिति, 'यदि षष्ठ्यर्थो न लक्ष्यत इत्या-दिना प्रागुक्तेनेति शेषः। ननूपकुम्भमित्यादौ समासे शक्तिकल्पनादन्यत्रापि तथेत्याशङ्क्याह, 'उपकुम्भमिति, यथाच पूर्वपदार्थविभक्त्यर्थान्वयस्तथोक्तं,

पुरुषः पूर्वपदार्थप्रधान एव कुम्भस्य समीपे पिप्पल्या-अर्धे तात्पर्यादतस्तत्रोत्तरपदे षष्ठ्यर्थलक्षणा न तु समासे शक्तिः। नञ्समासे अब्राह्मणमानयेत्यत्र पर्युदासे पूर्वपदे नञि उत्तरपदार्थसदृशे क्षत्रिये लक्षणा।

प्रयोगः तत्र तथा व्युत्पत्तिः, न च घटस्य पटस्येत्यादिवत् उपकुम्भ-इति व्यासप्रयोगोऽस्ति येन तथा व्युत्पत्तिरवसीयेत, किन्तु उप-कुम्भमित्येव प्रयोगो नित्यसमासत्वात् अत उत्तरपदे षष्ठ्यर्थलक्षणां विना नार्थसङ्गतिरित्यत्रापि लक्षणेति। न च नपदेन सहाव्ययी-भावेनोत्तरपदे षष्ठीलक्षणा स्यादिति वाच्यं। नञ्पदेन सह तत्पु-रुषानुशासनेन तत्राप्यव्ययीभावनिषेधात् तत्र च पर्युदासनियमा-लक्षणा-शक्तिभ्यां पर्युदास-प्रसज्यप्रतिषेधयोः प्रतीतेः 'अव्ययं विभ-क्तीत्यादिसूत्रेणासीष्वर्थेषु वर्त्तमानमव्ययं प्रसज्यत इति बोधितेऽस्य नञ्तत्पुरुषानुशासनबलेन सङ्कोचात्। न चैवं निष्कौशमित्यादि-विधायकसूत्रसङ्कोचात् निर्मक्षिकमित्यादि न स्यादिति वाच्यं। तत्रार्थभेदात् निर्मक्षिकमिति मक्षिकाया अभावः निर्विघ्नमिति विघ्नान्निष्क्रान्त इत्यर्थेन विघ्नाभाववानित्यर्थो न तु विघ्नाभाव इत्यर्थः, अतएव निर्विघ्नं समाप्यतामिति सामानाधिकरण्यमिति सारं। ननु विग्रहार्थः समासेन बोध्यमानस्तद्धेतुविभक्त्यभावे तदर्थं लाक्ष-

अब्राह्मणो घट इत्यत्र न सदृशलक्षणेति विशेषयति, 'पर्युदास इति पर्युदासविशेष इत्यर्थः। तदुक्तं "पर्युदासः सदृशग्राहीति, उत्तरपदेऽपि षष्ठ्यर्थलक्षणा नामार्थयोरित्यादिप्रागुक्तव्युत्पत्तेरिति।

अघटः पट इत्यादौ च प्रसज्यप्रतिषेधार्थे नञि सामानाधिकरण्यादभाववल्लक्षणा व्यासेऽपि न घटः पट-इत्यादौ यथा शुक्लः पट इत्यत्र शुक्लवल्लक्षणा । न

णिकोऽस्तु अब्राह्मणपदेन त्वविग्रहार्थस्य सादृश्यस्य प्रतिपादनात् तत्र शक्तिरेवेत्यत आह, 'अब्राह्मणमिति, विग्रहाधिकार्थ एव भासते इत्युभयसिद्धं, तथाच प्रकृत्यर्थानुरोधाद्वृत्तौ कल्प्यमानायां लक्षणैव कल्प्यते लाघवान्न शक्तिरिति तत्र मानाभावादिति भावः । 'अघट इति संसर्गाभावत्वेन नञस्तद्वाचकत्वेन सामानाधिकरण्य-बलादभाववल्लक्षणा अत्र सामानाधिकरण्यार्थमभाववल्लक्षणा यत्र तु न तथा तत्र समासे नाभाववल्लक्षणा अभाववत्त्वलक्षणेत्यर्थः, तत्र सामानाधिकरण्यादित्यभिधानात् यत्र न तथा तत्र समासेऽपि नाभाववल्लक्षणा किन्त्वभाव एव वाच्य एवं वादिनामविवाद एवे-त्यादाविति भावः । ननु संसर्गाभावशक्तस्य नञोऽभावांशेऽपि शक्ति-रित्यभाववति लक्ष्येऽभावांशस्य शक्यत्वेन युगपद्वृत्तिद्वयविरोध इत्य-तोऽनुरूपं दृष्टान्तमाह, 'यथा शुक्लवदिति, सम्बन्धलक्षणैव येन

केचित्तु अव्यय-निपाताद्यतिरिक्त एव तथा व्युत्पत्तिरिति वाक्यार्थविधयैव तद्भानमित्याहुः ।

'प्रसज्येति, संसर्गाभावशक्तनञीत्यर्थः, अतएव इह घटोनेत्यत्र संसर्गाभावस्यैव प्रतीतिः न त्वन्योऽन्याभावस्य अन्यथा तत्र संसर्गाभावसंशयप्रसङ्गात् तथाच केवलान्योन्याभावेऽप्रयोगात् संसर्गाभावशक्तस्य सामानाधि-करण्यानुपपत्त्यादिना अन्योन्याभाववति लक्षणेति भावः । 'व्यासेऽपीति, सामानाधिकरण्यानुपपत्तेस्तुल्यत्वादिति भावः । नचान्योन्याभाववति लक्ष्ये-

पचतीत्यादौ क्रियासम्बन्धे भूतले न घट इत्यादौ प्रसज्यप्रतिषेधे नञोमुख्यार्थता सुबन्तसम्बन्धेऽपि न समासः विभाषाधिकारादिकल्पेन समासानुशासनात्। "यजतिषु च ये यजामहे करोति नानुयाजेष्वित्यत्र पर्युदासे

---

विनेति न्यायात् सम्बन्धिनोऽपि लक्षणयैवोपस्थितिरिति न युगपद्वृत्तिद्वयविरोध इति भावः। ननु व्यास-समासयोरुभयत्रापि लक्षणायां मुख्यप्रयोगो न क्वापीति कथं सापीत्यत आह, 'न पचतीति। ननु न घटः पट इति व्यासो नास्त्येव सुप् सुपेति समासानुशासनात् तथाच समास एव लक्षणा व्यास एव शक्तिरित्येव विभागोऽस्त्वित्यत आह, 'सुबन्तेति, तथाच समासानियमात् सामानाधिकरण्यबलाद्व्यासेऽपि लक्षणेति नोक्तविभागो युक्त इति भावः। ननु समास एव लक्षणेति न युक्तं नानुयाजेष्वित्यत्र समासेऽननुयाजेष्वित्यापत्त्या स एव वक्तव्यः तथाचात्रापि लक्षणा न स्यादित्यभिप्रेत्याह, 'यजतिष्विति, 'अन्यपरत्वमिति, गम्भीरायां नद्यामितिवत् न त्वन्यत्र वृत्तिरित्येतत्परं, अब्राह्मणोऽघट इत्यादौ प्रति-

---

ऽभावांशस्य शक्यत्वेन युगपद्वृत्तिद्वयविरोध इति वाच्यं; विशिष्टलक्षणयैवोभयभानात् मणिकृन्मते तद्विरोधाभावाच्च। अतएव तदनुरूपं दृष्टान्तमाह, 'यथेति। ननु व्यास-समासयोरुभयत्रापि लक्षणायामुख्यप्रयोगाभावे कथं लक्षणापीत्यत आह, 'न पचतीति। न घटः पट इति व्यासमभिप्रेत्याह, 'सुबन्तेति, यद्वा न घट इत्यत्राघट इति स्यादित्यत आह, 'सुबन्तेति, प्रसङ्गादाह, 'यजतिष्विति, मन्त्रं करोति प्रयुङ्क्त इत्यर्थः। 'पदद्वयस्यापीति,

नञ् तेनायमर्थः 'यजतिषु' यागेषु, 'नानुयाजेषु' अनुयाजव्यतिरिक्तेषु, ये यजामह इति मन्त्रं करोति। अथ नानुयाजेष्वित्यत्र न पर्युदासे नञ्, तदा हि पद-द्वयस्यान्यपरत्वं स्यात्समासापत्तिश्च तस्मादनुषङ्गात् करोतिना नञोऽन्वयात्प्रसज्यप्रतिषेधः तेनानुयाजेषु ये यजामह इति मन्त्रं न करोतीत्यर्थः, एवञ्च नानु-याजेष्विति पदद्वयस्य नान्यपरता न वा नञोमुख्यार्थ-त्यागः समासाभावेन साधुता च इति चेत्, न, समा-सस्यानित्यत्वात् नानुयाजेष्विति वाक्ये पर्युदासे नञ्। न चैवं वाक्यवृत्तिपदत्वान्नञोऽन्यपरत्वाभावः, गौर्वा-हीक इत्यादौ वाक्येऽपि गवादिपदस्यान्यपरत्वात्।

योगित्वषष्ठ्यर्थादीनां भानेऽपि न प्रकारतया भानं किन्तु वैशिष्ट्य-तया अब्राह्मण इव घटो नेत्यादौ तथा व्युत्पत्तेः व्यासातिरिक्त-पदेन तदर्थाभिधान एव तत्प्रकारोपस्थापकपदापेक्षेति व्युत्पत्ति-रतो ब्राह्मणस्य सदृशो घटस्याभाव इत्यत्र विभक्त्यपेक्षा तदभावे तेनायमर्थः समासे तदर्थलक्षणेति भावः। 'वाक्यवृत्तीति विग्रह-वाक्यवर्त्तीत्यर्थः, समासे सति भवति लक्षणा राजपुरुष-चित्रग्वादौ न तु विग्रहवाक्येऽपि तथाच समासे सति भवति नञि पर्युदासे लक्षणा न विग्रहवाक्य इति भावः। 'गौरिति गौर्वाहीक इति

एतच्चानुयाजपदेऽपि प्रतियोगित्वलक्षणामभिप्रेत्योक्तं, वाक्यार्थविधयैव तद्भाने नञ एवान्यपरत्वं स्यादित्यवबोध्य एतदभिप्रायेण वक्ष्यति 'न वा नञो-

पचतीत्यादौ क्रियासम्बन्धे भूतले न घट इत्यादौ प्रसज्यप्रतिषेधे नञोमुख्यार्थता सुबन्तसम्बन्धेऽपि न समासः विभाषाधिकाराद्विकल्पेन समासानुशासनात्। "यजतिषु च ये यजामहे करोति नानुयाजेष्वित्यत्र पर्युदासे

---

विनेति न्यायात् सम्बन्धिनोऽपि लक्षणयैवोपस्थितिरिति न युगपद्वृत्तिद्वयविरोध इति भावः। ननु व्यास-समासयोरुभयत्रापि लक्षणायां मुख्यप्रयोगो न क्वापीति कथं सापीत्यत आह, 'न पचतीति। ननु न घटः पट इति व्यासो नास्त्येव सुप् सुपेति समासानुशासनात् तथाच समास एव लक्षणा व्यास एव शक्तिरित्येव विभागोऽस्त्वित्यत आह, 'सुबन्तेति, तथाच समासानियमात् सामानाधिकरण्यबलाद्व्यासेऽपि लक्षणेति नोक्तविभागो युक्त इति भावः। ननु समास एव लक्षणेति न युक्तं नानुयाजेष्वित्यत्र समासेऽननुयाजेष्वित्यापत्त्या स एव वक्तव्यः तथाचात्रापि लक्षणा न स्यादित्यभिप्रेत्याह, 'यजतिष्विति, 'अन्यपरत्वमिति, गम्भीरायां नद्यामितिवत् न त्वन्यत्र वृत्तिरित्येतत्परं, अब्राह्मणोऽघट इत्यादौ प्रति-

---

ऽभावांशस्य शक्यत्वेन युगपद्वृत्तिद्वयविरोध इति वाच्यं; विशिष्टलक्षणायैवोभयभानात् मणिकृन्मते तद्विरोधाभावाच्च। अतएव तदनुरूपं दृष्टान्तमाह, 'यथेति। ननु व्यास-समासयोरुभयत्रापि लक्षणायामुख्यप्रयोगाभावे कथं लक्षणापीत्यत आह, 'न पचतीति। न घटः पट इति व्यासमभिप्रेत्याह, 'सुबन्तेति, यद्वा न घट इत्यत्राघट इति स्यादित्यत आह, 'सुबन्तेति, प्रसङ्गादाह, 'यजतिष्विति, मन्त्रं करोति प्रयुङ्क्त इत्यर्थः। 'पदद्वयस्यापीति,

नञ् तेनायमर्थः 'यजतिषु' यागेषु, 'नानुयाजेषु' अनुयाजव्यतिरिक्तेषु, ये यजामह इति मन्त्रं करोति। अथ नानुयाजेष्वित्यत्र न पर्युदासे नञ्, तदा हि पद-द्वयस्यान्यपरत्वं स्यात्समासापत्तिश्च तस्मादनुषङ्गात् करोतिना नञोऽन्वयात्प्रसज्यप्रतिषेधः तेनानुयाजेषु ये यजामह इति मन्त्रं न करोतीत्यर्थः, एवञ्च नानु-याजेष्विति पदद्वयस्य नान्यपरता न वा नञोमुख्यार्थ-त्यागः समासाभावेन साधुता च इति चेत्, न, समा-सस्यानित्यत्वात् नानुयाजेष्विति वाक्ये पर्युदासे नञ्। न चैवं वाक्यवृत्तिपदत्वान्नञोऽन्यपरत्वाभावः, गौर्वा-हीक इत्यादौ वाक्येऽपि गवादिपदस्यान्यपरत्वात्।

---

योगित्वषष्ठ्यर्थादीनां भानेऽपि न प्रकारतया भानं किन्तु वैशिष्ट्य-तया अब्राह्मण इव घटो नेत्यादौ तथा व्युत्पत्तेः व्यासातिरिक्त-पदेन तदर्थाभिधान एव तत्प्रकारोपस्थापकपदापेक्षेति व्युत्पत्ति-रतो ब्राह्मणस्य सदृशो घटस्याभाव इत्यत्र विभक्त्यपेक्षा तदभावे तेनायमर्थः समासे तदर्थलक्षणेति भावः। 'वाक्यवृत्तीति विग्रह-वाक्यवर्त्तीत्यर्थः, समासे सति भवति लक्षणा राजपुरुष-चित्रग्वादौ न तु विग्रहवाक्येऽपि तथाच समासे सति भवति नञि पर्य्युदासे लक्षणा न विग्रहवाक्य इति भावः। 'गौरिति गौर्वाहीक इति

---

एतच्चानुयाजपदेऽपि प्रतियोगित्वलक्षणामभिप्रेत्योक्तं, वाक्यार्थविधयैव तद्भाने नञ एवान्यपरत्वं स्यादित्यवबोध्य एतदभिप्रायेण वक्ष्यति 'न वा नञो-

यदि च प्रसज्यप्रतिषेधे नञ् तदा मन्त्रविधायक-तन्नि-षेधयोर्विरुद्धार्थत्वेन वाक्यभेदापत्तिः तस्मात् प्रथमप्रतीतैकवाक्यताबलादेकवाक्यत्वे सम्भवति वाक्यभेदस्यान्याय्यत्वात् नञ्पदे लक्षणा कल्प्यते न तु नञ्पदे मुख्यत्वानुरोधादेकवाक्यतात्यागः। न हि पदार्थानुरोधेन वाक्यार्थकल्पनं, किन्तु वाक्यार्थानुरोधेन पदार्थकल्पना। नपदञ्च केवलं नास्त्येव नञ्पदादेव सर्वत्र समासानित्यत्वेन प्रयोगोपपत्तेः। अन्यथा प्रसज्यप्र-

कर्म्मधारयविग्रहवाक्यस्थे गौर्वाहीक इत्यत्र गोपदस्यापि लाक्षणिकत्वादित्यर्थः, 'नञ्पद' इति। ननु व्यामलक्षणायां अनुयाजेष्विति सप्तम्यप्रकृत्यर्थे नञर्थस्वरूपे भिन्ने स्वार्थं न बोधयेदिति तदनुपपत्त्या वाक्यभेद एवास्त्विति, मैवं, साधुत्वमात्रप्रयोजिकाया विशेषणविभक्तेरर्थाबोधकत्वात्। यद्वा ब्राह्मणमिव पश्य ब्राह्मणेनेव कल्प्यत इत्यादिदर्शनात् निपातसमभिव्याहृतविभक्त्यर्थो निपातार्थ एव भासते। न च सुब्विभक्तीनां प्रकृत्यर्थगतस्वार्थबोधकत्वव्युत्पत्तिभङ्गः, प्रकृत्यर्थान्वितस्वार्थबोधकत्वस्यैव व्युत्पत्तिसिद्धत्वादिति भावः। ननु नानुयाजेष्वित्यत्र नञ् न भवति किन्तु नपदमन्यदेवेत्यत आह, 'नपदमिति, 'अपदमेवेत्यत्र विनिगमकाभावेना-

मुख्यार्थत्याग इति। नन्वननुयाजेष्वित्यत्र न नञ् किन्तु नपदमेवेत्यत आह, 'नपदञ्चेति, नन्वेवमब्राह्मणमित्यादावपि नञ्समासो न स्यात अपदेनैव

तिषेधे नञ् न स्यादेव नपदेनैव गतार्थत्वात् । अमानोना इत्यत्रापदमेव निषेधवाचकं समास-वाक्यभेदेन नञोर्द्वैविध्याद्वा तथाभिधानम् । इतरेतरद्वन्द्वे च धव-खदिरौ छिन्धीत्यादौ विभक्त्युपनीतद्वित्वस्य धव-खदिरयोः प्रत्येकं न योग्यत्वं न वा साकाङ्क्षत्वं द्वित्व-मपि प्रत्येकं न योग्यं न वा साकाङ्क्षम् एकत्र द्वित्वा-भावात् । न च व्यासज्यवृत्तित्वेन द्वित्वमेकाश्रित-मपीति वाच्यम् । स हि द्वित्वमाकाङ्क्षति द्वित्वञ्च तं यत्र द्वित्वं परिसमाप्यते, एकस्य तथात्वे द्वौ बहव-

स्वरसादाह, 'समासेति । ननु न योग्यमित्यसङ्गतं द्वित्वसंसर्गस्यैव धवनिष्ठात्यन्ताभावाप्रतियोगित्वादित्यत आह, 'न वेति, 'द्वित्व-मपीति वस्तुगतिमनुरुध्योक्तं, तत्साकाङ्क्षत्वेऽपि अन्याकाङ्क्षाविरहेणै-वानन्वयादित्यवधेयं । 'यत्र द्वित्वमिति परिसमाप्यतावच्छेदकधर्म-णोपतिष्ठत इत्यर्थः, 'एकस्य' समाप्यतावच्छेदकानवच्छिन्नस्य, 'एकत्र'

निषेधवाचिना गतार्थत्वादित्यत आह, 'अमानोना इति, 'अपदमेवेति नञ्-प्रकृतिकमित्यर्थः, तथाचापदमपि भिन्नं नास्त्येवेति भावः । नन्वेवं कथं तस्य पृथगभिधानमित्यत आह, 'समासेति, अतएवाभवतीत्यादिप्रयोगः समासा-भावात् साधुरिति भावः । एतदपि क्वाचित्काभिप्रायं, यत्र तु नञुत्तरं पदं सर्व्वोत्तरं भवति तत्र समासेऽपि नलोपो न भवति गमिकर्म्मीकृतनैकगौ-रितेत्यादौ, अतएव कथं नैकं यथा नैककीर्त्तिरित्यादि पूर्व्वपक्षयित्वा सर्व्वो-त्तरपदं विवक्षितं यथा अब्राह्मण इत्यादौ तच्चेह नास्तीति समादधुः। 'साका-ङ्क्षत्वमिति, 'न योग्यमिति न द्वित्वान्वयप्रयोजकरूपावच्छिन्नमित्यर्थः । नन्वेवं

इत्येकत्रापि स्यात् अतोद्वन्द्वे पदशक्त्यस्य नान्वयबोधः, बोधे वा धवद्वयधीः खदिरद्वयधीश्च स्यात्। तस्मात्पदशक्ये द्वित्वान्वयानुपपत्त्या सहितावस्थमुभयं द्वित्वान्वयावगमयोग्यं तत्साकाङ्क्षञ्चेति खदिरसहितधवोपस्थितये धवपदे साहित्यलक्षणा। ननु खदिरसहितधवस्यैकत्वात् खदिरसहितो धव इतिवद्द्विवचनानुपपत्तिः धवसहितखदिरसाहित्यावस्थालक्षकत्वे च तस्या एकत्वादेकवचनापत्तिः अवस्थाश्रययोरुपसर्जनत्वेन द्विवचनान्वयानुपपत्तिश्चेति चेत्, अत्र कश्चित्,

---

समाप्यतावच्छेदकानवच्छिन्ने, एकत्वेनोपस्थित इति यावत्। ननु धव-खदिरवृत्तिद्वित्वपरिसमाप्यतावच्छेदकं धव-खदिरत्वमेवेत्यत आह, 'धवेति धव-खदिरत्वं नैकं किन्तु धवत्वं खदिरत्वञ्च तयोर्द्वयोर्द्वित्वसमाप्यतावच्छेदकत्वे धवद्वयधीः स्यात् खदिरद्वयधीः स्यात् इत्यर्थः, 'साहित्येति। ननु भवतु अन्वयार्थं साहित्योपस्थिति-

---

द्वित्वाश्रयोधव इत्यपि योग्यं न स्यादिति वाच्यं। तत्र द्वित्वसमवायस्यैवान्वयप्रतियोगित्वात् तस्य चाव्यासज्यवृत्तित्वात्। 'धवपद इति, प्राथम्यादिति भावः। यद्यपि योग्यतावच्छेदकच्छिद्रेतरत्ववत् प्रकारान्तरोपस्थितमेव साहित्यमादायान्वयः सम्भवति तथापि मतान्तरेणेदं, तथाचैतन्मते च्छिद्रेतरत्वेऽपि लक्षणैव तदिदं वक्ष्यति 'च्छिद्रेतरत्वविशिष्टे च घटपदस्य लक्षणयेवेति। नन्वेवं धव-खदिर-पलाशास्त्यमित्यादौ न लक्षणा स्यात् अनुपपत्त्यभावात्। न च मध्यर्थबहुत्वान्वयानुपपत्त्या सेति वाच्यं। विभक्त्यर्थसंख्यायाः समासादप्रतीतेः

अस्यालक्ष्यत्वेऽपि तदाश्रयगतस्वार्थबोधकत्वमेव द्विवचन-बहुवचनयोः पदवृत्तिवैचित्र्यात् तथैव व्युत्पत्तेः यथा गुणवाचि नीलादिपदं क्वचिद्गुणमात्रवाचकं क्वचित्तदुपलक्षितद्रव्यपरम्, अन्यथा नीलः पट इति सामानाधिकरण्यं न स्यात् एकत्र वृत्त्यभावात्।

यत्तु लक्षिता साहित्यावस्था स्वाश्रयमुभयं लक्षयतीति, तन्न, लक्षितलक्षणाया जघन्यत्वात्।

---

नियमः तथापि योग्यतावच्छेदकत्वेन छिद्रेतरत्ववत् साहित्यमुपतिष्ठतां किं लक्षणयेति, मैवं, आकाङ्क्षायां पदविशेषोपस्थापनस्य प्रयोजकत्वादतः पदोपस्थितिं विना नाकाङ्क्षा योग्यतायान्तु नैवं नियम इति भावः। 'यथा गुणेति वैचित्र्यमात्रमुदाहरणं, प्रकृतिभेदेन प्रत्ययस्य स्वार्थान्वयवैचित्र्योदाहरणन्तु क्वचित् प्रत्ययस्य प्रकृत्यर्थगतस्वार्थबोधकत्वं क्वचित्त तद्विशेषणगतस्वार्थबोधकत्वं तरतमादौ द्रष्टव्यं। सर्व्वत्राजहत्स्वार्थलक्षणायां दध्युपघातकत्वादेर्विशेषणीभूतस्यैव लक्ष्यत्वमिति तदाश्रये विभक्त्यर्थान्वय इति व्युत्प-

---

त्तदुक्तं सङ्ख्या तु व्यञ्जकाभावादयुक्तेति चेत्, न, एकधर्म्मावच्छेदं विना लक्ष्यत्रये रूपान्वये धवस्य खदिरस्येतिवद्वाक्यभेदः स्यादिति परसिद्धान्तात्। समासारम्भकविग्रहे तथात्वात् समासेऽपि तथात्वमित्यन्ये। समासादपि विभक्त्यर्थसंख्याप्रतीतिरिति मतेनेदमित्यपरे। वैचित्र्यमात्रे उदाहरणमाह, 'यथेति।

'यत्त्विति, तथाच द्विवचनोपपत्तिरिति भावः। ननु सर्व्वत्राजहत्स्वार्थायां दध्युपघातकत्वादेर्विशेषणीभूतस्यैव लक्ष्यत्वं तदाश्रये विशेष्य एव

वस्तुतस्तु साहित्याश्रयः प्रधानं साहित्यन्त्ववच्छेदकतया गुणभूतं पदेन लक्ष्यते तेन साहित्याश्रयस्यानेकत्वाद्द्विवचन-बहुवचने भवतः। अतएवेतरेतरद्वन्द्वः सर्वपदार्थप्रधानः धवश्च खदिरश्चेति विग्रहेण तथैवार्थविवरणात्। समाहारे तु साहित्यावस्था प्रधानं पदार्थो गुणभूतः तेन तस्या एकत्वाद्भेरी-पटहमित्यादावेकवचनम्। धर्मे धर्मिणि च तात्पर्याद्द्वन्द्वयोर्भेदः। अतएव युगपदधिकरणवचन इतरेतरद्वन्द्व इति शाब्दिकाः।

अधिक्रियत इत्यधिकरणं पदार्थस्तेषां युगपद्वचनमेकेनैकदोपस्थापनं तच्च न शक्त्या एकपदस्येतरपदार्थे शक्त्यभावात्। अन्यथेतरपदवैयर्थ्यप्रसङ्गः। अनेका-

त्तिवैचित्र्यमसिद्धमित्यस्वरसमत्र कश्चिदित्यनेन दर्शयित्वा तथैव सिद्धान्तमाह, 'वस्तुतस्त्विति।

विभक्त्यर्थान्वय इति व्युत्पत्तिवैचित्र्यमसिद्धमित्यस्वरसं कश्चिदित्यनेन दर्शयित्वा तथैव सिद्धान्तमाह, 'वस्तुतस्त्विति, अन्यथा समाहारेऽपि द्विवचनादिकं स्यादिति भावः। 'समाहारे त्विति, न चैवं भेरी-पटहं वादयेत्यादावनन्वयापत्तिरिति वाच्यं। परम्परासम्बन्धेन धर्मेऽपि तदन्वयात् योग्यतावशादप्रधानेऽपि धर्मिणि तदन्वयोपपत्तेः वृत्तिवैचित्र्यादित्यन्ये। 'अतएवेति साहित्यलक्षणासत्त्वादेवेत्यर्थः।

र्थत्वेऽप्येकस्यैकत्रानेकार्थपरत्वाभावात्। नापि पदद्वयं मिलितमुभयोरुपस्थापकं, मिलितस्य मिलिते शक्त्यभावात्। नापि द्वन्द्वे शक्तिरेव, पदलक्षणयैवानेकार्थोपस्थितिसम्भवात्। अतएवाङ्ग-वाङ्ग-कालिङ्गशब्दाद्-द्वन्द्वे बहुषु वर्त्तमानात् परस्य तद्राजस्याञादेः "तद्राजस्य बहुषु तेनैवास्त्रियां" इत्यनेन लोपे अङ्ग-वङ्ग-कलिङ्गा इति भवति। अन्यथा साहित्यलक्षणां विना तेषां प्रत्येकपदस्य बहुषु वृत्त्यभावादञ्लोपो न स्यात्। घटौ घटा इत्यत्रापि घटसहितघटत्वेन द्विवचन-बहुवचनान्वययोग्यतेति तदुपस्थितये घटपदे साहित्यलक्षणा। तदर्थप्रदर्शनार्थं द्वन्द्वापवादकं सरूपाणामेकशेषानुशासनमपि। तदुक्तम् "सहभावविवक्षायां वृत्तिर्द्वन्द्वैकशेषयोः। क्रमेणार्थप्रतीतौ हि न स्याद्-द्विवचनादिकम्"॥ इति। ननु स्वरूपद्वयमेव साहि-

'तदर्थप्रदर्शनार्थमिति द्वन्द्वे साहित्ये लक्षणायां स्थितायां यदि द्वन्द्वसमानार्थकं तद्भवेत् तदा द्वन्द्वप्रसक्तौ तदपवादकं सूत्रं प्रसज्येत अन्यथा अर्थभेदादेव द्वन्द्वाप्रसक्तौ तदपवादकं न

'अनेकार्थत्वेऽपीति, सकृदुच्चरितादिति न्यायात्, अन्यथेत्यस्य विवरणं 'साहित्यलक्षणां विनेति, 'प्रत्येकपदस्येति, एतेन सर्व्वपदे साहित्यलक्षणेति सूचितं अन्यथा एकपदलक्षणायामपरपदस्य बहुत्वे वृत्त्यभावात् आङ्ग-वाङ्ग-कालिङ्गा इत्याद्येव स्यादिति। 'तदर्थेति द्वन्द्वसमा-

त्यमतिरिक्तस्याभावात् स्वरूपयोश्च धवपदादुपस्थितौ युगपद्वृत्तिद्वयविरोधः। न चाजहत्स्वार्था, साधारणरूपाभावात्। एकक्रियान्वयित्वमेकान्वयप्रकारत्वम् अपेक्षाबुद्धिविशेषविषयत्वादिकं द्वित्वान्वयात् पूर्वमविद्यमानमप्रतीतञ्च धव-खदिराविति हि प्रतीतिः न तु रूपान्तरेण। न च धवपदस्य खदिरे स्वार्थसम्बन्धो लक्षणाबीजमस्तीति चेत्, न, साहित्यं हि तुल्यद्वारता सा च धातूपनीतफलानुकूलसजातीयविजातीयव्यापारप्रचयस्यैकरूपस्तुल्यः सम्बन्धः। द्वन्द्वेऽन्योन्यसम्बन्धोऽप्ययमेव। धव-खदिरौ छिन्धीत्यत्र छिदानुकूलो यावान् व्यापारः सतयोस्तुल्य एव भासते च। अतएव स्वर्गकामादौ पत्नाः सहत्वेनानुप्रवेशोऽपि

---

क्रियेतेत्यर्थः। 'एकक्रियेति छिदादिलक्षणैकक्रियान्वयित्वं, 'एकान्वयेति कर्म्मत्वमेकोऽन्वयस्तत्प्रकारत्वं द्वयोरित्यर्थः, आद्यद्वयमविद्यमानं शेषमप्रतीतञ्च तदेव विवृणोति, 'धव-खदिराविति।

---

सार्थत्वाभावे द्वन्द्वाप्रसक्तौ तदपवादकमेकशेषानुशासनं न स्यादित्यर्थः, 'एकेति एकोऽन्वयप्रकारः कर्म्मत्वादिः। आद्ययोराह 'अविद्यमानमिति, अन्त्ये त्वाह, 'अप्रतीतञ्चेति, एतदेव विवृणोति धव-खदिराविती ति। 'सा चेति, सजातीयत्वादिकं स्वरूपनिर्व्वचनं अतएवाग्रे तदनन्तर्भाविणैव वक्ष्यति। पूर्व्वोक्तदोषं निरस्यति, 'भासते चेति, द्वित्वान्वयात् पूर्व्वमिति शेषः। ननु धव-खदिरावित्यादौ क्रियारहिते धातूपनीतफलानुकूलव्यापारवत्त्वाप्रतीतौ कथं द्वित्वान्वय इति चेत्, न, कार्य्यान्वितव्युत्पत्तेः क्रियारहिते

न द्विवचनापत्तिरेकत्वविरोधो वा अतुल्यदारकत्वात् दम्पत्योरेकरूपसजातीय-विजातीयव्यापारप्रचयसम्बन्धरूपसाहित्याभावात् । एवं छिदानुकूलतुल्यव्यापारत्वेन साहित्यरूपेण शक्य-लक्ष्यसाधारणेनाजहत्स्वार्थलक्षणया धवपदादुपस्थिते धव-खदिररूपे विभक्त्यर्थद्वित्वान्वयः धवपदार्थस्य खदिरेण सम्बन्धोऽपि तुल्यदारत्वमेव। न चास्य लक्ष्यत्वान्न सम्बन्धरूपतेति वाच्यम्। अजत्स्वार्थायां हि येन रूपेण लक्ष्यता स एव सम्बन्धः यथा छत्रि-काकपदयोः छत्रिघटितसमूहवर्त्तित्वं दध्युपघातकत्वञ्च लक्ष्यमेव सम्बन्धः । न चैवं खदिरपदवैयर्थ्यं लक्षणायां लक्षणीयपदानुपयोगादिति वाच्यम् । खदिरपदं विना न नियता खदिरोपस्थितिरिति साहित्याश्रयद्वितीयविशेषज्ञापनाय पदसार्थकत्वम् अन्यथा लक्षणाविरहेण धवद्वयधीप्रसङ्गात् । अतएवाग्नीषोमीये अग्नीषोमौ देवते इति द्वित्वान्वयबलादेव साहित्यावस्थयोः सापेक्षयोर्देवतात्वं द्वन्द्वे आद्यं पदं लक्षकं प्राथम्यात् द्वितीयं पदं साहित्यनिरूपका-

---

ऽसंसर्गाग्रहाभावाभ्युपगमेन द्वित्वानन्वयात् । वस्तुतस्तुल्यव्यापारवत्त्वमात्रं साहित्यं तच्च तत्रापि अन्यथा धव-खदिरौ त्यजेत्यादौ तयोर्धातूपनीतफलानुकूलव्यापारवत्त्वाभावेन द्वित्वानन्वयापत्तेः तदपि विवक्षासिद्धं बोध्यं, तदुक्तं "सहभावविवक्षायामित्यादि, अन्यथैकस्यापि प्राधान्यविवक्षायां तत्रैव

काङ्क्षितसमर्थकं मुख्यमेव उभयोरमुख्यार्थत्वे हेत्वभावात्।

अन्ये तु द्वितीयपदेऽपि लक्षणा समभिव्याहृतविभक्त्यर्थान्वयानुरोधात्। अन्यथा समभिव्याहारभङ्गापत्तेः पदार्थगतस्वार्थबोधिका हि विभक्तिः। न च समासे पदमन्यदस्ति, समस्यमानपदात् समासे शक्त्यभावात्, तेन धवपदार्थगतं खदिरपदार्थगतञ्च द्वित्वं तन्त्रेण विभक्तिराह, अतोधवपदवत् खदिरपदेऽपीतरसम्बन्धावस्थस्वार्थपरता प्रातिपदिकार्थे इतरपदार्थान्वयस्य विभक्त्यर्थगर्भत्वादुभयपदार्थगत एव द्वित्व-कर्मत्वे विभक्तिराह। न च द्वयोः सहितावस्थस्वार्थपरत्वे धवद्वयं खदिरद्वयञ्च वाक्यार्थेऽन्वीयेत न त्वेको धवः खदिरश्चेति चतुष्टयापत्तिरिति वाच्यम्। पदद्वयेन हि सहितयोरेकमेव साहित्यं लक्ष्यते तच्च न चतुष्टयवृत्ति।

'अन्ये त्वित्यस्वरसोद्भावनं तद्बीजमिदमेव यत्समस्यमानयावत्पदार्थगतस्वार्थबोधकत्वं विभक्तीनामिति व्युत्पत्तिरसिद्धा किन्तु समस्य-

---

खदिरसहितधवं छिन्धीति कस्यचित् प्रयोगोऽसाधुः स्यात् द्वन्द्वापत्तेरिति।
'अन्ये त्वित्यस्वरसोद्भावनं तद्बीजन्तु समस्यमानपदार्थानुगतस्वार्थबोधकत्वं विभक्तीनामित्येव व्युत्पत्तिर्न तु यावत्पदार्थानुगतत्वगर्भा, सा चैकपदार्थे लक्षणयैव निर्व्वहतीति। 'तन्त्रेणेति युगपदित्यर्थः, 'पदद्वयेनेति। न चैवं

अपरे तु द्वितीयपदं फलतोऽनुवादकं यथान्विताभिधाने एकं पदम्। अतएव समुच्चये अन्वाचये च तयोः साहित्यानवगमान्न द्विवचन-बहुवचने न वा द्वन्द्वः। यद्यपि चार्थमात्रे द्वन्द्वानुशासनं तथापि यत्रान्योन्यसाहित्यान्वयपूर्वक इतरेतरपदार्थान्वयस्तत्र समासः साधुस्तेनेतरेतरयोग-समाहारयोस्तत्राभावात् समासः। समुच्चये अन्वाचये च न तथा[१] असम्बद्ध एव एकैकशः क्रियान्वयात्। एवं धवं खदिरञ्च छिन्धीत्यादौ समुच्चये तुल्यवदसम्बद्धयोः क्रियान्वयधीः पश्चात्तु तयोरेकरूपसजातीय-विजातीयव्यापारप्रचययोगित्वं साहित्यञ्चकारादवगम्यते। क्रियाभेदेऽन्वाचयः यथेन्ध-

मानपदार्थगतमेव स चैकपदलक्षणयैव निर्वहतीति। 'अपरे त्वित्यपि तथा अनुवादस्य प्रकारभेदेनासम्भवादिति, तस्माद्द्वितीयं पदं

(१) न तेषां सम्बन्ध इति क०।

पौनरुक्त्यं, करोतीत्यादाविव सम्भेदे दोषाभावादिति, 'फलत इति, साहित्यनिरूपकतया सामान्यत उपस्थितस्य द्वितीयपदार्थस्य विशेषणोपस्थितिरनुवादप्रयोजनमिति भावः। 'यथेति इतरान्वितप्रत्ययपस्थापितस्येतरस्य पदान्तरेण पुनर्व्वचनमनुवाद इत्यर्थः, 'क्रियाभेद इति क्रियागुण-प्रधानभावइत्यर्थः, तेन धवं छिन्धि खदिरमपीत्यत्रान्वाचये नाव्याप्तिर्न वा घटं पश्य पटं वा आनयेत्यादावुभयत्रैव प्राधान्येन क्रियान्वयतात्पर्य्यात् समुच्चयेऽतिव्याप्तिः अतएवाह्वनमानयनमेवेति न क्रियाभेदः निरूपकभेदेन च भेदे समुच्चयेऽपि

नमाहर्तुं वनं व्रज शाकमप्यानेष्यसीति । गौश्चाश्वश्चेति द्वन्द्वसमानार्थकं वाक्यमेव साहित्यं परमनेन न स्फोरितं द्विवचन-बहुवचनयोरेव तद्व्यञ्जकत्वात् ।

यत्तु द्वित्वान्वयार्थं तदन्वययोग्यार्थोपनयनं अपेक्षाबुद्धिविषयत्वावस्थया च द्वित्वान्वय इत्यपेक्षाबुद्धिविषयत्वावस्थस्वार्थपरतास्तु इदमेव च साहित्यं न त्वेकक्रियान्वयः तस्य च विभक्त्यैव बोधितत्वात् । एकक्रियान्वयाभावेऽपि च द्वित्वान्वयदर्शनादिति । तन्न । अपेक्षाबुद्धिविशेषविषयत्वार्थमप्येक उपाधिरवश्यं वाच्य इति[१] तथैव लक्षणाया युक्तत्वात् लाघवात् ।

(१) अपेक्षाबुद्धिविशेषविषयत्वानुगमेऽप्येक उपाधिरवश्यं वाच्य-इतीति ख० ।

तथात्वापत्तिरिति निरस्तं । नन्वेवं गौश्चाश्वश्चेति न स्यात् क्रियायोगाभावेन समुच्चयान्वाचयत्वाभावादित्यत आह, 'गौश्चेति, इयानेव विशेषः यद्द्वन्द्वे स्वार्थसम्बन्धेन लक्षणया साहित्योपस्थितिरत्र पश्चाच्चकारेणेत्याह, 'साहित्यं परमिति, अनेन चकारेण पश्चादिति शेषः । नन्वत्रापि कथं न लक्षणेत्यत-आह, 'द्विवचन-बहुवचनयोरिति द्वित्वान्वयानुपपत्त्यैव सेत्यर्थः, एतदपीत-रेतरयोगद्वन्द्वाभिप्रायेण, समाहारे तदभावेऽपि तत्सत्त्वादिति ध्येयं । क्वचित्तु 'न स्फोरितमिति पाठः तत्र प्रागिति शेषः ।

'न त्विति, यद्यप्येकक्रियान्वयः साहित्यं न प्रागुक्तमिति तन्निषेध-स्तूक्तोपालम्भः, तथापि परग्रन्थस्य तादृशस्यैवात्र लिखनमिति न दोषः । 'विभक्त्यैवेति क्रियेतिविभक्त्यन्तेनेत्यर्थः, 'अपेक्षेति द्वित्वादिवत्समूहा-लम्बनरूपापेक्षाबुद्धिविषयत्वस्याप्येकत्वासमासेरित्यर्थः, अतएव गुणादौ

न च विना लक्षणामप्यन्यसम्बन्धस्य सतः सापेक्षस्य क्रियान्वयोऽपि विभक्त्या बोध्यत इति।

अत्रोच्यते। एकस्मृत्यारूढपदद्वयात् स्वस्य शक्त्या स्व-स्वार्थयोरेकदा स्मृतिसम्भवादनेकस्मृत्यर्थं न साहित्ये लक्षणा एकैकमात्रगोचरसंस्कारद्वयाद्धि पदयोस्तदर्थयोश्चैका स्मृतिरित्यनुभवसिद्धम् प्रत्येकेन्द्रियसंयोगात् समूहालम्बनमिव। अन्यथा द्वन्द्वे न लक्षणा न वा तया अनेकस्मृतिः पदयोस्तदर्थयोश्चैकस्मृत्यभावात्। एवञ्च पदद्वयादुपस्थिते धव-खदिरादिस्वरूपे विभक्त्या द्वित्वान्वयोबोध्यते[१]। यथेन्द्रियसन्निकृष्टे ज्ञाते वा धव-खदिरादिस्वरूपे प्रत्यक्षेण द्वित्वं बोध्यते। न च तत्र तयोः स्वरूपातिरिक्तं तुल्यदारत्वादिकं साहित्यमस्ति

तात्पर्य्यग्राहकमित्याद्य पत्र एवेति। 'अपेक्षेति तस्याः समूहालम्बनरूपाया एकत्रासमाप्तेरित्यर्थः। 'न च विनेति, 'अन्यसम्बन्धस्य'

(१) क्रियान्वयो बोध्यत इति ख० ग०।

तद्विषयापि द्वित्वादिधीर्नैकत्रेति भावः। 'तस्य च विभक्त्यैवेति, दूषयति, 'न चेति। 'अन्यसम्बन्धस्य' इतरसहितावस्थस्य, 'सापेक्षस्य' साकाङ्क्षस्य, साहित्यलक्षणां विनाकाङ्क्षाविरहेण द्वित्वानन्वये क्रियानन्वयात्, तदुक्तं प्रातिपदिकार्थे इतरपदार्थान्वयस्य विभक्त्यर्थगर्भत्वादिति। एकदा पदार्थयोरुपस्थितिरङ्गं न त्वेकपदेन गौरवात् सा च पदद्वयादेवोपपन्नेति न साहित्यलक्षणेत्याह, 'एकेति, प्रत्यक्षाद्विशेषमाशङ्कते, 'नन्विति,

ज्ञायते वा तथा विभक्त्यापि विलक्षणस्वरूपे द्वित्वं बोध्यते। उभयोर्द्वित्वान्वयबोधकत्वे विशेषाभावात्। ननु योग्यतावच्छेदकरूपेणोपस्थिते इतरपदादन्वयबोधः साहित्याश्रयत्वेन च धव-खदिरौ तथा न प्रत्येकं छिद्रेतरत्वविशिष्टे घटपदस्य लक्षणैवेति चेत्, न, उपस्थिते योग्येऽन्वयबोधोऽधिकस्य गुरुत्वात्। घटपदादपि योग्यस्यान्वयो बोध्यते न तु छिद्रेतरत्वेनेत्युक्तम्। स्यादेतत्। पदद्वयात् स्व-स्वशक्त्या एकदा स्मृतेनैकत्र इतरपदार्थस्य विभक्त्यर्थस्य चान्वयबोधो न स्यात् इतरपदार्थे इतरपदानां नामार्थे विभक्तीनां स्वार्थान्वयबोधकत्वमिति व्युत्पत्तेः व्याप्तेश्च। अनेकश्च न पदार्थो नापि नामार्थः मिलितपदद्वये पदत्व-नामत्वयोरभा-

अन्योन्यसम्बन्धस्य, अतएव सापेक्षस्य यः क्रियान्वयः स विभक्त्यापि-लक्षणां विना न बोध्यत इत्यर्थः, लक्षणां विनान्योन्यसम्बन्धाभावेन सापेक्षत्वाभावादिति भावः। एकदान्वयप्रतियोगिनोरुपस्थितिर्म्मृग्यते न त्वेकेन पदेन गौरवात् सा च पदद्वयादेव सम्भवतीति न लक्षणेत्याह, 'एकेत्यादि, योग्यतावच्छेदकेत्युपलक्षणं, आकाङ्क्षावच्छेदकेत्यपि द्रष्टव्यं। अतश्छिद्रेतरत्वस्याकाङ्क्षावच्छेदकत्वमाश्रित्य

---

नेति मतान्तरेण बोध्यं, 'योग्य इति, योग्यता च बाधकमानाभावरूपा न त्वन्वयप्रयोजकरूपवत्त्वादिकमिति भावः। लक्षणास्थले पदार्थस्यैव

वात्। अतो द्वित्वान्वययोग्यस्य पदार्थत्व-नामार्थत्व-निर्वाहाय द्वन्द्वपदे साहित्यलक्षणेति। तन्न। पदार्थत्वं हि वृत्त्या पदोपस्थाप्यत्वं पदतात्पर्यविषयत्वं वा। अस्ति च द्वन्द्वे पदस्यानेकमुपस्थाप्यं तत्र तात्पर्यञ्च तन्निर्वाहश्चानेकैकस्मृतिद्वारा लक्षणया पदेन वा स्व-स्वशक्त्या पदाभ्यां वेति न कश्चिद्विशेषः। एकपदोपस्थाप्यत्वञ्च न पदार्थत्वं गौरवात्। एवं नामार्थत्वमपि तत्तात्पर्यविषयत्वमेव। अथ पदार्थतावच्छेदकावच्छिन्ने विभक्तेः स्वार्थान्वयबोधकत्वमतो मिलिते तद-[illegible]त्वं न मिलितवृत्तिपदार्थतावच्छेदके लक्षणां विनेति चेत्, न, धव-खदिरस्वरूपद्वयस्य प्रत्येकं तदवच्छिन्नत्वमेव मेलकञ्च न स्वरूपद्वयातिरिक्तं प्रत्येक-

लक्षणेत्युक्तमन्यथा संस्कारादेव तदुपस्थितेः तत्र लक्षणाभ्युपगमस्यानुपपत्तेरिति ध्येयं। एवमग्रेऽपि योग्ये साकाङ्क्षे इति पूरणीयं। 'पदतात्पर्येति मतान्तरेण, यदा पदेन पदार्थस्तेन च सम्बन्धी उपस्थाप्यत इति मतं तदा तत्र पदवृत्त्युपस्थापनाभावादिति। 'एकस्मृतीति एकपदस्मृतीत्यर्थः, यथाश्रुतस्यानभ्युपगमादिति भावः। 'धव-खदिरेति, पदार्थतावच्छेदकत्वमात्रं तन्त्रं न त्वेकपदार्थावच्छेदकत्वप-

स्मारकत्वमिति मतमाश्रित्याह, 'पदतात्पर्येति, 'धव-खदिरेति। पदार्थतावच्छेदकत्वमात्रं तन्त्रं न त्वेकपदार्थतावच्छेदकत्वपर्य्यन्तं गौरवादिति भावः। 'प्रत्येकस्येति, व्यासज्यवृत्तितया प्रत्येकमात्रान्वयायोग्यत्वं द्वित्वस्येत्यर्थः,

स्यायोग्यत्वात् न द्वित्वान्वयः। तथापि यादृशे द्वित्वान्वयतात्पर्यं न तदवच्छिन्नस्तदवच्छिन्ने च न द्वित्वान्वय इति चेत्, न, स्वरूपद्वयातिरिक्तस्य यादृशपदार्थस्याभावात्। वस्तुतः समभिव्याहृतपदार्थे विभक्त्यर्थान्वय इति व्युत्पत्तिर्लाघवान्न तु पदार्थतावच्छेदकावच्छिन्ने गौरवात्। ननु विभक्तेः पदार्थतावच्छेदकधर्मव्याप्यसङ्ख्याबोधकत्वं द्वन्द्वादन्यत्र तथा व्युत्पत्तेरिति उभयगतपदार्थतावच्छेदके साहित्ये लक्षणेति चेत्, न, पदार्थतावच्छेदकधर्मसमानाधिकरणस्वार्थबोधकत्वे विभक्तिव्युत्पत्तिर्लाघवात् न तु सामानाधिकरण्ये नियमांशोऽपि प्रविशति गौरवात्। नन्वेवं घटावानय

र्यन्तं गौवरादिति भावः। 'अयोग्यत्वात्' अन्वयशून्यत्वादनाकाङ्क्षत्वादिति यावत्। ननु स्वार्थान्वयितावच्छेदकपदार्थतावच्छेदकावच्छिन्ने विभक्तेः स्वार्थसंख्याबोधकत्वमिति व्युत्पत्तिः द्वित्वान्वयितावच्छेदकस्योभयवृत्तिधर्मो न च धवत्वादिकं तथेत्यस्वरसादाह, 'वस्तुत इति, उक्तव्युत्पत्तेर्गौरवग्रासेन समभिव्याहृतेत्याद्येव व्युत्पत्तिरिति भावः। 'पदार्थतेति उक्तपदार्थतेत्यर्थः।

'नियमेति, वस्तुतस्त्वाप इत्यादेरेकपाथःपरमाणावपि प्रयोगात् तद्गुणानादाय बहुवचनमुपपादनीयं। न च प्रकृतौ

'यादृश इति, मिलित इत्यर्थः, प्रत्येकस्य पदार्थतावच्छेदकानवच्छिन्नत्वमभ्युपेत्याह, 'वस्तुत इति, समभिव्याहाराभावात् घटे न तदन्वय इति यदि

पटश्चेत्यत्र घटत्वसमानाधिकरणं द्वित्वं समभिव्याहृते पटेऽपीति तमादायान्वयबोधः स्यादिति चेत्, न, विभक्तीनां योग्यतादिमत्प्रकृत्यर्थगतस्वार्थान्वयबोधकत्वं व्युत्पन्नम्। न च घटावित्यत्र पटपदं प्रकृतिः। धवखदिरावित्यत्र धवपदं व्यवहितमपि विभक्तिसमभिव्याहृतमेव तदन्तर्भावेनैव समासस्य प्रातिपदिकत्वात्

लक्षणा, वृत्तिद्वयविरोधापत्तेः। न चाजहत्स्वार्था, उभयसाधारणधर्माप्रतीतेरिति गुणादीनादाय यत्परमाणोर्बहुत्वं तदेव परमाणुगतत्वेन भासत इति व्यक्तव्यं, तथाच पदार्थतावच्छेदकव्याप्यसङ्ख्याबोधकत्वे व्यभिचार एव। न चाप इत्यादेर्बह्व्य आपः बहवो दारा इत्यनुभवाच्चैवमिति वाच्यं। एकपाथःपरमाणावाप इति एते वयममी दारा इति प्रयोगानुपपत्तेः। न च घटा इत्यत्राप्येवं प्रसङ्गः, तत्रैकघटे घटा इति प्रयोगाभावेन नियमात् आप इति शब्दानां घटादिशब्दवैषम्यस्य सर्व्वसिद्धत्वात्। न चैकोऽयं द्वौ बहव इत्यपि स्यात्, एकत्वावरुद्धत्वेन निराकाङ्क्षत्वात्। ननु यद्यप्यप्रतीयमानत्वमादाय बहुत्वं आप इत्यादौ तर्हि गुणानादायेति व्यर्थं घटादिकमादायेत्यपि स्यात् इति चेत्, न, न हीहापोदारा इत्यादौ घट-पटादयोऽपि येन तन्निबन्धनं बहुत्वं प्रतीयेत अपि त्ववयवगुणादिकमादायेति दिक्। 'प्रकृत्यर्थेति प्रकृत्यर्थे-

बुयात्तदाह, 'समभिव्याहृत इति, अतएव 'पटश्चेत्युक्तं इति भावः। यथाकथञ्चित्समभिव्याहारो न प्रयोजक इत्याह, 'विभक्तीनामिति।

विभक्त्यर्थान्तर्भावेनैव नामार्थस्य क्रियान्वयित्वात्। विभक्तेरेकपदार्थमात्रगतसङ्ख्याभिधायकत्वं नानापदार्थगतसङ्ख्यान्वयाबोधकत्वञ्चेति चेत्, न, आद्ये एकमात्रपदयोर्व्युत्पत्तावधिकत्वात् द्वितीयेऽन्वयाबोधकत्वे योग्यताविरहस्योपाधित्वात्। न चैकधर्मावच्छेदकं विना यदि स्वरूपद्वये द्वित्वान्वयस्तदा धवश्च खदिरश्चेत्यत्रैव वाक्यभेदः स्यात् द्वित्वविशिष्टैकार्थाप्रतिपादकत्वादिति वाच्यम्। आनयनान्वितद्वित्वविशिष्टैकार्थबोधकत्वात्। धव-खदिराविति च न वाक्यं क्रियायाः प्रत्येकमन्वये वाक्यभेद इत्यपि न लक्षणापक्षेऽपि प्रत्येकमेव क्रिया-

नैवान्वयोनाप्रकृत्यर्थेनेत्यर्थः, दारा इत्यादिवत् तदादाय द्वित्वं प्रकृत्यर्थ एवान्वेतीत्यपि न तथा प्रयोगाभावात् प्रयोगमूलत्वादन्वयनियमस्येति भावः। 'समभिव्याहृतमेव' प्रकृतिरेव, 'एकपदेति एकं यत्पदं तदर्थ इत्यर्थः, एवमग्रेऽपि, 'एकमात्रेति। यद्यपि मात्रान्त-

'आनयनेति, यद्यप्यानयनान्वितत्यधिकं द्वित्वान्वयमात्रादेवैकवाक्यतासिद्धेस्तथापि कार्य्यान्वितव्युत्पत्तेः तथाच कृतं तत्रैकवाक्यत्वचिन्तया मन्मते तु द्वित्वविशिष्टैकार्थबोधकत्वान्नैकवाक्यताभङ्गप्रसङ्गोऽपीति भावः। 'लक्षणापक्षेऽपीति, एकजातीयक्रियान्वयस्य ममापि तुल्यः समुच्चये च क्रमिक एव क्रियान्वयबोधइति नैकवाक्यतेति भावः। 'प्रत्येकमिति, यद्यप्यङ्ग-वङ्ग-कलिङ्गा इत्यत्र न प्रत्येकं बहुत्वान्वयः अन्यथा धव-खदिरावित्यत्रापि द्वित्वान्वयापत्तिः यदि विभक्तेरेव संख्याभिधायकत्व-

न्वयित्वात् गमनादिक्रियाया व्यासज्यवृत्तित्वाभावात्। तद्राजानान्तु प्रत्येकं तेनैव बहुषु वर्त्तमानात्परस्याञा-देर्लोपो भवति "तद्राजस्य बहुषु तेनैवेति वचनात् न त्वेकत्वबोधकात्। अतएवाङ्गानामपत्यानि राजानो वा अङ्गा इत्युदाहरणं अङ्गानामपत्यं राजा वा आङ्ग इति प्रत्युदाहरणं वृत्तिकारोदर्शयति स्म, तस्मान्नानापदादप्युपस्थितेऽनेकत्र द्वित्वान्वयइति ना-नेकोपस्थित्यर्थं साहित्यलक्षणा। अतएव "चन्द्रे कलङ्कः सुजने दरिद्रता विकाशलक्ष्मीः कमलेषु चञ्चला। मुखाप्रसादः सधनेषु सर्वदा यशोविधातुः कथयन्ति खण्डितं"॥ इत्यादावेकैकस्मृत्यारूढना-नापदजनितैकस्मृतिविषयेषु कलङ्कादिषु बहुत्वान्वय-

---

भाव आवश्यकस्तथापि बोधकलांशे तथा न तु पूर्व्वप्रतीके गतपर्य्यन्ते मात्रार्थान्वयोदारा इत्यादौ व्यभिचारादित्येकमात्रपदयोरित्युक्तं, 'तद्राजानान्विति समाधिसौकर्य्यादुक्तं, आङ्गस्य वाङ्गस्य इत्यादिवि-ग्रहेण द्वन्द्वेषु बहुषु वर्त्तमानत्वमस्त्येवेति ध्येयं। 'नानेकोपस्थितीति।

---

व्युत्पत्तिः तदा तुल्यं तथापि प्रत्येकं बहुषु तात्पर्य्यं विवक्षितं तच्च समुदिते बहुत्वान्वयेऽप्यस्त्येवेति भावः। 'न त्विति, न तु साहित्यरूपै-कधर्म्मावच्छिन्नबहुबोधकात् परस्येत्यनुषङ्गः, 'अतएवेति, यतएव तद्रा-जान्तप्रकृतिकृतमेव बहुत्वं प्रयोजकमित्यर्थः, द्वन्द्वेत्युपलक्षणं एकशेषाभावा-चेत्यपि बोध्यं। ननु तत्रापि द्वन्द्व एव तासीत्येकशेषो वा कल्प्यत इत्यत-

बोधः मेलकोपस्थापकस्य द्वन्द्वस्य तत्राभावात् तत्कल्पने मानाभावात् एकवचनान्तानां वाक्येऽनन्वयप्रसङ्गाच्च। नन्वेवं धव-खदिरौ छिन्धीत्यत्र तयोश्छिदानुकूलव्यापारवत्त्वं साहित्यं न प्रतीयेतेति चेत्, न, द्वित्वान्वयबोधात्पूर्वं तन्न प्रतीयत एव तदुत्तरन्तु विभक्त्या क्रियापदेन च सम्भूय छिदानुकूलसजातीयविजातीयव्यापारप्रचयस्य तुल्य एव सम्बन्धो धवे खदिरे च बोध्यते यथा धवं छिन्धि खदिरञ्चेति समुच्चयेन। न चैवं द्वन्द्वसमानार्थत्वेन समुच्चयेऽपि समासः स्यादिति वाच्यं। द्वन्द्वे युगपदुपस्थिते द्वये एकदा क्रियान्वयबोधे तात्पर्यन्तेन तत्र समासः समुच्चये क्रमेणोपस्थिते क्रमेण क्रियान्वयबोधे तात्पर्यमित्यसमासः। अन्वाचयेऽप्येवम्। किञ्च यदि तुल्यव्यापार-

न च युगपदधिकरणवचनत्वविरोधः, नानापदादपि युगपदुपस्थितेरेकत्वान्तर्भावस्यातदर्थत्वादिति भावः।

आह, 'तत्कल्पन इति, 'एकेति, यद्यप्येकत्व-बहुत्वयोर्विरोधे बहुत्वान्वये तत्रापि तदनन्वयस्तुल्यस्तथापि प्रत्येकमेकत्वान्वये मिलिते बहुत्वान्वयोऽविरुद्धः अतएव तथानुभवोपीऽति भावः। यद्यपि सुप्तिङ्भ्यामेकसंख्यानभिधानात् सामानाधिकरण्यभङ्गस्तथापि मतान्तरेणेदं, 'द्वन्द्वे युगपदिति। वस्तुतः समासानित्यत्वादिति बोध्यं अन्यथा चन्द्रे कलङ्क इत्यादौ युगपत्क्रियान्वय-

त्वेन साहित्येन द्वयोरुपस्थितिः पदार्थता च तदा तुल्य-व्यापारौ सहितौ वा गच्छत इति धीः स्यात् न तु चैत्र-मैत्राविति पदार्थतावच्छेदकरूपेण पदार्थे विभक्तेः क्रियापदस्य चान्वयबोधकत्वव्युत्पत्तेर्व्याप्तेश्च यथा दध्युपघातकत्वेन काकादेरितरपदार्थान्वयः सहितावस्थ-चैत्र-मैत्रत्वेनोपस्थितौ प्रत्येकं द्वित्वान्वयानुपपत्तिर्वृत्ति-द्वयविरोधश्च। अपि च चैत्र-मैत्रौ गच्छत इत्यत्र गमनस्य व्यासज्यवृत्तित्वाभावात् चैत्रत्वेन गमनान्वयार्थं चैत्रपदात् चैत्रत्वेन द्वित्वान्वयार्थं मैत्रसहित-चैत्रत्वेनोपस्थितौ युगपद्वृत्तिद्वयविरोधः सहितावस्थे च गमनकर्तृत्वाभावात् आख्यातार्थसङ्ख्यान्वयोऽपि न सहितावस्थे। न च सहितत्वेनोपस्थिते पदार्थैकदेशे

तात्पर्य्ये समासापत्तिरिति तुल्यव्यापारवत्त्वेनेत्यस्य विवरणं, 'साहित्येनेति, एवमग्रेऽपि। 'इति धीरिति, स्यादिति शेषः, अभ्युपेत्याह, 'सहितेति चैत्रसहितमैत्रत्वादिनोपस्थितावन्यतरसाहित्यनिरूपकतया अप्राधान्येनोपस्थितौ चैत्रसहितोमैत्र इत्यत्रैव प्रत्येकं द्वित्वान्वयः स्यादित्यर्थः। ननु सहितत्वेनोभयोः प्राधान्येनोपस्थितौ नोक्तदोष इत्यत आह, 'वृत्तिद्वयेति मैत्रत्वादिनोपस्थितेरनुभवादित्यर्थः। ननु गङ्गातीरत्ववद्विशिष्टलक्षणायां नोक्तविरोध इत्यरुचेराह, 'अपि चेति, ननु मणिकारमते तद्विरोधाभावादुभयरूपेणाप्युपस्थितिः स्यादित्यरुचेराह, 'सहितावस्थे चेति कृतेः प्रत्येकविश्रान्तत्वात् संख्यायाश्च भावनानुगामित्वादित्यर्थः, 'सहित इति, भावनान्वयिनैव संख्यान्वयात् प्रत्येकमयोग्यत्वान्न द्वित्वान्वयः स्यादित्यर्थः, 'न चेति, यद्यपि

चैत्रे मैत्रे च धात्वर्थगमनान्वय इति वाच्यम्। सहितो गच्छतीति धीप्रसङ्गात्। न च धात्वर्थगमने आख्यातार्थद्वित्वान्वयः, सामानाधिकरण्यभङ्गप्रसङ्गात् सुवन्त-तिङन्तयोरेकसंख्याभिधायकत्वात्। एवं गर्गा भुञ्जत इत्यत्र भोजनस्यैककर्तृकत्वनियमात् अनेककर्तृकं भोजनं न सम्भवतीति तन्त्रवृत्त्या गर्गत्वेनोपस्थितेऽनेकत्र सुप्तिङर्थबहुत्वान्वयः न तु सहितत्वेनोपस्थिते।

यत्तु तत्रापि धात्वर्थभोजनगतं बहुत्वमाख्यातेनोच्यत इति। तन्न। तिङन्त-सुवन्तयोः सामानाधिकरण्यानुपपत्तेः भोजनानां सहितत्वेनानुपस्थितेश्च। यदा चानुगतं रूपं विनैवैकैकपदात् स्व-स्वशक्त्योपस्थितेऽनेकत्र योग्यतया द्वित्व-बहुत्वान्वयस्तदा सुवन्त-तिङन्तसंख्यान्वयः प्रातिपदिकार्थे भवतीति नैते दोषाः।

यत्तु साहित्यं नोभयानुगतं तुल्यव्यापारत्वादिकं तेन रूपेण धव-खदिरयोर्विभक्ति-धात्वर्थान्वयाप्रतीतेः किन्तु प्रत्येकविलक्षणं स्वरूपद्वयमेव प्रत्येकाच्चोभयमन्यदेव भवति हि द्वयादन्य एकः धवान धव-खदिरौ तौ च न धव इत्यनुभवात्। तथा चैकमात्र-

---

साहित्येनोपस्थितिं विना धात्वर्थेऽपि द्वित्वान्वयानुपपत्तिः तथापि प्रकृतदूषणोद्धारमात्रे तात्पर्य्यं। 'तन्त्रवृत्त्येति एकयावृत्त्येत्यर्थः, 'सामानाधिकरण्येति

वाचकेन द्वयमशक्यं लक्ष्यत इति न वृत्तिद्वयविरोधः । धवपदस्य च स्वार्थनिरूप्यत्वमेव लक्ष्ये स्वरूपद्वये सम्बन्ध एकनिरूप्यत्वाद्द्वयस्य । अनुगतधर्मं विनापि धवपदादनेकोपस्थितिर्ध्रुवपदादिव चतुर्दशानाम् । योग्यतया विभक्त्यर्थस्य स्वरूपद्वये धात्वर्थस्य च प्रत्येकमन्वय इति, तन्न । उक्तरीत्या हि स्व-स्वशक्त्या नानापदजनितैकस्मृतिविषयेऽनेकत्र द्वित्वान्वयबोधसम्भवात् न तदर्थं साहित्यलक्षणा घटौ घटा इत्यत्र द्वित्व-बहुत्वान्वययोग्यानेकोपस्थितिः शक्तित एव तन्त्रवृत्त्या घटपदात् सम्भवतीति न तदर्थं लक्षणा । यथा ग्रहं

'न वृत्तिद्वयविरोध इति, न चैवं गङ्गातीरोपस्थितिरप्येवमस्तु, शुद्धपदार्थयोरेवमुपस्थितावपि गङ्गायाः सम्बन्धित्वेनानुपस्थितेरिति भावः ।

एकसंख्याभिधायकतयैव तथात्वादित्यर्थः, 'ध्रुवपदादिवेति, यथा ध्रुवपदादेकयैव शक्त्या ध्रुवत्वादिना प्रातिस्विकरूपेण चतुर्दशानामुपस्थितिः तथा स्वार्थनिरूप्यत्वेनैकैकेनैव सम्बन्धेन धवत्वादिनोभयोपस्थितिरित्यर्थः । न च ध्रुवपदे शक्यतावच्छेदकभेदेन शक्तिभेदः स्यादिति वाच्यं । सङ्केतस्यैकत्रोच्चारणागर्भतया पुष्पवन्तादिपदवत्तद्भेदेऽपि शक्त्यभेदादिति भावः ।

'तन्त्रवृत्त्येति, एकेनरूपेण घटत्वेनेत्यर्थ इत्येके । अन्ये तु एकयावृत्त्येत्यर्थः, सर्व्वाभ्योविभक्तिभ्यस्तसिरिति शक्तित इत्यनेन सामानाधिकरण्येनान्वय इत्याहुः ।

सम्माष्टीत्यत्र ग्रहपदात्तन्त्रवृत्त्योपस्थितानेकग्रहे सम्मार्गान्वयः, तर्हि तत्रानेकग्रहस्वरूपमात्रज्ञानवदिहाप्यनेकघटस्वरूपधीः स्यात् न तु तेषां सहितावस्थत्वधीरिति चेत्, न, तां विनापि द्वित्व-बहुत्वान्वययोग्योपस्थितेः। सहितावस्थत्वेनानेकस्य द्वित्व-बहुत्वान्वययोग्यतेति चेत्, न, प्रकृत्युपस्थितानेकत्वेनैव तद्योग्यत्वात् लाघवात्। भवत्वनेकत्र द्वित्वान्वयबोधस्तेषां साहित्यधीस्तल्लक्षणां विना न स्यादिति चेत्, न, विभक्त्यर्थ-धात्वर्थव्यापारान्वयबोधात्पूर्वमनेकत्र तुल्यव्यापारवत्त्वस्याप्रतीतेः। किञ्चैवं न विभक्त्यर्थद्वित्वबहुत्वान्वयानुपपत्त्या लक्षणा किन्तु साहित्यप्रतीत्यनुरोधात्। न चैवमपि, धातुनैव तुल्यव्यापारवत्त्वस्य बोधनात् तदन्वयबोधात्पूर्वं तत्प्रतीत्यसिद्धेः। समाहारे तु पाणि-पादं पञ्चपूलीत्यादौ तावद्वृत्त्येकधर्माभिधानं लक्षणयैव तदेकत्वादेकवचनम्।

तदाहुः शाब्दिकाः समाहरणं समाहारोऽनेकस्यै-

'ग्रहः' यज्ञपात्रं, गृह्यते अनेनेति व्युत्पत्तेः, इष्टापत्तिमाह, 'तामिति सहितावस्थत्वधियं विनापीत्यर्थः, 'धातुनैवेति धातुसमभिव्याहृतपदेनैवेत्यर्थः, तदसमभिव्याहृततद्धीरसिद्धेवेति भावः। नन्वेवं धव-खदिरावित्यत्रेव पाणि-पादमित्यत्रापि द्विवचनं स्यात् प्रकृत्युपस्थापितानेकत्वस्याविशेषादित्यत आह, 'समाहारे त्विति एकत्वान्वयानुपपत्त्या धर्मे लक्षणेत्यर्थः।

कीकरणम् एकोधर्म इति यावत् । स चैकोधर्मः सेना-वनादाविव द्वित्व-बहुत्वसङ्ख्यापेक्षाबुद्धिविशेषविषयत्वं वा । विरूपैकशेषे तु पितरावित्यत्रैकस्य पितृद्वया-भावात् अगत्या पितृपदेन जनकदाम्पत्ये लक्षणा विभक्त्युपनीतञ्च द्वित्वं विरूपयोरेव माता-पित्रोरव-

नन्वेवं पाणिपादं चलतीत्यादौ धर्म्मे चलनाद्यन्वयानुपपत्तिरिति चेत्, न, परम्परासम्बन्धेन तदुपपत्तेः । न च पाण्याद्यनन्वयापत्तिः, विशिष्टलक्षणया तदुपपत्तेः ।

यत्तु साक्षात् पाण्यादावेव चलनान्वयस्यानुभवान्न धर्म्मे लक्षणा । न चैकत्वान्वयानुपपत्तिः, पदद्वयात् स्वशक्त्युपस्थापितयोः प्रत्येकमेकत्वान्वयात् । न चैवं धव-खदिरमित्यपि स्यादिति वाच्यं । असाधुत्वात्प्रकृतस्य द्वन्द्वस्य पाणि-तूर्य्येत्यादिसूत्रेण साधुत्वादिति । तन्न । विभक्तेरेकसङ्ख्याभिधायकत्व-व्युत्पत्तेः प्रत्येकमेकत्वद्वयानन्वयात् एकस्य चैकत्वस्यापरत्रायोग्यत्वात् अन्यथा धव-खदिरावित्यत्रापि प्रत्येकं द्वित्वान्वयापत्तिरिति ।

केचित्तु अनुशासनबलात्तत्रैकवचनं प्रयोगसाधु तथा चैकत्वानन्व-येऽप्यदोष इति न लक्षणेत्याहुः ।

अन्ये तु धर्म्मलक्षणायामपि पदार्थतावच्छेदके पाण्यादौ चलनान्वयः शब्दवैचित्र्यात् उत्कृष्टः पण्डित इत्यादाविवेति वदन्ति ।

'जनकेति, जनकत्वमेव सम्बन्धः शक्य-लक्ष्यसाधारणश्चेति भावः । नव्यास्तु जनकत्वलक्षणायां पुंस्त्वादिविशिष्टान्वयोऽनुभवसिद्धो न स्यादित्येक-शक्तेन द्वयमशक्यं स्वार्थनिरूप्यत्वेन सम्बन्धेन जनकस्त्रीत्वादिना भिन्नरूपेणैवो-पस्थाप्यते धवपदे शक्यतावच्छेदकवल्लक्ष्यतावच्छेदकमप्यनेकमिति वदन्ति ।

'माता-पित्रोरिति, लक्षणया तयोः प्रकृत्यर्थत्वादिति भावः । पुंस्त्वं

गम्यते, सरूपस्य तु पितृद्वयस्य मातृद्वयस्य वैकं प्रत्यजनकत्वात्। श्वशुरावित्यत्र श्वशुरपदे पत्नीजनकदाम्पत्ये लक्षणा पत्नीजनकद्वित्वञ्चोक्तन्यायात् एत्नीमाता-पित्रोरेव। ब्राह्मणावानयेत्यत्र दम्पतिपूजाप्रकरणे मानान्तराद्ब्राह्मण-ब्राह्मणीपरत्वावगमे "पुमान् स्त्रियेति विरूपैकशेषत्वाद्ब्राह्मणपदे स्त्री-पुंसलक्षणैवानन्यगतिकत्वात्। पुंलिङ्गत्वन्तु पदार्थैकदेशगतमनूद्यते। स्त्रीपरत्वाज्ञाने च ब्राह्मणपदेन तन्त्रवृत्त्या

'विरूपेति, अत्र सर्व्वत्र पदान्तरविभक्त्यादिस्मृतौ तत एवार्थप्रत्ययः तदस्मृतौ लक्षणेति यदा लक्षणा तदा प्रकारोऽयं एकत्र च

पितर्य्येवान्वेति न तु मातरि अयोग्यत्वात्। 'सरूपस्येति, यद्यपि 'मातृद्वयस्येति प्रकृतानुपयुक्तं तथापि दृष्टान्तपरं तदिति भावः। 'उक्तन्यायादिति, यद्यप्यत्र सरूपद्वयस्यापि सम्भव इति नोक्तन्यायस्तथाप्येकपत्नीकत्वेन प्रमिते गतिरियं सरूपैकशेषशङ्कां वारयति। 'दम्पतीति, 'ब्राह्मणपद इति, यद्यपि ब्राह्मणत्वजातिमत्त्वाद्ब्राह्मण्यपि प्रकृतेति न लक्षणा तथापि आद्यवर्णत्वस्त्रीत्वादिप्रकारकप्रतीतिपरत्वज्ञाने तन्निर्व्वाहार्थं सा तदिदमुक्तं 'ब्राह्मणीपरत्वावगम इति, ब्राह्मण्याविति तु स्त्री-पुंसलक्षणायामसाध्विति भावः।

यत्तु ब्राह्मण्यां न ब्रह्मणत्वं विशुद्धमाता-पितृयोनिजपुंस्त्वस्यैव तद्व्यञ्जकत्वात् अन्यथा तद्वधे प्रायश्चित्तह्रासो न श्रूयेतेति, तन्न, पुंस्त्वस्य गुरुत्वात् प्रायश्चित्तभेदस्य चापकृष्टब्राह्मणवध इवान्यथाप्युपपत्तेरिति।

नन्वेवं स्त्री-पुंसयोः पदार्थत्वे विभक्त्यर्थपुंस्त्वान्वयो न स्यात् उभयस्य पुंस्त्वाभावादित्यत आह, 'पुंलिङ्गत्वन्त्विति, 'अनूद्यते' ब्राह्मणपदेनादावुक्तत्वात्

पुंद्वयमेवोच्यते न तु स्त्री-पुंसौ सरूपैकशेषापेक्षया[१] विरूपैकशेषस्य लाक्षणिकत्वेन जघन्यत्वात्। यदि च सरूपैकशेषेऽपि लक्षणा तदाप्यौकारान्तपदात्सद्वितीयपुंबुद्धौ द्वितीयापेक्षायां तत्पदबोध्यस्य पुमवरुद्धत्वात् लिङ्गानुरोधात् ङीबाद्यर्थकल्पने मानाभावात् पुन्द्वयमेवावगम्यते न तु स्त्री-पुंसौ। शिवौ नमस्कुर्य्यादित्यत्र नमस्यशिवान्तराभावाद्विरूपैकशेष इत्यगत्या शिवपदेन शिवश्च शिवा च लक्षणयोच्यते। भ्रातरौ पुत्रावित्यत्रापि मानान्तरात् स्त्रीपरत्वज्ञाने "भ्रातृपुत्रौ स्वसृदुहितृभ्यामिति विरूपैकशेषाद्भ्रातृ-

---

जनकावित्यर्थे जनकद्वयाभावाद्वस्तुगत्यैकोजनकः पुमानपरा स्त्री भासते जनकत्वेन सामान्येन, यदा तु स्त्रीत्वं प्रकारस्तदापि ग्रन्थकृन्मते वृत्तिद्वयाविरोध एव, प्राचीनमते त्वेकशक्तेन द्वयमप्यशक्यं

---

(१) सरूपैकशेषादिति ग० ।

---

विभक्त्येति शेषः। न च पदार्थैकदेशेनान्वयव्युत्पत्तिविरोधः, योग्यतावशेन चैत्रस्य नप्तेत्यत्रेव तथाप्यन्वयाविरोधात् ध्रुवपदादिव प्रातिस्विकरूपेण पुंस उपस्थितेरितरपारतन्त्र्याभावात् अन्वयाविरोध इत्यन्ये। 'यदि चेति, तन्मत इति शेषः, एवं वक्रदण्डस्य कुटिलदण्डस्य वक्रदण्डावित्यत्रापि न लक्षणा वक्रस्य कुटिलपर्य्यायत्वे तन्त्रवृत्त्योपस्थितिसम्भवात्। ननु ब्राह्मण्यऽपि तत्पदबोध्येत्यरुचेराह, 'लिङ्गानुरोधादिति, 'शिवपदेनेति, देवतात्वादिनेति

पदेन भ्रातृस्वसारौ पुत्रपदेन पुत्र-दुहितरौ लक्ष्येते। स्त्रीपरत्वाज्ञाने च तन्त्रवृत्त्योक्तयुक्त्या भ्रातृद्वयं पुत्र-द्वयमेवोच्यते। नन्वेवं "क्षौमे वसानावग्नीनादधीयाता-मित्यत्राप्यौकारान्तवसानपदात् सद्वितीयपुंबुद्धौ द्वि-तीयापेक्षायां तत्पदबोध्यस्य पुमवरुद्धत्वात् टावाद्यर्थ-कल्पने च हेत्वभावात् पुंद्वयबुद्धौ पुरुषद्वयविधिराधाने स्यात् वसानपदात्तन्त्रवृत्त्यापि स्त्री-पुंसयोर्ज्ञानासम्भ-वात्। न चैवं "पुमान् स्त्रियेति विरूपैकशेषोच्छेदः, यत्र तु मानान्तरात् स्त्रीपरत्वधीस्तत्र स्त्रीद्वितीयस्य प्रातिपदिकार्थत्वात्। उभयसमवेतद्वित्वस्य पुंस्यपि सम्भव इति विभक्त्या तद्गतसङ्ख्याभिधाने विरूपैक-शेषसम्भवात्। इह तु स्त्रिया उपनायकाभावात् द्वितीयत्वेन स्त्रिया अप्राप्तत्वात् वसानपदस्योक्तयुक्त्या तदुपस्थापकत्वाभावात् सरूपैकशेषतैव स्यादिति। मैवम्। क्षौमे वसानावित्यत्र यत् कर्त्तव्यं तदनया सहेति विधिना अग्न्याधाने सहत्वेन प्राप्तया पत्न्यैव पुंसः सद्वितीयत्वात् न त्वप्राप्तेन पुमन्तरेण वाक्य-

ध्रुवपदवत् प्रत्येकप्रकारेणोपतिष्ठत इत्येव सर्व्वत्र तत्त्वं। पत्नीत्युपलक्षणं

शेषः। 'भ्रातृपदेनेति, सोदरत्वेनेति शेषः, 'पुत्रपदेनेति, अपत्यत्वेनेति शेषः।

भेदापत्तेः। पुंस्त्वन्तु विभक्त्या नामार्थगतमेवानूद्यते न तु नामार्थैकदेशगतम् अन्यसहितावस्थपुमर्थस्यैव नामार्थत्वादिति।

---

पतिरित्यपि द्रष्टव्यं। 'वाक्यभेदेति, पुमन्तरयोरुभयोर्विधेयतायां वाक्यभेदापत्तेरिति भावः। 'नामार्थगतमिति, नामार्थप्राप्तं, स्वर्गकामपदान्नामार्थतया प्राप्तमात्रैकदेश एवानूद्यते सम्पूज्य द्विजदा-

---

'वाक्यभेदेति, क्षौम-पुंसयोरुभयोर्विधेयतायां वाक्यभेदापत्तेरिति भावः। उत्पत्तिवाक्यश्रुतैककर्तृकत्वबाधापत्तेरित्यपि बोध्यं। 'नामार्थगतमिति, ननु ब्राह्मणावित्यत्रेव स्त्री-पुंसयोर्नामार्थत्वात् पुंस्त्वं नामार्थैकदेशगतमेव। न चात्र पत्न्याः सहत्वेनान्वयात् पुंमात्रस्यैव प्राधान्येन क्रियान्वयात् पुमानेव नामार्थइति वाच्यं। तथा सति वसानाविति द्विवचनानुपपत्तेरिति। अत्राहुः 'नामार्थगतं' उत्पत्तिवाक्ये नामार्थतया प्राप्तं, 'न तु नामार्थैकदेशगतं' न तु नामार्थैकदेशतया प्राप्तमित्यर्थः, "सपत्नीकोऽग्नीनादध्यादिति विधौ पत्नीसहितस्य पुंस एव नमार्थत्वात् स्वर्गकामो यजेतेत्यत्र प्रधानविधौ स्वर्गकामपदान्नामार्थतया प्राप्तमात्रैकदेश एवानुद्यत इत्यन्ये। ब्राह्मणावित्यत्र तु न तथा सम्पूज्य द्विजदाम्पत्यमित्यत्र पूजयेद्द्विजदम्पती इत्युत्पत्तिविधौ च स्त्री-पुंसयोरेव प्रातिस्विकरूपेण नामार्थत्वश्रवणात् तथा चात्रोभयोरेव नामार्थत्वादेकदेशगतमेवानूद्यत इति न द्विवचनानुपपत्तिः। न चैवं तुल्यवदुभयोरन्वयात् स्त्रियः क्षौमपरिधानवदग्न्याधानमपि स्यात् अन्यथा सुबन्त-तिङन्तयोः सामानाधिकरण्यानुपपत्तेः, स्याच्च रथकारादि-

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ शब्दाख्यतुरीयखण्डे समासवादः ।

---

म्पत्यमित्यत्र पतिशब्दादेकदेश एवाप्ततयैवानूद्यत इति भावः ।

इति श्रीजयदेवमिश्रविरचिते तत्त्वचिन्तामण्यालोके समासवादालोकः ।

---

वद्विद्याप्रयुक्तिकल्पनमिति वाच्यं । अनुमत्यवेत्तृणादिद्वारापि तत्कर्तृत्वोपपत्तेरिति दिक् । इति प्रकाशः ।

## अथाख्यातवादः ।



आख्यातस्य यत्नवाचकत्वादचेतने रथो गच्छतीत्यादौ आख्याते व्यापारलक्षणा । तथाहि पचतीत्यादावाख्यातस्य यत्नोवाच्यः पचति पाकं करोतीत्यादियत्नार्थककरोतिना सर्वाख्यातविवरणात् । वृद्धव्यवहारादिवद्बाधकाभावे[१] विवरणादपि व्युत्पत्तेः । द्वन्द्वादिसमासस्य विग्रहेण विवरणेऽपि विग्रहार्थे न शक्तिरन्यलभ्यत्वात् । किं करोतीतियत्नप्रश्ने पचतीत्युत्तरस्य

### अथाख्यातवादालोकः ।



'विवरणादिति, तस्य प्रसिद्धार्थपदसामानाधिकरण्यरूपत्वादिति भावः । 'अन्येति, शक्तिग्राहकमात्र एवानन्यलभ्यत्वतर्कसहकारित्वादिति भावः । नन्वाख्यातस्यैव कृतिवाचकत्वे भावनाख्या-

(१) वृद्धव्यवहारादिव बाधकं विनेति ग० ।

'आख्यातस्येति, तथाच लक्षणाप्रसङ्गेनैवाख्यातार्थनिरूपणमत्रेति नानवसरपराघात इति भावः । 'विवरणादपीति, तस्य प्रसिद्धार्थपदसामानाधिरण्यपर्य्यवसन्नत्वादिति भावः । 'बाधकं विनेत्यस्य व्यावर्त्त्यमाह, 'द्वन्द्वा-

यत्नार्थत्वं विना अनुपपत्तेरित्याचार्य्याः । अत्र वदन्ति आख्यातस्य करोतेश्च न यत्नार्थत्वं रथो गच्छति जानाति यतते निद्रातीत्यादौ धात्वर्थानुकूलयत्नाभावेऽप्याख्यातप्रयोगात् गमनं करोतीति करोतिना तत्राख्यातविवरणाच्च तत्र व्यापारस्य करोत्यर्थत्वे चेतनेऽपि तथा । न च तत्राख्यात-करोत्योर्गौणत्वम्, मुख्ये बाधकाभावात् । अतएव प्रश्नोत्तरयोर्न यत्नार्थत्वं किन्तु कृञः क्रियावाचित्वमेव तेन किं करोतीतिक्रियामात्रप्रश्ने पचति-गच्छतीति-क्रियाविशेषेणोत्तरमपि समञ्जसम्भवति । अथ क्रियाजन्यत्वाविशेषेऽपि यत्नजन्यत्वाजन्यत्वाभ्यां घटाङ्कुरयोः कृताकृतव्यवहारात् तृजन्तकृञ्धातुव्युत्पन्नकर्तृपदस्य कृत्याश्रयवाचकत्वाच्च कृञोयत्नार्थत्वम् क्रियामात्रार्थत्वे कृञः क्रियाश्रयः कर्तृपदार्थः स्यात् तथाच कारकमात्रेऽतिप्रसङ्गः । एवञ्च कृञो यत्नार्थत्वे तेन चाख्यातविवरणात् तस्यापि यत्नोऽर्थः । तदुच्यते, "कृताकृतविभागेन कर्तृरूपव्यवस्थया । यत्न एव कृतिः

---

दीति, 'अत्रेति, भट्टा इति शेषः । 'करोतेश्चेति, 'तथा', तेन विवरणेऽपि न यत्नार्थत्वमिति भावः । करोतेश्चेत्यत्र हेतुमाह, 'गमनमिति, उक्तयुक्त्याख्यातस्य व्यापारार्थत्वे रथो गच्छति गमनं करोतीत्याख्यातस्य करोतिना विवरणात्तस्यापि व्यापारार्थत्वमिति भावः । 'क्रियेति, व्यापारेत्यर्थः, 'कृतिरिति, करोत्यर्थ इत्यर्थः । नन्वेवमाख्यातस्य कृतिवाचकत्वे भावनाख्यातार्थ इति

पूर्वा परस्मिन् सैव भावना"॥ सैवाख्यातार्थोभावनोच्यते इति चेत्, न, वीजेनाङ्कुरः कृतः स्रगादिना सुखं कृतं वीजमङ्कुरं करोतीति यत्नं विनापि व्यवहारात्। कर्तृपदस्य न यौगिकम् तथाहि कृञोयत्नार्थत्वे तृचश्च कृत्यर्थत्वे कर्त्रर्थत्वे वा धातु-प्रत्ययार्थयोः कृत्योः कृति-

---

तार्थो न स्यादित्यत आह, 'पूर्व्वेति पूर्व्वापरीभूतव्यापारकदम्ब-इत्यर्थः, तथाच पूर्व्वापरीभूतव्यापारकदम्बरूपधात्वर्थविषयतया फल-भावकत्वेन सैव कृतिर्भावनेत्युच्यत इति भावः। विभाग एवासिद्ध-इत्याह, 'वीजेनेति। द्वितीयं हेतुं दूषयति, 'कर्तृपदमिति, न तावदाश्रयत्वं तृजर्थः, पक्तेत्यादौ पाकाश्रयप्रतीत्यापत्तेः। अतएव कृत्याश्रयपर्य्यन्तं तृजर्थः, तथापि प्रातिपदिकयोरभेदरूपान्वयबोध-कत्वनियमोनास्ति, अन्यथा पदयोरेव परस्परं तथा नियमव्युत्पत्तौ कर्त्तुरपि आख्यातवाच्यतापत्तिः, अप्रयोजकतया नेयं व्युत्पत्तिरिति यदि तदा प्रातिपदिकयोरपि तथा। अतएव गुण-गुणिनोः समवाय एव संसर्ग इत्युक्तं, नीलोघट इत्यादावित्येवं मतान्तरं मनसि-कृत्याह, 'कृत्योरिति। ननु प्रातिपदिकयोरभेद एव संसर्गः सामा-

---

भज्येतेत्यत आह, 'पूर्व्वेति पूर्व्वापरीभूतव्यापारकलाप इत्यर्थः, तथाच फलानुकूलपूर्व्वापरीभूतव्यापारकलापरूपधात्वर्थविषयतया फलभावकत्वेन सैव कृतिर्भावनेत्युच्यत इति भावः। उक्तविभागोऽसिद्ध इत्याह, 'वीजेनेति, कर्तृ-रूपेणोत्यादिकमन्यथासिद्धमित्याह, 'कर्तृपदश्चेति। नन्वेवं चैत्रः पक्तेत्यादौ विनाश्रयाश्रयिभावेनान्वयः स्यान्न त्वभेदेनेति नामार्थयोरित्यादिव्युत्पत्ति-विरोध इत्यरुचेराह, 'कर्त्रर्थत्वे वेति, आद्य आह, 'कृताविति, द्वितीये

कर्त्रोर्वा परस्परमनन्वयः कृतौ कृतिजन्यत्वस्य तद्विषयत्वस्य चाभावात् कृतिविशिष्टस्य कृतिनिराकाङ्क्षत्वाच्च। एवं कृञः क्रियार्थत्वे तृचश्च क्रियाश्रयवाचकत्वे तयोः परस्परमनन्वय एवेत्युभयदर्शने कर्तृपदं कर्मादिपदवद्रूढमेव। रूढिश्च कृत्याश्रये क्रियाश्रये वेत्यन्यदेतत्। तस्मात् कृताकृतविभागेन कर्तृरूपव्यवस्थया च न

---

नाधिकरणत्वात् एकसंख्याबोधकत्वस्य च सामानाधिकरण्यरूपत्वात्। न च गुणवाचिनीलादिपदोत्तरविभक्त्युपनीततत्त्वं घटपदार्थे भासते, अप्रकृत्यर्थत्वात् नीलत्वपरत्वे तु नीलवतोघटाभिन्नत्वेन द्वाभ्यामेकविषयत्वस्य विशिष्टबोधनसम्भवात्। न चैवमर्थपरत्वे विशेषणविभक्तिः साधुत्वार्थमिति सिद्धान्तव्याघातः, नीलं घटमित्यादौ विशेषणविभक्तिर्न कारकार्थिकेति तदर्थात्। प्रथमायाः साधुविभक्तेः सङ्ख्यावाचकत्वस्य सर्व्वमतसिद्धत्वात् आख्यातसङ्ख्याबोधनियामकसमानपदोपात्तभावनान्वयवदिहाप्रकृत्यर्थगतसङ्ख्याबोधनियमाभावादिति मुख्यसिद्धान्तसारादाह, 'कृति-कर्त्त्रोर्वेति, प्रथम आह, 'कृताविति, द्वितीय आह, 'कृतीति, 'उभयेति क्रियामात्राश्रयः कृत्याश्रयो वा कर्त्तेत्युभयमत इत्यर्थः, 'कर्म्मादीति, कर्म्म-करणपदे अपि कृधातोः

---

त्वाह, 'कृतीति, 'उभयेति कृत्याश्रयः क्रियाश्रयोवा कर्त्तेत्युभयमत इत्यर्थः, 'कर्म्मादीति, कर्म्म-करणपदयोर्ल्युडादिप्रत्ययान्तकृधातुव्युत्पादितयोः प्रत्ययप्रकृत्यर्थकल्पने योगाभावात् यथा केवलरूढिस्तथेहापीत्यर्थः। यदि रथादिसाधारणः कर्तृपदप्रयोगस्तत्राह, 'क्रियाश्रये वेति। ननु पौनरुक्त्यमनुवादे न

कृञोयत्नार्थत्वमिति। किञ्चाख्यातस्य करोतेश्च न यत्नार्थत्वम् पाकाय यतते पाकं करोतीत्यादौ यत्नद्वयस्य यत्नविषयकयत्नस्य वा प्रतीतेः प्रकृति-प्रत्ययार्थयोः साम्येनान्वयानुपपत्तेः पौनरुक्त्यात् एकत्रैव विध्यनुवाद-दोषाच्च। ननु प्रकृतेस्तदर्थत्वेऽपि प्रत्ययस्य तदर्थत्वं न दोषाय। एको द्वौ बहवः इषिपिषतीत्यत्र च व्यभिचारात्।

यत्तु द्वितीयसङ्क्षेच्छादिकल्पनवदिहापि द्वितीय-यत्नकल्पनमिति। तन्न। द्वितीयसङ्क्षेच्छा-यत्नाभावात्। वस्तुतस्तु प्रत्येकं सामर्थ्यावधृतौ सम्भेदे तूभ-

---

प्रत्ययान्तस्य रूपे तत्राप्यव्याप्त्यादितो योगमपहाय यथा केवल-रूढिस्तथेहापि तत्रोणाद्यन्तत्वेन योगाभावनिश्चयादिति भावः।

ननु न कलञ्जं भक्षयेदित्यत्र बलवदनिष्टाननुबन्धित्वान्वयवदिहापि आश्रयत्वमात्रं कृतोपस्थाप्यं कर्त्रीत्यत्र धातु-प्रत्ययार्थान्वयोऽस्तु कर्म्मादौ तु प्रत्ययशक्त्यभावात् केवलरूढित्वाद इत्यरुचेराह, 'किञ्चेति।

---

दोष इत्यत आह, 'एकत्रेति केवलयोर्धात्वाख्यातयोरसाधुत्वात् परस्पर-समभिव्याहारेणान्यतरस्य यत्नविधायकत्वमपरस्यानुवादकत्वमिति प्राप्त्य-प्राप्तिनिबन्धनयोस्तयोरेकत्र वाक्ये विरोधइत्यर्थः।

केचित्तु तदंशे गृहीतग्राहित्वेनाप्रामाण्यं स्यादिति भट्टनयमाश्रित्य दूषणमिदमित्याहुः।

योपस्थितेरावश्यकत्वेऽप्येकस्यानन्वयेऽप्यदोषात्। पाकाय यतते पाकं कुर्यादित्यत्र कृत्यर्थकाख्याते त्वयापि तथैवाङ्गीकारादिति चेत्, न, एको द्वौ बहव इत्यत्र नामार्थस्य विभक्त्युपनीतसङ्ख्यान्वयावगमयोग्यत्वात्। लडादेर्यत्ने सामर्थ्यानवधारणाल्लिङः पचेतेत्यत्र कृतौ सामर्थ्यावधारणाच्च। अथायत्नार्थकधातुपराख्यातस्य यत्नार्थत्वं तेन यतत इत्यत्र नानन्वयः अचेतने चाख्यातप्रयोगो गौण एव। न च वृत्त्यन्तरेणापि प्रयोगसम्भवे शक्तिकल्पना युक्ता। यद्वा अनुकूलयत्ने प्रवृत्तं पदं तदेकदेशेऽनुकूलमात्रे प्रयुज्यते विशुद्धिमात्रं पुरस्कृत्य

---

'विशुद्धीति विशुद्धमाता-पितृजन्यसाङ्गवेदाध्येतरि शक्तं श्रोत्रि-

---

'एकस्येति, नन्वेकस्य प्रत्ययार्थस्य नानन्वयः भावनानन्वये कर्त्तरि सङ्ख्यानन्वयप्रसङ्गात्, नापि प्रकृत्यर्थस्य प्रकृत्यर्थस्वार्थबोधकत्वव्युत्पत्तिभङ्गापत्तिरित्यतः प्रतिबन्दिमाह, 'पाकायेति, 'एकोद्वाविति, तत्र प्रत्येकसामर्थ्यावधारणात् अन्वययोग्यत्वमस्ति केवलमाकाङ्क्षाविरहात् प्रत्ययार्थस्यानन्वयः, 'लडादेरिति। न चैवमपि प्रकृत्यर्थगतव्युत्पत्तिविरोध इति वाच्यं। बोधकत्वे सत्येव तथा नियमात् लडादेस्तु यत्नसामर्थ्यमेव नावधारितं मानाभावादतस्तत्र नेयं गतिरिति भावः। पचेतेत्यादौ तु सैव गतिरित्याह, 'लिङ इति, 'अथेति, यत्नार्थकयोगात्तु सङ्ख्या-वर्त्तमानत्वादिकमेवार्थ इति भावः। 'यद्वेति, एतच्चानुकूलत्वांशेऽपि शक्तिमभ्युपेत्योक्तं। वस्तुतस्तस्य संसर्गमर्यादया भानसम्भवात् न तत्र शक्तिः तथा सति लाघवेनानुकूलत्वमात्रस्यैव शक्यत्वापत्तौ रथादौ गौणत्वादिकल्पनाप्रसङ्गाभावाच्चेति बोध्यं। 'विशुद्धीति

ब्राह्मणे श्रोत्रियपदवत्। अचेतने च मध्यमपुरुषोत्तम-पुरुषौ न भवत एवोपपदयोर्युष्मदस्मदोश्चेतनार्थत्वात्। भवतु वा गौण एव लोकस्यापर्य्यनुयोज्यत्वादिति चेत्, न, अचेतने आख्यातस्य मुख्यत्वे बाधकाभावेन गौण-त्वाभावात् तस्मादाख्यातस्यानुकूलत्वेन व्यापारो वाच्य-इति भट्टाः तेन चेतनाचेतनयोर्धात्वर्थानुकूलव्यापारस्य सत्त्वादाख्यातप्रयोगोमुख्य एव। न चैवं पथिश्रमशयाने पचतीति स्यात् श्रमशान्तिद्वारा शयनस्य पाकानुकूल-व्यापारत्वादिति वाच्यं। तत्र प्रयत्नविशेषस्यैवानुकूल-व्यापारविशेषस्य वाच्यत्वात्। अन्यथा यत्नवाच्यत्वेऽपि तण्डुलानुकूलयत्नवति पचतीति स्यात्। एवमचेतनेऽपि करोतिना आख्यातविवरणात् करोत्यर्थोऽपि व्यापार-विशेष एव, कथं तर्हि चैत्रः पचतीत्यत्र पाकानुकूल-यत्नवत्प्रतीतिः, आक्षेपादिति चेत्, न, आख्यातार्थेन व्यापारेण सङ्ख्यया वा यत्नानाक्षेपात् तयोः प्रयत्नं विनापि सत्त्वात्। नापि कर्त्रा, द्रव्यमात्रस्य कर्तृत्वात्,

---

विशुद्धमाता-पितृजन्यसाङ्गवेदाध्येतरि शक्तमेकदेशे यथा प्रयुज्यत इत्यर्थः, 'भवत्त्विति, भित्तिलिखितोहस्तीत्यादौ। 'अनुकूलत्वेनेति, व्यापारत्वापेक्षया तस्य लघुत्वादित्यभिमानेनेदं, व्यापारत्वेन वेत्यपि बोध्यं। 'नापि कर्त्रेति, आख्यातार्थेनेत्यनुषङ्गः, कर्तृपदं व्यापारवत्परं यत्नवत्परं वा आद्ये 'द्रव्येति

यत्नवतश्च कर्तृत्वेन आख्यातेन तदभिधाने यत्नस्याप्यभिधानात्। नापि धात्वर्थमात्रेण, तस्य प्रयत्नं विनापि सत्त्वात्। नापि यत्नो धात्वर्थः, क्रियायास्तत्फलस्य वा धातुवाच्यत्वात्। अन्यथा पाक इत्यत्रापि यत्नानुभवप्रसङ्गादिति चेत्, न, धात्वर्थविशेषपाकादिना यत्नाक्षेपात्तस्य प्रयत्नं विनाऽनुपपत्तेः। अथ पचतीत्यस्य पाकयत्नवानिति विवरणाद्यत्नार्थतेति चेत्, तर्हि कर्त्रर्थतापि स्यात्। न हि पाकयत्न इत्येव विवरणम्। पचतीत्यस्य तात्पर्यविवरणं तत् तच्चाक्षेपेण निर्वहतीति चेत् तुल्यं यत्नेऽपि। कथं तर्हि रथो गच्छति विद्यते व्योमेति भावनानुभव इति चेत्, न कथञ्चित्, भावनाया धात्वर्थान्वयायोग्यत्वेन त्वयापि तत्र गौणत्वाभ्युपगमादिति। उच्यते। चैत्रः पचतीत्यत्र पाकानुकूलयत्नानुभवाद्यत्न एवाख्यातार्थो लाघवात् न त्वनुकूलो व्यापारः यत्नत्वापेक्षया व्यापारत्वस्योपाधित्वेन

यपदमेकदेशमात्रमेव ग्राह्योपस्थापयतीत्यर्थः, 'यत्नत्वेति। ननु

व्यापारवन्मात्रस्य कृतिव्यभिचारित्वादित्यर्थः, अन्ये 'यत्नेति, 'आख्यातेनेति, अन्यथानुपस्थितस्याक्षेपकत्वानुपपत्तेरिति भावः। 'क्रियाया इति व्यापारस्येत्यर्थः, मण्डनमत आह, 'फलस्येति, 'यत्नानुभवप्रसङ्गादिति, अन्यथाक्षेपोऽपि न स्यादिति भावः। स्वमते यत्नत्वं जातिरित्यभिप्रेत्याह, 'यत्नत्वेति, 'व्यापारत्वस्येत्युपलक्षणं, अनुकूलत्वस्येत्यपि बोध्यं। न चास्य सामान्यत्वेन तथात्वमत एव

गौरवात् । न चाचेतनेऽपि आख्यातस्य मुख्यत्वार्थमनुगतो व्यापार एव शक्यः मुख्यत्वसम्भवे त्यागायोगादिति वाच्यम् । शक्तिग्राहकेन प्रमाणेन लघुनि शक्तिपरिच्छेदात् अचेतने प्रयोगस्य वृत्त्यन्तरेणापि सम्भवात् मुख्यत्वार्थं शक्तिकल्पने च वृत्त्यन्तरोच्छेदः । एतेन व्यापारवाचकाख्यातस्य यत्नसाध्यार्थकपच्यादिधातूपसन्दानेन व्यापारविशेषयत्नोपस्थापकत्वमिति निरस्तं । लाघवेन यत्नस्यैव शक्यत्वात् । ननु यत्नोनाख्यातार्थः पाकत्वेन पाकस्य यत्नसाध्यत्वानुमित्या यत्नलाभादि-

---

यत्नत्वं सामान्यमिति तदेव शक्यं सामान्यप्रमाणपक्षपातात् अन्यथा कार्य्यतापेक्षया घटत्वादेर्जातिरूपतया कर्तृजन्यतावच्छेदकत्वापत्तेः ।

वस्तुतो व्यापारत्वं यत्नत्वं वा न शक्यं येनान्यतरत्र नियामकं चिन्त्येत, किन्त्वनुकूलत्वमात्रं तथाच चैत्र-रथयोरुभयत्र गमनानुकूलवाचित्वादित्यविशिष्टप्रत्ययेनानुकूलत्वेन च योग्यतावशादेकत्र यत्नोऽपरत्र प्रेरणाकर्षणादि प्रतीयत इति, मैवं, अनुकूलत्वस्य विषयत्वरूपतया संसर्गत्वात्, तथाच पाकविषयकयत्नवानित्यनुभवः सर्व्वसिद्धः स यत्नवाचकतया आख्यातस्य मयोच्यते । परेण तु पाकविषयकव्यापारवानित्यनुभवानन्तरं पाकविषयकयत्नवानित्यनुभव आक्षेपा-

---

कार्य्यत्वं कर्तृजन्यतावच्छेदकमिति वाच्यं । लघोर्विशेषस्य सम्भवे सामान्यस्यापि गुरोस्त्यागात् द्वयोस्तुल्ययोः सामान्यादरात् कार्य्यत्वे त्वनेकघटत्वाद्यपेक्षया तस्यैव सामान्यतया लघुत्वात् । 'नन्विति अन्यलभ्यत्वान्न तत्र शक्तिरित्यर्थः,

त्युक्तमिति चेत्, न, चैत्रः पचतीत्यत्र चैत्रः पाकानुकूलवर्त्तमानयत्नवान् प्रतीयते, न च पाकस्य वर्त्तमानयत्नेन व्याप्तिरस्ति, अतीतानागते व्यभिचारात्। न च धात्वर्थेनानुमिते यत्ने आख्यातेन वर्त्तमानत्वान्वयबोधः सम्भवति, यत्नस्यापदार्थत्वात् स्वार्थव्यापारस्य वर्त्तमानत्वबोधनेनाख्यातस्य पर्य्यवसितत्वाच्च। अथ चैत्रः पाकानुकूलवर्त्तमानव्यापारवानिति शाब्दबोधानन्तरं चैत्रः पाकानुकूलवर्त्तमानयत्नवान् चेतनत्वे सति पाकानुकूलवर्त्तमानव्यापारवत्त्वात् मैत्रवत् अनुमानं

दित्युच्यते, तत्रानुभवद्वयकल्पनागौरवाद्व्यापारत्वस्य उपाधितया गौरवाच्च यत्न एव शक्यः। न च व्यापारत्वस्य सामान्यतया द्वितीयं न गौरवं, लघोर्विशेष्यस्य सम्भवे सामान्यस्यापि गुरोस्त्यागात् द्वयोस्तुल्ययोः सामान्यादरात्। कार्य्यत्वे त्वनेकरूपत्वघटत्वाद्यवान्तरजात्यपेक्षया कार्य्यत्वसामान्यस्यैकतया लघोरौचित्यादित्यतो यत्नवाचकत्वे सिद्धेऽप्याख्यातसिद्धाद्धातूत्तरविभक्तित्वादाक्षेपानुपपत्तेः।

ज्ञानद्वयकल्पनागौरवमेव दातुं शङ्कामुत्थापयति, 'अथेति,

ज्ञानद्वयकल्पनागौरवदोषोऽस्त्येवेत्याह, 'चैत्र इति तथाच तादृशप्रतीतिबललभ्येवेत्यर्थः, 'लक्षणयेति। न चैवं शक्त्या वर्त्तमानत्वाभिधाने युगपद्वृत्तिद्वयविरोध इति वाच्यं। विशिष्टलक्षणायामदोषत्वात् मणिकृन्मते तद्विरोधाभावाच्च।

विना च पाकयत्ने वर्त्तमानत्वज्ञानमाख्यातस्य यत्ने शक्तिभ्रमादिति चेत्, न, यत्नाभावकालेऽपि तज्जन्यव्यापारस्य वर्त्तमानतया व्यभिचारात् । किञ्च व्यापारस्य वाच्यत्वं तल्लिङ्गकं वर्त्तमानयत्नानुमानमिति च कल्पनाद्वयादृवरं यत्नवाच्यत्वं लाघवात् । न चाचेतने आख्यातस्य व्यापारवाचकत्वावधारणात् एवं कल्पनेति युक्तम्, गौणतया शक्तिभ्रमेण वा तत्राख्यातादृव्यापारावगमोपपत्तेः । यत्नविगमदशायां तज्जन्यव्यापारकाले पचतीत्यत्र वर्त्तमानव्यापाराभिधानमाख्यातेन लक्षणया यथा रथो गच्छतीत्यत्र अतोऽन्यलभ्यत्वान्न तदनुरोधेन व्यापारे शक्तिः । अन्यथा तवापि यत्नकाले पचतीति न स्यात् । तस्मात्तदाख्यातं यत्नवाचकं

---

'नन्विति, स्थूलकालोपाधिमादाय यत्ने वर्त्तमानत्वं वाच्यं तथाच न व्यभिचार इत्यरुचेराह, 'किञ्चेति, 'वर्त्तमानव्यापारेति यदि गर्भं तेनायमर्थः, यदि वर्त्तमानव्यापारत्वप्रकारिका तत्र प्रतीतिः तदा

---

नव्यास्तु यां शक्तिमपेक्ष्य या लक्षणाभिधीयते ताभ्यां शक्ति-लक्षणाभ्यां एकदा प्रवृत्तौ तद्विरोधः प्रकृते च विभक्तित्वेन सञ्ज्ञाया आख्यातत्वेन भावनाया लट्त्वेन वर्त्तमानत्वे शक्तित्रयमिति न दोषावकाश इति वदन्ति ।

'यत्नकाल इति यत्नत्वप्रकारकप्रतीतिधरत्वज्ञानकाल इत्यर्थः, अन्यथा व्यापारत्वेन यत्नस्यापि शक्यतया असङ्गतेरिति, 'यत्नवाचकं', यत्नत्वेनेति शेषः । न चैवं तस्य यत्नपदपर्य्यायत्वापत्तिः, इष्टत्वात् अतिरिक्तवर्त्तमानत्वा-

आख्यातत्वात् लिङादिवत्[१] तर्कस्योक्त एव। एतेन फलानुकूलो व्यापारोधात्वर्थः आख्यातवाच्या सङ्ख्यैव तेन चैत्रः पचति रथोगच्छतीत्यत्र चैत्र-रथयोर्धात्वर्था-नुकूलव्यापारवत्त्वप्रतीतेर्मुख्य एव प्रयोगः, पचतीत्यत्र यत्नलाभोधात्वर्थेनाक्षेपादिति विक्लित्त्यनुकूलव्यापारस्य यत्नं विनानुपपत्तेरिति गुरुमतमपास्तम्। पचतीत्यस्य पाकानुकूलयत्न-वर्त्तमानत्वस्याक्षेपादलाभेनाख्यातार्थ-त्वात्।

यत्तु रत्नकोशकारोक्तं धात्वर्थोव्यापारः आख्यातार्थ-उत्पादना सा चोत्पादकता सैव भावना पचतीत्यादौ आख्यातस्य पाकमुत्पादयतीति विवरणात्। धात्व-र्थोत्पादना च चेतनाचेतनयोरिति सर्वत्राख्यातप्रयो-गोमुख्य एव। यतते जानातीत्यादावपि यत्नं ज्ञान-

लक्षणैव, परन्तु स्थूलकालमादाय यत्नगतमेव वर्त्तमानत्वं भासते अन्यथा क्षणस्यातीन्द्रियतया वर्त्तमानयत्नधीः क्वापि न स्यादेवेति भावः।

'धात्वर्थेति, 'धात्वर्थः' अनुकूलव्यापार इत्यर्थः, 'अलाभादिति,

(१) लिङाख्यातवदिति ख०।

भिधायकत्वेनातथात्वाद्वा। 'सङ्ख्यैवेति, एवकारव्यवच्छेद्यं व्यापारमात्रं तेन वर्त्तमानत्वादेस्तदर्थत्वेऽप्यविरोधः, 'धात्वर्थेति धात्वर्थतावच्छेदकफलानुकूले-

मुत्पादयतीत्यर्थात्। न तु व्यापारो यत्नो वाख्यातार्थः यतत इत्यादौ मुख्यत्वे सति गौणत्वस्यान्याय्यत्वात् आख्यातार्थविवरणं करोत्यर्थोऽप्युत्पादकृतैव पाकं करोतीत्यादौ करोतीत्यस्योत्पादयतीति विवरणात्। घटं करोतीत्यत्र कृञर्थ उत्पत्तिरेवावगम्यते। अतएव किं करोतीति सामान्येनोत्पादनाप्रश्ने पचतीति पाकोत्पादनाविशेषेणोत्तरमपि समञ्जसम्। चैत्र उत्पादयतीत्यत्र धात्वर्थ एवोत्पादना चैत्रेणान्वेति। आख्यातार्थ उत्पादनानन्वितैवोत्पत्तेरुत्पत्त्यभावात्। वस्तुतस्तूत्पादयतीत्यत्र धात्वर्थ एवोत्पादना अतोऽनुत्पादनपरधातूत्तरवर्त्तिन आख्यातस्यानन्यलभ्यतयोत्पादना वाच्या। पचतीत्यादौ यत्नलाभः पाकादिना धात्वर्थेनाक्षेपान्न तूत्पादनामात्रेण व्यभिचारादिति तदप्यत एव निरस्तम्। पचतीत्यत्र यत्नप्रतीतेर्यत्न एवाख्यातार्थो लाघवान्न तूत्पादकत्वमुपाधितया गौरवात् पाकानुकूलवर्त्तमानयत्नस्याक्षेपादिनाप्यलाभाच्च। वस्तु-

---

त्यर्थः। धात्वर्थानुकूलव्यापारयोः कर्म्मधारय इत्यन्ये। 'अलाभेनेति, यद्यपि शब्दानुपस्थितेऽपि यत्ने लडर्थवर्त्तमानत्वान्वयस्तन्मते सम्भवी। न च प्रत्ययार्थस्य प्रकृत्यर्थान्वयनियमः, आख्यातसञ्ज्ञायामेव व्यभिचारात् तथापि ज्ञानद्वयकल्पनागौरवमभिसन्धायैतदुक्तं। ननूत्पत्तिराद्यक्षणसम्बन्धः स च तत्स्वरूपात्मक एवेति तस्योत्पत्तिरस्त्येवेत्यरुचेराह, 'वस्तुत इति, वाक्यार्थत-

तत्तु चैत्रोजानातीच्छति यतत इत्यादौ ज्ञानादिमत्त्वं चैत्रस्य प्रतीयते न तूत्पादकत्वं अचेतनेऽपि ज्ञानोत्पादके शब्द-लिङ्गेन्द्रियादौ जानातीत्यादिप्रयोगप्रसङ्गात् घटं जानातीत्युक्ते घटज्ञानवान्न वेति संशयापत्तेश्च। अचेतनस्यापि ज्ञानोत्पादकत्वात्। शब्दादिकं ज्ञापयतीति चानुभवोन तु जानातीति तस्मात्लाघवात्पचति-पक्ष्यत्यपाक्षीदित्यत्रातीतानागतवर्त्तमानयत्नप्रतीतेश्च यत्न आख्यातवाच्यस्तेन यत्नस्य वर्त्तमानत्वादिकमाख्यातेनाभिधीयते प्रकारान्तरेण तद्लाभात्। जानातीच्छति यतते निद्रातीत्यत्र धात्वर्थएव यत्नादिश्चैत्रेणान्वेति यत्नादिमांश्चैत्र इत्यनुभवात्। धात्वर्थे च यत्नादौ नाख्यातार्थयत्नान्वयः। यत्नादिविषयकयत्नस्याभावात् रथोगच्छतीत्यत्राख्याते व्यापारलक्षणा तेन गत्यनुकूलव्यापारवत्त्वमात्रं रथस्य प्रती-

---

यद्यपि तन्मते शब्दानुपस्थापितेऽपि यत्ने तदर्थवर्त्तमानत्वान्वयः सम्भवी, न च प्रकृत्यर्थ एव प्रत्ययार्थभाननियमः, आख्यातसंज्ञाया-

---

एव धातु-निष्ठोत्पत्तिहेतुत्वार्थकतया तल्लाभान्न तस्य तत्र शक्तिरिति भावः। ननु जानातीत्यादौ तथाप्यसङ्गतिरित्यत आह, 'जानातीति, 'धात्वर्थ एवेति विभक्तीनां प्रकृत्यर्थेत्यादिव्युत्पत्तेरिति भावः। न चैवं भावनानन्वये आख्यातार्थसङ्ख्यान्वयोन स्यादिति वाच्यं। अग्रे वक्ष्यमाणत्वात्। तटस्थ आह,

यते । अथ पाकानुकूलैककृतिकाले पचतीतिवत्कृते-रत्ययेऽग्रिमकृतेरनुत्पादे च मध्येऽप्यपाक्षीत्पक्ष्यतीति च स्यात् । न च ध्रुवपदवत्कृतिप्रचयस्य शक्यत्वात् प्रचयस्य ध्वंसे प्रागभावे वा अपाक्षीत्पक्ष्यतीतिप्रयोग इति वाच्यम्। एवं हि पचतीति न स्यादेव एकदा कृतिप्रचयस्यासत्त्वात् । अथ भूत-भविष्यतोः कृत्यभावनिरूप्यत्वं कृतिकाले च कृत्यभावोनास्ति प्रतियोगिजातीयवत्यभावस्यासत्त्वादिति चेत्, न, प्रागभाव-प्रध्वंसयोः कृतिविशेषप्रतियोगित्वेन कृतिकालेऽपि सत्त्वात् तयोः सकलकृतिप्रतियोगिकत्वासम्भवात् । ननु फलायोगव्यवच्छिन्ना कृतिः शक्या अत एव पाकानुकूलतण्डुलक्रयकाले पचतीति न प्रयोगः, एवं चरमकृतिकाले पचति तत्प्रागभावकाले पक्ष्यति तद्ध्वंसकाले चापाक्षीदिति

---

मेव व्यभिचारात्, तथापि पूर्व्वत्र ज्ञानद्वयकल्पनागौरवमभिसन्धायैतदुक्तं ।

वस्तुतस्तु फलानुकूलव्यापारत्वस्य कारकमात्रसाधारण्यात् कर्तृत्वादिप्रतीत्यवैचित्र्यं । न च विशेष्यत्वेन नियमः, कर्म्माख्यातेऽतिप्रसङ्गादित्यपि द्रष्टव्यं ।

'कृत्यभावेति कृतिसामान्याभावेत्यर्थः, 'प्रागभावेति, अत्र तद्-

---

'अथेति, 'कृत्यभावेति कृतिसामान्याभावेत्यर्थः । विद्यमानध्वंसप्रतियोगित्वं भूतत्वं विद्यमानप्रागभावप्रतियोगित्वं भविष्यत्त्वमिति न तयोः सामान्याभाव-

मुख्यप्रयोगः तत्पूर्वं पचतीति गौण एवेति चेत्, न, तर्हि मध्येऽपि पक्ष्यतीति स्यात् तदा चरमकृतेरनागतत्वात्, एवं व्यापारप्रचयस्याख्यातार्थत्वे धात्वर्थत्वे वा मध्ये पक्ष्यत्यपाक्षीदिति स्यात्। उच्यते। यत्राख्यातवाच्ये प्रचये एकैकस्य वर्त्तमानव्यवहारनिमित्तत्वं तत्र तावतां ध्वंसैः प्रागभावैश्च भूत-भविष्यद्व्यवहारः, न तु वर्त्तमानव्यवहारनिमित्तं किञ्चिदभावात्। चेतनाचेतनयोर्भोजन-गमनादौ तथैव प्रयोगात् प्रयोगे सति निमित्तानुसरणात् धातोराख्यातस्य वा पाकानुकूलव्यापारवाचकत्ववादिभिरप्यनन्यगतिकतया तथैव स्वीकाराच्च। स्यादेतत् चैत्रस्तण्डुलं पचति चैत्रेण पच्यते तण्डुल इत्यत्र कर्त्तरि कर्मणि चाख्यातार्थसंख्यान्वया-

भयसामान्याभावादिति भावः। प्रारब्धपाकानुकूलकृतिप्रागभावध्वंसयोर्यावत्तदुभयरूपत्वेन यावत्तदुभयाभावव्याप्यतदुभयसामान्याभावरूपत्वेन वा अतीतानगतप्रतीतिरुपपाद्या अनन्यगतिकत्वादिति भावः।

निरूप्यत्वमित्याह, 'प्रागभावेति, 'आख्यातार्थेति। नन्वाख्यातस्य सङ्ख्यावाचकत्व एव मानाभावः प्रतीतेः सुब्विभक्त्यर्थसङ्ख्ययैवोपपत्तेः। न च विनिगमनाविरहः, प्रथमान्तादिकर्तृ-कर्म्मादिवाचकपदं विनाख्यातप्रयोगाच्चैत्रो-दण्डीत्यादावाख्यातं विनापि सुब्विभक्त्या सङ्ख्योपस्थापनादिति, मैवं, चन्द्रे

त्कर्तृ-कर्मणी अपि यत्र इव लकारवाच्ये तेन वाच्य-गामिनी सङ्ख्येतिनियमो भवति अन्यथा आक्षिप्त-सङ्ख्येयमात्रान्वये नियमो न स्यादिति वैयाकरणाः । तन्न । कर्तृगता सङ्ख्या यत्र वाच्या तत्र कर्त्ता तदन्वयः प्रतीयते इति तदुपपत्तेः । कर्तृगतैव सङ्ख्या क्व वाच्येति चेत्, कर्त्ता क्व वाच्य इति तुल्यं । यत्र कर्त्तृगता सङ्ख्या प्रतीयत इति चेत्, न, अन्योन्याश्रयात् कर्त्तृवाच्यत्वे तद्गतसङ्ख्याधीः तद्गतसङ्ख्याप्रतीत्या च तद्वाच्यतेति, यत्राख्यातेन कर्त्तृविवक्षा तत्र कर्त्ता वाच्य इति चेत्, न, यत्र कर्त्तृगतसङ्ख्या विवक्ष्या तत्र सा वाच्येति

---

'सङ्ख्येति, नन्वाख्यातस्य सङ्ख्यावाचकत्वे मानाभावः प्रतीतेः सुब्विभक्त्यर्थसङ्ख्ययैवोपपत्तेः । न च विनिगमनाविरहः, प्रथमान्त-कर्म्म-कर्त्रादिबोधकपदं विना आख्याताप्रयोगात् । न च तिङन्त-समभिव्याहारनियमः, तत्र चैत्रो दण्डीत्यादावाख्यातेन विनापि सुब्विभक्त्या सङ्ख्योपस्थापनादिति, मैवं, चन्द्रे कलङ्क इत्यादौ बहुत्व-प्रत्ययस्य आख्यातसङ्ख्याशक्तिं विनानुपपत्तेरिति ।

'कर्त्तेति, कस्यचित् कारकस्य कर्त्ता वाच्यः कस्यचित् कर्म्मेति

---

कलङ्क इत्यादौ सुब्विभक्त्यर्थबहुत्वाभावेनाख्यातवाच्यस्यैव तस्यान्वयात् । 'तेन वाच्येति, एकपदोपात्तत्वप्रत्यासत्तेरन्तरङ्गत्वात् इति भावः । 'कर्तृगतेति, आत्मनेपदत्वादिकन्तु न प्रयोजकं पठत इत्यादौ व्यभिचारादिति । 'कर्तृगतेति,

तुल्यम्। एवं कर्मापि न शक्यं किन्तु तद्गतसङ्ख्यैव, कर्त्तृ-कर्मणी लकारवाच्ये इत्यस्यायमर्थः तद्गतसङ्ख्या वाच्येति।

सम्प्रदायस्तु सङ्ख्येयमात्रसाकाङ्क्षापि सङ्ख्या भावनान्वयिनैवान्वेति एकपदोपात्तत्वप्रत्यासत्तेः। भावना च व्यापारत्वेन शुद्धं प्रातिपदिकार्थमाकाङ्क्षति न तु कर्म-करणादि द्वितीयादिना तस्य व्यापारवत्त्वेनोपस्थितेः। अतएव कर्माद्यपि न व्यापारमाकाङ्क्षति। अतः प्रथमानिर्द्दिष्टेनैव भावनान्वयः प्रातिपदिकस्यापि क्रियान्वयार्थं व्यापाराकाङ्क्षितत्वात्। शुद्धस्वामिना चैत्रस्तण्डुलं पचतीत्यत्र कर्त्ता चैत्रेण पच्यते तण्डुल इत्यत्र कर्म अतस्तत्रैव भावनान्वय इति सङ्ख्यान्वयोऽपि तत्रैव। तदुक्तं, "यं यं भावनानुधावति तं तं

---

नियमोऽनुशासनपारतन्त्र्यात् लया वाच्यः सङ्ख्यावचनत्व एव सोऽस्तु लाघवात् अनुशासनस्य लक्षणयाप्युपपत्तेरिति भावः।

'एकपदेति, भावनया सहेति शेषः, 'प्रतिपदिकस्य' प्रातिपदिकार्थस्य, उभयाकाङ्क्षायास्तन्त्रत्वादिति भावः।

---

ओदनं पचतीत्यादि कर्म्मगतसङ्ख्याविवक्षायामसाध्विति भावः।

'एकपदेति, भावनया सहेति शेषः। 'शुद्धेति, 'शुद्धं' व्यापारानवरुद्धमित्यर्थः। ननु व्यापारस्योद्देश्यत्वेन विषयत्वेऽपि व्यापार्य्यत्वेन तण्डुलस्यैव

सञ्ज्ञापीति स्थितिरिति। स्यादेतत् चैत्रस्तण्डुलं पचतीत्यत्र भावनान्वयश्चैत्रे सम्भवति आश्रयत्वात्, चैत्रेण तण्डुलः पच्यते इत्यत्र भावनान्वयस्तण्डुलस्य न विषयतया यत्नस्य विक्लित्त्यनुकूलव्यापारविषयत्वात्। विषयत्वेनान्वये वा तण्डुलं पचतीत्यत्रापि तण्डुलस्य विषयत्वेन भावनान्वय इति तद्गतैव सञ्ज्ञा स्यात् नाश्रयतया तत्राद्वत्तेश्चैत्रेऽपि न यत्नान्वयः तृतीयार्थयत्नेनावरुद्धत्वात् इत्यनन्वितैव तत्र भावना। अचेतने च भावनान्वयाभावात् कथं सञ्ज्ञान्वयनियम इति न, यत्नविशेष्ये सञ्ज्ञान्वयात्, चैत्रस्तण्डुलं पचतीत्यत्र तण्डुलस्य कर्मत्वेनान्वयात्तण्डुलवृत्तिफलजनकव्यापारजनकयत्नाश्रयश्चैत्र इति प्रतीयते इति स एव विशे-

'सञ्ज्ञापीति, आश्रितवतीति शेषः। 'तण्डुलमिति, द्वितीयातस्तण्डुलवृत्ति फलं तेन सममनुकुलव्यापारविशेषस्य धात्वर्थस्यान्वये तण्डुलवृत्तिफलानुकुलव्यापारोपस्थितौ तेन सहाख्यातार्थयत्नान्वये तज्जनकतया यत्नोपस्थितिः तेन सह चैत्रान्वये तादृशयत्नवांश्चैत्र-इति प्रतीतिः, 'चैत्रेणेत्यत्र तृतीयातः समवेतकृत्युपस्थितौ तया सह चैत्रान्वये चैत्रसमवेता कृतिरुपस्थिता तया सह धात्वर्थव्यापारान्वये चैत्रसमवेतप्रयत्नजन्यव्यापारोपस्थितिः जन्य-जनकभावस्य सम्बन्धत्वात्।

विषयता कृतेः सिद्धवृत्तित्वादित्यभिप्रेत्याह, 'विषयत्वेनेति, 'नाश्रयतया',

ष्यः। चैत्रेण पच्यते तण्डुल इत्यत्र चैत्रवृत्तियत्नजन्यव्यापारजन्यफलाश्रयस्तण्डुलः प्रतीयते इति यत्नस्य परम्परया तण्डुल एव विशेष्यः। एवञ्च यद्यप्युभयत्रैव चैत्रः कर्त्ता तण्डुलः कर्म तथापि यत्नविशेष्ये सङ्ख्यान्वयः। अचेतनेऽपि रथो ग्रामं गच्छतीत्यत्र ग्रामवृत्तिगमनफलजनकव्यापाराश्रयो रथः प्रतीयते, रथेन गम्यते ग्राम इत्यत्र रथवृत्तिव्यापारजन्यफलाश्रयो ग्राम इति तत्रापि विशेष्ये सङ्ख्यान्वयः। न चैवं यत्नस्य व्यापारस्य च विशेष्ये सङ्ख्यान्वये नियामकमननुगतमिति वाच्यम्। आख्याततात्पर्य्यविषयस्य विशेष्ये

अस्य तादृशव्यापारेणाख्यातार्थफलभागित्वान्वये तादृशव्यापारजन्यफलभागी तण्डुल इत्यन्वयः, एतच्च फलस्य धात्ववाच्यत्वपक्षे, यदा तु फलानुकुलव्यापार एव धात्वर्थस्तदा आश्रयत्वमात्रस्यैव द्वितीयार्थत्वं, तण्डुलाश्रितविक्लित्त्यनुकूलव्यापारविषयकयत्नवांश्चैत्र इति कर्त्तृत्वकारेण, चैत्रसमवेतकृतिविषयविक्लित्त्यनुकूलव्यापारविषया तण्डुला इति कर्म्मत्वकारेण प्रत्ययः, प्रत्ययार्थस्तु परिशेषतो विषयत्वमात्रमिति वक्ष्यते।

'तात्पर्य्येत्यापाततः, वस्तुतस्तु आख्यातोपस्थाप्यफलानुकूलव्यापार-

भावनन्वायइत्यनुषज्यते, 'तात्पर्य्यविषयस्येति, स च शक्योवा लक्ष्योवेति न विशेषइति भावः। यद्यपि विशेष्यत्वं व्यापारादेरपि तथापीतराविशेषणकत्वे

सङ्ख्यान्वयात् स च यत्नाव्यापारो वा। चैत्रेण सुप्यत- इत्यत्र चैत्रो न भावनाविशेष्यः तृतीयार्थावरुद्धत्वात्। कर्म च तत्र नास्त्येवातो धात्वर्थ एव भावनाविशेष्यः फलत्वाद्विषयत्वाद्वेति तत्र सङ्ख्यान्वयः। द्विवचन-बहुव- चनयोस्तत्रासाधुत्वमेव। तदुक्तम्। "आक्षेपलभ्ये सङ्ख्येये नाभिधानस्य कल्पना। सङ्ख्येयमात्रलाभेऽपि साकाङ्क्षेण

विशेष्य इति तत्त्वं। व्यापारस्य व्यापारत्वेन यत्नत्वेन वा उपतिष्ठतां उभयथापि व्यापारोभवत्येव, यथाश्रुते इष्टसाधनत्वविशेष्ये धात्वर्थे लिङाख्यातसङ्ख्याबोधापत्तेरिति ध्येयं।

'भावनेति, सत्यन्तं भावलकारान्तधात्वर्थे, द्वितीयं क्रान्ता-

मति साक्षात् परम्परया तद्विशेष्यत्वं विवक्षितं एतच्च लडाख्यातमभिप्रेत्य लिङादौ च तत्तात्पर्य्यविषयेष्टसाधनत्वविशेष्ये धात्वर्थयागादौ सङ्ख्यानन्वया- दन्यदेव तदन्वयनियामकमनुसन्धेयं अनुगतन्तु तन्नियामकं चिन्त्यं, 'चैत्रेणेति, एतच्च स्वापादावेकत्वप्रकारकप्रतीतिमभ्युपेत्योक्तं। वस्तुतस्तत्र स्वापैकत्वाने- कत्वसंशयानुभवात् न तत्र सङ्ख्यान्वयः, अतएव स्वापस्य बहुत्वेऽप्येकवचन- स्यैव साधुत्वेन प्रयोगस्येत्याहुः।

'साकाङ्क्षेण' भावनासाकाङ्क्षेण तदर्थान्वयिनेति यावत्, नन्वेवं जानातीत्यादौ सङ्ख्यान्वयोन स्यात् तत्राख्याततात्पर्य्यविषयभावनादेरनन्व- यादिति चेत्, न, तत्र वर्त्तमानत्वादेरेवाख्याततात्पर्य्यविषयत्वात्तस्य च धात्वर्थान्वयित्वे परम्परया चैत्रादेस्तद्विशेष्यत्वादित्याहुः।

'भावनेति, सत्यन्तं भावलकारार्थे, द्वितीयं क्रान्तादिपदोपस्थाप्ये गत- मित्युभयमुपात्तं इत्येके।

व्यवस्थितिः" ॥ इति। इदमेव च कर्त्तुः कर्मणश्चाक्षेप-लभ्यत्वं यद्भावनाविशेष्यत्वे सति प्रथमान्तपदोप-स्थाप्यत्वं न तु सङ्ख्यालिङ्गकानुमितिविषयत्वम् अनु-मित्या सङ्ख्येयमात्रगतत्वेन सङ्ख्याप्रतीतेः। ननु नामार्थे भावनान्वयेऽपि न सङ्ख्यान्वयः प्रथमोपस्थितसङ्ख्यान्व-येन तस्या निराकाङ्क्षत्वात्। न च प्रथमा न सङ्ख्यावा-चिका किन्तु प्रयोगसाधुरिति वाच्यम्। चैत्र इदानीं राजेत्यत्र केवलादपि एकत्वप्रतीतेः। अन्यथा प्रथमोप-स्थितसङ्ख्यया कर्त्तृ-कर्मान्वये सङ्ख्या न तिङर्थ इत्यपि कल्प्येतेति चेत्, न, एकैव हि सङ्ख्या प्रथमाख्याताभ्या-

---

दिपदोपस्थाप्ये गतमित्युभयमुपात्तमित्यर्थः। 'अन्यथेति यदि न केवलं प्रथमाप्रयोग इत्यर्थः, चन्द्रे कलङ्क इत्यादौ व्यभिचारं स्फुट-तयोपेक्ष्य नियमपक्षेऽपि न दोष इत्याह, 'एकैव हीति, 'सामाना-

---

यतः प्रथमान्तपदोपस्थाप्यत्वमत एव भावनाविशेष्यत्वमित्यर्थ इत्यन्ये।

'अनुमित्येति, 'प्रतीतेः' प्रतीतिप्रसङ्गादित्यर्थः, कर्त्तृ-कर्मादिविशेष-लाभेन स्यादिति भावः। शब्दानुपस्थितेनानन्वयापत्तिरित्यपि बोध्यं। 'न चेति, शुद्धप्रातिपदिकार्थ एव प्रथमाविधानादिति भावः। 'केवलादपीति क्रियाशून्यादपीत्यर्थः, शुद्धत्वन्तु द्वितीयादिवदन्वयप्रकाररहित्यमिति भावः। ननु तत्राप्यस्तीतिपदाध्याहार इति यदि ब्रूयात्तत्राह, 'अन्यथेति, एवं सति वैपरीत्यापत्तिरिति भावः। चन्द्रे कलङ्क इत्यादौ व्यभिचारं स्फुटतयोपेक्ष्य नियमपक्षेऽपि न दोष इत्याह, 'एकैव हीति। यद्यपि सामानाधिकरण्यं नैकसङ्ख्याभिधायकत्वमेव साध्याविशेषात्, नापि भिन्नप्रवृत्तिनिमित्तकयोरे-

मभिधीयते समानाधिकरण्यानुरोधात् यथा चैत्रोदण्डीत्यत्र, अन्यथा त्वन्मतेऽप्याख्यातेन चैत्रसङ्ख्याभिधानात् प्रथमावाच्यसङ्ख्यान्वयश्चैत्रे न स्यात्। ओदनकामः पचेतेत्यत्र त्वयाप्येषैव रीतिरवगन्तव्या तत्र कर्त्तुरवाच्यत्वादिति वक्ष्यते। अथ कर्त्ताप्याख्यातवाच्यः चैत्रः पचतीति समानाधिकरण्यात् अन्यथा नामाख्यातयोर्भिन्नप्रवृत्तिनिमित्तकत्वेऽप्येकत्र वृत्त्यभावे सामानाधिकरण्यं न स्यादिति चेत्, न, नीलः पटश्चैत्रः पचति पच्यते तण्डुल इत्यादौ नाम्नोर्नामाख्यातयोर्वा

धिकरण्यात्' उभयपदार्थाभेदादित्यर्थः, अन्यथा भेदान्वयव्युत्पत्तिः न तु सुवन्त-तिङन्तयोरिति लड़ाख्यातादौ न धर्म्मिणि शक्तिः किन्तु धर्म्म एवेति भावः।

कत्र वृत्तिः कर्त्तृवाच्यत्वानभ्युपगमेन तदसिद्धेः, अतएवोभयपदार्थाभेदत्त्वादित्यप्ययुक्तं, तथाप्यविभक्त्यर्थाद्वारकविशेषण-विशेष्यभावापन्नार्थत्वे सति विभक्तिमत्त्वं सामानाधिकरण्यं राज्ञः पुरुष इत्यादौ विभक्त्यर्थद्वारैव विशेषण-विशेष्यभावात् तच्च विभक्त्योरेकसङ्ख्याभिधायकत्वं विनानुपपन्नमित्यत्र तात्पर्य्यमित्याहुः।

एवं सति चन्द्रे कलङ्क इत्यादौ कथं सामानाधिकरण्यमिति चिन्त्यं अन्यथा उभाभ्यामेकसङ्ख्यानभिधाने आख्यातार्थसङ्ख्यान्वये निराकाङ्क्षत्वादिति भावः। 'एषैव रीतिरिति एकसङ्ख्याभिधायकत्वेनैव सामानाधिकरण्यं न त्वेकत्र वृत्त्येत्यर्थः, 'अन्यथेति, इदमेव सामानाधिकरण्यमित्यभिमानः।

एकसङ्ख्यावाचकत्वमेव हि शाब्दसामानाधिकरण्यं न तु भिन्नप्रवृत्तिनिमित्तस्यैकत्रार्थे वृत्तिर्गौरवात् ओदनकामः पचेतेत्यादौ व्यभिचाराच्च। विध्याख्यातस्य हि कृतिशक्तस्य नामसामानाधिकरण्यं तयोरेकसङ्ख्याभिधायकत्वात् न त्वेककर्तृवाचकत्वेन। तत्रापि कर्तुर्वाच्यत्वे तस्येष्टसाधनत्वबोधने अप्रवृत्तिस्तस्यासाध्यत्वात्। अयोग्यतया कर्त्तारं विहाय कृतिविषये पाके पाकविषयकृतौ वेष्टसाधनतान्वये कर्त्तुरनन्वयादप्रतीतेश्च नाभिधेयत्वम्। पचतीत्यस्य पाकयत्नवानिति विवरणात् कर्त्ता वाच्य इति चेत्, न, द्वन्द्वादिसमासस्य विग्रहेण विवरणेऽपि विग्रहार्थे शक्त्यभावेन व्यभिचारात् कर्त्तुरन्यलभ्यत्वेनावाच्यत्वस्थितौ विवरणस्य तात्प-

'पाके' 'पाकविषयकृताविति सिद्धान्तभेदेन तत्राद्ये इष्टसाधनयागकर्त्ता स्वर्गकाम इत्यन्वये व्युत्पत्तिविरहः एकस्वार्थान्वयमपरपदार्थं बोधयित्वा तद्विशिष्टापरपदार्थबोधनेऽसामर्थ्यात्, द्वितीयेऽपि तथा पदार्थः पदार्थेनान्वेतीति व्युत्पत्तेरिति दूषणं स्फुटत्वान्नोक्तमित्यव धेयं।

व्यभिचारं विवृणोति, 'विधीति, 'तस्येति एकपदोपात्तत्वप्रत्यासत्तेरित्यर्थः, कृतीष्टसाधनताज्ञानप्रवर्त्तकत्वमतेनेदं, पाके पाकविषयककृताविति मतभेदेन, 'अनन्वयादिति, एकार्थान्वयमित्यादिव्युत्पत्तेरिति भावः। 'अप्रतीते-

र्थविषयज्ञापकत्वात् कर्तृ[illegible]मूलत्वाद्वा । वस्तुतः पचतीत्यत्र यत्नवतः शक्यत्वे धात्वर्थस्य विषयत्वेन साध्यत्वेन वा कृतावन्वयो न स्यादितरपदार्थविशेषण-तयोपस्थिते पदार्थैकदेशे इतरपदार्थस्यानन्वयात् । राजपुरुषमानयेत्यत्र राज्ञ इवानयने पदार्थे पादार्थान्वयस्य व्युत्पत्तिसिद्धत्वात् । यत्नस्याश्रयान्वितत्वेनोपस्थितस्येतरानाकाङ्क्षत्वात् । पाक-यत्नवतोरन्वये च यत्नवत्साध्यः पाकः पाकजनको यत्नवानिति धीः स्यात् न तु पाक-यत्नयोर्विषय-विषयिभावधीः । पाककर्त्ता इत्यत्रापि न पाकस्य कृतावन्वयधीः इतरपदार्थत्वात् । किन्तु कृत्याश्रयः पाकजनक इति प्रतीतिः । अतएवापचत्यपि पाचकपदप्रयोगात् वुणः कृतियोग्यता वाच्येति निरस्तम् । पाकस्य कृतावनन्वयप्रसङ्गादिति तत्र पाचकपदं गौणमेव । ननु कर्त्तृ-कर्मणी

यद्येवं चैत्रस्य मातेत्यादौ का गतिः, तत्रानन्यगतिकतया एकदेशान्वयस्वीकारात् पदार्थान्वये सम्भवति तदेकदेशान्वयस्याभावादिति व्युत्पत्तेः, पदविशेषे चान्वये अनन्यगतिकत्वादिति भावः ।

'पाचकपदं' न वुणपदमित्यर्थः, पाचकपदवाक्यत्वसिद्धान्तमा-

---

स्येति, पदार्थैकदेशत्वादित्यपि बोध्यं । 'वस्तुत इति, पदार्थान्वये सम्भवति न तदेकदेशान्वयस्तथैव व्युत्पत्तेः चैत्रस्य नप्तेत्यादौ चानन्यगतिकतया एकदे-

लकारवाच्ये तेनाभिहिते कर्त्तरि कर्मणि चानभिहिताधिकारीया कर्त्तृ-कर्मविभक्तिर्न भवति किन्तु प्रथमैव लकारेण तयोरनभिधाने च चैत्रेण पचति तण्डुलः चैत्रः पच्यते ओदनमित्याद्यपि स्यादिति चेत्, न, कर्त्तृ-कर्मगतसङ्ख्याभिधानानभिधानाभ्यामेवाहितानभिहितकार्य्योपपत्तेः ता श्प्रयोगस्यासाधुत्वाच्च। साधुत्वे हि सत्यनुशासनं न त्वनुशासनानुरोधेन साधुत्वम् ग्रामगामादौ साधुत्वापत्तेः।

नवीनास्तु सुपः प्रकृत्यर्थगतस्वार्थसङ्ख्याबोधकत्वं

---

श्रित्य प्रकृतग्रन्थावतारात्, यदुक्तं भट्टेन, "पाकन्तु पचिरेवाह कर्त्तारं प्रत्ययोणकः। पाकयुक्तः पुमान् कर्त्ता वाच्यो नैकस्य कस्यचित्" ॥ इति, तत्रापि धर्म्मिणि न शक्तिः किन्तु कृतिमात्रे समवायः संसर्ग-इति मतं प्रकृतं, कर्त्तृरूपवाच्यत्वे कृतियोग्य एव रूढ्या पचति-पाचकपदस्य गौणत्वानुपपत्तेरिति ध्येयं। 'नवीनत्वोद्भावनं अस्वरस-

---

शान्वय इति भावः। 'पाचकपदमिति, यद्यपि पचत्यपि पाकपदप्रयोगो न स्यात् पाकस्य कृतावनन्वयात् धर्म्मिणोऽपि शक्यत्वेन पदार्थैकदेशत्वात्। यदि तन्न यौगिकं किन्तु रूढमेव यदि वा योग्यतया एकदेशेनाप्यन्वयः तदा योग्यताशक्यत्वेऽपि तुल्यं, तथापि गौरवान्न योग्यता शक्येत्यपचत्यपि पाचकपदं गौणमिति भावः। धर्म्मिणि न शक्तिः किन्तु कृतिमात्रे समवायः संसर्ग इति मतेनेदमित्यन्ये। 'ग्रामगामादाविति, कर्म्मण्यनित्यनुशासनस्य तत्रापि सत्त्वादिति भावः।

'नवीनास्त्वित्यस्वरसोद्भावनं तद्बीजन्तु सामग्र्यभावादेव फलाभावे

तिङः प्रथमान्तपदार्थगतसङ्ख्याबोधकत्वमिति व्युत्पत्तिरेव व्युत्पत्तिश्च तत्स्वभावत्वं तच्च फलोन्नेयम्। प्रथमान्तपदार्थः कर्त्ता कर्म वा। अतएव चैत्रेण सुप्यते इत्यत्र प्रथमान्तपदाभावान्न सङ्ख्यान्वयः। न च धात्वर्थे सङ्ख्यान्वयः, स्वापस्य द्वित्व-बहुत्वेऽपि द्विवचन-बहुवचनयोरभावात्सुप्यत इत्येव प्रयोगः स्यात्। अतएव स्वापमात्रावगमात् आख्यातार्थयत्न-सङ्ख्ययोरनन्वये आख्यातं प्रयोगमात्रे साध्विति तिङं विना धातोः केवलस्यासाधुत्वात्। अतो न सङ्ख्यानुरोधेन कर्त्तृकर्मणी लकारवाच्ये। वयन्तु ब्रूमः। चैत्रेण पच्यते तण्डुलः रथेन गम्यते ग्राम इत्यत्र तण्डुल-ग्रामौ कर्मणी प्रतीयेते अस्ति च तयोः परसमवतक्रिय फलशालित्वं कर्मत्वं तच्चाख्यातवाच्यमेव। तण्डुलं पचतीत्यत्र द्वितीयात इवान्यतः कर्मत्वालाभात्। तस्मा-

माविष्कर्त्तुं, तद्बीजन्तु सामग्र्यभावादेव फलाभावे सम्भवति न स्वभाव एव मूलं सहकार्य्युच्छेदापत्तेः क्वान्तादिपदे व्यभिचारश्चेति। 'कर्तृत्ववत् कर्म्मत्वमपीति कृतिवदाश्रयत्वमपीत्यर्थः। पूर्व्वञ्च समवायस्य संसर्गत्वादुत्तरञ्च परसमवेतव्यापार-फलादीनां पदान्तरलभ्य-

सम्भवति न स्वभावावलम्बनं सहकार्य्युच्छेदापत्तेः क्वान्तादिपदे व्यभिचारश्चेति। 'परेति, चैत्रोगच्छतीत्यत्र गमनक्रियाफलस्योत्तरदेशसंयोगस्य चैत्रेऽपि सत्त्वादतिव्याप्तिवारणाय। यद्यप्येतदात्मानं जानामीत्यत्रात्मन्यव्याप्तं,

त्कर्तृत्ववत्कर्मत्वमपि लकारवाच्यं तद्धर्मिणोः कर्तृकर्मणोरन्यत एव लाभादिति ।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ शब्दाख्यतुरीयखण्डे आख्यातवादः ।

त्वात् अनन्यलभ्यस्यैव पदार्थत्वात् । 'द्वितीयात इवेत्यत्र द्वितीयादावथाश्रितत्वादिमात्रस्यैव तदर्थत्वात् अन्यस्य तत्र पदान्तरलभ्यत्वादिति भावः ।

इति श्रीजयदेवमिश्रविरचिते तत्त्वचिन्तामण्यालोके शब्दाख्यतुरीयखण्डालोके आख्यातवादालोकः ।

तथापि करणव्यापारस्य विषयत्वादिकं तद्बोध्यं । 'कर्तृत्ववदिति कृतिवदित्यर्थः, समवायस्य संसर्गत्वात्, 'कर्म्मत्वमपीति । यद्यपि वाक्यार्थतया तद्भासत एव तथापि तत्प्रकारकप्रतीतिमभ्युपेत्योक्तं । वस्तुतस्तु चैत्रेण पच्यते तण्डुल इत्यत्र चैत्रवृत्तियत्नजन्यव्यापारजन्यफलाश्रयस्तण्डुल इति प्रतीतेः तृतीयातः समवेतकृत्युपस्थितौ धातुना व्यापारस्य जनकत्वस्य संसर्गरूपतया चोपस्थितावन्यलभ्यतया विभिष्टे न शक्तिः किन्त्वनन्यलभ्यतया फलाश्रयत्वमात्रे । यदि च फलावच्छिन्नव्यापार एव धात्वर्थस्तदाश्रयत्वमात्र एव, द्वितीयार्थोऽप्येतदेव तण्डुलं पचतीत्यत्र तण्डुलवृत्तिफलजनकव्यापारजनकयत्नाश्रय इति प्रतीतेस्तत्राप्युक्तरीत्या तन्मात्रस्यैवानन्यलभ्यत्वादिति वदन्ति ।

यत्तु आश्रयत्वमपि संसर्ग एवेति तन्न, तत्प्रकारकत्वस्यानुभवसिद्धत्वादिति । इति प्रकाशः ।

## अथ धातुवादः ।

धात्वर्थः फलमिति मण्डनाचार्य्याः, तथा हि पच्यर्थोविक्लित्तिर्लाघवान्न तु तत्फलकोव्यापारोऽधःसन्तापनादिर्गौरवात् गमेरुत्तरसंयोगः पतेरधःसंयोगः त्यजेर्विभागोऽर्थोन तु तत्फलजनकः स्पन्दः । हन्तेरपि मरणमर्थः न तु तत्फलजनकोव्यापारः खड्गाभिघातादिः गौरवात् । यजत्यर्थोऽपि देवतोद्देश्यकत्यागफलं स्वस्वत्वध्वंस एव । जुहोत्यर्थस्त्यागफलं प्रक्षेपः । ददात्यर्थः सम्प्रदानस्वीकारपूर्वकत्यागफलं स्वस्य स्वत्वध्वंसः परस्वत्वं वा न तु तत्तत्फलकत्यागो गौरवात् । न चैवं व्यापारविगमे फलदशायां पचति-गच्छति-ददातीत्यादिप्रयोगः स्यान्न त्वपाक्षीदित्यादिः व्यापारकाले च पचतीत्यादि न स्यादिति वाच्यम् । धात्वर्थानुकूलव्यापारवर्त्तमानत्वमाख्यातार्थः तेन व्यापारकाले पचतीत्यादि भवति न तु व्यापारविगमे । न च स्पन्दजन्यसंयोग-विभागाश्रयत्वेनाकाशो गच्छति पतति त्यजतीति स्यात् विनश्यद्वस्थे कर्मणि च न स्यात्

---

प्रसङ्गादाह, 'धात्वर्थ इति, 'विनश्यदवस्थ इति फलाजनक इत्यर्थः,

संयोग-विभागाद्यभावादिति वाच्यम्। व्यापारवति व्यापारकाले आख्यातप्रयोगात्। नन्वेवं धात्वर्थत्वेन फलं क्रिया तथाच तण्डुलं पचतीत्यादौ तण्डुलादेः कर्मतापि न स्याद्विक्लित्त्यादिरूपक्रियाजन्यफलशालित्वाभावादिति चेत्, न, परसमवेतव्यापारफलशालित्वं कर्मत्वं स च व्यापारोधात्वर्थ आख्यातार्थोवेत्युभयथापि परसमवेतव्यापारफलशालिनस्तण्डुलादेः कर्मत्वं वि-क्लित्त्यनुकूलादे व्यापारकाले पाकोवर्त्तत इत्यत्र पाकपदे व्यापारलक्षणा लाघवेन विक्लित्तेः शक्यत्वात्। जाना-तीच्छति-यतते-विद्यते-तिष्ठतीत्यादौ ज्ञानेच्छा-प्रयत्न-सत्ता-गतिनिवृत्तिरेव धात्वर्थः, न ज्ञानादिफलं न वा ज्ञानाद्यनुकूलोव्यापारः ज्ञानादिमत्त्वमात्रप्रतीतेरिति। अत्रोच्यते। ओदनकामः पचेतेत्यत्र विधिप्रत्ययेन धात्वर्थे प्रवृत्त्यर्थं कृतिसाध्यत्वमिष्टसाधनत्वञ्च बोध्यते। न च फले विक्लित्यादावोदनसाधनत्वं न वा फले प्रवृत्तिः सम्भवति, उपायमकृत्वा फलस्य साक्षात् कृत्या साधयितुमशक्यत्वात् उपायकृतिसाध्यमेव हि फलं न

'व्यापारवतीति फलस्वरूपयोग्यव्यापारवतीत्यर्थः, 'आख्यातेति लड़ाख्याते-त्यर्थः, 'परेति। नन्वेवं वृक्षात्पर्णं पततीत्यादौ वृक्षादेरपि कर्म्मत्वापत्तिः, यदि च धात्वर्थतावच्छेदकत्वं फलविशेषणं तदा प्रकृतेप्यसङ्गतिरिति चेत्, तस्य कर्म्मत्वेऽपि तदा तत्रापादानविभक्तेरेव साधुत्वादित्याकूः।

तु तदन्यकृतिसाध्यम् उपायकृतित एव तत्सिद्धेरधः-सन्तापनादेः कृतिसाध्येष्टसाधनत्वं विना विक्लित्त्यर्थमप्रवृत्तेश्च। उपाय एवाधःसन्तापनादिर्व्यापारः प्रवृत्तिविषयत्वात् कृतिसाध्यत्वेनेष्टसाधनत्वेन च विधिप्रत्ययेन बोध्यत इति फलानुकूलोव्यापार एव धात्वर्थः। अथोपायस्य कृतिसाध्यत्वज्ञानं प्रवर्त्तकमिति सत्यं किन्तु विधिबोधितफलकृतिसाध्यत्वेन तदुपायकृतिसाध्यत्वमाक्षिप्यते तेन विना तदनुपपत्तेरिति चेत्, न, व्यवहारात्प्रवृत्तिजनके ज्ञाने विधिप्रत्ययस्य शक्तिग्रहात् प्रवृत्तिसाक्षादुपपादकविषयत्वात्कल्पनायाः। एवं य-

अथ धातुवादालोकः।

एवं पचतीत्यत्र द्वयी सिद्धान्तगतिः फलावच्छिन्नस्यैव व्यापारस्य प्रतीतेरव्यात्तत्वेनापि फलेनावच्छिन्न एव व्यापारो धात्वर्थो

वस्तुतः फलपदं धात्वर्थफलपरमित्यदोषः, 'सत्तेति सत्तासहिता गतिनिवृत्तिरिति मध्यपदलोपी समासः, अन्यथा बहुवचननपुंसकलिङ्गतान्यतरापत्तेरिति, 'व्यवहारादिति, प्रवृत्तिहेतुतयोपायगोचरकृतिसाध्यताज्ञानस्यैवोपस्थितत्वात् तत्रैव विधिप्रत्ययस्य शक्तिकल्पनं तस्यैव साक्षादुपपादकत्वादिति भावः। न तु लाघवात् तस्यैव साक्षादुपपादकत्वादिति भावः। ननु लाघवात् फलस्यैव धात्वर्थत्वे व्यवस्थिते पचेतेत्यादौ व्यापारलक्षणास्तु अन्यथा रथोगच्छतीत्यादौ व्यापारप्रतीतेस्तस्यैवाख्यातवाच्यत्वं स्यात्, यदि च

जि-गमि-पचि-जुहोति-ददातीनामपि व्यापार एव वाच्यः फले प्रवृत्त्यसम्भवात्। तत्र पच्यर्थोऽधःसन्तापनमेव तच्च रूप-रस-गन्ध-स्पर्शपरावृत्तिफलाविनाभूतं, अधःसन्तापने च जातिविशेषो रूपादिपरावृत्तिजनकतावच्छेदकोऽवश्यं वाच्यः। अन्यथा फलार्थमधःसन्ता-

वाच्यः, अतएव त्यजि-गम्योर्विशेषः अन्यथा कर्म्ममात्रस्यैव संयोग-विभागोभयजनकतायामपि तदुभयफलजनकत्वाप्रतिसन्धाने कर्म्म-

---

लाघवेन यत्नार्थत्वसिद्धौ तत्र लक्षणा तदा प्रकृतेऽपि तुल्यं। किञ्चैवं कार्य्यान्वितव्युत्पत्तिरपि स्यात्, अपि च आख्यातत्वेनाख्यातवाच्य एव व्यापारस्तत्र विधित्वेन तदर्थः कृतिसाध्येष्टसाधनत्वमेकपदोपात्तत्वप्रत्यासत्तेः अन्वेतु। यदि च तस्य यत्नार्थस्तदा व्यापारलक्षणास्तु कृतिनिष्ठेष्टसाधनत्वविधिपक्षे दोषप्रसङ्गोऽपि नेति, मैवं, फलस्य धात्वर्थत्वे स्पन्दजन्यसंयोगाद्याश्रयतया ग्रामाकाशादिकं गमनवदित्यादिप्रतीतेर्दुर्व्वारत्वात् तथाच गौरवमपि न्याय्यं प्रामाणिकत्वादिति, अत्रेदं चिन्त्यं अस्त्वेवं तथापि पच्यादौ फलमेव धात्वर्थोऽस्तु तत्र लाघवबाधकाभावात्। न चोक्तयुक्त्या गम्यादेर्व्यापारार्थत्वेनैव तथात्वकल्पनात् अत्रापि तथेति वाच्यं। जानातीत्यादौ विद्यत इत्यादौ च तथात्वापत्तेः। यदि च तत्तद्धातौ तत्तदर्थे शक्तिभेदादत्र बाधकान्न तथा तदा प्रकृतेऽपि तुल्यं। नन्वेवं व्यापारकाले पचतीति न स्यात्। न च व्यापार-आख्यातार्थः पूर्व्वोक्तयुक्त्या तस्य यत्नार्थत्वादिति चेत्, न, कृतेरपि तदा सत्त्वे तामादाय तत्प्रयोगसम्भवात् तदसत्त्वे व्यापारलक्षणया तथात्वात् तदुक्तं प्राक् यत्नविगमदशायामित्यादि। ननु व्यापारशक्तौ फलवहिर्भावः तदन्यतरमात्रशक्यत्वे कथं लाघवं फलत्व-व्यापारत्वयोरुपाधित्वेनाविशेषादिति, मैवं, फलावच्छिन्नस्यैव व्यापारस्य त्वया धात्वर्थत्वेनाभ्युपगन्तव्यत्वात् अन्यथा

पनेऽप्रवृत्तेः व्यापारस्याख्यातवाच्यत्वेऽपि विशेषस्यावश्यं वाच्यत्वात्। पच्यर्थे च फलं न विशेषणं न वोपलक्षणं लोकेऽधःसन्तापनविशेषस्य रूपादिपरावृत्त्यव्यभिचारेण व्यावर्त्त्याभावात्। वेदेऽधःसन्तापनमात्रं पाकपदार्थः कृष्णलं श्रपयेदित्यादौ फलाभावात्। अस्तु वोपलक्षणं रूपादिपरावृत्तियोग्याधःसन्तापनं पाकप-

मात्रवाचकयोस्तयोः पर्य्यायतापत्तेः। अतएव व्रीहीन् प्रोक्षतीत्यत्र जलसंयोगे फले प्रोक्षणपदार्थैकदेशत्वमित्याशङ्क्य उपलक्षण-

त्यजि-गम्योः पर्य्यायत्वापत्तेः फलांशस्यापि प्रतीतेश्च। एतेन गमनत्व-त्याग-कर्म्मत्वयोर्भेदान्न पर्य्यायतेत्यपास्तं। न च संयोग-विभागादिफलस्याव्यावर्त्तकतया तदवच्छिन्नत्वेन न शक्यत्वमित्यग्रिमग्रन्थविरोध इति वाच्यं। अव्यावर्त्तकतया व्यापारविशेषणीभूतस्य न शक्यत्वं किञ्चित् परं जनकतया शक्यज्ञानविषयत्वेन फलमपि शक्यमेवेति तदर्थत्वात्। व्रीहीन् प्रोक्षतीत्यत्र जलसंयोगस्य न प्रोक्षणपदार्थत्वमिति प्रागुक्तस्याप्यत्रैव तात्पर्य्यमित्युपपादितमाधेयशक्तौ। न च पचतीत्यत्र फलानुकूलव्यापारानुकूलत्वेनाख्यातार्थप्रतीतेर्व्यापारो धात्वर्थ इति वाच्यं। फलानुकूलत्वेनैव तस्य प्रतीत्या तदसिद्धेः अन्यथा प्रतीतिबलादेव तदर्थत्वसिद्धौ उक्तन्यायानुसरणानुपपत्तेः लक्षणया तादृशप्रतीत्युपपत्तेश्चेति न विशेषणं व्यावर्त्तकं। अधःसन्तापनविशेषस्य फलाव्यभिचारात् नोपलक्षणं शक्ताविति शेषः, उपरञ्जकतया शक्यज्ञानविषयत्वेन फलस्यापि शक्यत्वात् व्यापारे तु तस्योपलक्षणत्वमेव यथाकृतिज्ञाने विषयतया विशेषसाध्ये चोपलक्षणमित्युक्तमाकरे। एकशक्तिसम्भवे शक्तिद्वयकल्पनमयुक्तं अत आह, 'अस्तु वेति, 'योग्यता चेति, सहकारि-

दार्थः योग्यता च सन्तापने कृष्णलादावप्यस्ति। गमेः स्पन्दविशेष एव वाच्यो न तूत्तरदेशसंयोगजनकत्वेन स्पन्दस्य वाच्यता सर्वस्पन्दानां तथात्वेन व्यावर्त्त्याभावात्। स्पन्दे च विशेषः संयोग-विभागजनकतावच्छेदकः सर्वसिद्ध एव। त्यजेश्च कर्ममात्रं शक्यं न तु पूर्वदेशविभागफलककर्मत्वेन शक्यत्वं सर्वकर्मणां तथात्वेन व्यावर्त्त्याभावात्। त्यजतीतिप्रयोगे च तद्बुद्धिर्निमित्तं। पतत्यर्थोऽपि कर्मविशेष एव गुरुत्वासमवायिकारणप्रयोज्याधःसंयोगफलजनकः, फलन्तु कर्मविशेषपरिचायकमात्रम्। यजति-ददाति-जुहोतीनामिदं न ममेत्यादितत्तत्सङ्कल्पविशेषपूर्वस्त्याग एव वाच्यः सङ्कल्पे च विशेषस्तु तत्तद्विशेषकृतस्तत्तत्फलविशेषजनकतावच्छेदको मानसप्रत्यक्षसिद्ध एव न

---

विरहात् फलानुत्पादेऽपि न योग्यताहानिरिति लोक-वेदयोरेकैव शक्तिरिति भावः। स्पन्दविशेषो गमनत्वालिङ्गित इत्यर्थः, गमनत्वे मानमाह, 'स्पन्दे चेति। 'न त्विति, विभागरूपफलस्य विशेषणीभूय न शक्यत्वमित्यर्थः, कथमेतदत आह, 'सर्व्वेति अव्यावर्त्तकतया विशेषणत्वाभावादित्यर्थः। नन्वेवं कथं तस्य प्रतीतिरित्यत आह, 'त्यजतीति, उपरञ्जकतया तस्यापि शक्यत्वादिति भावः। एतच्च फलांशं प्रतीत्यवष्टम्भेन व्याख्यातं।

केचित्तु तत्प्रतीतिरसिद्धैव 'गमेः स्पन्दविशेष इत्यादिग्रन्थस्वरसेन गमनत्वं कर्म्मत्वव्याप्यसामान्यमिति लीलावतीस्वरसेन च गमनत्व-स्पन्दत्वयोर्भेदादेव नोक्तपर्य्यायत्वमिति तेन रूपेण व्यापारमात्रमेव धात्वर्थ इत्याहुः।

तु तत्तत्फलजनकसङ्कल्पविशेषे शक्तिः गौरवात्। देवतोद्देश्यकस्वस्वत्वध्वंसफलकत्यागत्वं सम्प्रदानस्वीकरणपूर्वकस्वत्वध्वंस-परस्वत्वापत्तिफलजनकत्यागत्वं देवतोद्देश्यकप्रक्षेपफलकत्यागत्वञ्च तत्तत्सङ्कल्पविशेषपरिचायकमात्रमिति ।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ शब्दाख्यतुरीयखण्डे धातुवादः ।

---

तया समाश्रितमित्येका, अन्या च व्यापार एव वाच्यः अशक्यस्यापि फलस्य ज्ञानमात्रं तत्तत्प्रयोगे विनिगमकं फलोपस्थितिः द्वितीयादित आख्यातादितश्च कचिदिति ।

इति महामहोपाध्यायतार्किकचूड़ामणिश्रीजयदेवमिश्रप्रकाशिते शब्दचिन्तामण्यालोके धातुवादालोकः ।

---

तत्तज्जातिपरिचायकमाह, 'देवतेति, न च देवतादानातिव्याप्तिः, तत्र तस्य देवतास्वत्वस्योद्देश्यत्वात् यागे यष्टुः स्वत्वध्वंसस्यैवोद्देश्यत्वात् होमस्तु यागात्मक एव किन्तु जुहोतिप्रयोगे प्रक्षेपधीर्निमित्तं । 'सम्प्रदानेति, एतच्च स्वीकरणस्थलीयत्यागकरणमभिप्रेत्य न दानसिद्धिः किन्तूत्सर्गमात्रं, अतएव पुष्करिणीजलादेरुत्सर्गमात्रं न तु दानमतएव शिवाय गां दद्यादित्यादावपि न दानमपि तूत्सर्गमात्रं, एवं श्राद्धादावपि सम्प्रदानस्वीकरणाभावादिति भावः इति सङ्क्षेपः । इति प्रकाशः ।

## अथ उपसर्गवादः

उपसर्गास्तु द्योतकाः न वाचकाः। द्योतकत्वञ्च धातोरर्थविशेषे तात्पर्य्यग्राहकत्वं तदुपसन्धानेन तत्र शक्तिर्वा न तु धात्वर्थाभिधायकत्वं पौनरुक्त्यापत्तेः। ननु प्रजयतीत्यादौ प्रकर्षस्य विजयते इत्यादावतिशयस्य अभ्यागच्छतीत्यादावाभिमुख्य-सामीप्ययोः प्रतीतावुपसर्गान्वय-व्यतिरेकानुविधानात् पदान्तरवदत्रापि शक्तिः। न च प्रतिष्ठत इत्यत्र गतिधीर्न स्यात् प्रशब्दस्य प्रकर्षवाचित्वेनातिशयेन गमनार्थधीप्रसङ्गादिति वाच्यम्। तत्र प्रशब्दस्य धात्वर्थावरुद्धार्थत्वात् तच्च गमनमेव। धातोरिव तस्याप्यनेकार्थत्वात्। न च धातोः सार्थकत्वं क्लृप्तमतस्तत्रानेकार्थता युक्ता उपसर्गे तु नैवमिति वाच्यम्। धातूनां बहुत्वान्न प्रकर्ष-

---

अथ उपसर्गवादालोकः।

'प्रोत्तरस्थलेनेति, एतच्च गमनत्वप्रकारकप्रतीतिदार्ढ्येनोक्तं।

---

प्रसङ्गादाह, 'उपसर्गास्त्विति, तत्र स्वार्थविशेषे शक्तिर्धातोरिति शेषः। 'धातोरिवेति, न चैवं नानार्थत्वेऽपि प्रकर्षार्थमादाय प्रतिष्ठत-

वाचित्वं गौरवात् किन्तु प्रशब्दस्यैकस्येति तस्यापि सार्थकत्वात्। धातोरनेकार्थत्वं क्लृप्तं तदभियुक्तैर्नोपसर्गस्येति चेत्, न, तर्हि धातोर्नानार्थत्वे उपसर्गानुविधानमर्थविशेषे न स्यात् अक्षादिपदे तथा दर्शनात्। उपसर्गस्यापि शक्तत्वे धात्वनुविधानं न स्यादिति चेत्, न, साधुत्वार्थं तत्र तदनुविधानं तेन विना प्रयोगाभावात् न तु शक्तौ। धातोस्तु शक्तावेव तदपेक्षेति वैषम्यम्। अथ प्रजयत्यभ्यागच्छतीत्यादौ सामान्यवाचकाद्धातोरेव प्रकर्ष-सामीप्यादिविशिष्टस्य विशेषस्योपस्थितिः। तात्पर्यग्राहकत्वमात्रमुपसर्गाणामिति चेत्, न, प्रकर्षादेर्विशेषस्याशक्यत्वेन तत्र लक्षणायां युगपद्वृत्तिद्वयापत्तेः। एतेनाभ्यागच्छतीत्यादौ सामीप्यादिविशिष्टधात्वर्थप्रतीतेर्वाचकत्वमुपसर्गाणां, प्रतिष्ठत इत्यादौ धातोरेव गमनार्थत्वं तात्पर्य्यग्राहकस्तु

---

इत्यादौ स्थितिप्रकर्षधीस्तु स्यादिति वाच्यं। स्थापूर्व्वप्रशब्दस्य गतावेवानादितात्पर्य्येण तत्र तस्यासाधुत्वात् तात्पर्य्याभावेनैव तदबोधकत्वाद्वा। 'तेन विनेति, यद्यप्युपकुम्भमित्यादौ धातुं विनापि तत्प्रयोगः तथापि तदतिरिक्तस्थले धातोः प्रागेव तत्साधुत्वमिति भावः। 'धातोस्त्विति, औपसन्दानिकशक्तेस्त्वयाङ्गीकारात्।

'सामान्येति, प्रकृष्टजयस्यापि जयत्वादिति भावः। एवं जयत्वेनैव तस्य धीः स्यादित्यत आह, 'प्रकर्षादेरिति, 'आख्यातस्येति। यद्यपि

प्रशब्दः। अन्यथा धातूपसर्गार्थयोर्विरोधिनान्वयानुपपत्तेः[१]। एवं यत्र धातूपसर्गयोर्विरोधस्तत्र द्योतकत्वमन्यत्र वाचकत्वमिति मतमपास्तम्। अगमनविरोधिगमनस्यैव प्रशब्दार्थत्वात्। अत्रोच्यते। आख्यातस्य धात्वर्थेन सह स्वार्थान्वयबोधकत्वमतः प्रतिष्ठत इत्यत्र गमनं धात्वर्थ एव। प्रशब्दार्थत्वे भावनान्वयो न स्यात् प्रकृति-प्रत्यययोः सम्भूयान्वयबोधकत्वनियमात्। एवञ्च प्रोत्तरस्थत्वेन गमने शक्तिरिति प्रशब्दः शक्ततावच्छेदको न शक्त इत्यौपसन्दानिकी शक्तिरेव द्योतकत्वम्।

---

यदि गमनाभावाभावत्वप्रकारिका धीर्भवेत् तदा उपसर्गवाचकत्वपक्षेऽपि नान्वयानुपपत्तिः विशिष्टस्यार्थत्वादिति। न चैवं वृत्तिद्वय-

---

(१) उपसर्ग-धात्वर्थयोः विरोधिनानन्वयापत्तेरिति ख०।

---

वर्त्तमानत्वस्य स्वप्रकृताविवान्वयान्न तदर्थस्य धात्वर्थान्वयनियमस्तथापि तद्विशिष्टकृतेस्तदन्वयोऽस्त्येवेति भावः। 'प्रशब्दार्थत्व इति, एतच्च गमनत्वप्रकारकप्रतीतिदार्ढ्येनोक्तं। यदि च गमनाभावविरोधित्वप्रकारिका धीस्तदा गमनाभावधातुः प्रशब्दविरोधित्वमाहेति तद्विशिष्टधात्वर्थान्वयो भावनायां भवत्येवेति। वस्तुतस्तु प्रकर्षविशिष्टधात्वर्थ इव विरोधित्वविशिष्टगमनाभावे भावनान्वयः स्यात् तथैव व्युत्पत्तेः, न तु धात्वर्थविशिष्टे प्रशब्दार्थे तथा च गमनत्वप्रकारिकैव धीः, अतएव तदुपेक्ष्य सिद्धवदुक्तवान् 'गमनं धात्वर्थएवेति, 'प्रकृतीति, न च सुपां तथा नियमः, प्रकृत्यर्थगतत्वगर्भस्य तद्विषयत्वेऽपि सम्भूयान्वयबोधकत्वगर्भस्य तस्य सामान्यविषयत्वात्। नन्वेवं गमनस्य धात्वर्थत्वे तिष्ठतीत्यत्रापि गमनधीप्रसङ्ग इत्यत आह, 'एवञ्चेति, तथा च

प्रकर्षाभिमुख्यसामीप्यादेरुपसर्गवाच्यत्वेऽपि तद्विशिष्टधात्वर्थान्वयः सम्भवत्येव भावनाया ओदनं पचतीत्यौदनविषयकपाकान्वयवदिति यद्यपि। तथापि उपसर्गस्य शक्ततावच्छेदकत्वं न शक्तत्वं गौरवात् तथाच प्रोत्तरजित्वेन प्रकृष्टजये शक्तिः। एवं हि क्लृप्तविशेष्यशक्तेर्विशेषणविषयत्वमात्रं कल्प्यते अन्यथा तु शक्त्यन्तरमेव। न चैवं जिपूर्वप्रत्वेन तत्रैव शक्तिरस्त्विति वाच्यम्। धात्ववाच्यत्वे भावनानन्वयप्रसङ्गात् प्रतिष्ठत इत्यत्रोपसर्गस्य शक्त्यवच्छेदकत्वमात्रकल्पनाच्च। अथ वा

---

तत्र शक्ततावच्छेदकत्वकल्पनादन्यत्रापि तथा एकत्र निर्णीतशास्त्रार्थ इति न्यायादिति भावः। तदेवाह, 'तथापीति।

नव्यास्तु प्रोत्तरजित्वादिकं न शक्ततावच्छेदकं गौरवात् किन्तु जित्वादिकमेव उपसर्गाणां तात्पर्य्यग्राहकत्वमात्रं तदेव च तेषां द्योतकत्वं। न चैवं केवलधातोरपि तत्प्रत्ययापत्तिः, केवलस्य तत्राप्रस्तुतत्वादिति वदन्ति।

ननु शक्त्यन्तरकल्पनं तुल्यमेव तथा च प्रकृष्टजयत्वापेक्षया प्रकर्षत्वमेव लघ्विति तत्रैवोपसर्गस्य शक्तिरस्त्वित्यत आह, 'एवं हीति, 'न चैवमिति, तथैव विनिगमनाविरहाद्वर्णद्वयमेव शक्तं न त्वेकमवच्छेदकं अन्यथा घटादिपदेऽपि तथा स्यादिति भावः। 'धात्विति, घटादिपदे तु विनिगमकाभावादानुपूर्व्वीविशिष्टसकलवर्णा एव शक्तिरिति भावः। ननु तथापि शक्त्यन्तरमेव शक्ततावच्छेदक-शक्यतावच्छेदकयोर्भेदे शक्तिभेदावश्यकत्वान्निरवयवत्वेन शक्तिविस्तारस्याप्यन्यत्र सम्भवाच्च एवञ्च प्रत्वेनैव शक्तत्वं प्रकर्षेणैव शक्यत्वं लाघवाज्जयांशस्यान्यलभ्यत्वाच्चेत्यरुचेराह, 'अथ वेति, नचैवं वृत्तिद्वयविरोधापत्तिः, मणिकृन्मते तद्भावेन प्रकृष्टांशस्य लक्षणाया जयांशस्य शक्त्या

प्रतिष्ठत इत्यत्र विरोधिलक्षणया धातोर्गमनोपस्थितिः प्रशब्दस्तु तात्पर्य्यग्राहकः अनन्यलभ्यस्य शब्दार्थत्वात् प्रजयतीत्यादावपि विशेष्यवाचकस्य धातोर्विशिष्टे लक्षणा विशेष्याद्विशिष्टस्यान्यत्वात् प्रादेस्तात्पर्य्यग्राहकत्वम् । न हि शक्तिं विनापि धातुतः प्रतीतिसम्भवे

---

विरोधोच्छेदः, वृत्तिद्वयेनोपस्थापन एव तद्विरोधात् न त्वेकया वृत्त्या एकया लक्षणयैवोपस्थापनादिति भावः ।

वयन्तूपसर्गस्य वाचकत्वे निपातस्यानर्थकस्येति सूत्रं न क्रियेत

---

चोपस्थितावन्वयसम्भवात् विशिष्टस्य लक्षणयैवोपस्थितेर्नोक्त दोष इत्यन्ये । प्रतिष्ठत इत्यत्र च विरोधिलक्षणाया एव निरूढ़त्वेन स्थितिप्रकर्षधीरिति ध्येयं । नन्वेवं विभक्तेः कर्म्मत्वादौ शक्तिर्न स्यात् प्रकृतिलक्षणयैव तदुपस्थिति-सम्भवात् प्रादिविभक्तिस्तात्पर्य्यग्राहकत्वादिति चेत्, न, विनिगमकाभावेन वैपरीत्यापत्तेः । नन्वेवमप्यौपाधिककारणादिपदानां विशिष्टोपाधौ शक्तिर्न स्यात् लाघवेन विशेष्यमात्र एव शक्तौ लक्षणया विशिष्टोपस्थितिसम्भवादिति चेत्, न, विशेषण-विशेष्ययोरन्यतरत्र शक्तौ विनिगमकाभावात् प्रकृते च केवलधातुप्रयोगे विशेष्यवाचकतानिर्णयात् ।

यत्तु प्रतिष्ठत इत्यत्र मुख्यार्थोपस्थितिं तदनुपपत्तिञ्च विनैव नानार्थवत् प्रस्थानप्रतीतेरुपसृष्टस्य धातोरेव तत्र शक्तिरिति, तन्न, अन्यत्र गृहीत-शक्तेर्धातोर्मुख्यार्थोपस्थितौ बाधकाभावात् प्रशब्दग्राहितात्पर्य्यानुपपत्त्या लक्षणासम्भवाच्चेति दिक् । 'विशेष्यादिति, तथा च शक्तसम्बन्धोऽप्यविरुद्ध-इति भावः । यदि चोपसर्गस्य वाचकत्वं तदा निपातस्यानर्थकस्येति सूत्रमनर्थकं स्यात् अर्थवदादिसूत्रेणैव तस्य प्रातिपदिकसंज्ञालाभात्

तत्कल्पनमर्हम् । अनन्यलभ्यस्य शब्दार्थत्वात् व्यतिसे इत्यादौ तु लुप्तः स्मृतो धातुरेवार्थप्रत्यायकः धातुलोपमजानतस्तत्रार्थप्रत्ययाभावादिति कृतं प्रसक्तानुप्रसक्त्या ।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ शब्दाख्यतुरीयखण्डे उपसर्गवादः ।

---

अर्थवदादिसूत्रेणैव प्रातिपदिकत्वलाभात् प्रपञ्चकलभ्याया गौरवात् इति ब्रूमः ।

इति महामहोपाध्यायतार्किकचूडामणिश्रीजयदेवमिश्रप्रकाशिते शब्दचिन्तामण्यालोके उपसर्गवादालोकः ।

---

प्रपञ्चार्थत्वकल्पनायां गौरवादित्यपि बोध्यं । ननु व्यतिस इत्यत्र धातोरभावादुपसर्ग एव वाचक इत्यत आह, 'व्यतिस इति । इति प्रकाशः ।

## अथ प्रमाणचतुष्टयप्रामाण्यवादः ।



स्यादेतत्, तथापि सङ्केतग्रहे चेष्टातोऽप्यनुभवसम्भवाच्छब्दवत्साऽपि प्रमाणमतश्चत्वारि न प्रमाणानीति चेत्, उच्यते, शब्देन चेष्टायां सङ्केतग्रहाच्छब्दस्मृत्युपयोगिनी चेष्टा लिपिवत् शब्द एव प्रमाणमर्थे कृतत्वात् । नन्वेवं सति कथमेड-मूकस्य व्यवहारस्तस्य शब्दास्मरणादिति चेत्, न, अव्युत्पन्नत्वाच्चेष्टायां तस्य तस्य शब्देन न सङ्केतग्रहोन मानान्तरेणेति समया-

---

### अथ प्रमाणचतुष्टयप्रामाण्यवादालोकः ।



ननु चेष्टा सङ्केतशब्दं स्मारयति न त्वनुमापयतीति न युक्तं तेन सह सम्बन्धाग्रहात् अर्थेन समं सङ्केतस्यैव सम्बन्धत्वात्, शब्देन

---

धर्म्मिणि धर्म्मा इति न्यायेन धर्म्मनिरूपणं धर्म्मिनिरूपणानन्तरमाह, 'स्यादेतदिति, न हि सा शब्दान्तर्भूता नियतशङ्कताभावात्, नानुमानमविनाभावाभावात्, प्रत्यक्षादिष्वन्तर्भावशङ्कैव नेति भावः । प्रतिबन्ध्यभिप्रायेण दृष्टान्तमाह, 'लिपिवदिति, एतेन समयाधीनप्रवृत्तिकत्वेन शब्द एवान्तर्भवतु नानार्थशब्दवदनियतसङ्केतोऽप्यविरुद्ध इत्यपास्तं, उक्तरीत्या प्रमाणत्वस्यैवासम्भवात् मूकस्य आजन्मबधिरस्य एतज्जन्मनि तेन शब्दाननुभवादिति

ग्रहाच्छब्दवत् चेष्टापि तं प्रति कुण्ठितैव। व्यवहारस्तु एड-मूकस्यैतद्विषया मम प्रवृत्तिर्निवृत्तिर्वा एतस्याभिप्रेता यदा भवति तदा मामुद्दिश्यायमेतां चेष्टां करोति इत्यन्वय-व्यतिरेकाभ्यां व्याप्तिग्रहात्तथाभिप्रायमनुमाय प्रवृत्ति-निवृत्ती। कशांकुशाभिघातादिव करि-तुरगादेः। न च कृतसमयापि चेष्टा अभिप्रायानुमापिकास्तु(१) किं शब्दस्मरणेनेति वाच्यम्। अविनाभावाभावात्। न चैवं शब्देऽप्यभिप्रायानुमानादेव प्रवृत्त्याद्यस्त्विति वाच्यम्। शब्दादेव प्रत्येमीत्यनुव्यवसायात्तदनुभावकत्वे स्थिते तदनुकूलशक्तिकल्पनात्। एड-मू-

---

समं सम्बन्धग्रहे तत्स्मरणेऽपि सङ्केतबलाच्चोपजनितैवार्थोपस्थितिरन्वयबोधाङ्गं प्राथमिकत्वात् न स्मृतशब्दजा विलम्बितत्वात्, अन्यथा अलौकिकस्वर्गादिपदस्यापि अर्थानुपस्थापकत्वं आवश्यकसङ्केतक-

---

(१) चेष्टाभिप्रायमनुमाय प्रवर्त्तिकास्त्विति ख०।

---

भावः। 'अव्युत्पन्नत्वादिति, शब्द इति शेषः, 'चेष्टापीति, त्वन्मत इति शेषः। कस्यचिन्मतमाशङ्क्य निराकरोति, 'न चेति, 'अविनेति, तदप्रतिसन्धानेऽपि ततोऽर्थप्रत्ययात् एवं मूकस्यानन्यगत्या तद्धर्मादिकमपि कल्प्यं इति भावः। ननु चेष्टा सङ्केतग्राहकशब्दं स्मारयति न त्वर्थमिति न युक्तं शब्देन सह सम्बन्धाग्रहात् अर्थेन सह सङ्केतस्यैव सम्बन्धत्वात्। यदि च शब्देनापि सम्बन्धग्रहस्तदा ततः शब्दस्मरणेऽपि सङ्केतबलाच्चेष्टाजनितार्थोपस्थितिरे-

कादौ तु मानाभावात्तत्प्रवृत्तेरन्यथाप्युपपत्तेः। एवमन्यत्रापि शब्दप्रयोजकत्वे स्थिते तद्द्वारैव चेष्टायामनुभावकत्वं सम्भवतीति न सा पृथक् प्रमाणम्। अथ वा स्मारयतु चेष्टा पदार्थानेव न तु शब्दांस्तथापि सा न प्रमाणम्, ऊर्द्ध्वाङ्गुलीकरणे याचां करिष्यसीत्यादिका कृत्यन्वयिनी प्रयोजकाभिप्रायं स्मारयन्ती प्रमाणमेव न, शङ्खध्वनौ याचां करिष्यसीत्यत्र शङ्खध्वनिवत्। ज्ञप्त्यन्वयिनी तु कारकेषु प्रातिपदिकार्थप्रधानक्रिया आनयनादिस्वरूपप्रधाना तथाच गौरश्वः पुरुष इत्यादिपदैरिव स्वतन्त्रेषु पदार्थेषु स्मारितेषु परस्परमन्वयायोगः प्रातिपदिकार्थे कर्म्मत्वादेरानयनादिष्वनी-

---

वाक्यादेव वाक्यार्थीभूततदर्थोपस्थितेः। यदि शब्दादर्थं प्रत्येमि इत्यनुव्यवसायो विनिगमक उक्तः सोऽपि चेष्टातोऽमुमर्थं प्रत्येमीत्यनुव्यवसायत्वेनानिर्णायक इत्यस्वरसादाह, 'अथ वेति, अत्रापि

---

वान्वयबोधाङ्गं प्राथमिकत्वात् न तु स्मृतशब्दजा अतिविलम्बितत्वादिति।

अन्यथा आवश्यकसङ्केतग्राहकवाक्यादेव वाक्यार्थीभूतस्वर्गोपस्थितिसम्भवेन स्वर्गादिकमप्यर्थोपस्थापकं न स्यात्। यदि शब्दादमुं अर्थं प्रत्येमीत्यनुव्यवसायो विनिगमक उक्तः सोऽपि चेष्टातोऽमुमर्थं प्रत्येमीत्यनुव्यवसायेन तुल्य इत्यरुचेराह, 'अथ वेति, चेष्टागृहीतसमये भवतीति शेषः। 'कृत्यन्वयिनी, 'कृत्यभिप्रायपूर्व्विकेत्यर्थः, स्मृतेरप्रमात्वेन तत्फलकस्य न प्रमात्वमित्यर्थः। 'ज्ञप्त्यन्वयिनी' ज्ञप्त्यभिप्रायपूर्व्विकेत्यर्थः। न च यत्र

तानागत-वर्त्तमानत्वस्य चान्वयप्रकारस्यानुपस्थितेः। पदैकदेशविभक्तिविशेषवच्चेष्टैकदेशविशेषात् प्रकरणादिविशेषाद्वा कर्मत्वादि-वर्त्तमानत्वादिस्मृतिनियम-इति चेत्, न, कर्मत्वाद्यतीतत्वाद्युपस्थापकचेष्टैकदेशाभावात्। प्रकरणादयस्तु विषयविशेषे शब्दादौ नियमयन्ति न त्वन्वयप्रकारकर्मत्वादौ कालविशेषे वा प्रवर्त्तयन्ति। अन्यथा गौरश्व इत्यादावपि प्रकरणादिभिः कर्मत्वाद्युन्नीय विवक्षितार्थाध्यवसायः स्यात्। न हि चेष्टाकलापप्रकरणादयः कारकविशेषानाक्षेप्तुमलं न तु पदकदम्ब इत्यस्ति नियमः, तथाच कालसङ्ख्या-कर्मत्वादिप्रतिपादकविभक्त्यादिसमभिव्याहारवैयर्थ्यप्रसङ्गः। कथं तर्हि ततोऽर्थव्यवहारः संशयप्रतिभयोरन्यतरस्मात् चेष्टास्मारितशब्दानामपि कर्मत्वाद्यन्वयप्रकारोपस्थापकविभक्त्यादेरभावात्। कथ-

---

कर्म्मत्वादिविशिष्टवाक्यार्थ एव सङ्केतः तत्र का गतिरिति वाच्यं। तत्र वाक्यार्थस्यैव सङ्केतविषयत्वेन पदार्थस्थानीयतया तत्स्मारकत्वेऽप्यननुभावकतया प्रमाणत्वाभावात्, उत्तरं 'संशयेति उत्कटकोटिकसंशयेत्यर्थः, विशेषोन्मेषः 'प्रतिभा'। आद्यपक्षमाक्षिपति 'चेष्टास्मारितेति, 'शब्दमात्रेणेति सङ्केतग्राहकशब्दस्य विभक्त्यादिमत एवानुभूतत्वात् तस्यैव स्मरणमित्यर्थः। नन्वीदृशचेष्टायां गेहे दश घटान् ज्ञास्यतीत्याकारेण तेन शब्देन न चेष्टान्यथासिद्धिः तस्याः गेहे दश घटाः सन्तीति भिन्नप्रकारकज्ञानजनक-

मन्वयबोधकत्वमिति चेत्, न, विभक्त्यादिमतामेव शब्दानां स्मरणात् शब्दमात्रेण सङ्केताग्रहात्। नन्वपभ्रंशात् कथं वाक्यार्थधीः तत्रान्वयप्रकारोपस्थापकविभक्त्यादेरभावात्। न च साधुशब्दस्मरणादिति वाच्यम्। साधुशब्दसङ्कथाविरहिणामपि पामराणा-

---

प्रमाणान्तरकल्पनागौरवमूलं, अतएव समयाधीनप्रवृत्तिकत्वं यदेव विभक्तिसमभिव्याहारसहकारितावच्छेदकत्वेनोक्तं तदेव विभाज-

---

कत्वात्। न च कर्म्मत्वाद्यनुपस्थिते न सान्वयबोधिका, स्वतन्त्रेच्छाया नियन्तुमशक्यतया यत्र चेष्टादिविशेषे कर्म्मत्वादिसङ्केतस्तत्रागतेः। यच्चोक्तं समयाधीनप्रवृत्तिकमानमात्रं प्रतीत्यादि तदप्ययुक्तं तथा सति मानमात्र एव तत्सहकारित्वापत्तेः लाघवात्। यदि च तद्विनापि प्रत्यक्षादिप्रवृत्तिदर्शनात् न तथा तदा चेष्टायामपि तुल्यं।

यत्तु संशयादिनैव व्यवहारान्यथासिद्धिर्न सा प्रमाणमिति, तदपि न, तथात्वे शब्दादेरपि प्रमाणत्वानुपपत्तेः शब्दादर्थं प्रत्येमीत्यनुव्यवसायस्यात्रापि तुल्यत्वात् तस्माच्चेष्टापि प्रमाणमेव समयाधीनप्रवृत्तिकत्वस्य विभाजकोपाधितया न विभागव्याघातोऽपीति, मैवं, संशयादेर्मानसनिश्चयाद्वा व्यवहारोपपत्तौ तत्प्रमाणत्वकल्पने गौरवात्। न चैवं शब्दादेरप्यनुपपत्तिः, इति भावः।

अनुमिनोमीत्यादिना विजातीयप्रमाणसिद्धौ फलबलेन तदनुकूलकल्पनात्। न हि तद्विषयकनिश्चायकान्तराभावस्तत्कल्पनावीजं पक्ष-साध्याद्युपस्थितौ सर्व्वत्र कविकाव्यमूलज्ञानवन्मानससंसर्गप्रत्ययसम्भवात् प्रकृते च विजातीयानुव्यवसायाभावेन प्रमाणान्तरत्वाभावात् शाब्दज्ञानानुव्यवसायाभावेन च

मर्थप्रत्ययात् साधुपदमात्रस्मरणेऽपि कर्मत्वाद्युपस्थापकविभक्त्यादेरभावाच्चेति चेत्, न, यथा हि पदार्थशक्तत्वेन ज्ञातादपभ्रंशात्पदार्थोपस्थितिः तथा विभक्त्यर्थकर्मत्वादिशक्तत्वेन ज्ञातादपभ्रंशैकदेशात् तत्तत्स्वरावच्छिन्नात् कर्मत्वाद्युपस्थितिः । अथ साधुशब्देऽन्वयप्रकारविभक्त्यादेः सहकारित्वं न तु चेष्टायां किन्तु तात्पर्यग्राहकत्वमात्रं सहकारीति चेत्, न, समयाधीनप्रवृत्तिकमानमात्रं प्रति तत्सहकारित्वात् । तद्विशेषशब्दस्य गुरुत्वादिति न सा प्रमाणान्तरम् । ऐतिह्यञ्चाप्तोक्तत्वेन शब्द एवान्तर्भवति । अर्थापत्त्यनुपलब्ध्योस्तु यथायथमन्तर्भावः प्रागेव चिन्तितः । अतः सिद्धं

---

कोपाधित्वेनोच्यतां अतो न विभागव्याघात इत्यपि निरस्तं, सति प्रमाणभेदे अनुगमकगवेषणादिति ।

---

शब्दान्तर्भावाभावाच्च चेष्टातोऽर्थं प्रत्येमीत्यनुव्यवसायस्य च तत्प्रयोजकतामादाय मानसज्ञानविषयत्वेनाप्युपपत्तेरिति दिक् । 'प्रमाणान्तरमिति । यद्यपि न प्रमाणमित्येव वक्तुमुचितं प्रमाणत्वस्यैवानभ्युपगमात्तथापि प्रमाणान्तरत्वमेवाशङ्कितमिति तदेव दूषितं । 'ऐतिह्यञ्चेति, अनाप्तोक्तत्वे तु प्रमाणान्तरमपि न बाधितत्वादिति भावः । न च सम्भवो मानान्तरमिति वाच्यं । द्विधा सम्भवः योग्यताकारो यथा सम्भवति मेघे जलमिति, निश्चयाकारश्च यथा सम्भवति सहस्रे शतमिति तत्राद्यो न प्रमाणं अनि-

चत्वारि प्रमाणानीत्यपरम्यते। धीराः कुशाग्रमतयो-भवतः प्रणम्य मौलौ निधाय करवारिरुहे समीहे। वाणीयमर्थरहितापि विशृङ्खलापि सानुग्रहेण हृदयेन विलोकनीया॥

इति महामहोपाध्यायश्रीमद्गङ्गेश्वरविरचिते तत्त्वचिन्तामणौ शब्दाख्यतुरीयखण्डे प्रमाणचतुष्टय-प्रामाण्यवादः समाप्तः, समाप्तश्च शब्दाख्यस्तुरीयः परिच्छेदः॥

---

इति महामहोपाध्यायतार्किकचूड़ामणिश्रीजयदेवमिश्रप्रकाशिते शब्दचिन्तामण्यालोके प्रमाणचतुष्टयप्रामाण्यवादालोकः।

---

ज्ञायकत्वात्, द्वितीयस्त्वविनाभावपुरस्कारादनुमानमेव, आर्षञ्च ज्ञानं पूर्व्वोक्तन्यायेन मानसमेव, एतच्च सर्व्वमभिसन्धाय सिद्धवदाह, 'सिद्धमिति। इति प्रकाशः।

# अथ शिरोमणिकृताख्यातशक्तिवादः ।



आख्यातस्य* यत्नवाचकत्वं पचति पाकं करोतीत्यादि-

## अथ शिरोमणिकृताख्यातशक्तिवादविवृतिः ।



कुञ्चिताधरपुटेन वादयन्
वंशिकां प्रचलदङ्गुलपङ्क्तिः ।
मोहयन्नखिलवामलोचनाः
पातु कोऽपि नवनीरदच्छविः ॥
श्रीमता मथुरानाथ-तर्कवागीशधीमता ।
आख्यातशक्तिवादस्य क्रियते विवृतिः शुभा ॥

आख्यातस्य शक्तिं निरूपयति, 'आख्यातस्येति, आख्यातं यत्न-

* यद्यपि तत्त्वचिन्तामणिकारप्रणीताख्यातवादग्रन्थः पूर्व्वं मुद्रितः तथापि शिरोमणिप्रणीताख्यातशक्तिवादग्रन्थः तदपेक्षया युक्तिपूर्णत्वेन अभिनव-रीत्या निर्म्मितत्वेनास्मिन् लोके दुर्लभत्वेनास्मल्लब्धपुस्तकस्य जीर्णप्रायत्वेन च तत्त्वचिन्तामणिग्रन्थशेषे मथुरानाथकृतविवृतिनामकव्याख्यानेन सह स्वातन्त्र्येण मुद्रित इत्यलं पल्लवितेन ।

'आख्यातस्येति आख्यातत्वं शक्तताबच्छेदकं यत्नत्वञ्च शक्यताबच्छेदक-मित्यर्थः, तत्राख्यातत्वं लत्वं वर्णत्वव्याप्यजातिविशेषः, त्यादयो लकारादेशाः, तथाचाप्रामस्य पचतीत्यादावादेशेन त्यादिना आदेशिनो लकारस्य स्मरणादेव

त्वावच्छिन्नशक्यताकमित्यर्थः, तेन वक्ष्यमाणहेतोर्न वैयधिकरण्यं। आख्यातत्वञ्च शङ्केतविशेषसम्बन्धेन आख्यातपदवत्त्वं, न तु जातिः, तिलादिना साङ्कर्य्यात् मानाभावाच्च। शक्ततावच्छेदकञ्च न तत्, किन्तु प्रत्येकं तिलादिकमेव, आख्यातत्वप्रकारेणाज्ञानदशायां तिलादिना ज्ञानात् शाब्दबोधमात्रस्य शक्तिभ्रमजन्यत्वप्रसङ्गात्, तिलादिना प्रकारेणाज्ञानदशायां तत्प्रकारेण ज्ञानात् शाब्दबोधानुदयस्य सर्व्वसिद्धत्वात्। यत्नत्वञ्च प्रवृत्तित्वं, प्रवृत्तित्वञ्च रागजन्यतावच्छेदकतया सिद्धं, अहं यते अहं प्रवृत्तोऽस्मि अहं करोमीत्यनुव्यवसायसाक्षिको निवृत्ति-जीवनयोनिव्यावृत्तो जातिविशेषः, निवृत्ति-जीवनयोनियत्नयोः रागाजन्यत्वात् तथानुव्यवसायविरहाच्च। चेष्टाजनकतावच्छेदकः स एव निवृत्तेश्चेष्टाजनकत्वविरहात्। सुषुप्तौ शरीरकर्म्मणः[१] चेष्टात्वे मानाभावात्,[२] तत्रापि[३] चेष्टात्वस्यानुभव-

(१) आकुञ्चनादेरित्यर्थः।

(२) न जीवनयोनियत्नस्य चेष्टाजनकत्वमिति शेषः।

(३) ननु चेष्टावत्त्वं शरीरत्वं सुषुप्तौ चेष्टाविरहे शरीरव्याघात इत्यत आह तत्रापीति।

---

यत्नत्वविशिष्टस्योपस्थिति-शाब्दबोधौ विशेषदर्शिनः। भ्रान्तस्य च त्यादावेव यत्नत्वविशिष्टशक्तिभ्रमादन्वयबोधः। न च त्यादेः ककारादेश्चत्वमादाय विनिगमकाभावः, सर्व्वत्रैव पाणिनिमुनिना त्यादीनां लकारादेशत्वबोधनं न तु ककारादीनामित्यस्यैव विनिगमकत्वादिति सम्प्रदायविदः। आख्यातपदात् त्यादयो बोद्धव्या इत्याकारकवैयाकरणपरिभाषाविषयत्वसम्बन्धेनाख्यातपादवत्त्वमेवाख्यातत्वं तेन रूपेण त्यादिषु तथा परिभाषा कृता न तु

शिद्धत्वे रागजन्यतावच्छेदकप्रवृत्तित्वव्यापको निवृत्तिव्यावृत्तो जीवनयोनियत्नसाधारणो जातिविशेष एव चेष्टाजनकतावच्छेदकः, स च नाख्यातस्य शक्यतावच्छेदकः तथासत्याख्यातस्य कृधातुपर्य्यायत्वानुपपत्तेः। सुषुप्तौ जीवनयोनियत्नसत्त्वेऽपि स्वारसिककरोतिव्यवहाराभावेन रागजन्यतावच्छेदकप्रवृत्तित्वस्यैव कृधातुशक्यतावच्छेदकत्वात्। एतेन प्रवृत्ति-निवृत्ति-जीवनयोनिसाधारणं गुणविभाजकं प्रयत्नत्वमेव आख्यातस्य शक्यतावच्छेदकं। न चैवं पाकगोचरनिवृत्तिदशायामपि पचतीत्यादिः प्रयोगः स्यादिति वाच्यं। निवृत्तेः क्रियानुकूलत्वाभावात् क्रियानिष्ठसाध्यत्वाख्यविलक्षणविषयत्वानिरूपकत्वाच्च। तथाच व्यवहारासम्भवात् आख्यातार्थप्रयत्न-धात्वर्थयोस्तादृशसम्बन्धेणैवान्वयस्य साकाङ्क्षत्वात् योग्यताभ्रमात् तथा प्रयोगस्येष्टत्वात्। प्रवृत्तित्वस्य शक्यतावच्छेदकत्वेऽपि लक्षणया

ककारादीनामित्यस्यैव विनिगमकत्वादिति, तित्वादिना वा यत्नत्वविशिष्टगोचरपदार्थस्मृति-शाब्दबोधावभ्रान्तस्य, भ्रान्तस्य च तित्वादिना शक्तिभ्रमादेव तावित्यन्ये। विनापि लत्वाख्यातपदवत्त्वयोर्ज्ञानं पचतीत्यादावभ्रान्तस्य शाब्दबोधदर्शनेन लत्वादिना शक्तिः तथाच तित्वादिकमेवाख्यातत्वं। न चैवं तिवादिभेदेन शक्तिभेदकल्पने गौरवं, प्रामाणिकतया तस्यादोषत्वात्। न च तिप्तसादीनां विष्णु-नारायणशब्दादीनामिव पर्य्यायतापत्तिः, इष्टत्वादित्यपरे। वेदत्वादिवदाख्यातत्वमखण्डोपाधिरिति नव्याः। एतेन धातुत्व-विभक्तित्वादयो व्याख्याताः। यत्नत्वञ्च घटं करोमि घटाय यतते इत्यादिप्रतीतिसिद्धजातिविशेषः। न च यत्नत्वं प्रवृत्ति-जीवनयोनियत्नसाधारणो जातिविशेषः इति सिद्धान्तः तद्व्याप्यापि जीवनयोनियत्नव्यावृत्तप्रवृत्तित्वाख्यजातिरस्ति तथाच तद्व्याप्यप्रवृत्तित्वजातेरप्याख्यातशक्य-

योग्यताभ्रमात् तदानीं तादृशप्रयोगस्य दुर्व्वारत्वात् इति कस्यचित् प्रलपितमप्यपास्तं। तथा सति आख्यातस्य कृधातुपर्य्यायत्वानुपपत्तेः गुणविभाजकप्रयत्नत्वस्य जातित्वे मानाभावेन प्रवृत्तित्वमपेक्ष्य तस्य गुरुत्वाच्च। न च प्रवृत्तित्वस्य शक्यतावच्छेदकत्वे चैत्रो निश्वसितीत्यादौ कथं श्वासानुकूलप्रयत्नानुभव इति वाच्यं। तत्र श्वासाश्रयत्वमात्रप्रतीतेः शरीरक्रियाविशेषस्य श्वासत्वात्। न च तथापि प्रवृत्तित्वस्य शक्यतावच्छेदकत्वे परमेश्वरो वेदं वक्ति परमेश्वरो वेदमुच्चारयति परमेश्वरो वेदं प्रयुङ्क्ते इत्यादौ कथं वेदाभिन्नशब्दानुकुलयत्नवत्त्वानुभवः वेदजनककण्ठाद्यभिघातानुकूलयत्नवत्त्वानुभवो वा इति वाच्यं। कार्य्यसामान्यं प्रत्यतिलघुतया व्याप्यधर्म्मतया च प्रवृत्तित्वस्यैव जनकतावच्छेदकत्वेऽपि भागवतप्रयत्नेऽपि प्रवृत्तित्वस्य धर्म्मिग्राहकप्रमाणसिद्धत्वात्। यद्वा तत्र वचादिधातोरेव यत्नसामान्यमर्थः, अनुकूलत्वं विषयत्वं वा कर्म्मविभक्त्यर्थः, आख्यातस्याश्रयत्वमर्थः, आख्यातस्यैव वा यत्नसामान्ये लक्षणा वचादिधातुस्तु कण्ठाद्यभिघातपर एव।

---

तावच्छेदकत्वसम्भवेन तदादाय विनिगमनाविरह इति वाच्यम्। तथा सति सुषुप्तिकाले चैत्रो निश्वसितीति प्रयोगाभावप्रसङ्गात् तदानीं प्राणक्रियारूपनिश्वासानुकूलप्रवृत्तेरभावात् प्रवृत्तिहेत्विष्टसाधनताज्ञानादेस्तदानीमभावेन प्रवृत्त्युत्पादासम्भवात्। न हि यत्नत्वस्य शक्यतावच्छेदकत्वेऽप्ययं दोषः, निश्वासानुकूलजीवनयोनियत्नस्य धर्म्माधर्म्मसहितात्ममनोयोगमात्रजन्यस्य सुषुप्तिकालेऽप्युत्पत्तेः। न च निवृत्त्याख्ययत्नत्वस्य कुत्राप्याख्यातपदाप्रतिपाद्यतया यत्नत्वस्यातिप्रसक्तत्वेन न शक्यतावच्छेदकत्वं अन्यथा सत्त्व-गुण-

केचित्तु परमेश्वरपदं तदीयकण्ठपरं, वचादिधातोः कण्ठाद्य-भिघात एवार्थः, आख्यातस्य आश्रयत्वमेवार्थः, आख्यातस्यैव वा परम्परासम्बन्धविशेषेणाश्रयत्वमर्थः, तथाच परमेश्वरपदं यथाश्रुत-मेवेत्याहुः ।

तथासति प्रतिपादकताविशेषसम्बन्धेन क्वधातुसत्त्वादिति हेतु-रुह्य, विशेषेत्युपादानात् आत्मादौ न व्यभिचारः । नन्वयं हेतुरसिद्ध इत्यत आह, 'पचतीति, पचति पाकं करोतीत्यादि-वाक्यमध्यवर्त्तिना यत्नार्थककरोतिना यत्नशक्तक्वधातुना सर्व्वाख्याता-

---

त्वादेरप्याख्यातशक्यतावच्छेदकत्वं अनुकूलताविशेषस्य संसर्गत्वाच्च पचती-त्यादौ न ज्ञानादीनां बोधः इत्यस्य सुवचत्वादिति वाच्यम् । पचतीत्यादौ सत्त्व-गुणत्वादिनैव यत्नस्य शाब्दबोधाभ्युपगमे पचतीत्यादिशाब्दबोधानन्तरं चैत्र· पाकानुकूलयत्नवान्न वेति संशयादिप्रसङ्गात् अप्रसङ्गाच्च चैत्रः पाकानुकूलगुणवान्न वेत्यादेरिति निवृत्तिसाधारणमपि यत्नत्वमेव शक्यता-वच्छेदकं स्वीक्रियते । न च ईश्वरः पचतीति प्रयोगापत्तिः कार्य्यमात्रहेतु-भूताया ईश्वरकृतेः पाकस्याप्यनुकूलत्वादिति वाच्यम् । ईश्वरकृतिव्यावृत्तस्य पाकानुकूलत्वस्यैव पचतीत्यादौ वाक्यार्थत्वाभ्युपगमात् । अस्तु वा ईश्वरो जगत् सृजतीत्यादिवदीश्वरः पचतीत्यादिप्रयोगे इष्टापत्तिरिति ।

यत्तु रागजन्यतावच्छेदकं प्रवृत्तित्वावान्तरवैजात्यमेवाख्यातशक्यता-वच्छेदकमिति पाकानुकूलतादृशविजातीयप्रवृत्तेरीश्वरावृत्तित्वादीश्वरः पच-तीति न प्रयोगः इति तदसत्, तथा सतीश्वरो जगत् सृजतीति प्रयोगा-भावप्रसङ्गात् सुषुप्तिदशायां चैत्रो निश्वसितीति प्रयोगाभावप्रसङ्ग इत्यस्या-प्युक्तत्वाच्च इति दिक् । नन्वाख्यातस्य यत्नत्वविशिष्टे शक्तिग्रहः कुत इत्या-काङ्क्षायामाह, 'पचतीत्यादि, 'यत्नार्थकेति यत्नार्थको यः करोतेः क्वधातु-

यत्नार्थककरोतिना सर्व्वाख्यातविवरणात्। व्यवहारा-
दिव बाधकं विना विवरणादपि व्युत्पत्तेः किञ्च-

नां लट्त्वादिरूपसकलाख्यातविभाजकतावच्छेदकधर्म्मावच्छिन्नानां विवरणात् स्वशक्यप्रतिपादकताप्रमाजननात्। 'आदिपदात् पक्ष्यति पाकं करिष्यति अपचत् पाकमकरोत् इत्यादिपरिग्रहः, आदि-पदापूरणे पाकं करोतीत्यत्र करोतिना पक्ष्यतीत्यादेरविवरणा-दसङ्गतत्वापत्तेः। 'सर्व्वाख्यातविवरणादित्यस्य सर्व्वैराख्यातविवरणा-दित्यर्थः, इति केचित्। अयं भावः पचति पाकं करोतीत्यादि-विवरणेषु पचतिपदं स्वपरतया पचपदपरं तिपदपरञ्च, पाकपद-समभिव्याहारेण कृधातुः पाकसमानार्थकत्व-कृञ्समानार्थकत्वपरः, आश्रयत्वमाख्यातार्थः, एवञ्च पचपदं पाकसमानार्थकं, तिपदं कृञ्-समानार्थकमित्यादिबोधः। एवं सर्व्वत्रैव विवरणे चरमपदे एव तत्पदसमभिव्याहारेण तत्तत्समानार्थकत्वे लक्षणा। अतएव येन समानार्थकतया यत् बोध्यते तत् तस्य विवरणमिति प्रामाणिकाः। ननु तथापि शक्यप्रतिपादकताविशेषसम्बन्धेन कृधातुमत्त्वं लक्षणा-दिना कृधातुशक्यप्रतिपादके शब्दे अनैकान्तिकमित्यत आह, 'व्यवहारादिवेति, 'बाधकं विना' स्वसाध्यबाधकं यद्विशेषणं तद-भाववत्त्वविशेषणसहकारेण, 'व्युत्पत्तेः' व्युत्पत्तिसम्भवात् शक्तिग्रह-

---

स्तेन सर्व्वाख्यातार्थकथनादित्यर्थः। ननु विवरणस्य शक्तिग्राहकत्वे अप-सिद्धान्तः शक्तिग्राहस्य मध्ये विवरणस्यागणनादित्यत आह, 'बाधकं विनेति गौरवस्यान्यलभ्यत्वादिरूपबाधकाभावे सतीत्यर्थः, तेन स्थाली पचतीत्यादौ

सम्भवादिति यावत्। गवादिपदव्यवहारो यथा गवादिपदशक्यत्व-स्वरूप-स्वभाव्यस्य बाधकं यद्विशेषणं लक्षणा-शक्तिभ्रमजन्यप्रतिपत्तिविषयतासम्बन्धेन गवादिव्यवहारवत्त्वं तदभाववत्त्वे सतीति विशेषणविशिष्टीभूय प्रतिपाद्यतासम्बन्धेन गवादौ गवादिपदशक्तिसाधकः, तथा कृधातुमत्त्वादिरूपविवरणमपि प्रवृत्तित्वावच्छिन्नशक्यताकत्वादिरूपस्वभाव्यस्य बाधकं यद्विशेषणं लक्षणा-शक्तिभ्रमजन्यस्वशक्यप्रतिपत्तिजनकतासम्बन्धेन कृधातुमत्त्वं तदभाववत्त्वे सतीति विशेषणविशिष्टीभूय स्वशक्यप्रतिपादकताविशेषसम्बन्धेन प्रवृत्तावाख्यातादेः शक्तिसाधकमित्यर्थः, तथाच निरुक्तबाधकाभाववत्त्वं हेतौ विशेषणं देयमिति भावः। अतएव "शक्तिग्रहं व्याकरणोपमान-कोषाप्तवाक्याद्व्यवहारतश्च। वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः" ॥ इति पठन्ति। तत्रानुमानपदं व्यवहारादीतरानुमानपरं, तेन व्यवहारादेर्न पृथगुपादानविरोधः।

पाकानुकूलव्यापारस्य विवरणेऽपि न व्यापारत्वविशिष्टे शक्तिः यत्नत्वापेक्षया व्यापारत्वस्य गुरुत्वमेव बाधकं एवं पचति पाकयत्नवान् इत्यादिना धर्मिणो विवरणेऽपि तत्रान्यलभ्यत्वमेव बाधकमिति भावः। तदाहुः "शक्तिग्रहं व्याकरणोपमान-कोषाप्तवाक्याद्व्यवहारतश्च। वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः" ॥ 'विवृतिः' विवरणमित्यर्थ इति, तथाच शक्तिग्राहकाणां मध्ये विवरणस्यापि शक्तिग्राहकत्वमुक्तमिति न सिद्धान्त-विरोधः। विवरणस्य शक्तिग्राहकता च व्यवहारस्येव अनुमानोत्थापकतया तथा हि पचतीत्यादावाख्यातपदं यत्नत्वविशिष्टे शक्तं यत्नत्वविशिष्टार्थक-कृधातुप्रतिपाद्यार्थकशब्दत्वादित्याद्येवानुमानं, अत्र च कृधातुप्रतिपाद्यार्थकत्वरूपं विवरणं हेतुघटकमिति शक्तिग्राहकानुमानहेतुघटकत्वमेव

साम्प्रदायिकास्तु नन्वाख्यातस्य किं शक्यमित्यत आह, 'आख्यातत्वेति यत्र आख्यातस्य वाच्य इति यथाश्रुत एवार्थः। ननु तस्याख्यातपदवाच्यत्वे किं मानमित्यत आह, 'पचतीति, अभेदे तृतीया, अन्वयश्चास्य विवरणे, विवरणं स्वसमानार्थकत्वज्ञापनं, ज्ञापनं ज्ञानानुकूलः शब्दः, प्रमाणत्वं पञ्चम्यर्थः, तथाच विवरणमेव मानमिति भावः। ननु विवरणस्य शक्तिप्रमापकत्वं न शब्दविधया शक्तेः पदार्थत्व-वाक्यार्थत्वयोरभावादत आह, 'व्यवहारादिवेति, तथाचानुमानविधयैव तस्य शक्तिसाधकत्वमिति भावः। अनुमानश्चोक्तरूपमिति व्याचक्षुः।

ननु विवरणेन कृधातुशक्यप्रतिपादकत्वं तिवादेर्न बोधितं,

---

विवरणस्य शक्तिग्राहकत्वपदार्थ इति भावः। न च व्यवहारस्य शक्तिग्राहकत्वाभावेन 'व्यवहारादिवेति दृष्टान्तविरोध इति वाच्यम्। घटपदं घटत्वविशिष्टे शक्तं लक्षणाद्यजन्यघटत्वविशिष्टबोधजनकपदत्वादित्यनुमाने घटत्वविशिष्टबोधकत्वरूपव्यवहारस्य हेतुघटकतया शक्तिग्राहकानुमानोत्थापकत्वसम्भवात् 'व्युत्पत्तेः' शक्तिग्रहात्, व्युत्पत्तिपदस्य शक्तिवाचकत्ववत् शक्तिग्रहवाचकत्वादिति भावः। ननु नैयायिकानां यत्नत्वविशिष्टे आख्यातस्य विवरणवत् मीमांसकानां व्यापारेऽपि विवरणात् व्यापारत्वविशिष्टेऽपि शक्तिः स्यादिति न विवरणस्य शक्तिग्राहकतेत्यत आह, 'किं करोतीति कृतित्वविशिष्टधर्म्मिक-किञ्चिद्धर्म्मप्रकारकजिज्ञासाविषयः किंशब्दार्थः, 'किमिति क्रियाविशेषणं, तथाच किं करोतीत्यस्य तादृशजिज्ञासाविषयाभिन्नकृतिमानित्यर्थः, क्रियाविशेषणस्याभेदेनान्वयस्य व्युत्पन्नत्वात्। न च किमित्यत्र द्वितीयाया अनुकूलत्वमर्थः, तथा सति विषयेणोत्तरस्यानुपपत्तिप्रसङ्गादिति भावः। अस्तु वा विषयत्वमेव द्वितीयार्थः, तादृशजिज्ञासा च

रोतीत्यादियत्नप्रश्ने पचतीत्याद्युत्तरस्य यत्नार्थकत्वं विनानुपपत्तेश्च । अचेतने रथो गच्छतीत्यादौ च अनु-

---

अपि तु कृधातुप्रतिपाद्यप्रतिपादकत्वं, तच्च लक्षणया कृधातोः प्रतिपाद्यस्य व्यापारादेः प्रतिपादकत्वेऽपि निर्व्वहतीत्यरुचेराह, 'किं करोतीति किंविषयकत्वप्रकारकप्रवृत्तित्वविशिष्टविशेष्यकप्रश्ने सतीत्यर्थः, किंविषयकत्वं जिज्ञासितविषयकत्वं, किंशब्दस्य जिज्ञासितवाचकत्वात् । 'यत्नार्थकत्वं विना' आख्यातस्य प्रवृत्तित्वविशिष्टार्थकत्वं विना, 'अनुपपत्तेरिति जिज्ञासानिवर्त्तकत्वानुपपत्तेरित्यर्थः । यद्रूपविशिष्टे जिज्ञासितस्य तत्सम्बन्धः प्रश्नवाक्येन बोध्यते परिशिष्टे विशिष्य तत्सम्बन्धज्ञानेनैव जिज्ञासानिवृत्तेरिति भावः । तथाच आख्यातं प्रवृत्तित्वावच्छिन्नशक्यताकं प्रवृत्तित्वविशिष्टे जिज्ञासायानिवर्त्तकस्य ज्ञानस्य जनकत्वात् इत्यनुमानप्रकारोऽवसेयः । तत्रापि लक्षणा-शक्तिभ्रमाजन्यत्वेन ज्ञानं विशेषणीयं, तेन लक्षणया प्रवृत्तिबोधके शब्दे न व्यभिचारः । न च लक्षणा-शक्तिभ्रमाद्यजन्यप्रवृत्तित्वविशिष्टविषयकज्ञानजनकत्वादित्येवास्त्विति वाच्यं । हेत्वन्तरसम्भवस्य हेत्वन्तरादूषकत्वादिति निगर्व्वः । ननु पूर्व्वहेतौ निरुक्तबाध-

---

किंशब्दार्थ इति, 'यत्नार्थकत्वं विनेति पचतीत्यस्य यत्नत्वविशिष्टार्थकत्वविरहे पचतीत्यतो यत्नत्वविशिष्टधर्म्मिकपाकप्रकारकबोधो न स्यात् तथाच प्रश्नप्रतिपादितजिज्ञासानिवर्त्तकज्ञानजनकवाक्यत्वरूपमुत्तरत्वं पचतीति वाक्ये न स्यादित्यर्थः । नन्वाख्यातस्य यत्नत्वविशिष्टार्थकत्वे रथो गच्छतीत्यादिवाक्यस्यायोग्यत्वापत्तिः अचेतने रथादौ गमनानुकूलकृतेर्बाधादित्यत आह, 'अचेतन इत्यादि अचेतनविशेष्यकबोधजनक इत्यर्थः, 'अनुकूलेत्यादि,

कूलव्यापारे लक्षणा। अन्यदीयगमनानुकूलनोदना-

---

काभाववत्त्वविशेषणं अत्र तु लक्षणा-शक्तिभ्रमाद्यजन्यत्वं ज्ञानविशे-षणमप्रसिद्धं प्रवृत्तित्वस्याख्यातशक्यतावच्छेदकत्वे रथो गच्छतीत्या-दिवाक्यस्यायोग्यत्वापत्त्या अनुकूलव्यापारादावाख्यातस्य शक्तेः रथा-देरचेतनतया चैतन्याद्यनवच्छेदकतया च तत्र प्रवृत्तिमत्त्वासम्भवात्। अपचत्यपि चैत्रादौ कालिकादियत्किञ्चित्सम्बन्धेन प्रवृत्तिमत्त्व-मादाय चैत्रः पचतीत्यादिव्यवहारवारणाय समवायावच्छेदकतान्य-तरसम्बन्धेनैव कर्त्तृपदार्थे आख्यातार्थयत्नान्वयस्य साकाङ्क्षत्वमित्य-भ्युपेयत्वात्, आत्मा पचतीत्यादिप्रयोगानभ्युपगमे समवायोऽपि नान्तर्भावनीयः, परमेश्वरो वेदं वक्तीत्यादौ परमेश्वरपदस्य तच्छरीरपरत्व एव योग्यत्वं न तु परमात्मपरत्व इति साकाङ्क्षेण स्वीकरणीयमित्याशङ्कां प्राचीनमतमाश्रित्य परिहरति, 'अचेतन-इत्यादिना, 'अचेतने' अचेतनविशेष्यकाख्यातार्थप्रकारकबुद्धिजनके, 'अचेतनत्वं' समवायावच्छेदकत्वान्यतरसम्बन्धेन चैतन्यवतो भिन्नत्वं, तेन चैत्रः पचतीत्यादेर्न सङ्ग्रहः, तण्डुलः पच्यत इत्यादेर्व्यवच्छेदार्थ-मुक्तं 'रथोगच्छतीत्यादाविति, तेन कर्त्तृरहिताख्यात इति लभ्यते, 'चः' त्वर्थः। 'अनुकूलव्यापारे लक्षणेति अनुकूलव्यापारे निरूढलक्ष-

---

तथाच रथोगच्छतीत्यादौ गमनानुकूलव्यापारात्मकनोदनाभिघातादिरेव रथादावस्तीति नायोग्यतेति भावः। इदञ्च प्राचीनमतं एतन्मतं दूषयितुं स्वमतं दर्शयितुमाह, 'अन्यदीयेत्यादि, 'अन्यदीयेत्यादिकमारभ्य 'नव्या-इत्यन्त एको ग्रन्थः। रथीयगमनानुकूलनोदनादिमति निश्चले हस्त्यादा-वित्यर्थः। ननु गमनोपहितव्यापार एव गच्छतीत्यस्यार्थो वाच्य इति

दिमति गच्छतीत्यप्रयोगात् जानातीच्छति-यतते-द्वेष्टि-

णेत्यर्थः, यादृशलक्षणया प्रयोगे कथायां वादिनो न निग्रहः सैव लक्षणा निरूढ़ा, अनुकूलत्वस्य धात्वर्थाख्यातार्थव्यापारयोः संसर्गतया स्फोरणायानुकूलत्वेनोपादानं, न तु लक्ष्यतावच्छेदके तदन्तर्भावः। व्यापारत्वञ्च कार्य्यत्वं तच्च प्रतियोगितासम्बन्धेन ध्वंसवत्त्वं, प्रागभाववत्त्वं वा व्यापारत्वं। व्यापारे निरूढ़िलक्षणामतं दूषयन् मतान्तरमाह, 'अन्यदीयेत्यादिना 'नव्या इत्यन्तेन, 'अन्यदीयत्वं रथादिनिष्ठत्वं, 'नोदनादिमतीति, निष्ठत्व इति शेषः, 'आदिपदादभिघातादृष्टवदात्मसंयोगादिपरिग्रहः, 'अप्रयोगादित्यादेः पञ्चम्यन्तचयस्य 'आश्रयत्वे निरूढ़िलक्षणा' इत्यग्रेतनेनान्वयः। ननु विशिष्टाधारत्वसम्बन्धेनैव कर्त्तृपदार्थे गमनवद्व्यापारान्वयस्य साकाङ्क्षत्वात् गमनविशिष्टव्यापारस्य च निष्ठत्वे विरहान्नायमतिप्रसङ्ग इत्यत आह, 'जानातीत्यादि, तथाचावश्यकल्पनीयाश्रयत्वे निरूढ़िलक्षणयैवोपपत्तौ नानुकूलव्यापारे निरूढ़िलक्षणा कल्प्यत इति भावः। अत्र चक्षुर्जानातीत्यादौ व्यापारस्यापि प्रत्ययादुक्तं 'इच्छतीति, अत्र याग-श्राद्धलक्षणेच्छायां तदनुकूलप्रवृत्तेरपि प्रत्ययादुक्तं 'यतते द्वेष्टीति, यत्न-द्वेषयोस्तु प्रवृत्तिजनकत्वमसम्भाव्यमेवेति भावः। उक्तेषु प्रवृत्तिव्यापारयोरप्रतीतावपि आत्म-मनोयोगादिरूपो व्यापार-आत्मनि सम्भवत्येव, अतिप्रसङ्गनिरासोऽपि धात्वर्थविशिष्टनिरूपि-

गोक्तदोष इत्यत आह, 'जानातीति, 'गच्छतीत्यादिचिकमुदाहरणाकाङ्क्ष्य-प्रदर्शनाय। ननु जानातीत्यादौ ज्ञानानुकूलोव्यापार आत्मनि मनो-

विद्यते-निद्रातीत्यादौ च क्रियानुकूलकृति-व्यापारयो-

---

ताधारत्वस्य सम्बन्धत्वनियमाभ्युपगमादेव सम्भवतीत्यनुशयेनोक्तं 'विद्यते निद्रातीति, विदेः कालसम्बन्धित्वमर्थः, तदनुकूलकृति-व्यापारयोस्तु न घटत्वादौ सम्भवः, एवं मेध्याख्यनाडीविशेषावच्छेदे-नात्ममनःसंयोगो निद्रा, मेध्यात्वञ्च पुरीततिसाधारणोनाडीविशे-षवृत्तिजातिविशेषः, तेन सुषुप्तौ निद्रातीति प्रयोगो नानुपपन्नः। तादृशनिद्राश्रयत्वव्यवहारस्त्वात्मनि मनोव्यावृत्तेनात्मत्वविशिष्टसमवा-यसम्बन्धेन, शरीरे च स्वसमवायिसमवेतादृष्टारभ्यत्वलक्षणपरम्परा-सम्बन्धेन, असाधारणतदनुकूलताश्रयो व्यापारस्तु न क्वचिदात्मनि सम्भवतीति भावः। वस्तुतस्तु 'विद्यते इत्यस्य पूर्व्वं 'निद्रातीति पाठः, 'निद्रा च मेध्याख्यनाडीविशेषमनःसंयोगः, तदाश्रयत्वव्यव-

योगादिरेव प्रतीयतां इत्यत आह, 'विद्यत इति धात्वर्थस्य वर्त्तमान-कालसम्बन्धादेरनुकूलव्यापारस्य गगनादौ बाधात् गगनं विद्यत इत्यस्या-नुपपत्तिरित्यर्थः, 'निद्रातीति, मेध्यानामनाड़ीविशेषेण मनसः संयोगो निद्रा स च संयोग आत्मनि स्वाश्रयमनःप्रतियोगिकविलक्षणसंयोग-लक्षणपरम्परासम्बन्धेन वर्त्तते इत्ययं पुरुषो निद्रातीति प्रयोग उप-पद्यते विलक्षणसंयोगस्य तत्तदात्मीयादृष्टाकृष्टमनसि तत्तदात्मीयताव्यव-हारनियामकतया सिद्धः केवलमात्म-मनसोरेव एवं मनःप्रतियोगिकसंयो-गेन मनो न मनसीति मेध्या निद्राति मनो निद्राति इत्यादयो न प्रयोगाः। न च निरुक्तपरम्परासम्बन्धेन मेध्यान्तःकरणसंयोगो यथा आत्मनि वर्त्तते तथा तदनुकूलव्यापारो मेध्याक्रिया मनःक्रिया वा स्व-जन्यमेध्यान्तःकरणसंयोगाश्रयमनःप्रतियोगिकविलक्षणसंयोगेनात्मनि वर्त्तते

व्हारस्य आत्मनि स्वसमवायिसमवेतशरीरारम्भकादृष्टवत्त्वरूपेण, स्वसमवाय्यारम्भकादृष्टवत्त्वरूपेण वा परम्परासम्बन्धेन, शरीरे च स्वसमवायिसमवेतद्रव्यत्वलक्षणेन परम्परासम्बन्धेन, असाधारणतदनुकूलताश्रयो व्यापारस्य न कश्चिदात्मनि सम्भवतीति भावः। यथा स्वसमवायिसमवेतशरीरारम्भकादृष्टवत्त्वादिरूपपरम्परासम्बन्धेन तादृशनिद्राश्रयत्वमात्मनः तथा तदनुकूलव्यापारस्य नाडीक्रियादेरप्यात्मनि तेन सम्बन्धेन सत्त्वसम्भवादुक्तं 'विद्यत इति, कालसम्बन्धित्वरूपस्य विद्यमानत्वस्य चानुकूलव्यापारो न कश्चिद्घटत्वादौ सम्भवतीति भावः।

यत्तु विदेः सत्तार्थकतया तदनुकूलव्यापारएवासम्भव इति भाव इति, तन्न, सत्ताजातेस्तदर्थत्वे अविद्यतेत्यादौ ह्यस्तन्याद्यर्थातीतत्वाद्यन्वयापत्तेः।

---

इत्यत्र क्रियानुकूलव्यापारबोधः सम्भवत्येवेति वाच्यम्। तादृशपरम्परासम्बन्धेन तदनुकूलव्यापारस्यात्मनि विशिष्टबुद्ध्यभावेन तादृशपरम्परायाः सम्बन्धत्वे मानाभावात् मेध्यान्तःकरणसंयोगस्य च उक्तपरम्परासम्बन्धेनात्मनि विशिष्टबुद्ध्या उक्तपरम्परायाः सम्बन्धत्वमावश्यकं अन्यथा स्वनिद्रायाविशिष्टबुद्ध्यनुत्पादापत्तेः। अतएव यत्र प्रयत्नयोग्यनाड्यवच्छेदेन प्रयत्ने जाते तेन प्रयत्नेन तन्नाड़ीकर्म्म जायते तेन च कर्म्मणा तन्नाड्या मनसि मेध्यायां वा नोदनाभिघातौ जायेते ततो मनसो मेध्याया वा कर्म्मोत्पत्तिः तदनन्तरं उत्तरदेशे मनसि मेध्यायां वा मेध्याया मनसो वा संयोगस्तत्र मेध्या-मनःसंयोगानुकूलायास्तत्तन्नाड्यवच्छिन्नकृतेरात्मनि सम्भवेन कथं तादृशकृतेरप्रतीत्यभिधानमित्यपास्तम्। ईदृशानुकूलत्वसम्बन्धेन धात्वर्थस्याख्यातार्थे अन्वयविरहात्। अन्यथा तण्डुलक्रयणानुकूलकृतावपि तुल्य-

रप्रतीतेः गत्यादिमत्त्वमात्रप्रतीतेश्चाश्रयत्वे नश्यती-

ननु जानातीत्यादावाश्रयत्वस्य रथोगच्छतीत्यादौ गमनादि-विशिष्टव्यापारवत्त्वस्यापि प्रत्ययात् तत्रापि निरूढिलक्षणा दुर्व्वारै-वेत्यत आह, 'गत्यादीति रथो गच्छतीत्यादौ गत्याद्याश्रयत्वमात्र-प्रतीतेरित्यर्थः, 'आदिपदादर्थस्त्यजतीत्यादौ त्यागादेः परिग्रहः, न तु पूर्व्वोक्तेषु जानातीत्यादिषु ज्ञानादेः परिग्रहः मात्रांशस्य पुनरुक्त-तापत्तेः। अतएव जानातीत्यस्य पूर्व्वं गच्छतीति पाठः प्रामादिकः, क्वचित्तत्र मात्रपदसम्वलितो न पाठः जानातीत्यस्य पूर्व्वं गच्छती-त्यपि पाठः। तत्र गच्छति-जानातीत्यादौ धात्वर्थानुकूलकृति-

---

न्यायेन पाकादेरनुकूलत्वसम्बन्धेनान्वयापत्त्या अपचत्यपि तादृशक्रियकर्त्तरि पचतीतिप्रसङ्गात्, अत्र च क्रियानुकूलकृति-व्यापारयोरप्रतीतेराश्रयत्वे निरूढलक्षणेत्यर्थः, गच्छतीत्यादौ कर्त्राख्याते आश्रयत्वे निरूढलक्षणा वाच्येत्यर्थः, क्रियानुकूलकृति-व्यापारयोः प्रतीतौ शक्त्यैव बोधः स्यादिति निरूढलक्षणायां मानाभाव एव स्यादित्यप्रतीत्यन्तमुक्तं, लक्षणाया निरूढ-त्वञ्चानादितात्पर्य्यानादिप्रयोगयोः सामानाधिकरण्यम्। न चैवमनादितात्प-र्य्यानादिप्रयोगयोः सत्त्वे घटादौ घटपदादिवत् कर्त्राख्यातस्याप्याश्रयत्वे शक्ति-रेव कल्प्यतामिति वाच्यम्। यत्र लघ्वर्थे गुर्व्वर्थे चानादितात्पर्य्यानादि-प्रयोगौ तुल्यौ तत्र लाघवेन लघ्वर्थे शक्तिर्गुर्व्वर्थे निरूढलक्षणेति सर्व्वसिद्धं, अन्यथा नीलादिपदस्य नीलरूपादाविव नीलरूपवदादावपि शक्तिप्रसङ्गात् अनादितात्पर्य्यानादिप्रयोगयोरुभयत्र तुल्यत्वात्, तथाच प्रकृतेऽप्याख्यातस्य कृतौ आश्रयत्वे च तयोस्तुल्यत्वे कृतावेव शक्तिकल्पनं युक्तं न त्वाश्रयत्वे, आश्रयतात्वस्य जातीतरत्वेन कृतित्वजात्यपेक्षया गुरुत्वात् सामान्यत्व-विशे-षत्ववत् जातित्ववदितरत्वेत्यादावपि लाघव-गौरवपदार्थत्वादिति भावः।

त्यादौ प्रतियोगित्वे निरूढ़िलक्षणा। चैत्रः पचति

व्यापारयोरप्रतीतावप्याश्रयत्वस्य प्रतीतौ न तत्र लक्षणासम्भव इत्यत-उक्तं 'गत्यादौति, 'आदिना ज्ञानादिपरिग्रहः इति ध्येयं। 'आश्रयत्व-इति 'निरूढ़िलक्षणा इत्यग्रेतनेनान्वयः, ज्ञानादीनां चतुर्णामाश्र-

इत्यत्र निरूढ़त्वेन शक्तिकल्पनप्रसक्तिवारणाय 'निरूढ़ेत्युक्तं, तथाच निरू-ढ़ापि अनादितात्पर्य्यानादिप्रयोगसमानाधिकरणाप्याश्रयत्वांशे आख्यातस्य वृत्तिर्लक्षणैव न तु शक्तिरुक्तयुक्तेरिति निरूढ़लक्षणेत्यस्यार्थो बोध्यः, अन्यथा निरूढ़त्वप्रदर्शनस्यानुपयोगित्वापत्तेरिति दिक्। 'गच्छतीति, गच्छतीत्यादि-प्रयोगनियतत्वमेव निरूढ़त्वमित्यपि कश्चित्। ननु गच्छतीत्यादौ क्रियानुकूल-कृति-व्यापारयोरप्रतीत्या आख्यातस्य कृति-व्यापारबोधकत्वाभाव एवायाति न तु तत्राश्रयत्वे निरूढ़लक्षणेत्यत आह, 'गत्यादौति, 'आदिपदेन ज्ञानादिपरिग्रहः, 'मतुवर्थ आश्रयत्वं, 'मात्रपदस्य सम्पातायातं, गत्याश्रयत्व-प्रतीतेरेव तत्राश्रयत्वलक्षणासाधकत्वात्। यद्वा अननुगत्या आश्रयत्व-प्रतीतिमात्रं यदि आश्रयत्वनिरूढ़लक्षणासाधकं तदा गङ्गायां घोष इत्यादौ तीरादिबोधकत्वेन गङ्गापदादेरपि तीरादौ निरूढ़लक्षणापत्तिरित्याशङ्का-मपाकर्तुं मात्रपदमुक्तं, तथाच गङ्गायां घोष इत्यादौ गङ्गापदात् कदाचित् तीरबोधः कदाचिच्च गृहादिबोध इत्येकत्राप्यनादिप्रयोगानादितात्पर्य्ययोर-भावेन न निरूढ़लक्षणा गच्छतीत्यादौ सर्व्वस्मिन् काले सर्व्वेण पुरुषेण गत्याश्रयत्वमेव प्रतीयते न त्वर्थान्तरमिति तत्राश्रयत्वे निरूढ़लक्षणेत्यर्थः।

यत्तु अचेतनस्थलीये रथो गच्छतीत्यादौ गत्याश्रयत्वं सचेतनस्थलीये चैत्रो गच्छतीत्यादौ च गमनानुकूलकृतिरर्थः सापि आत्मा गच्छतीत्यादौ समवायेन चैत्रो गच्छतीत्यादाववच्छेदकतासम्बन्धेनेति, तत्तुच्छम्। तथा-सत्यर्थतोभेदेन व्युत्पत्तिभेदकल्पनापत्तेस्तस्मात् चेतनाचेतनसाधारणमा-श्रयत्वमेव गच्छतीत्यादावर्थः आश्रयतात्वञ्च सर्व्वाश्रयत्वसाधारणमेकं तेन च

यत्वं समवायेनावच्छेदकतया च बोध्यं। तेनात्मनि चैत्रादिशरीरे च जानातीत्यादिप्रयोगोपपत्तिः न वा घटो जानातीत्यादिप्रयोगापत्तिः, गत्यादेराश्रयत्वञ्च समवायेनैव वाच्यं तेन यथाकथञ्चित् सम्बन्धेनाश्रयत्वमादाय नातिप्रसङ्गः। न चैवमात्मा गच्छतीत्यादिप्रयोगो न स्यादिति वाच्यं। इष्टत्वात्। अहं गच्छामि त्वं गच्छसीत्यादौ उच्चारयित्रादिशरीरस्यैव चैत्रत्वादिरूपेणास्मदादिपदशक्यतया नानुपपत्तिः। अतएव आत्मा पचतीत्यादिप्रयोगवारणाय अवच्छेदकतासम्बन्धेनैव कर्त्तृपदार्थस्य आख्यातार्थयत्नान्वयस्य साकाङ्क्षत्ववादिनयेऽपि त्वं पचसि अहं पचामीत्यादौ नान्वयानुपपत्तिः। उच्चारयित्रादिशरीरस्यैव चैत्रत्वादिरूपेण युष्मदादिशब्दवाच्यतया अवच्छेदकतासम्बन्धेनैव प्रवृत्तेस्तत्रान्वयसम्भवादिति ध्येयं। ननु तथाप्यनुकूलव्यापारे निरूढ़िलक्षणा आवश्यकी वर्णो नश्यती-

---

रूपेण क्वचित् समवायसम्बन्धावच्छिन्नं क्वचिदवच्छेदकतासम्बन्धावच्छिन्नं क्वचित् परम्परासम्बन्धावच्छिन्नं आश्रयत्वं प्रतीयते, आद्यं चैत्रो गच्छतीत्यादौ, द्वितीयं चैत्रो जानातीत्यादौ, तृतीयं चैत्रो निद्रातीत्यादौ। ननु घटो नश्यतीत्यादौ नाशानुकूलकृति-व्यापारयोर्बाधादेव नान्वयः। न च संयोगादिनाशानुकूलव्यापारस्य क्रियादेर्घटादिवृत्तित्वेन न तत्र बाधः, तथा सति विद्यमानेऽपि तादृशे घटे अयं घटो नश्यतीति प्रयोगप्रसङ्गात्, एतेन गच्छतीत्यादौ गत्याश्रयत्वादिवत् नश्यतीत्यादावपि नाशाश्रयत्वमर्थ इत्यपास्तम्। तथासति विद्यमाने संयोगादिनाशिनि अयं नश्यतीत्यादिप्रयोगप्रसङ्गात् इत्यत आह, 'नश्यतीत्यादाविति, 'प्रतियोगित्व इति। न चैवमपि भाविनाशप्रतियोगितामादाय विद्यमानेऽपि घटे नश्यतीति प्रयोगापत्तिः, आख्यातार्थवर्त्तमानत्वस्य धात्वर्थनाशान्वयित्वस्वीकारात् एवम-

**तण्डुलः मैत्रः पच्यते तण्डुल इत्यादावन्वयाबोधात्**

त्यादौ वर्णादिषु वर्त्तमानोत्पत्तिकनाशविशिष्टव्यापारवत्त्वप्रतीतेः(१) तादृशव्यापारवत्ता च नाशकतावच्छेदकसम्बन्धेन इत्यत आह, 'नश्यतीत्यादाविति, तत्त्वेनैवानुभवादिति भावः। यद्यपि प्रतियोगितासम्बन्धेन आश्रयत्वमेवार्थस्तत्रापि सम्भवति आत्मा निद्रातीत्यनुरोधेन सम्बन्धितासाधारणाश्रयत्वस्यैव लक्ष्यत्वात्। तथापि प्रतियोगितात्वप्रकारेणैवानुभवस्य तत्र सर्व्वजनसिद्धत्वात् तत्परित्यागः। ननु रथो गच्छति चैत्रो जानातीत्यादौ वर्णो नश्यतीत्यादौ च धात्वर्थ-कर्त्तृपदार्थयोश्च संसर्गमर्य्यादया आश्रयत्व-प्रतियोगित्वयोर्भानसम्भवात् किन्तत्र लक्षणाभ्युपगमेन आख्यातस्य तु वर्त्तमानत्वं सङ्ख्या च यथायथमर्थोऽस्तु इत्यत आह, 'चैत्र इति। 'अन्वयाबोधादिति धात्वर्थे कर्म्मतासम्बन्धेन तण्डुलस्य कर्त्तृतानिरूपकत्वसम्बन्धेन चैत्रस्यान्वयाबोधात् एवं धात्वर्थपाकस्य कर्त्तृतासम्बन्धेन चैत्रे कर्म्मतासम्बन्धेन च तण्डुले अन्वयाबोधाच्चेत्यर्थः। इदमुपलक्षणं ज्ञानं चैत्र इत्यादौ आश्रयतासम्बन्धेन चैत्रादौ ज्ञानादेरन्वयाबोधाच्चेत्यपि द्रष्टव्यं। एतेन पचति तण्डुल इत्यादौ कर्म्मतासम्बन्धेन

(१) स्वाव्यवहितपूर्व्वक्षणवृत्ति-स्वसमानाधिकरण-विभुसमवेतविशेषगुणरूपव्यापारवत्त्वप्रतीतेरित्यर्थः।

---

न्यद्बोध्यम्। न च गच्छतीत्यादौ गत्यादेराश्रयतासम्बन्धेन नश्यतीत्यादौ प्रतियोगितासम्बन्धेन नाशस्य च प्रथमान्तपदोपस्थाप्य एव साक्षात् प्रकारतया अन्वयोऽस्तु किमाश्रयत्व-प्रतियोगित्वयोर्निरूढलक्षणयेत्यत आह,

धात्वर्थ-प्रातिपदिकार्थयोर्भेदेन साक्षादन्वयस्याव्युत्पन्नतया सम्बन्धमर्य्यादया तद्भानस्यासम्भवात् इति

---

तण्डुलादेर्धात्वर्थपाकविशेष्यकत्वेनान्वयबोधवारणाय धात्वर्थस्य नामार्थविशेष्यतया अन्वयबोधस्याव्युत्पन्नत्वात् प्रकृते च नामार्थकर्त्तृविशेषणतया गमादिधात्वर्थस्यान्वये न किमपि बाधकमित्यपि प्रत्युक्तं। स्तोकं पचतीत्यादौ धात्वर्थ-नामार्थयोरभेदसंसर्गेणान्वयबोधदर्शनादुक्तं 'भेदेनेति अभेदातिरिक्तसम्बन्धेनेत्यर्थः, अभेदस्तादात्म्यं, 'साक्षादन्वयस्य' साक्षात्त्वेनान्वयस्य, 'अव्युत्पन्नतया' शब्दाजन्यतया, नामार्थान्वितस्य विभक्त्यर्थस्य धात्वर्थे धात्वर्थान्वितस्य विभक्त्यर्थस्य च नामार्थे बोधस्य शब्दजन्यत्वादुक्तं 'साक्षादिति, 'तद्भानेति आश्रयत्व-प्रतियोगित्वयोर्भानेत्यर्थः। अत्र प्रातिपदिकमव्ययातिरिक्तत्वेन विशेष्यं, तेन न कलञ्जं भक्षयेदित्यत्र न्यायनये नञर्थस्य विशेषणताविशेषसम्बन्धेन

'धात्वर्थेति, तथाच धात्वर्थगत्यादेराश्रयत्वादिसम्बन्धेन प्रातिपदिकार्थचैत्रादावन्वयस्य धात्वर्थत्वादिव्युत्पत्तिविरोधेनासम्भवात् तत्र तत्राश्रयत्वादौ निरूढलक्षणावश्यकीत्यर्थः, स्तोकं पचतीत्यादौ क्रियाविशेषणस्य स्तोकस्याभेदसम्बन्धेन धात्वर्थे पाके साक्षादन्वयादाह, 'भेदेनेति अभेदातिरिक्ततत्तद्विभक्त्यर्थसम्बन्धेनेत्यर्थः, घटमानयेत्यादौ घटविशिष्टकर्म्मत्वं कर्म्मतासम्बन्धेन घटादिकस्यानयने धात्वर्थे प्रकारतया भासते तथैव कर्म्मत्वादीनां प्रकारत्वसंसर्गत्वाख्यविषयताद्वयानुभवादित्यत उक्तं 'साक्षादिति विभक्त्यर्थान्वयं विनेत्यर्थः, अत्र निपाताव्ययातिरिक्तत्वेन प्रातिपदिकं विशेषणीयं तेन चैत्रो बहुलं पचति न स्तोकमित्यादौ धात्वर्थे पाके प्रातिपदिकार्थस्य स्तोकभेदस्याश्रयतासम्बन्धेनान्वयेऽपि न क्षतिः। 'तद्भानस्य' गच्छतीत्यादौ आश्रय-

धात्वर्थे अन्वयः[१] गुरुनये अनुयोगितासम्बन्धेन धात्वर्थस्य नञर्थे अन्वोयो नानुपपन्नः। अतएव ज्ञानवदिच्छा इत्यादावपि वत्यर्थस्य धात्वर्थे अनुयोगितासम्बन्धेन प्रतियोगितया च साक्षादन्वयो नानुपपन्नः। न चाभेदातिरिक्तसम्बन्धेन पाक ज्ञानादिप्रकारक-चैत्रादि-विशेष्यकः शाब्दबोधः पचति चैत्रः ज्ञानञ्चैत्र इति वाक्यात् योग्यता-तात्पर्य्यादिज्ञानसत्त्वेऽपि कुतो न जायते सति कारणस्तोमे कार्य्यानुत्पादस्यासम्भवादिति वाच्यं। यादृशानुपूर्व्वीतस्तादृशान्वय-बोधोऽनुभवसिद्धस्तदानुपूर्व्वशास्तत्र हेतुतया यावद्विशेषकारणविरहा-देव ततस्तदनुत्पादात्।

(१) बलवदनिष्टाननुबन्धीष्टसाधनत्वाभाववत् कलञ्जलक्षणमित्यन्वय इत्यर्थः।

त्वादिभानस्य। नन्वीदृशव्युत्पत्तौ मानाभाव इत्याशङ्कायां धात्वर्थत्वादिव्युत्पत्तौ युक्तिमाह, 'चैत्रः पचतीत्यादि, तथाचेदृशव्युत्पत्त्यनङ्गीकारे चैत्रः पचति तण्डुल इत्यत्र चैत्रः कर्म्मत्वसम्बन्धेन तण्डुलीयपाकानुकूलकृतिमान् इत्या-कारकस्य मैत्रः पच्यते तण्डुल इत्यत्र कर्त्तृत्वसम्बन्धेन मैत्रीयपाकजन्यफलवान् तण्डुल इत्याकारकस्य चान्वयबोधस्यापत्तिरित्यर्थः। यद्यप्यत्र तादृशान्वय-बोधस्याप्रसिद्धतया आपत्तिर्नसम्भवति क्वचित् प्रसिद्धस्यैवान्यत्रापाद्यत्वात् तथापि विभक्तिजन्यकर्म्मत्वाद्यनुपस्थितिविशिष्टतण्डुलपदादिजन्योपस्थित्यधि-करणक्षणो यदि कर्म्मतासम्बन्धेन तण्डुलप्रकारक-पाकविशेष्यकान्वयबोध-सामग्रीक्षणः स्यात् तदा तादृशान्वयबोधोत्पत्तिक्षणाव्यवहितपूर्व्वक्षणः स्यादित्यापत्तिर्बोध्या तादृशान्वयबोधः तथा पचतीत्यादावव्ययीभूततथापदो-पस्थापितस्य तण्डुलस्य कर्म्मतासम्बन्धेन पाके यत्रान्वयस्तत्र प्रसिद्धः।

यत्तु कर्म्मत्वादीनां सम्बन्धत्वे मानाभाव इत्यापाद्याप्रसिद्धिरिति, तत्तुच्छं, तथा सति तण्डुलं पचतीत्यादौ कर्म्मत्वादेर्द्विविधविषयत्वसिद्धान्तविरोधा-

केचित्तु धात्वर्थनिष्ठविषयतानिरूपिततादात्म्यातिरिक्तसम्बन्धावच्छिन्ननिपातातिरिक्तपदार्थनिष्ठविषयतासम्बन्धेन शाब्दबोधोत्पत्तिं प्रति धातूत्तरप्रत्ययजन्योपस्थितिर्विशेष्यतासम्बन्धेन कारणं । यद्वा तादृशविषयतानिरूपितोक्तसम्बन्धावच्छिन्ननामार्थनिष्ठविषयतासम्बन्धेन शाब्दबोधोत्पत्तिं प्रति निपातजन्योपस्थितिर्विशेष्यतासम्बन्धेन कारणमतो न तस्मात् तादृशबोधः इत्याहुः । तदसत्, धात्वर्थ-

---

पत्त्या कर्म्मत्वादीनां सम्बन्धत्वाभ्युपगमात् । न च तथापि चैत्रः पचतीत्यादेरसाधुत्वेन साधुत्वज्ञानविरहादेव तत्र न तादृशान्वयबोध इति वाच्यं । साधुत्वभ्रमदशायां आपत्तिसम्भवात् साधुत्वज्ञानस्य शाब्दबोधहेतुत्वे मानाभाव इति मतेनेदमिति कश्चित् । एतेन कर्म्मत्वादीनां सम्बन्धत्वाभावेऽपि घटोजानातीत्यादौ विषयत्वसम्बन्धेन घटे ज्ञानान्वयापत्तेश्चैत्रो ज्ञायत इत्यादौ समवायेन चैत्रे ज्ञानान्वयापत्तेश्च वारणाय जानातीत्यादावाश्रयत्वे निरूढलक्षणा स्वीक्रियते इति गुणानन्दमतमपास्तं । आश्रयत्व-विषयत्वलक्षणानङ्गीकारेऽपि जानातीत्यादिसमभिव्याहारस्याश्रयतासम्बन्धेन ज्ञानप्रकारकशाब्दत्वावच्छिन्नं प्रति ज्ञायत इत्यादिसमभिव्याहारस्य च विषयतासम्बन्धेन च ज्ञानप्रकारकशाब्दत्वावच्छिन्नं प्रति हेतुताभ्युपगमेन तादृशापत्तिवारणात् ।

गुरवस्तु चैत्रः पचति तण्डुल इत्याद्यतिप्रसङ्गवारणाय साक्षात्तदर्थप्रकारेण धात्वर्थविशेष्यकान्वयबोधोमाऽस्तु गच्छतीति जानातीत्यादौ च साक्षाद्धात्वर्थप्रकारेण नामार्थविशेष्यकान्वयबोधे बाधकाभाव एव तस्मात् गच्छतीत्यादावाश्रयत्वप्रकारकशाब्दबोधस्यानुभवसिद्धत्वेनाश्रयत्वादौ निरूढलक्षणा स्वीक्रियत इत्यत्र दीधितिकृतस्तात्पर्य्यं । मणिकृतस्त्वाश्रयत्वसम्बन्धेनैव चैत्रादौ ज्ञानादेरन्वयं वदन्ति तैराश्रयत्वप्रकारकानुभवानङ्गीकारात् एवं नश्यतीत्यादौ प्रतियोगित्वलक्षणानङ्गीकारे घटो न नश्यतीत्यादौ नञ्-

नामार्थयोरनुगतानतिप्रसक्तयोर्दुर्वचत्वादिति ध्येयं। करोतेः प्रवृत्ति-वाचकत्व एव कृधातुशक्यप्रतिपादकत्वेन प्रवृत्तित्वविशिष्टविशेष्यक-जिज्ञासानिवर्त्तकज्ञानजनकत्वेन वा हेतुना आख्यातस्य तद्वाचकत्वं सिद्ध्यति, तच्च क्रियादिवाचकत्वे क्रियादिवाचकपदे प्रथमहेतोर्व्य-भिचारात् द्वितीयहेतोश्च किं करोतिप्रश्नस्य यत्नविषयकत्वासिद्धा

---

र्थान्वयानुपपत्तिस्तथाहि यद्याश्रयतासम्बन्धेन नाशस्याभावः प्रत्येतव्यस्तदा स्ववृत्तिसंयोगादिना नाशस्य घटे सत्त्वेन बाधापत्तिः। अथ प्रतियोगिता-सम्बन्धेन नाशस्याभावः प्रतीयतामिति चेत्, न, निरूपकत्वादिवत् प्रति-योगित्वादेः प्रतियोगितावच्छेदकसम्बन्धत्वविरहात् प्रतियोगित्वलक्षणा-स्वीकारे च नाशप्रतियोगित्वस्य स्वरूपसम्बन्धेनाभाव एव प्रतीयते तत्र च न कोऽपि दोषः। एवं घटं जानातीत्यादौ कर्म्मत्वस्य केवलसम्बन्धत्वे घटं न जानातीत्यादौ नञर्थान्वयानुपपत्तिर्विषयत्वस्य प्रतियोगितावच्छेदक-सम्बन्धत्वाभावादेवमन्यद्दोध्यमित्याहुः।

नव्यास्तु चैत्रो ज्ञानमित्यादौ समवायसमन्धेन चैत्रविशेष्यकज्ञानप्रका-रकान्वयबोधवारणाय चैत्रविशेष्यक-ज्ञानप्रकारकशाब्दबुद्धिं प्रति ज्ञाधातू-त्तरविभक्तिजन्याश्रयत्वोपस्थितित्वेन हेतुता वाच्या तथाच चैत्रोजानातीत्यादौ आश्रयत्वलक्षणाविरहे तादृशोपस्थितिविरहादेव नान्वयः इत्याश्रयत्वलक्ष-णाङ्गीक्रियते, एवं पाकस्तण्डुल इत्यादौ पाकविशेष्यक-तण्डुलप्रकारकशाब्द-बोधवारणाय पाकविशेष्यकतण्डुलप्रकारकशाब्दबुद्धिं प्रति तण्डुलपदोत्तर-विभक्तिजन्य-कर्म्मत्वाद्युपस्थितित्वेन हेतुता वाच्येति तदभावादेव चैत्रः पचति तण्डुल इत्यादौ कर्म्मत्वादिसम्बन्धेन पाकादौ तण्डुलप्रकारकान्वयबोधो न जायते, यदा च तत्रापि तण्डुलपदोत्तरप्रथमाविभक्तौ कर्म्मत्वादिलक्षणा क्रियते तदा जायत एव पाकादौ तण्डुलप्रकारको बोधः। नन्वेवं तण्डुलं पचतीत्यादौ विभक्तिजन्य-कर्म्मत्वोपस्थितिसहकारेण पाकादौ कर्म्मतासम्ब-

नव्याः। कृञश्च यत्नाभिधायकत्वं क्रियाजन्यत्वप्रति-

पचवृत्तित्वासिद्धेरतः कृञोऽपि प्रवृत्तिवाचकत्वं आचार्य्ययुक्तिभ्यां व्यवस्थापयति, 'कृञश्चेति, 'यत्नाभिधायकत्वं' प्रवृत्तित्वविशिष्टाभिधायकत्वं। नन्विदमसिद्धं क्रियाया एव तत्शक्यत्वात् पाकं करोतीत्यादौ स्तोकं पचतीत्यादाविवाभेदः संसर्गः, पाको करोति पकाम् करोति पाकः क्रियते इत्यादौ च कर्मविभक्तेरेवाभेदोऽर्थः, तथाचाभेदप्रकारकोऽन्वयबोधः इत्यत आह, 'क्रियेति, 'क्रिया'

न्येन तण्डुलप्रकारकान्वयबोधोऽस्तु न तु कर्म्मताविशेष्यकतण्डुलप्रकारको बोधः तण्डुलं पचतीत्यादिसमभिव्याहारस्य पाकविशेष्यकतण्डुलकर्म्मकत्वप्रकारकशाब्दत्वापेक्षया लाघवेन पाकविशेष्यककर्म्मतासंसर्गकतण्डुलप्रकारकशाब्दत्वादीनां कार्य्यतावच्छेदकत्वकल्पनाया एव न्याय्यत्वादिति चेत् सत्यमेतत् यदि नानुभवविरोधोभवेदिति। वयन्तु केवलतण्डुलमित्यादौ कर्म्मतांशे तण्डुलप्रकारकबोधस्यानुभवसिद्धतया तण्डुलमिति वाक्यस्य कर्म्मताविशेष्यकतण्डुलप्रकारकशाब्दत्वं कार्य्यतावच्छेदकं वाच्यं तथाच तण्डुलं पचतीत्यादावपि सामग्रीबलादेव तण्डुलकर्म्मकत्वेन पाकविशेष्यकान्वयबोधोऽवश्यं वाच्यः। न च कर्म्मत्वं तण्डुलीयं पाकस्तण्डुलीय इत्यन्वयबोधः स्यान्महावाक्यार्थबोधे कर्म्मत्वविशेष्यकत्वप्रवेशे गौरवादिति वाच्यं। तथा सति तण्डुलं पचतीत्यादौ एकवाक्यताभङ्गप्रसङ्गात् विधेयभेदस्य वाक्यभेदकत्वात्। किञ्च चैत्रोमांसं पचति न तण्डुलमित्यादौ पाके नञर्थतण्डुलकर्म्मत्वाभावस्य प्रतीत्यर्थं कर्म्मतांशे तण्डुलस्य प्रकारता वाच्या कर्म्मत्वादेर्वृत्त्यनियामकतया कर्म्मतासम्बन्धावच्छिन्नप्रतियोगिताक-तण्डुलाभावबोधस्यासम्भवात् आश्रयत्वादिसम्बन्धावच्छिन्नप्रतियोगिताकतण्डुलाभावबोधाभ्युपगमे च तण्डुलपाकस्थलेऽपि तथा प्रयोगप्रसङ्गादिति वदामः।

सन्धानाविशेषेऽपि यत्नजन्यत्वाजन्यत्वप्रतिसन्धानात्

अवयवविश्रामानुकूलस्पन्दः, 'यत्नजन्यत्वाजन्यत्वेति, 'यत्नजन्यत्वं' यत्ननिरूपितफलोपधानात्मकजन्यत्व-साध्यत्वाख्यविषयत्वोभयसम्बन्ध-वत्त्वं, 'यत्नाजन्यत्वञ्च' यत्ननिरूपिततादृशोभयसम्बन्धवद्भिन्नत्वं, तादृशोभयत्वेन तादृशोभयसम्बन्धविशिष्ट एव कृधातुसमभिव्याहृतनिष्ठा-प्रत्ययेन बोध्यते, भ्रमात् प्रवृत्तस्य गुरुतरभारोत्तोलनादौ कृत-

यत्तु विभक्तिजन्यकर्म्मत्वोपस्थितित्वेन पाकविशेष्यकतण्डुलप्रकारक-शाब्दबोधे न हेतुता तदादिना तण्डुलकर्म्मकपाकशाब्दबोधस्थले व्यभिचारा-दिति, तदसत्, पाकोद्देश्यकतण्डुलकर्म्मत्वविधेयकशाब्दत्वादीनामेव तादृशो-पस्थितिकार्य्यतावच्छेदकत्वाभ्युपगमेन व्यभिचारविरहादिति। एतेनाव्यया-दिपदात्तण्डुलप्रकारेण पाकविशेष्यकबोधे व्यभिचारेण विभक्तिजन्योपस्थिते-स्तादृशहेतुता न सम्भवतीत्यपास्तं। निपाताद्यजन्यत्वस्य कार्य्यतावच्छेदके निवेशनीयत्वात्। अस्तु वा असाधुप्रथमाविभक्तिकत्वमेव प्रकृते विभक्तित्वं अव्ययोत्तरं प्रथमोपस्थितत्वेन प्रथमाविभक्तेरेव साधुत्वस्वीकारात् तथाच अव्यय-निपातयोरपीदृशविभक्तित्वेन विभक्तिजन्योपस्थितिस्तत्राप्यस्तीति नोक्तव्यभिचारः। न च तथापि जानामि सीता जनकप्रसूतेत्यादौ विभक्तिजन्य-कर्म्मत्वोपस्थितिं विनापि ज्ञाने कार्य्यतासम्बन्धेन सीतादेरन्वयेन व्यभिचार-इति वाच्यं। तत्र प्रथमाविभक्तौ कर्म्मत्वलक्षणास्वीकारात् सुब्विभक्तौ न लक्षणेतिसिद्धान्तस्य च सुब्विभक्तिलक्षणया यज्ञादौ सङ्कल्पवाक्यादिकं न कर्त्तव्यमित्यर्थकत्वात्। एकदेशिनस्तु चैत्रो ज्ञानं पाकस्तण्डुल इत्यादौ भेदान्वयबोधवारणाय विभक्तिजन्यकर्म्मत्वोपस्थितेः न हेतुता येनोक्तस्थले व्यभिचारः स्यात् किन्तु ज्ञानादिप्रकारेण चैत्रादिशाब्दं प्रति चैत्रो ज्ञानं इत्यादिवाक्यजन्यज्ञानाद्युपस्थितिः प्रतिबन्धिका तादृशोपस्थितिकालेऽपि

व्यवहारवारणाय फलोपधानात्मकजन्यत्वप्रवेशः, नान्तरीयके कृत-व्यवहारवारणाय साध्यत्वाख्यविषयत्वप्रवेशः। अतएव नान्तरीयके मत्तोभूतं न तु मया कृतमिति व्यवहारः। व्यवहारं प्रति व्यवहर्त्तव्यज्ञानस्यैव हेतुत्वात् प्रतिसन्धानप्रवेशः। तथाच क्रियायाः कृञर्थत्वे क्रियाजन्यत्वस्यैव तादृशव्यवहारविषयतावच्छेदकतया तज्जन्यत्वप्रतिसन्धानदशायां निरुक्तयत्नाजन्यत्वप्रतिसन्धानादकृतव्यवहारानुपपत्तिरिति भावः। इदमुपलक्षणं नान्तरीयकेऽपि मया कृतमिति व्यवहारप्रसङ्गान्मया न कृतमिति व्यवहारप्रसङ्गाच्चेत्यपि बोध्यं।

---

चैत्रोजानातीत्यादिवाक्यजन्यज्ञानाद्युपस्थित्या तादृशान्वयबोधदर्शनेन चैत्रोजानातीत्यादिवाक्यजन्योपस्थितीनामिव अव्यय-तदादिपद-जानामि सीतेत्यादि वाक्यजन्योपस्थितीनामपि फलबलेन उत्तेजकत्वं कल्पनीयमिति न कोऽपि दोष इत्याहुः। ननु करोतेर्यत्नार्थकत्वे निरुक्तविवरणबलादाख्यातस्य कृतिवाचकत्वं सिध्यति तदेव च न सिद्धं परेण तस्यैव करोतेरपि व्यापारार्थकत्वाभ्युपगमादित्यत आह, 'कृञश्चेति कृधातोरित्यर्थः, 'यत्नाभिधायित्वं' यत्नशक्तत्वं, अतः "कृताकृतविभागेन कर्त्तृरूपव्यवस्थया। कृञो यत्नाभिधायित्वं न व्यापारप्रशक्तता"॥ इत्याचार्य्यकारिकोक्तकृताकृतविभागेनेति प्रथमयुक्तिमाह, 'क्रियेति, अत्रायं भावः पटादिः कृतोऽङ्कुरादिर्न कृत इत्यादौ कृत इत्यस्य यदि क्रियाजन्यत्वविशिष्टोऽर्थः तदा पट इव अङ्कुरेऽपि कृतव्यवहारापत्तिः आरम्भकसंयोगादिरूपक्रियाजन्यत्वप्रतिसन्धानस्य व्यवहर्त्तव्यतावच्छेदकविशिष्टज्ञानविधया भवन्मते कृतव्यवहारनियामकस्य तत्र सत्त्वादिति क्रिया न कृधातोरर्थः। ननु कृधातोर्यत्नार्थकत्वेऽपीश्वरीययत्नजन्यत्वमादाय उभयत्र कृतव्यवहारापत्तिर्दुर्व्वारैवेत्यत आह, 'यत्नजन्यत्वेति, ईश्वरीयकृतेरनुपस्थितिदशायामङ्कुरे यत्नाजन्यत्वभ्रमात्मकप्रतिसन्धानेनाकृतव्यवहारो जायते इतरथा तु पट इव तत्रापि कृतव्यवहार एव जायते इति भावः।

पटाङ्कुरयोः कृताकृतव्यवहारात् ज्ञात्रादिवदाश्रयपर-तृजन्तकर्त्तृपदस्य यत्नाश्रयबोधकत्वाच्च। क्रियायास्त-

'ज्ञात्रादिवदिति ज्ञातृपदादिवदित्यर्थः, 'आश्रयपरेति, तथाच कृतः कृतिमति शक्तावपि सविषयधातूत्तरस्य तस्याश्रयत्वे निरूढलक्षणा अन्यथा कर्त्तेत्यत्र कृतिकर्त्ता इत्यन्वयः स्यात् स चायोग्य इति भावः। नन्विदमेवासिद्धं किन्तु कर्त्तृपदं क्रियाश्रयबोधकमनुकूलव्यापाराश्रयबोधकं वेत्यत आह, 'क्रियाया इति, 'क्रिया' स्पन्दः,

अतएव प्रतिसन्धानपर्य्यन्तानुधावनं। न च कृधातोः क्रियार्थकत्ववादिमतेऽपि पटाङ्कुरे क्रियाजन्यत्वप्रतिसन्धानं नास्ति अथ च क्रियाजन्यत्वाभावस्य भ्रमात्मकप्रतिसन्धानं तदैवाङ्कुरे कृतव्यवहारो भविष्यतीति वाच्यं। अनुभवविरोधात् क्रियाजन्यत्वप्रतिसन्धानस्योभयत्र तुल्यत्वेऽप्यङ्कुरेऽकृतव्यवहारस्य सर्व्वसिद्धत्वादिति उक्तकारिकोक्तां कृतरूपव्यवस्थयेति द्वितीयां युक्तिमाह, 'ज्ञात्रादीति ज्ञाधातोर्ज्ञानं तृच्प्रत्ययस्य चाश्रयोऽर्थ इति ज्ञातृशब्दस्य ज्ञानाश्रयबोधकत्ववदित्यर्थः, आश्रयपरः आश्रयत्वात्तणिकः तृच् अन्ते यस्य तदाश्रयपरतृजन्तपदं तस्येत्यर्थः, तथाच कृधातोर्यत्नार्थकत्वाभावे कर्त्तृपदाद्यत्नाश्रयबोधो न स्यादिति कृधातोर्यत्नोऽर्थ इष्यते इत्यर्थः। ननु कृधातोः कृत्यर्थकत्वे पक्तेत्यादिवत् तृचः कर्त्तृबोधकत्वेन कर्त्तृपदाद्यत्नानुकूलकृतिमानित्यर्थ एवावगन्तव्यो न तु कृत्याश्रयः आश्रयस्य तृजर्थत्वाभावात्। न च यत्नानुकूलकृत्याश्रयबोध एव वक्तव्यः, बाधितत्वात् अस्मादादौ कर्त्तरि यत्नानुकूलकृतिमत्त्वस्याभावादित्याशङ्कामपाकर्त्तुं 'ज्ञात्रादिवदिति दृष्टान्तप्रदर्शनं कृतं तथाच तृचो यथा ज्ञात्रादिस्थले आश्रयबोधकता तथा कर्त्तृपदस्थलेऽपि आश्रयबोधकत्वमिति कर्त्तृपदाद्यत्नाश्रयबोधोनानुपपन्न इति भावः। क्रियायाः कृञर्थत्वे दोषान्तरं क्रियानुकूलव्यापारस्य तदर्थत्वे दोषञ्चाह,

दनुकूलव्यापारस्य वा कृञर्थत्वे तदाश्रयः कारकमात्रं वा कर्त्तृपदार्थः स्यात्। अथ रथो गच्छति गमनं

---

'अनुकूलव्यापारस्य वेति पाठः, 'तदनुकूलव्यापारस्येति पाठः प्रामादिकः। घटं करोति घटस्य कर्त्तेत्यादौ स्पन्दानुकूलव्यापारस्य कृञर्थत्वानभ्युपगमात् पाकं करोतीत्यादिस्थलविशेषएव तदभिधानमतस्तादृशपाठेऽपि न दोष इत्यपि कश्चित्। प्रथमे दोषमाह, 'तदाश्रय इति क्रियाश्रय इत्यर्थः, तथाच तण्डुलः पाककर्त्ता इत्याद्येव व्यवहारः स्यादिति भावः। एतच्च माचादिक्लित्यनुकूलस्य स्पन्दस्य पाकत्वमते। द्वितीये दूषणमाह, 'कारकमात्रं वेति, स्थाली-काष्ठादेरपि पाकानुकूलसंयोगादिसत्त्वात् पाकादिकर्त्तृव्यवहारः स्यादिति भावः। कृञधातोराख्यातस्य च जनकव्यापारत्वमेव शक्यतावच्छेदकं इति केचिद्वदन्ति तन्मतं शङ्कते, 'अथेति,

'क्रियाया इत्यादि, 'तदनुकूलेति क्रियानुकूलेत्यर्थः, 'तदाश्रयः' पाकक्रियाद्याश्रयः, तण्डुलादिकर्त्तृपदार्थः स्यादित्यन्वयः, क्रियानुकूलव्यापारस्य कर्त्तृपदार्थत्वे दोषमाह, 'कारकमात्रं वेति, 'मात्रपदं कृत्स्नार्थकं, तथाच क्रियानुकूलव्यापाराश्रयस्य कर्त्तृपदार्थत्वे कारकसामान्यस्यैव क्रियानुकूलव्यापारवत्तया कर्त्तृपदार्थता स्यादित्यर्थो लभ्यते। यद्यपि क्रियायास्तदनुकूलव्यापारस्य वा कृञर्थत्ववादिनये क्रियाश्रयः कारकमात्रं वा कर्त्तृपदार्थः स्यादिति न बाधकं तन्नये तयोरिष्टापत्तिसम्भवात् तथापि क्रियात्वं तत्तद्धात्वर्थत्वं तदनुकूलव्यापारत्वञ्च तत्तद्धात्वर्थानुकूलव्यापारत्वं तदुभयमपि यत्नत्वजात्यपेक्षया गुरुतरमिति यत्नत्वमेव तदुभयापेक्षया लघुत्वेन कृधातुशक्यतावच्छेकमुच्यते इत्यत्र तात्पर्य्यं। शङ्कते, 'अथेति, तथाच रथोगमनं करोतीत्यादौ रथोगमनानु-

करोति वीजादिना अङ्कुरादिः कृत इति विनापि यत्नं कृञः प्रयोगान्न तस्य यत्नवाचकत्वं, कर्त्तृपदे च

---

'रथोगच्छति गमनं करोतीति, तथाच तद्विवरणवशात् यत्नो न कृञर्थः, किन्तु जनकव्यापार एवार्थः, रथोगमनं करोतीत्यादौ च कर्म्मविभक्तेर्निरूपितत्वमेवार्थः, कृञर्थैकदेशे जनकयत्ने च तदन्वयः, आख्यातस्याश्रयत्वमर्थः, गमनविशिष्टनिरूपिताधारत्वसम्बन्धेन रथादौ तदन्वयः, तेनान्यदीयगमनानुकूलनोदनादिमति निश्चले गमनं करोतीति न व्यवहार इत्येवमाशयः। 'वीजादिनेति, निष्ठत्वं तृतीयार्थः, अन्वयश्चास्य कृञर्थे व्यापारे, जन्यत्वरूपेण जन्यमात्रं निष्ठार्थः। न चैवं क्रियाजन्यत्वप्रतिसन्धानदशायां निरुक्तयत्नाजन्यत्वप्रतिसन्धानादङ्कुरे अकृतव्यवहारो न स्यादिति वाच्यं। तदानीं तद्व्यवहारे तत्र कृञो यत्ने लाक्षणिकत्वात् निरुक्तोभयत्वेन निरुक्तोभयसम्बन्धविशिष्टस्य च निष्ठार्थत्वात्। अतएव नान्तरीयके मया न कृतमिति व्यवहारोऽपि व्याख्यातः। क्रियाजन्यत्वमादाय तत्र कृतव्यवहारे इष्टापत्तिरित्येवमाशयः। नन्वेवं कारकमात्र एव कर्त्तृव्यवहार इत्यत आह, 'कर्त्तृपदे चेति, 'निरूढ़िलक्षणेति प्रवृत्तौ निरूढ़िलक्षणेत्यर्थः, भवतां कारकपदे कृञो व्यापार इव, अन्यथा

कूलव्यापारवानित्याद्यर्थोऽवगम्यते इत्यनायत्या उक्तलाघवं त्यक्त्वापि कृधातोर्व्यापारार्थकत्वमुपेयमिति भावः। कृताकृतविभागेनेत्यादियुक्त्या कृतिवाचकत्वं निराकरोति, 'वीजादिनेति, तथाच कृञः कृत्यर्थत्वे वीजादेः कृत्यर्थे बाधितत्वं स्यादिति भावः। नन्वेवं कर्त्तृपदे का गतिरित्यत आह, 'कर्त्तृपदे चेति,

कृञो यत्ने निरूढ़िलक्षणा, यदि क्रियाद्याश्रयमात्रे न

कर्म्मादौ कारकव्यवहारो न स्यादिति भावः। 'यदीति, 'क्रिया-द्याश्रयमात्रे' क्रियादिरूपजनकव्यापाराश्रयमात्रे कर्म्मादाविति यावत्, 'न तत्प्रयोगः' न कर्त्तृपदप्रयोगः। वस्तुतस्तु कर्म्मादावपि कारक-पदप्रयोग इव कर्त्तृपदप्रयोगोऽभ्युपेयः, अतएव "विवक्षातः कारक-विभक्तयो भवन्ति" इति शाब्दिकाः। इत्यभिप्रायोयदीत्यनेन सूचितः। 'एवञ्चेति कृञो यत्नावाचकत्वे इत्यर्थः, 'जनकव्यापार-एवाख्यातार्थ इत्यग्रेतनेनान्वयः, उक्तहेतुद्वयस्य प्रवृत्तित्वविशिष्टे शक्तिसाधकत्वाभावादिति भावः। व्यापारत्वञ्च धर्म्मत्वं, तच्च यत्नसा-धारणमपि, तेन परमेश्वरो वेदं वक्तीत्यादिप्रयोगोपपत्तिः। अत्र यत्नानुभवोऽनुभवसिद्ध इत्यभिप्रायेण अन्यथा परमेश्वरपदस्य शरी-

'निरूढ़ीति। नन्वेवं यत्नेऽपि प्रयोगसत्त्वे लाघवेन यत्ने कृधातोः शक्तिर्व्यापारे लक्षणैव किं न स्यादिति चेत्, प्रयोगप्राचुर्य्यस्य शक्तिनियतत्वेन तद्बलेन कृञोव्यापारे शक्तौ सिद्धायामन्याय्यानेकार्थत्वमिति न्यायेन न यत्ने शक्तिः कल्प्यते। न च प्रयोगप्राचुर्य्यं यत्नेऽपि वर्त्तते, तथा सति गङ्गापदादेरपि तीरशक्तत्वापत्तेस्तत्रापि गङ्गापदप्रयोगप्राचुर्य्यस्य वक्तुं शक्यत्वात्। किञ्च प्रयोगमात्रं यदि शक्तिग्राहकं तदा काष्ठादौ व्यापारवाचिकृधातुघटित-कारकपदप्रयोगबलेन कृधोतोर्व्यापारशक्तेर्नैयायिकानामपि प्रसङ्गादिति। ननु क्रियाश्रये तदनुकूलव्यापाराश्रयमात्रे वा कर्त्तृपदप्रयोगे इष्टापत्तिरेवेति कथं कर्त्तृपदे कृञोयत्ने निरूढ़लक्षणा वाच्येत्यत आह, 'यदीति, 'न तत्प्रयोगः' न कर्त्तृपदप्रयोगः, वैयाकरणमते विवक्षातः कारकाणि भवन्तीत्यस्याभ्युप-गमेन करणीभूतकाष्ठादावपि कारकप्रयोग इष्ट एवेति 'यदीत्युक्तं।

तत्प्रयोगः, एवञ्चाचेतनेऽपि पचतीत्यादिप्रयोगात् क्रियानुकूलव्यापारप्रतीतेर्बाधकं विना गौणत्वायो-

रपरत्वे वेदाभिन्नशब्दानुकूलकण्ठाद्यभिघातव्यापारवानिति बोधो व्यापारबोधकत्वेऽपि स्यात्। असाधारणजनकताया एव शक्यतावच्छेदकतया च नेश्वरः पचति कृष्णः पचतीत्यादिप्रयोगः, अन्यथा प्रवृत्तिवादिनामप्यप्रतीकारात् प्रवृत्तित्वस्य भगवद्यत्नेऽपि सत्त्वात् ईश्वरोवेदं वक्तीत्यादौ वेदाभिन्नासाधारणशब्दजनकता भगवद्यत्नेऽपि स्वीकरणीया अतो न दोषः, आत्मा पचतीत्यादिप्रयोगे चेष्टापत्तिरिति निगर्व्वः। ननु तथापि विनिगमकाभावात् शक्तिसाधकहेतुनैव प्रवृत्तित्वविशिष्टे शक्तिः सेत्स्यतीत्यत आह, 'अचेतनेऽपीति अग्नि-काष्ठादावपीत्यर्थः, 'पचतीत्यादिप्रयोगात्' व्यापारत्वे बुद्धिविशेष्यतासम्बन्धेन पचतीतिप्रयोगसत्त्वात्, रथोगच्छतीत्यादावाश्रयत्वप्रतीतेरेव नव्यैरुक्तत्वात् तत्परित्यागः। ननु तत्राख्यातस्य व्यापारे लक्षणा इत्यत आह, 'क्रियेति, 'क्रिया' पाकः, 'गौणत्वं' लक्षणाजन्यत्वं। नन्वेवं तण्डुलक्रयणादेरपि पाकानुकूल-

---

'एवञ्चेति कृधातोर्व्यापारवाचकत्वे स्थिते तद्विवरणत्वेनाख्यातस्यापि व्यापारशक्तत्वे चेत्यर्थः, 'अचेतनेऽपि' वह्नि काष्ठादावपि, कृताकृतविभागेनेत्यादिबाधकस्य निरासात् यत्नत्वजात्यनभ्युपगमाद्गौरवमपि नास्तीति 'बाधकं विनेत्यस्य नासिद्धिरिति भावः। 'गौणत्वेति लाक्षणिकत्वेत्यर्थः, 'गौणत्वायोगादिति पञ्चम्यन्तं जनकव्यापार एवाख्यातार्थ इत्यत्र हेतुत्वेन बोध्यं, व्यापारत्वमिह जन्यत्वं धर्म्मत्वं वा अतः पचतीत्यादेः पाके जनकयत्नाऽर्थकधर्म्मबोधकतयोपस्थितिः सम्भवतीति। नन्वेवं तण्डुलक्रयणकालेऽपि पचतीति

गात् जनकव्यापार एवाख्यातार्थः, तण्डुलक्रयणादेश्च न पाकादिजनकत्वमिति नातिप्रसङ्गः, कथन्तर्हि पचतीत्यादौ पाकजनकयत्नानुभव इति चेत्, यत्नाविनाभूतपाकादिना क्रियाविशेषकारणस्य यत्नस्या-

---

त्वात् तदानीमपि पचतीत्यादिप्रयोगः स्यादित्यत आह, 'तण्डुलेति। एतेन शक्यतावच्छेदकजनकत्वदले अनन्यथासिद्धत्वांशस्य प्रवेशे प्रयोजनं कृत्नतो दर्शितं। जनकप्रवृत्तित्वस्याख्यातशक्यतावच्छेदकत्ववादी शङ्कते, 'कथमिति, 'तर्हीति आख्यातस्य जनकप्रवृत्तित्वविशिष्टाशक्तत्वे इत्यर्थः, 'पचतीत्यादौ' चैत्रः पचतीत्यादौ, 'पाकजनकयत्नानुभवः' पाकजनकप्रवृत्तित्वेनानुभवः, 'यत्नाविनेत्यादि चैत्रत्वादिविशिष्टजनकतासम्बन्धेन पाकजनकव्याप्येनेत्यर्थः, 'क्रियाविशेषकारणस्येति पाठः पाकलक्षणक्रियाविशेषजनकस्य यत्नस्येत्यर्थः, 'क्रियाविशेषेणेति तृतीयान्तपाठेऽपि कारणत्वान्वितनिरूपितत्वस्य तृती-

प्रयोगः स्यात् पाकजनकीभूततण्डुलक्रयणात्मकव्यापारस्य तदानीं सत्त्वादित्यत आह, 'तण्डुलेति अन्यथासिद्धतया तस्य न पाकजनकत्वमित्यर्थः। इत्थञ्चानुकूलव्यापारस्याख्यातार्थत्वे चायं दोषः तण्डुलक्रयणस्य पाकानुकूलत्वादिति तदुपेक्षितमित्यपि सूचितं। नैयायिकः शङ्कते, 'कथं तर्हीति, 'पाकजनकेति, यद्यपि यत्नस्यापि पाकजनकव्यापारत्वेनानुभवे बाधकाभावस्तथापि चैत्रः पाचतीत्यादौ पाकजनकयत्नत्वेन रूपेण पाकजनकयत्नानुभवः कथं स्यादित्याशङ्कार्थः, 'यत्नाविनेति पाकजनकयत्नाविनाभूतेनेत्यर्थः, अविनाभूतत्वं व्याप्यत्वं, 'कारणस्य' पाकादिकारणस्य, तेन चैत्रः पाकजनकयत्नवान् पाकवत्त्वादित्यनुमानं फलितं, पाकवत्ता च अयं पाकश्चैत्रीय इत्यादि-

नुमानात्। पचति पाकविषयकयत्नवानिति तात्पर्य्य-

---

यार्थत्वादयमेवार्थः, तथाच चैत्रः पाकजनकयत्नवान् पाकवत्त्वादि-त्यनुमानप्रकार इति भावः।

केचित्तु 'यत्नाविनाभूतेति तादात्म्यसम्बन्धेन जनकयत्नव्याप्येने-त्यर्थः, 'क्रियाविशेषेण' धातूपस्थापितपाकादिविशेषणत्वेन, 'कार-णस्य' जनकत्वविशिष्टस्य, 'अनुमानात्' जन्यतासम्बन्धेनानुमानात्, अयं पाकोजनकयत्नवान् पाकात् इत्यनुमानप्रकारः, सौरादिपाके-ऽप्यन्ततोभगवद्यत्नस्यैव सत्त्वात् न व्यभिचारः, तदनन्तरञ्च अनु-मानोपस्थितस्य जनकताविशिष्टयत्नस्य एकदेशे जनकत्वे निरूपित-त्वसम्बन्धेन धातूपस्थापितस्य पाकस्य विशेषणतया अन्वयः शाब्द-इति भावः। एतेनानुमानात् पाकोजनकयत्नवानिति प्रतीत्युपपा-दनेऽपि पाकजनकयत्न इति विलक्षणानुभवस्यानुपपन्नत्वादिदमस-ङ्गतमिति परास्तं। अग्रे च 'अथैवमित्यत्र वर्त्तमानपदं पाकवत्त्व-स्याप्युपलक्षणमिति व्याचक्रुः।

नन्वेवं पचति पाकजनकयत्नवानिति विवरणमसङ्गतं तेन प्रकृततिप्पदस्य यत्नपदोस्थापकत्वबोधनादित्यत आह, 'पचतीति, 'तात्पर्य्यविवरणमिति परम्परया यत्नपदशक्यप्रतीतिप्रयोजकताप्र-

---

प्रतीतिनियामकस्वरूपसम्बन्धेन अतोनासिद्धिरिति ध्येयं। ननु मास्तु करो-तिना विवरणबलेनाख्यातस्य यत्नवाचकत्वं कृञोव्यापारवाचकत्वं कृतिवाच-कत्वञ्चेति विवाददशायां कृञः कृतिवाचकत्वसंशयात् पचति-पाकजनकयत्न-वानिति विवरणबलात् स्यादेवाख्यातस्य यत्नवाचकत्वं इत्यत आह, 'पच-तीति, 'पाकयत्नवानिति पाकजनकयत्नवानित्यर्थः, 'तात्पर्य्यविवरणं' पच-

विवरणं। अन्यथा धर्म्मिणोऽपि वाच्यतापत्तेः। अथैवं वर्त्तमानत्वं यत्नस्य न प्रतीयेत तस्यापदार्थत्वात्।

---

कारकतदिच्छयोच्चरितत्वस्य तिप्पदं बोधकं न तु तदुपस्थिति-जनकताबोधकमित्यर्थः। यद्वा 'तात्पर्य्यविवरणमिति तत्परत्वमात्र-बोधकं यत्नपदशक्यप्रतीतौ तिप्पदज्ञानोत्तरत्वमात्रबोधकमिति यावत्, न तु तिप्पदं तदुपस्थितेर्जनकत्वबोधकमित्यर्थः। ननु विवरणेन स्वप्रतिपाद्योपस्थापकत्वमेव विध्रियमाणे बोध्यते इत्यत-आह, 'अन्यथेति विवरणस्य स्वप्रतिपाद्योपस्थापकत्वबोधकत्वनियमे इत्यर्थः, 'धर्म्मिणोऽपि' आख्यातार्थविशेष्यत्वेनाभिमतस्य यत्नाश्रय-स्यापि, 'वाच्यतापत्तेः' भवन्मते आख्यातस्य वाच्यतापत्तेः, मतुप्-पदशक्योपस्थापकत्वस्य यथोक्तविवरणेन तिपोऽबोधनात् न तन्नियम-इति भावः। 'अथैवमिति, 'एवं' प्रवृत्तित्वविशिष्टस्य आख्याताुन-पस्थाप्यत्वे, 'वर्त्तमानत्वं' आख्यातोपस्थापितं वर्त्तमानत्वं, 'यत्नस्य' प्रवृत्तित्वविशिष्टस्य, 'अपदार्थत्वात्' पदानुपस्थितत्वात्, "शाब्दी-

तीत्यतः पाकजनकव्यापारप्रतीतौ तेन व्यापारेणानुमितोयः पाकजनकयत्न-स्तस्य ज्ञापनं, 'अन्यथेति विवरणविषयतामात्रेणाख्यातस्य यत्ने शक्तिस्वीकार-इत्यर्थः, 'धर्म्मिणः' पाकजनकयत्नवतः, 'वाच्यतापत्तेः' आख्यातवाच्यतापत्तेः, तस्यापि पाकयत्नवानिति मतुपा विवरणादिति भावः। शङ्कते, 'अथैवमिति, 'एवं' यत्नत्वविशिष्टस्याख्यातवाच्यत्वविरहे, 'यत्नस्य' यत्नत्वविशिष्टस्य, 'तस्य' यत्नत्वविशिष्टस्य, 'अपदार्थत्वात्' पचतीत्यादावाख्यातानुपस्थाप्यत्वात्, तथाच शाब्दीह्याकाङ्क्षेति न्यायेन तस्यापदार्थत्वे तत्र वर्त्तमानत्वेन शाब्दबोधविषयता न स्यादित्यर्थः, इदञ्च न्यायनये दूषणं, अर्थाध्याहारमते पदानुपस्थितस्य

अन्यत्र धात्वर्थक्रियायां स्वार्थव्यापारे वा लडादेर्वर्त्त-मानत्वाद्यनुभावकत्वव्युत्पन्नत्वाच्च। न च पाकजनक-

---

ह्याकाङ्क्षेति नियमादिति भावः। अर्थाध्याहारवादिमतमालम्ब्य कदाचिदपदार्थेऽप्यन्वयोवक्तुं शक्यते इत्यतो व्युत्पत्तिविरोधमप्याह, 'अन्यत्रेति।

केचित्तु नन्वध्याहृतपदाद्यत्नोपस्थितौ वर्त्तमानत्वस्यान्वयो भविष्यतीत्यत आह, 'अन्यत्रेत्याहुः।

'अन्यत्र' चैत्रः पचतीत्यादेरन्यत्र, 'क्रियायां' स्पन्दे, एतच्च चलति-गच्छतीत्यादौ। इदमुपलक्षणं, जानातीत्यादावपि धात्वर्थ-वर्त्तमानत्वान्वयोबोध्यः। 'स्वार्थव्यापारे वेति, 'वाशब्दस्त्वर्थे, एत-च्चाग्निः पचतीत्यादौ, 'लडादेरित्यादिपदादाख्यातान्तरोपसंग्रहः, 'वर्त्तमानत्वादीत्यादिपदादतीतत्व-भविष्यत्त्वोपग्रहः। न च पचती-त्यादावपि धात्वर्थे वर्त्तमानत्वाद्यन्वये को दोष इति वाच्यं। साक्षाद्विक्लित्तिजनकस्य स्पन्दस्य पाकत्वमते पाकभविष्यत्त्वादशायां तदनुकूलकर्त्तृव्यापारस्य विद्यमानतादशायामपि पचतीतिप्रयो-गात् पक्ष्यतीत्यप्रयोगात् कर्त्तृव्यापारस्यातीतत्वदशायां तादृशपाकस्य वर्त्तमानत्वदशायां पचतीत्यप्रयोगादपचदित्यपि प्रयोगाच्च। नन्वेव-

---

शाब्दविषयत्वं सम्भवतीति तन्मतेऽपि यत्ने वर्त्तमानत्वप्रतीत्यनुपपत्तिं दर्शयति, 'अन्यत्रेति स्वार्थव्यापारादन्यत्र धात्वर्थे जानातीत्यादौ, 'स्वार्थव्यापारे वेति अग्निः पचतीत्यादौ पाकानुकूलव्यापारे, 'लडादेरित्यादिनाख्यातान्तरपरि-ग्रहः, 'वर्त्तमानत्वादीत्यादिपदेनातीतत्व-भविष्यत्त्वयोः परिग्रहः, तथाचाख्या-तार्थवर्त्तमानत्वादेः प्रतिनियतान्वयव्युत्पत्तिविरोधानुमाने तदन्वयो भवन्मते

मग्निना पच्यते चैत्रेण पच्यते इत्यादौ यत्र वर्त्तमानत्वाद्यन्वयः तत्राख्यातेन व्यापार-कृत्योरबोधनात् साक्षाद्विक्लित्तिजनकस्पन्दस्य पाकत्वमते पाकानुकूलव्यापारासत्त्वदशायां पाकसत्त्वेऽपि तादृशप्रयोगाभावेन कर्त्तृव्यापारसत्त्वदशायां पाकासत्त्वेऽपि तादृशप्रयोगसत्त्वेन च धात्वर्थे तदन्वयस्य वक्तुमशक्यत्वात्। न च तत्र सुवर्थव्यापारादावेव तदन्वय इति वाच्यं। तथासत्युक्तव्युत्पत्तिभङ्गापत्तेः तथा तृतीयाद्यन्तपदासमभिव्याहृतपच्यते तण्डुल इत्यादौ वर्त्तमानत्वाद्यनन्वयप्रसङ्गस्य दुर्व्वारत्वाच्च। न च तत्रानन्वितत्वमेव वर्त्तमानत्वादिकमिति वाच्यं। पाकानुकूलकर्त्तृव्यापारस्यातीतत्वानागतत्वदशायामपि पच्यतेऽयं तण्डुल इत्यादिव्यवहारापत्तेरिति चेत्, न, तत्र वर्त्तमानव्यापारजन्यत्वादिरूपपारिभाषिकवर्त्तमानत्वादेराख्यातार्थत्वात् तस्य च धात्वर्थेऽन्वयात्, धातोः पाकानुकूलव्यापारे लाक्षणिकतया धात्वर्थ एव वर्त्तमानत्वाद्यन्वयसम्भवाच्चेति भावः।

नन्वेवं कालः पाकजनकवर्त्तमानयत्नवान् पाकजनकवर्त्तमानव्यापारवत्त्वादित्यनुमेयं, यदा पाकजनकयत्क्षणवृत्तिव्यापारस्तदा पाकजनकतत्क्षणवृत्तियत्न इति सामान्यमुखी च व्याप्तिरित्याशङ्क्य

---

सम्भवतीति भावः। ननु चैत्रः पचतीत्यतश्चैत्रः पाकजनकवर्त्तमानव्यापारवानित्यन्वयबोधे जाते तत एव पक्षधर्म्मताज्ञानात् पाकजनकवर्त्तमानव्यापारत्वावच्छेदेन पाकजनकवर्त्तमानयत्नव्याप्तिप्रकारकस्मरणसहितात् चैत्रः पाकजनकवर्त्तमानयत्नवानित्यनुमितिर्भविष्यति तथाच चैत्रः पचतीत्यादौ चैत्रः पाकजनवर्त्तमानयत्नवानिति प्रत्ययस्य नानुपपत्तिस्तादृशानुमितेरेव तादृशप्रत्ययत्वादित्याशङ्क्य निराकुरुते, 'न चेति, निराकरणहेतुमाह,

वर्त्तमानयत्नानुमानं, यत्नविगमेऽपि व्यापारानुवृत्तेः। धर्म्मिविशेषनिष्ठता च यत्नस्य न स्यात् तद्व्यधिक-

---

निराकरोति, 'न चेति, 'यत्नविगमेऽपीति, तथाच संयोगात्मक-पाकजनकव्यापारवत्यपि क्षणे पाकजनकयत्नाभावाद्व्यभिचार इति भावः। ननु संसारस्यानन्तत्वात् सर्व्वदैव पाकजनकयत्नसत्त्वात् स्थूलकालस्य वर्त्तमानत्वघटकत्वाद्वा न व्यभिचारः। यद्वा चेष्टोत्पत्तिक्षणो वर्त्तमानत्वघटकः तद्विशिष्टव्यापारवत्त्वञ्च हेतुः विशेषमुखी च व्याप्तिरतो न व्यभिचार इत्यत आह, 'धर्म्मीति चैत्रादिनिष्ठतेत्यर्थः, तथाच पाकजनकवर्त्तमानयत्नवान् चैत्र इति धीर्न

---

'यत्नविगमेऽपीति पाकजनकवर्त्तमानयत्नविरहेऽपीत्यर्थः, 'व्यापारानुवृत्तेः' पाकजनकव्यापारस्य सत्त्वादित्यर्थः, एतावता च पाकजनकवर्त्तमानव्यापारस्य पाकजनकवर्त्तमानयत्नस्य कालिकी व्याप्तिर्निराकृता। ननु चैत्रः पचतीत्यादौ कृतिनिष्ठानुकूलताविशेषसम्बन्धेन व्यापारत्वविशिष्टे धात्वर्थपाकान्वयो वाच्यस्तथाच तादृशानुकूलतासम्बन्धेन पाकविशिष्टव्यापारः पाकजनकव्यापार एव यत्न एव स च यत्नविगमे न तिष्ठत्येवेति कालिकव्याप्तौ नोक्तव्यभिचार इत्यत आह, 'धर्म्मिविशेषेति चैत्रः पचतीत्यादौ चैत्रादिः समवायेन पाकजनकवर्त्तमानयत्नवत्त्वा न प्रतीयेतेत्यर्थः, कालिकसम्बन्धेन व्यापकताज्ञानात् कालिकसम्बन्धेनैव काले पाकजनकयत्नानुमितेरेवोत्पत्तेरिति भावः। ननु तादृशव्यापारं प्रति तादृशयत्नः समवायेन व्यापक इति व्यापकताज्ञानादेव धर्म्मिविशेषनिष्ठताप्रतीतिर्भवतीत्यत आह, 'तद्व्यधिकरणेति पचतीति वाक्यात् पाकजनकवर्त्तमानयत्नानधिकरणवृत्तेर्व्यापारस्यापि पाकजनकत्वेन प्रतीतेरित्यर्थः, अत्रायं भावः चैत्रः पचतीत्यादौ यत्ननिष्ठानुकूलताविशेषसम्बन्धेन पाकस्य व्यापारेऽन्वयः काष्ठं पचतीत्यादौ चानुकूलतासामान्येन सम्बन्धेन

करणव्यापारस्यापि पाकजनकत्वात्, चैतन्याविनाभूत-चैत्रत्वादिविशेषितेन तेन यत्नानुमानमिति चेत्,

---

स्यादिति भावः। ननु चैत्रः पाकजनकवर्त्तमानयत्नवान् पाकजनकवर्त्तमानव्यापारवत्त्वात् इत्याद्यनुमेयं, स्थूलकालोविशिष्य चेष्टोत्पत्तिक्षणो वा वर्त्तमानत्वघटकः तेन न व्यभिचार इत्यत आह, 'तद्व्यधिकरणेति यत्नव्यधिकरणस्यापि स्थाल्यादिकाष्ठाग्न्यादिसंयोगस्येत्यर्थः, संसारस्यानन्तत्वात् तथाच व्यभिचार इति भावः। ननु चैत्रत्वे सतीत्यनेन हेतुर्विशेषणीय इत्याशङ्कते, 'चैतन्येति, अचेतनेऽपि चैत्रत्वादिसङ्केतसत्त्वात् उक्तं 'चैतन्याविनाभूतेति, 'चैत्रत्वादीति, चैत्रत्वं स्वरूपतो-विशेषणं तेन चैत्रत्वेन चैत्रत्वस्य शब्दानुपस्थितत्वे

---

पाकस्य व्यापारेऽन्वय इति स्वीकारे व्युत्पत्तेर्भेदापत्त्या गौरवं स्यादित्युभयसाधारण्यायानुकूलतासामान्यसंसर्गेण व्यापारे पाकान्वयो वाच्यस्तथाचानुकूलतासामान्येन पाकविशिष्टव्यापारस्य चैत्रः पचतीत्यादौ प्रतीयमानस्य पाकजनकवर्त्तमानयत्ने व्यभिचारितया न तेन तदनुमानं विशेषदर्शिनां स्यादिति। ननु चैत्रः पाकजनकवर्त्तमानयत्नवान् पाकजनकवर्त्तमानव्यापारवत्त्वादित्यनुमितिर्जायतामित्याशङ्कते, 'चैतन्येति, अविनाभूतं व्याप्यं यच्चैत्रत्वादि तद्विशेषितेनेत्यर्थः, 'तेन' पाकानुकूलवर्त्तमानव्यापारेण, 'यत्नानुमानं' पाकजनकवर्त्तमानयत्नानुमानं। शोभनत्वं सुन्दरत्वं, 'शोभन इति काष्ठादिसाधारणं बोध्यं तथाच शोभनत्वे सति पाकजनकवर्त्तमानव्यापारवत्त्वं शोभनकाष्ठादौ पाकजनकवर्त्तमानयत्ने व्यभिचारीति तत्र तादृशानुमानानुपपत्तिरित्यर्थः। न च तत्रापि चैत्रत्वादिविशेषितेन तदनुमानं, तत्र चैत्रत्वादेः शब्दादनुपस्थितेः प्रमाणान्तरेण च तदा नियमतस्तदनुपस्थितौ मानाभावएवं तथाच शोभनः पचतीत्यादौ प्रमाणान्तरेण चैत्रत्वाद्यनुपस्थितिदशायां

सत्यं, चैत्रत्वाद्यप्रतीतावपि शोभनः पचतीत्यादौ शोभनादेः पाकयत्नवत्त्वप्रतीतेः तत्राख्यातस्य जनकयत्ने लाक्षणिकत्वात्। मैवं, अविनाभावमपेक्ष्य लाघवेन

न क्षतिः। तेन पाकजनकवर्त्तमानव्यापारेण यत्नानुमानम्। 'शोभनादे'रिति, शोभनत्वस्य स्थाल्यादिसाधारणतया शोभनत्वे सति तादृशव्यापारवत्त्वं न यत्नानुमापकमिति भावः। इदमुपलक्षणं चैत्रः पचतीत्यादौ शाब्दबोधात्मकतादृशप्रतीतेरानुभविकत्वाच्चेत्यपि मन्तव्यम्। 'तत्रे'ति यत्र यत्नशाब्दबोधस्तत्रेत्यर्थः, जनकव्यापारवत्त्वस्य शक्यतावच्छेदकत्वेऽपि क्वचिल्लक्षणाया आवश्यकत्वे लाघवं किमित्याशयेन जनकयत्ने शक्तिवाद्येव दूषयति, 'मैव'मिति, 'जनकव्यापारः' जनकव्यापारत्वं, 'जनकयत्नस्य' जनकप्रवृत्तित्वस्य, 'शक्यत्वात्' शक्यतावच्छेदकत्वात्, जनकत्वप्रवेशस्याविशिष्टत्वेऽपि प्रवृत्तित्वस्य जातितया तदपेक्ष्य धर्मत्वरूपस्य व्यापारत्वस्य उपाधित्वाद्गुरुत्वमिति भावः। जनकयत्नत्वस्य शक्यतावच्छेदकत्वेऽपि जनकत्वप्रवेशस्यावश्यकतया जन-

तदनुमानानुपपत्तिरिति भावः। 'अथैव'मिति पूर्व्वपक्षसमाधानमाह, 'सत्य'मिति, 'तत्र' शोभनः पचतीत्यादौ, इत्थञ्च काष्ठं पचति अग्निः पचतीत्यादिबहुतरप्रयोगे सङ्ख्यात्वसम्पादनाय परं आख्यातस्य व्यापारे शक्तिः कल्प्यते शोभनः पचतीत्यादिप्रयोगानाञ्चाल्पत्वेन तत्र लक्षणाकल्पनैव युक्तेति पूर्व्वपक्षिहृदयम्। 'लाघवेने'ति जन्यत्वं धर्म्मत्वं वा व्यापारत्वं अपेक्ष्य यत्नत्वस्य लघुत्वेनेत्यर्थः। ननु पततीत्यादौ पतनानुकूलगुरुत्ववदिति स्पन्दत इत्यादौ च स्पन्दानुकूलवेगवदिति प्रतीयते इति गुरुत्वत्वं वेगत्वञ्चाख्यातशक्यतावच्छेदकं स्यात् यत्नतुल्यत्वादिति चेत्, तत्र तत्र तेन तेन रूपेण प्रतीतेरानुभविकत्वे

जनकयत्नस्यैव शक्यत्वात्। यत्नं विहाय जनकमात्रे शक्तिरस्तु लाघवात् तथाचाचेतनेऽपि प्रयोगो मुख्य एवेति चेत्, न, अपचत्यपि पाकजनकादृष्टवति पचतीति प्रयोगापत्तेः। पाकजनकादृष्टजनककृतेश्च न पाकजन-

कत्वमेव शक्यतावच्छेदकमस्तु लाघवात् किं यत्नत्वप्रवेशेनेत्यभिप्रायेणाशङ्कते, 'यत्नं विहायेति, 'यत्न' यत्नत्वं, 'मात्रे' सामान्ये, 'तथाचेति जनकसामान्ये शक्तौ चेत्यर्थः, 'अचेतनेऽपीति, व्यापारानुबन्धिविशेष्यता सप्तम्यर्थः, अचेतनमुख्यविशेष्यकेऽपीत्यर्थः, 'प्रयोगः' पचतीत्यादिप्रयोगः, अग्निः पचतीत्यादिप्रयोगोऽपीति समुदितार्थः। 'अपचत्यपीति, 'पाकजनकादृष्टवति' भोक्तरि, पचतीतिप्रयोगः स्यादिति। ननु यत्नशक्तिवादिनस्तवापि तददृष्टजनककृतिकाले तामादाय तत्र तत्प्रयोगो दुर्वारः जनकताविशेषनिवेशेनातिप्रसङ्गवारणन्तु ममापि नाशक्यमित्यत आह, 'पाकजनकेति, 'अतएव' जनकादृष्टजनककृतेः स्वाजनकत्वादेव, 'कृत्यादिजन्यत्व इति, 'आदि-

इष्टापत्तेः। वस्तुतः पततीत्यादौ पतनाश्रयत्वादेरेव प्रतीतेरानुभविकत्वादिति भावः। जनकयत्नत्वे जनकत्वं प्रविष्टमिति तदेवाख्यातशक्यतावच्छेदकं स्याल्लाघवादित्याशङ्कते, 'यत्नं विहायेति, लाघवात् जनकयत्नत्वापेक्षया जनकत्वस्य लघुत्वात्, यत्नत्यागे बीजान्तरमप्याह, 'तथाचेति जनकत्वमात्रस्याख्यातशक्यतावच्छेदकत्वे चेत्यर्थः, अचेतनेऽपि काष्ठं पचति अग्निः पचतीत्यादावाख्याते प्रयोगो मुख्य एव भवतीत्यर्थः। ननु जनकयत्नस्य शक्यत्वेऽपि पाकजनकादृष्टजनककृतेरपि पाकजनकतया स एव दोषः स्यादित्यत आह, 'पाकजनकेति, 'अतएव' तज्जनकादृष्टजनककृतेस्तज्जनकत्वे मानाभा-

कत्वं मानाभावात्। अतएव क्षित्यादेः कृत्यादिजन्यत्वे साध्ये तज्जनकादृष्टजनककृत्यादिना अर्थान्तरप्रसङ्गोऽपि प्रत्युक्तः। भावे वा तादृशकृतिनिवारणायादृष्टाद्वारकजनकतायास्त्वयापि वाच्यत्वात्। यत्नमात्रं शक्यं

---

पदादिच्छादिपरिग्रहः, 'साध्ये' कार्य्यत्वेन हेतुना साध्ये, 'तज्जनकेति चित्यादिजनकेत्यर्थः। अभ्युपेत्याह, 'भावे वेति, 'तादृशेति पाकजनकादृष्टजनकेत्यर्थः, 'त्वयापि' जनकसामान्ये शक्तिवादिना त्वयापि, अन्यथा तदा तादृशप्रयोगापत्तेस्तत्रापि दुर्व्वारत्वाददृष्टमादायातिप्रसङ्गस्तु तव दुर्व्वारः, अदृष्टस्यादृष्टमद्वारीकृत्यैव पाकजनकत्वात् इति भावः। ननु कार्य्यस्य समवायो जनकस्य विषयतेति सम्बन्धनियतफलोपधानात्मकजनकतानिवेशात् अदृष्टमादाय नातिप्रसङ्ग इत्यतो नव्यमतमाह, 'यत्नमात्रं शक्यमिति प्रवृत्तित्व-

---

वादेव, 'क्षित्यादेरिति, क्षितिः कृतिजन्या कार्य्यत्वात् घटवदित्यनुमानबलेनास्मदादिकृतिजन्यताबाधेन भगवत्कृतिजन्यता सिध्यतीति सिद्धान्तः। स च तज्जनकादृष्टजनककृतेस्तज्जनकत्वे भग्नः स्याद्बाधाभावेनादृष्टजनकास्मदादिकृतिजन्यतामादायार्थान्तरप्रसङ्गेन भगवत्कृतेरसिद्ध्यापत्तेरिति दोषो निरस्त इत्यर्थः। अभ्युपेत्याह, 'भावे वेति तज्जनकादृष्टजनककृतौ तज्जनकत्वस्य प्रामाणिकत्वे वेत्यर्थः, 'त्वयापीति जनकमात्रे आख्यातशक्तिवादिनापि, 'वाच्यत्वादिति, अन्यथा पाकजनकादृष्टजनकयत्नस्यापि पाकजनकत्वेन तमादाय अपचत्यपि पाकजनकादृष्टजनकीभूतगङ्गास्नानादिगोचरयत्नवति पचतीति प्रयोगप्रसङ्गस्य तवापि दुर्व्वारत्वादिति भावः। वस्तुतः कार्य्यीभूतपाकस्य समवायः कारणीभूतकृतेर्विषयता इत्येवं सामानाधिकरण्यप्रत्यासत्त्यवच्छि-

विषयित्वं जनकत्वं वा सम्बन्धमर्य्यादया भासत इति मात्रं शक्यतावच्छेदकमित्यर्थः। न च प्रवृत्तित्वस्यैव शक्यतावच्छेदकत्वे पच्यत इत्यादौ पाकजन्यफलशालित्वरूपपाकादिकर्म्मत्वप्रतीतिः कथं स्यादिति वाच्यम्। तत्रात्मनेपदस्य कर्म्मत्वे लाक्षणिकत्वात्, कर्म्मत्वं फलवत्त्वं, तच्च फलमेव, जन्यतासम्बन्धेन पाकादेर्धात्वर्थस्य तत्रान्वयः, फलत्वञ्च कार्य्यत्वं, प्रतियोगितासम्बन्धेन प्रागभावादिमत्त्वमिति यावदिति भावः। विषयित्वं जनकत्वं वेति तात्पर्य्याधीनो व्यवस्थितो विकल्पः सम्बन्धान्तरेणान्वयस्य निराकाङ्क्षत्वबोधकः न तु पूर्व्वास्वरसे विकल्पः, तेन जनकत्वस्य विषयित्वमपेक्ष्य गुरुत्वेऽपि चरमनिर्द्देशो नानुपपन्नः। अथैवमस्मदादीनां पाकानुष्ठानदशायां

---

अजनकत्वस्य शक्यतावच्छेदकत्वेन गोक्षागङ्गास्नानादिगोचरकृतिमादायातिप्रसङ्गस्तस्य पाकसमवायिस्थाल्यादिविषयकत्वाभावेन निरुक्तसामानाधिकरण्यप्रत्यासत्त्यवच्छिन्नपाकजनकत्वासम्भवादिति तत्त्वं। नन्वदृष्टव्यावृत्तं विलक्षणजनकत्वमेवाख्यातशक्यतावच्छेदकं वाच्यं अतो न पाकजनकादृष्टमादायोक्तातिप्रसङ्ग इत्यतो नव्यमते यत्ने शक्तौ युक्तिं दर्शयति,'यत्नमात्रमिति यत्नत्वमात्रं आख्यातशक्यतावच्छेदकमित्यर्थः। मात्रपदेन जनकयत्नत्वस्य जनकत्वस्यचाख्यातशक्यतावच्छेदकत्वव्यवच्छेदः। तयोर्यत्नत्वजात्यपेक्षया गुरुत्वादिति भावः। धात्वर्थपाकादेर्यत्ने फलसम्बन्धेनान्वय इत्याकाङ्क्षायामाह, 'विषयित्वमिति, तथाच पचतीत्यादौ विषयितासम्बन्धेन पाकविशिष्टयत्नवानित्यर्थः। नन्वेवं पचतीत्यादौ पचेः पाकत्वलक्षणायामपि पाकत्वविषयकयत्नवानित्यन्वयबोधापत्तिः पाकविषयिण्यास्तत्तत्कृतेः पाकत्वविषयकत्वनियमात्। न च विशेष्यत्वाख्यमेव विषयित्वं संसर्गः तथापि निगडनिस्खलदेहस्यामवाशक्तीकृतकलेवरस्य चोत्थानविषयककृतिर्जायते उत्थानन्तु न जायते निगड

परमेश्वरः पचतीत्यपि प्रयोगापत्तिः तत्कृतेः सर्व्वविषयकतया कार्य्यमात्रजनकतया चास्मदादिकर्त्तृकपाकस्यापि तद्विषयत्वात् तज्ज-न्यत्वाच्च । न च प्रवृत्तित्वस्य शक्यतावच्छेदकस्य तत्कृतावभावात् न तथा प्रयोग इति वाच्यम् । तत्रापि धर्म्मिग्राहकमानसिद्धत्वात् । न चाख्यातार्थयत्न-कर्त्तृपदार्थयोरवच्छेदकतासम्बन्धेनैवान्वयस्य साका-ङ्क्षत्वात् न तथा प्रयोगः आत्मा पचतीत्यपि प्रयोगो नेष्यते अहं पचामि त्वं पचसीत्यादौ उच्चारयित्रादिशरीरमेव चैत्रत्वादिना अस्मदादिपदशक्यं परमेश्वरो वेदं वेत्तीत्यत्रापि परमेश्वरपदं शरीरपरं न तु परमात्मपरमिति वाच्यम् । तथापि तदानीं कृष्णः पचतीति प्रयोगापत्तेर्दुर्व्वारत्वादिति चेत्, न, साध्यताख्यविषयिताविशेषस्य चेष्टादिद्वारा फलोपधानाख्यजनकताविशेषस्य च संसर्गत्वनियमात्, भगवत्कृतिश्च नास्मदादिकृतपाकस्य तादृशविषयितावती तादृशजन-कतावती वा, अतएव पाकत्वेन पाकविषयिण्याः कृतेश्च पाकत्व-विषयतानियमेऽपि पचेः पाकत्वे लक्षणायां पचतीति प्रयोगो न योग्यः, न वा उपादानतादिरूपसाध्यत्वभिन्नविशेष्यताकप्रवृत्तिसत्त्वेऽपि पचतीति प्रयोगो योग्यः, न वा क्रियान्तरगोचरप्रवृत्तिदशायां स्वरूपयोग्यतामादाय पचतीत्यादिप्रयोगः, नापि पाकजनकादृष्ट-जनककृतिमादाय पचतीत्यादिप्रयोगः । न च तथापि विषयिताया-अपि संसर्गत्वे पाकाद्यनुत्पत्तावपि पाकादिसाध्यकप्रवृत्तेर्वर्त्तमानत्वा-

बन्धनामवातादिना दोषेण प्रतिबन्धादिति सिद्धान्तस्तथाच यदा निगड-निश्चलदेहस्योत्थानविषयिणी कृतिस्तदा निगडनिलम्बदेह उत्तिष्ठतीति प्रयोगापत्तिः एवं आमवातजडीकृतकलेवरस्योत्थानविषयिकृतिदशायां

तीतत्वदशायां पचत्यपचदित्यादिप्रयोगापत्तिर्दुर्व्वारा पचतीत्यादावाख्यातार्थवर्त्तमानत्वादेराख्यातार्थयत्नादावेवान्वयस्य निरूढ़त्वादिति वाच्यम्। विषयितासम्बन्धमादाय तत्र तदानीं तादृशप्रयोगस्य दृष्टत्वात्, फलोपधानात्मकजनकतासंसर्गस्य विषयत्व एव तत्र तदानीं तथा प्रयोगस्यायोग्यत्वाभ्युपगमात्। अतएव विषयितायाः संसर्गत्वभ्रान्त्या वृष्ट्यादिसाध्यकप्रवृत्तिमति पुरुषे वर्षतीति प्रयोगापत्तिः भ्रमादुत्थानसाध्यकप्रवृत्तिमति निगड़निस्खलदेहे उत्थानानुत्पत्तावपि उत्तिष्ठतीति प्रयोगापत्तिरित्यपि निरस्तम्। साध्यत्वाख्यविषयितासंसर्गमादाय तत्र तादृशप्रयोगस्येष्टत्वात्, फलोपधानात्मकचेष्टादिद्वारजनकताविशेषसंसर्गविषयकत्व एव तादृशप्रयोगस्यायोग्यत्वाभ्युपगमादिति भावः।

केचित्तु विषयित्वस्य संसर्गत्वे सर्व्वमेतद्दोषमभिसन्धायैव जनयाश्चेत्यभिहितमित्याहुः।

केचित्तु साध्यत्वाख्यविषयिता द्विविधा स्वरूपयोग्यतात्मिका फलोपधानात्मिका च तत्र फलोपधानात्मिकायाः साध्यत्वाख्यविषयिताया एव प्रकृते संसर्गत्वाभ्युपगमान्नोक्तातिप्रसङ्गः। अतएव भोजनाद्यनुत्पत्तिस्थले भोजनादिसाध्यकप्रवृत्तिसत्त्वेऽपि भोजनं करोति भोजनं क्रियते इत्यादयो न व्यवहाराः फलोपधानाख्यसाध्यत्वाख्यविषयिताया एव कृधातुप्रयोगे कर्म्मप्रत्ययार्थत्वात्। न च साध्यत्वाख्यविषयित्वादेः तादृशद्वैविध्ये मानाभावइति वाच्यम्। क्रियानु-

---

आमवातजडीकृतकलेवरस्तिष्ठतीति प्रयोगः स्यात् एवं वृष्टौ कृतिसाध्यत्वभ्रमे-वृष्टिविषयिणी कृतिर्जायते वृष्टिस्तु न जायते वृष्टिं प्रति वृष्टिविषय-

तु नव्याः । कर्त्तृ-कर्म्मणी लकारवाच्ये चैत्रः पचति पच्यते तण्डुल इति सामानाधिकरण्यानुरोधात्

---

त्यत्तिदशायां तादृशप्रतीत्यभावस्य मानत्वादित्याहुः । तदसत् । क्वचित् स्वरूपयोग्यतात्मकसाध्यतावती प्रवृत्तिः, क्वचित् फलोपधानात्मकतद्वतीत्यत्र नियामकस्य दुर्व्वारत्वादिति दिक् ।

वस्तुतस्तु साध्यताख्यविषयता-फलोपहितजनकत्वोभयसम्बन्धेनैव धात्वर्थस्य कृतावन्वयोऽभ्युपेयः, अन्यथा जनकतायाः सम्बन्धत्वकल्पे विषयतासम्बन्धकल्पोक्तपूर्व्वदोषोद्धारेऽपि नान्तरीयकमौनभोजनादौ मौनं भुङ्क्ते इत्यादिप्रयोगस्य दुर्व्वारत्वात्, दीधितिकारलिखनन्तु वाकारस्य समुच्चयार्थतवेत्युपपादनीयमिति विभावनीयम् ।

वैयाकरणमतमुत्थापयति, 'कर्त्तृ-कर्म्मणी इति, 'लकारः' आख्यातं, 'इति सामानाधिकरण्यानुरोधादिति, 'इति' अत्र, चैत्र-तण्डुलादिपदाख्यातपदयोरेकधर्म्मिबोधकत्वानुरोधादित्यर्थः, विभिन्नप्रवृत्ति-

कत्वतेः स्वरूपायोग्यत्वादिति मते चैत्रे वृष्टिविषयकृतिदशायां चैत्रोवर्षतीति प्रयोगापत्तिरित्यत आह, 'जनकत्वं वेति फलोपहितजनकत्वमित्यर्थः, तेन निगडनिखलदेहादिप्रसङ्गाभाव इति भावः। वैयाकरणमतमाह, 'कर्तृकर्म्मणी इति, 'लकारः' आख्यातं, वैयाकरणैस्त्यादीनां लत्वेन परिभाषितत्वादित्यर्थः, कर्तृत्वं कर्म्मत्वञ्च समवायेन विषयतया वा, कृतिरेव शक्यतावच्छेदिकेति पचतीत्यादौ समवायेन कृतिप्रकारेण पच्यते इत्यादौ च विषयतया कृतिप्रकारेण तत्तदर्थबोधस्यानुभविकत्वादित्यर्थः, 'इति' इत्यत्र, 'सामानाधिकरण्येति चैत्रपदाख्यातपदयोर्भिन्नरूपाभ्याञ्चैत्रत्व-कृतिभ्यामेकस्य चैत्रस्य

अन्यथा पचतीत्यादावपि कर्त्तरि तृतीया पच्यत इत्यत्र कर्म्मणि द्वितीया स्यात् तयोरनभिहिताधिकारीय-

---

निमित्तकयोरेकधर्म्मिबोधकत्वलक्षणस्य शाब्दसामानाधिकरण्यस्यात्र सामानाधिकरण्यपदार्थत्वात्। ननु चैत्र-तण्डुलपदाख्यातपदयोरेकधर्म्मिबोधकत्वमेवासिद्धं तथाच लाघवात् प्रवृत्तित्वमाख्यातस्य शक्यतावच्छेदकमित्यत आह, 'अन्यथेति तयोरेकधर्म्यबोधकत्वे इत्यर्थः।

केचित्तु 'इतिसामानाधिकरण्यानुरोधादित्यत्र चैत्र-तण्डुलपदार्थाख्यातार्थयोरभेदसंसर्गकान्वयानुरोधात्। नन्विदमेवाप्रसिद्धं तथाच लाघवात् प्रवृत्तित्वमेवाख्यातस्य शक्यतावच्छेदकमित्यस्वरसात् साधकान्तरमाह, 'अन्यथेति कर्त्तृ-कर्म्मणोरनभिधाने इत्याहुः।

'तयोः' तृतीया-द्वितीययोः, 'अनभिहिताधिकारीयत्वादिति कर्त्तृ-कर्म्मणोरनभिधान एवानुशिष्टत्वादित्यर्थः। ननु द्वितीया-

---

धर्म्मिणोबोधकत्वमेव शाब्दसामामधिकरण्यं चैत्रेण पच्यते तण्डुल इत्यादौ च तण्डुलपदाख्यातपदयोर्भिन्नरूपाभ्यां तण्डुलत्व-विषयतासम्बन्धेन कृतिभ्यामेकस्य तण्डुलधर्म्मिणो बोधकत्वं शाब्दसामानाधिकरण्यं अनुभवसिद्धं तदनुरोधाच्चाख्यातसामान्यस्य समवायेन कृतिः शक्यतावच्छेदिका आत्मनेपदस्य च विषयतासम्बन्धेन कृतिः शक्यतावच्छेदिकेति समुदायार्थः। यद्वा सामानाधिकरण्यानुरोधादित्यस्य चैत्रादिपदार्थे तादात्म्यसम्बन्धेनाख्यातार्थप्रकारकबोधस्यानुरोधादित्यर्थः, 'अन्यथेति आख्यातस्य कर्त्तरि कर्म्मणि च शक्त्यनङ्गीकारे इत्यर्थः,'तयोः' तृतीया-द्वितीययोः, अनभिहिताधिकारीयसूत्राभ्यां साधुत्वेन प्रतिपादनादित्यर्थः, आख्यातेन कर्त्तुरनभिधाने समभिव्याहृतप्रातिपदिके तृतीया एवं आख्यातेन कर्म्मणोऽनभिधाने समभिव्याहृतप्राति-

त्वात् कृत्यभिधानस्याविशिष्टत्वात् । कर्त्तृ-कर्म्मसञ्ज्ञा-

तृतीयानुशासनस्याख्यातेन कृत्यनभिधाने न कर्म्मणि द्वितीयेत्यवार्थ-इत्यतश्चाह, 'कृत्यभिधानस्येति, 'अविशिष्टत्वादिति भवन्मते कर्त्तृ-कर्म्माख्यातसाधारणत्वादित्यर्थः, तथाच तण्डुलं पचतीत्यत्रापि द्वितीया चैत्रेण पच्यते इत्यत्रापि तृतीया न स्यादित्यर्थः । एतच्च कर्म्मा-ख्यातस्यापि कृतिबोधकत्वमिति प्राचीनमतानुसारेण, तन्मते अन्वय-बोधप्रकारस्त्वग्रे व्युत्पादनीयः । वस्तुतस्तु कृत्यनभिधानाभिधानस्य तृतीया-द्वितीयानियामकत्वे चैत्रो घटं जानातीत्यादावपि कर्त्तरि तृतीयापत्तेः कर्म्मणि द्वितीयानापत्तेः । न चाख्यातेन मुख्य-भाक्तसा-धारणकर्तृत्वानभिधानाभिधानाभ्यामेव तृतीया-द्वितीयानियम इति वाच्यम् । चैत्रेण भूयते इत्यादौ भावाख्यातस्थले कर्त्तरि तृतीया-नुपपत्तेरिति ध्येयम् । नियमान्तरमाशङ्क्य निराकरोति, 'कर्त्तृ-कर्म्मसञ्ज्ञेत्यादिना, 'इत्यपि नास्तीत्यन्तेनान्वयः । कर्त्तृगतसञ्ज्ञायाः

---

पदिके द्वितीया इति तृतीया-द्वितीयादिविधायकसूत्रस्यार्थस्तथा च कृतिः कर्म्मत्वं वा यद्याख्यातशक्यं न तु कर्त्ता कर्म्म वा तदा तृतीया-द्वितीयाविधा-यकसूत्रबलेन चैत्रः पचतीत्यादौ तृतीया चैत्रेण पच्यते तण्डुल इत्यादौ द्वितीया स्यादेवच्च चैत्रेण तण्डुलं पचति चैत्रेण पच्यते तण्डुलमित्यादिप्रयोगस्यापि साधुत्वापत्तिर्नचेष्टापत्तिस्तथा सति यज्ञादौ तादृशप्रयोगेऽप्यसाधुशब्दप्र-योगकृतदोषविरहप्रसङ्गादित्यर्थः । अत्र हेतुमाह, 'कृत्यभिधानेति कृत्यभि-धानेत्यनन्तरं मात्रपदाध्याहारेण कर्त्राख्यातस्थले कर्म्माख्यातस्थले च कर्त्तुः कर्म्मणस्थानभिधानेऽस्य भवन्मते तुल्यत्वादित्यर्थः करणीयः । यद्वा ननु कृते-रनभिधाने तृतीया कृतेरभिधाने द्वितीयेत्यनभिहिताधिकारीयसूत्रार्थो वाच्यः इति नोक्त दोष इत्यत आह, 'कृत्यभिधानस्येति, 'अविशिष्टत्वादिति चैत्रः

भिधानानभिधानाभ्यां नियमः। न चैवं चैत्रेण दृष्टो घट इत्यादौ विनापि तिङं सङ्ख्याप्रतीतेः क्लृप्तशक्तेः सुप एव सङ्ख्योपस्थितिसम्भवे तिङो न तदभिधायकत्व-

प्रत्ययेनाभिधाने कर्त्तरि प्रथमा, तेन तदनभिधाने तृतीया, एवं प्रत्ययेन कर्म्मगतसङ्ख्याया अभिधाने कर्म्मणि प्रथमा तदनभिधाने तत्र द्वितीया इति नियम इत्यर्थः। अन्तरा शङ्कते, 'न चेति, 'सुप एव' प्रथमाविभक्तित एव, 'सङ्ख्योपस्थितिसम्भव इति चैत्रः पचति तण्डुलः पच्यते इत्यादौ सङ्ख्योपस्थितिसम्भव इत्यर्थः, 'न तदभिधायकत्वं' न सङ्ख्याभिधायकत्वं, तथाच तथापि तृतीया-

पचतीत्यादाविव चैत्रेण पच्यते इत्यत्रापि कृत्यभिधानस्याविशिष्टत्वादित्यर्थः, तथाच चैत्रेण पच्यते इत्यत्रापि तृतीया न स्यादित्यर्थः। ननु कर्त्तृगत-सङ्ख्यायाः प्रत्ययेनानभिधाने तृतीया एवं कर्म्मगतसङ्ख्यायाः प्रत्ययेनानभिधाने द्वितीयेत्यनभिहिताधिकारीयसूत्रार्थोवाच्य इति नोक्तातिप्रसङ्ग इत्याशङ्क्य निराकुरुते, 'कर्त्तृ-कर्म्मेत्यादि, अत्र च कर्त्तृ-कर्म्मेत्याद्य 'इत्यपि नास्तीत्यन्त-एकोग्रन्थः। नन्वाख्यातस्य सङ्ख्यावाचकत्वे उक्तनियमः सम्भवति तत्र च प्रमाणं नास्तीत्याशङ्क्य निराकुरुते, 'न चेति, यद्यपि चैत्रेण दृष्ट इत्यस्योप-दर्शनं निरर्थकं घट इत्यत्रैव सुपः क्लृप्तसङ्ख्याशक्तिकत्वात् तथापि कृत्समभि-व्याहारस्थले सुपः सङ्ख्याबोधकत्वे प्रदर्शिते कृतः सङ्ख्याशक्तौ मानाभाव-इत्युक्तं भवति तथाच कृता सङ्ख्यानभिधानादिति वक्ष्यमाणदूषणस्य स्फुटता भवतीत्यभिप्रायेण तदुपदर्शनमिति ध्येयं। 'सङ्ख्याप्रतीतेरिति एकोघटश्चैत्र-वृत्तिदर्शनविषय इत्यन्वयबोधे एकत्वसङ्ख्यादिप्रतीतेरित्यर्थः, इदञ्च क्लृप्तशक्ते-रित्यत्र शक्तिकल्पने हेतुः। 'सुप एवेति प्रथमाविभक्तेरेवेत्यर्थः, 'सङ्ख्योप-स्थितिसम्भव इति चैत्रोगच्छति ग्रामोगम्यत इत्यादौ एकत्वादिप्रतीति-

मिति वाच्यम्। चैत्रो मैत्रश्च गच्छत इत्यादौ विनापि तादृशसुपं द्वित्वादिप्रत्ययात् लाघवादेकवचनत्वादि-

---

द्वितीयापत्तिस्तदवस्थेति भावः। यद्यपि घट एतावतैव सङ्ख्यायां सुपः क्लृप्तशक्तिकत्वमुपदर्शितं भवति किं चैत्रेण दृष्ट इत्यनेन, तथापि कृता सङ्ख्यानभिधानादिति वक्ष्यमाणदूषणेऽस्य विशिष्टोपदर्शनस्य फलं भविष्यति।

केचित्तु क्रियारहितं वाक्यमेव नास्तीतिमते घटइत्यत्र क्रिया-पदाध्याहारस्यावश्यकत्वे अस्तीत्यादितिङन्तमेवाध्याहर्त्तव्यम्। तथाच विनिगमनाविरह इति कदाचित् ब्रूयादतस्तदुपेक्ष्य सक्रियमेव वाक्यमुदाहृतम्। न च तथापि चैत्राभ्यां पच्यते तण्डुलान् पचती-त्यादि विहाय कृदन्तपर्य्यन्तानुधावनं विफलमिति वाच्यं। प्रथमायाः सङ्ख्याशक्तिसिद्धेरेव प्रकृतोपयोगित्वात् प्रथमेतरसुब्विभक्तेः सङ्ख्याश-क्तिसिद्धा तिङः सङ्ख्याशक्तिनिराकरणाशक्यत्वात् इत्याहुः।

'इत्यादाविति, 'आदिपदात् चैत्रोमैत्रो विष्णुमित्रश्च गच्छ-न्तीत्यस्य परिग्रहः। 'तादृशेति द्वित्वादिबोधकेत्यर्थः, द्वित्वादिपदाद्ग-

सम्भव इत्यर्थः, 'न सङ्ख्याभिधायकत्वं' आख्यातस्य न सङ्ख्याबोधकत्वं। 'चैत्रो-मैत्रश्चेति, 'इत्यादाविति, 'आदिपदेन चैत्रोमैत्रोदेवदत्तश्च गच्छन्तीत्यादिसं-ग्रहः, 'तादृशसुपमिति द्वित्वादिबोधकसुपमित्यर्थः, तथाच अत्र द्वित्वादि-सङ्ख्यावाचकसुपोऽभावात् अकामेनापि आख्यातस्य सङ्ख्यावाचकत्वमङ्गी-कार्य्यमिति भावः। न चोक्तप्रयोगे लक्षणयैव एकवचनात् द्वित्वादिसङ्ख्या-बोधसम्भवे किमनुरोधेनाख्यातस्य सङ्ख्यावाचकत्वमङ्गीकार्य्यमिति वाच्यं। लक्षणावीजाद्यप्रतिसन्धानदशायामपि उक्तवाक्यात् द्वित्वादिसङ्ख्यान्वयबोधस्य

नैव एकत्वादौ शक्तत्वाच्च । इत्यपि नास्ति कृता सङ्ख्या-

---

कृत्वपरिग्रहः । न चात्र सुपैव द्वित्वादिबोधसम्भवः सुब्विभक्तौ न लक्षणेति प्रवादस्य यद्विभक्त्यर्थे यद्विभक्तेर्व्यत्ययानुशासनं तद्विभक्त्यर्थातिरिक्ते विभक्त्यन्तरशक्ये तद्विभक्तेर्न लक्षणेत्येव विषयत्वादिति वाच्यं । सुपो द्वित्वादिषु लक्षणानुसन्धानं विनापि द्वित्वादिप्रत्ययादिति भावः ।

केचित्तु चैत्रादिपदोत्तरसुपो द्वित्वादिलक्षणायां चैत्रपर्य्याप्तेर्मैत्रपदोत्तरसुपो द्वित्वादिलक्षणायां मैत्रपर्य्याप्तेर्द्वित्वादेरेव प्रतीत्या चैत्र-मैत्रोभयपर्य्याप्तद्वित्वाद्यलाभात् चैत्र-मैत्रोभयमिति प्रतीतिर्न स्यात् स्याच्च चैत्रद्वयं मैत्रद्वयमित्येव प्रतीतिः सुब्विभक्तेः प्रकृत्यर्थगतमात्रसङ्ख्याबोधकत्वनियमात् । न चैवं चैत्र-मैत्रपदोत्तरसङ्ख्या कथं चैत्रादावन्वेतीति वाच्यं । द्वन्द्वसमासाद्यतिरिक्तस्थल एव तथा नियमादित्याहुः ।

---

सर्व्वानुभवसिद्धत्वात् अन्यथा अन्यत्रापि शक्त्युच्छेदप्रसङ्गात् । ननु उक्तवाक्यप्रामाण्यानुरोधात् आख्यातद्विवचनादेर्द्वित्वादिसङ्ख्यावाचकत्वस्य सिद्धत्वेऽपि आख्यातैकवचनस्य सङ्ख्यावाचकत्वं न सिद्ध्यतीत्यत आह, 'लाघवादिति सित्वाद्यनन्तधर्म्मेषु शक्ततावच्छेदकत्वकल्पनापेक्षया आख्यातैकवचनसाधारणैकवचनत्वस्य शक्ततावच्छेदकत्वे लाघवादित्यर्थः, एकवचनत्वञ्च लक्षणाग्रहाजन्यैकत्वसङ्ख्याबोधजनकतावच्छेदकानुपूर्व्वीमत्त्वमिति नान्योन्याश्रयादिकमिति । सम्प्रदायविदस्तु चैत्रो गच्छतीत्यादौ सुवेकवचनस्य शक्तिप्रतिसन्धानं विनापि सङ्ख्यान्वयबोधस्य सर्व्वजनानुभवसिद्धत्वेन सुवेकवचनस्येव आख्यातैकवचनस्यापि सङ्ख्यावाचकत्वं निर्व्विवादमिति वदन्ति । 'कृतेति, तथाच कर्म्मवाच्यकृत्प्रत्ययघटितवाक्ये कर्म्मपदस्य द्वितीयान्तता कर्त्तृवाच्यकृत्प्रत्यय-

यत्तु चैत्रो मैत्रश्च गच्छत इत्यादौ लक्षणयैवाख्यातद्वित्वादिप्रत्ययसम्भवात् किन्तस्य तत्र शक्तिकल्पनेन। न चात्र वा द्वित्वादावाख्यातस्य लक्षणा दृष्टौ घटौ दृष्टा घटा इत्यत्र प्रथमाया वा द्वित्वादिषु लक्षणेत्यत्र विनिगमनाभावात् उभयोरेव शक्तिसिद्धिरिति वाच्यं। सङ्ख्यातिरिक्तस्य प्रथमाविभक्तेः शक्यस्याप्रसिद्ध्या तत्र प्रथमाविभक्तेः सङ्ख्यायां लक्षणया वक्तुमशक्यत्वात् शक्यसम्बन्धस्यैव लक्षणात्वादिति। तन्न। प्रथमाविभक्तेः सङ्ख्यायां लक्षणया वक्तुमशक्यत्वेऽपि शक्तिभ्रमस्य सुवचतया विनिगमनाविरहस्य दुर्व्वारत्वादिति।

नन्वेतावता आख्यातद्विवचनादेर्द्वित्वादौ शक्तिरायातु तदेकवचनस्य एकत्वे शक्तौ तु किं मानं, तथाच तत्रैव तृतीया-द्वितीयानियमार्थं कर्त्रादिराख्यातपदवाच्यः स्यादित्यत आह, 'लाघवादिति, सित्वादिना एकत्वादिषु शक्तिकल्पने शक्ततावच्छेदकताबाहुल्यापत्त्या लाघवादेकवचनत्वादिनैव प्रथमैकवचनादेरेकत्वादिषु शक्तिः, तथाचायातमाख्यातैकवचनादेरप्येकवचनत्वादिषु शक्तेत्यर्थः। अत एव "द्व्येकयोर्द्विवचनैकवचने" इत्यनुशासनं। यद्यप्येकवचनत्वं नैकत्वशक्तत्वं आत्माश्रयात्, नाप्येकत्वबोधकत्वं पदमात्रस्यैव लक्षणादिना एकत्वबोधकत्वात्। तथापि सङ्केतविशेषसम्बन्धेनैकवचनपदवत्त्वं एकवचनत्वादि, "तान्येकवचन-द्विवचन-बहुवचनान्येकश इत्यनुशासनेन तिङ्सुवेकवचनादिपदस्य सङ्केतितत्वात्। न

---

घटितवाक्ये कर्त्तृपदस्य तृतीयान्तता स्यादिति भावः। ननु आख्यातघटितवाक्य एव तादृशनियमः कृत्प्रत्ययघटितवाक्यस्थले तु नियमान्तरमेवेत्यत-

चैवं तेन रूपेण ज्ञानं विना सिलादिना ज्ञानादेकत्वादिप्रत्ययो न स्यादिति वाच्यं। विना शक्तिभ्रममिष्टत्वादिति भावः।

अत्र नव्याः सिलादिना प्रातिस्विकरूपेण सुब्विभक्तेरेकत्वादिषु शक्तावपि तिबादिना तिङ्विभक्तेरेकत्वादिषु शक्तिरावश्यकी चैत्रः पचतीत्यादावगृहीतसुपशक्त्याशक्तिकानां कदाचित्तिवादेरेकत्वादिनिष्ठवृत्तिज्ञानादेकत्वादिबोधो भवत्यविवादं। तथाच तिवादेः प्रवृत्तित्वं शक्यतावच्छेदकमेकत्वत्वादिकं वेत्यत्र विनिगमकाभावादुभयोरेव तत्शक्यतावच्छेदकत्वसिद्धेः एकत्वत्वादेः शक्यतावच्छेदकत्वेऽपि प्रवृत्तित्वप्रकारेण बोधस्य लक्षणादिना सुवचत्वात् प्रवृत्तित्वप्रकारकतिवादिजन्यबोधस्येव एकत्वादिप्रकारकतज्जन्यबोधस्यापि स्वारसिकत्वस्य प्रामाणिकसिद्धत्वात्, अन्यथा बोधस्य स्वारसिकत्वमादाय विवादे पश्वादिपदस्यापि प्रत्येकमादाय विनिगमनाविरहेण लाघवात् हरिणत्वादेरशक्यतावच्छेदकतापत्तेः नानार्थोच्छेदापत्तेश्च। एवञ्च प्रथमैकवचन-द्विवचन-बहुवचनानां वा एकत्व-द्वित्व-बहुत्वेषु शक्तिः, तिङेकवचन-द्विवचन-बहुवचनानां वा इत्यत्र विनिगमकाभावादेकत्वादिषु शक्तिसिद्धिः, चैत्रः पचतीत्यादौ अगृहीतसुपशक्त्याशक्तिकानां कदाचित् तिवादेरेकत्वादिनिष्ठवृत्तिज्ञानादप्येकत्वादिबोधस्य सर्व्वसिद्धत्वात्। न च तद्वृत्तिज्ञानं लक्षणाज्ञानरूपं शक्तिभ्रमरूपं वेति वाच्यं। तद्वृत्तिज्ञानं लक्षणाज्ञानादिरूपं प्रथमैकवचनत्वादावेकत्वादिषु वृत्तिज्ञानं वा शक्तिभ्रमरूपमित्यत्र विनिगमकाभावात् प्रत्येकमादाय विनिगमकाभावेन तिङेकवचनादेर्वाहुल्यस्याकिञ्चित्करत्वादिति वदन्ति।

नभिधानात्। किञ्च एकत्वादिसङ्ख्याभिधाने न नि-

केचित्तु केवलात् पचति-पचत इत्यादितः तिङः कर्त्तरि लक्षणा-दिना वा वैयाकरणमते तिङः शक्त्या वा एकः पाककर्त्तेत्यादिबुद्धे-रनुभवसिद्धत्वादाख्यातस्यैकत्वादौ शक्तिसिद्धिः। न च तत्रैकत्वादि-विशिष्टकर्त्तर्य्येव लक्षणा शक्तिभ्रमो वेति वाच्यं। केवलकर्त्तरि लक्ष-णादिनापि तादृशबोधस्यानुभवसिद्धत्वादित्याहुः।

केचित्तु वारि तिष्ठति खस्तिष्ठति इत्यादौ विनापि लुप्तसुपः प्रतिसन्धानं एकत्वादिप्रतीतेरेकत्वादिषु तिङः शक्तिसिद्धिरित्याहुः।

'कृतेति, तथाच चैत्रेण दृष्टो घट इत्यादावपि कर्म्मणि द्वितीया स्यात् न प्रथमा चैत्रः पचतीत्यादावपि कर्त्तरि तृतीया स्यान्न प्रथमेति भावः। तस्मात् प्रत्ययेन सङ्ख्याभिधानानभिधानं न प्रथमा-तृतीयानियामकं, किन्तु प्रत्ययेन कर्त्तृ-कर्म्मणोरभिधानानभिधान-मेव तन्नियामकमिति वैयाकरणनिगर्भः। नन्वाख्यातस्थल एव तथा वक्तव्यं कृत्स्थले तु कर्त्तृ-कर्म्मणोरभिधानानभिधानाभ्यामेव नियम-इत्यत आह, 'किञ्चेति, 'संख्याभिधान इति आख्यातजन्यसङ्ख्याप्रका-रकबोध-इत्यर्थः, 'न नियम इति कृतिशक्तिवादिनां विशेष्यता-नियमो नास्तीत्यर्थः, क्वचित् कर्त्तैव तद्विशेष्यः क्वचित् कर्म्मेत्यत्र नियामकस्य दुर्व्वचत्वादिति भावः। एतदेवाह, 'पदार्थेति आख्या-

आह, 'किञ्चेति, 'एकत्वादिसङ्ख्याभिधान इति, आख्यातजन्य एकत्वादि-सङ्ख्याप्रकारकान्वयबोध इत्यर्थः, 'न नियमः' कृतिशक्तिवादिनां मते न विशेष्यत्वनियमः, तथाच कुत्रचित् कर्त्तुः कुत्रचित्कर्म्मणश्च तद्विशेष्यत्वे

यमः पदार्थतावच्छेदकावच्छिन्नस्याकाङ्क्षादिवशात् कर्त्तृ-कर्म्मसाधारण्येनान्वयबोधस्य दुर्व्वारत्वात्। कर्त्रेकत्व-त्वादिनाभिधानेऽपि कर्त्रादेरप्यभिधेयत्वं, शक्तौ शक्त-

तोपस्थापितस्यैकत्वत्वाद्यवच्छिन्नस्येत्यर्थः, 'कर्त्तृ-कर्म्मेति, तथाचोभयत्रैव सङ्ख्यान्वयात् देवदत्तः पचति तण्डुलमित्यत्र कर्म्मणि प्रथमा देवदत्तेन पच्यते तण्डुल इत्यत्र कर्त्तरि प्रथमा स्यादिति भावः। ननु कर्त्रेकत्वत्वादिना शक्यत्वाद्योग्यतैव नियामिका इत्यत आह, 'कर्त्रेकत्वत्वादिनेति, 'अभिधेयत्वं' विशेषणविधया शक्यत्वं। यदि च कृतिविशिष्टैकत्वं कर्त्रेकत्वं तदा संसर्गविधया शक्यत्वं। ननु मुख्य-विशेष्यविधयैव मया शक्यत्वं नाभ्युपेयते इत्यत आह, 'शक्ताविति, कर्त्रेकत्वाद्योः सम्बन्धो मम वाक्यार्थः, तत्र च तत्रापि शक्ति-विषयत्वं। किञ्च मम एकवचनत्वादिना सुप्-तिङ्साधारणं

विनिगमकस्य वक्तुमशक्यत्वादिति भावः। एतदेव स्पष्टयति, 'पदार्थतावच्छे-दकावच्छिन्नस्येति आख्यातोपस्थापितस्यैकत्वत्वाद्यवच्छिन्नस्येत्यर्थः, 'आका-ङ्क्षादिवशात्' आकाङ्क्षादिसाचिव्यात्, 'कर्त्तृ-कर्म्मेति, तथाचोभयत्रैव सङ्ख्यान्वयात् चैत्रः तण्डुलं पचति इत्यत्र कर्म्मपदं प्रथमान्तं स्यात् स्याच्च चैत्रेण पच्यते तण्डुल इत्यत्र कर्त्तृपदं प्रथमान्तं इति भावः। 'कर्त्रेकत्व-त्वादिनेति। यद्यपि देवदत्तेऽप्याख्यातार्थसङ्ख्यान्वयापत्त्या चैत्रेण देवदत्तोऽयं गच्छतीत्यादिप्रयोगापत्तिरेव, तथापि स्वप्रकृत्यर्थक्रियाकर्त्रेकत्वत्वादिना शक्तिकल्पने तात्पर्य्यं। नचैवं स्वत्वाननुगमस्यापि सत्त्वेन तदनभिधाने न्यूनता, प्राच्यं मते यत्त्व-तत्त्वादिवत् स्वत्वस्याप्यनुगतत्वेन तन्मतमाश्रित्यैतदभिधानात्। 'कर्त्रादेरपीति, 'आदिपदेन कर्म्मपरिग्रहः, विशिष्टस्य शक्यत्वे विशेषणां-

तावच्छेदक-शक्यतावच्छेदकयोर्गौरवमधिकम् । तस्मा-

सङ्ख्यायां शक्तित्रयं, तत्र आख्यातैकवचनत्वादिना कर्त्रेकत्वादिषु शक्तित्रयं, आत्मनेपदैकवचनत्वादिना कर्म्मैकत्वादिषु शक्तित्रयं, सुबेकवचनत्वादिना एकत्वादिषु शक्तित्रयमिति नव शक्तय इत्यर्थः । 'शक्ततेति सम्मैकवचनत्वादिना शक्तत्वं, तत्र चाख्यातैकवचनत्वादिना कर्त्तरि विहितैकवचनत्वादिना वा शक्तत्वं इति शक्ततावच्छेदक-गौरवमित्यर्थः । तत्तद्रूपेणैव शक्तत्वस्याग्रे वक्ष्यमाणत्वात् शक्तता-वच्छेदकशरीरमुभयमते समानमित्यत आह, 'शक्यतेति सम्मै-कत्वत्वादिना शक्यत्वं, तत्र कर्त्रेकत्वत्वादिना शक्यत्वमिति शक्यता-वच्छेदकगौरवमित्यर्थः । इदमुपलक्षणं, कर्त्रेकत्वत्वादिना शक्यत्वे च योग्यताभ्रमात् कर्त्तृ-कर्म्मसाधारण्येनान्वयस्य दुर्व्वारत्वमित्यपि बोध्यं।

नव्यास्तु नन्वाख्यातस्य एकत्वत्वादिना पृथगेकत्वादौ न शक्तिः किन्तु आख्यातैकवचनस्य कर्त्रेकत्वेन कर्त्रेकस्मिन् शक्तिः, आख्यात-द्विवचनस्य कर्त्तृद्वयत्वेन कर्त्तृद्वये शक्तिः, आख्यातबहुवचनस्य कर्त्तृ-

शेऽपि शक्तिरावश्यकीति भावः । 'अभिधेयत्वं' शक्यत्वं, तथाच वृश्चिकभिया पलायमानस्येत्यादिन्यायावतार इति भावः । इदमुपलक्षणं अयमश्वस्तमश्वं गच्छतीत्यादावुभयकर्म्मजसंयोगस्थले स्वप्रकृत्यर्थक्रियाकर्त्तृत्वस्य कर्त्तृ-कर्म्मसा-धारणतयाख्यातस्य निरुढत्वांशे स्वप्रकृत्यर्थत्वांशे च शक्तिसम्बन्धकल्पने गौरवं, एवं कर्त्रेकवचनाख्यातत्वादिकं शक्ततावच्छेदकमिति शक्ततावच्छेदकगौरवं, एवं शक्यतावच्छेदकगौरवञ्च स्फुटमेव कर्त्रेकत्वत्वादेः शक्यतावच्छेदकत्वादिति तथाच कर्त्रेकत्वत्वादिना शक्तिकल्पने कर्त्तरि कर्म्मणि च विशेषणतया शक्तिः स्वीकृतैव भवता अधिकञ्च तव शक्त्यादिगौरवमिति समुदायार्थः ।

वैयाकरण स्वमतमुपसंहरति, 'तस्मादिति, एकवचनत्वस्याखण्डस्या-

दाख्यातत्वेन कर्त्तरि कर्म्मणि च आत्मनेपदत्वेन एक-

वत्त्वेन कर्त्तृवह्नषु शक्तिः, आत्मनेपदैकवचनस्य कर्म्मैकत्वेन कर्म्मै-कस्मिन् शक्तिः आत्मनेपदद्विवचनस्य कर्म्मद्वयत्वेन कर्म्मद्वये शक्तिः आत्मनेपदबहुवचनस्य कर्म्मबहुत्वेन कर्म्मबहुषु शक्तिः; तथाच कर्त्तृ-कर्म्मशक्तिवादिनां वैयाकरणानां कर्त्तृ-कर्म्मणोरभेदसंसर्गेणान्वयनि-यामकस्यैव अस्माकमपि कर्त्रेकादीनां तादात्म्यसम्बन्धेनान्वये निया-मकत्वान्नातिप्रसङ्गस्तदवस्थ इत्यत आह, 'कर्त्रैकत्वादिनेति, कर्त्रै-कत्वत्वादिनेति पाठस्तु प्रामादिकः, 'अभिधानेऽपि' आख्यातस्य शक्तावपि, 'अभिधेयत्वं' शक्तिविशेष्यत्वं। नन्वत्र इष्टापत्तिः किन्तु केवलकर्त्तृत्वादेः शक्यतावच्छेदकत्व एव विवाद इत्यत आह, 'शक्ता-विति, व्याख्यानञ्च पूर्व्वोक्तमिति प्राहुः।

वैयाकरणः स्वमतनिष्कर्षमाह, 'तस्मादिति, 'आख्यातत्वेनेति पचते इत्यादावात्मनेपदेनापि कर्त्तृबोधनादिति भावः। 'आत्मने-पदत्वेनेति, परस्मैपदत्वेन कदाचिदपि कर्म्माबोधनादिति भावः।

---

नभ्युपगमे त्वाह,'तत्तद्रूपेणेति सित्वादिनैव तित्वादिना वेत्यर्थः। आख्यातत्वञ्च दशलकारसाधारणं लत्वमन्यत्रेति प्रागेवोक्तं तत्रैवानुसन्धेयं। नन्वेवं कर्त्तृ-कर्म्मसाधारण्येन सङ्ख्यान्वयस्य दुर्व्वारत्वादिति दोषस्यापरीहार एवेत्यत-आह, 'एकेति, एकेनाख्यातपदेन कर्त्तृ-सङ्ख्ययोरभिधानात् कृति-वर्त्तमान-त्ववत् कर्त्तृ-सङ्ख्ययोरेव परस्परमन्वयः आसत्तेरुत्कटत्वादिति सम्प्रदायः।

नव्यास्तु कर्त्राख्यातजन्यसङ्ख्याप्रकारकशाब्दत्वावच्छिन्नं प्रति आख्यात-जन्यकर्त्रुपस्थितित्वेन हेतुत्वं लाघवात् अन्यथा तादृशशाब्दत्वावच्छिन्नं प्रति चैत्रादिपदजन्योपस्थितीनामनन्तानां परामर्शानुमितिवत् कार्य्य-कारणभाव-कल्पने महागौरवप्रसङ्गादित्यत्र तात्पर्य्यमित्याहुः।

## वचनत्वादिना तत्तद्रूपेण वा एकाख्यातस्य च एकत्वादौ शक्तिः सङ्ख्यायावाच्यगामित्वं कर्त्तृ-कर्म्मबोधकत्वञ्च

'एकवचनत्वादिनेति, आदिना द्विवचनत्व-बहुवचनत्वपरिग्रहः, एकवचनत्वादिरूपेणाज्ञानदशायां तिप्त्वादिप्रकारकज्ञानादिना शक्तिभ्रमं एकत्वादिबोधो यद्यनुभवसिद्धस्तदा त्वाह, 'तत्तद्रूपेण वेति, एवमाख्यातत्वादेः शक्ततावच्छेदकत्वाभिधानमप्यापाततः। वस्तुतस्तु प्रागुक्तयुक्त्या तिप्त्वादिकमेव बोध्यं। ननु भवतामपि सङ्ख्यान्वयनियमः कथमित्यत आह, 'एकेति, 'चस्त्वर्थे, एकेनैवाख्यातपदेनोपस्थापितत्वाच्च इत्यर्थः, 'वाच्यगामित्वमिति सङ्ख्या-कालाद्यतिरिक्ताख्यातबोध्यान्वयित्वमित्यर्थः, तथाच विशेष्यतावच्छेदकतासम्बन्धेन आख्यातजन्यसङ्ख्याप्रकारकशाब्दबोधोत्पत्तिं प्रति कालत्वैकत्वत्वाद्यवृत्तिप्रकारतासम्बन्धेनाख्यातजन्योपस्थितेः कारणतया नान्यत्र तदन्वयः, चैत्रः पचतीत्यादौ एकश्चैत्रः एकपाककर्त्तभिन्न-इत्याद्येवान्वयबोधः। अत एव सुबेकवचन-तिङेकवचनत्वाद्योरुभयोरेव सार्थकतेति भावः।

केचित्तु कर्त्तृत्वावच्छिन्नविशेष्यतासम्बन्धेनाख्यातपदजन्यसङ्ख्याप्रकारकशाब्दबोधोत्पत्तिं प्रति आख्यातपदजन्यकर्त्तृत्वप्रकारकोपस्थितिः कर्म्मत्वावच्छिन्नविशेष्यतासम्बन्धेनाख्यातपदजन्यसङ्ख्याप्रकारक-

---

नन्वाख्यातसामान्यस्य कर्त्तृशक्ततया आत्मनेपदस्यापि कर्त्तृबोधकत्वं कर्म्मबोधकत्वञ्च तस्य प्रसिद्धं तथाचैकदा कर्त्तृ-कर्म्मतात्पर्य्ये चैत्रः पच्यते तण्डुल इत्यादिप्रयोगापत्तिरित्यत आह, 'कर्त्तृ-कर्म्मेति, 'अव्युत्पन्नमिति,

# एकदाऽव्युत्पन्नं। अतएव मैत्रः पच्यते तण्डुल इत्यादयो

शाब्दबोधोत्पत्तिं प्रति आख्यातपदजन्यकर्म्मत्वोपस्थितिर्विशेष्यता-सम्बन्धेन कारणं, तदुभयातिरिक्तविशेष्यतासम्बन्धेनाख्यातजन्यसङ्ख्या-प्रकारकशाब्दबोधोत्पत्तेरलीकतया यावद्विशेषकारणबाधादेव सङ्ख्या-कालादौ न सङ्ख्याया अन्वय-इत्याहुः।

ननु पच्यत इति प्रयोगस्य कर्त्तृ-कर्म्मोभयसाधारणतया चैत्रः पच्यते तण्डुल इत्यादौ चैत्रः पाककर्त्ता तण्डुलः पाककर्म्मेति बोधो जायतां आत्मनेपदस्य कर्त्तृ-कर्म्मोभयवाचकत्वादित्यत आह, 'कर्त्तृ-कर्म्मेति, बोधकत्वं स्मारकत्वं, 'अव्युत्पन्नं' एकाख्यातपदविषयक-ज्ञानस्यासिद्धं, पदज्ञानस्य उद्‌बोधकविधयैव पदार्थस्मारकतया फलबलेन तत्तज्ज्ञानव्यक्तिभिन्नाख्यातपदज्ञानस्यैव कर्त्तृ-कर्म्मोद्बोध-कत्वात्, अन्यथा न्यायनयेऽपि तत्र कर्त्तृत्व-कर्म्मत्वबोधस्य दुर्व्वारत्वा-दिति भावः। चैत्रः पच्यते तण्डुल इत्यत्रापि पच्यतेपदस्यानु-वृत्त्या कर्त्तृ-कर्म्मस्मरणादुक्तं 'एकदेति, चैत्रः पच्यते तण्डुलं मैत्रेण पच्यते तण्डुलः इत्यत्र समूहालम्बनाख्यातपदद्वयज्ञानस्यैकदैव कर्म्म-कर्त्तृस्मारकत्वादेकेत्याख्यातपदविशेषणं, मैत्रेण पच्यते ओदनः चैत्रस्तेमनं इत्यादिस्थलेऽप्यावृत्त्यैव कर्त्तृ-कर्म्मबोधः। यद्वा 'बोधकत्वं' अनुभावकत्वं, 'अव्युत्पन्नं' एकाख्यातपदविषयकैकज्ञानजन्यकर्त्तृ-

---

एकदा तदुभयबोधाय कार्य्य-कारणभावाकल्पनादिति भावः। न चैकस्या-ख्यातस्यैकदा कर्त्तृ-कर्म्मबोधकत्वाभावे मैत्रेण तण्डुलः पच्यते चैत्रस्तु तेमनं इत्यादावेकस्मादाख्यातात् तण्डुले चैत्रकर्त्तृकपाककर्म्मत्वस्य मैत्रे तेमन-कर्त्तृत्वस्य च समूहालम्बनशाब्दबोधो न स्यादिति वाच्यं। आख्यातान्तरा-

न प्रयोगाः। कर्त्तरि यकोऽसाधुत्वाच्च पच्यते चैत्र-

कर्म्मोपस्थितेरसिद्धं, पदज्ञानजन्यकर्त्तृ-कर्म्मोपस्थितेः शाब्दबुद्धि-कारणतायां तत्तदुपस्थितिव्यक्तिभिन्नत्वविशिष्टजन्यत्वस्य संसर्गत्वादिति भावः। 'न प्रयोगा इति' विना आवृत्तिं चैत्रः पाक-कर्त्ता तण्डुलः पाककर्म्मेति बोधजनका इत्यर्थः, एतच्चापाततः, सति तात्पर्य्यज्ञाने आवृत्तिं विनापि तादृशबोधस्येष्टत्वादिति ध्येयं। ननु तथापि चैत्रः पच्यत इत्यत्र चैत्रः पाककर्त्तेति बोधो-दुर्व्वारः आत्मनेपदस्य कर्त्तर्य्यपि शक्तत्वादित्यत आह, 'कर्त्तरीति, 'असाधुत्वात्' अनाकाङ्क्षितत्वात्, यगाद्यसमभिव्याहृतानुपूर्व्व्या एव तत्राकाङ्क्षात्वादन्यथा न्यायनयेऽपि तत्र कर्त्तृत्वबोधस्य दुर्व्वारत्वादिति भावः। 'चस्त्वर्थः, 'इत्यादयोऽपि न प्रयोगाः' इति

ध्याहारस्थल एवेदृशसमूहालम्बनशाब्दबोधाङ्गीकारात् यत्र च नाध्याहार-स्तत्रैकस्मादेवाख्यातादावृत्त्या क्रमेणैव कर्त्तृत्वस्य कर्म्मत्वस्य च शाब्दबोधो न समूहालम्बनः। नचावृत्तिस्वीकारे एकस्याख्यातस्य एकदा कर्त्तृ-कर्म्मबोध-कत्वाभावव्युत्पत्तिभङ्ग एव, एतादृशव्युत्पत्तेरेकानुसन्धानावच्छिन्नतयैक-स्याख्यातस्य विशेषितत्वादिति दिक्। ननु मास्तु उक्तव्युत्पत्तिविरोधेनैक-दोभयबोधकत्वं, तथापि चैत्रे पाककर्त्तृत्वमात्रतात्पर्य्यदशायां चैत्रः पच्यते इति प्रयोगः स्यादित्यत आह, 'कर्त्तरीति, 'असाधुत्वाच्चेत्यत्र चोऽवधारणे। ननु कर्त्तृसङ्ख्याभिधानानभिधाने प्रथमा-तृतीयानियामके कर्म्मसङ्ख्याभिधाना-नभिधाने च प्रथमा-द्वितीयानियामके वक्तव्ये सङ्ख्यान्वये च भावनाविशेष्यत्वं नियामकमिति कर्त्तृ-कर्म्मसाधारण्येन बोधस्य दुर्वारत्वादित्युक्तदोषविरहस्तत्-थाच कर्त्तृ कर्म्मगौरवाच्यत्वेऽपि चैत्रस्तण्डुलः पच्यते इत्यादिप्रयोगो भवती-

इत्यादयोऽपि कर्त्तरि नेति वैयाकरणाः। अत्र वदन्ति भावनाविशेष्ये सङ्ख्यान्वयः समानपदोपात्तत्वेन एका-

---

सम्बध्यते, न कर्त्तृबोधका इति तदर्थः। इदमुपलक्षणं, कर्म्मणि सपोऽसाधुत्वात् तण्डुलः पचते इत्यादयोऽपि न कर्म्मबोधका इत्यपि मन्तव्यं। लाघवादाख्यातस्य यत्न एव शक्तिः सङ्ख्याभिधानानभिधानाभ्यामेव प्रथमा-तृतीयादिनियमः तत्र च सङ्ख्यायाः कर्त्तृ-कर्म्मसाधारण्येनान्वयबोधापत्तिरेव मूलबाधिका अतस्तामेवोद्धरति, 'भावनेति आख्यातार्थभावनाविशेष्ये इत्यर्थः, तादृशभावना-विशेषणीभूतधात्वर्थादिवारणाय विशेष्येति, तथाच तादृशभावनाया विशेष्यत्वेनान्वये यन्नियामकं तदेव सङ्ख्यान्वयेऽपि नियामकं, विशेष्यत्वञ्च प्रतियोगितेतरसम्बन्धेन बोध्यं, तेन न पचतीत्यादौ न नञर्थे सङ्ख्यान्वय इति भावः। भावना चात्र यत्नो-व्यापार आश्रयत्वादिश्च न तु यत्नमात्रं, तेनाग्निः पचति चैत्रो

त्याशयेन समाधत्ते, 'अत्र वदन्तीत्यादि, 'भावनेति, भावना च क्वचिद्व्यापारः कुत्रचित् कृतिः क्वचिदाश्रयत्वं कुत्रचिच्च प्रतियोगित्वं, आद्यं प्राचां मते रथो गच्छतीत्यादौ, द्वितीयं चैत्रः पचतीत्यादौ, तृतीयं चैत्रो जानातीत्यादौ, चतुर्थं घटो नश्यतीत्यादौ, तथाचाख्यातार्थव्यापारादेर्विशेष्यत्वेनान्वयिन्येवा-ख्यातार्थसङ्ख्यान्वय इति फलितं। ननु भावनाविशेष्यभिन्नएव स्वार्थसङ्ख्यान्वयः कथं न भवतीत्यत आह, 'समानेति कृति-सङ्ख्ययोर्विभिन्नशक्त्यैकपदोपात्तत्वे-नैकधर्म्मिण्यन्वयस्य साकांक्षत्वादित्यर्थः, शक्तिभेदसूचनायैकपदं त्यक्त्वा समानपदमुक्तं। ननु समानपदोपात्तान्वयित्वं स्वबोधकपदप्रतिपाद्यार्थान्त-रान्वयित्वं आख्यातार्थसङ्ख्यान्वये नियामकमित्यायातं, तथाचैतदपेक्षया स्वबोधकपदप्रतिपाद्यार्थान्तरान्वयित्वमेव वैयाकरणमतमेव युक्तं लाघवा-

न्वयित्वस्योचितत्वात्। भावनायाश्च विशेष्यत्वेनान्वय-

जानातीत्यादौ लक्ष्यार्थस्यापि संग्रहः, वर्त्तमानत्वादेः कृतिसाध्येष्ट-साधनत्वादेश्चासंग्रहः।

केचित्तु कालेष्टसाधनत्वाद्यतिरिक्ताख्यातार्थो भावना इत्याहुः। तदसत्। तथा सति कर्म्मविभक्त्यर्थस्य फलस्यापि भावनात्वेन पच्यते तण्डुल इत्यादौ व्यभिचारभयेनाग्रे मतान्तरानुसरणस्यासङ्गतत्वा-पत्तेरिति ध्येयं।

'एकान्वयित्वस्येति एकविशेष्यान्वयित्वस्यानुमितत्वादित्यर्थः। अनुमानप्रकारश्च आख्यातोपस्थापितसङ्ख्या भावनाविशेष्यान्वयिनी कालाद्यतिरिक्तत्वे सति तदुपस्थापकपदस्मारितत्वात् भावनादिव-दिति भावः। नन्वाख्यातार्थभावनाया एव विशेष्यत्वेन कुत्रान्वय-इत्यत आह, 'भावनायाश्चेति, प्रथमान्तपदानुपस्थाप्यस्यापि धात्वर्था-

दिति चेत्, न, कर्तृत्वस्य कृतिमत्त्वरूपस्य हि शक्यतावच्छेदकत्वेऽनन्तकृतीनां शक्यतावच्छेदकत्वापत्तिः धर्म्मिणोऽन्यलभ्यस्य शक्तत्वापत्तिश्चेति महागौरवं स्यात्। न च स्वाश्रयसमवायित्वादिलक्षणपरम्परासम्बन्धेन कृतिमत्त्वमेवा-ख्यातशक्यतावच्छेदकं वैयाकरणमतेऽपीति न शक्यताच्छेदकनानात्वगौरव-मिति वाच्यं। समवायेन कृतित्वस्य शक्यतावच्छेदकत्वापेक्षया निरुक्तपर-म्परासम्बन्धेन कृतित्वस्य तथात्वे गौरवस्यापरीहारात्। उक्तसमानपदो-पात्तान्वयित्वस्य नियामकत्वे तु न गौरवं वैयाकरणस्याख्यातजन्यसङ्ख्या-प्रकारकशाब्दत्वावच्छिन्नं प्रति आख्यातजन्यकर्तृपस्थितित्वेन हेतुतावदस्माक-मपि तादृशशाब्दत्वावच्छिन्नं प्रति प्रथमान्तपदजन्योपस्थितित्वेन हेतुत्वकल्प-नादिति भावः। ननु चैत्रस्तण्डुलं पचतीत्यादौ भावनान्वयस्तण्डुलादावपि स्यात् तथाच कर्त्तृकर्म्मसाधारणेनेत्यादिबाधकापरीहार इत्यत आह, 'भावनायाश्चेति, प्रथमान्तपदानुपस्थाप्यस्यापि धात्वर्थस्य भावनायां विशेष-

**योग्यः कर्म्मत्वाद्यनवरुद्धः प्रथमान्तपदोपस्थाप्यः। चैत्रः**

---

देर्भावनायां विशेषणत्वेनान्वयादुक्तं विशेष्यत्वेनेति, 'कर्म्मत्वाद्यनवरुद्ध-इति, अत्र प्रथमान्तपदोपस्थाप्यत्वमात्रोपादाने तण्डुलः पचति चैत्र-इत्यादौ प्रथमायाः कर्म्मत्वे शक्तिभ्रमेण लक्षणाज्ञानेन वा यदा तण्डुलकर्म्मकेत्यादिबोधस्तदापि तण्डुले भावनान्वयापत्तिरतः 'कर्म्म-त्वाद्यनवरुद्ध इति कर्म्मत्वाद्यविशेषणीभूत इत्यर्थः, तेन पक्कं भुज्यते तण्डुलस्य पाकोभवतीत्यादौ पाककर्म्मत्व-तण्डुलकर्म्मत्वादिविशेष्यक-तदन्वयो नानुपपन्नः, कर्म्मत्वादिपदस्य स्वरूपकथनं अविशेषणत्वमात्रं

---

णत्वेनान्वयादाह, 'विशेष्यत्वेनेति। ननु कर्म्मत्वादेर्विशेषणतयोपस्थितं चैत्रस्तण्डुलं पचतीत्यादौतण्डुलादिकमेव भावनाविशेष्यतया अन्वितमिति किं नाङ्गीक्रियते इत्यस्योत्तरदानायाह, 'कर्म्मत्वादीति, 'आदिपदेन करण-त्व-सम्प्रदानत्वापादानत्व-सम्बन्धाधिकरणत्वादीनां सुवर्थानां परिग्रहः, तथाच तेषां कर्म्मत्वादिविशेषणतया उपस्थितत्वेन भावनाया विशेष्यत्वेनान्वये निराकाङ्क्षत्वमित्युत्तरमभिप्रेतं। ननु यदि कर्म्मत्वादिविशेषणतयोपस्थितत्व-मेव भावनाविशेषणत्वेनान्वये निराकाङ्क्षताबीजं तदा धात्वर्थस्य भावना-विशेष्यतयान्वये निराकाङ्क्षता न स्यात्तस्य कर्म्मत्व-करणत्वादिविशेषणतया-नुपस्थितत्वादित्यत आह, 'प्रथमान्तेति, तथाच कर्म्मत्वादिविशेषणतयोप-स्थिते धात्वर्थे च भावनाया विशेष्यत्वेनान्वयादिशेष्यत्वेनान्वयबोधस्याजाय-मानतया तद्वारणाय भावनाया विशेष्यत्वेनान्वयबोधं प्रति प्रथमान्तपद-जन्योपस्थितित्वेन हेतुता कल्प्यते इत्यर्थः। ननु विशेषणतयोपस्थित एव कथमाकाङ्क्षा नास्तीत्यत आह, 'तथैवेति कर्म्मत्वादिविशेषणतयानुपस्थितेन प्रथमान्तपदोपस्थाप्येनैव विशेष्यत्वेन भावनान्वयस्य साकाङ्क्षत्वादित्यर्थः, अत्रायम्भावः प्रथमान्तोपस्थाप्यस्य विशेष्यतयैवान्वयनियमेन विशेषणसा-काङ्क्षता भावनायाश्च विशेषणत्वेन विशेष्यसाकाङ्क्षतेति भग्नाश्वदग्धरथन्यायेन

विवेचितं । अत एव यदा साक्षात्परम्परासाधारणपञ्चनौकानिरूपि-तारम्भकताश्रयत्वप्रकारकान्वयबोधे वक्तुरभिप्रायः तदा एको वृक्षः पञ्च नौका भवतीत्येव प्रयोगः, तत्र नौकायाः प्रथमार्थनिरूपितत्व-विशेषणतया तत्र भावनान्वयासम्भवेनाख्यातार्थसङ्ख्यान्वयासम्भवात् । यदा च पञ्चनौकासु वृक्षनिरूपितोत्पत्त्याश्रयत्वप्रकारकान्वयबोधे वक्तुरभिप्रायः तदा तु भवन्तीत्येव प्रयोगः, प्रथमस्य साक्षात्परम्परा-साधारणत्वस्य उपादानात् साक्षाद्वृक्षारम्भकमहावयवानां नाशेऽपि न क्षतिः, द्वितीयस्य तस्योपादानात् साक्षात्परम्परया वृक्षारम्भकता-शून्यानामेव खण्डावयविनां साक्षान्नौकारम्भकत्वेऽपि न क्षतिः ।

प्रथमान्तोपस्थाप्यं विशेष्यीकृत्य भावनायास्तद्विशेषणत्वेनान्वयः । न च प्रथ-मान्तोपस्थाप्यस्य भावनायां विशेषणतया अन्वयोऽस्तु चैत्रः पचतीत्यादौ चैत्रीया पाकानुकूला कृतिरित्यन्वयबोधसम्भवादिति वाच्यं । सुवर्थातिरि-क्तविभक्त्यर्थसाक्षाद्विशेषणतया प्रातिपदिकार्थे शाब्दबोधविषयत्वानङ्गीका-रादिति । एतेन प्रथमान्तपदोपस्थाप्यत्वमेव भावनाया विशेष्यत्वेनान्वये नियामकमस्तु तावतैवानतिप्रसङ्गादिति किं कर्म्मत्वाद्यनवरुद्धत्वस्य तन्नियाम-कत्वकल्पनयेत्यपास्तं । कर्म्मत्वाद्यनवरुद्धत्वस्यापि तन्नियामकत्वेन नाभिधानं किन्तु कर्म्मत्वाद्यवरुद्धे भावनाया आकाङ्क्षा नास्तीत्यगत्या प्रथमान्तपदोप-स्थाप्येनैवाकाङ्क्षेति प्रथमान्तपदोपस्थाप्यत्वमेव तन्नियामकमिति सूचनाय परं तदभिधानमिति ।

केचित्तु कर्म्मत्वाद्यनवरुद्धत्वमात्रोक्तौ धात्वर्थसाधारण्यमिति प्रथमा-न्तोपस्थाप्यत्वं एतन्मात्राभिधाने चन्द्र इव मुखं तिष्ठतीत्यादौ इवार्थसादृश्य-विशेषणीभूतचन्द्रसाधारण्यं स्यादिति कर्म्मत्वाद्यनवरुद्धत्वमुक्तमित्याहुः । तदसत् । उक्तरीत्या प्रथमान्तपदोपस्थाप्यत्वमात्रस्य तन्नियामकत्वकल्पनयैवा-नतिप्रसङ्गेन कर्म्मत्वाद्यनवरुद्धत्वस्य तन्नियामकत्वे मानाभावादिति । एतेन

केचित्तु एकवृत्तपदं परस्परैकवृत्त्यारम्भकारभ्यद्रव्यपरं, धातुपदञ्च साक्षादारम्भकतापरमेव। यद्वा नौकापदं साक्षात् तदारम्भकपरं, धात्वर्थस्याभेद इत्याहुः।

नौकायाः संयुक्तायाः संयुक्तावयविप्रचयरूपत्वे तु नौकापदं तादृशविलक्षणसंयोगपरमित्यलमप्रकृतेन। न चैवं भूतले घटो नास्तीत्यादौ घटस्याभावांशे विशेषणत्वात् आख्यातार्थाश्रयत्वस्याभाव एवान्वयात् घटे सङ्ख्यान्वयोऽपि न स्यादिति वाच्यं। तादृशव्युत्पत्तिवैचित्र्येण तत्र भावनाविशेष्यप्रतियोगिन्येव सङ्ख्यान्वयादत एवानुपपत्त्या विशेषणतासम्बन्धेन भूतलवृत्तित्वाभावस्य प्रतियोगितासम्बन्धेन भूतलनिष्ठाभावस्य वा घटे विशेषणतयैवान्वयाभ्युपगमाच्चेति भावः। धात्वर्थकृतिसाध्यत्वेष्टसाधनत्व-वर्त्तमानत्वादीनामपि कर्म्मत्वाद्यनवरुद्धतया तत्र तदन्वयवारणाय प्रथमान्तपदोपस्थाप्येति, तथाच तद्विशेष्यक-भावनाप्रकारकशाब्दबोधे तदुपस्थापकपदे प्रथमा-

प्रथमान्तोपस्थाप्यत्वमात्रस्य नियामकत्वे चैत्रस्तण्डुलः पचतीत्यादौ साधुत्वभ्रमदशायां तण्डुलपदोत्तरप्रथमायाः कर्म्मत्वादिशक्तिभ्रमदशायाञ्च तण्डुले भावनाया विशेष्यत्वेनान्वयापत्तिरिति कर्म्मत्वाद्यनवरुद्ध इति। एतन्मात्राभिधाने च धात्वर्थस्यापि तथात्वापत्तिरिति 'प्रथमान्तेति। यद्वा चैत्रः स्वः पश्यतीत्यादौ अव्ययीभूतस्वःपदार्थे प्रथमान्तोपस्थाप्ये भावनान्वयापत्तिरिति 'कर्म्मत्वादीति, तत्र प्रथमाया एव कर्म्मत्वार्थकत्वादिति तेन तद्वारणं धात्वर्थवारणाय प्रथमान्तेतीत्यपास्तं। उक्तरीत्या प्रथमान्तोपस्थाप्यत्वमात्रस्यैव नियामकत्वेनानतिप्रसङ्गादिति।

यत्तु प्रथमान्तपदजन्योपस्थितिः कर्म्मत्वादिविशेषणतयोपस्थित्यभावसहकारिणी भावनाविशेष्यत्वेनान्वयबोधहेतुरिति, तदपि तुच्छं, तादृशो-

विभक्तिसमभिव्याहारो धातूत्तरमाख्यातञ्चाकाङ्क्षा तस्याश्च तन्मुख्य-विशेष्यक-भावनाप्रकारकशाब्दत्वं कार्य्यतावच्छेदकं अतः प्रथमार्थ-कर्म्मत्वादिविशेषणीभूते तण्डुलादौ न तदन्वयः। द्विविधविषयता-शालिबोधस्य तात्पर्य्यसत्त्वे दृश्यत एव । अत एवायमेव दृश्यत-इत्यादौ एवकारार्थान्यविशेषणत्वेन उपस्थितस्य भावनाविशेष्यत्वे-नान्वयो नानुपपन्नः । ननु तथापि चैत्रः पचतः चैत्रः पचन्ती-त्यादौ चैत्रादिषु कथं न भावनान्वयः । न चाख्यात-प्रथमयो-र्वचनसाम्यस्यापि तन्त्रत्वमिति वाच्यं। चैत्रो मैत्रश्च गच्छत इत्यादौ व्यभिचारादिति। मैवं, आख्यातैकवचनोपस्थाप्यस्य यत्नादेः प्रथमैक-वचनान्तोपस्थाप्य एवान्वयः, तद्द्विवचनोपस्थाप्यस्य भावनादेः क्वचित् द्विवचनान्तोपस्थाप्ये क्वचिदेकवचनान्तद्वयोपस्थाप्येऽपीत्यभ्युपगमात् । एवमन्यत्रापि शब्दैक्यस्यानुपादेयत्वादिति भावः ।

केचित्तु दृश्यते चैत्रः पचति, गच्छति चैत्रः पचतीत्यादौ एकत्र द्वयमितिवदेकाख्यातार्थमुद्देश्यतावच्छेदकीकृत्यापराख्यातार्थान्वयवार-णाय 'कर्म्मत्वाद्यनवरुद्ध इति आख्यातोपस्थाप्यकर्म्मत्वाद्यविशिष्ट-

---

पस्थित्यभावस्य सहकारित्वे मानाभावात् चैत्रः पश्यतीत्यादौ अतिप्रसङ्ग-वारणाय कर्म्मत्वादितात्पर्य्यरहितप्रथमान्तपदजन्योपस्थितित्वेन हेतुताया-गुरुलघुत्वात् । अस्तु वा स्वःपदादेरपि तत्र द्वितीयान्तता अव्ययोत्तरं प्रथमैकवचनमेव भावाख्यातवदित्यत्र मानाभावात् भावाख्यातस्थले च भावः सत्ता औत्सर्गिकमेकवचनमेवेति विशेषानुशासनस्य सत्त्वादत्र तु तदभा-वादिति संक्षेपः ।

नन्वाख्यातेन कर्त्तृसङ्ख्यानभिधान एव तृतीयेति पर्य्यवसितं तथाच यत्राख्यातभेदेन युगपत् कर्त्त-कर्म्मसङ्ख्याभिधानं तत्र तृतीया न स्यादिति

पचति पच्यते तण्डुल इत्यादौ कर्त्तृ-कर्म्मणी प्रथमा-न्तपदोपस्थाप्यतया भावनाविशेष्ये इति तत्रैव सङ्ख्या-

इत्यर्थः, तेन पक्वं भुज्यते, तण्डुलस्य पाको भवतीत्यादौ पाककर्म्मत्व-तण्डुलकर्म्मत्वादिति भावनाया अन्वयो नानुपपन्नः। नचैवं धृत्यु-द्देश्यकत्यागे दर्शनविषयत्वतात्पर्य्येण प्रयुक्ते धृतिः स्वाहा ज्ञायते इत्यादौ अन्यथापत्तिः तत्र प्रथमाया एव चतुर्थ्यर्थे लाक्षणिकतया तद्वत्त्वेऽप्याख्यातोपस्थाप्यतद्वत्त्वाभावादिति वाच्यं। इष्टत्वात्, अन्यथा प्रथममतेऽप्यप्रतीकारात्। कृतिसाध्यत्वेष्टसाधनत्वादावकर्म्मक-क्रियायां धात्वर्थे च तदन्वयवारणाय प्रथमान्तपदोपस्थाप्येति, तथाच तद्विशेष्यक-भावनाप्रकारकशाब्दबोधे पूर्व्वोक्तद्वयमाकाङ्क्षा यद्यदानुपूर्व्वीज्ञानात् तत्तद्धर्म्ममुद्देश्यतावच्छेदकीकृत्य तत्तद्धर्म्म-प्रकारकान्वयबोधोऽनुभवसिद्धः तत्तदानुपूर्व्वीज्ञानस्य विशिष्य तादृ-शान्वयबोधे हेतुतया दृश्यते चैत्रः पचतीत्यादौ न तथान्वय इति भाव इत्याहुः।

चैत्रस्तण्डुलं पचति चैत्रेण पच्यते तण्डुल इति युगपत् प्रयोगोऽसाधुः स्या-दित्यत आह, 'चैत्र इत्यादि, 'तत्रैव सङ्ख्यान्वयः' चैत्रः पचतीत्यत्र कर्त्रा-ख्यातेन कर्त्तर्य्येव सङ्ख्यान्वयः चैत्रेण पच्यते तण्डुल इत्यत्र च कर्म्मणि तण्डुल-एव कर्म्माख्यातार्थसङ्ख्यान्वयः तथाच तदाख्यातपदेन यत्र कर्त्तृसङ्ख्यानभि-धानं तत्र तदाख्यातैकवाक्यतापन्नप्रातिपदिके तृतीया तदाख्यातेन यत्र कर्म्मसङ्ख्यानभिधानं तत्र तदाख्यातैकवाक्यतापन्नप्रातिपदिके द्वितीयेत्याख्या-तभेदेनानभिहिताधिकारीयसूत्रार्थोविवक्षित इति नोक्तदोष इति भावः। ननु भावनाविशेष्ये प्रथमान्तोपस्थाप्य एव यदि सङ्ख्यान्वयस्तदा चैत्रेण सुप्यत-

न्वयः तथैवाकाङ्क्षितत्वात् । चैत्रेण सुप्यते गगनेन स्थीयते इत्यादौ प्रथमान्तपदाभावात् धात्वर्थस्य

---

ननु प्रथमान्तपदोपस्थाप्यस्य भावनायां विशेषणत्वेनैव कुतो-नान्वय इत्यत आह, 'तथैवेति विशेष्यत्वेनैवेत्यर्थः, बोधस्येति शेषः, 'आकाङ्क्षितत्वात्' आकाङ्क्षायाः कार्य्यत्वात् । नन्वेवं भावप्रत्ययस्थले भावनाविशेष्यविरहात् सङ्ख्यान्वयो न स्यादित्यनिष्टापत्तिमाह, 'चैत्रेणेति, 'इत्यादाविति 'भावनाविशेष्यविरहादनन्वितैव सङ्ख्येत्यग्रेतनेनान्वयः । भावनाविशेष्यविरहे हेतुत्रयमाह, 'प्रथमान्तेत्यादि । ननु उपस्थितभावनाया अनन्वयापत्तिदोषेण भावातिरिक्तस्थल एव प्रथमान्तपदापेक्षा भावस्थले तु धात्वर्थ एव भावनाविशेष्य इत्यत आह, 'धात्वर्थस्येति । ननु अनायत्या तादृशव्युत्पत्तिरपि भावप्रत्ययस्थले त्यज्यतामत आह, 'भाव-

---

इत्यादौ प्रथमान्तपदाभावात् सङ्ख्यान्वयो न स्यादित्याशङ्कायामिष्टापत्त्यो-त्तरमाह, 'चैत्रेणेति । ननु चैत्रेण सुप्यत इत्यत्र प्रथमान्तपदाभावेऽप्यबाधेन चैत्रवृत्तिचक्षुर्निमीलनाद्यनुकूलकृतेर्जन्यतासम्बन्धेन स्वापे धात्वर्थेऽन्वयोऽस्तु तथाच स एव भावनाविशेष्यतया सङ्ख्यान्वयी भवितुमर्हत्येवेत्यत आह, 'गगनेनेति अत्र च गगनवृत्तिस्थितिरित्यर्थः, तथाच पूर्ववदत्र भावनान्वयो-धात्वर्थे न सम्भवति धात्वर्थस्य नित्यत्वेन भावनान्वयस्य बाधितत्वादित्यगत्या सङ्ख्यानन्वय एव स्वीक्रियत इति भावः । ननु गगनेन स्थीयत इत्यत्रापि प्रथमान्तपदाभावेऽपि जानातीत्यादाविवाश्रयत्वात्मिकाया भावनाया एव विशेषणत्वेन धात्वर्थेऽन्वयोऽस्तु तथाच गगनवृत्त्याश्रयतानिरूपिका स्थितिरित्यन्वये भावनाविशेष्यीभूतायां स्थितावेव सङ्ख्यान्वयः स्यादित्यत आह, 'धात्वर्थस्येति गगनं तिष्ठतीत्यादावाश्रयत्वरूपे भावनाविशेषणत्वेनैव धात्वर्थ-

भावनाया विशेषणतयैवान्वयस्य व्युत्पन्नत्वात् भावनाया बाधितत्वाच्च भावनाविशेष्यी

नाया इति चैत्रवृत्तिस्वापनिरूपिताश्रयत्व-गगननिष्ठस्थितिनिरूपिताश्रयत्वादेरेव प्रकृते भावनात्वेन तस्य धात्वर्थस्वाप-स्थित्यादौ बाधादित्यर्थः। एतच्चापाततः निरूपकत्वसम्बन्धेनैव तस्य तत्रान्वयसम्भवात्। वस्तुतोऽत्र चैत्रनिष्ठः स्वापः गगननिष्ठा स्थितिरित्यादावाख्यातार्थाविशेषणकान्वयबोधस्यैवानुभवसिद्धत्वात् धात्वर्थो न भावनाविशेष्य इत्येव तत्त्वं। यद्वा एतदस्वरसेनैवाह, 'अतएवेति धात्वर्थे भावनाया अनन्वितत्वेन सङ्ख्याया अपि तत्रानन्वयादेवेत्यर्थः,

स्थित्यन्वयस्य व्युत्पत्तिसिद्धतया तद्भङ्गप्रसङ्गेनाश्रयत्वविशिष्टतया धात्वर्थान्वयो न सम्भवतीत्यर्थः। ननु विनिगमनाविरहेण उभयत्र भिन्नभिन्नाव्युत्पत्तिः कल्पनीया अन्यथा भावाख्यातस्थलीयव्युत्पत्तिविरोधेन गगनं तिष्ठतीत्यादावन्वयोऽव्युत्पन्न इत्यस्यापि वक्तुं शक्यत्वादित्यत आह, 'भावनाया-इति गगनवृत्त्याश्रयत्वरूपभावनायास्तद्वृत्तिस्थितौ बाधेनान्वयासम्भवादित्यर्थः। यद्यपि निरूपकतासम्बन्धेन गगनवृत्त्याश्रयत्वं तद्वृत्तिस्थितावबाधितमेव तथापि प्रलये गगनेन स्थीयते न नष्टघटेन इत्यादौ नञर्थान्वयानुपपत्त्या निरूपकत्वसम्बन्धेन तदन्वयो न सम्भवति निरूपकत्वस्य वृत्त्यनियामकतया प्रतियोगितावच्छेदकसम्बन्धत्वविरहेण तत्सम्बन्धावच्छिन्नप्रतियोगिताक-घटवृत्त्याश्रयत्वाभावबोधस्यासम्भवादित्यत्र तात्पर्य्यं। न च न नष्टघटेनेत्यतोघटवृत्त्याश्रयताया आश्रयत्वसम्बन्धावच्छिन्नप्रतियोगिताकाभाव एव प्रतीयतामिति नोक्तदोष इति वाच्यं। तथा सति न घटेनेत्यादिवत् न गगनेन स्थीयते इत्यादेरपि प्रसङ्गात् गगनवृत्त्याश्रयताया आश्रयतासम्बन्धेनाभावस्य गगनवृत्तिस्थितौ सत्त्वादित्यलमधिकेनेति दिक्।

**सङ्ख्या एकवचनन्तु साधुत्वार्थम्। अतएव स्वापस्य द्वित्व-बहुत्वेऽप्यौत्सर्गिकमेकवचनमेव। एवञ्च भावत्तिङां**

'औत्सर्गिकं' द्वित्वाद्यन्वयबोधासम्भवस्थल एवानुशिष्टं, 'औत्सर्गिकं' प्रथमोपस्थितमित्यपि कश्चित्। नन्वेवं भावप्रत्ययानां निरर्थकत्वा-पत्तिः चैत्रेण सुप्यते गगनेन स्थीयते इत्यादौ चैत्रनिष्ठस्वापाश्रयत्वं गगननिष्ठस्थित्याश्रयत्वं इत्यादिबोधस्यानुभवसिद्धत्वादित्यत आह, 'एवञ्चेति, 'यथायथमिति लटो वर्त्तमानत्वं इष्टसाधनत्वं लिङ-

---

ननु यदि भावाख्यातानां सङ्ख्याबोधकत्वं तदा गगनेन स्थीयत-इत्यादौ वर्त्तमानत्वाद्यन्वये तात्पर्य्याभवस्थले भावाख्यातप्रयोग एव न स्यात् प्रयोजनाभावात् तेषां सङ्ख्याबोधकत्वनियमे च नियमेन सङ्ख्याबोधार्थमेव तत्तत्प्रयोग उपपद्यते इत्यत आह, 'एकवचनन्त्विति वर्त्तमानत्वादितात्पर्य्याभावदशायामपि गगनेन स्थीयते इत्यादावाख्यातैकवचनन्त्वित्यर्थः। 'साधुत्वार्थं' तत्रत्यधातोः साधुत्वसम्पत्तये, भावाख्यातसमभिव्याहारं विना तत्र धातोरसाधुत्वापत्त्या अन्वयाबोधकत्वप्रसङ्गात् भावाख्यातप्रयोगः सप्रयोजन इत्यर्थः। न चाबोधकपदसमभिव्याहारो न साधुत्वसम्पादक-स्तथा सति आनयनादीनां स्वार्थकविकरणादीनां समभिव्याहारस्यापि साधुत्वसम्पादकत्वाभावप्रसङ्गादिति भावः। भावाख्यातस्य संख्याबोधकत्वे बाधकं भावाख्यातस्यैकवचनतायां युक्तिञ्च उपष्टम्भकत्वेन दर्शयति, 'अतएवेति भावाख्यातस्थले संख्यानन्वयादेवेत्यर्थः, 'स्वापस्य द्वित्व-बहुत्वे-ऽपीति, तथाच यद्येकवचनभावाख्यातस्य एकत्वसंख्याबोधकत्वं तदा तुल्य-न्यायतया स्वापादिगतद्वित्वादितात्पर्य्यसत्त्वे भावस्थले द्विवचन-बहुवचन-योरापत्तिः। यदि च भावस्थले धात्वर्थगतद्वित्व-त्रित्वादिसंख्यायां कदापि कस्यापि न तात्पर्य्यमिति न तत्र द्विवचनादीत्युच्यते तदा एकत्वसंख्याया-मपि तथैवेत्येकवचनस्याप्यनुपपत्तिरिति बाधकमित्यर्थः, 'औत्सर्गिकमिति

यथायथं वर्त्तमानत्वादीष्टसाधनत्वादिकमर्थः, तच्च

इत्यर्थः, 'वर्त्तमानत्वादी'त्यादिपदादतीतत्व-भविष्यत्त्वपरिग्रहः, 'इष्ट-साधनत्वादी'त्यादिपदात् कृतिसाध्यत्वादिपरिग्रहः। नन्वेवं प्रथमान्त-पदाभावात् तस्याप्यनन्वितत्वापत्तिरित्यत आह, 'तच्चेति, जानाती-त्यादौ धात्वर्थेऽपि वर्त्तमानत्वादीनामन्वयादिष्टसाधनत्वादीनाञ्च धात्वर्थ एव सर्व्वत्रान्वयादिति भावः। नन्वाख्यातार्थस्य धात्वर्थ-विशेष्यतानियमात् कथं तद्विशेषणत्वेन तस्यान्वय इत्यत आह,

गद्यानक्रमेण प्रथमोपस्थितमित्यर्थः, तथाच साधुत्वार्थं द्विवचनादेः सम्भवेऽपि विलम्बोपस्थितिकत्वान्न तस्य साधुत्वनियामकत्वं कल्प्यते किन्तु शीघ्रोपस्थि-तिकतयैकवचनस्यैव तथात्वमिति युक्तिरित्यर्थः। ननु भावाख्यातस्थले यदि कृतिर्व्यापारो वा नार्थस्तदा भावाख्यातस्य कोऽर्थः कुत्र वा भावाख्यातेन वर्त्तमानत्वादिबोध इत्याकाङ्क्षायामाह, 'अतएवेति भावाख्यातानां संख्या-बोधकत्वविरहादेवेत्यर्थः, 'यथायथमिति भावलट्स्थले वर्त्तमानत्वं भावविधि-स्थले इष्टसाधनत्वञ्चेत्यर्थः, 'तच्च' वर्त्तमानत्वादिकञ्च। ननु कृतौ व्यापारे वा तदन्वयोऽनुभवसिद्धो न तु धात्वर्थेऽपीत्यत आह, 'तथैवेति भावाख्यातस्थले धात्वर्थगतत्वेनैव वर्त्तमानत्वेष्टसाधनत्वप्रत्ययादित्यर्थः, भावाख्यातादिष्टसाधन-ताप्रतीतिस्तु चैत्रेण पच्येतेत्यादौ विधिभावस्थले बोद्धव्या। यदि च धात्वर्थे वर्त्तमानत्वादिबोधो नाङ्गीक्रियते तदा चैत्रोजानातीत्यादौ धात्वर्थज्ञानादि-गतत्वेन वर्त्तमानत्वबोधानुपपत्तिरिति भावः। यद्यपीष्टसाधनत्वं धात्वर्थ एव सर्व्वत्र मणिकारमते भासते इति तदभिधानमसङ्गतं, तथापि कृतीष्टसाध-नतावादिमतमाश्रित्य इदमुक्तं, दृष्टान्तार्थं तदुक्तमिति मान्याः। ननु यथा पाकः इत्यादौ घञादीनां प्रयोगसाधुतामात्रं प्रयोजनं न तु वर्त्तमानत्वादि-बोधकत्वं तथा भावाख्यातानामप्यस्तु तदेव प्रयोजनं न तु वर्त्तमानत्वादि-

धात्वर्थ एवान्वेति, तथैव प्रत्ययात्। तद्बोधकानान्तु घञादीनां प्रयोगसाधुत्वमात्रम्। भावनायाश्च कर्त्तरि

'तथैवेति एषां धात्वर्थविशेष्यत्वेनैव प्रत्ययादित्यर्थः, तथाच भावनाया एव धात्वर्थविशेष्यतानियमादिति भावः। 'तद्बोधकानां' वर्त्तमानत्वादीष्टसाधनत्वाद्यबोधकानां, 'घञादीनां' भावविहितघञादीनां, 'प्रयोगसाधुत्वमात्रमिति, 'प्रयोगः' सुन्दरः पाक इत्यादौ पाकविशेष्यकान्वयबोधः, तत्राकाङ्क्षात्वमित्यर्थः, 'मात्रपदात् सार्थकत्वव्यवच्छेदः, 'घञादीनामित्यादिपदेन भावविहितल्युडनादीनां भावविहितक्तिप्रत्ययस्य च संग्रहः, भावविहितेत्युपादानात् कर-

बोधकतापीत्यत आह, 'तद्बोधकानामिति वर्त्तमानत्वाद्यबोधकानामित्यर्थः, 'तुशब्दोऽवधारणार्थः, तथाच घञादिस्थले वर्त्तमानत्वानुभवाभावेन वर्त्तमानत्वबोधकत्वाभावः, भावाख्यातस्थले वर्त्तमानत्वबोधस्यानुभविकत्वेन न तथेति दृष्टान्त-दार्ष्टान्तिकवैषम्यमित्यर्थः। ननु चैत्रः पचतीत्यादौ प्रथमान्तपदोपस्थाप्ये येन केनापि सम्बन्धेनान्वयस्वीकारे अपचत्यपि मैत्रादौ कालिकसम्बन्धादिना पाकानुकूलकृतिमत्त्वात् पचतीत्यादिप्रयोगापत्तिरेवं तादात्म्येन पाकानुकूलकृतेः स्वात्मकगुणे सत्त्वाद्गुणः पचतीति प्रयोगापत्तिरित्यत आह, 'भावनायाश्चेति, तथाच चैत्रः पचतीत्यादौ यदि चैत्रपदार्थः शरीरं तदा अवच्छेदकताख्याश्रयतासम्बन्धेन कृतेरन्वयः यदि च शरीरविशेषावच्छिन्नात्मा तदर्थस्तदा समवायाख्याश्रयतासम्बन्धेन तत्र तदन्वय इति नियमः स्वीकार्य्यो न तु येन केनापि सम्बन्धेन तदन्वयः स्वीकर्त्तव्य इति नोक्तदोष इति भावः। एवमन्यत्रापि बोध्यं। नन्वेवं चैत्रेण पच्यते तण्डुल इत्यादौ भावनायाश्चैत्रवृत्तिपाककृतेराश्रयत्वस्य तण्डुलादौ बाधेन कथं तत्र तदन्वयस्तथाच तत्र भावनाविशेष्यविरहात् सङ्ख्यान्वयो न स्यादित्यत आह,

स्वाश्रयत्वेन कर्म्मणि पुनरन्यथान्वयः, तत्र कर्त्तृ-कर्म्मा-

णादिविहितघञादीनां कर्म्मविहितक्तिप्रत्ययस्य च धात्वर्थेऽपि न क्षतिः। न च कर्म्मणि क्तिप्रत्ययोऽसिद्धः तस्य भावप्रत्ययानुशिष्टत्वात्, "या सृष्टिः स्रष्टुराद्येत्यभिज्ञानपद्ये सृष्टिपदस्य भावसाधनत्वेऽपि "कृदभिहितेति न्यायेन सर्ज्जनकर्म्मत्वाभसम्भवादिति वाच्यं। इच्छा-विषयेऽपि इष्टिपदप्रयोगस्य दृष्टतया भाव इव कर्म्मण्यपि तस्य साधुत्वात्। न च तत्र तत्प्रयोगः क्वाप्यदृष्ट इति वाच्यं। अग्नये स्विष्टि-कृते स्वाहेति स्विष्टिकृद्धोममन्त्रे तथा दर्शनात्, तस्य शोभनेच्छा-विषयकर्त्त्रे अग्नये इत्यर्थकतया प्रामाणिकैर्व्याख्यातत्वात्। न च तत्र स्विष्टेति निष्ठान्त एव पाठ इति वाच्यं। वह्निविकारान्तपाठस्यापि दृष्टत्वात्। श्रवण-व्यञ्जनविषयेऽपि श्रुतिपद-व्यक्तिपदप्रयोगाच्च। कर्म्म-वाचकपदाभावेन "कृदभिहितेति न्यायस्य तत्रासम्भवादित्यलमप्रकृतेन। ननु यदि भावनाविशेष्य एव संख्यान्वयस्तदा पच्यते तण्डुल इत्यादौ तण्डुलादिषु कथं तदन्वयः तत्राश्रयतासम्बन्धेन भावनाया-बाधितत्वेन भावनाविशेष्यत्वाभावादित्यत आह, 'भावनायाश्चेति, 'स्वाश्रयत्वेन' स्वाश्रयतासम्बन्धेन, 'कर्म्मणीति कर्म्मप्रत्ययस्थल इत्यर्थः,

'कर्म्मणि पुनरिति कर्म्मप्रत्ययस्थले तण्डुलादावित्यर्थः, 'अन्यथा' वक्ष्यमाणप्र-कारेण। ननु पचतीतिपरस्मैपदाख्यातस्य यदा कर्त्तृत्वबोधे तात्पर्य्यविरहः किन्तु कर्म्मत्वे तदा तण्डुलस्यैव भावनाविशेष्यतया सङ्ख्यान्वयित्वेन कर्त्तृ-सङ्ख्याया-अनुक्तत्वात् तृतीयापत्तिः, एवं पच्यत इत्यादौ कर्म्माख्यातस्य यदा कर्म्मबोधे तात्पर्य्यं नास्ति किन्तु कर्त्तृत्वबोधे तदा चैत्रस्यैव भावनान्वयितया तण्डुलादेर्भा-वनाविशेष्यत्वविरहितया सङ्ख्यानन्वयित्वे कर्म्मसङ्ख्याया अनुक्तत्वे द्वितीयापत्त्या

भिधायित्ववत् अस्माकमपि तथान्वयबोधकत्वम्। अतो

'अन्यथा' वक्ष्यमाणक्रमेण, तथा चाश्रयतासम्बन्धेन बाधेऽपि प्रकारान्तरेण विशेष्यत्वे न बाधकमिति भावः। ननु कदाचिदाश्रयतासम्बन्धेन कर्त्तर्य्यन्वयः क्वचिच्च कर्म्मणि अन्यथान्वयः इत्यत्र किं नियामकं अत आह, 'तवेति तवाख्यातस्य कर्त्तृ-कर्म्मबोधकत्वं तुल्यं ममापि आख्यातस्य कर्त्तर्य्याश्रयत्वेन भावनाबोधकत्वं कर्म्मण्यन्यथा तदन्वयबोधकत्वं इत्यर्थः, तथाच यथा त्वन्मते परस्मैपदस्य न कर्म्मबोधकत्वं तथा ममापि परस्मैपदस्य न कर्म्मणि भावनाया अन्यथान्वयबोधकत्वं किन्तु कर्त्तर्य्याश्रयत्वेन तद्बोधकत्वं, यथा तव कर्त्तरि यकोऽसाधुत्वं तथा ममापि कर्त्तर्य्याश्रयत्वेन भावनान्वयबोधे तस्यासाधुत्वं, यथा तव एकदा न कर्त्तृ-कर्म्मबोधकत्वं तथा ममाप्येकदा न कर्त्तर्य्याश्रयत्वेन कर्म्मणि चान्यथान्वयबोधकत्वमिति भावः। क्रमेणा-

तण्डुलं पच्यत इति प्रयोगापत्तिरित्यत आह, 'तवेति वैयधिकरण्यस्येत्यर्थः, तथाच भवन्मते यथा परस्मैपदेन नियमतः कर्त्तुरभिधानमिति तत्र न तृतीया एवं चैत्रेण पच्यत इत्यादौ कर्म्मबोधकत्वमेव न तु कर्त्तृबोधकत्वमिति तत्र न द्वितीया तथा ममापि परस्मैपदेन कर्त्तृत्वं बोध्यते न तु कर्म्मत्वं पच्यत-इत्यादौ चाख्यातेन कर्म्मत्वं बोध्यते न तु कर्त्तृत्वमिति नोक्तातिप्रसङ्ग इत्यर्थः। ननु पचति पच्यत इत्यादावसाधुत्वात् कर्त्तृत्व-कर्म्मत्वबोधोमास्तु पच्यत-इत्यादावाख्यातस्योभयत्र साधुत्वात् एकदा कर्त्तृत्व-कर्म्मत्वबोधमादाय द्वितीया-तृतीययोरनुपपत्तिरित्यत आह, 'पच्यत इति, तथाच पच्यत इत्यादावसाधुतया अन्यथा वा यथा नैकदा कर्त्तृ-कर्म्मोभयबोधकता तथा ममापीति नातिप्रसङ्ग इति भावः। ननु भावना कृतिस्तथाच रथोगच्छतीत्यादौ भावना-

मैत्रेण पचति तण्डुलः तण्डुलं पच्यते मैत्रः मैत्रः पक्ष्यते तण्डुल इत्यादयो न प्रयोगाः। भावना च व्यापारमात्रोपलक्षिता अचेतनानुरोधात्। भिन्नाभ्यां रूपा-

सङ्कीर्णं प्रयोजनमाह, 'मैत्रेणेति, परस्मैपदेनापि तिपा कर्म्मणि तण्डुले विषयतया भावनाया अन्वयबोधने तदर्थसंख्याया अपि तत्रैवान्वयात् तत्र प्रथमा स्यादेकदोभयान्वयबोधकत्वस्याव्युत्पन्नतया मैत्रे आश्रयतया भावनानन्वयात् तद्वृत्तिसंख्याया अप्यनभिधानात् तत्र तृतीया स्यादिति भावः। 'तण्डुलमिति, कर्त्तर्य्याश्रयतया भावनान्वयाबोधेऽपि यकः साधुत्वे पच्यते इत्यात्मनेपदेन कर्त्तरि मैत्रे तेन सम्बन्धेन भावनाया अन्वयबोधनात् तदर्थसंख्याया अपि तत्रैवान्वयात् तत्र प्रथमा स्यादेकदोभयान्वयबोधकत्वस्याव्युत्पन्नतया तण्डुले भावनाया विषयत्वेनान्वयात् तद्वृत्तिसंख्याया अप्यनभिधानात् तत्र द्वितीया स्यादिति भावः। 'मैत्र इति, एकदा उभयान्वयबोधस्याप्यभ्युपगमे पक्ष्यत इत्यनेन भावनायाः कर्त्तर्य्याश्रयतया कर्म्मणि चान्यथान्वयबोधनात् तदुभयवृत्तिसंख्याया अप्यभिधानेनोभयत्रैव प्रथमा स्यादिति भावः। 'आख्यातार्थभावनाविशेष्ये संख्यान्वय इत्यत्र भावनापदार्थं निर्व्वक्ति, 'भावना चेति भावना न प्रयत्नत्वमात्रविशिष्टा अपि तु व्यापारत्वविशिष्टापीत्यर्थः, व्यापारत्वं धर्म्मत्वं, 'अचेतनेति अग्निः पचतीत्यादावचेतनेऽपि संख्या-

विरहेण तद्विशेष्याप्रसिद्धा सङ्ख्यान्वयो न स्यादित्यत आह, 'भावना चेति, व्यापारेति, 'मात्रपदं कृत्स्नार्थकं, तथाच रथोगच्छतीत्यादौ धात्वर्थानुकूलव्यापार एव भावनापदार्थ इति नोक्तदोष इति भावः। 'अचेतनानुरोधात्'

भ्यामेकधर्म्मिबोधकत्वलक्षणं सामानाधिकरण्यमप्रसिद्धं सम्भवदन्यादृशं न वार्य्यते। अथ तण्डुलं पचति चैत्रः

---

न्ययानुरोधादित्यर्थः, 'व्यापारे'त्युपलक्षणं आश्रयत्व-प्रतियोगित्व-मपीति बोध्यं। शब्देकदेशस्यानुपादेयत्वात् तेन चैत्रोजानाति घटो नश्यतीत्यादेरपि संग्रहः।

केचित्तु व्यापारमात्रोपलक्षिकेत्यस्य कालेष्टसाधनत्वाद्यतिरिक्ता-ख्यातार्थोपलक्षणं इत्यर्थ इत्याहुः। तदसत्। तथा सति कर्म्मा-ख्यातार्थस्य फलस्यापि भावनात्वेनाग्रिमग्रन्थासङ्गतेः।

वैयाकरणेनाख्यातस्य कर्त्तृकर्म्मशक्तौ चैत्रादिपदाख्यातादिपदयोः सामानाधिकरण्यान्यथानुपपत्तिं प्रमाणीकृतां निराकरोति, 'भिन्ना-भ्यामिति, एकधर्म्मिबोधकत्वमात्रस्य सामानाधिकरण्यपदार्थत्वे कल-शादिपदेऽपि घटादिपदसामानाधिकरण्यव्यवहारापत्तिरतः 'भिन्ना-भ्यां रूपाभ्यामिति उक्तम्। घटोऽस्ति नीलमानयेति वाक्यद्वय-स्थनीलपद-घटपदयोरपि सामानाधिकरण्यव्यवहारस्येष्टत्वात्। एतच्च सामानाधिकरण्यपदार्थतया अभिहितं न तु कर्त्रादिशक्ति-साधकहेतुघटकं वैयर्थ्यादित्यवधेयं। 'अन्यादृशमिति आख्यातपद-चैत्रादिपदयोरेकाधिकरणवृत्तित्वरूपमित्यर्थः। 'न वार्य्यते' कर्त्तृ-

---

रथो गच्छतीत्याद्यचेतनविशेष्यकबोधानुरोधात्। ननु कर्त्तरि कर्म्मणि च यदि नाख्यातस्य शक्तिस्तदा चैत्रपदाख्यातपदयोर्विभिन्नरूपाभ्यामेकधर्म्मि-प्रकाशकत्वरूपसामानाधिकरण्यं न स्यादित्यत आह, 'भिन्नाभ्यामिति, एक-धर्म्मिप्रकाशकत्वं असिद्धमिति नैयायिकैरनभ्युपगमादिति भावः। 'सम्भवदिति, भिन्नाभ्यां एकधर्म्मिविशेष्यकशाब्दबोधजनकत्वलक्षणसामानाधिकरण्यं न

इत्यत्राश्रयतया चैत्रस्तु भावनाविशेष्यः चैत्रेण पच्यते तण्डुल इत्यादौ तण्डुलस्तु कथं, विषयतयेति चेत्, रथेन गम्यते ग्रामः इत्यादौ सविषयकव्यापारानभि-

---

त्वादिप्रकाश्यापि न निवार्य्यते, कर्त्तृत्वादिप्रकाश्याप्युपपद्यत इति यावत्।

केचित्तु 'अन्यादृशं' यत्राख्यातेन कृतिर्बोध्यते तत्र चैत्रादिपदे-नापि चैत्रादिकं बोध्यते इत्येवंरूपमित्यर्थः, इत्याहुः।

'कर्म्मणि पुनरन्यथा' इत्यन्यथाशब्दार्थं विवेचयितुं शङ्कते, 'अथेति, 'कथमिति केन सम्बन्धेन भावनाविशेष्य इत्यर्थः। उत्तर-यति, 'विषयतयेति, उत्तरं निराकरोति, 'रथेनेति कथमाख्यातोप-स्थिताया गमनाद्यनुकूलव्यापाररूपाया भावनाया विशेष्योग्रामादि-रित्यर्थः, तत्र गमनानुकूलव्यापारस्य नोदनादेर्विषयाप्रसिद्धेरिति

---

वार्य्यते न नैयायिकैरस्माभिरपि निवार्य्यते कृति-चैत्रत्वाभ्यां भिन्नाभ्यां आ-ख्यातपद-चैत्रपदाभ्यां एकस्य चैत्रस्य शाब्दबोधजननादिति भावः। ननु भावनाविशेष्ये यदि सङ्ख्यान्वयस्तदा कर्म्मप्रत्ययस्थले भावनाविशेष्यत्वविरहा-दाख्यातार्थसङ्ख्यान्वयित्वानुपपत्तिरित्याशयेन शङ्कते, 'अथेति, 'भावना-विशेष्य इति, आख्यातार्थसङ्ख्यान्वयी च स्यादिति शेषः। 'कथमित्यत्र भावनाविशेष्य इत्यनुषज्यते। अवान्तरमाशङ्कते, 'विषयतयेतीति चैत्रेण पच्यते तण्डुल इत्यत्र तण्डुलश्चैत्रवृत्तिपाकभावनाविषय इत्यन्वयो वाच्यस्तथाच तत्र तण्डुलस्य भावनाविशेष्यत्वेनाख्यातार्थसङ्ख्यान्वयित्वं नानुपपन्नमित्यर्थः। 'रथेनेति रथवृत्तेर्गमनानुकूलव्यापाररूपभावनायाः सत्त्वेऽपि तस्या नोदनादि-रूपतया निर्विषयत्वेन तद्विषयत्वान्वयासम्भवादित्यर्थः, सचेतनकर्त्तृकक्रिया-स्थले सर्व्वत्र तात्पर्य्यभेदेन द्विविधान्वयबोधं प्रदर्श्य अचेतनकर्त्तृकक्रियास्थले

धाने का गतिः, अत्र प्राञ्चः मैत्रेण पच्यते तण्डुलइत्यत्र मैत्रनिष्ठपाकभावनाविषयः, मैत्रनिष्ठभावनाविषय-

भावः। 'मैत्रनिष्ठेति' अत्र निष्ठता तृतीयार्थः, सा चाख्यातार्थभावनान्वयिनी, 'विषय' इत्यत्र विषयत्वं संसर्गः, पाकाकर्म्मण्यपि तण्डुले तण्डुलत्वरूपेण मैत्रनिष्ठपाकभावनाविशेष्यत्वस्य सत्त्वात् तत्रापि मैत्रेण पच्यतइति प्रयोगप्रसङ्गात्। कर्म्माख्यातस्थले फलवत्ताप्रतीतेरनुभवसिद्धत्वाच्चाह, 'मैत्रनिष्ठेति', अत्रापि निष्ठत्वं तृतीयार्थः, भावना आख्यातार्थः, न तु निष्ठत्वं संसर्गः, भावना तृतीयार्थः, समानपदोपात्तत्वेनाख्यातार्थभावनाविशेष्य एव तदर्थसङ्ख्यान्वय इति प्रागुक्तव्युत्पत्तिभङ्गापत्तेः। भावनाविषयत्वञ्च भावनाविषयकत्वं भावनाजन्यत्वमिति यावत्, अन्यथा पाकत्वरूपेण मैत्रकृतिविषयचैत्रनिष्ठकृतिजन्यपाककर्म्मण्यपि तण्डुले मैत्रेण पच्यतेऽयं तण्डुल इति प्रयोगापत्तेः। फलमपि कर्म्माख्यातार्थः, फलत्वं कार्य्यत्वं, प्रतियोगितासम्बन्धेन प्रागभावादिमत्त्वमिति यावत्। अत एव व्यापारतो भेदः, जन्यत्वं शालित्वञ्च संसर्गः, पदानां स्वार्थान्वयघटितपदार्थान्तराबोधकत्वव्युत्पत्तेस्तत्र नादरः। स्वर्गकामो यजेतेत्यादौ विध्यर्थेष्टसाधनत्वकृतिभ्यां घटितस्य धात्वर्थस्य घटोभविष्यतीत्यादावाख्यातार्थवर्त्तमानप्रागभावप्रतियोगित्वाश्रयत्वाभ्यां घटितस्योत्पत्तिरूपधात्वर्थस्य

---

एकविधमन्वयं प्रदर्शयिष्यति, 'मैत्रेणेत्यादि, 'पाकभावनाविषय इत्यस्य वक्ष्यमाणतण्डुल इत्यनेनान्वयः। 'मैत्रनिष्ठेति, अत्र निष्ठत्वं तृतीयार्थः, भावना आख्यातार्थः, विषयत्वं जन्यत्वञ्च संसर्गः, फलमात्मनेपदार्थः, शालित्वमा-

पाकजन्यफलशाली वा तण्डुलः प्रतीयत इति साक्षात्परम्परया भावनाविशेष्यस्तण्डुलः, रथेन गम्यते ग्राम इत्यत्र रथनिष्ठगमनानुकूलव्यापारजन्यफलशाली ग्रामः प्रतीयते इति व्यापारविशेष्योग्राम इति।

नव्यास्तु भावनादेराख्यातलभ्यत्वात् आधेयत्वमात्रं

---

चान्वयाभ्युपगमेन तल्लब्धत्यत्तेरसार्व्वचिकत्वादिति भावः। नन्वेवमाख्यातार्थभावनात्वविशिष्टविशेष्यः कथं तण्डुलः भावनात्वस्य प्रयत्नव्यापारत्वादिरूपतया फलत्वस्यातथात्वादित्यत आह, 'साक्षादिति पूर्व्वत्र साक्षादुत्तरत्र परम्परयेत्यर्थः। 'रथनिष्ठेति, अत्रापि शालित्वं जन्यत्वं अनुकूलत्वञ्च संसर्गः, फलस्य व्यापारजन्यत्वं धात्वर्थद्वारा तत्प्रयोज्यत्वं, निष्ठत्वं तृतीयार्थः, अन्वयस्तस्य धात्वर्थगमने न तु व्यापारे, अन्यदीयग्रामगमनानुकूलनोदनादिमति निश्चलेऽपि रथे अनेन रथेन गम्यते ग्राम इति प्रयोगापत्तेः। अतएव प्रागेव रथनिष्ठव्यापारजन्यगमनजन्यफलशाली ग्राम इत्यन्वयोनोक्तः। 'व्यापारविशेष्य इति परम्परया व्यापाररूपाख्यातार्थभावनाविशेष्य इत्यर्थः।

प्राचां मते दूषणाभिधानपूर्व्वकं मतान्तरमाह, 'नव्यास्त्विति।

---

अयत्नरूपं संसर्ग इत्यर्थः, 'साक्षादिति प्रथमबोधानुसारेण, 'परम्परयेति द्वितीयबोधानुसारेणेति, अचेतनकर्त्तृकक्रियास्थले एकविधमेवान्वयं दर्शयति, 'रथेनेति, 'व्यापारविशेष्य इति, तथाच परम्परया भावनाविशेष्ये ग्रामे तल्लब्धान्वयो नानुपपन्नः साक्षात्परम्परया वा भावनाविशेष्यत्वमात्रस्याख्यातार्थतल्लब्धान्वयनियामकत्वादिति भावः। एवमन्यत्रापि कर्म्मप्रत्ययस्थले, पक्षस्यात्मनेपदार्थत्वं व्यवस्थापयितुं नव्यमतं दर्शयति, 'नव्यास्त्विति, तत्र

तृतीयार्थोऽस्तु सङ्ख्यामात्रं वा, सम्बन्धस्तु पचतीत्यादाविव वाक्यार्थः। अस्तु च फल-कर्म्मणोरपि सम्बन्धस्तथा

---

'भावना' यत्नः, 'आदिपदात् व्यापारत्वविशिष्टपरिग्रहः, 'सङ्ख्यामात्रं वेति, चैत्रेण पच्यते इत्यादावित्यादिः, 'सम्बन्धस्तु' निष्ठतारूपसम्बन्धस्तु, 'वाक्यार्थः' संसर्गमर्य्यादया लभ्यः, रथेन गम्यते इत्यादौ पुनराधेयत्वं तृतीयाविभक्तेरेवार्थः, नामार्थ-धात्वर्थयोर्भेदान्वयस्याव्युत्पन्नत्वात्। न च चैत्रेण पच्यते इत्यत्राधेयत्वस्य संसर्गत्वे चैत्रः पच्यते तण्डुलः इत्यादावपि तथा स्यादिति वाच्यं। तादृशान्वयबोधे तृतीयायाः सहकारित्वात्। चैत्रं पच्यते तण्डुलः चैत्रौ पच्यते तण्डुल इत्यादौ द्वितीयाद्युपस्थिताधेयत्वाद्यन्वयाभावेन त्वयापि आधेयत्वे तृतीयोपस्थाप्यत्वस्य नियामकस्यावश्यं वक्तव्यत्वादिति भावः।

---

फलस्य पदान्तरालभ्यत्वं दर्शयितुं भावनादेरित्यादिकस्यार्थ इत्यन्तं, चैत्रनिष्ठभावनाविषयेत्यादौ भावनादेरित्यर्थः, 'आदिपदेन वर्त्तमानत्वपरिग्रहः, 'आधेयत्वमात्रमिति, 'मात्रपदेन कृतिव्यवच्छेदः। ननु चैत्रेण पच्यते तण्डुल-इत्यादौ आधेयत्वस्य तृतीयार्थत्वे चैत्रः पचति तण्डुलमित्यादौ यावन्तोऽर्थाः शाब्दबोधविषयास्तावदधिकपदार्थस्य शाब्दबोधविषयत्वापत्तिस्तथाचानुभव-विरोधः, कर्त्तृप्रत्ययस्थले यावन्तः पदार्था भासन्ते तावत्समसङ्ख्या एव पदार्थाः कर्म्मप्रत्ययस्थलेऽपि भासन्ते इत्यस्य सर्व्वसिद्धत्वादित्यत आह, 'संख्यामात्रं वेति, 'मात्रपदेनाधेयत्वव्यवच्छेदः। ननु तृतीयाया आधेयत्वार्थकत्वाभावे कृतौ चैत्रनिष्ठत्वस्य कुतो लाभ इत्यत आह, 'सम्बन्धस्त्विति चैत्र-कृत्योराधेयत्वरूपः सम्बन्धस्त्वित्यर्थः। 'पचतीत्यादाविति, यथा चैत्रे पाकानुकूलकृतेराश्रयत्वं संसर्गस्तथा चैत्रेण पच्यत इत्यादौ चैत्र-कृत्योरप्याधेयता-

फलन्तु कस्यार्थः। न च तदपि तथा, प्रकारीभूय भासमानत्वात्। फलावच्छिन्नक्रियाया धात्वर्थत्वेऽपि क्रियाजन्यफलालाभात् विशेष्य-विशेषणभावविपर्य्यय-

'फल-कर्म्मेति, 'सम्बन्धः' शालित्वरूपः, 'तथा' वाक्यार्थः, 'अपि-शब्दात् क्रिया-फलयोर्व्यापार-फलयोः समुच्चयः, तत्रापि जन्यत्वस्य वाक्यार्थत्वात्। 'न चेति, 'तदपि' फलमपि, 'तथा' संसर्गः, तथाच मैत्रनिष्ठपाकभावनावान् तण्डुल इत्यादिरन्वयबोधः, स्वजन्यफलवत्त्वं स्वविषयक्रियाजन्यफलवत्त्वं वा सम्बन्धः न तु मैत्रनिष्ठभावनाविषय-पाकशालितण्डुल इत्यन्वयबोधः, अतो धात्वर्थ-नामार्थयोर्भेदेना-न्वयस्याव्युत्पन्नत्वेऽपि न क्षतिरिति भावः। ननु फलावच्छिन्नक्रियाया-धात्वर्थत्वात् धात्वर्थ एव फलं इत्यत आह, 'फलावच्छिन्नेति विक्लित्ति-संयोगाद्यात्मकफलविशिष्टेत्यर्थः, वैशिष्ट्यञ्च जन्यजनकभावः, 'क्रियाजन्येति पच्यते तण्डुल इत्यादौ पाकजन्यफलशाली तण्डुलः रथेन गम्यते ग्राम इत्यत्र रथनिष्ठगमनजन्यफलशाली ग्राम इति बोधस्यानुभवसिद्धस्याभावप्रसङ्गादित्यर्थः। 'विशेष्य-विशेषणभावेति,

संसर्ग इति तस्य पदार्थत्वविरहेऽपि न क्षतिरिति भावः। 'फलेति पाकजन्य-फलविक्लित्यादि-तण्डुलादिरूपकर्म्मणोराश्रयत्वरूपः सम्बन्धोऽपि वाक्यार्थ-इत्यर्थः, वाक्यार्थत्वञ्च तत्तत्पदद्वयाकाङ्क्षादिलभ्यत्वं, 'तदपि' फलमपि, 'तथा' संसर्गरूपो वाक्यार्थः, 'प्रकारेति, तथाच फलप्रकारकबोधानुपपत्तिरिति भावः। ननु फलावच्छिन्नव्यापारबोधकपचधातुत एव फललाभ इत्यत आह, 'फलावच्छिन्नेति, 'विशेषणेति, यादृशविशिष्टोयत्पदार्थः तत्तत्पदात् तादृश-विशिष्टार्थ एवावगम्यते अन्यथातिप्रसङ्गात् तथाच फलावच्छिन्नव्यापार-

स्यावश्यकत्वात् तस्मात् फलमात्मनेपदार्थः, इत्यञ्च आख्यातोपस्थापिताया भावनायाः क्रियाविषयिण्याः

---

यद्रूपविशिष्टे वृत्तिग्रहः तद्रूपविशिष्टस्यैव पदेन बोधनादिति भावः । इदमुपलक्षणं, धात्वर्थ-नामार्थयोर्भेदान्वयस्याव्युत्पन्नत्वात् इतरविशेषणत्वेनोपस्थितस्य अन्यत्र विशेषणत्वेनान्वयस्याव्युत्पन्नत्वाच्च धात्वर्थैकदेशस्य फलस्य कर्म्मणि साक्षादन्वयासम्भवात् फलत्वेन फलाभावप्रसङ्गाच्च विक्लित्ति-संयोगत्वादिरूपेण फलस्य धात्वर्थतावच्छेदकत्वादित्यपि बोध्यं । 'आत्मनेपदार्थ इति, एतावत्पर्य्यन्तं प्राचीनमतविवेचनं, तद्दूषयति, 'इत्यञ्चेति, 'भावनायाः' यत्नस्य, एतच्च पच्यते तण्डुल इत्यादौ, तथाच तत्र पाकविषयकक्रतिजन्यफलशाली तण्डुल-इति बोध इति भावः । ननु भावनैव धात्वर्थे विशेषणीभूय भासते तथाच भावनाविषयपाकजन्यफलशाली तण्डुलः इत्येवान्वयबोध-

---

बोधकधातुना फलावच्छिन्नव्यापारबोधनेऽपि फले क्रियाजन्यत्वालाभ एव स्यादिति भावः । नन्वेवं फलाभाव एव न स्यादित्याशङ्कायामाह, 'तस्मादिति चैत्रेण पच्यते तण्डुल इत्यादौ फलस्य पदान्तरालभ्यत्वादित्यर्थः, 'आत्मनेपदार्थ इति आत्मनेपदत्वावच्छेदेन फले शक्तिरित्यर्थः । आख्यातत्वञ्च न फलशक्ततावच्छेदकं परस्मैपदस्य कुत्रापि फलाबोधकत्वेन तस्यातिप्रसक्तत्वादन्यथा शब्दत्वादेरेव फलशक्ततावच्छेदकत्वापत्तेरिति भावः । कर्म्मप्रत्ययस्थले तृतीयार्थकृतेरन्वय इति स्वमतं प्रमाणयितुमाख्यातार्थकृतेरन्वय इति प्राचां मतं दूषयति, 'इत्यञ्चेति कर्म्माख्यातस्थले फलस्यात्मनेपदार्थत्वे इत्यर्थः, फलस्यात्मनेपदार्थत्वाभावे फले भावनान्वय एव नास्ति क्व तद्विचारवार्त्ता-पीतीत्यञ्चेत्यस्य नानुपपत्तिरिति भावः । 'आख्यातेति चैत्रेण पच्यते तण्डुल-इत्यादौ चैत्रवृत्तिपाकभावनाप्रयोज्यफलशाली तण्डुल इत्यन्वयस्वीकारे

**फलेऽन्वये फलस्य क्रियाजन्यत्वं न लभ्येत भावना-विषयक्रियायाः फलेऽन्वये तिङुपस्थापितभावनायां**

---

इत्यत आह, 'भावनेति, 'भावनायां' सङ्ख्या-कालेष्टसाधनार्थव्यतिरिक्तार्थे, 'अन्यत्रेति पचतीत्यादावित्यर्थः, 'अन्वयः' अन्वयबोधनियमः। न च क्रियायाः फल-भावनयोरुभयत्रैव विशेषणतया अन्वयबोधोऽस्तु क्रियावत् तद्विषयकभावनापि जन्यतासम्बन्धेन फलविशेषणमस्तु फलञ्च तण्डुले विशेषणमस्त्विति वाच्यं। तादृश-

---

इत्यर्थः, 'न लभ्येतेति, तथाचानुभवविरोध इति भावः। ननु चैत्रवृत्तिभावनाविषयपाकजन्यफलशाली तण्डुल इत्याकारक आख्यातार्थभावनाविषयकः शाब्दबोधो वाच्य इत्यत आह, 'भावनेति आख्यातार्थभावनेत्यर्थः, 'अन्वये' अन्वयस्वीकारे, 'तिङुपस्थापितेति कर्त्राख्याते चैत्रस्तण्डुलं पचतीत्यादौ चैत्रस्तण्डुलकर्म्मकपाकानुकूलकृतिमानित्यन्वयबोधस्तत्र च धात्वर्थविशेषणकस्वार्थकृतिविशेष्यकान्वयबोधजनकत्वव्युत्पत्तिः क्लृप्ता सा च भग्ना स्यात् यदि चैत्रेण पच्यते तण्डुल इत्यादौ आख्यातार्थकृतिविशेषणको धात्वर्थपाकविशेष्यकश्चैत्रवृत्तिभावनाविषयपाकजन्यफलशाली तण्डुल इत्याकारकान्वयबोधः स्वीक्रियत इत्यर्थः। ननु पचधातुसमभिव्याहृतकर्त्राख्यातजन्यकृत्युपस्थितेः कृतिविशेष्यक-पाकप्रकारकशाब्दत्वं पचधातुसमभिव्याहृतकर्म्माख्यातजन्यकृत्युपस्थितेश्च पाकविशेष्यक-कृतिप्रकारकशाब्दत्वं कार्य्यतावच्छेदकमिति विशेषत एव व्युत्पत्ती अङ्गीकार्य्ये तयोश्च न भङ्गः। सामान्यतश्च पचधातुसमभिव्याहृताख्यातजन्यकृत्युपस्थितित्वावच्छिन्नस्य न कृतिविशेष्यक-पाकप्रकारकशाब्दत्वं कार्य्यतावच्छेदकमुच्यते येन तद्विरोधः स्यादिति चेत्, न, उक्तकार्य्य-कारणभावद्वयकल्पनमपेक्ष्य लाघवेन सामान्यतः तादृशस्यैकस्यैव कार्य्य-कारणभावस्य कल्पनाया युक्तत्वात् तथाच तादृशसामान्यकार्य्य-कारणभावबलेन चैत्रेण पच्यते तण्डुल इत्यादौ अपि कृति-

क्रियाया विशेषणत्वेनान्यत्रान्वयः कृप्तो भज्येत। तस्मात् कृत्यनभिधायकभावकर्म्मकृद्योगे कृप्तशक्तेः सुपोलभ्यया भावनया विशिष्टायाः क्रियायाः फलेऽन्वयः, सुवर्थ-

बोधस्यापि तत्रानुभवसिद्धत्वादिति भावः। 'भाव-कर्म्मेति चैत्रेण पक्वं चैत्रेण पक्व ओदन इत्यादावित्यर्थः, 'सुपः' तृतीयाविभक्तितः, 'भावनया' कृत्या, तथाच चैत्रेण पच्यते तण्डुल इत्यादौ चैत्रनिष्ठ-कृतिजन्यपाकजन्यफलशाली तण्डुलइत्यन्वयबोधः, उभयत्रैव जन्यत्वं

विशेष्यक-पाकप्रकारक एकबोधः स्यादित्येव प्रकृते कृप्तव्युत्पत्तिभङ्गप्रसङ्ग-पदार्थः। अयञ्च बोधः फलस्य क्रियाजन्यत्वालाभप्रसङ्गेन दूषित एवेति भावः। नन्वेवं कर्म्माख्यातस्थले कृतिलाभ एव न स्यादिति तल्लाभाय स्वमतं दर्शयति 'तस्मादिति, कर्म्मप्रत्ययस्थले आख्यातोपस्थाप्यभावनायां अन्वयासम्भवा-दित्यर्थः, 'कृत्यनभिधायकेति चैत्रस्य पाक इत्यादिभावकृत्स्थले षष्ठ्यर्थ-कृतेर्जन्यतासम्बन्धेन पाके अन्वयः, चैत्रेण पक्वस्तण्डुल इत्यादिकर्म्मकृत्स्थले तृतीयार्थकृतेर्जन्यतासम्बन्धेन धात्वर्थपाकेऽन्वय इत्यर्थः। 'कृप्तशक्तेरिति कृप्ता शक्तिर्यस्या इति बहुव्रीहिः, तथाच लाघवेन षष्ठी-तृतीयासाधारण-सुप्त्वावच्छेदेन कृतिशक्तिकल्पने कर्म्माख्यातस्थलेऽपि सुप एव तृतीयातः कृतिलाभो भविष्यतीति भावः। सुप्स्थले च पचधातुसमभिव्याहृतसुप्जन्य-कृत्युपस्थितेः पाकविशेष्यक-कृतिप्रकारकशाब्दत्वमेव सामान्यतः कार्य्यता-वच्छेदकमिति न तु गौरवं न वा तत्र तद्भङ्ग इत्यभिप्रायेणाह, 'सुवर्थकृते-श्चेति। ननु तथापि भाव-कर्म्मकृतेरेव कृतिशक्तिरस्तु विनिगमकाभावा-दिति चेत्, न, कर्त्तृ-कर्म्मणोः कृति नित्यमित्यनुशासनेन षष्ठ्यां शक्तेः सिद्ध-त्वात्। तस्मादेव कर्त्तरि चेत्यादि तृतीयाविधायकसूत्रादपि तृतीयायामपि कृतिशक्तिसिद्धिः अन्यथा तत्सूत्रस्य तृतीयाबाधकत्वानुपपत्तिः समास-

कृतेर्विक्लित्त्यां विशेषणत्वेनैवान्वयस्य व्युत्पन्नत्वात् कर्त्तृकर्म्मवच्च कृति-फलयोरप्यभिधाने नियमान्ना-

---

सम्बन्धः, 'तण्डुलपदञ्च तण्डुलावयवपरं, तेन विक्लित्तिरूपस्य तस्य तण्डुलावृत्तित्वेऽपि न क्षतिः। एवमोदनः पच्यते तण्डुल इत्यादावोदनादिपदमपि बोध्यं। न चैवं तथापि यत्रावयवविक्लित्तिरूपं फलं नोत्पन्नं तत्रैव तद्वाक्यस्यायोग्यत्वापत्तिरिति वाच्यं। इष्टत्वादिति भावः। ननु कृतेः क्रियाविशेष्यत्वमेवेति व्युत्पत्तेः कथमेतदित्यत आह, 'सुवर्थेति, 'व्युत्पन्नत्वादिति चैत्रेण पक्कमित्यादौ व्युत्पन्नत्वादित्यर्थः, तथाच तिङर्थकृतेरेव तथात्वमिति भावः। 'नियमादिति शवादेः सहकारेणैव कृतेः, णकः सहकारेणैव फलस्य सार्व्वधातुकेनैवाभिधानं युगपत्कृतिफलयोरभिधानञ्च नाख्यातमात्रेण इति

---

विषयत्वाभावादिति भावः। इदन्तु बोध्यं सुप्तावच्छेदेन कृतिशक्तौ क्लृप्तायां प्रथमासुप्यपि कृतिशक्तिरायाता तथाच चैत्रेण पच्यते तण्डुल इत्यादौ प्रथमा-तृतीयाभ्यामेव स्मृतायाः कृतेः पाकेऽन्वयः स्वीक्रियते सम्भेदे नान्यतरवैयर्थ्यमिति न्यायात्। अतएव सुवर्थकृतेश्चेत्युवाच ग्रन्थकारः, अन्यथा तृतीयार्थकृतेश्चेत्येव उक्तवान् स्यात् इत्यस्मदीयो बुद्धिप्रकाशः सुधीभिः श्लाघनीयः। ननु चैत्रेण गुणः पच्यते इति प्रयोगापत्तिः चैत्रवृत्तिकृतिजन्यपाकजन्यविक्लित्त्यादिरूपतण्डुलावयववृत्तिविजातीयसंयोगात्मकफलस्य तादात्म्येन स्वस्मिन् गुणे सत्त्वादित्यत आह, 'कर्त्तृ-कर्म्मवच्चेति तथाच भवन्मते यथा पच्यते इत्यादौ आश्रयतासम्बन्धेन कर्म्मत्वविशिष्टस्यैव तादात्म्येन तण्डुलादावन्वय इतिनोक्तदोषः तथा अस्मन्मतेऽपि फलस्याश्रयतासम्बन्धेनैव तत्रान्वय इति नोक्तदोष इत्यर्थः, कर्त्तृ-कृत्योरभिधानन्तु दृष्टान्तार्थमनुवादमात्रं भावनायाः कर्त्तर्य्याश्रयत्वेनेत्यादिपूर्व्वग्रन्थे कृत्यन्वये

तिप्रसङ्गः । न वा पच्यते तण्डुलो मैत्र इत्यादयः प्रयोगाः । तिङुपस्थापितायाः सङ्ख्याया भावनाया-इव प्रथमान्तपदोपस्थाप्येनैवान्वयो व्युत्पन्नः । "चैत्रो

नियमादित्यर्थः । 'नातिप्रसङ्ग इति चैत्रः पच्यते इत्यादौ कृतेः' तण्डुलः पचतीत्यादौ फलस्य न प्रत्ययप्रसङ्ग इत्यर्थः । 'प्रयोगाः' युगपत्कृति-फलबोधकाः । नन्वेवं कर्म्माख्यातेन भावनाया अनभिधाने आख्यातार्थभावनाविशेष्यत्वस्य तदर्थसङ्ख्यान्वयानियामकत्वात् तत्र किं नियामकं स्यादित्यत आह, 'तिङुपस्थापिताया इति, 'भावनाया-इव' कर्त्राख्यातार्थभावनाया इव, 'प्रथमान्तेति, तथाच यथा कर्त्रा-ख्यातभावनान्वये कर्म्मताद्यनवरुद्धप्रथमान्तपदोपस्थाप्यत्वं नियामकं

नियमस्योक्तत्वात् तेन न पौनरुक्त्यमिति भावः । 'नातिप्रसङ्गः' न चैत्रेण गुणः पच्यते इत्यादिप्रयोगप्रसङ्गः । ननु एकस्मादेव पच्यत इति वाक्यादे-कदा चैत्रे पाककर्तृत्वस्य तण्डुले पाककर्म्मत्वस्य च बोधे तात्पर्य्यदशायां चैत्रस्तण्डुलः पच्यते इति प्रयोगापत्तिरित्यत आह, 'न वेति, तथाच तदा-ख्यातजन्यकर्तृत्वशाब्दं प्रति तदाख्यातजन्यकर्म्मत्वशाब्दसामग्री एवं तदा-ख्यातजन्यकर्तृत्वशाब्दं प्रति तदाख्यातजन्यकर्तृत्वशाब्दसामग्री प्रतिबन्धि-केत्येकदोभयशाब्दसामग्रीस्थले परस्परप्रतिबन्धेन न कस्यापि शाब्दबोध-इति न तथा प्रयोगापत्तिरिति भावः । इदमपि प्रागुक्तस्य स्मरणाय तेन न पौनरुक्त्यं । ननु यदि चैत्रेण पच्यत इत्यादौ आख्यातार्थभावनाया नान्वयस्तदा भावनाविशेष्यविरहात् कुत्र कर्म्माख्यातार्थसंख्यान्वयो भविष्यतीत्यत आह, 'तिङुपस्थापिताया इति, यथा पचतीत्यादौ प्रथमान्तोपस्थाप्यत्वं भावनान्वये नियामकं तथा चैत्रेण तण्डुलः पच्यत इत्यादौ अप्याख्यातजन्यसंख्याप्रकारक-शाब्दबोधे प्रथमान्तोपस्थाप्यत्वमेव नियामकं वक्तव्यं इत्यर्थः, 'व्युत्पन्न 'इति

गन्ता गतोग्रामो मिचा पक्वौ गतं पुरं। भोक्ता तृप्यति

तथा तिङर्थसङ्ख्यान्वयेऽपि इति भावः। एतच्च प्राचीनग्रन्थानुरोधेनोक्तं। तत्र आख्यातार्थभावनाविशेष्ये तदर्थसङ्ख्यान्वय इति नियमे यत्नत्वव्यापारत्वविशिष्टस्यैव भावनापदार्थतया विशिष्य व्याख्यातत्वात्। वस्तुतस्तु भावनापदं व्यापारत्वविशिष्टस्यैव वर्त्तमानत्वादीष्टसाधनत्वादीतराख्यातप्रतिपाद्यतावच्छेदकरूपधर्म्मवत्त्वरूपभावनात्वविशिष्टत्वरूपेण फलत्वविशिष्टस्याप्युपलचकं, तथाच भावनात्वविशिष्टविशेष्ये सङ्ख्यान्वय इत्येव नियमोज्यायान् इति बोध्यं। नन्वेवं कर्त्तृ-कर्म्मणी क्ततोऽपि वाच्ये न स्यातां तत्रापि लाघवेन कृति-फलयोरेव शक्तेरुचितत्वात् इत्यत आह, 'चैत्रो गन्तेति, कर्त्तरि कर्म्मणि चोभयत्रैव शक्तिव्यवस्थापनाय कर्त्तृ-कर्म्मभेदेनोदाहरणद्वयं। ननु एकधर्म्मिबोध-

---

चैत्रः पचतीत्यादौ कृत इत्यर्थः, तथा चाख्यातजन्यसंख्याप्रकारकशाब्दत्वावच्छिन्नं प्रति प्रथमान्तपदजन्योपस्थितित्वेन कर्त्तृ-कर्म्माख्यातजन्योपस्थितिसाधारणी हेतुतेति भावः। ननु यदि कर्त्ता कर्म्म च नाख्यातार्थः किन्तु कृतिः कर्म्मत्वञ्च तदा कर्त्तृ-कर्म्मविहितकृतेरपि तद्वत्कृति-कर्म्मताबोधकत्वमङ्गीक्रियतामविशेषादित्यतः कृतां कर्त्तृ-कर्म्मबोधकतां व्यवस्थापयितुं कारिकामाह, 'चैत्रो गन्तेत्यादि, चैत्रो गन्तेत्यादौ तृचा कर्त्ता, गतोग्रामइत्यादौ क्तप्रत्ययेन कर्म्म, मित्रा पक्वौत्यादौ तृचा कर्त्ता, गतं पुरं इत्यत्र च क्तप्रत्ययेन कर्त्ता कर्म्म च प्रतीयते उभयत्र साधुत्वात् तथाच तृजादीनामाख्यातवत्कर्त्तृबोधकत्वाभावे चैत्रोगन्तेत्यादावभेदान्वयबोधानुपपत्तिरिति भावः। नन्वत्र चैत्रः पचतीत्यादिवत् भेदान्वयबोध एव वक्तव्य इत्यत आह, 'भोक्तेत्यादि, तथाच भोक्तेत्यत्र तृचः कृतिमात्रबोधकत्वात् भोक्तृपदार्थे विशेष्यीभूय तृप्यतीत्याख्यानार्थत्वस्याश्रयत्वबोधोन स्यात् भोजनानुकूलकृतौ

पक्वानि भुङ्क्ते पक्वापसार्य्यतां"॥ इत्यादौ सामाना-धिकरण्याद्यन्यथानुपपत्त्या कर्त्तृ-कर्म्मणी कृद्वाच्ये।

---

कत्वरूपं सामानाधिकरण्यमसिद्धं तृजादीनां प्रत्ययतया भेदेनाप्यन्वयोपपत्तेरित्यतः समानलिङ्गकत्वरूपं सामानाधिकरण्यं प्रमाणयितुं कर्त्तृ-कर्म्मशक्तिसाधकमुदाहरणद्वयमाह, 'मित्रेति। न च स्वसमानलिङ्गकत्वं कथं धर्म्मिसाधकमिति वाच्यं। भेदान्वयबोधे समानलिङ्गकत्वस्यातन्त्रत्वात्। न चाभेदेनान्वयेऽपि समानवचनत्ववत् समानलिङ्गकत्वमपि न तन्त्रं "वेदाः प्रमाणं" इत्यादौ "जात्याकृति-व्यक्तयस्तु पदार्थः" इति न्यायसूत्रे च उभयोरेव व्यभिचारादिति वाच्यं। अजहल्लिङ्गस्थले अभेदान्वयबोधे तदुभयोरतन्त्रत्वेऽपि तदतिरिक्तस्थले तदुभयोरेव तन्त्रत्वादिति भावः। ननु लाघवेन कृतः कृति-फलयोः शक्तौ व्युत्पत्तिवैचित्र्यादेव तत्र भेदान्वयेऽपि समानलिङ्गकत्वस्योपयोगो भविष्यतीत्यत आह, 'भोक्तेति, कृति-फलयोः कृद्वाच्यत्वे अत्रान्वयबोधो न स्यात् कृतौ तृप्त्याश्रयत्वस्य भोजने पाकफलविक्लित्तिकर्म्मकत्वस्य च बाधादिति भावः। एतदपि कर्त्तृ-कर्म्मशक्तिसाधारण्यायोदाहरणद्वयं। कृतेः कृद्वाच्यत्वे कृदर्थे कर्त्राख्यातार्थस्याश्रयत्वस्यान्वयानुपपत्तिमभिधाय तत्र कर्म्माख्यातार्थस्य फलस्यान्वयानुपपत्तिं दर्शयति, 'पक्तेति, 'सामानाधिकरण्यादीत्यादिपदात् भोक्ता तृप्यतीत्यादौ प्रथमार्थे आधेयतान्वय-

---

भोक्तृपदार्थे तृप्त्याश्रयत्वस्यायोग्यत्वादिति भावः। एवं पक्वानि भुङ्क्ते इत्यादौ च बोध्यं, 'अपसार्य्यतां, प्रपलाय्यतां, 'सामानाधिकरण्यं' चैत्रादिपदार्थ-

चैत्रस्य नप्ता मैत्रादन्यो घटात् पृथक् परोऽपरो वेत्या-

बोधस्य परिग्रहः, 'कर्त्तृ-कर्म्मणी कृदाच्य इति, कर्त्ता ज्ञाता नष्ट-इत्यादौ च तृजादेराश्रय-प्रतियोग्यादौ निरूढ़लक्षणा। न च समवायित्वलक्षणाश्रयत्वस्य कृतिमत्त्वादिरूपकर्त्तृत्वादिकमपेक्ष्य लघु-तया तस्यैव शक्यतावच्छेदकत्वमुचितमिति वाच्यं। तस्य लघुत्वेऽपि तृजादिपदजन्यताप्रकारकशब्दबोधे स्वारसिकत्वाभावस्य प्रामाणि-कानुभवसिद्धतया शक्यतावच्छेदकत्वासम्भवात्। न च कृतिमत्त्वरूप-कर्त्तृत्वमपेक्ष्य फलवत्त्वरूपकर्म्मत्वस्य गुरुतया कथं तस्य शक्यतावच्छेद-कत्वमिति वाच्यं। पक्तेत्यादौ कर्त्तृत्वप्रकारकप्रत्ययवत् पक्वमित्यादौ कर्म्मत्वप्रकारकप्रत्ययस्यापि स्वारसिकत्वस्य प्रामाणिकानुभवसिद्ध-तया गौरवस्याकिञ्चित्करत्वादिति भावः। कर्त्तरि शक्तिः कर्म्मणि च निरूढ़लक्षणेत्यपि कश्चित्। स्नानीयं चूर्णं दानीयो ब्राह्मणः पतनीयो वृक्षः आसितमिदमासनं इत्यादौ करण-सम्प्रदाना-पादानाधिकरणादिकन्तु कृतो लक्षणैव। न च कर्त्तृत्वमादाय विनिगमनाविरह इति वाच्यं। कर्त्तृत्वस्य करणत्वादिकमपेक्ष्य

---

गन्त्रादिपदार्थयोरभेदान्वयबोधः। ननु यदि कृत्स्थले कर्त्ता कर्म्म च तदर्थस्तदा गन्तेत्यादौ एकदेशीभूतकृतौ गमनादेरन्वयो न स्यात् पदार्थः पदार्थेनान्वेतीति व्युत्पत्तिविरोधेन कृतावेकदेशे पदार्थस्य धात्वर्थस्यान्वया-सम्भवादित्यत आह, 'चैत्रादन्य इत्यादि, अत्रान्यपदार्थैकदेशेनान्यत्वादिना पदार्थभूतपञ्चम्यर्थावधितत्वादेरन्वयवदिहापि चैकदेशान्वयः स्वीकार्य्य-इत्यर्थः, 'चैत्रस्येति, नप्तृत्वञ्च पुत्रपुत्रत्वं, अत्र चाद्यपुत्रे षष्ठ्यर्थान्वयस्वी-कारात्, 'इत्यादावित्यादिपदेन पटो घटात् पृथगित्यादिपरिग्रहः। अत्र

द्वाविव पदार्थतावच्छेदकेनैव कृत्यादिना धात्वर्थेऽन्वयः

लघुत्वात् करणादौ तत्तत्प्रत्ययस्य स्वारसिकप्रयोगविरहाच्च। करणत्वं हि व्यापारवदसाधारणकारणत्वं, प्रकृतकारणत्वमात्रं वा, सम्प्रदानत्वं स्वत्वविशेषभागित्वेन इच्छाविषयत्वं, विशेषपदोपादानात् विक्रयादौ क्रेत्रादेर्न सम्प्रदानत्वं, श्राद्धादौ पित्रादेः स्वत्वविशेषभागितया नोद्देश्यत्वं, अपि तु प्रीतिभागितया अतो न तस्य सम्प्रदानत्वं, अत एव "नमः-स्वस्तीत्यादिसूत्रान्तरेणैव तत्र चतुर्थीविधानं। ब्राह्मणाय गां ददातीत्यत्र इच्छा चतुर्थ्यर्थः सा च समूहालम्बनव्यावृत्तविषयतासम्बन्धेन ददात्यर्थतावच्छेदकस्वत्वविशेषे अन्वेति, स्वत्वविशेषानुकूलत्यागस्य ददात्यर्थत्वात्, त्यागो ज्ञानं इच्छा वा, इच्छायाञ्च विलक्षणविषयतासम्बन्धेन प्रकृत्यर्थान्वयः, आधेयत्वञ्च द्वितीयार्थः, तस्यापि धात्वर्थतावच्छेदकस्वत्वविशेषेऽन्वयः, तथाच विप्रविषयकेच्छाप्रकारीभूत-गोवृत्तिस्वत्वविशेषजनकत्यागानुकूलकृतिमानित्यन्वयबोधः, विषयत्वं प्रकारीभूतत्वं, जनकत्वं अनुकूलत्वञ्च संसर्गः। वृक्षायोदकमासिञ्चतीत्यादौ च वृक्षादिषु सम्प्रदानप्रयोगो गौणः चतुर्थीप्राप्त्यर्थः, तत्र चतुर्थी-द्वितीययोराधेयत्वमर्थः, तत्र चतुर्थ्यर्थाधेयत्वं सिचधात्वर्थतावच्छेदकघटके संयोगे अन्वेति, संयोगावच्छिन्नद्रवद्रव्यक्रियानुकूलकर्तृक्रियाया एव सिचधात्वर्थत्वात्, द्वितीयार्थाधेयत्वञ्च साक्षाद्धात्वर्थतावच्छेदकक्रियायामन्वेति, तत्रैव द्वितीयार्थाधेयत्वस्य व्युत्पन्नत्वात्, अत एव वृक्षं उदकं सिञ्चतीति न प्रयोगः। न चैवं "कर्म्मणा यमभिप्रैति तत्सम्प्रदानं" इति पाणिनिसूत्रविरोध इति वाच्यं। तस्यापि कर्त्ता कर्म्मजन्यस्वत्वभागित्वेन

यमिच्छति तत्सम्प्रदानमित्यर्थात् शेषमस्मत्कृतसुप्शक्तिवादे अनुसन्धेयं। अपादानत्वञ्च परकीयक्रियाजन्यविभागाश्रयत्वं, वृक्षात्पर्णं पततीत्यत्र पतनाश्रयस्य पर्णादेरपादानत्ववारणाय अन्यान्तं विभागविशेषणं, तत्र पञ्चम्या विभागः समवेतत्वञ्चार्थः, तथाच वृक्षनिष्ठविभागजनकवृक्षभिन्नसमवेतपतनाश्रयः पर्णं इत्यन्वयधीः, लक्षणे धात्वर्थतानवच्छेदकत्वेनापि विभागो विशेष्यः, तेन वृक्षं त्यजति खगः इत्यादौ वृक्षस्य नापादानत्वं, "ध्रुवमपायेऽपादानं" इति पाणिनिसूत्रस्यापि 'अपाये' विभागे, यत् 'ध्रुवं' यदधिकरणं, तदपादानमित्यर्थः। वस्तुतस्तु अवधित्वमेवापादानत्वं, अवधित्वञ्च स्वरूपसम्बन्धविशेषः, वृक्षात् विभजते इत्यादौ च अवधितानिरूपकत्वं पञ्चम्यर्थः, वृक्षनिष्ठावधितानिरूपकविभागाश्रयः पर्णमित्यन्वयधीः, अन्यत्र चापादानप्रयोगो गौणः, शेषमस्मत्कृतसुप्शक्तिवादेऽनुसन्धेयं। अस्य कर्त्तृत्वापेक्षया गुरुत्वाभावेऽपि एतत्प्रकरणे कृत्प्रत्ययस्य स्वारसिकप्रयोगविरहादेव तस्य न कृत्प्रत्ययस्य शक्यतावच्छेदकत्वं। अधिकरणत्वञ्च प्रतियोगित्वानुयोगित्ववदाधारत्वापरनामकस्वरूपसम्बन्धविशेषः। तस्य कर्त्तृत्वापेक्षया गुरुत्वाभावेऽपि तत्प्रकारेण स्वारसिकप्रयोगविरहान्न कृत्प्रत्ययस्य शक्यतावच्छेदकत्वमित्यलमप्रकृतेन। ननु कर्त्रादेः कृत्प्रत्ययार्थत्वे तदेकदेशे कृत्यादौ धात्वर्थान्वयो न स्यात् तत्प्रकारक-तद्विशेष्यकशाब्दबुद्धिं प्रति तन्निरूपितविशेष्यतातिरिक्तविशेषणतान्यविषयत्वेन तदुपस्थितिरूपाया आकाङ्क्षायाः स्वरूपसत्कारणत्वात्, अन्यथा नित्योत्पन्नमित्यादौ उत्पन्नत्वादिजातेरपि अभेदसम्बन्धेन नित्यस्यान्वयापत्तेः, चित्रगुरि-

त्यादौ चित्रपदं तात्पर्य्यग्राहकं गोपद एव चित्रगोस्वामिनि लक्षणा, न तु गोपदे गोस्वामिनि लक्षणा, तदेकदेशे गवि तादात्म्यसम्बन्धेन चित्रपदार्थस्यान्वयः, केवलचित्रगुपदात् पदार्थोपस्थितिमात्रं, न तु शाब्दबोधः पदार्थद्वयाभावात् । अत एव पदार्थः पदार्थेनान्वीयते, न तु पदार्थतावच्छेदकेनेति प्रामाणिकाः । न च पदार्थतावच्छेदक-जात्यखण्डोपाधेरेवापरस्यान्वयो नाभ्युपेयते तदतिरिक्तेषु च पदार्थता-वच्छेदकेऽप्यपरपदार्थान्वयः, अत एव चित्रगुरित्यादावपि चित्रपदं न तात्पर्य्यग्राहकं, अपि तु गोपदं गोस्वामिपरं, तदेकदेशे गवि तादात्म्यसम्बन्धेन चित्रगुपदार्थस्यान्वयः, केवलचित्रगुपदादपि शाब्द-बोधादिति वाच्यं । तथापि शुक्लं द्रव्यं नित्यं चैत्रस्य नप्ता सुन्दरः इत्यादावप्येकदेशीभूते शुक्लरूप-पुत्रादौ नित्य-सुन्दरादेरभेदसम्बन्धे-नान्वयापत्तेर्दुर्व्वारत्वादित्यत आह, 'चैत्रस्येति, यथा जन्यशरीरजन्य-शरीरं नप्तृपदार्थः, पुत्रस्य पुत्र-कन्ये इव कन्यायाः कन्या-पुत्रावपि नप्तृपदार्थः, तदेकदेशे प्रथमजन्यतायां षष्ठ्यर्थस्य निरूपितत्वस्यान्वयः, यद्वा शरीरजन्यशरीरमेव नप्तृपदार्थः, तदेकदेशे प्रथमशरीरे षष्ठ्यर्थस्य जन्यत्वस्य अन्वयस्तथेहापीत्यर्थः । न च तत्र षष्ठ्यर्थस्य नप्तर्य्येवान्वय इति वाच्यं । षष्ठ्यर्थो हि जन्यत्वं, प्रयोज्यत्वं वा, नाद्यः बाधात्, नान्त्यः चैत्रपुत्रे तत्पौत्रे च तथा प्रत्ययप्रसङ्गात् इति भावः । ननु प्रयोज्यत्वविशेष एवेह षष्ठ्यर्थस्तथाचानतिप्रसङ्गान्नप्तर्य्येव तदन्वयः, यद्वा शरीरमेवात्र नप्तृपदार्थः, षष्ठ्यर्थस्य जन्यत्वस्य च स्वाश्रयशरीर-जन्यत्वसम्बन्धेन तत्रान्वयः, अथवा षष्ठ्यर्थस्य जन्यत्वस्याश्रयतासम्बन्धे-नैव शरीरेऽन्वयः, शरीरस्य च जन्यतासम्बन्धेन पुनः शरीरेऽन्वयः,

तथैव साकाङ्क्षत्वात्। अस्तु वा कृत्यादिघटित एव

एकपदार्थस्यापि वारद्वयान्वयाभ्युपगमात्, नामार्थयोरपि भेदेनान्वयस्य जनकादिपदस्थलेऽपि खण्डशक्तिवादिना विशिष्टवाचकपदस्थलेऽभ्युपगमात्, केवलनप्तृपदे च विशिष्टे शक्तिरतो नप्तृपद-पुत्रपदयोर्न पर्य्यायता तयोः पर्य्यायत्वस्येष्टत्वे च नप्तृ-पुत्रादिपदयोः शरीरमेव शक्यं, केवलनप्तृ-पुत्रादिपदे विशिष्टनिरूढ़लक्षणेत्यत आह, 'मैत्रादन्य इत्यादि, 'अन्यपदस्य भेदवानर्थः, तदेकदेशे भेदे पञ्चम्यर्थस्य प्रतियोगित्वेन यथा अन्वयः इत्यर्थः। पञ्चम्यर्थे प्रतियोगित्वे च स्ववृत्तिमैत्रत्वावच्छिन्नत्वसम्बन्धेन मैत्रादेरन्वय इति नातिप्रसङ्ग इति भावः। 'घटादित्यादि, पृथक्त्वगुणविशिष्टं पृथक्शब्दार्थः, परत्वगुणविशिष्टं परशब्दार्थः, अपरत्वगुणविशिष्टं अपरशब्दार्थः, तेषामेकदेशे पृथक्त्व-परत्वापरत्वादौ घटादिति पञ्चम्यर्थस्य अवधिमत्त्वस्य यथा अन्वय इत्यर्थः। उदाहरणबाहुल्यं भूयःसु तथा दर्शनाद्व्युत्पत्तिदार्ढ्यार्थं। 'तथैवेति तत्र यथा आकाङ्क्षा वर्त्तते तथैवात्राप्याकाङ्क्षासत्त्वादित्यर्थः, अन्यत्र तादृशोपस्थितेराकाङ्क्षात्वेऽपि तत्रैवात्रापीतरविशेषणत्वेनोपस्थितेराकाङ्क्षात्वादिति भावः। यद्वा तादात्म्यसम्बन्धेन तत्प्रकारक-तद्विशेष्यकशाब्दबोधं प्रत्येव यथोक्ततद्विषयकतादृशोपस्थितिरेव हेतुः भेदसंसर्गेणान्वयबोधे तु इतरविशेषणत्वेनोपस्थितिरप्याकाङ्क्षेति भावः। अभ्युपेत्याह, 'अस्तु वेति, 'कृत्यादि-

चैकदेशान्वयदार्ढ्यार्थं नानास्थानमुक्तं। 'तथैवेति अन्यत्र यथा पदार्थेन पदार्थस्यान्वयः साकाङ्क्षः न तु पदार्थैकदेशेन तथात्र पदार्थैकदेशेनैव पदार्थस्यान्वयः साकाङ्क्षो न तु पदार्थेन पदार्थस्यान्वय इत्यर्थः, आका-

घटितएवेति स्वजनककृत्याश्रयत्व-स्वजन्यफलाश्रयत्वरूप एवेत्यर्थः, 'कर्त्त्रादिनेत्यादिना कर्म्मपरिग्रह इति, 'अन्वयः' धात्वर्थस्य शाब्द-बोधविषयीभूतपरम्परासम्बन्धः, तथाच नैकदेशान्वयः, मैत्रादन्य-इत्यादावपि विशेष्य एव पञ्चम्यर्थादेः परम्परासम्बन्धेनान्वय इति न तत्राप्येकदेशान्वय इति भावः। अत्रानुभवविरोधः तत्तद्वाक्यजन्य-शाब्दबोधानन्तरं कृतिः पाकवती न वा, भेदो मैत्रप्रतियोगिको न वा, पृथक्त्वं घटावधिकं न वा इत्यादि संशयापत्तिर्दोषः। प्राचीनैरा-ख्यातेन कर्म्मादिगतसङ्ख्यायाः कृता च कर्म्मादेरनभिधाने द्वितीया-दय इति नियमद्वयं कल्प्यते अतस्तन्निरासाय कृदाख्यातसाधारण-

ङ्खायाः फलबलकल्प्यत्वादिति भावः। सर्व्वत्रैकदेशानन्वयमुद्धरतां मतमाह, 'अस्तु वेति, गन्तेत्यादौ स्वानुकूलकृतिमत्त्वसम्बन्धेन तृजर्थकर्त्तर्य्येव धात्वर्थस्य गमनादेरन्वयः, चैत्रस्य नप्तेत्यादिस्थलेऽपि चैत्रसम्बन्धस्य षष्ठ्यर्थस्य निरूपितत्वस्य स्वाश्रयजन्यताश्रयजन्यत्वसम्बन्धेन पुत्रपुत्र एवान्वयः, तथाच चैत्र-निरूपितत्ववान् पुत्रपुत्र इत्यन्वयबोधः, चैत्रः पक्तेत्यादौ चैत्रः पाकीयकर्त्तेत्य-न्वयबोधः, पाकीयत्वञ्च स्वानुकूलकृतिमत्त्वसम्बन्धेन पाकविशिष्टत्वं, तच्च कर्तृत्वं धर्म्मितावच्छेदकीकृत्य भासते, न तु चैत्रत्वं, तथा सति प्रकृत्यर्थान्वित-स्वार्थबोधकत्वं प्रत्ययानामिति व्युत्पत्तिभङ्गापत्तेः। एवं चैत्रादन्य इत्यादावपि चैत्रनिष्ठप्रतियोगित्वस्यावधित्वस्य वा पञ्चम्यर्थस्य स्वनिरूपितानुयोगिता-श्रयान्योन्याभाववत्त्वसम्बन्धेनान्यस्मिन् धर्म्मिण्येवान्वयः अन्यत् स्वयमूह्यं। तथाच न कुत्राप्येकदेशान्वयस्वीकार इति भावः। 'अस्तु वेत्यादिना अस्वर-साविष्कारः स च तत्तत्स्थले एकदेशान्वयस्वीकारे बाधकाभावे निरुक्त-परम्परासम्बन्धेन तत्तत्पदार्थप्रकारकान्वयबुद्धिं प्रत्याकाङ्क्षाज्ञानादीनां हेतुत्व-कल्पने गौरवं मानाभावश्चेत्यादिः। सुवर्थकृतिवादिनवीनमते प्रत्ययेन यत्र कृतेरनभिधानं तत्र तृतीया यत्र च कर्म्मत्वस्यानभिधानं तत्र द्वितीयेत्य-

कर्त्रादिना सममन्वयः। मुख्य-भाक्तसाधारणस्य फला-
दिलक्षणकर्म्मत्वस्य कृत्यादिलक्षणकर्त्तृत्वस्य चानभि-

---

मेकमेव नियममाह, 'मुख्य-भाक्तमाधारणस्येति, एतच्च कर्म्मत्वस्य कर्त्तृत्वस्य विशेषणं, मुख्यं कर्म्मत्वं फलवत्त्वं तत्प्रत्ययः पच्यते तण्डुलः पक्वस्तण्डुल इत्यादौ, भाक्तं कर्म्मत्वं विषयत्वादि, तत्प्रत्ययः ज्ञातो घटः ज्ञायते घट इत्यादौ, मुख्यं कर्त्तृत्वं कृतिमत्त्वं, तत्प्रत्ययः पचति चैत्रः पक्ता चैत्र इत्यादौ, भाक्तं कर्त्तृत्वं आश्रयत्वादि, तत्प्रत्ययश्च चैत्रो जानाति चैत्रो ज्ञाता इत्यादाविति भावः। 'फलादीत्यादिपदात् विषयत्वादिलक्षणभाक्तकर्म्मत्वपरिग्रहः, 'कृत्यादीत्यादिपदात् आश्रयत्वादिलक्षणभाक्तकर्त्तृत्वपरिग्रहः। 'अनभिधान इति प्रधानक्रियोत्तरकृदाख्याताभ्यामनभिधान इत्यर्थः, तेन चैत्रेण भुक्त्वा गम्यते पक्त्वा चैत्रेण भुज्यते इत्यादौ क्त्वा कृत्यभिधानात् तृतीया न स्यादिति दूषणमपास्तं। क्त्वा कृत्यभिधानेऽपि प्रधानक्रियोत्तराख्यातेन कर्त्तृत्वानभिधानादिति भावः। 'द्वितीयादय इत्यादिपदात् तृतीयायाः कृद्योगे षष्ठ्याश्च परिग्रहः, ग्रामोगतश्चैत्रो गतवान् चैत्रो गन्ता इत्यादौ द्वितीयाद्यभावमुप-

---

नभिहिताधिकारसूत्रस्यार्थः स चानुपपन्नः चैत्रो जानातीत्यादावाख्यातेनाश्रयत्वस्यैव उक्तत्वेन कृतेरनभिधानात् तृतीयाप्रसङ्गात् चैत्रेण घटो ज्ञायते इत्यादौ आख्यातेन विषयत्वस्यैवोक्तत्वेन कर्म्मत्वस्यानभिधानात् द्वितीयाप्रसङ्गाच्चेत्यत आह, 'मुख्येति, 'फलादीत्यादिपदेन विषयत्वादेः 'कृत्यादीत्यादिपदेन आश्रयत्वस्य च परिग्रहः, मुख्यं कर्म्मत्वं तण्डुलः पच्यत इत्यादौ, भाक्तं कर्म्मत्वं चैत्रेण घटो ज्ञायत इत्यादौ, एवं मुख्यं कर्त्तृत्वं चैत्रः पचती-

धाने द्वितीयादयः। कृता विशिष्टाभिधाने विशेषण-स्याप्यभिधानात्।

यत्तु धातूत्तरप्रत्ययत्वेनैव कृतौ शक्तिः पाचकादिपदे तु सामानाधिकरण्यानुरोधात् कृतिविशिष्टे लक्षणेति,

---

पादयति, 'कृतेति कर्म्मत्वविशिष्टस्याभिधाने कर्म्मत्वादेरप्यभिधाना-दित्यर्थः।

'यत्त्विति, आख्यातस्य कृतौ शक्तिकल्पनदशायां तथैव लाघवेन कल्पनादिति भावः। अत्र द्वितीयादिवारणाय 'धातूत्त-रेति। नन्वेवं पाचको भुङ्क्ते इत्यादौ पाककर्त्तृबोधः कथं स्यात् इत्यत आह, 'पाचकादीति, 'आदिपदात् चैत्रो गन्तेत्यादौ गन्तादिपदपरिग्रहः, 'लक्षणेतीति, एवञ्च मुख्यप्रयोगाभावेऽपि कृतः शक्तिकल्पनं शक्यसम्बन्धरूपायाः लक्षणायाः सम्पादनार्थमेवेति भावः। 'भावकृतोऽपीति घञादेरपीत्यर्थः, तथाच तस्य निरर्थकत्वप्रवाद-

त्यादौ, "भाक्तं कर्त्तृत्वं चैत्रेण घटो ज्ञायत इत्यादौ, 'द्वितीयादय इत्यादि-पदेन तृतीयायाः परिग्रहः, तथाच मुख्य-भाक्तसाधारणकर्म्मत्वानभिधाने द्वितीया मुख्य-भाक्तसाधारणकर्त्तृत्वानभिधाने तृतीयेति तत्सूत्रार्थो वक्तव्य इति नोक्तदोष इति भावः। ननु तथाप्याख्यातेन कर्म्मत्व-कर्त्तृत्वा-नभिधाने द्वितीया-तृतीये इति सूत्रार्थकरणे कृत्स्थले द्वितीया-तृतीया-नियामकानां तत्रानियमप्रसङ्ग इत्यत आह, 'कृतेति कृत्प्रत्ययेनेत्यर्थः, 'विशिष्टाभिधाने' कृतिविशिष्टाभिधाने, 'विशेषणस्य' कृतेः, तथाच प्रत्ययेन कर्म्म-कर्त्तृत्वानभिधाने द्वितीया-तृतीये इत्याख्यात-कृत्साधारणः सूत्रार्थ इति भावः। अतः कृतिविशिष्टप्रत्ययस्य लक्षणात एवेतिमतं

तन्न, भावकृतोऽपि कृतिवाचकतापत्तेः धात्वादि-घटितात् तस्मादाख्यातत्वस्यैव लघुत्वाच्च। यदपि कर्त्तृ-कृतोऽपि कृतौ शक्तिः कृतिविशिष्टे तु लक्षणैवेति, तदप्यसत्, यतो विनावच्छेदकरूपं शक्यत्वासम्भवात्, गोत्वत्वादिना शक्तौ चातिगौरवादस्तु गवादिपदानां

व्याघात इति भावः। ननु भावकृतो घञादेः कृतिवाचकत्वेऽपि निराकाङ्क्षतया न ततः कस्यापि अर्थस्य प्रत्यय इति व्यवहारः, अन्यथा भावविहितघञादेरपि घञ्त्वादिना करणेऽधिकरणे वा शक्ततया भवतामपि तत्र निरर्थकत्वव्यवहारः कथं स्यात्। वस्तुतस्तु प्रतीयते येनार्थः स प्रत्यय इति व्युत्पत्तिसिद्धस्य तावदन्यान्यत्वरूप-प्रत्ययत्वस्य अन्तर्भावादेव भावविहितघञादेर्व्यवच्छेद इत्यत आह, 'धातुत्वादीति, 'आदिपदेन उत्तरत्व-प्रत्ययत्वपरिग्रहः, 'आख्यात-त्वस्यैवेति तिबादेरेवेत्यर्थः, 'कृतोऽपीति, तृच्त्वादिनेति शेषः, 'कृताविति, लाघवादिति शेषः। गवादिपदानां विशिष्टे शक्तिं व्यवस्थापयति, 'यत इति, 'शक्यत्वासम्भवादिति, कार्य्यत्वादिवत् शक्यत्वस्यापि अवच्छिन्नत्वनियमात् इति भावः। 'विशिष्टान्तरा-

---

प्रसङ्गतो निरसयितुमाह, 'यदपीति, एतन्मते यद्यपि गवादिपदानामेव गोत्वादिविशिष्टे शक्तिरायाति, तथापि शब्दविशिष्टादिबोधकानामा-काशादिपदानां शब्दविशिष्टादौ शक्तिर्न स्यात् तत्रापि लाघवात् शब्दत्व-विशिष्टे शक्तिः शब्दविशिष्टादौ लक्षणेत्यस्य वक्तुं शक्यत्वादिति दोषमाह, 'यतोविनेति, 'यत इत्यस्य 'विशिष्टान्तराणां शक्यत्वं विलीयेतेत्यनेनान्वयः,

गोत्वविशिष्टं शक्यं विशिष्टान्तराणान्तु शक्यत्वं विलीयेत

णान्त्विति गुरुत्व-महत्त्वादिविशिष्टानान्तु गुरुपद-महत्पदादिशक्यत्वं विलीयेतेत्यर्थः, तत्रापि गुरुत्वत्व-महत्त्वत्वादिजातिरूपेण गुरुत्व-महत्त्वादावेव शक्तिः गुरुत्वादिविशिष्टे लक्षणा इत्यस्य सुवचत्वादिति भावः । अथ यत्र यत्पदस्य शक्त्या प्रयोगस्तत्रैव तत्पदस्य शक्तिः

---

तत्र च 'विशिष्टान्तराणामित्यस्य गोत्वविशिष्टादिभिन्नशब्दविशिष्टादीना-मित्यर्थः, 'शक्यत्वं' आकाशादिपदशक्यत्वं, 'विलीयेत' न स्यात् । ननु विशिष्टान्तराणामित्यत्रान्तरपदं किमर्थमुक्तं विशिष्टसामान्यस्यैवोक्तरीत्या शक्यत्वविलयसम्भवादिति गवादिपदस्य गोत्वादिविशिष्टशक्तिव्यवस्थापनेन स्वोक्तमन्तरपदं सार्थकयति, 'विनेति, 'विनेत्यादि 'गौरवादित्यन्तं गवादि-पदानां गोत्वविशिष्टं शक्यमस्तु इत्यत्र हेतुः, अत्रायमर्थः गवादिपदानां यदि गोत्वे शक्तिरुच्यते तदा शक्तेः स्वावच्छेद्यत्वनियमाद्गोत्वत्वं शक्यता-वच्छेदकं वाच्यं तथाच स्वरूपतो गोत्वविशिष्टापेक्षया गोत्वत्वविशिष्टं गुरु इति तत्र शक्यमिति लाघवेन गोपदादीनां गोत्वादिजातिविशिष्टशक्ति-रस्त्विति ।

नन्वाकाशादिपदानां शुद्धशब्दादौ मुख्यप्रयोगविरहेण न शक्तिः कृत्युपलक्षित एव कृत्प्रत्ययस्य शक्तिः न तु कृतिविशिष्टकर्त्र्यपि कृत्प्रत्यय-शक्तिकल्पने गौरवादितिमतेन कृता कर्तुरभिधानमिति तन्मते आख्यात-कृत्साधारणस्वार्थरक्षणं ये कुर्वन्ति तन्मतमाह, 'यत्त्विति, तथाच चैत्रः पक्तेत्यादौ कृता कर्त्रभिधानाद्र तृतीयेति भावः । नन्वेवं चैत्रः पचतीत्या-दाविव पाचकादिपदात् पाकानुकूलकृतेराश्रयतासम्बन्धेन चैत्रादावन्वय एव बोध्यस्तथाच चैत्रः पाचक इत्यादौ चैत्रे पाककर्तुरभेदान्वयबोधो न स्यादि-त्यत आह, 'पाचकादीति, 'सामानाधिकरण्येति पाचकादिपदार्थभेदान्वय-ानुरोधादित्यर्थः, पाचकादीत्यादिपदेन हन्त्रादिपरिग्रहः, आदिपदेन

केवलविशेषणे स्वारसिकप्रयोगविरहस्तुल्य एवेति। एवञ्च गतोग्रामोगम्यत इत्यादौ फलस्य कृदात्मनेपदा-

अतो गुरुत्वादौ न गुर्व्वादिपदशक्तिरित्यत आह, 'केवलेति विशेषणतानापन्ने चेत्यर्थः, 'तुल्य एवेति, इहापि कृतः कृतौ शक्त्या प्रयोगस्य विरहादिति भावः।

'एवञ्चेत्यारभ्य 'केचिदित्यन्तं एकमतं, 'एवञ्च' कर्म्मत्वरूपस्य फलस्य विशेषणविधया कृतो विशेष्यविधया चात्मनेपदस्य शक्यत्वे

चैत्रपद-पाचकादीनां भिन्नाभ्यां रूपाभ्यां एकधर्म्मिशक्तत्वरूपसामानाधिकरण्यस्य परिग्रहः, 'भावकृत इति, न चेष्टापत्तिः, अपसिद्धान्तादिति भावः। निर्युक्तिकसिद्धान्तभङ्गे न दोष इत्यत आह, 'धातुत्वादीति, तस्मात् धातूत्तरप्रत्ययत्वात् धात्वाद्यन्यतमत्वघटितधातूत्तरप्रत्ययत्वमपेच्याख्यातत्वं लघु इति तदेव कृतिशक्ततावच्छेदकमिति भावः। इत्यञ्च कृत्प्रत्ययस्य कृतिविशिष्ट एव शक्तिर्न तदुपलक्षित इति मतमाश्रित्यैवानभिहिताधिकारसूत्रार्थो निर्व्वहतीति तदेवमादरणीयमित्यवधेयं। आख्यातस्यैव कर्त्तृकृतः कृतौ न शक्तिर्लाघवात् अपि तु सर्व्वत्र। ननु शब्दविशिष्टे तत्र मुख्यप्रयोगात् शक्तिः शक्त्या मुख्यार्थबोधकत्वनियतत्वात् इत्यत आह, 'केवलेति, 'तुल्य इति कर्त्तृकृतोऽपि कृतौ मुख्यप्रयोगविरहेण तुल्यतेत्यर्थः। यद्यपि शब्दोऽस्तीति प्रयोग एव मुख्यः प्रयोग आकाशपदस्थले एवं गतं प्रमेयमित्यादावेव कर्त्तृकृतः कृतौ मुख्यप्रयोग इत्येतदसङ्गतं, तथापि तथा प्रयोगमनभ्युपगम्य इदमुक्तमिति संक्षेपः। नन्वात्मनेपदस्य फलवाचकत्वेन चैत्रेण ग्रामो गम्यते इत्यादौ ग्रामस्य गमनजन्यफलशालित्वरूपकर्म्मत्वलाभेऽपि चैत्रो ग्रामं गच्छतीत्यादौ तस्य कथं कर्म्मतालाभ इत्याशङ्कायां 'एवञ्चेत्यादि 'केचिदित्यन्तं एकं मतं दर्शयामास, 'एवञ्च' ग्रामं गच्छतीत्यादौ फलस्य पदान्तरालभ्यत्वे चेत्यर्थः, एतस्य च ग्रामं गच्छति ग्रामस्य मन्तेत्यादौ

भ्यामेव लाभात् लाघवात् धातोरनन्यलभ्यव्यापारवि-शेषमात्रवाचकत्वस्थितौ ग्रामं गच्छति ग्रामस्य गन्ते-त्यादौ द्वितीयादेः फलजनकत्वलक्षणं कर्म्मत्वमर्थः फले

च, 'कृदात्मनेपदाभ्यामिति, कृता विशेषणतया विशेष्यतया चात्म-नेपदेन लाभ इति भावः। 'व्यापारविशेषः' पाकादिक्रिया, धातोः फलावच्छिन्नव्यापारवाचित्वे तत एव फललाभसम्भवेन द्वितीयादेः फलमर्थो न सिद्ध्यतीत्यतस्तद्व्यवच्छेदाय मात्रपदं। 'द्वितीयादे-रित्यादिपदात् षष्ठीपरिग्रहः। 'फलजनकत्वं' फलत्वविशिष्टजनकत्वं, 'अर्थ इति, अन्यथा तत्र तत्प्रतीतेरनुपपत्तेरिति भावः। 'फले च'

द्वितीयादेः फलजनकत्वलक्षणकर्म्मत्वमर्थः इत्यग्रेतनेनान्वयः। ननु फला-वच्छिन्नव्यापारबोधकधातुत एव चैत्रो ग्रामं गच्छतीत्यादौ फललाभोऽस्तु किं द्वितीयायाः फलजनकत्वलक्षणकर्म्मत्वे शक्तिकल्पनेनेत्यत आह, 'कृतोग्रामो-गम्यत इत्यादि चैत्रेण ग्रामोगत इत्यत्र फलविशिष्टवाचिक्तप्रत्ययात् पदार्थता-वच्छेदकतया फलस्य लाभः, चैत्रेण ग्रामोगम्यत इत्यत्र चात्मनेपदात् फल-विशेष्यकशक्त्या फललाभ इत्यर्थः, तथाचान्यलभ्यत्वरूपबाधकेन धातोः फले न शक्तिरिति भावः। 'लाघवादिति फलानवच्छिन्नव्यापारविशेषत्वापेक्षया व्यापारविशेषत्वस्य शरीरलाघवादित्यर्थः, 'व्यापारविशेषेति पचधातोर्वह्नि-स्थालीसंयोगादिरूपव्यापारः गम्यादिधातोः स्पन्दरूपो व्यापारः त्यजधातो-रपि स एवेत्यादिरर्थः, 'मात्रपदेन पदार्थतावच्छेदकतया फलवाचकत्वस्य व्यवच्छेदः, 'ग्राममित्यादि तथाचानन्यलभ्यत्वात् फलस्य द्वितीयादेः फलजन-कत्वलक्षणकर्म्मत्वे शक्तिरनायत्या कल्प्यत इत्यर्थः, 'द्वितीयादेरित्यादिपदेन ग्रामस्य गन्तेत्यादौ षष्ठीपरिग्रहः, धातूनामनेकार्थकत्ववच्च तत्र षष्ठ्याः कर्म्म-त्वार्थकत्वात्। ननु चैत्रो ग्रामं गच्छतीत्यादौ फललाभाय किं द्वितीयादेः

च प्रातिपदिकार्थोऽधिकरणत्वेनान्वेति, फलमात्रं वा अर्थः, जनकत्वन्तु संसर्गमर्य्यादया लभ्यमिति केचित्,

---

द्वितीयाद्यर्थैकदेशे फले च, 'प्रातिपदिकार्थः' प्रकृत्यर्थः, 'अधिकरणत्वेन' आधेयतासम्बन्धेन। एतेन आधेयतावत् फलजनकत्वमर्थः, तदेकदेशे चाधेयत्वे निरूपितत्वसम्बन्धेन प्रकृत्यर्थोऽन्वेति इति कस्यचिन्मतं निराकृतं। एकदेशान्वयप्रसङ्गेन लाघवानुरोधेन चाह, 'फलमात्रमिति फलत्वविशिष्टमात्रमित्यर्थः, फलत्वञ्च कार्य्यत्वं, 'संसर्गमर्य्यादयेति फल-धात्वर्थयोः संसर्गविधयेत्यर्थः। अत्र केचित् फलमात्रस्य कर्म्मषष्ठ्यर्थत्वे वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितानवच्छेदकत्वनये पाको न तेमनस्येति व्यवहारानुपपत्तिः जनकता-

---

फलजनकत्वे शक्तिः, किं वा तत्तद्धातोः फलजनकत्वे शक्तिरित्यत्र विनिगमनाविरहः धातूनामनेकार्थकत्ववच्च द्वितीया-षष्ठ्यादीनामपि अनेकार्थकत्वमिति न तद्विनिगमकमिति चेत्, न, स्वस्यैकदेशीभूतफले ग्रामादेः प्रातिपदिकार्थस्यानन्वयप्रसङ्गात्। न चेष्टापत्तिः, अदृष्टत्वात्। यदि चाख्यातत्वावच्छेदेन फले शक्तिरिति कर्त्तृ-कर्म्मप्रत्ययस्थले तत एव फललाभ इत्युच्यते, तदाख्यातार्थफलस्य धात्वर्थविशेष्यतया अन्वयस्य चैत्रेण गम्यते ग्राम इत्यादौ व्युत्पन्नस्य भङ्गप्रसङ्गात् कर्त्राख्यात-कर्म्माख्यातभेदेन व्युत्पत्तिद्वयकल्पने च गौरवमित्यादि स्वयमूहनीयं। ननु द्वितीयाद्यर्थफलजनकत्वस्य ग्रामेऽसत्त्वात् कथं तेन सह ग्रामस्यान्वय इत्यत आह, 'फले चेति, विभक्त्यर्थैकदेशेन सह प्रातिपदिकार्थस्यान्वयः फलावच्छिन्नव्यापारस्य धात्वर्थत्वे ब्राह्मणाय गां ददातीत्यादौ स्वामित्व-जनकत्वरूपचतुर्थ्येकदेशीभूतस्वामित्वे ब्राह्मणस्य प्रातिपादिकार्थस्यान्वयदर्शनेनाव्युत्पन्न इति लाघवादेकदेशान्वयानभ्युपगमाच्चाह, 'फलमात्रं वेति, 'मात्रपदेन जनकत्वांशव्यवच्छेदः, 'केचिदित्यन्तं मतं दूषयति,

तदसत्, ग्रामं गच्छति त्यजतीत्यादौ द्वितीयादितः सम्बन्धस्य वृत्त्यनियामकत्वात्, वृत्त्यनियामकसम्बन्धस्य प्रतियोगितावच्छेदकत्वनये ऽपि तदभावस्य केवलान्वयित्वनियमेन तेमनीयपाके ऽपि न तेमनस्येति व्यवहारापत्तिः, एवं फलमात्रस्य द्वितीयार्थत्वे ऽपि यदि कर्म्मजसंयोगानधिकरणद्रव्यं प्रसिद्धं, तदा तत्रामुं न गच्छतीति प्रयोगानुपपत्तिः तत्कर्म्मकगमनस्याप्रसिद्ध्या तदाश्रयत्वाभावस्य तत्र प्रत्येतुमशक्यत्वात्। जनकतासम्बन्धस्याभावप्रतियोगितानवच्छेदकतया गमनत्वावच्छेदेन द्वितीयार्थस्य तन्निष्ठसंयोगस्य तेन सम्बन्धेनाभावप्रत्ययासम्भवात् तस्याभावप्रतियोगितावच्छेदकत्वे तदभावस्य केवलान्वयित्वनियमेन गमनकर्म्मण्यपि देशे ऽमुं न गच्छतीति प्रयोगप्रसङ्गः गमनत्वावच्छेदेन जनकतासम्बन्धेन तन्निष्ठसंयोगाभावस्य सत्त्वात् तस्मात् फलजनकत्वं खण्डशः फलं जनकत्वं वा द्वितीयादेरर्थः। नचैवमपि रूपं न गच्छतीति प्रयोगानुपपत्तिः तन्निष्ठसंयोगाप्रसिद्धेरिति वाच्यं। फलजनकत्ववदाधेयत्वस्यापि द्वितीयाद्यर्थतया संयोगत्वावच्छेदेन रूपाधेयत्वाभावस्यैव तत्र प्रत्ययात्, रूपं न गच्छति रस इत्यादौ चाकाशं न पश्यत्यन्ध इत्यादाविव नञर्थस्य वारद्वयमन्वय इत्याहुः। तदसत्। लाघवात् द्वितीयादेः संयोगाद्यात्मके फले शक्तावुदाहृतस्थले संयोगजनकत्वादौ लक्षणाभ्युपगमात्, वृत्त्यनियामकसम्बन्धावच्छिन्नप्रतियोगिताकाभावमात्रस्य

---

*'तदसदिति, 'नियतेति गच्छतीत्यादौ विभागस्य तथं त्यजति खग इत्यादौ संयोगरूपफलस्य लाभप्रसङ्ग इति वैपरीत्यमेव कथं न स्यादित्यर्थः, 'फल-

फलसामान्यलाभेऽपि नियतसंयोग-विभागाद्यलाभेन फलविशेषावच्छिन्नव्यापारस्यैव धात्वर्थत्वात्। इतरथा

केवलान्वयित्वे मानाभावाच्चेति ध्येयं। 'फलसामान्यलाभेऽपीति फलत्वरूपेण फललाभेऽपीत्यर्थः, 'नियतसंयोग-विभागाद्यलाभेनेति संयोगत्व-विभागत्वादिविशिष्टे शक्तिभ्रमादिकं विना संयोगत्व-विभागत्वादिविशिष्टस्य लाभासम्भवेनेत्यर्थः, 'फलविशेषेति संयोगत्व-विभागत्वादिविशिष्टेत्यर्थः, 'धात्वर्थत्वात्' गम-त्यजादिधात्वर्थत्वात्, द्वितीयादेस्त्वाधेयत्वमर्थः स च धात्वर्थैकदेशे संयोगादावन्वेति। न च विशिष्य संयोगत्व-विभागत्वादिविशिष्टालाभेऽपि न क्षतिरिति वाच्यं। तदलाभे गृहाद्ग्रामं गच्छतो गमने ग्रामस्य गमनं न गृहस्य, वृक्षं त्यजतस्त्यागे वृक्षस्य त्यागो न तु भूमेरित्यादयो व्यवहाराः स्वारसिका न स्युः गृह-भूमिवृत्तिफलजनकत्वसामान्याभावस्य तत्रा-सत्त्वात् तत्क्रियया गृह-भूमिवृत्तिविभागोत्तरसंयोगरूपफलजन-नात् इति भावः। ननु द्वितीयादेः संयोगत्वादिनैव फलार्थ इति न फलविशेषाभावः गमादिधातुविशेषसमभिव्याहारस्य प्रत्ययनिया-मक इत्यत आह, 'इतरथेति, फलविशेषावच्छिन्नक्रियाया धात्वर्थ-

विशेषावच्छिन्नेति गमधातोः संयोगावच्छिन्नस्पन्दः त्यजधातोर्विभागावच्छिन्न-स्पन्दोऽर्थोऽवश्यं वक्तव्य इत्यर्थः। ननु धातोः स्पन्दादावेव शक्तिः गम्यादि-समभिव्याहाराच्च द्वितीयादेः संयोगत्व-विभागत्वादिना फलबोधकता भवि-ष्यतीत्यत आह, 'इतरथेति गमि-त्यजिप्रभृतीनां स्पन्दत्वावच्छिन्नमात्रशक्तत्व-इत्यर्थः, 'पर्य्यायत्वापत्तेः' एकधर्म्मावच्छिन्नशक्तत्वप्रसङ्गात्। न चेष्टापत्तिः,

त्यजि-गमिप्रभृतीनां पर्य्यायत्वापत्तेः। तथापि गम्यते ग्राम इत्यादौ ग्रामादेः संयोगादिफलशालित्वं कुतः प्रतीयत इति चेत्, तदवच्छिन्नव्यापारवाचिधातुसम-

त्वानभ्युपगमे इत्यर्थः, 'पर्य्यायत्वेति, एकस्याश्रयक्रियायाः पूर्व्वदेशत्यागोत्तरदेशगमनरूपत्वेन शक्यतावच्छेदकस्याभेदादिति भावः। अथ पर्य्यायतायामिष्टापत्तिः कर्म्मासमभिव्याहृते गच्छति त्यजतीत्यादौ बोधस्य वैलक्षण्यानुभवे तु तत्र तत्तत्फलावच्छिन्नक्रियायां निरूढ़लक्षणा। न चैवं ग्रामं त्यजतीत्यादौ ग्रामं गच्छतीत्यापत्तिरिति वाच्यं। गमिसमभिव्याहृतद्वितीयादेः संयोगस्य त्यजिसमभिव्याहृतद्वितीयादेर्विभागस्य बोधकत्वादेव तद्वारणसम्भवादिति चेत्, न, त्यजि-गम्योः पर्य्यायत्वाभावस्य सकलप्रामाणिकसिद्धत्वात्, कर्म्मासमभिव्याहृते गच्छति-त्यजतीत्यादौ स्वारसिकविलक्षणबोधस्याप्यनुभवसिद्धत्वाच्चेति निगर्भः। ननु तथापि गम्यते ग्राम इत्यादौ धात्वर्थैकदेशीभूतसंयोगादेर्ग्रामे अन्वयासम्भवात् आत्मनेपदस्य च फलसामान्यवाचकत्वात् गमनजन्यसंयोगरूपफलशालित्वप्रत्ययः कथं स्यादित्याशङ्कते, 'तथापीति, 'तदवच्छिन्नेति विशेष्यसंयोगावच्छिन्ने-

तथा सति कोषादौ तथाभिधानप्रसङ्गादिति भावः। शङ्कते, 'तथापीति संयोगावच्छिन्नस्पन्दादेर्गम्याद्यर्थत्ववादिनोऽपीत्यर्थः, 'संयोगादिफलशालित्वं' चैत्रवृत्तिगमनादिजन्यसंयोगादिफलशालित्वं, 'कुत इति, ग्रामोगम्यत इत्यादौ विभागशालित्वस्य तरुस्त्यज्यते इत्यादौ च संयोगशालित्वस्य लाभप्रसङ्गेन वैपरीत्यापत्तिः तदवस्थैवेति भावः। 'तदवच्छिन्नेति संयोगावच्छिन्नव्यापारवाचिगमिसमभिव्याहृतात्मनेपदस्य संयोगात्मकफलबोधकत्वं, विभागा-

भिव्याहारादेव, यथा इष्टसाधनत्ववाचकाद्विधेरेव स्वर्गकामादिपदसमभिव्याहारात् स्वर्गादिजनकत्वं, प्रतीतिस्त्विष्ट-फलयोरिष्ट-फलत्वाभ्यां स्वर्गत्व-संयोग-

---

र्थ्यर्थः, 'समभिव्याहारादेवेति च्छेदः, गम्यते ग्राम इत्यादौ ग्रामादेः संयोगशालित्वं प्रतीयत इति पूर्व्वेणान्वयः, तत्रापि धातुविशेषसम-भिव्याहारात्तथा सम्भवेऽपि त्यजि-गमिप्रभृतीनां पर्य्यायतापत्ते-र्दुर्व्वारत्वादिति भावः। समभिव्याहारविशेषाद्विशेषप्रत्यये दृष्टान्त-माह, 'यथेत्यादि, 'स्वर्गादिजनकत्वमिति, 'प्रतीयत इत्यनुषज्यते। ननु

---

वच्छिन्नव्यापारवाचित्यजिसमभिव्याहृतात्मनेपदस्य विभागात्मकफलबोधकत्व-मित्यादिव्युत्पत्तिकल्पनेनोक्तदोषो वारणीय इत्यर्थः। यद्यपि केवलव्यापारे धातुशक्तिवादिनाप्येवं वक्तुं शक्यते, तथापि तन्मते त्यजि-गम्योः पर्य्यायता-पत्तिरेव दोष इति ध्येयं। ननु सामान्यबोधकशब्दस्य समभिव्याहार-विशेषबलेन विशेषबोधकत्वं कुत्र दृष्टं इत्याकाङ्क्षायामाह, 'यथेति, स्वर्गकामोयजेतेत्यादौ इष्टसाधनत्वमात्रस्य विध्यर्थत्वेऽपि स्वर्गकामपद-समभिव्याहारबलेन विशेषबोधकतापर्य्यवसानं फलं दृष्टं। नन्वेवं स्वर्ग-कामोयजेतेत्यादौ यथा स्वर्गसाधनत्वत्वरूपेण विधिप्रत्ययस्येष्टसाधनत्वबोध-कता तथा संयोगत्वादिना फलबोधकता स्यादित्यत आह, 'प्रतीतिस्त्विति, तथाच तत्र यदि स्वर्गत्वादिना तत्रेष्टबोधस्तदा अत्रापि संयोगत्वादिना आत्मनेपदात् फलप्रतीतिर्वाच्या। यदि च इष्टत्वरूपेण स्वर्गरूपेष्टबोधकता तदा अत्रापि फलत्वरूपेणात्मनेपदस्य संयोगादिबोधकता वाच्येति भावः। नन्वेवं यदि संयोगत्वादिरूपेणात्मनेपदस्य शक्तिग्रहस्तदा तेन रूपेणा-नुपस्थितिकाले गृहीतात्मनेपदफलशक्तिकस्य कालान्तरे संयोगत्वादिकं धर्म्मितावच्छेदकीकृत्य फलत्वज्ञानसत्त्वेऽपि संयोगत्वादिना प्रकारेणात्मने-

त्वाभ्यां वेत्यन्यदेतत्। अस्तु वा बुद्धिविषयवाचक-तदादेरिव व्युत्पत्तिवशादेव प्रकृत्यर्थतावच्छेदकफल-तच्छालिवाचकाख्यात-कृतोरपि विशेषरूपेण बोध-

फलत्वेन प्रतीतौ इत्यनुभवविरोधः संयोगत्वादिनैव प्रत्ययस्यानुभव-सिद्धत्वात् संयोगत्वादिना प्रतीतौ तु तेन रूपेण शक्तिरावश्यकी तथाच शक्त्यानन्त्यमित्यत आह, 'अस्तु वेति, 'बुद्धिविषयवाचकेति बुद्धिविषयत्वप्रवृत्तिनिमित्तकेत्यर्थः, 'वुत्पत्तिवशादेवेति सामान्य-रूपेण शक्तिज्ञानस्यैव विशेषरूपेण शाब्दबोधे तज्जनकपदार्थोपस्थितौ च कारणतावशादेवेत्यर्थः, 'प्रकृत्यर्थतावच्छेदकेति फलत्वरूपेण प्रकृत्यर्थतावच्छेदकफल-तच्छालिवाचकेत्यर्थः, 'प्रकृत्यर्थतावच्छेदकेति स्वरूपकथनं, 'विशेषरूपेणेति शक्यतानवच्छेदकेनापि विशेषरूपेणे-त्यर्थः। न च येन रूपेण पदार्थोपस्थितिस्तेनैव रूपेण पदे शक्ति-ज्ञानस्य हेतुतया कथं सामान्यरूपेण शक्तिज्ञानाद्विशेषरूपेण उप-स्थितिः विशेषरूपेणोपस्थित्यभावे च कथं विशेषरूपेण शाब्द-

पदात् फललाभो न स्यादित्यत आह, 'अस्तु वेति, तथाच तत्पदं बुद्धि-प्रकारवति शक्तमिति शक्तिज्ञानस्य घटोऽस्य बुद्धिप्रकारवान् इतिज्ञान-सहकारेण यथा घटत्व-पटत्वादिरूपविशेषधर्म्मप्रकारेण बोधकत्वं तथा आत्मनेपदं फलतावच्छेदकविशिष्टे शक्तमिति शक्तिज्ञानस्य स्वप्रकृत्य-र्थतावच्छेदकतावच्छेदकफलमिति ज्ञानसहकारेण संयोगत्वादिना फल-बोधकता, एवं कर्म्मकृत्फलविशिष्टे शक्तमिति शक्तिज्ञानस्य स्वप्रकृत्यर्थता-वच्छेदकफलमिति ज्ञानसहकारेण संयोगविशिष्टबोधकता स्यादित्यर्थः, एवं विभागादिकमादाय बोध्यं, 'आख्यात-कृतोरपीत्यपिकारेण गम्यादिधातोः

बोधः पदार्थोपस्थिति-शाब्दबोधयोरपि समानप्रकारकत्वेन कार्य्य-कारणभावादिति वाच्यं। तद्भेदेन शक्तिज्ञान-पदार्थोपस्थित्योः कार्य्य-कारणभावभेदात्, अत्र सामान्यरूपेण शक्तिज्ञानादेव विशेष-रूपेण पदार्थोपस्थिति-शाब्दबोधयोरभ्युपगमात्।

परे तु 'बुद्धिविषयवाचकतदादेरिवेति, यथा तदादिपदस्थले विशिष्य घटत्व-पटत्वादिरूपविशेषधर्म्मविशिष्टे न शक्तिः शक्त्यानन्त्य-प्रसङ्गात्, नापि स्वप्रयोक्तृबुद्धिविशेषविषयत्वविशिष्टे, तदादिपदजन्य-शाब्दबोधानन्तरं घटत्वादिप्रकारकसंशयस्य सर्व्वानुभवविरुद्धत्वात्, किन्तु स्वप्रयोक्तृबुद्धिप्रकारत्वेनानुगतीकृतघटत्व-पटत्वादिविशिष्टे तदादिपदशक्तिः, अतो न घटत्व-पटत्वादिभेदे शक्त्यानन्त्यप्रसङ्ग-इति प्राहुः।

न चैवं नानार्थोच्छेदः हरिपदादेरपि सत्तावत्त्वादेरेव शक्य-तावच्छेदकत्वस्य सुवचत्वादिति वाच्यं। तत्रामरकोषात् तत्तद्रूपेणैव शक्यत्वप्रतीतेरिति भावः। एतच्चाभ्युपेत्योक्तं, एवमपि फलत्ववद्-बुद्धीच्छाविषयत्वभेदवत्त्वादेरपि विनिगमनाविरहेण शक्यतावच्छे-दकत्वापत्त्या शक्त्यानन्त्यस्य दुर्व्वारत्वादिति ध्येयं। त्यजि-गम्योः पर्य्यायत्वाभावस्य कर्म्मासमभिव्याहृते गच्छति-त्यजतीत्यादौ विल-क्षणप्रतीतेः स्वारसिकत्वस्य च कदाचिदपलापसम्भवात् ग्रामाद्-गमिकर्म्मत्वव्यवहारानुपपत्त्या फलस्य धात्वर्थतावच्छेदकत्वं व्यवस्थाप-

---

संयोगावच्छिन्नव्यापारत्वरूपेण बोधकत्वसमुच्चयः, तत्र च शक्तिग्रहो गम-धातुः संयोगावच्छिन्नस्पन्दशक्त इत्यादिरूप एवेति शेष इत्यर्थः। ननु यथा-सर्व्वनाम्नां नानाप्रवृत्तिनिमित्तकत्वेऽपि नानार्थव्यवहारविषयता नानार्थ-

कत्वं। अपि च धात्वर्थतावच्छेदकफलशालित्वं कर्मत्वं।

यति, 'अपि चेति, 'धात्वर्थतावच्छेदकेति धातुप्रतिपाद्यतावच्छेदकेत्यर्थः। धातुत्वञ्च शक्तिविशेषसम्बन्धेन धातुपदवत्त्वं शालित्वञ्च संसर्गः, न तु शक्यतावच्छेदके तदन्तर्भावः। न चैवमग्नौ जुहुयादित्यादावग्नेरपि जुहोति कर्मत्वापत्तिः अग्निसंयोगावच्छिन्नक्रियाया- जुहोत्यर्थतया धात्वर्थतावच्छेदकसंयोगात्मकफलशालित्वस्याग्नेरपि सत्त्वादिति वाच्यं। अग्निसंयोगानुकूलघृतादिक्रिया न धात्वर्थः तथा सति घृतं जुहोतीत्यत्र द्वितीयार्थस्य परसमवेतत्वस्य धात्वर्थे अन्वयानुपपत्तेः, अपि तु संयोगावच्छिन्नघृतादिक्रियानुकूलकर्त्तृव्यापारस्यैव जुहोत्यर्थतया क्रियाया एव धात्वर्थतावच्छेदकत्वात्, अग्नाविति सप्तम्यर्थः स्थाल्यां पचतीत्यादाविव परम्परासम्बन्धावच्छिन्नाधेयत्वं तच्च धात्वर्थव्यापारे अन्वेति सप्तम्यर्थाधेयत्वस्य पदार्थान्वितत्वनियमात्, इत्यञ्च ग्रामो गमिकर्मेत्यादौ कर्म्मपदार्थैकदेशे धातुत्वविशिष्टगम्यादेरभेदसम्बन्धेनान्वयः व्युत्पत्तिवैचित्र्यादभेदार्थकलुप्तषष्ठीस्मरणादभेदस्य प्रकारतयैव भानं, यत्र च न तत्स्मरणं तत्र गम्यादिपदं तात्पर्य्यग्राहकं कर्म्मपदस्यैव गम्याद्यभिन्नधात्वर्थतावच्छेदकफलवति लक्षणेति भावः।

---

व्यवहारविषयतावच्छेदके सर्व्वनामभिन्नत्वविशेषणोपादानात् तथा त्यजि-गम्योर्व्यापारमात्रवाचकत्वेऽपि पर्य्यायव्यवहारविषयतावच्छेदके त्यजि-गमि-भिन्नत्वविशेषणादेव न पर्य्यायव्यवहारविषयता इत्यतो युक्त्यन्तरेण गम्यादीनां संयोगादिरूपफलावच्छिन्नव्यापारे शक्तिं व्यवस्थापयति, 'अपि चेति, 'धात्वर्थेति तद्धात्वर्थतावच्छेदकफलशालित्वं तद्धात्वर्थकर्म्मत्वव्यवहारविषयता-

न तु धात्वर्थजन्यफलशालितामात्रं गमि-पत्योः कर्म्म-
त्वस्य पूर्व्वस्मिन्देशे त्यजेश्चोत्तरस्मिन्देशे स्पन्देः पूर्व्वापर-

ननु धात्वर्थजन्यफलशालित्वमेव कर्म्मत्वमतो न ग्रामादेर्गम्यादि-
कर्म्मत्वव्यवहारानुपपत्तिरित्यत आह, 'न त्विति, 'कर्म्मत्वस्य' कर्म्मत्व-
व्यवहारस्य, 'पूर्व्वस्मिन् देश इति 'प्रसङ्गादित्यग्रेतनं सर्व्वत्र सम्ब-
ध्यते, पूर्व्वदेशस्यापि गमि-पत्यर्थजन्यविभागात्मकफलवत्त्वादिति
भावः। यद्यपि पतधातोरकर्म्मकतया पूर्व्वोत्तरदेशयोरुभयत्रैव तत्-
कर्म्मत्वव्यवहारापादनमुचितं, तथापि नरकं पतितः नरकपतित-
इत्यत्र द्वितीयातत्पुरुषानुशासनस्वरसात् उत्तरदेशस्य तत्कर्म्मत्व-
मस्त्येवेत्यभिप्रायः। नभ उत्पपातेत्यत्र नभसः कर्म्मतया उत्तर-
देशस्य तत्कर्म्मत्वमस्त्येवेत्यभिप्राय इत्यपि कश्चित्। 'उत्तरस्मिन् देश-
इति, तस्यापि त्यज्यर्थसंयोगात्मकफलवत्त्वादिति भावः। 'पूर्व्वापर-

वच्छेदकमित्यर्थः, तेन न गमिधात्वर्थतावच्छेदकफलशालिनि त्यजिकर्म्मत्व-
प्रसङ्गः. तथाच यदि व्यापारमात्रं गम्याद्यर्थः न तु संयोगावच्छिन्नव्यापारादिः
तदा गम्यादिकर्म्मत्वव्यवहारविषयतावच्छेदकस्य दुर्व्वारत्वापत्तिरिति भवन्मते
फलस्य शक्यतावच्छेदकत्वविरहात् धात्वर्थतावच्छेदकफलशालित्वस्याप्रसिद्धेः
प्रकारान्तरस्यासम्भवाच्च। फलस्य धात्वर्थतावच्छेदकत्वमनङ्गीकृत्य धात्वर्थता-
वच्छेदकफलशालित्वमेव तत्तद्धात्वर्थकर्म्मताव्यवहारविषयतावच्छेदकं वक्तव्य-
मिति भावः। ननु धात्वर्थजन्यफलशालित्वमेव तत्तद्धात्वर्थव्यवहारविषयता-
वच्छेदकमिति न तस्य दुर्व्वचतेत्यत आह, 'न तु धात्वर्थेति कर्म्मत्वमित्यनु-
सज्यते, 'पूर्व्वस्मिन्निति तत्रापि गम्यर्थ-पत्यर्थस्पन्दरूपव्यापारजन्यपूर्व्वदेश-
विभागरूपफलशालित्वस्य सत्त्वादित्यर्थः, 'त्यजेरिति स्वार्थस्पन्दव्यापार-
जन्योत्तरसंयोगशालित्वस्य उत्तरदेशेऽपि सत्त्वादित्यर्थः, 'स्पन्देरिति स्पन्द-

देशयोः प्रसङ्गात् फलावच्छिन्नव्यापारबोधकत्वादेव

देशयोरिति, उभयोरेव स्पन्दजन्यविभाग-संयोगात्मकफलवत्त्वादिति भावः । 'प्रवङ्गादिति, अस्मन्मते तु गमि-पत्योः संयोगावच्छिन्नायां, त्यजेर्विभागावच्छिन्नायां, स्पन्देस्तु केवलायां क्रियायां शक्तिरिति नैतद्दोषावकाशः । पतनत्वञ्च गुरुत्वासमवायिकारणकक्रियामात्रवृत्तितज्जन्यतावच्छेदकजातिविशेषः, तस्यैव पतधातुशक्यतावच्छेदकतया न गमि-पत्योः पर्य्यायतेति भावः । ननु कर्म्मपदं तत्तद्धातुबोधकपदसमभिव्याहारात् फलत्वेन तत्तत्फलस्यैव बोधसाकाङ्क्षमिति नैतद्दोषः । न च तथापि पूर्व्वोत्तरदेशयोः स्पन्दिकर्म्मत्वव्यवहारो दुर्व्वार इति वाच्यम् । कर्म्मपदस्य धातुत्वेन सकर्म्मकतत्तद्धातुघटितकर्म्मत्वस्य बोध एव साकाङ्क्षतया तस्य उपयोगित्वादित्यत आह, 'फलावच्छिन्नेति, 'अवच्छिन्नान्तात् स्पन्दिव्युदासः ।

जन्यविभागस्योत्तरसंयोगस्य वा पूर्व्वापरदेशयोः सत्त्वेन स्पन्दस्य कर्म्मत्वप्रसङ्गादित्यर्थः । न चेष्टापत्तिः, स्पन्देरकर्म्मकधातुत्वादिति भावः । धात्वर्थतावच्छेदकत्वेन शालित्वस्य कर्म्मत्वविषयतावच्छेदकत्वे च नोक्त दोषः स्पन्देः केवलस्पन्दशक्तत्वेन फलस्य स्पन्दिधात्वर्थतावच्छेदकत्वाभावादिति ध्येयं । ननु यद्धात्वर्थजन्ययत् फलवत्त्वेव यद्धात्वर्थकर्म्मत्वव्यवहारस्तद्धात्वर्थजन्यतत्फलशालित्वं तद्धात्वर्थकर्म्मत्वमित्यनुगतमेव फलानुसारेण कर्म्मत्वलक्षणं कर्त्तव्यमित्यत आह,'फलेति, 'धातूनां' पच्यादिधातूनां, तथाच पचिधातुः सकर्म्मकः न भूधातुरित्यादिव्यवहारविषयतावच्छेदकं सकर्म्मकत्वं वाच्यं तच्च फलावच्छिन्नव्यापारबोधकत्वादन्यन्न सम्भवतीति पचधात्वादौ भूधात्वादिव्यावृत्तसकर्म्मकत्वव्यवहारबलेन पचधात्वादौ फलावच्छिन्नव्यापारशक्तिसिद्धिरिति

च धातूनां सकर्म्मकत्वव्यवहारः। भाक्तस्तु ज्ञानात्यादे-

---

'सकर्म्मकत्वव्यवहारः' मुख्यसकर्म्मकत्वव्यवहारः, तथाच गम्यादेः स्वार-सिकसकर्म्मकत्वव्यवहारोपपत्त्या फलावच्छिन्नक्रियादिवाचित्वसिद्धि-रिति भावः।

केचित्तु ननूक्तसामान्यधर्म्मो न कर्म्मपदशक्यतावच्छेदकः न वा सामान्यतो धात्वर्थजन्यफलशालित्वं तच्छक्यतावच्छेदकमपि तु विशिष्य गम्यर्थजन्यसंयोगशालित्व-त्यज्यर्थजन्यविभागशालित्वादिक-मेव तच्छक्यतावच्छेदकं, ग्रामोगमिकर्म्मेत्यादौ गम्यादिपदं तात्पर्य्य-ग्राहकम्। न चैवं नानार्थत्वापत्तिरिति वाच्यम्। प्रत्येकमादाय विनिगमनाविरहेण तवापि नानार्थत्वस्य दुर्व्वारत्वात् तत्तद्धातु-विशेषवाचकपदसमभिव्याहारस्य नियामकतया गमिकर्म्मेत्यादौ न त्यज्यादिघटित[illegible]तीतिः, ग्रामः स्पन्दिकर्म्मेत्यादौ व्यवहारस्य नायोग्यो न वा योग्यः, किन्त्वपार्थकः कर्म्मत्वस्य धातुविशेषघटित-तया स्पन्दादिधातोस्तन्निरुक्तावप्रवेशादित्यत आह, 'फलावच्छि-न्नेती'त्याहुः।

नन्वेवं ज्ञानात्यादौ सकर्म्मकत्वव्यवहारो न स्यात् तत्र फलस्य शक्यतानवच्छेदकत्वात् इत्यत आह, 'भाक्तस्त्विति, 'ज्ञानात्यादे-

---

भावः। ननु यदि फलावच्छिन्नव्यापारबोधकधातुत्वमेव सकर्म्मकधातुत्वं तदा शुद्धज्ञानादिवाचिज्ञाधात्वादीनां सकर्म्मकत्वव्यवहारानुपपत्तिः तथाच तत्र सकर्म्मकधातुयोगविहितकर्म्मप्रत्ययादिर्न स्यादित्यत आह, 'भाक्तस्त्विति गौण इत्यर्थः,' ज्ञानार्थादेर्ज्ञाधात्वादेः सकर्म्मकत्वव्यवहार इत्यस्यापत्तिः अत्र च ज्ञाधात्वाद्यन्यतमत्वमेव भक्तिः। नन्वेवं सकर्म्मकधातुयोगविहित-

स्तादृशप्रयोग एव च कर्म्मप्रत्ययाः तत्र च द्वितीय-रिति, सकर्म्मकत्वव्यवहार इति शेषः। तथाच यतिप्रभृतिभिन्नत्वे सति सविषयकवाचित्वमेव तत्र सकर्म्मकत्वमिति भावः। नन्वेवं तद्योगे कथं कर्म्मप्रत्यय इत्यत आह, 'तादृशेति उक्तमुख्य-भाक्त-साधारणसकर्म्मकव्यवहारविषयधातुयोग एवेत्यर्थः। 'कर्म्मप्रत्ययाः' द्वितीयादयः, आदिपदात् भोजनाय यतते पुष्पेभ्यः स्पृहयति मातुः स्मरतीत्यादौ चतुर्थी-षष्ठ्यादिपरिग्रहः।

केचित्तु ननु यादृशधातुयोगे कर्म्मप्रत्ययोऽनुशिष्यते तस्यैव सकर्म्मकतया कथं गम्यादेर्मुख्यं जानात्यादेश्च भाक्तं सकर्म्मकत्वमित्यत आह, 'तादृशेतीत्याहुः।

नन्वेवं धात्वर्थतावच्छेदके फले कथं प्रातिपदिकार्थस्य साकाङ्क्षत्वादन्वय इत्यत आह, 'तच्च चेति फलावच्छिन्नव्यापारवाचिधातु-

द्वितीयादिविधायकसूत्रे सकर्म्मकपदेन यदि फलावच्छिन्नव्यापारबोधक-धातुरुच्यते तदा ज्ञानार्थादियोगे द्वितीयानुपपत्तिश्च। यदि च ज्ञाधात्वा-द्यन्यतरधातुरेव तत्रत्यसकर्म्मकपदार्थस्तदा पच्यादियोगे कर्म्मप्रत्ययानुप-पत्तिरित्यत आह, 'तादृशेति फलावच्छिन्नव्यापारबोधकपच्यादि-ज्ञादिधा-त्वाद्यन्यतमयोगे द्वितीयादय इति तत्सूत्रार्थ इति नोक्तदोष इत्यर्थः। ननु फलावच्छिन्नव्यापारस्य धात्वर्थत्वे द्वितीयादेर्न फलमर्थोऽन्यलभ्यत्वात् तथाच कथं धात्वर्थप्रतिपादकार्थयोर्भेदेन साक्षादन्वयबोधोभविष्यतीत्यत-आह, 'तत्रेति, 'तत्र' तण्डुलं पचतीत्यादौ, 'द्वितीययेति, तथाच तत्र द्वितीयार्थाधेयत्वस्यैव धात्वर्थेऽन्वयो न तु प्रातिपदिकार्थस्येति नोक्तदोष-इति भावः। ननु धात्वर्थफले द्वितीयार्थाधेयताया अनन्वयः एकदेशत्वात् फलावच्छिन्नव्यापारे च तण्डुलाद्याधेयतायाश्च नान्वयः अयोग्यत्वादित्यत-

याधेयत्वमभिधीयते तच्चाकाङ्क्षावैचित्र्यात् धात्वर्थता-
वच्छेदकफलेऽन्वेति, अत एव चास्याः पदार्थान्विता-

योगे चेत्यर्थः, 'तच्च' आधेयत्वञ्च, 'आकाङ्क्षावैचित्र्यात्' पदार्थता-
वच्छेदकान्वयित्वस्यैव अत्र साकाङ्क्षत्वात्, इत्यञ्च तण्डुलमोदनं वा
पचतीत्यादौ तण्डुलौदनादिपदे तण्डुलावयवपरे तद्वृत्तिविक्लित्ति-
जनकस्पन्दानुकूलयत्नवांश्चैत्र इत्यादिबोध इति भावः। ननु यदि
सुवर्थाधेयत्वस्य धात्वर्थतावच्छेदकेऽप्यन्वयः तदा ग्रामे गच्छति ग्रामे
त्यजतीत्यादौ अपि समवेतत्वं सप्तम्यर्थोऽस्तु, तच्च धात्वर्थतावच्छेदक-
फले अन्वेतु, द्वितीया-सप्तम्योर्बोधकतायामविशेषात् इत्यत आह,
'अतएव चेति धात्वर्थतावच्छेदकफलान्विताधेयत्वबोधकत्वादेव चेत्यर्थः,
'अस्याः' द्वितीयायाः, 'भेदः' बोधकतायां विशेषः, तथाच पदार्थ-
तावच्छेदके सप्तम्यर्थान्वयस्याव्युत्पन्नतया न तत्र धात्वर्थतावच्छेदका

आह, 'तच्चेति द्वितीयार्थाधेयत्वञ्च इत्यर्थः, 'तच्चेत्यस्यान्वेतीत्यनेनान्वयः,
'आकाङ्क्षेति अन्यत्रैकदेशान्वयस्य निराकाङ्क्षत्वेऽप्यत्र साकाङ्क्षत्वे पदार्थैक-
देशीभूतफलान्वितस्वार्थान्वयस्वीकारादित्यर्थः। नन्वेवं तत्र तत्र द्वितीया-
स्थले सप्तम्यापत्तिः आधेयत्वतात्पर्य्यदशायां सप्तम्या एव साधुत्वादित्यत आह,
'अत एवेति, 'अत एव' द्वितीयायाः पदार्थतावच्छेदकान्विताधेयत्वबोधक-
त्वादेव, तथाच पदार्थान्विताधेयत्वतात्पर्य्यदशायां सप्तमीपदार्थैकदेशान्विता-
धेयत्वतात्पर्य्यदशायाञ्च द्वितीयेत्यर्थः। नन्वेवं कर्म्मप्रत्ययस्थले ये ये पदार्था-
येन येन रूपेण विशेषणीभूय भासन्ते त एव पदार्थाः कर्तृप्रत्ययजन्यबोधे
विशेषणीभूय भासन्ते इति सर्व्वैरवधारितं, कर्म्मप्रत्ययस्थले धात्वर्थविशेष्यी-
भूय भासमानस्य धात्वर्थजन्यफलस्य कर्तृप्रत्ययस्थले धात्वर्थविशेषणत्वेन

**धेयत्वबोधिकायाः सप्तम्या भेदः। अस्तु वा कर्म्मा-ख्यातस्येव द्वितीयाया अपि फलमर्थः। स्याद्वा फल-**

न्वितसमवेतत्वं सप्तम्यर्थः, किन्तु स्थाल्यां पचतीत्यादाविव धात्वर्था-न्वितपरम्परासम्बन्धावच्छिन्नाधेयत्वमेव तदर्थः। न च तथापि द्वितीया-सप्तम्योः पर्य्यायतापत्तिर्दुर्व्वारैव इति वाच्यम्। द्वितीयाया आधेयत्वे निरूढ़लाक्षणिकत्वात् लाघवादेकत्वादावेव तच्छक्तेरिति भावः। एकदेशासहिष्णुतायामाह, 'अस्तु वेति, इत्यञ्च ग्रामं गच्छतीत्यादौ ग्रामनिष्ठसंयोगजनकसंयोगावच्छिन्नक्रिया इत्यादिको बोधः, जनकत्वं संसर्गः दण्डवान् रक्तदण्डवानित्यादिवच्च न निरा-काङ्क्षत्वमिति भावः। फल व्यापारयोः सम्बन्धेऽपि धातोः शक्ति-कल्पने गौरवं तादृशसंयोगस्य वारद्वयबोधश्चानुभवविरुद्ध इत्यत-आह, 'स्याद्वेति, 'फलं' संयोगत्वादिविशिष्टं, 'व्यापारः' स्पन्दादिर्वा, धात्वर्थजन्यफलशालित्वमेव च कर्म्मत्वमुक्तदिशैव च[१] पूर्व्वोक्तव्यवहा-रातिप्रसङ्गः[२] वारणीय इति भावः।

केचित्तु ननु द्वितीयायाः फलार्थकत्वे प्राचीननये ग्रामं गच्छती-त्यादेर्निराकाङ्क्षतापत्तिः प्राचीनैर्दण्डवान् रक्तदण्डवान् इत्यादेरपि निराकाङ्क्षत्वाभ्युपगमादित्यत आह, 'स्याद्वेतीत्याहुः।

(१) कर्म्मपदस्य सकर्म्मकधातुविशेषसमभिव्याहाराभावात् फलत्वेन संयोग-विभागाद्यवच्छिन्नबोधसाकाङ्क्षत्वस्वीकारेणेत्यर्थः।

(२) गमि-पतिप्रभृतीनां पूर्व्वापरदेशयोः कर्म्मत्वव्यवहारप्रसङ्ग इत्यर्थः।

भावादित्यत आह, 'अस्तु वेति, तथाच जनकतासम्बन्धेन द्वितीयार्थफलस्य धात्वर्थ एवान्वय इत्यञ्च एकदेशान्वयोऽपि नास्तीति भावः। ननु विहगो

व्यापारौ पृथगेव धात्वर्थौ विशिष्टस्तु अन्वयबललभ्यः

'विशिष्टस्त्विति गच्छतीत्यादौ जनकतासम्बन्धेन फलविशिष्टो व्यापारः, गम्यत इत्यादौ जन्यतासम्बन्धेन व्यापारविशिष्टं फलमित्यर्थः, कर्त्राख्यातस्थले फलं विशेषणं व्यापारो विशेष्यः, कर्म्माख्यातस्थले फलं विशेष्यं व्यापारो विशेषणं, व्युत्पत्तिवैचित्र्यात् कर्म्मविहितसुपामाधेयत्वमर्थः, तेन ग्रामं गच्छति चैत्र इत्यादौ ग्रामवृत्तिसंयोगजनकस्पन्दानुकूलकृतिमान् तादृशस्पन्दाश्रयत्ववान् वा चैत्र इत्याद्यन्वयधीः, कर्म्माख्यातस्याश्रयत्वमर्थः, तेन गम्यते ग्रामश्चैत्रेणेत्यादौ चैत्रनिष्ठकृतिजन्यस्पन्दजन्यसंयोगाश्रयो ग्राम इत्यन्वयधीः, कर्म्मक्तस्याश्रयोऽर्थः तेन गतो ग्रामश्चैत्रेण इत्यादौ यथोक्तस्पन्दजन्यसंयोगाश्रयाभिन्नो ग्राम इत्याद्यन्वयधीरिति भावः।

केचित्तु कर्त्राख्यातस्थल इव कर्म्माख्यातस्थलेऽपि फलं विशेषणं व्यापारो विशेष्यः व्युत्पत्तिभेदकल्पनायां मानाभावात् किन्तु कर्म्माख्यातस्यापि फलमर्थः तेन गम्यते ग्रामश्चैत्रेणेत्यादौ चैत्रनिष्ठकृतिजन्यसंयोगावच्छिन्नस्पन्दजन्यफलशाली ग्राम इत्यन्वयधीः, कर्म्मक्तस्य फलविशिष्टोऽर्थः तेन गतो ग्रामश्चैत्रेणेत्यादौ यथोक्तस्पन्दजन्यफलविशिष्टाभिन्नो ग्राम इत्यन्वयधीः, अतएव परत्वं सुपा प्रकृत्यर्थापेक्षिकं तिङादिना च स्वार्थफलाश्रयापेक्षिकं प्रत्याय्यते

---

भूमिं प्रयातीतिवत् विहगः स्वात्मानं प्रयातीतिप्रयोगः स्यात् न स्याच्च विहगः स्वात्मानं न प्रयातीत्यादिकं तस्य भूमिवृत्तिसंयोगात्मकफलजनकप्रयाणाश्रयत्ववत स्वात्मवृत्तिसंयोगात्मकफलजनकप्रयाणाश्रयत्वात संयोगस्य

भूमिं प्रयाति विहगोविजहाति महीरुहं न तु स्वात्मानमित्याद्यनुरोधात्, क्रियान्वयिपरसमवेतत्वमपि

इति वक्ष्यमाणव्युत्पत्तिः साधुसङ्गच्छते, अन्यथा तिङादेः फलार्थकत्वाभावादत्र कर्म्मे तदसङ्गतत्वापत्तिरित्याहुः।

'अनुरोधादिति गमनादिफलस्य भूमि-वृक्षादिनिष्ठसंयोगविभागादेरात्मनिष्ठत्वेऽपि आत्मानं प्रयाति आत्मानं विजहातीत्याद्यव्यवहारादिति भावः। परसमवेतत्वस्य फलान्वयित्वे तद्दोषतादवस्थ्यादुक्तं 'क्रियान्वयीति धात्वर्थान्वयीत्यर्थः, तच्च कुत्र

---

द्विष्ठत्वादित्यत आह, 'भूमिं प्रयातीति, 'प्रयातीत्यत्र संयोगावच्छिन्नव्यापारो धात्वर्थः, द्वितीयायाः संयोगः, 'विजहातीत्यत्र धातोर्विभागावच्छिन्नव्यापारो द्वितीयायाश्च विभाग इति नाविशेषः, 'अनुरोधादिति, पञ्चम्यन्तं परसमवेतत्वं कर्म्मप्रत्ययार्थ इत्यत्र हेतुत्वेन योज्यं, परसमवेतत्वं क्वान्वेतीत्याकाङ्क्षायामाह, 'क्रियान्वयीति, फलान्वयित्वे च फलस्य द्विष्ठतया पूर्व्वोक्त एव दोषः स्यादिति भावः। परत्वञ्च भिन्नत्वं तथाच विहगोभूमिं प्रयातीत्यादौ विहगः भूमिभिन्नसमवेतभूमिवृत्तिसंयोगजनकप्रयाणाश्रय इत्यन्वयबोधः, प्रयाणं गमनं समवेतान्तं जनकान्तञ्च प्रयाणान्वितं, एवं विजहातीत्यादौ विहगः भूमिभिन्नसमवेतभूमिवृत्तिसंयोगजनकविहानाश्रय इत्यन्वयबोधः, भिन्नघटकभूमेः प्रतियोगितासम्बन्धेनान्वयः एकदेशत्वेऽप्याकाङ्क्षाबलेन तस्य व्युत्पन्नत्वात्। न च तथापि उभयकर्म्मजसंयोगस्थले विहगः स्वात्मानं प्रयातीति प्रयोगापत्तिः तत्र प्रयाणस्य स्वात्मभिन्नसमवेतत्वात् स्वात्मवृत्तिजनकत्वाच्चेति वाच्यं। तादृशप्रयाणस्य विहगे बाधादेव तथा प्रयोगासम्भवात्। ननु भेदे भूम्यादेर्भूमित्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनान्वयस्वीकारान्न पृथिवीं प्रयाति विहग इत्यादौ बोधः विहगस्यापि पृथिवीत्वेन विहगवृत्तिप्रयाणस्य

तस्यान्वय इति बोधनाय, न तु तदन्तर्भावेनार्थः, समवेतत्वमपि तेन सम्बन्धेन परस्यान्वयबोधनाय परञ्चैव चार्थः, परत्वं भिन्नत्वं यथाकथञ्चित् सम्बन्धेनान्वये कालिकादिसम्बन्धमादाय उक्तदोष-तादवस्थ्यादिति ध्येयम्। किमपेक्षया परत्वप्रतिपत्तिरित्यत आह,

पृथिवीत्वावच्छिन्नप्रतियोगिताकभेदवत्समवेतत्वाभावात्. यदि च पृथिव्याः केवलप्रतियोगित्वसम्बन्धेन भेदेऽन्वयः स्वात्मानं प्रयातीत्यपि स्यात् स्वात्मनोऽपि स्वात्म-घटोभयत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वेन तथात्वात्; मैवं, तत्तद्व्य-क्तित्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन पृथिव्यादेरन्वयस्वीकारात् अन्वयिता-वच्छेदकावच्छिन्नप्रतियोगिताकत्वबोधस्य चाऽनभ्युपगमात्। यद्वा भेदप्रति-योगितावच्छेदकत्वमेव परसमवेतत्वपदेन विवक्षितं तथाच स्वात्मवृत्तिभेद-प्रतियोगितावच्छेदकाश्रयस्य तस्मिन् बाधानुरोधेन तथा प्रयोग इत्याशयात् इत्यञ्च भूमिं प्रयाति विहगो न स्वात्मानमित्यादौ नञा स्वात्मभिन्नसमवेत-त्वस्याभावो वा धात्वर्थे प्रयाणे प्रतीयते तथाच विहगः भूमिवृत्तिसंयोग-जनकभूमिभिन्नसमवेतत्ववत्स्वात्मसमवेतत्वाभाववत्प्रयाणानुकूलवर्त्तमानकृ-तिमानित्यन्वयबोधः, अत्र च जनकान्तं भूमिभिन्नसमवेतत्वं स्वभिन्नसमवेत-त्वाभाववत्त्वञ्च एकत्र द्वयमिति रीत्या प्रयाणविशेषणं. एवं विहगो महीरुहं विजहातीति न स्वात्मानं इत्यादौ विहगः महीरुहभिन्नसमवेतमहीरुह-वृत्तिविभागजनकस्वात्मभिन्नसमवेतत्वाभाववद्विहानानुकूलवर्त्तमानकृतिमानि-त्यन्वयबोधः, विहानञ्च विभागावच्छिन्नस्पन्दः तदवच्छिन्नत्वञ्च जनकतासम्बन्धेन विभागविशिष्टत्वं विशेषणं पूर्व्ववदित्यन्यत्र विस्तरः। ननु भूमिं प्रयातीत्यादौ यथा कर्म्मप्रत्ययेन द्वितीयया स्वप्रकृत्यर्थभूम्यपेक्षया परसमवेतत्वं प्रत्याय्यते तथा विहगेन भूमिः प्रयातेत्यादावपि कर्म्मप्रत्ययेनाख्यातेन स्वप्रकृत्यर्थधा-त्वर्थप्रयाणापेक्षया परसमवेतत्वं प्रत्याय्यते तथाच विहगवृत्तिकृतिजन्य-प्रयाणभिन्नसमवेतप्रयाणजन्यफलाश्रयो भूमिरित्यन्वयबोधः फलं संयोग इति पर्य्यवसितं। न चेदं सम्भवति, विहगेन स्वात्मा प्रयायते इत्यादेः प्रसङ्गात्

**कर्म्मप्रत्ययार्थः। इयांस्तु विशेषो यद्वृत्परत्वं सुपा।**

'इयांस्त्विति, 'सुपा' कर्म्मविहितसुपा, 'प्रकृत्यर्थेति स्वार्थाधेयत्वादि-प्रकारीभूता या व्यक्तिः तदपेक्षिकमित्यर्थः, 'आदिपदात् अस्तु वा कर्म्माख्यातस्यैव द्वितीयादेरपि फलमर्थः इतिमते स्वार्थफलपरिग्रहः। इत्थञ्च भूमिं प्रयाति इत्यादौ भूमिवृत्तिसंयोगजनक-भूमिभिन्नसमवेतस्पन्दाश्रय इत्याद्यन्वयबोधः भूम्यादेर्भेदवदेकदेश-भेदेऽन्वयश्च द्वितीयार्थाधेयत्वादौ प्रकारीभूता या भूम्यादिव्यक्ति-स्तद्व्यक्तित्वावच्छिन्नप्रतियोगितासम्बन्धेन तथैव व्युत्पत्तेः, न तु प्रतियोगितासामान्येन, प्रकृत्यर्थतावच्छेदकावच्छिन्नप्रतियोगिता-कत्वसम्बन्धेन वा, आद्ये विहगस्य महीरुहगमनदशायां विहगो विहगं गच्छतीति प्रयोगापत्तेः विहगस्यापि व्यासज्यवृत्तिधर्म्मा-वच्छिन्नप्रतियोगिताकविहगभेदवत्त्वात्। द्वितीये प्रमेयं गच्छ-तीत्यादिव्यवहारस्यायोग्यत्वप्रसङ्गात्, विहगस्य विहगान्तरगमन-दशायामपि विहगो विहगङ्गच्छतीति व्यवहारस्यायोग्यत्वप्रसङ्गाच्च। उभयकर्म्मजसंयोगस्थलेऽपि मल्लो मल्लं गच्छति मेषो मेषं गच्छति इत्यादयः प्रयोगा इष्टा एव, स्वस्मिन् स्वनिष्ठसंयोगजनकस्वभिन्न-समवेतस्पन्दाश्रयत्वाभावाच्च मल्लः स्वं स्वयं गच्छतीत्यादिको न तत्र प्रयोगः। अथैवं दीर्घतन्त्वादिस्थले तन्तुः तन्तुं गच्छति इति

विहगवृत्तिकृतिजन्यप्रयागाभिन्नसमवेतप्रयागजन्यफलाश्रयत्वस्य भूमाविव विहगेऽपि सत्त्वात् संयोगस्य द्विष्ठत्वादित्यत आह, 'इयांस्त्विति, 'परत्वं' परसमवेतत्वं, 'सुपा' द्वितीयादिना, 'प्रकृत्यर्थापेक्षिकं' स्वप्रकृत्यर्थभूम्यादि-

व्यवहारो न स्यात् तन्तोर्गमने तन्तुभिन्नसमवेतत्वस्य बाधात्। न च संयोगस्य द्विष्ठतया स्वस्मिन् स्वसंयोगाभावेन तद्वाक्यमयोग्य-मेवेति वाच्यम्। संयोगस्य द्व्यवच्छिन्नत्वनियमेऽपि द्विसमवेतत्व-नियमे मानाभावेन स्वस्मिन्नपि स्वक्रियया अवच्छेदकान्तरे स्वसं-योगे बाधकाभावात् अन्यथा एकतन्तुकपटं प्रति असमवायिकारण-स्यासम्भवात् अंशुद्वयसंयोगस्य विरुद्धत्वात्, न हि तत्रांशुद्वयमेव पटसमवायिकारणं, द्रव्यवति द्रव्यान्तरानुत्पत्त्या तन्तुमत्यंशौ पटोत्पत्तेरसम्भवात् मूर्त्तयोः समानदेशताविरोधाच्च। न च द्रव्या-रम्भकतावच्छेदकसंयोगनिष्ठवैजात्यस्य फलबलकल्प्यतया तन्तुनिष्ठ-पवनादिसंयोग एव तत्र पटासमवायिकारणं तन्तोस्तादात्म्य-सम्बन्धेन पटसमवायिकारणतया च पवनादौ न पटोत्पत्तिः समवायिमात्रवृत्तिसंयोग एवासमवायिकारणमिति नियमस्य पाकजस्थल एव व्यभिचारादिति वाच्यम्। तथापि तत्र मूलाग्रा-वच्छेदेन तन्तुसंयुक्तस्तन्तुरिति प्रत्ययस्य विना बाधकं भ्रमत्वायोगात् इति चेत्, न, स्वस्मिन् स्वसंयोगाभ्युपगमेऽपि तन्तुस्तन्तुं गच्छती-त्यत्र तन्तुपदद्वयस्य तन्त्ववयवे लाक्षणिकत्वात् राम-रावणयोर्युद्धं राम-रावणयोरिवेत्यादौ सादृश्यघटकतद्भिन्नत्वांशस्येव कर्म्मप्रत्य-यार्थस्य परसमवेतत्वांशस्यापि बाधेन तत्रानन्वयेऽपि क्षतिविरहाच्च। न चैवं परसमवेतत्वस्यायोग्यतया अनन्वयेऽपि केवलाधेयत्वांशमादाय विहगस्य महीरुहगमनदशायां विहगो विहगं गच्छतीत्यपि प्रयो-गापत्तिरिति वाच्यम्। द्वितीयायाः कर्म्मत्वे लक्षणयैव केवलाधेय-त्वांशमादायापि तत्र तादृशप्रयोगस्येष्टत्वात्।

**प्रकृत्यर्थाद्यपेक्षिकं तिङादिना च स्वार्थफलाश्रयापे-**

केचित्तु परसमवेतत्वाधेयत्वाद्युभयविषयकशाब्दत्वस्यैव गम्यादि-धातुसमभिव्याहृतद्वितीयादिज्ञानकार्य्यतावच्छेदकतया केवलाधेयत्वांशमादाय विहगस्य महीरुहगमनदशायां विहगो विहगं गच्छतीति न प्रयोगः तन्तुस्तन्तुं गच्छतीत्यादौ तन्तुद्वयपदे लक्षणैव गतिः, गम्यादिपदसमभिव्याहृतत्वस्य द्वितीयादिविशेषणतया पचेः साकाङ्क्षत्वाद्विक्लित्तिजनकक्रियायां शक्तिरितिमते पाके परसमवेतत्वस्य बाधितत्वेऽपि तण्डुलं पचतीत्यादिवाक्यस्य नायोग्यत्वापत्तिर्न वा आत्मविषयकसाक्षात्कारस्य आत्मभिन्नसमवेतत्वेऽप्यात्मानमात्मा साक्षात्करोतीत्यादिवाक्यस्यायोग्यत्वापत्तिरित्याहुः ।

'तिङादिना चेति कर्म्मविहिततिङादिना चेत्यर्थः, 'आदिपदात् कर्म्मविहितकृत्परिग्रहः । 'स्वार्थफलाश्रयापेक्षिकमिति स्वार्थफलांशे विशेष्यीभूता या व्यक्तिस्तदपेक्षिकमित्यर्थः, प्रकृत्यर्थापेक्षया परत्वबोधने महीरुहगमनदशायामपि विहगो विहगेन गम्यते इति प्रयोगापत्तेः गमनस्य गमनभिन्नसमवेतत्वात्, एवञ्च भूमिर्गम्यते विहगेनेत्यादौ विहगनिष्ठकृतिजन्यभूमिभिन्नसमवेतसंयोगावच्छिन्नस्पन्दफलशालिनी भूमिरित्यन्वयबोधः । भेदे भूम्यादेः संसर्गश्च

भिन्नसमवेतत्वं, 'तिङ' कर्म्माख्यातेन, 'स्वार्थेति स्वार्थो यत्फलं तदाश्रयभूम्यादिभिन्नसमवेतत्वमित्यर्थः, तथाच भूमिभिन्नसमवेतत्वादिप्रत्ययः कर्तृकर्म्मस्थले तुल्य एव किन्तु कर्तृप्रत्ययस्थले कर्म्मप्रत्ययप्रकृत्यर्थो भूमिः कर्म्मप्रत्ययस्थले च न प्रकृत्यर्थ इत्येव विशेष इत्यर्थः । न चैवं प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानामिति व्युत्पत्तिविरोधः कर्म्मप्रत्ययस्थले परसमवेतत्वस्या-

तिङर्थफलांशे विशेष्यीभूता या व्यक्तिस्तद्व्यक्तित्वावच्छिन्नप्रतियोगितासम्बन्धेन तथैव व्युत्पत्तेः, व्युत्पत्तिवैचित्र्याच्च प्रथमान्तपदोपस्थाप्यस्याख्यातार्थे आख्यातार्थस्य धात्वर्थे विशेषणतया अन्वयः, स्वर्गकामो यजेतेत्यादाविव आख्यातार्थद्वयघटितस्यापि धात्वर्थस्यान्वयः, स्वभिन्नसमवेतगमनस्य स्वकर्तृकत्वाभावादुभयकर्मजसंयोगस्थले मल्लः स्वं स्वेन गम्यते इति न प्रयोगः इति भावः। एतच्च फलावच्छिन्नव्यापारस्य धात्वर्थत्वमिति प्रथमकल्पानुसारेण, स्याद्वा फल-व्यापाराविति द्वितीयकल्पे आश्रयत्वस्य कर्माख्यातार्थत्वमते आश्रयत्वांशे विशेष्यीभूता या व्यक्तिस्तदपेक्षिकमिति बोध्यम्। अन्वयबोधे त्वयं विशेषः यत्तदेतन्मते संयोगावच्छिन्नं न स्पन्दविशेषणं शालित्वञ्च प्रकार इति ध्येयम्।

केचित्तु भेद एवार्थो न तु भेदवदेकदेशान्वयापत्तेः भेदस्य च क्रियायां विशेषणत्व-समवायोभयघटितसामानाधिकरण्यसम्बन्धेनान्वय इत्याहुः।

केचित्तु परसमवेतत्वं परो वा न द्वितीयार्थः किन्त्वन्योन्याभावप्रतियोगितावच्छेदकत्वं प्रतियोगितावच्छेदकतासम्बन्धेनान्योन्याभावो वा द्वितीयादेरर्थः, अन्योन्याभावे च द्वितीयार्थाधेयत्वादौ प्रकारीभूता या व्यक्तिः सैव निष्ठतासम्बन्धेन प्रकार इति व्युत्पत्तेः

प्रकृत्यर्थभूम्यन्वितत्वादिति वाच्यं। अप्रकृत्यर्थभूम्यन्वितस्यापि तस्य प्रकृत्यर्थप्रयागे विशेषणत्वेन तदन्वयस्याप्रत्ययेन तादृशव्युत्पत्तेरविरोधात्। न हि प्रकृत्यर्थमात्रान्वितस्वार्थबोधकत्वव्युत्पत्तिः, असम्भवात् घटमानयेत्यादावपि घटान्वितकर्मत्वस्यानयनेऽप्यन्वयादिति दिक्।

**क्षिकं प्रत्याय्यते । घटं जानाति इच्छति कुरुते चैत्रः मैत्रेण ज्ञायते इष्यते क्रियते घट इत्यादौ सविषयक-**

तेन विहगस्य महीरुहगमनदशायां विहगो विहगं गच्छतीति प्रयोगो न योग्यः योग्यस्तु विहगस्य विहगान्तरगमनदशायां विहगो विहगं गच्छतीति प्रयोगः, कर्म्माख्यातस्थले तु तदर्थफलांशे विशेष्यीभूता या व्यक्तिः सैव निष्ठतासम्बन्धेनान्योन्याभावे प्रकार इति व्युत्पत्तिः तेन विहगस्य महीरुहगमनदशायां विहगो विहगेन गम्यते इति प्रयोगो न योग्यः योग्यस्तु विहगस्य विहगान्तर-गमनदशायां विहगो विहगेन गम्यते इति प्रयोग इत्याहुः । तद-सत् । जात्यतिरिक्तपदार्थस्य स्वरूपतोऽनवच्छेदकतया प्रतियोगिता-वच्छेदकत्वस्य विकल्पासहत्वादिति ध्येयम् ।

मुख्यसकर्म्मकधातुयोगे कर्म्मप्रत्ययस्थले अन्वयबोधं व्युत्पाद्य भाक्तसकर्म्मकधातुयोगे कर्म्मप्रत्ययस्थले अन्वयबोधं व्युत्पादयति, 'घटमित्यादिना ।

केचित्तु घटं जानातीत्यादौ घटो ज्ञायत इत्यादौ च कर्म्म-प्रत्ययस्याधेयत्वार्थकत्वे चानन्वयप्रसङ्ग इत्यत आह, 'घटमितीत्याहुः ।

'इत्यादावित्यादिपदात् द्वेष्टि द्विष्यत इत्यादेर्ग्रहणम् । 'स-विषयकेति, तथाच तादृशधातुसमभिव्याहार एव विषयित्वादि-

ननु द्वितीयाया आत्मनेपदस्य च फलार्थत्वे चैत्रेण घटोज्ञायते इत्यादौ च द्वितीयात्मनेपदार्थयोरनन्वयापत्तिः धात्वर्थज्ञानादेर्घटादिनिष्ठफलाजनक-त्वादित्यत आह, 'घटमित्यादि, 'सविषयकेति ज्ञानेच्छा-कृति-द्वेष-भावना-

पदार्थाभिधायिधातुयोगे कर्म्मप्रत्ययेन यथायथं विष-
यित्वं विषयत्वञ्च कर्त्तिङा स्वाश्रयत्वं तृतीयया

प्रत्ययनियामक इति भावः। 'यथायथमिति सुपा विषयित्वं कर्म्म-तिङा च विषयत्वमित्यर्थः, सुपा विषयत्वाभिधाने च घटं जानातीत्यादावयोग्यतापत्तेः विषयत्वस्य घटवृत्तित्वेन घटानिरूपितत्वात् ज्ञानस्य तदनाश्रयत्वाच्च। न चाधेयतासम्बन्धेन घटस्य विषयत्वे निरूपकतासम्बन्धेन च विषयत्वस्य ज्ञाने अन्वय इति वाच्यम्। इदं ज्ञानं न घटस्य इति व्यवहारानुपपत्तेः निरूपकतासम्बन्धस्य वृत्त्यनियामकतया अभावप्रतियोगितानवच्छेदकत्वात् आश्रयतासम्बन्धेन विषयत्वाभावस्य तदर्थत्वे घटीयज्ञानेऽपि नेदं ज्ञानं घटस्येति व्यवहारापत्तेः। वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितावच्छेदकत्वनयेऽपि तदभावस्य केवलान्वयित्वाभ्युपगमेन घटीयज्ञानेऽपि नेदं घटस्य ज्ञानमिति व्यवहारापत्तेः। एवं कर्म्मतिङा विषयित्वाभिधाने ज्ञायते घट इत्यादिव्यवहारानुपपत्तेः विषयित्वस्य ज्ञानवृत्तित्वेन ज्ञानानिरूपितत्वात् घटादेस्तदनाश्रयत्वाच्च। न चाधेयतासम्बन्धेन ज्ञानस्य विषयित्वे विषयित्वस्य च निरूपकतासम्बन्धेन घटादावन्वय इति वाच्यम्। तथा सति घटज्ञानदशायां घटो न ज्ञायत इति व्यवहारापत्तेः, निरूपकता-

बोधकधातुस्थले इत्यर्थः, 'कर्म्मेति द्वितीयया क्वचित् षष्ठ्या आत्मनेपदेन चेत्यर्थः, 'यथेति घटं जानामीत्यादौ कर्त्तृप्रत्ययस्थले द्वितीयाया विषयित्वं चैत्रेण ज्ञायते घट इत्यादौ चात्मनेपदस्य विषयत्वमित्यर्थः, 'विषयित्वं

चाधेयत्वं बोध्यते। अन्वयबोधे त्वयं विशेषः यद्देकच

सम्बन्धस्य वृत्त्यनियामकतया अभावप्रतियोगितानवच्छेदकत्वात्, वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितावच्छेदकत्वे तदभावस्य केवलान्वयित्वाभ्युपगमेन घटज्ञानदशायामपि घटो न ज्ञायत इति व्यवहारापत्तेः। अतएवाश्रयत्वसम्बन्धेन ज्ञानविषयित्वाभाव एव घटो न ज्ञायत इत्यस्यार्थ इत्यपि परास्तं। तथा सति घटज्ञानदशायामपि घटो न ज्ञायत इति व्यवहारापत्तेः घटस्य विषयित्वानाश्रयत्वात्। न च कृधातुयोगे कर्म्मप्रत्ययेनापि विषयत्वविषयित्वयोरभिधाने स्वर्गं करोति याज्ञिकः हविः करोति याज्ञिकः स्वर्गः क्रियते याज्ञिकेन हविः क्रियते याज्ञिकेन गगनं करोति श्रीकृष्णः गगनं क्रियते श्रीकृष्णेन इत्यादिरपि प्रयोगः स्यात् इति वाच्यं। साध्यत्वाख्यविषयित्व-साध्यत्वाख्यविषयत्वयोरेव धातुयोगे कर्त्तृ-कर्म्मप्रत्ययार्थत्वात् भ्रान्त्या गुरुतरभारोत्तोलनदशायां तदुत्तोलनानुत्पादेऽपि गुरुतरभारोत्तोलनं करोतीति व्यवहारस्येष्टत्वात्। न चैवं गुरुतरभारोत्तोलनं न कृतमिति व्यवहारो न स्यादिति वाच्यं। फलोपधानात्मकजन्यताविशिष्टसाध्यत्वाख्यविषयत्वाश्रयस्य कर्त्तृ-कर्म्मतदर्थत्वात्। वैशिष्ट्यञ्च क्रियाघटितसामानाधिकरण्यं साध्यत्वाख्यविषयत्वप्रवेशात् नान्तरीयके सत्तोभूतं न तु मयाकृतमिति व्यवहारोपपत्तिरिति भावः। 'एकचेति

---

विषयत्वमित्यस्य 'बोध्यते' इत्यनेनान्वयः, एवमग्रेऽपि तेन चैत्रो घटं जानातीत्यादौ घटविषयकज्ञानाश्रयश्चैत्र इत्यन्वयबोधः चैत्रेण घटोज्ञायते इत्यादौ च चैत्रवृत्तिज्ञानविषयो घट इत्य यबोधः एवमन्यदूह्यं। चैत्रो

कर्त्तर्य्याश्रयत्वं तत्र क्रिया तत्र विषयित्वं तत्र कर्म्म-विशेषणं। अन्यत्र कर्म्मणि विषयता तत्र क्रिया तत्रा-धेयत्वं तत्र च कर्त्तेति। ज्ञातो ज्ञाता नष्ट इत्यादौ

घटं जानाति चैत्र इत्यादौ इत्यर्थः, 'कर्त्तरि' चैत्रे, 'तत्र' आख्या-तार्थाश्रयत्वे, 'क्रिया' धात्वर्थः, 'तत्र' धात्वर्थे, 'तत्र' विषयितायां, 'अन्यत्रेति चैत्रेण ज्ञायते घट इत्यादावित्यर्थः, एवञ्च घटं जनाति चैत्र इत्यादौ घटवद्विषयितावज्ज्ञानवदाश्रयत्ववांश्चैत्र इत्यादिको-बोधः, मैत्रेण ज्ञायते घट इत्यादौ मैत्रवदाधेयत्वज्ञानविषयतावान् घट इत्यादिको बोध इति भावः। ननु मुख्य-भाक्तसाधारणसक-र्म्मकधातुयोग एव यदि द्वितीयादयः तदा घटं यतत इत्यादिरपि प्रयोगः स्यात् यत्यादिधातोरपि सविषयक्रियावाचित्वेन भाक्तसक-

घटं जानातीत्यादौ कर्त्तरि तिङा आश्रयत्वं चैत्रेण घटो ज्ञायते इत्यादौ च तृतीयया आधेयत्वं बोध्यते। ननु चैत्रेण घटो ज्ञायते इत्यादौ यदि कर्म्मप्रत्ययस्य विषयत्वं तृतीयायाश्चाधेयत्वं अर्थस्तदा चैत्रो घटं जानाती-त्यादौ वाक्ये चैत्रेण घटो ज्ञायते इत्यादिवाक्यैकवाक्यतानुपपत्तिः विशिष्टै-कार्थप्रतिपादकत्वविरहादित्यत आह, 'अन्यथेति, 'एकत्रेति चैत्रोघटं जानातीत्यादावित्यर्थः, 'तत्र' कर्त्तरि मुख्यविशेष्ये, 'क्रिया' ज्ञानादि, 'तत्र' क्रियायां ज्ञानादौ, 'तत्र' विषयितायां, 'कर्म्म' घटादि, 'अन्यत्र-चैत्रेण ज्ञायते घट इत्यादौ, 'कर्म्मणि' घटादौ मुख्यविशेष्ये, 'विषयते-त्यादौ विशेषणमित्यस्यानुषङ्गः, 'तत्र' विषयितायां, 'क्रिया' ज्ञानादि, 'तत्र' क्रियायां, 'तत्र च' आधेयत्वे च, 'कर्त्ता' चैत्रादिः, तथाच चैत्रोघटं जानाति चैत्रेण घटो ज्ञायते इत्यादौ विशेष्य-विशेषणभावभेदादेकवाक्यताभङ्गः सर्व्व-

कर्तृ-कर्म्म-क्तानां विषयाश्रय-प्रतियोगिबोधकत्वं। यतत-इत्यादौ यत्यादिनोपस्थिते यत्ने विषयित्वेन नान्वयः

र्मकत्वादित्यत आह, 'यतत इति, क्त्वादिना उपस्थिते यत्ने साध्यत्वाख्यविषयत्वेनैवान्वयो न तूद्देश्यत्वेन भोजनाय करोतीत्य-प्रयोगात्, अत उक्तं 'यत्यादिनेत्यादि, 'आदिपदात् यसुप्रयत्ने इति यसधातोः परिग्रहः। अतएव पाकाय प्रयासो न तु पाक-स्येति भावः। यत्यादिना लक्षणया उपस्थापिते ज्ञानादौ विषयता-सामान्येनान्वयादुक्तं 'यत्न इति, 'विषयित्वेन' विषयित्वावच्छिन्नत्व-प्रकारेण, आदिना साध्यतापरिग्रहः, 'उद्देश्यत्वेन' उद्देश्यत्वत्वावच्छि-

वादिसिद्ध इति भावः। ननु सविषयकार्थकधातुयुक्तकर्म्मप्रत्ययेन यदि विषयत्वं प्रतिपाद्यते तदा चैत्रेण ज्ञातो घट इत्यादौ कर्म्मप्रत्ययार्थ-घटयोरभेदान्वयबोधो न स्यादिति एवं सविषयकार्थकधातुयुक्तकर्तृप्रत्ययेन यद्याश्रयत्वं प्रतिपाद्यते तदा चैत्रो घटस्य ज्ञाता इत्यादौ घट-ज्ञात्रोर-भेदान्वयबोधो न स्यात्तथात् एवं घटो नष्ट इत्यादौ घटो नश्यतीतिवत्-प्रतियोगित्वात्मकत्वेन नष्टपदार्थ-घटयोरभेदान्वयबोधानुपपत्तिरित्यत आह, 'ज्ञातोज्ञातेत्यादि, 'कर्म्मेति, चैत्रेण घटो ज्ञात इत्यादौ कर्म्मक्ततो-विषयोऽर्थः चैत्रो घटस्य ज्ञातेत्यादौ कर्तृप्रत्ययस्य तृच आश्रयोऽर्थः घटो नष्ट इत्यादौ कर्तृप्रत्ययस्य क्ततः प्रतियोग्यर्थ इत्यादि स्वयमूह्यं। अतो ना-भेदान्वयबोधानुपपत्तिरिति भावः। ननु घटं करोतीत्यादिवत् घटं यतते इत्यपि स्यात् द्वितीयार्थविषयत्वस्य बोधादित्यत आह, 'यतत इत्यादाविति, 'विषयित्वेनेति, द्वितीयाद्यर्थः विषयित्वं यदि धातुजन्योपस्थितिसहकारेण यत्ने नान्वेति आकाङ्क्षाविरहादित्यर्थः तर्हि कथं तत्र घटादेरन्वय 'इत्यत-

किन्तूद्देश्यत्वेन पदस्याभाव्यात्। अतएवाभुञ्जानेऽपि भोजनाय यतते इत्यादयः प्रयोगाः।

त्वप्रकारेण, तथाच द्वितीयाया उद्देश्यत्वावच्छिन्नाबोधकतया तद्बोधकचतुर्थ्या घटाय यतत इत्यादिरेव प्रयोग इति भावः।

केचित्तु कृञादिना उपस्थापिते यत्न इव यत्यादिना उपस्थापिते यत्नेऽपि साध्यत्वाख्यविषयित्वप्रकारेणैवान्वयबोधः। न चैवं घटं यतत इत्येव प्रयोगापत्तिरिति वाच्यं। स्पृहधातूत्तरधातुयोगे चतुर्थ्या इव यत्यादिधातुयोगेऽपि चतुर्थ्या द्वितीयार्थबोधकत्वादित्याहुः।

तन्मतं निराकरोति, 'अतएवेति, 'अभुञ्जानेऽपि' भोजनसाध्यकप्रवृत्तिशून्येऽपि, भोजनोद्देश्यकप्रवृत्तिमतीति शेषः, भोजनं करोतीति च न तत्र प्रयोग इति भावः।

---

आह, 'किन्तूद्देश्यत्वेनेति, उद्देश्यत्वञ्च तत्प्रयोजनकत्वं विषयताविशेषोवेत्यन्यदेतत्, तथाच उद्देश्यत्वबोधाय यतियोगे च चतुर्थीप्रयोग एव साधुरिति भावः। ननु द्वितीयया यतेः कथं नाकाङ्क्षा इत्यत आह, 'पदेति, तथाच फलबलेनाकाङ्क्षाकल्पनं अत्र च फलाभावात् न तथाकाङ्क्षेति भावः। ननु न केवलं यत्यर्थे द्वितीयार्थविषयत्वान्वये आकाङ्क्षाविरहमात्रं बाधकमपि तु योग्यताविरहेऽपीत्याह, 'अत एवेति यत्यर्थे द्वितीयाद्यर्थविषयित्वादेरन्वयानङ्गीकारादेवेत्यर्थः, 'अभुञ्जानेऽपि' भोजनविषयकयत्नविरहिण्यन्नाद्युपादानकर्त्तर्य्यपि, अन्नाद्युपादानकाले च भोजनोद्देश्यकान्नाद्युपादानानुकूलकृतिरेव वर्त्तते इति न तादृशप्रयोगानुपपत्तिरिति भावः।

**धातोरर्थः फलमनुकूलव्यापारो व्यापारमात्रं वा, आख्यातस्य जन्य-जनकभावः संसर्गमर्य्यादया लभ्यः ।**

मण्डनमतमाह, 'धातोरिति, 'फलमिति संयोगत्वादिविशिष्टमित्यर्थः, एवञ्च यादृशफलावच्छिन्नव्यापारवत्त्वं यद्धातोर्नैयायिकैरूप्यते तद्धातोस्तादृशरूपेण फलमित्यर्थः, तच्च पचेर्विक्लित्तिः, त्यजेर्विभागः, गमेः संयोगः, ददाति-क्रीणातीत्यादेर्विलक्षणस्वत्वादि, त्यजि-गमिप्रभृतीनां पर्य्यायतावारणस्य तावतापि सम्भवेन व्यापारान्तर्भावेन शक्यतायां गौरवादिति भावः । अनुकूलतान्तर्भावे गौरवादेकदेशान्वयापत्तेश्चाह, 'व्यापारमात्रं वेति, 'आख्यातार्थ इत्यनुषज्यते, व्यापारत्वं धर्म्मत्वं । नन्वेवं गौरवं धर्म्मत्वस्याखण्डोपाधित्वेऽपि प्रवृत्तित्वस्य जातित्वेन तदपेक्षया गुरुत्वात् । न च व्यापारत्वं प्रवृत्तित्वमेवेति वाच्यं । पचेतेत्यादौ विध्यर्थस्य कृतिसाध्यत्वस्यानन्वयप्रसङ्गादिति चेत्, न, पचतीत्यत्र पचेर्विक्लित्तिजनकक्रियात्वस्यानन्तपदार्थघटितस्य शक्यतावच्छेदकत्वकल्पनामपेक्ष्य पचेर्विक्लित्तित्वस्य तिपोधर्म्मत्वरूपव्यापारत्वस्याखण्डधर्म्मस्य शक्यतावच्छेदकत्वकल्पनाया एव लघीयस्त्वात् । न च तिबादीनां लघुतरं प्रवृत्तित्वमपहाय धर्म्मत्वरूपव्यापारत्वस्योपाधिरूपस्य शक्य-

मण्डनमतं दूषयितुमुत्थापयति, 'धातोरर्थ इति फलावच्छिन्नव्यापारबोधकत्वेन सिद्धान्तसिद्धस्य गम्यादिधातोः फलमर्थ इत्यर्थः । लाघवादाह, 'व्यापारमात्रमिति आख्यातस्यार्थः इत्यन्वयः, 'मात्रपदेनानुकूलत्वव्यवच्छेदः । नन्वेवं पचतीत्यादौ व्यापारे कथं धात्वर्थफलानुकूलत्वस्य लाभ इत्यत आह, 'आख्यातस्येति, 'जन्येति धात्वर्थफलाख्यातार्थव्यापारयोर्जन्य-जनक-

लडादितिङाद्यर्थौ वर्त्तमानत्वादीष्टसाधनत्वादिकमेक-
पदोत्तरत्वप्रत्यासत्त्या तत्रैवान्वेति भावप्रत्ययस्य घञा-

तावच्छेदकत्वकल्पनामपेक्ष्य धातूनां कियतां तत्तत्फलजनक-तत्तद्व्यापारत्वस्य शक्यतावच्छेदकत्वकल्पनमेव साध्विति वाच्यं। तिवादिकमपेक्ष्य धातूनां स्वल्पत्वाभावादिति भावः। 'जन्य-जनक-भाव इति फल-व्यापारयोर्जन्य-जनकभावस्तयोः संसर्गमर्य्यादया लभ्य-इत्यर्थः, पचति चैत्र इत्यादौ आख्यातार्थव्यापारस्य क्रियादिरूपस्य स्वजनककृत्याश्रयत्वसम्बन्धेनैव चैत्रादावन्वय इति भावः। 'वर्त्त-मानत्वादीत्यादिपदात् अतीतत्व-भविष्यत्त्वयोरुपग्रहः, 'इष्टसाधन-त्वादिकमित्यादिपदात् कृतिसाध्यत्व-बलवदनिष्टाननुबन्धित्वांशपरि-ग्रहः। 'तत्रैवेति आख्यातार्थव्यापार एवेत्यर्थः। जानाति-जानी-यादित्यादाविव धात्वर्थ एव तदन्वये फलानुत्पाददशायां व्यापार-सत्त्वेऽपि पचतीति प्रयोगो न स्यात्, स्याच्च पक्ष्यतीत्यादिप्रयोगः, न स्याच्च व्यापारातीतत्वदशायां फलसत्त्वे पपाचेति प्रयोगः, न स्याच्च काशीं गच्छेदित्यादौ काशीसंयोगजनकक्रियाया इष्टसाधन-त्वादिलाभ इति भावः। भावविहितघञादेर्निरर्थकत्वेन वक्ष्यमा-णदूषणापत्तिरत आह, 'भावेति, भविष्यत्त्वस्य घञर्थव्यापार एवा-

---

भाव इत्यर्थः। 'लडादीति चैत्रः पचतीत्यादौ लडर्थोवर्त्तमानत्वं चैत्रः पचेतेत्यादौ लिङर्थ इष्टसाधनत्वं अन्वेतीत्यन्वान्वितं, 'एकपदेति, एकेना-ख्यातपदेन व्यापारवर्त्तमानत्वाद्योर्बोधनादिति भावः। 'तत्रैव' आख्यातार्थ-व्यापार एव, 'भावप्रत्ययस्येति पाक इत्यादिस्थले भावविहितस्य घञादेरि-

देरनुकूलव्यापार एवार्थः। तेन व्यापारसत्त्वे फला-नुत्पाददशायां पाकोभविष्यतीति न प्रयोगः। न वा व्यापारविगमे फलसत्त्वे पाको विद्यते इति। नापि घट-भूतलयोर्म्मिथःसंयोग इतिवत् मिथोगमनमि-

न्वयात् तस्य च तदानीं बाधान्न तत्प्रयोग इति भावः। 'विद्यत-इतीति 'न प्रयोग इत्यनुषज्यते, 'मिथ इति, गमधात्वर्थस्य संयो-गात्मकफलस्य द्विष्ठत्वेऽपि लुङर्थस्य तदनुकूलव्यापारस्य स्पन्दरूप-स्याद्विष्ठत्वादिति भावः। 'इत्यादीत्यादिपदात् महीरुह-विहगयो-र्मिथस्त्याग इत्यादेः परिग्रहः। ननु धात्वर्थत्वे धात्वर्थतावच्छेदकी-भूतफलशालित्वं कथं कर्म्मत्वमित्यत आह, 'प्रत्ययेति तत्तद्धातुसम-भिव्याहृतप्रत्ययोपनीतपरसमवेतव्यापारजन्यधात्वर्थफलशालित्वं तत्त-द्धातुकर्म्मत्वमित्यर्थः, अत्र तत्तद्धात्वर्थफलशालित्वमाचोक्तौ चैत्रो-

---

त्यर्थः, व्यापारोऽर्थः अनुकूलत्वं संसर्ग इति भावः। नन्वेतन्मतेऽपि घञो व्यापारबोधकत्वे मानाभाव इत्यत आह, 'तेनेति, व्यापारस्य घञर्थत्वा-भावे पाको भविष्यतीत्यादौ धात्वर्थफले एव भविष्यत्त्वादेरन्वयोवक्तव्य-स्तथाच विक्लित्तिरूपफलानुकूलव्यापारस्य वर्त्तमानत्वेऽपि विक्लित्त्यनुत्पाद-दशायां पाको भविष्यतीति प्रयोगो वस्तुगत्या न भवति स स्यादित्यर्थः। व्यापारस्य घञर्थत्वाभावे दूषणान्तरमाह, 'न वेति, 'व्यापारविगमे' व्यापारीभूतस्याल्यग्निसंयोगादिनाशे, 'फलसत्त्वे' विक्लित्तिरूपफलसत्त्वे, 'इती-त्यस्य 'न वेत्यनेनान्वयः। अनयोर्दोषयोरिष्टापत्तावपि न प्रतिकार इत्यभि-प्रेत्याह, 'नापीति, गमनमित्यत्र भावघञो व्यापारार्थकत्वाभावे गमनमित्यस्य संयोग इत्येवार्थः, तथाच घट-भूतलयोर्मिथोगमनमित्यस्य योग्यत्वापत्तिः

त्यादि, प्रत्ययोपनीतपरसमवेतव्यापारजन्यधात्वर्थफ-
लशालित्वञ्च कर्म्मत्वं फलनिष्ठाधेयत्वं द्वितीयादिना

ग्रामं गच्छतीत्यादौ ग्रामस्येव चैत्रस्यापि कर्म्मत्वापत्तिः गम्यर्थस्य फलस्य ग्रामसंयोगस्य चैत्रेऽपि सत्त्वादतोजन्यान्तं फलविशेषणं, व्यापारजन्यत्वमात्रोक्तावपि तद्‌गम्यर्थफलस्य ग्रामसंयोगस्य चैत्रसमवेतक्रियाजन्यतया तद्दोषतादवस्थ्यं अतः परसमवेतत्वं व्यापारविशेषणं, चैत्रसमवेतक्रिया च न चैत्रान्यसमवेता तद्‌गम्यर्थफलस्य ग्रामसंयोगस्यापि चैत्रान्योग्रामावयवः तत्समवेतव्यापारो ग्राम एव तज्जन्यत्वात् तद्दोषतादवस्थ्यमत उपनीतान्तं व्यापारविशेषणं, चैत्रो ग्रामं गच्छतीत्यत्र च ग्रामो न तिङ्प्रत्ययोपनीतः किन्तु चैत्रक्रियैव तदुपनीता, चैत्रो ग्रामस्य गन्तेत्यत्र कृत्प्रत्ययोपनीतः चैत्रान्यचैत्रावयवसमवेतः चैत्र एव तज्जन्यप्रकृतगम्यर्थसंयोगाश्रये चैत्रेऽतिव्याप्तिरतो-

व्यापारस्य युङर्थत्वे च स्पन्दरूपएव संयोगानुकूलव्यापारोगमनमित्यस्यार्थो भविष्यति स च नोभयवृत्तिरिति नोक्तप्रसङ्ग इति भावः। ननु फलमात्रस्य धात्वर्थत्वे धात्वर्थतावच्छेदकफलशालित्वं कर्म्मलक्षणं न सम्भवति असम्भवात् अन्यच्च कर्म्मत्वं दुर्व्वचमिति कथमेतदित्यत आह, 'प्रत्यय इति, प्रत्ययोपनीतो यः परसमवेतव्यापारस्तज्जन्यं यत्फलं तच्छालित्वमेव कर्म्मत्वमित्यर्थः, परत्वं स्वभिन्नत्वं, स्वपदञ्च यत्र ग्रामादौ कर्म्मत्वं ग्राह्यं तत्परं, इत्यञ्च प्रत्ययोपनीतपरत्वानुपादाने गमिधात्वर्थकर्म्मत्वस्य स्वस्मिन् स्यात् स्वभिन्नसमवेतादृष्टात्मकव्यापारजन्यधात्वर्थशालित्वस्य स्वस्मिन्नपि सत्त्वादिति 'प्रत्ययोपनीतेति तद्धातूत्तरप्रत्ययप्रतिपाद्येत्यर्थः, गच्छतीत्यादौ चादृष्टादिव्यावृत्तानुकूलताविशेषसंसर्गत्वात् स्पन्दस्यैव बोध इति न तत्रादृष्टस्य

व्यापारनिष्ठञ्च तृतीयादिना अभिधीयते एवञ्च तण्डुलं पचति चैत्र इत्यस्य तण्डुलवृत्तिफलविशेषजनकव्यापारवांश्चैत्रः मैत्रेण पच्यते तण्डुल इत्यस्य मैत्रनिष्ठ-

'व्यापारेति, तथाच व्यापारत्वेन प्रत्ययोपनीतेत्यर्थः । चैत्रो ग्रामं गच्छतीत्यत्र तादृशव्यापारजन्यसाक्षात्कारशाल्यात्मनि तादृशव्यापारजन्यविभागाश्रयपूर्व्वदेशेऽतिव्याप्तिवारणाय तद्धात्वर्थेति फलविशेषणं, फलपदञ्च स्वरूपकथनमिति भावः । फलस्य धातुलभ्यत्वादाधेयत्वं द्वितीयाद्यर्थमाह, 'फलेति, 'आदिपदाभ्यां कृद्योगे कर्त्तृ-कर्म्मषष्ठ्योः परिग्रहः, 'फलविशेषेति विक्लित्तीत्यर्थः, 'व्यापारः' क्रिया, तद्वत्ता च चैत्रस्य स्वजनककृत्याश्रयत्वसम्बन्धेन, न तु व्यापारः प्रकृते कृतिरेव, चैत्रः पचेतेत्यादौ विध्यर्थस्य कृतिसाध्यत्वस्य तत्रानन्वयापत्तेः । 'मैत्रनिष्ठेति, निष्ठता च स्वनिष्ठकृतिजन्यतासम्बन्धेन, 'फलविशेषशाली-

---

प्रतिपाद्यतेति भावः । परसमवेतत्वानुपादानेऽपि स एव दोषः स्यादिति तदुपादानं, वर्त्तमानत्वादेस्तत्तत्क्रियादिरूपकालोपाधिरूपप्रत्ययोपनीतपरसमवेतव्यापारतया तज्जन्यधात्वर्थसंयोगादिशालित्वमादाय स एव दोष इति 'व्यापारेति, व्यापारपदोपदानाच्च व्यापारत्वेन प्रत्ययोपनीतत्वलाभान्नोक्त दोषः, धात्वर्थपदानुपादाने च पूर्व्वदेशादौ गम्यादिकर्म्मत्वापत्तिः प्रत्ययोपनीतपरसमवेतस्पन्दरूपव्यापारजन्यविभागादिशालित्वादिति तदुपादानं, विभागादेश्च न गम्याद्यर्थत्वमिति नातिप्रसङ्गः, 'एवञ्चेति द्वितीयादेराधेयत्वार्थत्वे चेत्यर्थः, 'फलविशेषेति विक्लित्तीत्यर्थः । नन्वेवं कर्त्तृ-कर्म्मप्रत्ययस्थले तुल्यवत्पदार्थबोधाद्युपगमे वैपरीत्येन कर्त्तृ-कर्म्मव्यवहारापत्तिः इत्यत आह, 'फलेति, तथाच धात्वर्थविशेषणकप्रत्ययार्थव्यापारविशेष्यक-

व्यापारजन्यफलविशेषशाली तण्डुल इत्यर्थः। फल-व्यापारयोर्विशेषण-विशेष्यभावभेदादेव कर्तृ-कर्म्मप्र-

---

ति, शालित्वमपि कर्म्माख्यातस्यार्थः, नामार्थ-धात्वर्थयोर्भेदेनान्वया-नभ्युपगमात् एतन्मतेऽपि कर्म्मप्रत्ययस्य परसमवेतत्वमप्यर्थः, तच्च व्यापारेऽन्वेति परत्वन्तु कर्म्मविहितसुपा स्वार्थाधेयत्वान्वितव्यक्त्यपेक्षया, कर्म्मविहिततिङा च स्वार्थाश्रयत्वविशेष्यीभूतव्यक्त्यपेक्षया प्रत्याय्यते। अतएव चैत्रोग्रामं गच्छतीत्यत्र चैत्रश्चैत्रं गच्छति चैत्रश्चैत्रेण गम्यते इत्यादयो न प्रत्ययाः इत्यश्च ग्रामं गच्छति चैत्र इत्यत्र ग्रामवृत्ति-संयोगजनकग्रामभिन्नसमवेतव्यापारवांश्चैत्र इत्यन्वयबोधः, चैत्रेण ग्रामो गम्यत इत्यत्र चैत्रवृत्तिग्रामभिन्नसमवेतव्यापारजन्यसंयोगा-श्रयत्ववान् ग्राम इति बोधः, शेषं पूर्व्वोक्तदिशावसेयं। ननूभय-त्रैवाख्यातस्य व्यापारबोधकत्वे कर्त्तृ-कर्म्मप्रत्ययव्यवहारभेदः कुत-इत्यत आह, 'फल-व्यापारयोरिति, तथाच फलविशेषणकस्वार्थव्या-पारविशेष्यकबोधजनकप्रत्ययत्वं कर्त्तृप्रत्ययत्वं, स्वार्थव्यापारविशेषणक-फलविशेष्यकबोधजनकत्वञ्च कर्म्मप्रत्ययत्वमिति भावः। ननु चैत्रेण-पक्वस्तण्डुल इत्यत्र तृतीयाया व्यापारार्थकत्वमावश्यकमन्यथा क्त एव व्यापाराश्रयार्थकत्वे कर्म्मणा सममनन्वयप्रसङ्गात्, तथाच सङ्ख्या-काल-

---

बोधजनकप्रत्ययस्य कर्त्तृप्रत्ययः धात्वर्थविशेष्यकप्रत्ययार्थव्यापारविशेषणक-बोधजनकप्रत्ययस्य कर्म्मप्रत्ययः इति न वैपरीत्यमिति भावः। आख्यातार्थ-व्यापारस्य धात्वर्थविशेष्यतया अन्वयस्य पचतीत्यादिस्थले व्युत्पन्नत्वेन पच्यत-इत्यादौ व्यापारविशेषणकधात्वर्थविशेष्यकान्वयबोधो न सम्भवति उक्तव्युत्प-

त्ययव्यवहारः। वस्तुतस्त्वाख्यातस्यैव तृतीयाया अपि व्यापार एवार्थः कर्म्माख्यातस्य च धात्वर्थफलनिरूपितमधिकरणत्वं, कर्म्मकृत आश्रयः, कर्तृकृतश्च व्यापाराश्रयः, कर्म्म-कर्तृसामानाधिकरण्यानुरोधात् जा-

---

घटितधर्म्माद्यतिरिक्ताख्यातार्थस्य धात्वर्थविशेष्यत्वमेवेति व्युत्पत्तिभङ्गो नोचित इत्याशयेनाह, 'वस्तुतस्त्वति, 'आख्यातस्यैव' कर्त्तृविहिताख्यातस्यैव, 'तृतीयाया अपीति कर्म्मविहिताख्यातस्थले कर्म्मवाचकपदोत्तरतृतीयाया अपीत्यर्थः,। 'अधिकरणत्वमिति, धात्वर्थनामार्थयोर्भेदेनान्वयबोधासम्भवादिति भावः। एतच्च पूर्व्वकल्पसाधारणं परन्तु तत्कल्पे व्यापारोऽर्थः, अत्राधिकरणत्वमात्रं। 'कर्म्मकृत इति, एतदुभयमपि पूर्व्वकल्पसाधारणं, 'व्यापाराश्रयः' व्यापारवान्। नन्वत्रापि आश्रयत्वे व्यापारे च शक्तिः क्रियतां किं विशिष्टशक्तिस्वीकारेणेत्यत आह, 'कर्म्म-कर्त्रिति 'कर्म्म-कर्तृभ्यां तदर्थस्याभेदान्वयबोधादित्यर्थः, जानातीत्यादौ फल-व्यापारयोरप्रतीते-

---

पत्तिविरोधादित्यत आह, 'वस्तुतस्त्विति, तथाच कर्म्मप्रत्ययस्थले आख्यातार्थव्यापारो न भासते किन्तु तृतीयार्थव्यापार एवेति नोक्तव्युत्पत्तिभङ्ग इति भावः। ननु कर्म्मप्रत्ययस्थले फलस्य धात्वर्थस्य कथं नामार्थे तण्डुलादौ भेदेन साक्षादन्वयो व्युत्पत्तिविरोधादित्यत आह, 'सामानाधिकरण्येति तत्र स्थले नामार्थ-प्रत्ययार्थयोरभेदान्वयबोधस्यानुभवसिद्धस्यानुरोधादित्यर्थः। नन्वेतन्मते यदि प्रत्ययार्थवर्त्तमानातीतत्वादिकं जानातीत्यादिवत् धात्वर्थफले ऽन्वितं तदा तस्य फलस्य भावित्वदशायां व्यापारस्य वर्त्तमानत्वेऽपि पच्यत-इत्यादिप्रयोगो न स्यात् एवं व्यापारस्यातीतत्वे फलस्य विद्यमानतादशायां

नातीत्यादिप्रयोगे तु पूर्व्वोक्तैव रीतिरनुसर्त्तव्या। चैत्रेण पच्यते पक्व इत्यादौ सुवर्थ एव व्यापारे वर्त्त-

राह, 'जानातीत्यादि, 'पूर्व्वोक्तैवेति, धातोर्ज्ञानादिकं प्रत्ययस्य यथायथमाश्रयत्व-विषयत्वादिकं अर्थ इति भावः। एवं नश्य-तीत्यादावपि प्रतियोगित्वादिकमर्थो बोध्यः। ननु चैत्रेण पच्यत इत्यादौ यदि तृतीयाया एव व्यापारोऽर्थः न तु धात्वा-ख्यातयोः तदा व्यापारे वर्त्तमानत्वान्वयो न स्यात् जानातीत्यादौ धात्वर्थे पचतीत्यादौ स्वार्थ एव वर्त्तमानत्वाद्यनुभावकस्य लड़ा-देर्व्युत्पन्नत्वात् धात्वर्थफल एव तदन्वयाभ्युपगमेऽपि फलस्य वर्त्तमान-त्वदशायां तथा प्रयोगापत्तेरत आह, 'चैत्रेणेति, तथाच फलबला-देवमपि क्वचिद्व्युत्पत्तिरिति भावः। पूर्व्वकल्पेऽपि चैत्रेण पक्वस्तण्डुल-इत्यत्र इदं स्वीकार्य्यं तत्र तृतीयाया एव व्यापारोऽर्थः, क्तस्त्वाश्र-यमात्रं, अन्यथा क्तो व्यापाराश्रयार्थकत्वे कर्म्मणा सहानन्वयप्रसङ्गात् इति बोधनाय 'पक्व इत्युक्तं। एतच्चापाततः तृतीयान्तपदसमभि-व्याहृते पच्यते तण्डुलः तण्डुलः पक्व इत्यादौ वर्त्तमानत्वादेरनन्वय-प्रसङ्गात्। न च वर्त्तमानत्वादिकमनन्वितमेवेति वाच्यं। तथा सति पच्यमाने तण्डुले अयं तण्डुलः पच्यते अयं तण्डुलः पक्व-इति व्यवहारापत्तिः। न चैवं पूर्व्वकल्पेऽपि चैत्रेण पच्यमानस्तण्डुल-

पक्वस्तण्डुल इत्यादिप्रयोगानुपपत्तिरित्यत आह, 'चैत्रेणेति, 'सुवर्थ एवेति, 'वस्तुतस्त्वितिमतानुसारेण पूर्व्वमते चाख्यातार्थव्यापार एवान्वयो बोध्यः। ननु पचमान इत्यादौ व्यापाराश्रयस्य कृदर्थत्वेन व्यापारस्य तदेकदेशतया

मानत्वाद्यन्वयः पचमानः पक्ववानित्यादौ पुनर-नायत्या पदार्थतावच्छेदक एव व्यापारे तदन्वयः। स्तां वा व्यापाराश्रयौ शक्यौ विशिष्टमन्वयबललभ्यं एव-

इत्यादौ वर्त्तमानत्वाद्यन्वये का गतिरिति वाच्यं। वक्ष्यमाणदिशैव तस्योपपादनीयत्वादिति ध्येयं। 'पचमान इति, एतदपि पूर्व्वकल्प-साधारणं, 'पदार्थतावच्छेदके' कृत्प्रत्ययार्थतावच्छेदके, 'तदन्वयः' वर्त्तमानत्वाद्यन्वयः। एकदेशान्वयासहिष्णुतायामाह, 'स्तां वेति, व्यापारवानाश्रय इति चान्वयबोधः अन्यथा आश्रयत्वे निरूपित-त्वसम्बन्धेन व्यापारस्यान्वये तत्रैवैकदेशान्वयतादवस्थ्यात्, एवञ्च पूर्व्वकल्पे कृतीयार्थे वर्त्तमानत्वान्वयो व्यापारोऽत्र कृतीयार्थोऽनभ्यु-पेयः किन्तु चैत्रेण पच्यमानस्तण्डुल इत्यादौ कर्म्मकृतोऽपि व्यापा-राश्रयौ पृथगेव शक्यौ व्यापारस्तृतीयार्थाधेयत्वस्य विशेष्यतया जन्यतासम्बन्धेन धात्वर्थे फले विशेषणतया चान्वेति, फलञ्चाश्रये, आश्रयश्चाभेदेन कर्म्मणीति ध्येयं। नन्वेकपदजन्योपस्थितिविशेष्ययोः

कथं तत्र वर्त्तमानत्वान्वय इत्यत आह, 'पचमान इत्यादि, 'अनायत्या' अन्यथानुपपत्त्या, 'तदन्वयः' शानजाद्यर्थे वर्त्तमानत्वान्वयः, ईदृशमेकदेशा-न्वयमनभ्युपगम्याह, 'स्तां वेति, 'शक्यौ' शानजादिशक्यौ, 'विशिष्टं' व्यापा-राश्रयस्वरूपं, 'अन्वयबललभ्यं' व्यापाराश्रययोः पदार्थयोः परस्पराकाङ्क्षा-योग्यतादिगम्यं। ननु मृगोऽस्तीत्यादौ सामान्यहरिणपशुविशेषवाचकान्मृग-पदात् पशुर्हरिण इत्याकारकशाब्दबोधवारणाय एकपदोपात्तयोर्विशेष्य-विशेषणभावेनान्वयः प्रतिसिद्ध इति कथमेकपदोपात्तयोर्व्यापाराश्रययो-

कारस्यैवान्ययोगव्यवच्छेदादौ अन्ययोगप्रतियोगिक-व्यवच्छेदस्यातिप्रसक्तत्वात् अन्ययोगत्वावच्छिन्नप्रति-योगिकव्यवच्छेदस्य शक्यत्वे शक्याप्रसिद्धिः बाधितत्वञ्च

परस्परमनन्वयात् कथमेवमत आह, 'एवकारस्येवेति, तथाच तत्रे-वात्रापि एकपदार्थयोरन्वयोनाव्युत्पन्न इति भावः। ननु तत्रापि अन्ययोगव्यवच्छेदविशिष्ट एवार्थो न तु अन्ययोगव्यवच्छेदौ पृथक् शक्यौ इत्यत आह, 'अन्ययोगेति, 'अतिप्रसक्तत्वादिति पार्थान्य-स्मिन्नपि सत्त्वादित्यर्थः, तथाच पार्थ एव धनुर्धर इतिवत् पार्थ-एव द्रव्यदित्यादेरपि प्रसङ्गः पार्थान्यगुणादितादात्म्यव्यवच्छेदस्य द्रव्यत्वावच्छेदेन सत्त्वादिति भावः। 'शक्याप्रसिद्धिरिति, पार्थ एव धनुर्धर इत्यादौ तादात्म्यरूपान्ययोगस्थले अन्यत्वस्य केवलान्वयि-

विशेषण-विशेष्यभावेनान्वयो भविष्यतीत्याशङ्कामपाकर्त्तुमाह, 'एवकारस्ये-वेति, पार्थएव धनुर्धरत्वमित्यादौ धनुर्धरत्वे पार्थान्ययोगव्यवच्छेदबोधाय यथा अन्ययोगे व्यवच्छेदे च खण्डशक्तिरेकपदोपात्तयोश्च विशेषण-विशेष्य-भावेनान्वयोव्युत्पन्नस्तथा शानजादिस्थलेऽपि वक्तव्यमित्यर्थः। ननु पार्थ एव धनुर्धरत्वमित्यादौ खण्डशक्तिस्वीकारेऽप्येकदेशे अन्यत्वे पार्थादेरन्वयो वाच्यस्तथाच तत्र लाघवादन्ययोगव्यवच्छेदे एकैव शक्तिरिति दृष्टान्त-दार्ष्टान्तिकवैषम्यमित्यत आह, 'अन्ययोगप्रतियोगिकव्यवच्छेदस्येति उभया-भाव-विशिष्टाभावसाधारणस्यान्ययोगव्यवच्छेदस्येत्यर्थः, 'अतिप्रसक्तत्वात्' पार्थएव धनुर्धरत्वमित्यादौ पार्थान्ययोग-घटोभयत्वावच्छिन्नप्रतियोगिताक-व्यवच्छेदस्यान्ययोगव्यवच्छेदस्य द्रव्यत्वादावपि सत्त्वात् तथाच पार्थएव द्रव्यत्व-मित्यादेरपि प्रसङ्ग इति भावः। 'शक्याप्रसिद्धिरिति, अन्ययोगस्य केव-

त्वेन तत्तादात्म्यस्यापि केवलान्वयितया तत्सामान्यव्यवच्छेदाप्रसिद्धि-रित्यर्थः। 'बाधितत्वञ्च पार्थ एवेत्यादाविति‌च्छेदः, पार्थ एव धनु-र्धरत्वमित्यादौ समवेतत्वादिरूपान्ययोगव्यवच्छेदस्थले बाधितत्वञ्चे-त्यर्थः। गुरुधर्म्मस्याभावप्रतियोगितावच्छेदकत्वनये अन्यसमवेतत्वस्य समवेतत्वापेक्षया गुरुत्वेऽपि तदवच्छिन्नाभावस्यासमवेतप्रसिद्धस्य धनुर्धरत्वादौ बाधितत्वात् पार्थस्यापि किञ्चिदपेक्षया अन्यत्वादिति भावः। दूषणान्तरमाह, 'पार्थान्ययोगत्वेति, 'योगत्वं' समवेतत्वं, 'तस्य' अन्यसमवेतत्वावच्छिन्नव्यवच्छेदस्य, 'ततः' पार्थान्यसमवेतत्वावच्छिन्न-व्यवच्छेदतः, सामान्याभावस्य विशेषाभावतो भिन्नत्वात् अन्यनिष्ठश-क्त्या च नान्यप्रतिपत्तिरिति भावः।

यत्तु 'बाधितत्वञ्चेतिच्छेदः, पृथिव्यामेव गन्ध इत्यादौ समवेत-त्वरूपान्ययोगस्थले बाधितत्वञ्चेत्यर्थः, पृथिव्या अपि किञ्चिदपेक्षया

---

त्वान्वयित्वात् तत्त्वावच्छिन्नप्रतियोगिताकव्यवच्छेदस्याप्रसिद्धिरित्यर्थः। नन्वन्य-समवेतत्वावच्छिन्नप्रतियोगिताकव्यवच्छेदे एवकारस्य शक्तिर्वाच्या स चासम-वेताभवादावेव प्रसिद्ध इति नाप्रसिद्धिरित्यत आह, 'बाधितत्वमिति, पार्थ एव धनुर्धरत्वमित्यादौ धनुर्धरत्वेऽन्यसमवेतत्वावच्छिन्नप्रतियोगिताकव्यव-च्छेदस्य बाधितत्वमित्यर्थः, तथाच पार्थ एव धनुर्धरत्वमित्यादिप्रयोगोऽयोग्यः स्यादिति भावः। इदञ्च गुरुधर्म्मस्य प्रतियोगितावच्छेदकत्वमते अन्यथान्य-समवेतत्वाभावस्य लाघवेन समवेतत्वावच्छिन्नप्रतियोगिताकत्वेनाप्रसिद्धेर-परीहारादिति ध्येयं। नन्वन्यसमवेतत्ववृत्तिप्रतियोगितावच्छेदकतावच्छेद-कताकत्वमेव एवकारशक्यतावच्छेदकं तच्च पदार्थान्यसमवेतत्वत्वावच्छिन्न-प्रतियोगिताकव्यवच्छेदेऽपि तिष्ठति पार्थान्यसमवेतत्वत्वावच्छिन्नप्रतियोगि-ताकव्यवच्छेदस्याप्यधिकन्त्विति न्यायेन तादृशप्रतियोगिताकव्यवच्छेदत्वात्

पार्थ एवेत्यादौ, पार्थान्ययोगत्वावच्छिन्नव्यवच्छेदस्याप्रतीतिप्रसङ्गः। तस्य ततोऽन्यत्वात् स्वान्ययोगव्यव-

---

अन्यत्वादिति भावः। 'पार्थ एवेत्यादाविति परान्वयि पार्थ-एवेत्यादौ पार्थान्यतादात्म्यत्वावच्छिन्नव्यवच्छेदस्याप्रत्ययप्रसङ्गाच्चेत्यर्थः, इति व्याचक्षते, तदसत्, अन्यतादात्म्यत्वावच्छिन्नप्रतियोगिताकाभावस्याप्रसिद्धतया 'ततोऽन्यत्वादित्यग्रिमग्रन्थासङ्गतेः।

केचित्तु 'पार्थ एवेत्यादाविति 'शक्याप्रसिद्धिरित्यत्राप्यन्वितं, 'बाधितत्वञ्चेति, 'चकारोवार्थे, तथाच पार्थ एव धनुर्धर इत्यादौ शक्याप्रसिद्धिर्बाधितत्वं वा इति योजना, अन्ययोगस्य अन्यतादात्म्यरूपतया तस्य केवलान्वयित्वेन तत्सामान्यव्यवच्छेदरूपस्याप्रसिद्धिरित्यर्थः। ननु धनुर्धरत्वं ज्ञानविशेषरूपं येन समवायादिसम्बन्धेन तादात्म्यं तेन सम्बन्धेनान्यतादात्म्यत्वावच्छिन्नाभावो नाप्रसिद्धः असमवाय्यादावेव प्रसिद्धत्वादत उक्तं 'बाधितत्वञ्चेति धनुर्धरे बाधितत्वञ्चेत्यर्थः, पार्थस्यापि किञ्चिदपेक्षया अन्यत्वादिति भावः। दूषणान्तरमाह, 'पार्थ इति धनुर्धरत्वं येन सम्बन्धेन तादात्म्यं तेन सम्बन्धेन पार्थान्यतादात्म्यत्वावच्छिन्नव्यवच्छेदस्येत्यर्थः, 'तस्य' तत्सम्बन्धेनान्यतादात्म्यत्वावच्छिन्नाभावस्यासमवाय्यादौ प्रसिद्धस्य, 'ततः' तत्-

---

गौरवेण पर्य्याप्तेरविवक्षणादित्यत आह, 'पार्थ एवेत्यादाविति, पार्थपदं सप्तम्यन्तं धनुर्धरत्वमिति विशेष्यत्वं, अन्यथा पदस्य प्रथमान्तत्वे 'तस्य ततोऽन्यत्वादित्यस्यासङ्गत्यापत्तेः, 'तस्य' पार्थान्यसमवेतत्वत्वावच्छिन्नप्रतियोगिताकव्यवच्छेदस्य, 'ततः' अन्यसमवेतत्वत्वावच्छिन्नप्रतियोगिताकव्यवच्छेदात्, यद्यप्यधिकन्त्वितिन्यायेन सोऽपि शक्य एव तथापि अन्यसमवेत-

च्छेदेन शक्यत्वे च स्वत्वस्याननुगमाच्छक्यानन्त्यं

सम्बन्धेन पार्थान्यतादात्म्यत्वावच्छिन्नाभावात्, 'अन्यत्वादिति सामान्याभावस्य विशेषाभावतोभिन्नत्वात्, अन्यशक्त्या च नान्यप्रत्ययसम्भवइत्याहुः ।

'अननुगमादिति पार्थत्वादिरूपत्वादित्यर्थः, 'शक्यानन्त्यं' शक्यतावच्छेदकानन्त्यं, एतच्चापाततः प्रतियोगितासामान्यसम्बन्धेनान्ययोगवतो व्यवच्छेदस्य विशिष्टस्यैव तच्छक्यत्वस्य सुवचत्वात् । न चैवं पार्थ एव धनुर्धर इतिवत् पार्थ एव द्रव्यमित्यपि व्यवहारः स्यादिति वाच्यं । नीलो घटोनास्तीत्यादाविव अन्वयितावच्छेदकावच्छिन्नप्रतियोगिताया एव संसर्गत्वस्य व्युत्पत्तिसिद्धतया प्रतियोगितासामान्यस्य शक्यतावच्छेदकान्तर्गतत्वेऽपि यद्धर्म्मविशिष्टबोधकपदसमभिव्याहारेणैवकारप्रयोगः तद्धर्म्मावच्छिन्नान्ययोगत्वरूपान्वयितावच्छेदकावच्छिन्नप्रतियोगिताव्यक्तेरेव शक्तौ संसर्गतया भानेन तादृशव्यवहारासम्भवादिति ध्येयं । नन्वन्ययोग-व्यवच्छेदयोः खण्डशः शक्यत्वेऽपि पार्थान्ययोगत्वावच्छिन्नव्यवच्छेदस्याप्रत्ययप्रसङ्गस्तद्वस्य-

त्वत्वत्तिप्रतियोगितावच्छेदकताकव्यवच्छेदत्वस्य शक्यतावच्छेदकत्वे विशिष्टाभावोभयाभावमादायातिप्रसङ्गेनान्यसमवेतत्वत्वपर्य्याप्तप्रतियोगितावच्छेदकताकेति वक्तव्यं तच्चायं दोष इति मामकी सूक्ष्मदृष्टिः । 'स्वेति पार्थान्यसमवेतत्वावच्छिन्नप्रतियोगितावच्छेदकत्वेनैवकारस्य शक्तिकल्पने चेत्यर्थः, 'अननुगमात्' पार्थ-पृथिव्यादिभेदेन नानात्वात्, 'शक्यानन्त्यं' पृथिव्यामेव गन्धइत्यादौ पृथिव्यन्यसमवेतत्वत्वावच्छिन्नप्रतियोगिताकव्यवच्छेदस्य शक्यत्वेन शक्यानन्त्यमित्यर्थः । नन्वन्यसमवेतत्वादौ व्यवच्छेदे च खण्डशक्तावपि कथं

नीलो घटो नास्तीत्यादौ नीलघटत्वाद्यवच्छिन्नस्यैव पार्थ एवेत्यादावपि पार्थान्ययोगत्वावच्छिन्नस्याभाव-प्रतीतिः समानञ्चेदं कृतौ कालान्वयवादिनां। धात्व-

---

इत्यत आह, 'नीलोघट इति, अन्वयितावच्छेदकावच्छिन्नप्रतियोगिताया एव संसर्गत्वस्य व्युत्पत्तिसिद्धत्वात् इति भावः। ननु सुवर्थे पदार्थतावच्छेदके व्यापारे चाख्यातार्थवर्त्तमानत्वान्वयबोधे व्युत्पत्त्यन्तरकल्पना एवं व्यापाराश्रययोः पृथक् शक्यत्वे शक्तिद्वय-कल्पना च मण्डनमते दोष इत्यत आह, 'समानमिति, 'इदं' एतादृशकल्पनं, 'कालान्वयेति वर्त्तमानत्वाद्यन्वयेत्यर्थः, तन्मतेऽपि चैत्रेण पच्यते इत्यादौ तृतीयार्थे कृति वर्त्तमानत्वान्वयात् पचमान-इत्यादौ कृदर्थस्य कर्त्तुरेकदेशे वर्त्तमानत्वान्वयात् किं वा कृति-तदाश्रययोः पृथगेव कृत्प्रत्ययस्य शक्यत्वादिति भावः।

केचित्तु नन्वेकपदार्थयोः परस्परमन्वयबोधस्याव्युत्पन्नत्वादना-यत्या तत्र शक्त्यानन्त्यमास्थीयते इत्यत आह, 'समानञ्चेति, 'इदं'

पार्थ एवेत्यादौ पार्थान्यसमवेतत्वत्वावच्छिन्नप्रतियोगिताकव्यवच्छेदस्य बोध-स्तेन रूपेण शक्तेरकल्पनादित्यत आह, 'नीलइत्यादि नीलघटत्वावच्छिन्न-स्याभावस्य प्रतीतिर्यथेत्यर्थः, अन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वस्य व्युपत्तिबललभ्यत्वेन पार्थान्यसमवेतत्वरूपान्वयितावच्छेदकावच्छिन्नप्रतियोगि-ताकत्वं व्यवच्छेदे प्रतीयते इति भावः। नन्वेकपदोपात्तयोर्विशेषण-विशेष्य-भावेनान्वयस्यानङ्गीकारे अगत्या शक्त्यानन्त्यं स्वीकार्यमित्यत आह, 'समानञ्चेदमिति, 'कृतौ' आख्यातार्थकृतौ, 'कालेति वर्त्तमानत्वादीत्यर्थः, तथाच नैयायिकमते एकपदोपात्तयोर्विशेष्य-विशेषणभावेनान्वयः यथा

र्थानुकूलव्यापारविरहिण्यपि महीरुहादौ संयुज्यत-इत्यादिव्यवहारात् संयोगवत्त्वमात्रप्रतीतेः न तु तत्र प्रत्ययस्य व्यापारवाचितेति न सकर्म्मकत्वं, संयोग-

एकपदार्थयोः परस्परमन्वयित्वं, पचतीत्यादावेकपदार्थयोरपि कृति-वर्त्तमानत्वाद्योरन्वयस्य तेनाभ्युपगमात् स्थलविशेषे तयोरन्वयस्याव्यु-त्पन्नत्वादिति भावः। इति व्याचक्रुः।

ननु फलमात्रस्य धात्वर्थत्वे फलावच्छिन्नव्यापारवाचित्वं न मुख्यसकर्म्मकत्वं किन्तु फलवाचकत्वमेव तथाच संयुजिप्रकृतेरपि मुख्यसकर्म्मत्वापत्तिरित्यत आह, 'धात्वर्थेति, 'महीरुहादाविति श्येनमात्रकर्म्मजन्यश्येनसंयोगवति महीरुहादावित्यर्थः। ननु मही-रुहः संयुज्यते इत्यत्र बाधेन व्यापारानभिधाने तु श्येनः संयुज्यते इत्यत्र व्यापाराभिधानमस्तु बाधकविरहादित्यत आह, 'संयोग-वत्त्वमात्रेति संयोगाश्रयत्वमात्रेत्यर्थः, न तत्र प्रत्ययस्य व्यापार-वाचितेति किन्तु यथायथमाश्रयत्वमेव प्रत्ययार्थ इति भावः। 'न सकर्म्मकत्वमिति, तथाच यद्धातूत्तरप्रत्ययेन व्यापारो बोध्यते ताद्धातुरेव मुख्यसकर्म्मकः अनुगतसकर्म्मकत्वानिरुक्तावपि चति-

पचतीत्यादौ तथा पचमान इत्यादौ मण्डनस्यापीति भावः। ननु चैत्रेण तण्डुलः पच्यते इत्यादिवत् महीरुहेण विहगः संयुज्यत इत्यादावपि मही-रुहवृत्तिव्यापारजन्यधात्वर्थसंयोगशालित्वमर्थोवाच्यस्तथाच निश्चले विह-गादिकर्म्मजन्यसंयोगशालिनि महीरुहादौ महीरुहेण विहगः संयुज्यते इति प्रयोगो योग्यः स्यादित्यत आह, 'धात्वर्थेति, ईदृशव्यवहारानभ्युपगमे आह, 'संयोगेति महीरुहवृत्तिसंयोगाश्रयोविहग इत्याकारिकाया एव प्रतीतेरित्यर्थः, 'सकर्म्मकत्वं' संयुक्तधात्वादीनां सकर्म्मकत्वमपीत्यर्थः। नन्वेवं

इत्यादौ धात्वर्थमात्रप्रतीतेर्घञादेः प्रयोगसाधुतामात्रमिति मण्डनमतानुयायिनः। तन्न पचतीत्यादौ पाकानुकूलवर्त्तमानयत्नाननुभवप्रसङ्गात् फलानुकूलादृष्टवत्यपि पचतीत्यादेर्विभागाद्यनुकूलपूर्व्वसंयोगादि-

---

विरहादिति भावः। ननु तथापि संयोग इत्यादौ घञादिना व्यापाराभिधानात् सकर्म्मकत्वं तस्य दुर्व्वारमेवात आह, 'संयोगेति, 'प्रयोगसाधुतामात्रमिति धातुना संयोगबोधने आकाङ्क्षासम्पादकमात्रमित्यर्थः। 'यत्नाननुभवेति यत्नत्वविशिष्टाननुभवेत्यर्थः, यत्नत्वं प्रवृत्तित्वं, व्यापारत्वस्यैतन्मते आख्यातशक्यतावच्छेदकत्वादिति भावः। नन्वाख्यातस्य यत्नलक्षणयैव तथानुभवो भविष्यतीत्यत आह, 'फलेति, 'पचतीत्यादेरिति 'प्रयोगस्य प्रसङ्गादित्यग्रेतनेनान्वयः। नन्वसाधारणानुकूलत्वस्य संसर्गत्वान्नायं दोष इत्यत आह, 'विभागेति। न च तत्राख्यातस्याश्रयत्वस्यैवार्थ इति वाच्यं। विभागरूपफलस्यैव तन्मते धात्वर्थतया तदाश्रयत्वस्यापि तत्र सत्त्वात् फलावच्छिन्नव्यापारस्य धात्वर्थत्वे तु विभागानुकूलस्पन्दस्यैव

---

पाकइत्यादिवत् संयोगइत्यादावपि संयोगानुकूलव्यापारः कृदर्थः तथाच निश्चले मल्लीहृष्टादावत्र संयोग इति प्रयोगो न स्यादित्यत आह, 'संयोगइत्यादाविति, तथाच संयोग इत्यादौ कृतो न व्यापारवाचकतेति नोक्तदोषइति भावः। ननु पचतीत्यादौ पाकजनकवर्त्तमानयत्नस्य न शाब्दबोधोपि कदाचिदानुमानिकादिरूपएवेत्यत आह, 'पचतीत्यादेरिति 'प्रयोगस्य प्रसङ्गादित्यग्रिमेणान्वयः। नन्वदृष्टव्यावृत्तमनुकूलत्वमाख्यातार्थव्यापारे भासते तथैवाकाङ्क्षादिज्ञानस्य हेतुत्वकल्पनादिति नोक्तदोष इत्यत आह, 'विभागेति,

मति निश्चलादावपि विहगे त्यजतीत्यादेः प्रयोगस्य प्रसङ्गाच्च।

त्यजधात्वर्थतया तदाश्रयत्वस्याख्यातार्थस्य तत्राभावान्न तत्प्रसङ्गः। नचाख्यातस्य स्पन्दत्वादिरूपेणैव व्यापारे शक्तिरिति वाच्यं। धातोर्नानार्थत्वस्यावश्यकतया आख्यातस्य तत्कल्पनायां गौरवादिति भावः। एतदप्यापाततः क्रियायां यादृशविभागाद्यनुकूलत्वं तस्यैव तन्मते धात्वर्थस्याख्यातार्थव्यापारे संसर्गत्वात्। न च तथापि चैत्रः पचतीत्यादौ आख्यातार्थयत्नत्वप्रकारकबोधस्य सार्वमिकत्वेन प्रामाणिकानुभवसिद्धस्यापलापप्रसङ्ग इति वाच्यं। भवन्मतेऽपि प्रवृत्तित्वस्य आख्यातशक्यतावच्छेदकत्वात् अचेतने अग्निः पचतीत्यादौ च व्यापारे लक्षणा स च व्यापारः संयोगादिरेव। न चैवं पचेतेत्यादौ विध्यर्थकृतिसाध्यत्वस्यानन्वयापत्तिः कृतेः कृतिसाध्यत्वाभावात् विध्यर्थकृतिसाध्यत्वेष्टसाधनत्वयोरेकत्रान्वयित्वनियमेन धात्वर्थफले तदन्वयस्यासम्भवादिति वाच्यं। तत्र धातोः फलानुकूलव्यापारे लाक्षणिकतया धात्वर्थ एव विध्यर्थकृतिसाध्यत्वेष्टसाधनत्वादीनामन्वयसम्भवात्। वस्तुतस्तु पचतीत्यादौ धातुतः फलानुकूलस्पन्द-

---

'त्यजतीत्यादेरिति, अत्र धात्वर्थो विभागः तदनुकूलस्य पूर्व्वदेशसंयोगः नासंयुक्तस्य विभागः इति युक्तेरिति भावः। मण्डनमतं सम्यक् त्यजतीत्यादौ धात्वर्थविभागनिरूपितस्य स्पन्दवृत्तेरनुकूलस्यैवाख्यातार्थव्यापारगतत्वेन भानाभ्युपगमात् कथमन्यथा फलानुकूलव्यापारस्य धात्वर्थत्वमतेऽपि पचतीत्यादौ विक्लित्त्यनुकूलव्यापारत्वेनादृष्टादीनां न प्रतीतिरित्यस्मद्गुरुचरणसरोरुहद्वन्द्वं।

तत्र तत्र तत्तत्फलानुकूलतत्तद्व्यापारविशेष एव धात्वर्थः सर्व्वत्र धात्वाश्रयत्वमेव कर्त्तृत्वं संख्या-वर्त्तमानत्वादिकं क्वचिदाश्रयत्वादिकमपि वा आख्यातार्थ-

---

त्वादिप्रकारकबोधस्य स्वारसिकत्वेन प्रामाणिकानुभवसिद्धस्यापलाप-प्रसङ्ग इत्येव तन्मते दोषो बोध्यः।

गुरुमतमाह 'तत्र तत्रेत्यादिना, 'तत्तत्फलेति तानि तानि फलानि संयोग-विभाग-विक्लित्ति-स्वत्वविशेषादिरूपाणि, तदनुकूलो व्यापारविशेषः गमि-त्यजि-पचीनां कर्त्तुः स्पन्दत्व-ददात्यादेर्ज्ञान-रूप-इत्यादिव्यापारविशेष इत्यत्र विशेषपदोपदानात् नोदनादृष्ट-तज्जनककृत्यादिव्युदासः, पचेः साक्षाद्विक्लित्तिजनकस्य तण्डुला-वयवक्रियादेर्व्युदासः, तस्य पच्यर्थत्वे तण्डुलं पचतीत्यादौ तण्डुल-पदस्य तण्डुलावयवपरतया परसमवेतस्य द्वितीयार्थस्य धात्वर्थ-साक्षाद्विक्लित्तिजनकस्पन्दस्य पच्यर्थत्वेऽपि पचतीत्यादौ चैत्रादेः स्वजनककृत्यादिमत्त्वसम्बन्धेन धात्वर्थाश्रयत्वादिति भावः। 'आश्र-यत्वादिकमिति, 'आदिपदात् प्रतियोगित्वपरिग्रहः, भाव-कर्म्मा-

---

गुरुमतं दूषयितुमाह, 'तत्र तत्रेति पचति-गच्छतीत्यादावित्यर्थः, पचती-त्यादौ विक्लित्त्यनुकूलव्यापारोऽधःसन्तापनादिः गच्छतीदौ संयोगानुकूल-व्यापार इत्यर्थः। नन्वेवं न्यायमताविशेष इत्यत आह, 'सर्व्वत्रेति धात्वर्था-श्रयत्वञ्च क्वचित् परम्परया क्वचिच्च साक्षादित्यर्थः, तथाचाश्रयतासम्बन्धेन धात्वर्थस्य चैत्रादावन्वयः साक्षाद्भेदेन नामार्थ-धात्वर्थप्रकारान्वयबोधस्या-व्युत्पन्न एवेति भावः। नन्वेवमाख्यातार्थः को भविष्यतीत्याकाङ्क्षायामाह, 'संख्येति पचतीत्यादौ वर्त्तमानत्वादिकमाख्यातार्थः, नामार्थ-धात्वर्थयोर्भेदेन साक्षादन्वयस्याव्युत्पन्नत्वमते त्वाह, 'क्वचिदिति, पचतीत्यादावाश्रयत्वमा-

इति गुरुमतमपि तत्र तत्र तादृशयत्नाननुभवप्रसङ्गा-
दनुपादेयम्।

इति महामहोपाध्याय-श्रीरघुनाथशिरोमणि-
भट्टाचार्य्यकृत आख्यातवादः समाप्तः।

ख्यातवारणाय क्वचिदित्युक्तं, कर्म्माख्यातस्य फलमेवार्थः। 'तादृशेति वर्त्तमानत्वादिविशिष्टेत्यर्थः, तादृशानुभवः स्वारसिकत्वेन विशेषणीयः, तेन लक्षणया तत्र यत्नानुभव इति निरस्तं। इदमुपलक्षणं यत्नत्वादिकमुपेक्ष्य आश्रयत्वादेर्गुरुत्वादित्यपि बोध्यमिति दिक्।

इति महामहोपाध्याय-श्रीमथुरानाथतर्कवागीशविरचितं
आख्यातवादरहस्यं समाप्तं।

---

ख्यातार्थे इति न नामार्थ-धात्वर्थयोरित्यादिव्युत्पत्तिविरोध इति भावः। नश्यतीत्यादौ प्रतियोगित्वस्यैवाख्यातार्थत्वे क्वचिदित्युक्तं, 'आश्रयत्वादी-त्यादिपदेन क्वचित् प्रतियोगित्वमित्यस्य संग्रहः, 'गुरुमतमपीत्यस्यानुपादे-पादेयमित्यनेनान्वयः, अनुपादेयत्वे हेतुमाह, 'तत्र तत्रेति पचति-गच्छती-त्यादावित्यर्थः। वस्तुतस्तु चैत्रः पचतीत्यादिप्रयोगो न स्यात् पाकादेर्विक्लि-त्त्यनुकूलव्यापारस्य स्थाली-वह्निसंयोगादेराश्रयत्वस्य चैत्रादावभावात् पाक-विशेष्यकानुकूलकृतिमत्त्वादिरूपपरम्परासम्बन्धेनाश्रयत्वञ्च न प्रामाणिकं तथानुभवविरहात्, अपि च तादृशपरम्परासम्बन्धावच्छिन्नाश्रयत्वत्वापेक्षया लाघवेन कृतित्वजातेः शक्यतावच्छेदकतायाएव युक्तत्वादित्यादि स्वयमूह-नीयमिति संक्षेपः॥ * ॥ * * ॥

इति श्रीमहामहोपाध्याय-रामचन्द्रन्यायवागीश-भट्टाचार्य्य-
विरचिताख्यातवादटिप्पनी समाप्तिपदमारूढवती॥

## अथ शब्दखण्डे नञ्वादः।



संसर्गाभावोऽन्योन्याभावश्च(१) नञोऽर्थः। तत्र चान्व-

अथ शब्दखण्डे नञ्वादविवृतिः।



राधामुखाब्जमधुमत्तमधुव्रतश्री-
कृष्णस्य पादयुगलं शिरसा प्रणम्य।
नञ्वादसङ्गतशिरोमणिगूढभावं
श्रीमान् गदाधरसुधीर्व्विशदीकरोति॥

यद्यपि सादृश्यादयः षडेव नञर्थाः, तदुक्तं,—

"तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।
अप्राशस्त्यं विरोधश्च नञर्थाः षट्प्रकीर्त्तिताः"॥ इति,

(१) नञ्पदार्थमपर्य्यालोचयद्भिस्तत्त्वचिन्तामणिकारश्रीमद्गङ्गेशोपाध्यायैः प्रणीतस्य तत्त्वचिन्तामण्यन्तर्गतशब्दपरिच्छेदस्य नञ्पदार्थपर्य्यालोचनरहितस्य असम्पूर्णभावमाकलयद्भिरस्माभिस्तत्त्वचिन्तामण्यन्तर्गतशब्दपरिच्छेदस्य शेषे तार्किकाग्रगण्यचिन्तामणिदीधितिकारश्रीरघुनाथशिरोमणिभट्टाचार्य्यप्रणीत-नञ्वादप्रबन्धः गदाधरभट्टाचार्य्यकृतटीकया सह परिशिष्टभावेन मुद्रापित इति।

* 'संसर्गाभाव इत्यादि, शक्यतावच्छेदकभेदेन शक्तिभेदस्य सूचनाय उक्तिभेदः, तथाच संसर्गाभावत्वं अन्योन्याभावत्वञ्च नञः शक्यतावच्छेदक-

तथापि लक्षणयैव सादृश्याद्यर्थे प्रयोगनिर्व्वाहे सादृश्याद्यर्थे शक्तिकल्पनमयुक्तं अपि त्वभावान्यत्वरूपार्थद्वये, सादृश्याद्यपेक्षया अभावत्व-भेदत्वयोर्लघुतया तयोः प्रवृत्तिनिमित्तत्वे विनिगमकस-त्त्वादित्याशयेनाह, 'संसर्गाभाव इति, 'नञोऽर्थः' नञ्पदवाच्यः, संसर्गाभावे अभावत्वेनैव शक्तिर्न तु तादात्म्यातिरिक्तसंसर्गावच्छिन्न-प्रतियोगिताकाभावत्वरूपसंसर्गाभावत्वेन गौरवात् तेन रूपेण बोध-स्याननुभविकत्वाच्च । अतएव "तत्सादृश्यमभावश्चेत्यादिकारिकाया-मभावत्वेनैव संसर्गाभावस्योपादानं न तु संसर्गाभावत्वेन । न च संयोगादिरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वेनाभावभानानुप-गमे भूतले न घट इत्यादिशब्दजन्यबोधस्य संयोगादिसम्बन्धेन भूतलादौ घटादिविशिष्टबुद्धावविरोधित्वापत्तिस्तत्सम्बन्धेन तद्विशि-ष्टबुद्धौ तत्सम्बन्धावच्छिन्नप्रतियोगिकत्वावगाहिन्या एवाभावबुद्धेः प्रतिबन्धकत्वादिति वाच्यम् । निरुक्तसंसर्गाभावत्वेन शक्तावपि तादा-त्म्यातिरिक्तसम्बन्धत्वेनानुगतरूपेणैव संसर्गाभावत्वशरीरे संयोगादीनां निवेशान्नञ्पदशक्त्या विशिष्टसंयोगादिसम्बन्धावच्छिन्नप्रतियोगिक-त्वालाभात् तादृशशाब्दबोधस्योक्तविशिष्टबुद्धिविरोधित्वानुरोधेना-काङ्क्षादिबलादेव तादृशप्रतियोगिताकत्वस्य[१] विशिष्टप्रतियोग्य-

(१) संयोगादिसम्बन्धावच्छिन्नप्रतिताकत्वस्येत्यर्थः ।

मित्यर्थः । न च लाघवात् सर्व्वसाधारणमभावत्वमेव शक्यतावच्छेदकमस्तु तत्तत्समभिव्याहारबलात् समवायाद्यवच्छिन्नायास्तादात्म्यावच्छिन्नायाश्च प्र-तियोगितायाः संसर्गतया भानादेव बोधवैलक्षण्यमिति वाच्यं । घटो नास्ती-त्यादौ संसर्गाभावत्वस्यैव घटो न इत्यत्र भेदत्वस्यैव प्रकारतया आनुभविक-

भावयोः सम्बन्धविधया भानस्योपगन्तव्यत्वात्[१], भूतले घट इत्या-
दिवाक्यजन्यबोधे कदाचित् संयोगादिसम्बन्धावच्छिन्नप्रतियोगि-
ताकत्वं कदाचिच्च समवायाद्यवच्छिन्नप्रतियोगिताकत्वं भासते इत्यत्र
तत्तत्सम्बन्धतात्पर्य्यमेव नियामकं, संयोगेन घटो नास्तीत्यादौ
संयोगेनेत्यादितृतीयान्तार्थः संयोगावच्छिन्नप्रतियोगिताकत्वं प्रकार-
तयापि भासते ।

अथ संयोगसम्बन्धावच्छिन्नघटत्वावच्छिन्नाभावस्य समवाया-
वच्छिन्नघटसंयोगाभावसमनियततया तदभिन्नत्वेन कपाले सम-
वायेन घटो नास्तीति प्रतीत्यापत्तिः[२] । न च तृतीयार्थोऽवच्छिन्न-

(१) तथा चाभावत्वेन प्रकारत्वेऽपि आकाङ्क्षादिबलात् तादृशप्रतियोगिताक-
त्वस्य सम्बन्धविधया भानान्मन्मतेऽपि तादृशबुद्धेर्विशिष्टबुद्धिविरो-
धित्वोपपत्तिरिति भावः ।

(२) कपालवृत्तिसंयोगावच्छिन्नघटाभावे समवायावच्छिन्नप्रतियोगिताक-
त्वस्य तृतीयान्तार्थस्याबाधादिति भावः ।

त्वेन तथाभिधानात् । संसर्गाभावत्वञ्च ध्वंस-प्रागभावयोरप्यनुभवबलादनुगत-
प्रतिबध्य-प्रतिबन्धकभावबलाच्च सिद्धं, भवत्यत्यन्ताभावस्येव ध्वंस-प्रागभावयो-
रपि बुद्धौ नियमतः तत्कालावच्छेदेन तद्देशे प्रतियोगिसत्ताधीप्रतिबन्धः, अत्र
च समवायादिना तद्घटवत्ताबुद्धिं प्रति तद्घटत्वावच्छिन्नप्रतियोगिताकात्यन्ता-
भावध्वंस-प्रागभाववत्त्वादिबुद्धित्वादिना प्रतिबन्धकत्वकल्पने गौरवात् लाघवेन
समवायेन तद्घटत्वावच्छिन्नप्रतियोगिताकाभावबुद्धित्वमेव प्रतिबन्धकताव-
च्छेदकमिति कल्प्यते, तच्च ध्वंस-प्रागभावयोः समवायाद्यवच्छिन्नप्रतियोगि-
ताकत्वेनैव निर्व्वहतीति प्राचीनाः । नव्यास्तु संसर्गाभावत्वं न संसर्गारोप-
पूर्व्वकप्रतीतिविषयतावत्त्वं संसर्गावच्छिन्नप्रतियोगिताकाभावत्वं वा आरोप-

त्वमेव तस्य च घटत्वावच्छिन्नप्रतियोगितायामन्वयान्नायमतिप्रसङ्गः[१] इति वाच्यम् । घटत्वावच्छिन्नप्रतियोगितायाः संसर्गतया तत्र पदार्थस्य प्रकारतया अन्वयासम्भवादिति चेत्, न, तृतीयार्थसमवायावच्छिन्नप्रतियोगिताकत्व-घटपदार्थघटत्वविशिष्टयोरेकविशिष्टे अपरवैशिष्ट्यमिति न्यायेनाभावांशे अन्वयबोधस्वीकारेणानुपपत्तिविरहात्[२] ।

अथाभावत्वस्यान्योन्याभावसाधारणस्य प्रवृत्तिनिमित्तत्वेऽन्योन्याभावे पृथक्शक्तिकल्पनमनर्थकम् । न चान्योन्याभावत्वप्रकारकबोधानुरोधेन तत्र शक्त्यन्तरकल्पनमावश्यकं अन्यथा तादात्म्यसम्बन्धेन प्रतियोगिप्रकारके अयं घट इत्यादिबोधे नायं घट इत्यादिवाक्यजन्यबुद्धेरप्रतिबन्धकत्वापातात् अन्योन्याभावत्वावगाहिबुद्धेरेव तथाविधबोधविरोधित्वात् अन्यथा अयं घटाभाववानित्यादिबुद्धेरपि

(१) तथाच संयोगसम्बन्धावच्छिन्न-घटत्वावच्छिन्नप्रतियोगिताकाभाव-समवायावच्छिन्नघटसंयोगत्वावच्छिन्नाभावयोरभेदेऽपि कपाले घटाभावीय-घटत्वावच्छिन्नप्रतियोगितायाः समवायावच्छिन्नत्वविरहान्नातिप्रसङ्ग इति भावः ।

(२) एकविशिष्टे अपरान्वयस्थले उद्देश्यतावच्छेदक-विधेययोरवच्छेद्यावच्छेदकभावो भासत इति भावः ।

स्याभावप्रत्यक्षे हेतुत्वे मानाभावात् अतीन्द्रियाभावाव्याप्तेश्च संसर्गाद्यवच्छिन्नप्रतियोगित्वाद्यनिरुक्तेः संयोग्यन्योभावाद्यतिव्याप्तेश्च संयोगितादात्म्यस्य संयोगस्वरूपतया तस्य फलतः संयोगावच्छिन्नप्रतियोगिताकत्वात् संयोगतया तादात्म्यतया चावच्छेदकतायां वैलक्षण्यस्य निर्वक्तुमशक्यत्वात् एवमन्योन्याभावत्वमपि न तादात्म्यावच्छिन्नाभावत्वं उक्तरीत्या संयोगेन संयोग्यत्वन्ता-

तादृशबोधविरोधित्वापातादिति वाच्यम्। अभावत्वस्य नञ्पद-शक्यतातादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकत्वस्य समानविभक्तिका-नुयोगि-प्रतियोगिवाचकपदसमभिव्याहाररूपाकाङ्क्षाबलेन भानात् तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वरूपान्योन्याभावत्वलाभेन तेन रूपेण शक्तेरकिञ्चित्करत्वात्। न च नास्त्येवान्योऽन्या-भावे पृथक्शक्तिः संसर्गाभावान्योन्याभावयोर्द्वयोर्विशेषयोः पृथगु-पादानं अभावसामान्यस्य नञ्पदार्थत्वलाभाय यथा यत्संशय-व्यतिरेकनिश्चयावित्यत्र विशेषद्वयोपादानं व्यतिरेकज्ञानसामान्य-प्रतिबन्धकतालाभायेति वाच्यम्। पृथक्शक्तिं विना नञर्थः घट् इत्यस्यासङ्गतेर्दुर्व्वारत्वादिति चेत्, स्यादेवं, यद्यन्योन्याभावत्वं तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वरूपं भवेत्, तदेव न, संयोग्यादितादात्म्यस्य संयोगादिरूपतया संयोगसम्बन्धावच्छिन्न-संयोग्यत्यन्ताभावस्यान्योन्याभावत्वापत्तेः, अपि त्वनुयोगिताविशेष-एव, एवञ्च तादात्म्यस्यान्योन्याभावप्रतियोगितावच्छेदकसम्बन्धत्व-मप्यप्रामाणिकं इह संयोगेन घटो नास्तीत्यादिवत् अयं तादात्म्येन न घट इत्याद्यप्रत्ययात्, एवञ्च तादृशानुयोगिताविशेषप्रकारकत्व-मेवाभेदसम्बन्धेन प्रतियोगिप्रकारकधीविरोधित्वे तन्त्रं तथाच तेन रूपेण पृथक्शक्तिकल्पनं तत्प्रकारकबोधानुरोधेनावश्यकम्। न

भावेऽतिव्याप्तेः, किन्त्वत्यन्ताभावादौ संसर्गाभाव इत्याकारानुगतप्रतीति-साक्षिकमखण्डोपाधिरूपमेव तत्, एवमन्योन्याभावत्वमपि तथा प्रतीति-सिद्धमखण्डोपाधिरूपमेवेति तदेव शक्यतावच्छेदकं। यदि च घटोनास्ती-त्यादावत्यन्ताभावत्वप्रकारेणैव बोध आनुभविकः न तु ध्वंसादिसाधारण-

चाभावत्वावच्छिन्ने प्रतियोगिसम्बन्धविधया अन्योन्याभावत्वरूपविल-क्षणानुयोगिताया भानमेवाभेदसंसर्गक-प्रतियोगिप्रकारकधीविरोधित्वे तन्त्रं आस्तां तथाचाभावत्वविशिष्टशक्त्यैवोपपत्तौ किं भेदे शक्त्यन्तरेणेति वाच्यम्। यतो नायं घट इत्यादौ घटत्वावच्छिन्नस्य घटत्वावच्छिन्ननिरूपितत्वसम्बन्धेनैवानुयोगिताविशेषरूपभेदत्वांशे भानमावश्यकं अनुयोगिताया एव प्रतियोगिरूपसम्बन्धिविनिर्मोकेण प्रत्यक्षेऽभानात् अभावस्य चेदन्त्वादिनापि भानात् प्रतियोग्युपरागेणैव भानमित्यनियमात् एवञ्चाभावे धर्म्मिणि प्रतियोगिनः प्रकारत्वं तत्राप्रामाणिकमित्यनुयोगितांशे प्रतियोगिप्रकारकत्वमेव प्रतियोगिप्रकारकधीविरोधित्वे तन्त्रं तथाच भेदत्वरूपानुयोगिताविशेषविशिष्टे शक्त्यन्तरमावश्यकं तदन्तरेण[१] अनुयोगिताविशेषणतया प्रतियोगिनोऽन्वयासम्भवादित्याशयः[२]।

ऋजवस्तु नञ्पदजन्यप्रातिपदिकार्थे भावान्वयबोधे सप्तमीसमभिव्याहारज्ञानं हेतुस्तज्जन्यान्योन्याभावबोधे समानविभक्तिकनामसमभिव्याहारज्ञानं तथेति व्युत्पत्तिभेदसूचनायैव पृथगभिहितं न तु शक्तिभेद इत्याहुः।

---

(१) अनुयोगिताविशेषविशिष्टे शक्तिं विनेत्यर्थः।

(२) अपदार्थे पदार्थस्य प्रकारतया अनन्वितत्वनियमादिति भावः।

संसर्गाभावत्वेन, ध्वंसादिस्थलेऽपि अत्यन्ताभावमादायैव नास्तीत्यादिधीरबाधिता तदा अत्यन्ताभावत्वं अन्योन्याभावत्वं द्वयमपि शक्यतावच्छेदकमिति प्राहुः।

नन्विह घटो न अयं घटो न इत्यादौ घटादेरभावे प्रतियोगि-तयान्वयेऽपि घटत्वादेः प्रतियोगितावच्छेदकत्वभानं विना तादृश-वाक्यजबुद्धीनां घटत्वादिविशिष्टघटादिविशिष्टधीविरोधितानुप-पत्तिः। इह घट-पटौ न स्तः नीलघटो नास्ति नायं नीलघटः इत्यादिबुद्धीनां घटत्वाद्यवच्छिन्नविशिष्टबुद्धिविरोधितया तद्विशिष्ट-बुद्धिविरोधितायां शुद्धघटत्वाद्यवच्छिन्नप्रतियोगिताकत्वावगाहि-तायाः प्रयोजकत्वात्। न चाभावांशे शुद्धघटत्वाद्यवच्छिन्नप्रकारतै-वोपदर्शितबुद्धिविरोधिताप्रयोजिका न तु तादृशप्रतियोगिक-त्वावगाहितेति वाच्यम्। अभावस्य तद्रूपावच्छिन्नवत्ताविरोधित्व-प्रयोजकं यत्तद्रूपावच्छिन्नप्रतियोगिताकत्वं तदवगाहितामनादृत्य तद्रूपावच्छिन्नप्रकारतामात्रेणाभावबुद्धेः प्रतियोगिमत्ताधीविरोधि-त्वासम्भवात् घटो नास्तीति ज्ञाने शुद्धघटत्वावच्छिन्नप्रतियोगित्वा-नवगाहनेऽपि तस्य घटसामान्यवत्ताबुद्धिविरोधित्वे नीलघटत्वा-वच्छिन्नवत्ताबुद्धेः शुद्धघटत्वावच्छिन्नाभाववत्ताबुद्धिविरोधितावत् नीलोघटो नास्तीति ज्ञानस्यापि अधिकन्त्वित्यादिन्यायेन तद्वि-रोधित्वौचित्येन(१) तस्यास्तत्राविरोधित्वं न तु घटो नास्तीत्यादि-बुद्धेरिति विशेषानुपपत्तेः। एवमुक्तस्थले घटत्वादेः प्रतियोगिता-

---

(१) घटसामान्यवत्ताज्ञानविरोधित्वौचित्येनेत्यर्थः।

ननु यत्किञ्चिद्घटवति घटोनास्तीति यत्किञ्चिद्घटे वा घटोनेति धीः घटान्तरस्य संसर्गाभावं अन्योन्याभावं वा अवलम्ब्य कुतो न स्यादित्यत-आह, 'तत्रेति, 'तत्र' संसर्गाभावे अन्योन्याभावे च नञर्थे, 'अन्वयितेति प्रतियोगितासम्बन्धेन नञर्थे योऽन्वयः तत्त्वावच्छेदकं घटोनास्तीत्यादौ घट-

यितावच्छेदकावच्छिन्नप्रतियोगिताकत्वं व्युत्पत्तिबललभ्यं, वच्छेदकत्वाभावे वक्ष्यमाणातिप्रसङ्गोऽपि दुर्व्वारः । तद्भानन्तु न पदार्थविधया उक्तवाक्ये तदुपलम्भकाभावादिति कथं तदित्याकाङ्क्षायां आकाङ्क्षादिबलात् प्रतियोग्यभावयोः सम्बन्धघटकतया तद्भानमित्याह, 'तत्र चेति, 'तत्र' नञर्थे संसर्गाभावे, भेदे च, 'अन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वमिति येन रूपेण प्रतियोगिनोऽभावांशे विशेषणता तद्धर्म्मपर्य्याप्तप्रतियोगितावच्छेदकताकत्वमित्यर्थः, 'व्युत्पत्तिबललभ्यमिति अपदार्थोऽपि तद्रूपावच्छिन्नोपस्थापकशब्दविशेषरूपाकाङ्क्षाबलात् प्रतियोगिसंसर्गतया लभ्यइत्यर्थः । घटत्वाद्यवच्छिन्नप्रतियोगिताकत्वञ्च घटत्वावच्छिन्नप्रतियोगितानिरूपितत्वविशेषितानुयोगिता, सा च घटादिरूपविशेषणप्रतियोगिकेति तत्सम्बन्धतया भासते, अनुयोगिताया दर्शितविशेषणञ्च(१) संसर्गतावच्छेदकतया भासते, नञ्पदार्थतावच्छेदकानुयोगितायां घटादेरन्वयोपगमे तु तत्र(२) तादृशप्रतियोगितानिरूपितत्वमेव सम्बन्धः घटादिनिष्ठप्रतियोगिताप्रतियोगिकं निरूप्यत्वं घटादिरूपप्रतियोगिप्रतियोगिकमपीति तस्य घटादिसम्बन्धता ।

(१) घटत्वावच्छिन्नप्रतियोगिनिरूपितत्वञ्चेत्यर्थः ।

(२) अनुयोगितायामित्यर्थः ।

त्वादिकं तदवच्छिन्नप्रतियोगिताकत्वमित्यर्थः, 'व्युत्पत्तीति पदान्तरासमभिव्याहृतघटत्वविशिष्टघटवृत्तिमत्पदसमभिव्याहृतनञ्पदजन्यसंसर्गाभावोपस्थितेर्घटत्वावच्छिन्नप्रतियोगितासम्बन्धेनैव घटत्वविशिष्टप्रकारकान्वयबोधजनकत्वस्वाभाव्यं व्युत्पत्तिस्तद्बलात् सिद्धं शाब्दबोधविषय इत्यर्थः । तेन

केचित्तु अभावे घटादेः सम्बन्धोऽनुयोगिता तत्सम्बन्धतया भासते, घटादिपारतन्त्र्येण च घटत्वादेरपि अभावविशेषणतया तस्य सम्बन्धः स्वावच्छिन्नप्रतियोगिताकत्वं, अनुयोगितायां घटाद्यन्वयपक्षेऽपि तस्यां घटादिपारतन्त्र्येण घटत्वादेरन्वयोबोध्यः, सर्व्वत्रैव विशिष्टवैशिष्ट्यबोधे ईदृशी रीतिरनुसरणीया। एवञ्च कम्बुग्रीवादिमत्त्वादेर्गुरुतया अनवच्छेदकत्वपक्षे कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताया अप्रसिद्धावपि न क्षतिः। अवच्छिन्नप्रतियोगिताकत्वस्य कम्बुग्रीवादिमत्त्वस्य च खण्डशः प्रसिद्धेव तादृशसम्बन्धेन तस्य विशेषणतासम्भवात्। न चान्वयितावच्छेदकावच्छिन्नत्वविशेषितप्रतियोगितायाः सम्बन्धप्रवेशपक्षेऽपि विशेष्य-विशेषणयोः खण्डशः प्रसिद्धा विशेष्य-विशेषणभावेन सम्बन्धता निर्व्वहत्येवेति वाच्यम्। एवं सति तादृशबुद्धेर्भ्रमत्वासम्भवात्, तथाहि तादृशज्ञानं न विशिष्टसम्बन्धेनाभावांशे प्रतियोगिनो भ्रमः विशिष्टसम्बन्धाप्रसिद्धा तत्सम्बन्धावच्छिन्नाभावस्याप्रसिद्धेः तत्सम्बन्धावच्छिन्नतदभाववतीत्यादेस्तत्सम्बन्धघटितभ्रमत्वस्य दुर्निरूप्यत्वात्, तज्ज्ञानं प्रतियोगितांशे कम्बुग्रीवादिमत्त्वाद्यवच्छिन्नत्वस्य भ्रमः तदवच्छिन्नत्वप्रसिद्धिश्च विषयितासम्बन्धावच्छिन्नतद्विशिष्टाभावस्य घटत्वादिविशिष्टाभावा-

नीलोघटो नास्तीत्यादौ न घटत्वावच्छिन्नाभावधीः तत्र घटपदस्य नीलपदसमभिव्याहारात् तदसमभिव्याहृतत्वस्य तत्समभिव्याहृतत्वेनाज्ञातत्वं तेन नीलोघटो नास्तीति प्रयुक्ते नीलं इत्यश्रुत्वा घटो नास्तीति यत्र शाब्दबोधः तत्रापि नानुपपत्तिः, अन्वयितावच्छेदकस्य वैज्ञानिकं तेन लोहितो वह्निर्नास्तीत्यादौ लोहितवह्नित्वस्याप्रसिद्धावपि न क्षतिः, तत्र लोहितस्यानु-

समनियतस्य प्रतियोगितायां वृत्त्यनियामकतया विषयितायाअभावप्रतियोगितावच्छेदकसम्बन्धताविरहेऽपि तेन सम्बन्धेन तद्विशिष्टवह्निप्रतियोगितावच्छेदकतायामित्यपि न, भ्रमत्वस्य प्रकारताघटितत्वेन संसर्गतावच्छेदकीयविषयतायां विशेषणज्ञानानपेक्षायां प्रकारत्वासम्भवेन तदंशे भ्रमत्वासम्भवात्।

यत्तु तद्रूपावच्छिन्नप्रतियोगितावच्छेदकसम्बन्धताक-तदभाववति तद्रूपेण तत्संसर्गक-तत्प्रकारकज्ञानं तद्रूपावच्छिन्नतत्सम्बन्धेन तद्भ्रमः विशिष्टसम्बन्धाप्रसिद्धिस्थलेऽपि व्यधिकरणतद्रूपावच्छिन्नप्रतियोगितावच्छेदकसम्बन्धताकाभावप्रसिद्ध्या तादृशाभावमादाय तद्रूपावच्छिन्नतत्सम्बन्धेन भ्रमत्वनिर्व्वाहात् कम्बुग्रीवादिमान्नास्तीत्यादिज्ञानं कम्बुग्रीवादिमत्त्वाद्यवच्छिन्नप्रतियोगितानिरूपितत्वादिविशेषितानुयोगितासम्बन्धेन प्रतियोगिन एव भ्रमः, व्यधिकरणधर्मावच्छिन्नाभावः प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्याभावधीहेतुतया तादृशकारणबाधेन तादृशाभावप्रतीत्यसम्भव इति मणिकारेण खण्डितः। व्यधिकरणधर्मावच्छिन्नप्रतियोगितावच्छेदकसम्बन्धताकाभावखण्डनन्तु तादृशरीत्या न सम्भवति विशिष्टसम्बन्धावच्छिन्नाभावबुद्धौ विशिष्टसम्बन्धज्ञानस्याहेतुत्वादिति तदपि न सत्, तादृशाभावस्याननुभवात्।

---

योगितावच्छेदकतया भातवह्नित्वस्यैवावच्छिन्नत्वे तादृशावच्छिन्नत्वस्य प्रतियोगिताकत्वे तस्य चाभावे सम्बन्धः संसर्गविधया भानेऽप्येतादृशः परस्परोपश्लेषो अनुभवबलात् सम्बन्धविधयैव विषयः। इयांस्तु विशेषः यत्र तादृशपरस्परोपश्लेष एव सम्बन्धताख्यविषयता पर्य्याप्ता तत्र तादृशावच्छिन्नत्वा-

अथ स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन प्रतियोगिविशेषणस्य प्रतियोगिविशेष्याभावांशे प्रकारतोपगमे पीतघटवति नीलघटो-नास्तीति बुद्धेरनुपपत्तिः स्वावच्छिन्नप्रतियोगिताकत्वस्य स्वपर्य्याप्त-प्रतियोगितावच्छेदकताकत्वरूपतया नीलघटत्वावच्छिन्नाभावे घट-त्वादेर्विशेषणस्य तादृशसम्बन्धविरहात् । न हि तादृशाभावप्रति-योगितावच्छेदकता घटत्वादौ पर्य्याप्ता, नीलत्वादेरपि तदवच्छेद-कत्वात् घटादिसामान्याभावस्य च तादृशसम्बन्धेन घटत्वादिसम्ब-न्धिनः पीतघटादिमत्यसम्भवात् । अतो नीलसहितघटत्वादिरूप-प्रतियोगिविशेषणधर्म्मपर्य्याप्तप्रतियोगितावच्छेदकताकत्वं प्रतियोगि-सम्बन्ध एव इत्युपेयं इति चेत्, न, नीलघटो नास्तीत्यादौ नीलादिसहितस्वपर्य्याप्तप्रतियोगितावच्छेदकताकत्वस्य घटत्वादि-सम्बन्धतोपगमेन सामञ्जस्यात् । न च स्वपदार्थस्य सम्बन्धिनो घट-त्वादेः सम्बन्धाघटकत्वेन नीलादिसहितत्वेन घटत्वादेर्घटत्वादि-सम्बन्धघटकत्वासम्भवात् नीलादिसहितस्वपर्य्याप्तप्रतियोगितावच्छेद-कताकत्वस्य घटत्वादिसम्बन्धतेति वाच्यम् । अगत्या अत्र सम्बन्धिनो-ऽपि सम्बन्धघटकत्वोपगमादिति वदन्ति । तदसत्, कम्बुग्रीवादि-मान्नास्तीत्यादौ कम्बुग्रीवादिमत्त्वादौ प्रतियोगितावच्छेदकत्वप-र्य्याप्तिभानस्यावश्यकतया स्वपर्य्याप्तप्रतियोगितावच्छेदकताकत्वमेवा-

---

दीनां प्रकारता । यत्र च तादृशविशिष्ट एव वैज्ञानिके पारमार्थिके वा सा पर्य्याप्ता तत्र न तादृशसम्बन्धघटकस्य सा किन्तु सम्बन्धीभूततादृशविशिष्ट-प्रतियोगिन एवेति । अतएव लोहितः स्फटिक इत्यादौ लौहित्यसमवायि-प्रतियोगिकसंयोगस्य सम्बन्धत्वेन संसर्गांशे लौहित्यसमवायिनोऽपि प्रति-

भावे तत्सम्बन्धः[१] इत्युपेयम् । तदर्थश्च स्वभिन्नधर्म्मानवच्छिन्नप्रतियोगिताकत्वं, तत्र च स्वपदार्थस्य कम्बुग्रीवादिमत्त्वादेरनिवेशो न सम्भवति भिन्नत्वस्य केवलान्वयित्वात् भिन्नधर्म्मानवच्छिन्नत्वस्याप्रसिद्धेः । तन्निवेशे च[२] सम्बन्धाप्रसिद्धिर्दुर्वारैवेति ।

वस्तुतः कम्बुग्रीवादिमान्नास्तीत्यादिबुद्धौ कम्बुग्रीवादिमत्त्वाद्यवच्छिन्नप्रतियोगितानिरूपितत्वविशेषितानुयोगितायाः प्रतियोगिसम्बन्धतया भानमतेऽपि नानुपपत्तिः, यादृशसम्बन्धे यद्रूपवत्त्व-यत्प्रतियोगिकत्व-यद्धर्म्मावच्छिन्नानुयोगिकत्वानां त्रयाणामभावस्तद्रूपविशेषिततत्सम्बन्धेन तत्प्रकारकं तद्धर्म्मिविशेष्यकं ज्ञानं तद्रूपावच्छिन्नतत्सम्बन्धेन तस्य तद्धर्म्मिणि भ्रम इति भ्रमत्वनिरुक्त्या तादृशबुद्धेः कम्बुग्रीवादिमत्त्वाद्यवच्छिन्ननिरूपितत्वविशेषितानुयोगितासम्बन्धेन प्रतियोगिभ्रमत्वोपपादनसम्भवात् । तद्धर्म्मावच्छिन्ननिरूपितत्वश्च विषयत्वादौ प्रसिद्धं, सम्बन्धधर्म्मिकोभयाभावघटितञ्च भ्रमत्वं अवश्योपेयं, अन्यथा वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितानवच्छेदकत्वमते तत्सम्बन्धेन तस्याभाववति तेन सम्बन्धेन तत्प्रकारकत्वं भ्रमत्वमिति निर्व्वचनासम्भवात्, तथा निर्व्वचने वृत्त्यनियामकसम्ब-

(१) कम्बुग्रीवादिमत्त्वादेः सम्बन्ध इत्यर्थः

(२) कम्बुग्रीवादिमत्त्वादिनिवेशे चेत्यर्थः

योगित्वस्य संसर्गतया भानेऽपि न लौहित्यसमवायिनः प्रकारतेति ध्येयं । घटत्वमवच्छिन्नत्वं प्रतियोगित्वञ्चेति विसकलितमेव सम्बन्धः न तु तेषां परस्परोपश्लेषोऽपीति केचित् । तत्तुच्छं, एतत् त्रितयं यदि घटत्वस्य संसर्गस्तदा प्रतियोगितायामपि घटत्वस्य सम्बन्धभाने अनुभवविरोधः । •

न्धावच्छिन्नाभावाप्रसिद्ध्या तत्सम्बन्धावगाहिभ्रमासंग्रहात्, तेन सम्बन्धेन तदवच्छेदनिवेशे च व्यधिकरणसम्बन्धेन भ्रमासंग्रहात्। एवञ्च स्वसमवायिसंयोगसम्बन्धेन स्फटिकविशेष्यक-लौहित्यप्रकारकप्रमाया-मतिव्याप्तिवारणप्रकारोऽस्मत्कृतव्युत्पत्तिविचारे अनुसन्धेयः। कम्बुग्रीवादिमान्नास्तीत्यादिवाक्यस्य प्रामाण्ये च तदन्यथानुपपत्त्या गुरुधर्मस्य प्रतियोगितावच्छेदकत्वमावश्यकं, अन्यथा नीलोघटो नास्तीत्यादिवाक्यस्याप्रमाण्यं स्यात्। तत्राभेदसम्बन्धेन नीलरूपादिमतोऽन्वयितावच्छेदकत्वात् तेन सम्बन्धेन तस्य प्रतियोगितावच्छेदकत्वस्य गौरवेणासम्भवात् समवायादिना तत्र नीलरूपादेरवच्छेदकत्वे लाघवात्। न चान्वयितावच्छेदकविशिष्टव्यापकतावच्छेदकावच्छिन्नप्रतियोतियोगिताकत्वमेव सम्बन्धो वाच्यः कम्बुग्रीवादिमत्त्वादेरभावप्रतियोगितानवच्छेदकत्वेऽपि तद्विशिष्टव्यापकतावच्छेदकघटत्वावच्छिन्नप्रतियोगिताकत्वप्रसिद्ध्या नोक्तवाक्यप्रामाण्यानुपपत्तिरिति वाच्यम्। गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वे कम्बुग्रीवादिमत्त्वादिघटिततद्विशिष्टवन्निष्ठाभावप्रतियोगितावच्छेदकत्वत्वस्य गुरुतया तदवच्छिन्नाभावरूपव्यापकतावच्छेदकत्वाप्रसिद्ध्या व्यापकतावच्छेदकशरीरे प्रतियोगितानां विशिष्योपादेयतया तत्तत्प्रतियोगितावच्छेदकत्वत्वावच्छिन्नाभावकूटस्य च दुर्ज्ञेयतया तस्य शाब्दबोधविषयत्वासम्भ-

अथ घटस्य सम्बन्धस्तदवच्छिन्नत्वेऽपि घटस्य संसर्गभाने स एव विरोधः, घटत्वावच्छिन्नप्रतियोगिता अखण्डैवेति कश्चित्। तदपि न, लोहितवह्निर्नास्तीत्यादौ तदसम्भवात् घटो नास्तीत्यादावपि घटत्वादेरवच्छेदकत्वभानस्यापि आनुभविकत्वेन तदनभ्युपगमे अनुभवविरोधात्।

वात्। प्रत्यक्षात्मकविशिष्टबुद्धौ संसर्गोपस्थितेरनपेक्षितत्वेऽपि शाब्द-बुद्धौ संसर्गतात्पर्य्यज्ञानस्य हेतुतया संसर्गोपस्थित्यपेक्षणात्। तथाहि घटमानयेत्यादौ इदं वाक्यं कर्म्मत्वविशेष्यकाधेयत्वसंसर्गक-घट-प्रकारकबोधपरं इत्याकारकस्यैव संसर्गतात्पर्य्यज्ञानस्य हेतुता वाच्या, तत्र चाधेयत्वं प्रकार एव न तु संसर्गः। न च तत्राप्याधेयत्वं संसर्ग-तयैव विषयः तथाचैतद्वाक्यं घटवत्कर्म्मत्वप्रतीतिपरमित्याकारक-ज्ञानमेव हेतुरिति वाच्यम्। तादृशवाक्यार्थस्यापूर्व्वतया शाब्द-बोधात् पूर्व्वं तज्ज्ञानस्याप्यसम्भवात् कथञ्चित् सम्भवे शब्दस्यानु-वादकतापत्तेः।

यदि चेदं वाक्यं घटवत्प्रतीतिपरमित्याकारकमेव संसर्ग-तात्पर्य्यज्ञानं हेतुः प्रतीत्यंशे संसर्गविधया भासमानघटसम्बन्धस्य स्व-निष्ठाधेयत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितकर्म्मत्वनिष्ठविशेष्यता-कत्वमेवेति आधेयत्वस्याप्रकारतया न तज्ज्ञानापेक्षा न वा शब्द-स्यानुवादकतेति मन्यते तथापि तद्धर्म्मावच्छिन्नप्रकारकबुद्धौ तद्ध-र्म्मांशे स्वरूपसम्बन्धरूपप्रतियोगितावच्छेदकत्वबुद्धेरेव लाघवेनानुभवे-न च विरोधित्वात् कम्बुग्रीवादिमान्नास्तीतिवाक्यजबुद्धेः कम्बुग्री-वादिमत्त्वाद्यंशे तादृशप्रतियोगितावच्छेदकत्वानवगाहित्वे तस्याः कम्बुग्रीवादिमत्त्वाद्यवच्छिन्नविशिष्टधीविरोधित्वानुपपत्तेः।

---

अत्र च घटो नास्तीत्यादौ घटः प्रतियोगितया घटत्वस्य स्वावच्छिन्न-प्रतियोगिताकत्वेन सम्बन्धेनाभावे प्रकारीभूय भासते, घटत्वस्य प्रतियोगि-विशेषणतापन्नमेवाभावे प्रकारः न तु स्वातन्त्र्येण, धूमवान् पर्व्वतो वह्निमान् इत्यादौ पर्व्वतविशेषणतापन्ने धूम इव वह्नौ तेनाभावो घटीयः घट इत्या-कारोनेति नव्याः।

अन्वयितावच्छेदकता यत्र रूपान्तरावच्छिन्ना तत्र तद्रूपविशिष्टावच्छिन्नप्रतियोगिताकत्वमेव भासते अतो घटत्वादिरूपैकजात्यवच्छिन्नाभाववति पटत्वादिरूपापरजात्यादिविशिष्टवति जातिमान्नास्तीति वाक्यमप्रमाणं तद्देशे जातित्वाद्युपलक्षिताभावासत्त्वेपि तद्विशिष्टावच्छिन्नाभावसत्त्वात् तद्विशिष्टावच्छिन्नाभावश्च अवच्छेदकविशेषणतद्धर्मान्तर्भावेन पर्य्याप्तप्रतियोगितावच्छेदकताकः तद्विशेषणावच्छिन्नप्रतियोगितावच्छेदकताकोवाऽभावः येन सम्बन्धेन यस्यान्वयितावच्छेदकता यत्र स्थले तत्र तत्सम्बन्धावच्छिन्नमेव प्रतियोगितावच्छेदकत्वं तत्र भासते तेन विषयितासम्बन्धेन गुणत्वाद्यवच्छिन्नप्रतियोगितावच्छेदकताकाभाववति घटादौ गुणो नास्तीति वाक्यस्याप्रामाण्योपपत्तिः। समवायेन गुणत्वादिविशिष्टवाचकगुणादिपदात्तेनैवसम्बन्धेन तदवच्छिन्नस्यान्वयबोधाद्विषयितादेस्तत्रान्वयितावच्छेदकतानवच्छेदकत्वात्। अथ घटत्वेन पटो नास्तीत्यादौ व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकोऽभावः प्रतीयते इति सोन्दड़मतेऽन्वयितावच्छेदकस्य प्रतियोगितावच्छेदकतया भाननियमो न

अन्ये तु घटत्वावच्छिन्नप्रतियोगिताकत्वं घटस्यैव सम्बन्धः न तु घटत्वस्य इति नोक्तातिप्रसङ्ग इत्याहुः।

तादृशव्युत्पत्तौ अन्वय-व्यतिरेकौ प्रमाणयति, 'नीलघटवतीत्यादिना, यद्युक्तव्युत्पत्तिर्नाभ्युपेयते तदा नीलघटवत्यपि पीतघटसंसर्गाभावस्य नीलघटे पीतघटस्यान्योन्याभावस्य सत्त्वात् घटप्रतियोगिकत्वेन तद्भानमपि नव्या क्रियत इत्यर्थः, संसर्गान्योन्याभावभेदेनोदाहरणप्रदर्शनं, व्यतिरेकमुक्त्वान्वय-

सम्भवति तत्र प्रतियोगितावच्छेदकतया भासमानस्य घटत्वादेरन्वयितानवच्छेदकत्वात् । न च तृतीयार्थो वैशिष्ट्यं तस्य च प्रतियोगिन्यन्वयोपगमात् घटत्वादेरन्वयितावच्छेदकत्वं निराबाधमेव तस्य प्रतियोगिविशेषणवैशिष्ट्यपारतन्त्र्येण प्रतियोगिन्यपि विशेषणत्वोपगमादिति वाच्यं । तथा सति प्रतियोगिनि बाधितधर्म्मस्य तदंशे प्रकारतया बोधनेन तद्वाक्यस्याप्रामाण्यापत्तेः । एवं व्यधिकरणधर्म्मस्य प्रतियोगिनि प्रकारतोपगमेऽपि अन्वयितावच्छेदकता न व्यधिकरणधर्म्ममात्रपर्य्याप्ता अपि तु समानाधिकरणधर्म्ममन्तर्भाव्यैव तथा च समानाधिकरणधर्म्मस्य तत्र प्रतियोगितावच्छेदकानन्तर्भावात् । अन्वयितावच्छेदकतापर्य्याप्त्यधिकरणपर्य्याप्तप्रतियोगितावच्छेदकताकत्वभानासम्भवः । न चान्वयितावच्छेदकैकदेशपर्य्याप्तप्रतियोगितावच्छेदकताकत्वमपि भासत इत्युपगमसम्भवः । तथा सति घटसामान्याभावतात्पर्य्येणापि नीलघटो नास्तीति प्रयोगापत्तेः तद्धर्म्मांशे प्रतियोगितावच्छेदकत्वपर्य्याप्तिभाने तद्धर्म्मपर्य्याप्तान्वयितावच्छेदकताकबोधसामग्र्यपेक्षाया अवश्योपेयत्वात् । न च तावतैव कथं घटसामान्याभावतात्पर्य्येण तथा प्रयोगापत्तिवारणं शुद्धघटत्वादिपर्य्याप्तप्रकारतावच्छेदकताकबोधोत्पादकसामग्र्या घटोनास्तीति वाक्यघटिताया अधिकन्त्वित्यादिन्यायेन नीलोघटो नास्तीति प्रयोगस्थलेऽपि सत्त्वादिति वाच्यं । अगत्या पदार्थान्तरविशेषितस्वार्थान्वयपरत्वेनाग्टह्यमाणपदजन्यघटत्वावच्छिन्नोपस्थितेः शुद्धघटत्वावच्छिन्नप्रकारकबोधहेतुत्वमुपगम्य दर्शितस्थले तादृशबोधसामग्र्याभावस्योपपादनीयत्वात् । न च यत्र तृतीयान्तेन घटत्वावच्छिन्न-

प्रतियोगिताकत्वं प्रकारतया न प्रत्याय्यते तत्रैवान्वयितावच्छेदके प्रतियोगितावच्छेदकत्वस्य संसर्गतया भाननियमः घटत्वेन पटो नास्तीत्यादौ घटत्वाद्यन्वितमवच्छिन्नप्रतियोगिताकत्वं तृतीयया अभावप्रकारतया प्रत्याय्यत इत्यन्वयितावच्छेदकं घटत्वादिकं उपलक्षणतयैव भासते अतः समानाधिकरणधर्म्मस्य व्यधिकरण-धर्म्मावच्छिन्नाभावप्रतियोगितानवच्छेदकत्वेऽपि न क्षतिरिति वाच्यं। प्रतियोगिन्युपलक्षणतया उक्तस्थलेऽन्वयितावच्छेदकभानोपगमे घट-वति नीलघटत्वादिना पीतघटाद्यभावमादाय घटत्वेन घटो नास्तीतिव्यवहारस्य स्वप्रकृत्यर्थपर्य्याप्तप्रतियोगितावच्छेदकतायास्तृ-तीयार्थत्वमुपगम्य घटत्वेनेत्यस्य घटत्वपर्य्याप्तप्रतियोगितावच्छेदक-त्वार्थकतया नीलघटत्वावच्छिन्नाभावे तद्बाधेन वारणसम्भवेऽपि घटत्वावच्छिन्नद्रव्यत्वाद्युपलक्षितपटाभावमादाय घटवति घटत्वेन द्रव्यं नास्तीति व्यवहारस्य दुर्व्वारत्वात्। न च तृतीयया समभिव्या-हृताभावान्वयितावच्छेदकव्यधिकरणधर्म्मावच्छिन्नप्रतियोगिताकत्वमेव बोध्यत इति घटत्वस्य द्रव्यत्वाव्यधिकरणतया न तथा प्रयोग इति वाच्यं। अवच्छेदकस्य वास्तववैयधिकरण्यविवक्षणे घटत्व-द्रव्यत्वयोर्व्वै-यधिकरण्यभ्रमदशायां घटत्वेन द्रव्यं नास्तीति वाक्याधीनबोधानु-पपत्तेः। व्यधिकरणत्वेन ज्ञायमानत्वविवक्षणे तज्ज्ञानदशायां घटत्वावच्छिन्नप्रतियोगिताकत्वेन पटाभावबोधकतया तद्वाक्यस्य(१) प्रामाण्यापत्तेः। न च तद्वाक्यस्य घटत्वे द्रव्यत्वव्यधिकरणत्वबोधक-

(१) घटवति घटत्वेन द्रव्यं नास्तीति वाक्यस्येत्यर्थः।

तया न प्रामाण्यप्रसङ्ग इति वाच्यं। तदुभयवैयधिकरण्ये पदार्थत्वस्य वाक्यार्थत्वस्य चाभावेन तद्वाक्यतो बोधासम्भवात्।

वस्तुतोन्यूनवृत्तिघटत्वाद्यवच्छिन्नद्रव्यादिसामान्याभाववति घटादिशून्यदेशे तथा व्यवहारात् वैयधिकरण्यमयुक्ततरं। न च तृतीयान्तेन यत्र घटत्वाद्यवच्छिन्नप्रतियोगिताकत्वमभावे बोध्यते तत्रान्वयितावच्छेदकव्यापकप्रतियोगिताकत्वं सम्बन्धतया भासत इत्युपेयं तथाच घटवति घटत्वावच्छिन्नपटाभावमादाय न तथा प्रयोगप्रसङ्गः तादृशाभावप्रतियोगिताया द्रव्यत्वाव्यापकत्वादिति वाच्यं। एवमपि घटवति घटत्वावच्छिन्नप्रतियोगिताक-घटाघटोभयाभावमादाय घटत्वेन घटाघटौ नस्त इतिवत् घटत्वेन प्रमेयं नास्तीति व्यवहारापत्तेर्दुर्व्वारत्वात्। तादृशाभावप्रतियोगितायाः सकलप्रमेयवृत्तित्वात्। अत्र वदन्ति व्यधिकरणधर्म्मावच्छिन्नाभावस्य व्यधिकरणधर्म्मवत् प्रतियोगिविशेषणतया भासमानः समानाधिकरणधर्म्मोऽपि प्रतियोगितावच्छेदकः, अत एव घटत्वेन घट-पटोभयं नास्तीत्यादिप्रतीतिविषयाभावस्य प्रतियोगिताया अव्यासज्यवृत्तित्वेऽपि व्यधिकरणधर्म्मावच्छिन्नप्रतियोगिताकत्वनिर्व्वाहः घटत्वादेस्तत्प्रतियोगितासमानाधिकरणत्वेऽपि प्रतियोगितावच्छेदकतापर्य्याप्त्यधिकरणस्य घटत्वादिसहितघट-पटोभयत्वादेः प्रतियोगित्वाधिकरणघट-पटयोरपर्य्याप्तेरिति। यद्यपि पटादिनिष्ठप्रतियोगितायाव्यधिकरणघटत्वावच्छिन्नत्वेनैव व्यधिकरणधर्म्मावच्छिन्नप्रतियोगिताकत्वनिर्व्वाहस्तथापि तदभावस्य केवलान्वयित्वानुपपत्तिः प्रतियोगितावच्छेदकतापर्य्याप्त्यधिकरणधर्म्मविशिष्टप्रतियोगिनिरूपिताधि-

करणतया समस्तमभावस्य विरोधात् घटवति भूतलादौ तादृशाभावासत्त्वप्रसङ्गात्। अस्मन्मते च व्यासज्यवृत्तितदभावप्रतियोगितावच्छेदकतापर्य्याप्त्यधिकरणघटत्व-पटत्वयोरधिकरणाप्रसिद्धा तादृशाभावविरोध्यधिकरणताया अप्यप्रसिद्धा तस्य केवलान्वयित्वनिर्व्वाहः। न चैतदनुरोधेन वह्नित्वविशिष्टाधिकरणतावति पर्व्वतादौ महानसीयवह्नित्वावच्छिन्नाभावसत्त्वानुरोधेन च प्रतियोगितावच्छेदकतापर्य्याप्त्यधिकरणधर्म्मविशिष्टनिरूपिताधिकरणतयैव समस्तेदभावस्य विरोधः तदा घट-पटौ नस्त इतिप्रतीतिविषयघट-पटोभयत्वावच्छिन्नाभावस्यापि केवलान्वयित्वप्रसङ्गः, तथाहि तादृशाभावस्य प्रतियोगितावच्छेदकत्वपर्य्याप्तिर्नोभयत्वमात्रे केवलघटत्वादौ वा यत्किञ्चिदुभयवति केवलघटादिमति च तादृशाभावासत्त्वप्रसङ्गात्। नापि घट-पटवृत्तित्वविशिष्टद्वित्वे, तादृशविशिष्टानुपस्थितौ तथा प्रतीत्यनुदयप्रसङ्गात्, अपि तु उभयत्वे तद्धर्म्मितावच्छेदकतापन्ने घटत्वे पटत्वे चेति वाच्यं। स्वप्रतियोगितावच्छेदकतापर्य्याप्तिर्यादृशे तादृशपर्य्याप्तनिरूपकतावच्छेदकताकाधिकरणतया समस्तमभावस्य विरोधात् घट-पटावचेतिप्रतीतिसाक्षिकद्वित्व-तद्धर्म्मितावच्छेदकतापन्नघटत्वादिसमुदायपर्य्याप्तनिरूपकतावच्छेदकताकाधिकरणतावति अत्र घट-पटौ नस्त इतिप्रतीतिसिद्धतादृशसमुदायपर्य्याप्तप्रतियोगितावच्छेदकताकाभावासत्त्वात् तादृशाभावस्य केवलान्वयित्वप्रसङ्गविरहात्।

केचित्तु तदभावप्रतियोगित्वमगत्या व्यासज्यवृत्ति स्वीक्रियते तथा च यद्धर्म्मावच्छिन्ने प्रतियोगितायाः पर्य्याप्तिः प्रतियोगिताव-

च्छेदकविशिष्टस्य तदवच्छिन्नस्यैव चाभावविरोधितया न समाना-धिकरणधर्मस्य प्रतियोगितावच्छेदकत्वं विना तादृशाभावस्य केव-लान्वयित्वानुपपत्तिरित्याहुः ।

घटत्वेन पटो नास्तीत्यादौ यद्धर्मावच्छिन्नप्रतियोगिताकत्वं तृतीयान्तेनाभावांशे प्रत्याय्यते यश्च धर्मोऽभावनिरूपितप्रतियोगि-निष्ठप्रकारतावच्छेदकतया भासते तदुभयपर्य्याप्तप्रतियोगितावच्छेद-कताकत्वमभावे प्रतियोगिनः सम्बन्धतया भासत इत्युपेयते, अभावांशे धर्मान्तरावच्छिन्नप्रतियोगिताकत्वबोधकतृतीयान्तासमभिव्याहार-स्थले च यादृशधर्मोऽन्वयितावच्छेदकस्तत्पर्य्याप्तप्रतियोगितावच्छेद-कताकत्वमेव सम्बन्ध इति न काप्यनुपपत्तिः । घटत्वेन द्रव्यं नास्ती-त्यादिबुद्धौ द्रव्यत्वादावपि प्रतियोगितावच्छेदकत्वभानात् घटत्वेन पटो नास्तीत्यादिधीविषयाभावस्य च प्रतियोगिताया द्रव्यत्वाद्यनव-च्छिन्नत्वात् । अत एव घटत्वविशिष्टपटवानिति प्रत्ययेऽत्र घटत्वेन पटो नास्ति घटत्ववान्पटो नास्ति इति वाक्यजबुद्धावेकमेव प्रति-बन्धकत्वं उभयत्र घटत्व-पटत्वयोः प्रतियोगितावच्छेदकत्वपर्य्याप्तेः संसर्गतया भानात्तदुभयावच्छिन्नप्रकारताघटितस्य तदुभयपर्य्याप्तप्र-तियोगितावच्छेदकताकत्वसंसर्गावगाहिबुद्धित्वरूपप्रतिबन्धकतावच्छे-दकस्योभयसाधारणत्वादिति ध्येयं । अथ घटो नास्तीत्यादिवाक्याद् घटत्वादिरूपसामान्यधर्मावच्छिन्नप्रतियोगिताकत्वशून्ययोर्ध्वंस-प्राग-भावयोरन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वविरहेणाप्रत्ययात् ध्वंस-प्रागभावसाधारणनञ्पदशक्तिर्न सम्भवतीति चेत्, न, ध्वंस-प्राग-भावयोरत्यन्ताभावविरोधितामते अन्तरा श्यामे रक्तं रूपं नास्तीति

**नीलघटवति न घटः नीलघटो न घटः इत्याद्यव्यव-**

व्यवहारानुरोधेन ध्वंस-प्रागभावयोरपि समयविशेषावच्छेदेन सामान्यावच्छिन्नप्रतियोगिताकत्वोपगमस्यावश्यकतया तयोरपि नञा प्रतिपादनात्। व्युत्पत्तिविरोधेन तयोस्तेनाप्रतिपादनेऽपि सदातनत्वघटितात्यन्ताभावत्वापेक्षया ध्वंसादिसाधारणाभावत्वस्य लाघवेनासदातनभावरूपाभावाभावसाधारण्यानुरोधेन च प्रवृत्तिनिमित्ततया नञ्पदवाच्यत्वानपायात्। न चात्यन्ताभावत्वमखण्डधर्मान्तरं अनुयोगिताविशेषरूपं वा न सदातनत्वघटितमिति न गौरवमिति वाच्यं। तादृशधर्मान्तरे मानाभावात्। तद्व्यक्तिर्नास्तीतिवाक्यात् तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकयोर्ध्वंस-प्रागभावयोर्बोधनात् ध्वंसप्रागभावसाधारणशक्तेरावश्यकत्वाच्च। न च ध्वंस-प्रागभावयोरत्यन्ताभावविरोधस्याप्रामाणिकतया तद्व्यक्तित्वावच्छिन्नध्वंसाधिकरणे तादृशात्यन्ताभावसत्त्वात् स एवोक्तवाक्यात् प्रतीयतइति वाच्यं। ध्वंसाद्यधिकरणे तादृशात्यन्ताभावस्याप्रामाणिकत्वात् अन्वयितावच्छेदकावच्छिन्नत्वाविशेषितायाः प्रतियोगितायाः नञ्पदार्थसंसर्गाभावे प्रतियोगिसम्बन्धतोपगमे बाधकं दर्शयति, 'नीलघटवतीति, 'न घट इत्याद्यव्यवहारादित्यनेन सम्बध्यते। तादृश्याः प्रतियोगितायाः नञ्पदार्थे भेदे प्रतियोगिसम्बन्धत्वे बाधकमाह, 'नीलघट इति, 'अव्यवहारादिति व्यवहारस्य प्रमाणत्वाभावादित्यर्थः। शुद्धप्रति-

---

माह, 'इह नीलेत्यादिना, नीलघटवत्यपि क्वचित् पीतघटसत्त्वात् अवच्छेदकावच्छेदेनान्वयबोध इति तद्वारणाय 'इहेति। इदमत्रावधेयं न पीतो घट इत्यादौ पीतगुणवतो अभेदसम्बन्धेनानुयोगितावच्छेदकं घटत्वं

योगितायाः सम्बन्धत्वेऽबाधितविशेषान्तराभावबोधकतया तद्वाक्यानां प्रामाण्यस्य दुर्व्वारतया व्युत्पन्नैरपि तथा प्रयुज्यत इति भावः । तद्रूपविशिष्टप्रतियोगिविशेषिते धर्म्मिणि शुद्धतद्रूपविशिष्टप्रतियोगिविशेषितसंसर्गाभावस्य तद्रूपविशिष्टे प्रतियोगिनि शुद्धतद्रूपावच्छिन्नप्रतियोगिविशेषितभेदस्य च बोधने नञोऽसामर्थ्योपगमेन दर्शितप्रयोगवारणसम्भवेऽपि वस्तुगत्या नीलघटादिमति नीलघटादौ च अत्र न घटः अयं न घट इत्यादिप्रयोगस्य प्रामाण्यप्रसङ्गो दुर्व्वार इति वाच्यं। न च वस्तुगत्या अन्वयितावच्छेदकावच्छिन्ना या प्रतियोगिता तस्याः सम्बन्धतानियमेणुक्तातिप्रसङ्गः शक्यवारण इति किमन्वयितावच्छेदकावच्छिन्नत्वभानोपगमेनेति वाच्यं। लोहितवह्निर्नास्तीत्यादौ लोहितवह्नेरप्रसिद्ध्या अन्वयितावच्छेदकावच्छिन्नत्वेन वास्तवेन प्रतियोगिताव्यावर्त्तनासम्भवात् अन्वयितावच्छेदकावच्छिन्नत्वाभाने विपरीतज्ञाननिवर्त्तकत्वायोगस्य दर्शितत्वाच्च। सामान्यतो घटमनुपादाय नीलत्वेन तदुपादानञ्च तदधिकरणे तत्र च विशेषान्तरात्यन्ताभावान्योन्याभावयोर्बाधितत्वप्रकाशनाय ।

केचित्तु अभावाधिकरणतायामन्वयितावच्छेदकावच्छिन्नत्वभानमुपगम्यापि घटवति न घटः घटो न घट इति प्रयोगः शक्यवारणः पीतघटादिरूपविशेषात्यन्तान्योन्याभावाधिकरणतायाः प्रति-

---

अन्वयितावच्छेदकं नामार्थयोरभेदस्यैव संसर्गत्वात्, तत्र समवायेन पीतगुणानुयोगितावच्छेदकं घटत्वमपेक्ष्य गुरुतरमतो नावच्छेदकं, पीतगुणानुयोगितावच्छेदकञ्च घटत्वं नान्वयितावच्छेदकं तथाच तत्पदेनाबोधनात्

योगिसम्बन्धतादात्म्यवत् साधारणघटवत्त्व-घटत्वाभ्यामनवच्छेदात् अतो नीलपदोपादानमित्याहुः ।

तन्न साधु, घटप्रतियोगिकस्य घटाकाशोभयत्वावच्छिन्नात्यन्ताभावस्य घट-पटोभयत्वावच्छिन्नभेदस्य चाधिकरणतायामनतिप्रसक्त-घटवत्त्व-घटत्वाभ्यामवच्छेदसम्भवेन तादृशाभावमादाय तथा प्रयोगस्य दुर्व्वारत्वात् । प्रत्येकाभावातिरिक्तव्यासज्यवृत्तिधर्म्मावच्छिन्न-प्रतियोगिताकाभावानभ्युपगमेऽपि घटप्रतियोगिकाभावत्वेनानुगताभावाधिकरणतानां घटवत्त्वादिना अवच्छेदे बाधकाभावात् अन्यथा वह्न्याद्यभावाभावानां प्रत्येकनिरूपिताधिकरणतानां धूमत्वावच्छेदेन सत्त्वासम्भवेन धूमवति वह्न्यभावोनास्तीति व्यवहारानुपपत्तेः । प्रतियोगिबोधकपदोपस्थाप्यतावच्छेदकावच्छिन्नप्रतियोगिताभाननियमे साधकमाह,'इह नीलघटवतीति।'व्यवहाराच्चेति, घटपदार्थतावच्छेदकशुद्धघटत्वावच्छिन्नाभावासत्वेपि पीतपदसमभिव्याहारलभ्य-पीतघटत्वरूपान्वयितावच्छेदकावच्छिन्नाभावमादाय ईदृशव्यवहारस्य प्रमाणत्वाच्चेत्यर्थः । न केवलं नञादिपदजन्यशाब्दज्ञाने प्रतियोगितारूपसंसर्गे प्रतियोगितासंसर्गावच्छिन्नप्रकारतावच्छेदकतापर्य्याप्त्यधिकरणपर्य्याप्तावच्छेदकताकत्वभाननियमः अपि तु प्रतियोगितासम्बन्धेन प्रतियोगिप्रकारकज्ञानमात्र एव उक्तरूपानवच्छिन्नप्रतियोगित्वसांसर्गिकविषयताया अप्रामाणिकत्वादित्यवधेयं ।

---

अतो गुरुधर्म्मस्यावच्छेदकत्वकल्प एवैतादृशः शाब्दबोधो विशेषदर्शिनामिति। ननु भूतलं न घट इत्यादौ भूतलादौ घटादिसंसर्गाभावधीः स्यात्। न च संसर्गाभावबोधे अनुयोगिनि सप्तम्यपेक्षिता चैत्रो न पचतीत्यादौ

हारात्, इह नीलघटवति न पीतोघटः पीतोघटो न नीलः इत्यादिव्यवहाराच्च प्रतियोग्यभावान्वयौ च तुल्य-

न चैवं सकलसाध्याभाववन्निष्ठेत्यादिलक्षणे साध्यविशेषाभावमादायाव्याप्तेर्वारणाय साकल्यस्य साध्यविशेषणतया वर्णनविरोध इति वाच्यं । तत्र साध्यस्याभावः साध्याभाव इति षष्ठीतत्पुरुषजन्याभावबोधे षष्ठ्यर्थप्रतियोगितायाः प्रकारत्वात् न तु संसर्गत्वात् । ननु नञर्थाभावस्य प्रतियोगिनेवाधिकरणेनापि संसर्गः संसर्गतयापि भासते नामार्थयोर्भेदान्वयबोधः साक्षान्न सम्भवतीति व्युत्पत्तौ निपातातिरिक्तत्वस्य नामविशेषणत्वात् नञश्च निपातत्वात् । अन्यथा प्रतियोगिताबोधकपदाभावात् घटोनास्तीत्यादौ नञर्थाभावे घटप्रतियोगिकत्वभानानुपपत्तेः । न पचति चैत्र इत्यादावभावाधारताबोधकानुयोगिवाचकपदोत्तरविभक्त्यभावेन पाकक्रत्यभाववांश्चैत्र इत्यादिबोधस्य नायं घट इत्यादाविदमाद्यर्थे घटभेदाद्यधिकरणताया बोधस्यानुपपत्तेश्च । न च भिन्न एव नञोऽर्थः । न तु स्वातन्त्र्येण भेदस्तस्यानुयोगिन्यभेदान्वयो न तु भेदान्वयः । अतएव चायमघटो न घट इति समास-व्यासयोरविलक्षणबोधजनकत्वानु-

तिङर्थस्य कृत्यादेः संसर्गाभावबोधो न स्यात् अत आह, 'प्रतियोगीति, 'तुल्येति, अभावान्वयः प्रतियोग्यन्वयेन तुल्ययोगक्षेमः तेनानुयोगिनि प्रतियोग्यन्वयस्य यत्र सम्बन्धत्वं तत्र तदभावान्वयस्यापि तथात्वं यत्र च प्रतियोग्यन्वयस्य प्रकारत्वं तत्र तदभावान्वयस्यापि प्रकारत्वं तथाच तत्तत्पदोपस्थाप्यस्य प्रतियोगिनोऽनुयोग्यन्वयबोधे यदपेक्षितं तत्र तदभावान्वयबोधेऽपि तदपेक्षितमित्यर्थः पर्य्यवस्यति, एतदेव फलमुखेन दर्शयति, 'तेनेत्यादिना ।

भवोऽपि, एवञ्च पर्य्युदासस्थले भेदवतोगुरुतया न मुख्यनञर्थता अपि तु लक्ष्यार्थतैवेति प्रतिषेध एव नञोमुख्यार्थ इति शूलपाण्यादि-सम्मतमिति वाच्यं। तथा सति संसर्गाभावोऽन्योन्याभावश्चेति विशेषणद्वयोर्नञर्थताकथनानुपपत्तेः। एवं तादात्म्येन विशिष्टबुद्धौ विशेषणताविशेषेण भेदप्रकारकधीरेव विरोधिनी न त्वभेदसम्बन्धेन भेदवत्प्रकारकधीरपि गौरवात्, तथाच सति[१] नायं घट इत्यादावधिकरणे भेदस्य भेदान्वयानुपगमे तादृशवाक्यजबुद्धेरयं घट-इत्यादिवाक्यजबोधं प्रत्यानुभविकी विरोधिता भज्येत। तथाच भूतलं न घट इत्यादौ भूतलादावाधारतासम्बन्धेन घटादिसंसर्गा-भावबोधासम्भवात् अन्योन्याभावबोधतात्पर्य्येणेव संसर्गाभावबोधता-त्पर्य्येणापि तथा प्रयोगः स्यात्। एवं भूतले न घट इत्यादौ घट-संसर्गाभावाधिकरणतावद्घटभेदाधिकरणता कुतो न प्रतीयते इत्यत-आह, 'प्रतियोग्यभावान्वयौ चेति, अधिकरण इत्यादिः, अन्वय-पदं संसर्गभानपरं, तथाचाधिकरणे यादृशपदोपस्थाप्यस्य प्रतियो-गिनः प्रतियोगितावच्छेदकसम्बन्धभानं यादृशाधिकरणबोधकया-दृशपदसमभिव्याहारसापेक्षं तादृशपदोपस्थाप्यप्रतियोग्यन्विताभाव-स्यापि आधाराधेयभावरूपसम्बन्धस्य भानं तादृशाधिकरणबोधकता-दृशपदसापेक्षञ्चेत्यर्थः। 'अनुयोगिनीति, यदृशपदोपस्थाप्य इत्यादिः।

(१) भेदप्रकारकज्ञानस्य प्रतिबन्धकत्वे च सतीत्यर्थः।

'यत्पदोपस्थापितस्येति, तथाच पदविशेषजन्यप्रतियोग्युपस्थित्यन्तर्भावेन कार्य्यकारणभावो बोध्यः अन्यथा चैत्रो न पाककृतिरित्यत्रापि कृतिसंसर्गा-भावधीः स्यादिति भावः। तिङाद्यर्थस्यापि कृत्यादेर्धात्वर्थे जनकत्वेन नञर्थ

योगक्षेमौ । तेन यत्पदोपस्थाप्यस्य अनुयोगिन्याधाराधेयभावसम्बन्धेनान्वयस्तत्र तत्संसर्गाभावस्यापि तथा

---

'आधाराधेयभावसम्बन्धेनान्वय इति आधाराधेयभावनियामकप्रतियोगितावच्छेदकसम्बन्धस्य समवायादेः सम्बन्धमर्य्यादया भानं इत्यर्थः, 'तत्संसर्गाभावस्यापि तथेति तत्पदोपस्थाप्यप्रतियोगिविशेषिततत्सम्बन्धावच्छिन्नाभावस्याधारतासम्बन्धोऽपि[१] तादृशपदोपस्थाप्ये[२] अनुयोगिनि सम्बन्धमर्य्यादया भासत इत्यर्थः । 'तिङाद्यर्थस्येति, नञोऽसत्त्व इत्यादिः, आदिपदात्सुपः परिग्रहः, 'कृत्यादेरित्यादिना तिङर्थाश्रयत्वादि-सुबर्थस्वत्वादिपरिग्रहः, प्रथमान्तपदोपस्थाप्यत्वस्य विशेष्यतानियामकत्वाभिधानं तिङर्थान्वयाभिप्रायेण, चैत्रस्य धनं पश्यतीत्यादौ द्वितीयाद्यन्तपदोपस्थाप्येनापि धनादिना षष्ठ्यर्थस्वत्वाद्यन्वयात् सुवर्थविशेष्यतया अन्वये प्रथमान्तपदोपस्थाप्यत्वस्यानियामकत्वात् । सुपश्च कारकपदोत्तरस्य योऽर्थस्तद्विशेष्यत्वे धातूपस्थाप्यत्वं नियामकं शेषषष्ठ्यर्थविशेष्यत्वे च प्रातिपदिकोपस्थाप्यत्वं प्रत्ययान्योप-

(१) चैत्रो न पाककृतिरित्यादितस्तादृशसम्बन्धस्य सम्बन्धमर्य्यादया भानवारणाय तत्पदोपस्थाप्येति ।

(२) चैत्रे न पचति इत्यादितस्तादृशसम्बन्धभानवारणाय तादृशपदोपस्थाप्य इति ।

---

प्रतियोगित्वेनान्वयादाधाराधेयभावसम्बन्धेनैवेत्युपपन्नमित्यतः 'अनुयोगिनीति अधिकरणत्वेनान्वयबोधविषय इत्यर्थः, 'तत्संसर्गाभावस्यापि' तत्पदोपस्थाप्यप्रतियोगिनः संसर्गाभावस्यापि, 'तथा' आधाराधेयभावसम्बन्धेनान्वयः, पचति चैत्र इत्यत्र प्रतियोग्यन्वयस्य सम्बन्धत्वं दर्शयित्वा तदभावान्वयस्य

यथा पचति चैत्रः न पचति चैत्रः चैत्रस्येदं नेदं चैत्रस्य इत्यादौ तिङाद्यर्थस्य कृत्यादेः प्रथमान्तपदोपस्थापित एव तथेति तदभावस्यापि तत्र तथा। षष्ठ्यादेश्चैत्रादि-रू-

स्थाप्यत्वं वा, गुरु-विप्र-तपस्वि-दुर्गतानां प्रतिकुर्वीतेत्यादौ प्रतीकारादिक्रियायामपि तदन्वयात्, उपपदविभक्तयस्तु यद्यत्पदयोगे या विहितास्तत्तदर्थविशेष्यत्वे तत्तत्पदोपस्थाप्यत्वं(१), यथा चैत्रादन्य-इत्यादौ अन्यादिपदयोगे अनुशिष्टानां पञ्चम्यादीनामर्थस्य प्रतियोगित्वादेर्व्विशेष्यत्वेऽन्यत्वादिनिष्ठेऽन्यादिपदोपस्थाप्यत्वं, 'तत्रेति अनुयोगिनीत्यर्थः, 'तथा' आधाराधेयभावसम्बन्धेनान्वय इत्यर्थः, 'तदभावस्यापि' तिङाद्युपस्थापितकृत्याद्यभावस्यापि, 'तत्र तथा' प्रथमाद्यन्तपदोपस्थाप्ये आधाराधेयभावसम्बन्धेनान्वय इत्यर्थः। पचति चैत्रे न इत्यादितश्चैत्रादौ नञर्थस्याभावस्य विशेषणत्वेनानन्वयात् चैत्रो न पाककृतिरित्यादित इव चैत्रे न पचतीत्यादितश्चैत्रवृत्तित्वप्रकारेण पाककृत्यभावाबोधाच्चेति भावः। चैत्रस्य धनमित्यादौ षष्ठ्यर्थः

(१) नियामकमिति पूर्व्वेणान्वयः।

तद्दर्शयति, 'न पचति चैत्र इति। वैयाकरणमते कर्त्तुराख्यातवाच्यत्वात् तस्य च अभेद एव संसर्ग इत्यतः सुब्विभक्तिमुदाहरति, 'चैत्रस्येदमित्यादिना, 'तिङादीत्यादिना षष्ठ्याः कृत्यादेरित्यादिना खलस्य संग्रहः। 'प्रथमान्तेति, तथाच विभक्तिजन्यकृत्युपस्थितिजन्यकृतिसंसर्गाभावस्याधाराधेयभावेनान्वय-बोधे नञ्पदजन्यप्रथमान्तपदजन्याधिकरणोपस्थितिः कारणमेवं रीत्या कार्य्य-कारणभाव एव बोद्धव्यः, एवमुत्तरत्रापि, 'तत्र' अनुयोगिनि चैत्रे धने च, 'तथा'. आधाराधेयभावसम्बन्धेनान्वयः, 'तदभावस्यापि' कृत्यादिसंसर्गा-

# पितं स्वत्वादिकमर्थो न तु तन्निष्ठं स्वामित्वादिकं, तस्य धनाद्यवृत्तित्वेन चैत्रीयेऽपि धने नेदं चैत्रस्येति प्रसङ्गात्

स्वामित्वादिकं तत्र प्रकृत्यर्थचैत्रादिविशेषणतया भासते स्वामित्वादिप्रकारेण चैत्रादेरेव धनादौ स्वत्वादिसम्बन्धेनान्वयः; विभक्त्यर्थविशेष्यतापन्नप्रातिपदिकार्थस्य प्रातिपदिकार्थे साक्षादपि भेदान्वयबोधोपगमान्नामार्थयोर्भेदान्वये प्रकारीभूतविभक्त्यर्थोपस्थितेस्तन्त्रत्वात्। अथ वा षष्ठ्याद्यर्थः स्वामित्वादिकं प्रकृत्यर्थविशेष्यतयैव भासते धनादेस्तदनाश्रयत्वेऽपि तन्निरूपकतया निरूपकतासम्बन्धेन तत्र तदन्वय इति प्राचीनमतं दूषयिष्यन् स्वमतमाह, 'षष्ठ्यादेश्चेति, 'आदिपदाद्द्वितीया-तृतीययोः परिग्रहः। 'चैत्रादिनिरूपितमिति, 'स्वत्वादिकमित्यादिना कर्मत्व-कृतिजन्यत्वादिपरिग्रहः, निरूपितत्वसम्बन्धेन चैत्रादिरूपप्रकृत्यर्थान्वयीत्यर्थः, 'तन्निष्ठमिति आश्रयतासम्बन्धेन विशेषणतया चैत्राद्यन्वयि आधेयतासम्बन्धेन चैत्रादिरूपविशेषणेनान्वयि वेत्यर्थः। 'स्वामित्वादिकमित्यादिना कर्मत्व-कर्तृत्वपरिग्रहः। 'तस्येति चैत्रनिष्ठस्वामित्वादेरित्यर्थः। 'धनाद्यवृत्तित्वे-

भावस्यापि। ननु षष्ठ्या अर्थः स्वामित्वं तस्य च धने निरूपकत्वसम्बन्धेनैवान्वयो न त्वाधाराधेयभावसम्बन्धेनेत्यत आह, 'षष्ठ्यादेरिति, स्वत्वस्य षष्ठ्यर्थत्वे प्रकृत्यर्थस्य चैत्रादेः केन सम्बन्धेन तत्रान्वय इति तद्दर्शयति, 'चैत्रादिनिरूपितमिति, तथाच निरूपितत्वसम्बन्धेन तत्र प्रकृत्यर्थस्यान्वय इति भावः। 'तन्निष्ठं' चैत्रादिनिष्ठं, एतेन स्वामित्वस्य षष्ठ्यर्थत्वे प्रकृत्यर्थेन समं तस्यान्वयबोधे निष्ठत्वमेव, सम्बन्धः इत्युक्तं, 'तस्य' चैत्रादिनिष्ठस्वामित्वस्य, 'धनाद्यवृत्तित्वेनेति, तथाच वृत्तितानियामकेन सम्बन्धेन स्वामित्वाभावबोध-

निरूपकत्वादेः सम्बन्धस्य प्रतियोगितानवच्छेदकत्वादि-

---

नेति वृत्त्यनियामकस्वत्व-निरूपकत्वादिसम्बन्धेन धनादिसम्बन्धित्वेऽपि धनाद्यवृत्तितयेत्यर्थः । धनादौ आश्रयतासम्बन्धेन चैत्रादेस्तन्निष्ठ-स्वामित्वादेश्चाभावसत्त्वेनेति शेषः । 'प्रसङ्गात्' भवन्मते अबाधित-तादृशचैत्राद्यभावबोधकस्येत्यादिप्रयोगस्य प्रामाण्यप्रसङ्गात् । ननु स्वामित्वादेः प्रकृत्यर्थविशेष्यतापक्षे स्वामित्वादेर्निरूपकतासम्बन्धाव-च्छिन्नाभावस्य प्रकृत्यर्थविशेषणतापक्षे तद्विशिष्टप्रकृत्यर्थचैत्रादेः स्वत्वादिसम्बन्धावच्छिन्नाभावस्य नञा प्रत्यायनोपगमात् नोक्ताति-प्रसङ्गावकाशः तादृशाभावस्य धनादौ बाधादित्यत आह, 'निरू-पकत्वादेरिति, 'आदिपदात् स्वत्वादेः परिग्रहः । 'प्रतियोगितान-वच्छेदकत्वादिति वृत्त्यनियामकतयेत्यादिः, वृत्त्यनियामकसम्बन्धाव-च्छिन्नसंसर्गाभावस्याप्रामाणिकत्वात् येन हि सम्बन्धेनायमिहेति प्रत्ययः तत्सम्बन्धमादायैव नायमिहेति प्रत्ययः निरूपकतासम्बन्धेन धने स्वामित्वमित्यप्रत्ययात्तेन सम्बन्धेन नात्र स्वामित्वमिति प्रतीते-रप्यभावः । अत एव धनमात्रे स्वामित्वस्याश्रयतासम्बन्धावच्छिन्ना-भावसत्त्वेनैतद्देशवृत्तिवायौ नीलरूपाभाव इतिवत् अचैत्रीयधने न चैत्रनिष्ठस्वामित्वमिति धने अचैत्रीयत्वस्य स्वामित्वे च चैत्रनिष्ठत्व-

नेऽबाधित एवेति तथा प्रयोगः स्यादिति भावः । ननु स्वामित्वस्य षष्ठ्यर्थत्वं तस्य निरूपकत्वेन सम्बन्धेन धनेऽन्वयः तत्सम्बन्धावच्छिन्नप्रतियोगिताक एव तदभावो नञा प्रत्याय्यते चैत्रीयन्तु धनं तन्निरूपकमेवेति कथं तत्र नेदं चैत्रस्येत्यादेः प्रसङ्गः इत्यत आह, 'निरूपकत्वादेरिति, निरूपकत्वादिसम्ब-न्धस्य प्रतियोगितावच्छेदकत्वे किं बाधकमित्यत आह, 'दिगिति, प्रमाणा-

त्येषा दिक्। यत्र चाधाराधेयभावो न संसर्गमर्य्यादया लभ्यस्तत्रानुयोगिपदे सप्तम्यपेक्षा यथा भूतले घटो न

स्वाव्यावर्त्तकतया न व्यवह्रियते अपि तु धने न स्वामित्वमित्येव, अन्यथा निरूपकतासम्बन्धावच्छिन्नस्वामित्वाभावतात्पर्य्येण तथा व्यवहारस्य[1] दुर्व्वारतापत्तेः। अत एव कृतिमत्त्वरूपकर्तृत्वसम्बन्धस्य वृत्त्यनियामकतया न पचतीत्यत्र तत्सम्बन्धावच्छिन्नक्रियाभावबोधासम्भवेन पचतीत्यादौ कृतिमत्त्वसम्बन्धेन पाकादेः कर्त्तर्य्यन्वयबोधं मणिकारो नोपजगाम उपजगाम तु जानातीत्यादौ आश्रयतासम्बन्धेन ज्ञानादेरिति भावः। वृत्त्यनियामकसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्वीकारे स्वत्वसम्बन्धावच्छिन्नचैत्राभाव-स्वत्वाभावयोः समनियततया अभिन्नत्वेनाभावकल्पनाधिक्यविरहेऽपि अतिरिक्तप्रतियोगितात्कल्पनाधिक्याद्गौरवं बोध्यं। 'यत्र चेति ययोरित्यर्थः। 'संसर्गमर्य्यादया लभ्य इति भेदान्वये निराकाङ्क्षतयेत्यादिः। तादृशौ च प्रातिपदिकार्थौ, 'तत्रेति, तत्पदार्थे तत्पदार्थसंसर्गाभावबोधे अनुयोगिवाचकपदोत्तरं सप्तम्यपेक्षेति तत्राभावसम्बन्धस्याधारतारूपस्य संसर्गत्वासम्भवेन तदर्थकविभक्तिं विना तद्भानासम्भवादिति भावः।

(१) अचैत्रीयधने न चैत्रनिष्ठस्वामित्वमिति व्यवहारस्येत्यर्थः।

न्तरसिद्धमेवार्थं शब्दो बोधयति न तु शब्दबलादेव वस्तुसिद्धिः। 'यत्र चाधारेति, यत्पदोपस्थाप्यस्य प्रतियोगिनोऽनुयोगिनीत्यनुषज्यते, अत्र च नामपदजन्यघटोपस्थितिजन्ये नञ्पदजन्यघटसंसर्गाभावबोधे अनुयोग्युपस्थापकपदोत्तरसप्तमीसमभिव्याहृतनञ्पदजन्या संसर्गाभावोपस्थितिः कारणं

अत्र च भूतल-घटाभावाद्योः साक्षाद्भेदान्वयबोधस्याप्रसिद्ध्या तत्सा-मग्र्या अकल्पनात् भूतलं न घट इत्यादिवाक्यान्न तादृशशाब्दबोधापत्तिः। यदि च घटाभावादिविशिष्टभूतलादिपरतदादिपद-घटित।इदमस्तीतिवाक्यात् भूतलाद्यंशे घटाद्यभावप्रकारकबोधः प्रसिद्ध इत्युच्यते तदा तादृशबोधोत्पत्तौ तादृशवाक्यज्ञान-तद्घटक-तदादिपदजन्यतादृशविशिष्टार्थोपस्थित्यादिघटितसामग्र्या एव प्रयोजकत्वात्तदभावादेव नोक्तस्थले तदुत्पत्तिप्रसङ्गः, भूतले न घट-इत्यादौ प्रसिद्धबोधस्य घटाभावे भूतलादिवृत्तित्वप्रकारकत्वस्योत्पादप्रयोजिका सामग्री च परस्परसमभिव्याहृतप्रथमान्तघटादिपद-नञ्पदजन्यघटादि-तदभावोपस्थितिभ्यामिव तत्तत्पदसमभिव्याहृत-सप्तमीजन्याधेयत्वोपस्थिति-तत्प्रकृतिजन्यभूतलोपस्थित्यादिनापि घटिता भूतलं न घट इत्यादौ तदभावादेव न तदुत्पादप्रसङ्गः। एवं न पचति चैत्र इत्यादौ प्रसिद्धस्य चैत्रादिविशेष्यकपाककृत्याद्यभावप्रकारकबोधस्य सामग्री प्रथमान्तजन्यानुयोग्युपस्थिति-विभक्तिजन्यकृत्यादिरूपप्रतियोग्युपस्थितिघटिता तदभावात् पाककृतिर्न चैत्र इत्यादौ न तत्प्रसङ्गः, एवं पाककृतिर्न चैत्रे इत्यादिस्थलप्रसिद्धस्याभावांशे चैत्रादिवृत्तित्वप्रकारकबोधस्याप्युक्तरीत्या वारणमिति बोध्यं। ननु सप्तम्यन्तभूतलादिपदेन नञर्थाभावे आश्रयतासम्बन्धेन

इत्यश्च यावत् सप्तम्यन्तपदसमभिव्याहारो नञ्पदे न जायते तावन्न घट-इत्यादितो घटसंसर्गाभावधीर्न भवत्येवेति। वृत्तितानियामकसम्बन्धप्र-कारेणैव सर्वत्राभावप्रतीतिरस्ति एतद्धनस्वामित्वं मैत्रे नास्ति चैत्रस्वत्वं अत्र नास्तीत्येवाभावप्रत्ययात् न तु निरूपकेत्यादिसम्बन्धं प्रतियोगितावच्छेदकी-

घट इत्यत्र तात्पर्य्यवशात् कदाचिद्भूतलादौ घटाभावः कदाचिद्घटादौ भूतलवृत्तित्वाभावः प्रतीयते, अतएव

---

भूतलादिवृत्तित्वबोधने तादृशपदेन नेदं चैत्रस्येत्यादौ षष्ठ्याद्यन्तपदेन प्रथमान्तार्थविशेषण-नञर्थाभावेऽपि कदाचित् प्रतियोगितया स्वार्थान्वयबोधजननवत् प्रथमान्तार्थविशेषणतापन्नाभावे स्वार्थान्वयबोधजननात् घटाभावोभूतले भूतलवृत्तित्वाभाववान् घट इति द्विविध एव भूतले न घट इति वाक्यजन्यबोधः, एवञ्च तादृशवाक्यात् कदाचित् प्रथमबोधः कदाचित् द्वितीयबोधः इत्यत्र किं नियामकमित्याकाङ्क्षायां तात्पर्य्यभेदस्य नियामकत्वमाह, 'अत्रेति, 'अत्र' भूतले न घट इत्यादिवाक्यस्थले। ननु सर्व्वत्र सप्तम्यन्तार्थस्याभावनिष्ठतयैवान्वयोऽस्तु न तु कदाचिदपि तत्प्रतियोगितया विनिगमकस्याये व्यक्तीभविष्यतीत्यत आह, 'अत एवेति कदाचित् सप्तम्यन्तार्थप्रतियोगिकाभावस्यापि नञा बोधनादेवेत्यर्थः। 'इत्यादौ'

---

कुत्र क्वचिद्भावधीरस्ति इति भावः। यद्वा भूतले न घट इत्यत्र घटपदोपस्थाप्यस्य घटस्य नञ्पदजन्ये भूतलाधेयत्वप्रकारकसंसर्गाभावबोधे भूतलोपस्थापकपदोत्तरसप्तमीपदसमभिव्याहृतनञ्पदजन्यसंसर्गाभावोपस्थितिः कारणं भूतलं न घट इत्यादौ फलाभावात्तथा विशेषसामग्री न कल्प्यते सामान्यसामग्री च विशेषसामग्रीं विना कुतो न कार्य्यजननीति एषा दिक्। ननु सप्तम्यर्थस्याभावो नञा बोध्यते तस्य चानुयोगिनि घटे आधाराधेयभावः सम्बन्धएवेति पूर्व्वोदाहरणमेवेत्यत आह, 'अत्रेति, 'कदाचिद्भूतलादाविति, तदानीमेव चरमोदाहरणमिति भावः। चरमबोधोपष्टम्भकमाह, 'अतएवेति, 'एकविशेष्यकत्वेति, पृथिवीवृत्तिर्गन्धोजलवृत्तित्वाभाववांश्च इति

पृथिव्यां गन्धो न जले इत्यादौ प्रतीतेरेकविशेष्यकत्वानुभवः ।

इत्यादिद्विविधवाक्ये, 'प्रतीतेरेकविशेष्यकत्वानुभवः' गन्धाद्येकविशेष्यकप्रतीतिजनकत्वानुभवः, 'न जल इत्यतोगन्धाभावस्यैव जलवृत्तित्वबोधोपगमे तत्प्रतीतावभावस्यैव विशेष्यतया पृथिव्यां गन्ध इत्यतश्च तद्विशेष्यकबोधानुत्पत्त्या तयोरेकविशेष्यकबोधजनकत्वानुभवो विरुध्येत इति भावः ।

नञर्थाभावनिष्ठाधेयताबोधकत्वं सप्तम्याः खण्डयतां मतमुपन्यस्यति, 'केचित्त्विति, 'विशेष्ये विशेषणस्याभाव इति नञोऽसत्त्वे यत्पदार्थे यत्पदार्थो विशेषणतया भासते तत्र नञा तत्पदार्थाभावो विशेषणतया प्रत्याय्यत इत्यर्थः, तथा च भूतले घट इत्यतो घटे भूतलवृत्तित्वस्य विशेषणतया बोधनात् भूतले न घट इत्यतोऽपि घटे भूतलवृत्तित्वाभाव एव विशेषणतया प्रतीयते न तु घटाभावे भूतलवृत्तित्वं, एकाकारवाक्यस्य द्विविधबोधजनकत्वोपगमे नञ्पदे सप्तम्यन्तभूतलादिसमभिव्याहारज्ञानस्य द्विविधकारणत्वकल्पनापत्तेः । उभयसाधारणतत्कार्य्यतावच्छेदकस्य(१) कथञ्चित् सम्भवेऽपि तादृशवाक्यधर्म्मिक-

(१) अन्यतरत्वादेरित्यर्थः ।

उभयत्रैव गन्धो विशेष्यः आद्यकल्पानुसारे तु पृथिवीवृत्तिर्गन्धो जले गन्धाभाव इति बोधे भिन्नविशेष्यकत्वं स्यादिति भावः ।

सप्तम्यर्थस्यैवाभावो भासते इति नियमवादिनां मते आह, 'केचित्त्विति, नञोऽसमभिव्याहारे यद्विशेष्ये यद्विशेषणतया भासते नञ्समभिव्याहारे तद्विशेषणस्य तद्विशेष्येऽभावो नञा बोध्यते तथाच भूतले घट इत्यादौ घट-

केचित्तु सर्व्वत्र विशेष्ये विशेषणस्याभावो नञा प्रत्याय्यते। अतएव भूतले घटो नास्ति घटौ न स्तः घटा न सन्ति इत्यादौ घटोऽस्तीत्यादाविव वचनैक्य-

द्विविधवाक्यार्थतात्पर्य्यज्ञानस्य पृथक्कारणतया तत्कारणताधिकस्य दुर्व्वारत्वादिति भावः। एतन्मते युक्त्यन्तरमाह, 'अत एवेति, 'घटोऽस्तीत्यादाविवेत्यादिना घटौ स्तः घटाः सन्ति इत्यादिपरिग्रहः, 'वचनैक्यनियम इति विशेष्य-विशेषणपदयोः समानवचनत्वनियमेन सुप्तिङोर्व्वचनसाम्यनियम इत्यर्थः, भूतले घटोनास्तीत्यादौ अभावस्य भूतलास्तित्वविशेष्यत्वे तदैक्येन(१) घटौ न स्त इत्यादौ द्विवचनानुपपत्तेरिति भावः। न चैतन्मतेऽपि घटोनास्ति घटौ न स्त इत्यादावाख्यातार्थस्य प्रतियोगितया अभावविशेषणत्वमेव न तु घटविशेषणत्वमिति कथमाख्यातान्तस्य समानवचनत्वमिति वाच्यं। विशेषणपदस्य साक्षात्स्वार्थविशेष्यपदेनेव स्वार्थविशेष्यनिपातार्थविशेष्यपदेनापि समानवचनत्वनियम इत्याशयात्। न च घटौ न स्त इत्यादौ

(१) अभावैक्येनेत्यर्थः।

एव भूतलवृत्तित्वस्य विशेष्य इति तत्रैव भूतलवृत्तित्वाभावो नञा बोध्यत-इत्यर्थः। 'अतएवेति यतएवाभावान्वयेऽपि घटस्यैव विशेष्यत्वमित्यर्थः, 'वचनैक्यनियम इति अभावस्य विशेष्यत्वे विशेषणपदस्य विशेष्यपदसमानवचनत्वनियमात् घटौ न स्त-इत्यादौ द्विवचनादिकं न स्यात् किन्त्वभावस्यैकत्वात् घटो नास्तीत्येकवचनमेव स्यात् घटस्य विशेष्यत्वे च तस्य द्वित्व-बहुत्वयोः क्रियापदस्यापि द्विवचनादिकं स्फुटमेवेति भावः। यद्यपि भूतले

अस्तित्वाभावस्य घटादौ बोधपक्षे एकघटवति घटौ न स्त इति व्यवहारो न स्यात् घटे तद्देशास्तित्वसत्त्वे द्वित्वाद्यवच्छिन्नेऽपि तत्र तदभावासत्त्वादिति वाच्यं। द्वित्वाद्यवच्छेदेन प्रतियोग्यसत्त्वे प्रतियोगिसत्त्वपि तदवच्छिन्ने तदभाव इत्यस्यैतदादिनोपगमात्।

केचित्तु अत्र घटौ न स्त इत्यादौ घटद्वयत्वसामानाधिकरण्येनैव तद्देशास्तित्वाभावः प्रतीयते यत्र चैक एव घटस्तत्र तादृशद्वित्वसामानाधिकरण्येन घटान्तरे तादृशास्तित्वाभावस्याबाधाच्च घटौ न स्त इति वाक्यस्य योग्यता। न चैवं यत्राधिकरणे घटद्वयं वर्त्तते तदधिकरणास्तित्वाभावस्यापि घटपर्य्याप्तद्वित्वाश्रयतद्देशावृत्तिघटान्तरे सत्त्वात्तदधिकरणपरमत्र घटौ न स्त इति वाक्यं प्रमाणं स्यादिति वाच्यं। घटपर्य्याप्तद्वित्वत्वावच्छेदेन नञर्थाभावसामानाधिकरण्यभानोपगमाद्यद्देशे यत्किञ्चित्घटद्वयसत्त्वं तद्घटद्वयद्वित्वे तद्देशवृत्तित्वाभावसामानाधिकरण्यासत्त्वेन न घटपर्य्याप्तद्वित्वत्वावच्छेदेन तद्देशवृत्तित्वाभावसामानाधिकरण्यं इति तद्बोधकतादृशवाक्यस्य प्रामाण्याप्रसक्तेरित्याहुः। तच्चिन्त्यं, तादृशद्वित्वे तद्देशास्ति-

घटो नास्तीत्यत्र सप्तम्यर्थोनिरूपितत्वं तच्च धात्वर्थे विद्यमानत्वे, तच्चाख्यातार्थे आश्रयत्वे, तच्च नञर्थे अभावे, स च घटेऽन्वेतीति भूतलनिरूपितविद्यमानत्वाश्रयत्वाभाववान् घट इति शाब्दबोधेऽभावएव साक्षाद्घटे विशेषणं न त्वाख्यातार्थः, तथापि परम्परया विशेषणस्यापि विशेष्यसमानवचनत्वमौत्सर्गिकं चैत्रो न पचतीत्यादौ दृष्टत्वादित्याशयः। न चैकघटवति भूतले घटौ न स्त इति न स्यात् द्वित्ववद्घटत्वावच्छेदेनैतद्भूतलनिरूपितविद्यमानत्वाश्रयत्वाभावस्याभावात् तादृशसामानाधिकरण्येन नञर्थस्यान्वये घटद्वयव-

त्वाभावसामानाधिकरण्यभानं हि धर्म्मितावच्छेदकतादृशद्वित्वप्रकारेण भासमानधर्म्मिणि तादृशाभावरूपविशेषणसम्बन्धभानं न तु तादृश-द्वित्वे तादृशाभावाधिकरणवृत्तित्वस्य प्रकारतया संसर्गतया वा भानं तत्र तथा[१] तद्बोधकाभावात्। तथा च तादृशद्वित्वत्वे तादृशाभाव-सामानाधिकरण्यावच्छेदकत्वस्य तत्सामानाधिकरण्ये वा तादृशद्वित्व-त्वावच्छिन्नत्वस्य भानमप्रसक्तमेव एकदेशवृत्तिधर्म्मस्य द्वित्वाद्यवच्छे-देनाभावोपगमे तु अत्र घटौ न स्त इति वाक्यादुक्तद्वित्वत्वा-वच्छेदेन तद्देशास्तित्वाभावावच्छेकत्वभानोपगमात् घटद्वयाधिकरण-देशास्तित्वाभावस्य तदधिकरणावृत्तिघटसाधारणद्वित्वावच्छेदेन सत्त्वेऽपि नातिप्रसङ्गः। तादृशद्वित्वत्वावच्छेदेनाभावावच्छेदकत्व-भानञ्चाभावरूपविशेषणे धर्म्मितावच्छेदकतावच्छेदकतादृशद्वित्वत्वा-वच्छिन्नावच्छेदकताकत्वरूपधर्म्मितावच्छेदकावच्छिन्नत्वभानं तच्च सम्भवत्येव अवच्छेदकावच्छेदेन विशिष्टबुद्धौ विशिष्टधर्म्मिता-वच्छेदकावच्छेद्यतया विशेषणभानस्य सर्व्वसम्मतत्वात्। यद्यप्युक्तयुक्त्या अत्र घटो नास्ति घटौ न स्त इत्यादावभावेऽस्तित्वादिक्रियान्वय-

(१) तादृशद्वित्वे तद्देशास्तित्वाभावसामानाधिकरण्यभानं इत्यर्थः।

---

त्यपि भूतले घटौ न स्त इति स्यादिति वाच्यं। तादृशद्वित्वत्वावच्छेदेन नञर्थसामानाधिकरण्यस्यान्वयात् घटद्वयवति भूतले अधिकरणान्तरीय-घटद्वित्वे तद्भूतलास्तित्वाभावसामानाधिकरण्यसत्त्वेऽपि तद्घटद्वयद्वित्वे तद-भावेन घटौ न स्त इति प्रयोगस्य बाधितार्थकत्वात्, एवं घटा न सन्तीत्य-त्रापि बोध्यं। 'तेषामिति, अनियमपक्षे तु तत्र सत्त्वाभावो जातिवृत्ति-रित्यन्वयबोधेन नानुपपत्तिरिति भावः। समवायेन सम्बन्धसामान्येन वा

नियम इत्यप्याहुः। तेषां जातौ न सत्तेत्यत्र गतिश्चिन्त-नीया जातिसमवेतत्वस्याप्रसिद्धेः, सम्बन्धान्तरेण जाति-वृत्तित्वस्य सत्तायामपि सत्वात्।

---

एव बोधयितुं शक्यते न तु अत्र न घट इत्यादौ अभावे सप्तम्यन्तार्थान्वयबोधः, तथापि क्रियां विना न वाक्यसमाप्तिरिति अत्र न घट इत्यादावप्यस्तीत्यध्याहारेण तिङन्तार्थस्यैवाभावेऽन्वय इत्यभिप्रेत्यैतदभिहितं, अस्तीत्यस्य समभिव्याहारे चाधार-सप्तम्या निरूपितत्वमर्थः, वृत्त्यर्थकधातुयोगे निरूपकस्यैवाधारत्वात्। भूतले वर्त्तते भूतलेऽस्तीत्यादेः समानार्थकतया वृत्तिरस्त्यर्थः, 'गति-श्चिन्तनीया' सत्ताशब्दस्य सत्तासमवाये सत्ताप्रतियोगिकत्वविशिष्ट-सत्तासमवायानुयोगिकत्वे वा लक्षणया उपपत्तिप्रकारश्चिन्तनीयः। यथाश्रुतार्थेऽनुपपत्तिं दर्शयति, 'जातीति, 'अप्रसिद्धेरिति तदभावस्य सत्तायां नञा बोधयितुमशक्यत्वादिति शेषः, इदञ्चात्र समवायेन वृत्तेः सप्तम्यर्थत्वे बोध्यं, वृत्तिसामान्यस्य सप्तम्यर्थतोपगमे तु अप्रसिद्धि-विरहेण तत्पक्षे बाधकमाह, 'सम्बन्धान्तरेणेति एकार्थसमवायेनेत्यर्थः। गुण-कर्मान्यत्वविशिष्टसत्तात्वादिना सत्तादौ गुणादिवृत्तित्वाभावानुप-गमे गुणे न विशिष्टसत्ता इत्यादावपि विशिष्टनिरूपिताधिकरणत्वे

---

जातिवृत्तित्वस्याभावो नञा प्रत्याय्यः, आद्ये 'जातिसमवेतत्वेति, द्वितीये 'सम्बन्धान्तरेणेति एकार्थसमवायादिनेत्यर्थः। वस्तुतस्तु जातौ न सत्तेत्यादौ सत्तापदं सत्त्वासमवायपरं सप्तम्यर्थश्चानुयोगित्वं तथाच जात्यनुयोगित्वा-भाववान् सत्तासमवाय इत्यन्वयबोधे नानुपपत्तिः न तु गतिरेव नास्तीति तदर्थः, अतएव 'गतिश्चिन्तनीयेत्युक्तं।

सप्तम्यर्थान्विताभावस्य विशेषणतया प्रतियोग्यन्वय-
इत्यपि कश्चित् ।

लक्षणया योग्यत्वमुपपादनीयं, लक्षणा च भावप्रत्ययस्यैव, समुदायस्य(१) शक्यप्रसिद्धा लक्षणाया असम्भवात् ।

मतान्तरमाह, 'सप्तम्यर्थेति भूतले घटोनास्ति जातौ सत्ता नास्तीत्यादौ भूतल-जात्याद्यस्तित्वरूपसप्तमीसमभिव्याहृतक्रियापर्य्यन्तार्थस्य आश्रयतया अन्वयी योऽभावः प्रतियोगितासम्बन्धेन प्रकारीभवतस्तस्य विशेष्यतया प्रतियोगी भासत इत्यर्थः, एवञ्च परम्परया क्रियाविशेष्यप्रतियोगिवाचकघटादिपदसमानवचनत्वं क्रियापदस्य निर्व्वहतीति द्रष्टव्यं । येन रूपेण प्रतियोगिनोविशेष्यत्वं तद्रूपावच्छिन्नत्वविशेषितैव प्रतियोगिता सम्बन्धतया भासते अतो घटादिमति विशेषाभावमादायात्र घटोनास्तीत्यादयो न व्यवहाराः, अवच्छिन्नत्वञ्च नान्यूनवृत्तित्वं अपि तु स्वरूपसम्बन्धविशेषः, तेन

(१) पदस्यैव शक्तिर्न वाक्यस्येति समुदायस्य वाक्यतया न तच्छक्तिरिति भावः ।

'सप्तम्यर्थेति, यद्यपि विशेषणस्यैवाभावो बोध्यते इति नियमस्यैव न रक्षणं तथापि प्रथमान्तस्यैव विशेष्यत्वे वचनैक्यनियमोपपत्तिस्तावताप्युपपन्नैवेत्याशयः। अत्र सप्तम्यर्थान्वयेन जातिवृत्त्यभावस्य प्रतियोगितया सत्तायामन्वयेन जातिवृत्त्यभावीया सत्तेत्यन्वयबोधः तथाच द्रव्ये न सत्तेत्यपि स्यात् तत्र सत्ताया विशिष्टाभावस्य सत्त्वात् ! न च सत्तात्वावच्छिन्नप्रतियोगितासम्बन्धः, अनतिरिक्तवृत्तित्वस्यावच्छेदकत्वस्य तत्रापि सत्त्वात् अनुयोगितावच्छेदकस्वरूपसम्बन्धरूपावच्छेदकत्वमन्तर्भाव्य शक्त्यन्तरकल्पने गौरवादित्यस्वरसः 'कश्चिदित्यनेन सूचितः। वस्तुतस्तु घटो न स्त इत्यादितो द्वित्वाद्यवच्छिन्न-

वह्न्यादिमति तार्णतार्णोभयवह्नी न स्त इतिवत्तादृशाभावमादा-
याच वह्निर्नास्तीत्यादयो न प्रयोगाः न वा गुण-कर्म्मान्यत्वविशिष्ट-
सत्तात्वाद्यवच्छिन्नाभावमादाय गुणादौ सत्ता नास्तीत्यादयः, अभावे
प्रतियोगिनोऽन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वस्य संसर्गता-
पक्षेऽपि तादृशातिप्रसङ्गस्य तथैव वारणीयत्वात्। अत्र चाभावेऽनु-
योगितासम्बन्धेन प्रतियोगिप्रकारको घटोनास्तीत्यादिरेवानुभविकः
प्रत्ययः न तु प्रतियोगिनि प्रतियोगितासम्बन्धेनाभावप्रकारकोऽभा-
वीयो घट इत्यादिः। अथैवं प्रतियोगिन्यभावस्य प्रतियोगितासम्बन्धं
एव न स्यादिति चेत्का क्षतिः नञ्पदघटितवाक्यात्प्रतियोगिन्यभाव-
प्रतियोगिताप्रकारकबोधस्य न सम्भवति प्रतियोगिताया अपदार्थ-
त्वात्। न च नञ्पदोत्तरविभक्तिरेव प्रतियोगित्वार्थिका, तत्कल्पने
गौरवात्, प्रथमाविभक्तेः सङ्ख्यातिरिक्तपरत्वेऽसाधुत्वात् निपातोत्तरं
विभक्त्यन्तरानुदयात् तदनिश्चयेऽपि[1] शाब्दबोधस्यानुभविकत्वात्।
प्रतियोग्यभावयोः सम्बन्धं सम्बन्धविधया अवगाहमानस्यैव ज्ञानस्य
लाघवेन प्रतियोगिविशिष्टधीविरोधितया जातौ न सत्ता इत्यादि-
वाक्याज्जातिधर्म्मिकसत्तादिसंशयादिनिवर्त्तकज्ञानानिर्व्वाहस्येत्याद्य-
स्वरसः। यत्र नञोऽसत्वे प्रतियोग्यनुयोगिनोर्यः सम्बन्धोभासते तत्रैव

(१) नञ्पदे विभक्त्यन्तरानिश्चयेऽपीत्यर्थः।

घटाभावएव विशेष्यतया प्रतीयते नञः क्रियापदसमभिव्याहारे तस्य प्रति-
योगिपदेन समानवचनत्वमपि तन्त्रं, अतएव घटौ नास्तीति न प्रयोगः द्विव-
चनादिकन्तु प्रयोगसाधुत्वार्थं एवञ्च भूतले घटौ न स्त इत्यादेर्भूतलाधेयत्व-
योर्द्वित्वावच्छिन्नाभावोऽस्तीत्येव वाक्यार्थ इति ध्येयं। फलमुखेन नियामकं

यत्र च विशेषण-विशेष्ययोरभेदेनान्वयो व्युत्पन्नस्त- त्रान्योन्याभावो नञा बोध्यते यथायं घटो नीलः नायं घटो नील इति तत्र विशेषण-विशेष्यपदयोः समान-

नञा तत्सम्बन्धावच्छिन्नप्रतियोगिताकस्तदभावः प्रत्याय्यते इति व्युत्पत्त्यनुसारेण भूतले न घट इत्यादितो भूतलादौ घटान्योन्याभावबोधं वारयति, 'यत्र चेति यादृशप्रतियोग्यनुयोगिवाचकपद-समभिव्याहारस्थल इत्यर्थः, 'विशेषण-विशेष्ययोः' प्रतियोग्यनुयोगिनोः, 'अभेदेन' तादात्म्येन, 'अन्वयः' विशेषण-विशेष्यभावः, 'तत्र' तत्रैव, 'अन्योन्याभावोनञा बोध्यत इति, तस्य तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकत्वादिति भावः। एवञ्च भूतले घट-इत्यादौ घट-भूतलाद्योस्तादात्म्याप्रतीतेर्भूतले न घट इत्यादौ न भेदबोध इति सूचितं। 'अयं घटोनील इत्यादिः प्रतियोग्यनुयोगिनोरभेदान्वयोदाहरणं, नायं घटोनील इत्यादिरन्योन्याभावोदाहरणं, भूतले घट इत्यादावेव कथं न घट-भूतलाद्योरभेदबोध इत्यत आह, 'तत्रेति नामार्थयोरभेदबोध इत्यर्थः, समानविभक्तिकताविरहेऽपि स्तोकं पचतीत्यादौ स्तोक-पाकाद्योरभेदबोधात् न स्तोकं पचतीत्यादौ पाकादिक्रियायां स्तोकभेदबोधात्

वस्तु अन्योन्याभावस्थलं दर्शयति, 'यत्र चेति, 'तत्रान्योन्येति, अभेदेन विशेषणत्वयोग्यस्य विशेष्येऽन्योन्याभावो नञा बोध्यते इत्यर्थः, अयं घटो नील इत्यनेनाभेदान्वयो दर्शितः अत्र नञाऽन्योन्याभावबोधने। 'समानेति दधि सुन्दरमित्यादावपि लुप्तविभक्त्यनुसन्धानेनैव शाब्दधीरिति भावः। केचो

विभक्तिकत्वं विरुद्धविभक्तिराहित्यं वा तत्त्वं, अतएव नामार्थयोरित्युक्तं। 'समानविभक्तिकत्वं' एकजातीयविभक्त्यन्तत्वं, एकजातीयत्वञ्च प्रथमात्व-द्वितीयात्वाद्यन्यतमरूपेण न त्वानुपूर्व्या, अतो-वेदाः प्रमाणमित्यादावपि अभेदान्वयबोधः, नीलघटेत्यादिसमास-साधारणाय 'विरुद्धेति, विशेष्यपदे यज्जातीयविभक्तिराहित्यं विशेषणपदेऽपि तज्जातीयविभक्तिराहित्यं न तु विशेष्यपदप्रकृतिक-विभक्तिविजातीयविभक्तिराहित्यं विशेषणपदे नीलघटरूपमित्या-दितो नीलघटाद्यभेदबोधानुपपत्तेः घटादिपदानन्तरविभक्तेरप्र-सिद्धेः, विशेष्यपदानन्तरकालीनावृत्तिप्रथमात्वाद्यन्यतमरूपवद्विभक्ति-राहित्यं वा विवक्षितं। इदन्तु चिन्त्यते, विरुद्धविभक्तिराहित्यं न स्वरूपसदपेक्षितं विरुद्धविभक्तिकयोरपि समानविभक्तिकत्वभ्रमे अभेदबोधात् समानविभक्तिकयोरपि विरुद्धविभक्तिकत्वभ्रमे अभेदा-

---

न पचतीत्यादौ आख्यातस्य धर्म्मिपरतायां चैत्रे पाककर्त्तुः पचति न स्तोक-मित्यादौ पाके स्तोकाभेदस्य प्रतिपादने समानविभक्तिकत्वाभावादाह, 'विरुद्धविभक्तिराहित्यं वेति, निर्व्विभक्तिकासमस्तनीलादिपदसमभिव्याहृत-नञ्पदस्थले विरुद्धविभक्तिविरहेऽप्यसाधुत्वादेव नान्वयबोधः। वस्तुतस्तु उक्तयै-क्यमात्रमेतत् न त्वनेन रूपेण हेतुत्वं अनुयोगि-प्रतियोग्युपस्थापकनामपदयोः समभिव्याहारे समानविभक्तिकत्वं तत्त्वं तथाच घटो न नील इत्यादौ घट-पदार्थान्वितनीलपदार्थान्योन्याभावबोधेन घटपदसमानविभक्तिकनीलपद-समभिव्याहृतनञ्पदत्वेन चैत्रो न पचतीत्यादौ धर्म्मिपराख्यातसमभि-व्याहृतनञ्पदत्वेन न स्तोकं पचतीत्यादौ क्रियाविशेषणसमभिव्याहारे द्वितीयान्तस्तोकादिपदसमभिव्याहृतत्वेन विशिष्यैव हेतुत्वं बोध्यं अन्यथा न पचतीत्यादौ धर्म्मिपराख्यातप्रतियोगिपदोत्तरविभक्तेः न स्तोकं

यजतिषु ये यजामहं करोति नानुयाजेष्वित्यादावेक-

बोधात्, नापि ज्ञातं, विरुद्धविभक्त्यनुपस्थितिदशायां विरुद्ध-विभक्तिराहित्याज्ञानेऽपि नीलोघट इत्यादौ आनुपूर्व्वीविशेषरूपेण भासमानायाः स्वादिविभक्तेर्व्विशेष्य-विशेषणपदयोस्तदन्तत्वरूपानुपूर्व्वीज्ञानात् नीलघट इत्यादौ च नीलपदाव्यवहितघटपदत्वादिरूपानुपूर्व्वीज्ञानात् नील-घटाद्योरभेदान्वयबोधात् । तस्मात्तादृशानुपूर्व्वीज्ञानानामननुगतानामपि तदानन्तर्य्यघटितधर्म्मावच्छिन्नमभेदान्वयबोधं(१) प्रति हेतुता दीधितौ वाकारोऽनास्थासूचक इति युक्तमुत्पश्यामः । ननु प्रतियोग्यनुयोगिनोः प्रथमान्तत्वमेव नामार्थे नामार्थाभेदबोधे तन्त्रं किन्नोच्यते तावतैव भूतले न घटः नीले न घट इत्यादौ भेदधीवारणसम्भवात् इत्यत आह, 'अत एवेति प्रतियोग्यनुयोगिपदयोः प्रथमान्तत्वमुपेक्ष्याभेदान्वयबोधप्रयोजकतत्समभिव्याहारस्यान्योन्याभावबोधे तन्त्रतोपगमादेवेत्यर्थः । 'नानुयाजेष्वित्यादाविति, प्रतियोग्यनुयोगिवाचकपदयोः प्रथमान्तत्वाभावेऽप्यभेदान्वयप्रयोजकसमानविभक्तिकतामात्रेण नञेति शेषः,

(१) तत्तदानुपूर्व्वीज्ञानानन्तर्य्यघटितेत्यर्थः, कारणानन्तर्य्यस्य कार्य्यतावच्छेदककोटिनिवेशस्तु व्यभिचारवारणाय ।

पचतीत्यादावनुयोगिक्रियापदोत्तरसुविभक्तेरप्रसिद्धतया प्रतियोगिपदोत्तरविभक्तिविरुद्धविभक्तिशून्यानुयोगिपदसमभिव्याहृतनञ्पदत्वेनानुयोगिपदोत्तरविभक्तिविरुद्धविभक्तिशून्यप्रतियोगिपदसमभिव्याहृतनञ्पदत्वेन वा हेतुत्वस्यानुगतस्यासम्भवादसङ्गत्यापत्तेरिति ध्येयं । 'अत एवेति यत एव समान-

वाक्यत्वानुरोधात् ये यजामहमित्यादेरनुषङ्गे(१) गौरवाच्च यजतिषु याजभेदो बोध्यते विशेषणविभक्तिस्तु योग-

'यजतिष्वऽनुयाजभेदो बोध्यते इत्यनेनाभिसम्बन्धः, तिवन्तोऽपि यजतिशब्दो यागरूपधात्वर्थवाचकः "ईक्षतेर्नाशब्दमित्यादौ तादृशे-क्षत्यादिपदमिव ज्ञानादिबोधकः। ननु ये यजामहमित्यादेरनु-षङ्गेन नानुयाजेष्वित्यनेनानुयाजेषु ये यजामहं न करोतीत्येव प्रत्याय्यते तथा च "रात्रौ श्राद्धं न कुर्व्वीत" इत्यत्र यथा रात्रि-श्राद्धकरणे आख्यातार्थेष्टसाधनत्वाभावो नञ्प्रतिपाद्यस्तथा प्रकृतेऽपि विध्यर्थकतिवर्थस्य इष्टसाधनत्वस्यात्यन्ताभाव एव ये यजामहमन्त्र-पाठकरणे नञ्प्रतिपाद्यः न तु यजतिष्वनुयाजभेद इत्याशङ्कां निरा-करोति, 'एकवाक्यत्वानुरोधादिति अन्यथा वाक्यभेदेन गौरवादिति भावः। तदुक्तं "सम्भवत्येकवाक्यत्वे वाक्यभेदो हि नेष्यते" इति।

(१) श्रुतपदस्य पुनरनुसन्धानमनुषङ्गः।

विभक्तिकत्वं तन्मत एवेत्यर्थः, 'यजतिषु' यागेषु, 'ये यजामहं' ये यजा-महपदवन्तं मन्त्रं, 'करोति' उच्चारयेत्, 'अनुयाजः' यागविशेषः, 'एक-वाक्यत्वेति, अनुयाजभिन्नेषु यजतिषु ये यजामहमन्त्रकरणविधावर्थैक्या-देकवाक्यत्वं यजतिषु ये यजामहकरणविधौ अनुयाजेषु तत्करणनिषेधे च विधौ अर्थभेदाद्भिन्नवाक्यता स्यादिति भावः। 'ये यजामहमित्यादेरिति, प्रथमानुसन्धानस्य एकवाक्यार्थबोधेनैव पर्य्यवसितत्वादिति भावः। आदिना करोतीत्यस्य सङ्ग्रहः, इदञ्च मणिकारादिलिखनमनुरुध्य व्याख्यातं, 'नानु-याजेषु करोतीत्येव वैदिकसम्मतः पाठः। ननु नानुयाजेष्वित्यस्य निषेध-विधित्वेऽनुयाजाधिकरणकतादृशमन्त्रकरणमनिष्टसाधनमिति वाक्यार्थे

गौरवान्तरमप्याह, 'ये यजामह'मिति । ननु भेदप्रतियोगितया अनुयाजान्वये अनुयाजपदोत्तरसप्तम्या वैयर्थ्यप्रसङ्गः तथा आधारत्वरूपस्वार्थाबोधनादित्यत आह, 'विशेषणे'ति, यथानुयाजेषु यजतिष्वित्यादौ तादात्म्यसम्बन्धेन साक्षाद्यजत्यादिविशेषणानुयाजार्थकपदोत्तरविभक्तेर्नाधारत्वाद्यर्थपरत्वं अपि तु निर्व्विभक्तिकप्रातिपदिकस्यासाधुतया साधुत्वार्थकतैव तथा नानुयाजेषु यजतिष्वित्यादावपि अन्तराभासमाननञर्थद्वारा यजतिविशेषणार्थकानुयाजपदोत्तरविभक्तिः साधुत्वमात्रार्थेत्यर्थः । न चैवं पदसाधुत्वाय घटो न नील इत्यादौ नीलादिपदोत्तरमिव प्रकृते प्रथमैव स्यान्न तु सप्तमीति वाच्यं । अभेदेन साक्षाद्विशेषण-विशेष्यभावापन्नार्थकयोरिव नञर्थभेदद्वारा विशेषण-विशेष्यभावापन्नार्थकयोरपि प्रातिपदिकयोः समानविभक्तिकतानियमेन प्रकृते प्रथमाया अप्रसक्तेः । ननु घटः कर्म्मत्वमित्यादौ घट-कर्म्मत्वादीनां आधाराधेयभावादिना अनन्वयात् नामार्थे नामार्थस्य विभक्त्यर्थप्रकारेणैव तत्सम्बन्धेन साक्षादन्वयः विभक्त्यर्थमन्तराकृत्यैव वा अन्वय इति व्युत्पत्तिरुपगन्तव्या तथाच घटो नीलः अनुयाजेषु यजतिषु इत्यादितः प्रतियोग्यनुयोगिनोरभेदान्वयासम्भवात् घटो न नीलः नानुयाजेषु यजतिष्वित्यादौ घटयागादौ नीलानुयाजादिभेदो नञा कथं बोधनीय इत्यत आह,

---

सप्तम्यर्थस्यान्वयात् सप्तम्याः सार्थकत्वं स्यात् पर्य्युदासे तु तद्वैयर्थ्यमतस्तदनुरोधात् गौरवादिकमपि न्याय्यमत आह, 'विशेषणे'ति, विशेषणविभक्तेः पदसाधुत्वप्रयोजनसत्त्वान्न वैयर्थ्यमिति भावः । नन्वेवं प्रकारीभूतविभक्त्यर्थोपस्थितिं विना कथं नीलो घट इत्यादौ नामार्थयोरन्वय-

साधुः नामार्थयोर्भेदेनान्वयबोध एव प्रकारीभूतविभक्त्य-

'नामार्थयोर्भेदेनान्वयबोध इति आधाराधेयभावसम्बन्धेनान्वयबोध-इत्यर्थः, 'प्रकारीभूतविभक्त्यर्थोपस्थितेरिति विशेषणीभूतनामार्थे प्रकारितया तादृशसम्बन्धभानप्रयोजिकाया विभक्तिजन्यतदुपस्थिते-रित्यर्थः, एतच्च घटे कर्मत्वमित्यादौ विभक्त्यर्थाधारतादिविशेषितस्य घटादेराधेयतासम्बन्धेन कर्मत्वादावन्वय इति प्राचीनमतानुसारेणोक्तं, अन्यथा तादृशबोधाप्रसिद्धेरसङ्गत्यापातात् नामार्थयोः साक्षाद्भेदा-न्वयो न भवत्येव भवति तु विभक्त्यर्थमन्तराकृत्येति व्युत्पत्तिः घटे कर्मत्वमित्यादौ घटादिविशेषिताधेयत्वादिरूपविभक्त्यर्थस्यैव कर्मत्वादौ प्रकारतया भानादिति तु तत्त्वं। अन्यथा सप्तम्यर्थाधार-त्वादिविशेषितप्रकृत्यर्थस्याधेयतादिसम्बन्धेनापरनामार्थेऽन्वयेन नञ्-समभिव्याहारस्थले आधेयत्वादिसम्बन्धेनावच्छिन्ननामार्थाभावस्यैवा-परनामार्थे भानस्योपेयतया वृत्त्यनियामकसम्बन्धस्यात्यन्ताभावप्रति-योगितावच्छेदकसम्बन्धत्वविरहेण तदसम्भवादसामञ्जस्यमापद्येत। वस्तुतो नामार्थयोरन्वयबोध इत्यत्र साक्षादन्वयबोधो न विवक्षितो-ऽपि तु नामार्थप्रकारतानिरूपितनामार्थविशेषताकबोध एव, निरू-पितत्वञ्च साक्षात्परम्परासाधारणं, प्रकारीभूतविभक्त्यर्थोपस्थिते-स्तन्त्वादित्यस्य च विशेष्यीभवन्नामार्थप्रकारतया प्रकारीभवन्ना-मार्थविशेष्यतया अर्थान्तरभासकविभक्तिजन्यतदुपस्थित्यादेस्तन्त्रत्वा-

---

इत्यत आह, 'नामार्थयोरिति, ननु यत्र च विशेषण-विशेष्ययोरभेदान्वय-बोधो व्युत्पन्नस्तत्र भेदो नञा बोध्यते इति नियमात् कथं यजतिषु, अनुयाजभेदान्वयः तत्र प्रकारीभूतविभक्त्यर्थोपस्थित्यभावेन विशेषणा-

र्थोपस्थितेर्हेतुत्वात् लाघवेन तयोरन्वयबोधमात्र एव

दित्यर्थः, नामार्थविशेष्यकाभेदान्यसंसर्गक-तत्प्रकारकान्वयबोध एव विभक्तिजन्यतदुपस्थितेर्हेतुत्वादिति पर्य्यवसितार्थः, ईदृशकारणबाधान्नामार्थे नामार्थस्य साक्षान्नाभेदातिरिक्तसम्बन्धेन प्रकारत्वमेवञ्च भेदान्वय एव उक्तव्युत्पत्तेर्यजतिष्वनुयाजेष्वित्यादौ अभेदसम्बन्धेनानुयाजादेर्यागादिविशेषणत्वे बाधकाभावान्नानुयाजेषु यजतिष्वित्यादौ यागादावनुयाजभेदबोधो निरपवाद एवेति भावः । येषां मते नीलं घटमानयेत्यादौ विशेषणविभक्तेः सार्थकत्वाय तस्या अभेदार्थकत्वं न तु नील-घटयोस्तादात्म्यं संसर्गः तन्मते नञा नामार्थे नामार्थप्रतियोगिविशेषितभेदो बोधयितुं न शक्यते इति न भवत्येव तद्बोधः अपि तु नामार्थविशेषितविभक्त्यर्थाभेदाभाव एव, नेदं चैत्रस्य इत्यादौ चैत्रस्वत्वाभाववन्नञा प्रत्याय्यते एवञ्च नञो भेदे न शक्त्यन्तरमपि त्वनीलो घटइत्यादावनीलादिपदेन विभक्त्यर्थाभेदविशेषणतया नीलादिभिन्नस्य बोधानुरोधेन भेदवानेव लक्षणया नञर्थः । अत्यन्ताभावापेक्षया अन्योन्याभावविशिष्टस्य धर्म्मिणो गुरुतया विनिगमकसत्त्वेन तत्र शक्यसिद्धिरित्याह, 'लाघवेनेति, उक्तकार्य्य-कारणभावेऽभेदातिरिक्तसंसर्गकत्वानिवेशा-

विशेष्याभेदान्वयासम्भवादित्यत आह, 'नामार्थयोरिति अव्यय-निपातातिरिक्तनामार्थयोरित्यर्थ इत्यपरे । एतत्तत्त्वं आख्यातवादार्थविवेचने प्रपञ्चितमस्माभिः । मतान्तरमाह, 'लाघवेनेति, अभेदातिरिक्तसम्बन्धेन नामार्थान्वयबोधत्वापेक्षया नामार्थान्वयबोधत्वस्य लघुत्वादिति भावः ।

तथात्वं, विशेषणविभक्तिस्तु अभेदार्थिका, नीलोत्पलं चित्रगुरित्यादौ लुप्ताया विभक्तेरनुसन्धानमिति मते तु

---

दित्यादिः, 'तयोः' नामार्थयोः,'अन्वयबोधमात्रे' भेदाभेदसाधारणान्वयबोधसामान्ये, 'तथात्वं' अन्तराभासमानविभक्त्यर्थोपस्थितेस्तत्त्वं, तथाच नामार्थयोरभेदेनापि न साक्षादन्वयबोध इति भावः। नन्वेवं नीलो घट इत्यादौ नील-घटाद्योरभेदान्वयबोधानुपपत्तिः अभेदोपस्थापकविभक्त्यसत्त्वादित्याशङ्कां निरस्यति,'विशेषणविभक्तिरिति विशेषणपदोत्तरविभक्तिरित्यर्थः, 'अभेदार्थिकेति, अभेदे प्रथमाविभक्तेरनुशासनविरहान्न तदर्थकत्वसम्भव इति न शङ्क्यं विशेषणपदे विशेष्यपदसमानविभक्तिकत्वानुशासनसत्त्वात् अन्यथा अभेदसंसर्गतामतेऽपि विशेषणपदोत्तरद्वितीयादेः कर्मत्वाद्यबोधकतया आनुशासनिकत्वानुपपत्तेस्तदनुशासनस्यैवाभेदार्थकताग्राहकत्वोपगमात्। नन्वेवं नीलोत्पलमित्यादिसमासवाक्यान्नीलोत्पलाद्योरभेदबोधो न स्यात् तदर्थकविभक्तिविरहादित्यत आह, 'नीलविति, 'चित्रगुरिति। यद्यपि बहुव्रीहिसमासे गवादिपदमेव

---

'तथात्वं' प्रकारीभूतविभक्त्यर्थोपस्थितिहेतुत्वं, तर्हि नीलो घट इत्यादौ का गतिरत आह, 'विशेषणेति, शुचि पुष्पमित्यादौ असमासे लुप्तविभक्त्यनुसन्धानं विना साधुत्वमेव नास्तीति यत्र विभक्त्यनुसन्धानं विनापि साधुत्वं तत्र व्यभिचारमुद्धरति, 'नीलोत्पलमिति अत्राप्यनित्यसमासत्वेन विग्रहवाक्यानुसन्धनादेव शाब्दबोध इति यदि ब्रूयात्तदाह, 'चित्रगुरिति बहुव्रीहेर्नित्यसमासत्वेन विग्रहवाक्याभावेऽपि चित्रगवोरभेदान्वयबोधोत्तरं चित्रगोस्वामिनि लक्षणायां फलबलेन विभक्त्यनुसन्धानं कल्प्यमित्यर्थः, तत्र

**न राज्ञ इत्यत्र षष्ठ्यर्थसम्बन्धस्येव अत्रापि सप्तम्यर्था-भेदस्याभावो बोध्यतां ।**

---

चित्रगवादिसम्बन्धिनि लाक्षणिकं पूर्व्वपदं तात्पर्य्यग्राहकमिति चित्रादिपदोत्तरलुप्तविभक्त्यनुसन्धानमनर्थकं, तथापि पूर्व्वपदस्य निरर्थकत्वे समस्यमानपदयोः सार्थकत्वघटितसामर्थ्यानुपपत्त्या समासानुपपत्तेरित्युत्तरपदं पूर्व्वपदार्थविशेषितस्वार्थसम्बन्धिन्येव लाक्षणिकं पूर्व्वपदसमभिव्याहारादेव तदर्थाभेदो लक्ष्यार्थैकदेशीभूते उत्तरपदमुख्यार्थे व्युत्पत्तिवैचित्र्याद्भासत इत्याशयेन चित्रगुरित्यादौ चित्रादिपदोत्तरविभक्त्यनुसन्धानाभिधानम् । न चारूढवानरो वृक्ष-इत्यादिबहुव्रीहौ समस्यमानपदार्थयोरभेदभाने च वानरकर्त्तृ-कारोहणकर्म्मत्वादिना वृक्षादिभानं वानरादिपदस्य तेन रूपेण लक्षणां विना न निर्व्वहतीति आरोहणादिरूपपूर्व्वपदार्थघटितोक्त-रूपेण उत्तरपदलक्षणाया आवश्यकत्वात् समस्यमानपदद्वयार्थान्वयस्य समासनियामकत्वानुपपत्तिरिति वाच्यम् । तत्रोक्तलक्षणार्थघटक-वानरादावपि आरूढादिपदार्थस्याभेदभानोपगमात् अभेदस्याभावो-बोध्यतामिति तावतापि यजतिष्वित्यादावेकवाक्यत्वाक्षतेरिति भावः । अभेदाभावस्य नञा बोधने यजतिष्वित्यादौ पर्य्युदास एव

---

विभक्त्यनुसन्धानं विनापि शाब्दधिय आनुभविकत्वात् नीलो घट इत्यादावभेदस्य संसर्गतयैवानुभवाच्चाह, 'मत इति, विभक्त्यर्थाभेदाभावान्वय-बोधने व्युत्पत्तिविरोधो नास्तीति दृष्टान्तमाह. 'न राज्ञ इत्यत्रेति, 'एक-वाक्यतानुरोधादित्याद्यनुषज्यते, विशेषणविभक्तेर्यत्राभेदार्थकत्वं तदा, अभेद-

अभावस्याविधेयतया प्रधान्याभावेन प्रसज्यप्रतिषेधत्वाभावात् "अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता। प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ्" ॥ इति प्रसज्यप्रतिषेधलक्षणात्। अथैवमयमश्राद्धभोजी असूर्य्यम्पश्येत्यादौ नञः समासनिविष्टस्य भिन्नार्थकतया भिन्नाभेदस्यैव विभक्त्यन्तार्थस्य विधेयतया नञर्थाभावस्याप्राधान्येन प्रसज्यप्रतिषेधानुपपत्तिरिति चेत्, भवतु तत्र पर्य्युदासएव श्राद्धभोजनसूर्य्यदर्शनरूपक्रियाकर्त्तृभिन्नाभेदस्य विधेयत्वे तादृशक्रियाकर्त्तृभिन्नभेदस्य तादृशक्रियाकर्त्तृत्वरूपतया श्राद्धं न भुङ्क्ते सूर्य्यमपि न पश्यन्तीत्यादिस्थलीयतादृशक्रियाकर्त्तृत्वाभावरूपविधेयपर्य्यवसानेन प्रसज्यप्रतिषेधतुल्यतया च तथा व्यवहारः। अत एव पर्य्युदासस्थल एव नञ्तत्पुरुषः अत्र वादिनामविवाद इत्यत्राभावस्य प्राधान्येन असमस्त एव नञ्समासार्थः अशब्द इति वदन्ति। सूर्य्यम्पश्यशब्देन नञः समासादेव सूर्य्यं न पश्यन्तीत्यर्थपर्य्यवसानात् सूर्य्यपदेन नञोऽसमासे च असूर्य्यपदस्य दृश्युपपदत्वाभावात् "असूर्य्य-ललाट-योर्दृशि-तपोरिति खश्प्रत्ययानुशासनविषयत्वमसूर्य्यंपश्या इत्यत्र प्रयत्नेनोपपादनीयम्।

---

विशेषणत्वेनोपस्थितस्य नामार्थस्य नञर्थान्योन्याभावे विशेषणत्वेनान्वयायोगात् योगेऽपि वा विभक्त्यर्थान्वयत्यागस्यैव दोषत्वादिति भावः। इत्थञ्च चैत्रो न पचतीत्यादौ तिङो धर्म्मिपरतायां नञोभेदत्वेन प्रतीतेर्जननात् पृथक् कल्पनमिति ध्येयं।

एकवाक्यत्वानुरोधादित्याद्युक्तयुक्तेर्भेदपरतेति स्वयमुक्तं नानुयाजेष्वित्यत्र निषेधपरत्वे तस्य प्राप्तिपूर्व्वकत्वात् यजतिष्वित्यनेन तस्य प्राप्तिर्वाच्या तथाचैकविषयकविधिनिषेधे विकल्पापत्तेः भेदपरतेति स्मार्त्तानां यत्ति

यत्तु करणनिषेधे विकल्पापत्तेर्भेदपरतेति, तदसत्, विशेषनिषेधे सामान्यविधेस्तदितरपरतायाः "ब्राह्मणेभ्यो दधि दातव्यं कौण्डिन्याय न दातव्यं" इत्यादौ व्युत्पत्तिसिद्धत्वात् विकल्पानवकाशात्। न च तत्रापि

---

नानुयाजेष्वित्यस्य क्रियाप्रतिषेधपरत्वं बाधकान्तरेण खण्डयतां मतमुपन्यस्यति, 'यत्त्विति, 'करणनिषेधे' नानुयाजेष्विति नञोऽनुयाजे ये यजामह्मन्त्रपाठकरणप्रतिषेधपरत्वे, 'विकल्पापत्तेरिति यजतिपदार्थासङ्कोचेन यजतिष्वित्यादिनाऽनुयाजेऽपि मन्त्रपाठविधानात् विरोधेनैकस्याप्रामाण्यापत्तेः अतिरात्रे षोड़शिग्रहणाग्रहणयोरिव अनुयाजे तन्मन्त्रपाठ-तदभावरूपवैकल्पिकाङ्गद्वयस्य विधायकतया विरोधपरिहारसम्भवेऽपि अनुयाजजन्यपरमापूर्वस्य भावाभावरूपाङ्गद्वयघटितसामग्रीभेदकल्पनेन तत्सामग्रीद्वयप्रयोज्यफलप्रकर्षापकर्षकल्पनेन च गौरवापत्तेरित्यर्थः, 'विशेषनिषेध इति तद्धर्म्मन्यूनवृत्तिधर्म्मावच्छिन्नविषयकतन्निषेधवाक्यसत्त्वे तद्विधायकवाक्यस्य तद्धर्म्मावच्छिन्नार्थकपदस्य निषेधविषयतावच्छेदकविशेषरूपावच्छिन्नेतरत्वविशिष्टतद्धर्म्मावच्छिन्नपरताया इत्यर्थः, 'ब्राह्मणेभ्य इति, ब्राह्मणपदस्य विरोधवारणाय कौण्डिन्येतरब्राह्मणपरत्वादिति भावः। 'तत्रापि' ब्राह्मणेभ्यइत्यादावपि, 'कौण्डिन्येति ब्राह्मणा-

---

दूषयितुमुत्थापयति, 'यत्त्विति, 'तदितरपरतायाः' विशेषेतरपरतायाः, वैदिकशब्दस्य पक्षसमत्वाल्लौकिकशब्दे व्युत्पत्तिं द्रढ़यति, 'ब्राह्मणेभ्य इति 'विकल्पानवकाशादिति, तथाचात्रापि यजतिष्वित्यादिसामान्यविधेरनुयाजभिन्नयागपरत्वमित्येकविषयकविधि-निषेधयोरप्रसङ्गादिति भावः। 'तत्रापि'

कौण्डिन्यभेदो बोध्यः, कौण्डिन्यपदस्य विरुद्धैकवचनाव-
रुद्धत्वात्, न खलु महतो राज्ञः न महतो राज्ञ इत्यत्रैव

---

न्यायौ कौण्डिन्यभेदो न कौण्डिन्यायेत्येतत्प्रतिपाद्य इत्यर्थः, तथाच ब्राह्मणपदस्य न विशेषतरपरता इति भावः। 'विरुद्धैकवचनावरुद्धत्वादिति कौण्डिन्यपदस्यानुयोगिवाचकब्राह्मणपदोत्तरचतुर्थीबहुवचनविजातीयतदेकवचनान्तत्वादित्यर्थः, तथाचानुयोगि-प्रतियोगिवाचकपदयोर्व्विरुद्धवचनराहित्याभावेन नञा तदनुयोगिक-तत्प्रतियोगिकभेदबोधनं न सम्भवतीति भावः। ननु विरुद्धवचन-विरुद्धत्वेऽपि विभक्तिविभाजकप्रथमात्वादिना विजातीयविभक्ति-राहित्यमक्षतमेवेति न ब्राह्मणपदार्थे कौण्डिन्यपदार्थभेदबोधानु-पपत्तिरित्यत आह, 'न खल्विति, 'इत्यत्रापि राजनि महद्भेदो प्रतीयते इत्यनेनास्य सम्बन्धः, 'इत्यत्रैवेति व्यतिरेकदृष्टान्तः, तथाच यथा महतो राज्ञ इत्यत्र राजनि महद्भेदः न महतो राज्ञ-इत्यत्र राजनि महद्भेदः प्रतीयते तथा महतां राज्ञइत्यत्र राजनि महद्भेदः न महतां राज्ञ इत्यत्र राजनि महद्भेदश्च न प्रतीयत-इत्यर्थः, तथाच वचनसाम्यमपि भेदाभेदबोधेऽपेक्षितमितिभावः। 'एकोन द्वावित्यत्रैवेति यथा एकोन द्वावित्यत्रानुयोगि-प्रतियोगि-वाचकैक-द्व्यादिपदयोर्व्विरुद्धवचनावरुद्धत्वेऽपि समानविभक्तिकता-

---

कौण्डिन्याय नेत्यत्रापि, 'विरुद्धेति, समानविभक्तिकत्ववत् समानवचनस्यापि नियामकत्वादिति भावः। इदमेव दृष्टान्तेन द्रढ़यति, 'न खल्वित्यादिना, 'महतो राज्ञ इति अभेदान्वयबोधकसमभिव्याहारे नञा अन्योऽन्याभावस्य बोधनात् भेदान्वयबोधेऽपि समानवचनत्वस्य नियामकत्वमुक्तं द्व्यादिशब्दानां

महतां राज्ञो न महतां राज्ञ इत्यत्रापि राजनि महद्भेद-भेदौ प्रतीयेते, एको न द्वावित्यत्रैव कथञ्चित् तत्सम-र्थनेऽपि द्वितीयस्य दातव्यमित्यस्यानन्वयप्रसङ्गात्। अत-एव "रात्रौ श्राद्धं न कुर्व्वीत" इत्यादौ करणनिषेधेऽपि

मात्रेण भेदबोधस्तथेत्यर्थः, 'कथञ्चित् तत्समर्थनेऽपीति कथञ्चिदुक्त-स्थले भेदबोधसमर्थनेऽपीत्यर्थः, द्व्यादिशब्दस्य नित्यद्विवचनान्तता कौण्डिन्यादिशब्दस्य च न नित्यैकवचनान्तता एतादृशविशेषसत्त्वेऽपि अनुयोगि-प्रतियोगिनोर्विरुद्धसङ्ख्याया अविरुद्धस्थलएव विरुद्धवच-नावरुद्धत्वं भेदबोधविरोधीत्युपगमेन प्रकृतस्थले विरुद्धसङ्ख्याविव-क्षया एकोन द्वावित्येतत्साम्यमित्याशयेन कथञ्चिदित्युक्तं, कौण्डिन्य-स्यानेकत्वेऽपि तद्गतजातावेकत्वविवक्षया परम्परया तद्विशेषणत्वे-नैकत्वसङ्ख्याविवक्षासम्भवो बोध्यः। 'द्वितीयस्य' द्वितीयक्रियापदस्य, 'अनन्वयप्रसङ्गात्' ब्राह्मणे कौण्डिन्यभेदान्वयपक्षे अनन्वितार्थकत्व-प्रसङ्गात्, एकवाक्य-क्रियापदद्वययोगाभावादितिभावः। 'अत एवेति विशेषनिशेधस्थले विधिवाक्यस्थसामान्यशब्दस्य विशेषेतरसामान्य-परताया व्युत्पन्नत्वादेवेत्यर्थः, 'करणनिषेधेऽपीति कुर्व्वीतेतिक्रिया-

नित्यद्विवचनान्तत्वेन तथा अत्र तु न तथा व्युत्पत्तिरतः 'कथञ्चिदिति, 'द्वितीयस्येति, ब्राह्मणेभ्यो दधि दातव्यं कौण्डिन्याय नेत्यत एव कौण्डिन्य-भिन्नेभ्यो दधि दातव्यमित्यर्थलाभादिति भावः। वस्तुतस्तु विभक्त्यर्थैकत्व-द्वित्वादेर्विवक्षितत्वेन भूपास्तृणमित्यादौ भूपा एकतृणतुल्या इति बुद्ध्युद-याद्द्विबहुवचनाभ्यामप्यन्वयबोधो भवत्येव परन्तु न कौण्डिन्यायेत्यादौ विभक्त्यर्थैकत्वादिविवक्षायां बीजाभावान्न तथात्वसम्भवः। 'अतएवेति यतएव

न विकल्पावकाशः, न हि तत्रापि रात्रीतरपरता,

वैयर्थ्यप्रसङ्गेन "अमावास्यायां पितृभ्यो दद्यात्" इत्यादिविधिवाक्यस्थ-पदबोध्यामावस्यादिकाले "न रात्राविल्यनेन रात्रिभेदबोधस्वीकारासम्भवात् अगत्या वाक्यभेदोपगमेन रात्रौ श्राद्धकरणनिषेधपरत्वेऽपीत्यर्थः, 'न विकल्पावकाशः' अमावस्यादिरात्रिश्राद्धकरणे विधि-निषेधवाक्ययोर्व्विरुद्धसफलत्व-निष्फलत्वबोधकत्वेन एकवाक्यस्याप्रामाण्यप्रसङ्गः, अमावस्यादिपदार्थे रात्रिभेदस्य "न रात्रावित्येतदर्थस्यानन्वयेऽपि अमावस्यादिपदस्य रात्रिभिन्नामावस्यार्थकतया रात्रेः श्राद्धकरणविध्यविषयत्वादिति भावः। अमावस्यापद-रात्रिपदे न उपाधि-विशेषावच्छिन्नमहाकालपरे, महाकालस्यैक्येनामावस्यायां रात्रि-भिन्नत्वस्य बाधप्रसङ्गात्, अपि तु कालोपाधिविशेषपरे कालोपा-धीनामपि आधारत्वोपगमात् नाधारसप्तम्यनुपपत्तिः वने सिंहनाद-इतिवदवच्छेदकत्वमेव वा सप्तम्यर्थः, अमावस्यादिरूपकालोपाधयश्च न षष्टिदण्डाद्यवस्थायीनि अखण्डवस्त्वन्तराणि तथा सति अमावस्या-रात्र्योर्भेदनियमेन तत्र तद्भेदस्याव्यावर्त्तकताप्रसङ्गात् किन्त्वमाव-स्यापदं चरमोत्पन्नकलारम्भकसंयोगनाशानुगुणक्रियाकलापपरं पर-म्परया तत्कलारम्भकद्व्यणुकपर्य्यन्तजनकसंयोगानामपि तदारम्भकत्वं, तादृशक्रियाकलापान्तर्गता एव काश्चित्कलावयवक्रिया रात्रिरूपाः यतोऽदृश्यदेशविशेषावच्छिन्ना दृश्यदेशविशेषानवच्छिन्ना वा सूर्य्य-क्रिया न रात्रिपदार्थः अपि तु दृश्यदेशवृत्तित्वविशिष्टसूर्य्यानधि-करणकाल एव, तत्त्वञ्च कलावयवक्रियाविशेषसाधारणं। अथामा-वस्याकालावच्छिन्नस्याधिकार्य्यात्मनिष्ठश्राद्धकरणाभावस्य प्रत्यवाय

जनकत्वे अमावस्यान्तर्गतभागविशेषे श्राद्धकर्त्तव्येऽपि तदन्यभागे श्राद्धकरणाभावसत्त्वात् प्रत्यवायप्रसङ्गः । नचैतदतिप्रसङ्गवारणाय तत्र तावत्कालवस्थायिवस्त्वन्तरमखण्डममावास्यापदार्थः प्रवेश्यः न तु क्रियाविशेषाः तादृशक्रियारूपामावस्यावच्छिन्नश्राद्धकरणाभावस्य उक्तस्थलसाधारण्यात् । यद्यपि दर्शितस्थलेऽपि अवान्तरकालावच्छिन्नाखण्डामावस्याकालस्य कर्त्तृनिष्ठश्राद्धकरणाभावस्यावच्छेदकतया तादृशकालावच्छिन्नत्वस्याभावविशेषणत्वेऽप्यतिप्रसङ्गो दुर्व्वारः, तथापि तादृशामावस्यादिनिष्ठावच्छेदकतायामनवच्छिन्नत्वनिवेशेनैतन्मते प्रतीकारसम्भव इति वाच्यं । "अमावस्यायां पितृभ्यो दद्यादिति नित्यविधेः प्रत्यवायपरीहाररूपेष्टसाधनताबोधकतया अर्थतएव तद्विधिविषयामावस्यापदार्थे काले श्राद्धकरणाभावे प्रत्यवायसाधनत्वबोधात् विधावमावस्यापदस्य क्रियाकलापार्थकत्वे प्रत्यवायजनकतावच्छेदकगर्भे अखण्डवस्त्वन्तररूपामावस्यापदार्थान्तरनिवेशासम्भवादिति चेत्, सत्यं, तर्हि "अमावस्यायामित्यादिविधौ तावत्कालस्थायिवस्त्वन्तराण्येवामावस्यापदार्थः निषेधविधिस्वराक्षिप्तञ्च तादृशामावस्यासाधारणदेशविशेषावच्छिन्नसूर्य्यक्रियाविशिष्टकालत्वावच्छिन्नपरं तद्विशेषणविशिष्टे काले निषेधमहिम्ना च तादृशविशेषणविशिष्टवैधर्म्यविशिष्टे अमावस्यापदार्थे श्राद्धकरणं प्रतीयते, विशिष्टवैधर्म्यं विशिष्टावृत्तिधर्म्मविशेषे वैशिष्ट्यं यत्र धर्म्मिणि तत्रापि तद्वैशिष्ट्यविरहदशायां तद्विशिष्टावृत्तिधर्म्मवैशिष्ट्यमक्षतमेव । अतएव "ब्राह्मणाय दीयतां अशौचिने न दातव्यं" इत्यतो भेदस्य व्याप्यवृत्तितानियमेन शुचेरपि कदाचिदशुचितया

रात्रिभिन्ने श्राद्धविधावपि "अमावास्यायां पितृभ्यो

---

तत्राशौचविशिष्टभेदासत्त्वेऽपि शौचकाले तस्मै दानं प्रतीयते, भेदस्याव्याप्यवृत्तितामते विशिष्टभेदप्रतीतिरेवोपेयते। ननु विशेषनिषेधस्थले सामान्यविधिस्थसामान्यशब्दस्य विशेषेतरसामान्यलाक्षणिकत्वाभावेऽपि "रात्रौ श्राद्धं न कुर्व्वीत" इत्यादौ न विकल्पावकाशः "न रात्रावित्यत्र नानुयाजेष्वितिवन्नञोभेदार्थकतया रात्रिभिन्ने काले कुर्व्वीतेत्यर्थकत्वेन निषेधलाभावादित्याशङ्कां परिहरति, 'न हीति, 'तत्रापि' न रात्रावित्यत्रापि, 'रात्रीतरपरतेति नञ्पदस्य रात्रीतरत्वार्थकतेत्यर्थः, न तु निषेधार्थकतेति शेषः, 'रात्रिभिन्न इति, 'अमावस्यायामित्यादिवन्न रात्रावित्यादेः रात्रिभिन्नकाले पृथक् श्राद्धविधायकत्वेऽपि अमावस्यायामित्यादिविधावमावस्यादिपदार्थस्य सङ्कोचेन ततो रात्रिसाधारण्येन श्राद्धकरणलाभादमावस्यादिरात्रौ श्राद्धानुष्ठानप्रसङ्गस्य दुर्व्वारत्वादित्यर्थः। इदमुपलक्षणं "रात्रिभिन्ने कुर्व्वीतेति विधिबलात् सर्व्वतिथिष्वेव श्राद्धानुष्ठानस्य दुर्व्वारतापि बोध्या। न चायं न श्राद्धान्तरविधिरपि तु अमावस्यादिविहितश्राद्धे रात्रिभिन्नकाले विधिरेवातो नायमतिप्रसङ्ग इति वाच्यं। "अमावस्यायामित्यादित एव काललाभेन कालाकाङ्क्षानिवृत्त्या तत्प्राप्तश्राद्धे कालवि-

---

विशेषनिषेधे सामान्यं तदितरमत एवेत्यर्थः, तत्रापि पर्य्युदासमाशङ्क्य निषेधति, 'न हीति, "रात्रौ श्राद्धं न कुर्व्वीतेत्यस्य रात्रिभिन्ने श्राद्धं कुर्व्वीतेत्यर्थः, तथाचामावास्यायामित्यादितो रात्रौ श्राद्धप्रसक्तिः स्यादिति भावः। नन्वेकवाक्यतया रात्रिभिन्नायाममावास्यायां श्राद्धं कुर्व्वीतेत्यर्थ-

दद्यात्" इत्यादितो रात्रश्राद्धप्रसक्तत्वस्य दुर्व्वारत्वात्। न खलु क्रियारहितं श्राद्धविधायकं वाक्यान्तरमस्ति येनेदं तेन समं एकवाक्यतामासादयेत्। नापीदं

---

धानासम्भवात्। विकल्पेन कालविधाने उक्तातिप्रसङ्गानिवृत्तेः। ननु श्राद्धनिमित्ततया प्राप्ते अमावस्यादिकाले भागविशेषाकाङ्क्षायाः श्राद्धप्रयोजकत्वेन रात्रिभिन्नत्वविधिरयमित्यतो नामावास्यादिरात्रौ नामावस्यादिभिन्नदिवसे श्राद्धानुष्ठानप्रसङ्ग इत्याशङ्क्यामावस्याया-मित्यादिविधिस्थामावस्यादिपदात् प्रतीयमाने अमावस्यादौ रात्रि-भेदस्यान्वयं विना न तत्सम्भवः "न रात्रावित्यादिवाक्यस्थस्य कुर्व्वीतेत्यस्य वैयर्थ्येन "अमावस्यायां पितृभ्यो दद्यादित्यादिना क्रियान्तरघटितवाक्येन सह तदेकवाक्यताकल्पनञ्च न युज्यत इति कथं तत्र तस्यान्वयः तद्वाक्यस्थस्य कुर्व्वीतेत्यस्य सार्थकत्वोपगमे तु "अमावास्यायामित्यादिवाक्यस्थदद्यादितिक्रियानर्थक्यं क्रियारहित-ञ्चामावस्यादिश्राद्धकालबोधकं वाक्यान्तरं नास्ति येन तदुपस्थित-काले "न रात्रावित्येतदुपस्थितरात्रिभेदान्वयेन श्राद्धं कुर्व्वीतेत्ये-तद्भागबोध्यश्राद्धकरणान्वयेन च सामञ्जस्यं स्यादित्याह, 'न खल्विति, 'श्राद्धविधायकं' श्राद्धकालबोधकं, 'इदं' "रात्रौ श्राद्धं न कुर्व्वी-तेति वाक्यं, 'एकवाक्यतामासादयेदिति तादृशक्रियारहितवाक्येन सममस्यैकवाक्यत्वे एतद्वाक्यस्थक्रियाया अन्वयात्तादृशवाक्ये च

---

कत्वे कुतो रात्रौ प्रसक्तिरत आह, 'न खल्विति, क्रियायुक्तवाक्ययोरेक-क्रियापदार्थस्यानन्वयेन तयैकवाक्यत्वासम्भवादिति भावः। 'येनेदमिति, 'इदं' रात्रौ श्राद्धं न कुर्व्वीतेति वाक्यं, 'तेन' श्राद्धविधायकवाक्येन।

ना- याजेष्विति वत् पृथक्क्रियारहितं। अथ रात्रौ

क्रियाविरहात् क्रियावैयर्थ्यानवकाशादिति भावः। "न रात्राविव्यत्र चेत् क्रियानिर्द्देशो न स्यात् तदा क्रियाघटितामावस्यादिकाल-बोधकवाक्येन एकवाक्यतयैव सामञ्जस्यं भवेत् तदपि नेत्याह, 'नापीति, 'नानुयाजेष्विति वदिति नानुयाजेष्विति वाक्यं यथा क्रियान्तररहितमित्यर्थः। एतेन क्रियावैयर्थ्यप्रसक्त्या नानुयाजेष्वितिवदनयोरेकवाक्यत्वसम्भव इति दर्शितं। न चात्र क्रियाया-असत्त्वेऽप्यमावास्यायामित्यादिना अस्यैकवाक्यत्वे अष्टकादिविध्येक-वाक्यत्वासम्भवादष्टकादिश्राद्धस्य रात्रावनुष्ठानप्रसङ्ग इति क्रियारा-हित्याभिधानमसङ्गतमिति वाच्यं। एकपदोपस्थितस्यानेकवाक्यार्थ-प्रवेशे बाधकविरहेणामावस्याश्राद्धविधायकवाक्यार्थ इवाष्टकादि-विध्यर्थेऽपि न रात्रावित्यर्थस्य रात्रिभेदस्य प्रवेशसम्भवात्। अमा-वस्याष्टकादिबोधकतत्तद्विधिस्थपदानां भवन्मतेऽपि लक्षणोपस्थि-तरात्रिभेदविशिष्टतदर्थपरताया आवश्यकत्वादस्मन्मतेऽपि न रात्रा-वित्येतदर्थरात्रिभेदविशिष्टस्वार्थपरत्वकल्पनसम्भवात्। संसर्गाभावस्य प्रत्यक्ष इव शाब्दबोधेऽपि धर्म्मिणि प्रतियोगिसंसर्गधीर्हेतुरित्यभि-मानेन शङ्कते, 'अथेति, 'रात्रौ श्राद्धस्य प्रसक्ताविति अमावस्याया-मित्यादिविधावमावास्यादिपदस्य सङ्कोचे निषेधानुपपत्त्या तद-सङ्कोचेन विधितो रात्रिश्राद्धकरणे सफलत्वबोधोपगमे इत्यर्थः, 'विकल्पापत्तिः' विरुद्धार्थकयोर्व्विधि-निषेधवाक्ययोरेकतराप्रामाण्य-

'नापीदमिति, 'इदं' श्राद्धविधायकं वाक्यं, नानुयाजेष्वित्यादेरप्यानुषङ्गिक-

श्राद्धस्य प्रसक्तौ विकल्पापत्तिरप्रसक्तौ कथं निषेधः[१] प्रसक्तं हि प्रतिषिध्यते इति चेत्, साधीयानयं मन्त्रपाठो यद्बलात् जलह्रदे दहनो नास्तीत्यादौ शाब्दबोधेऽपि परमप्रयत्नेन तत्र दहनप्रसक्तिरुपादीयते,

---

प्रसङ्गः, 'अप्रसक्ताविति विकल्पभयेनामावस्यादिपदसङ्कोचेन विधेः रात्रिश्राद्धकरणे सफलत्वबोधकत्वानुपगम इत्यर्थः, 'कथं निषेधः' कथं न रात्राविति वाक्याद्रात्रिश्राद्धकरणे निष्फलत्वबोधः, 'प्रसक्तं हि प्रतिसिद्धत इति तद्धर्म्मिकसंसृष्टतया ज्ञातमेव तद्धर्म्मिनिष्ठाभावप्रतियोगितया ज्ञायत इत्यर्थः, प्रत्यक्ष एव प्रतियोग्यारोपस्य हेतुत्वं अप्रामाणिकं कुतः शाब्दबोधे तद्धेतुत्वमित्याशयेन तद्धेतुतावादिनमुपहसति, 'साधीयानिति, 'अयं मन्त्रपाठः' मन्त्रपाठतुल्यतयाभ्युपगतः प्रसक्तं हीत्यादिप्रवादः, 'यद्बलात्' यत्प्रवादबलात्, 'दहनप्रसक्तिरिति, जलह्रदादावित्यादिः, 'उपादीयते' अपेक्षणीयतयोपेयते । ननु यत्र निषेधवाक्यं विना क्रियायां प्रवृत्तिः प्रसज्यते तत्रैव तद्वाक्यसार्थक्यं विधिवाक्यस्य प्रवृत्तिफलक-

---

(१) रात्रौ श्राद्धस्याप्रसक्तौ निषेधानुपपत्तिरिति पाठान्तरं ।

---

क्रियावत्त्वात् 'पृथगिति, 'विकल्पापत्तिरिति रात्रौ श्राद्धस्य रागजप्रसक्त्यभावेन वैधी प्रसक्तिर्वाच्या तदर्थममावास्यायामित्यादिविधेरेव रात्रिपरत्वमपि कल्प्यमित्येकविषयकतया विकल्पः स्यादित्यर्थः, 'निषेधानुपपत्तिरिति, प्राचां मते वैधस्य रागाधीनस्य वा कर्त्तव्यताज्ञानस्य निषेधविधिजन्यशाब्दबोधहेतुत्वादिति भावः । अत्र सोपहासमाह, 'साधीयानिति, 'शाब्दबोधेऽपीति, अभावलौकिकप्रत्यक्षे आहार्य्यारोपरूपा प्रसक्तिः

त्वनिषेधस्याप्रवृत्तिफलकत्वात् एवञ्च विधावमावस्यादिपदस्य रात्री-तरपरत्वे रात्रिश्राद्धस्य विध्यविषयतया तत्राप्रवृत्तिनिर्व्वाहेण न रात्राविति वाक्यं व्यर्थमेव स्यात् । न च "नान्तरीक्षे अग्निश्चेतव्य-इति वेदो यथा निष्फलोवेद्यामग्निचयनविधानादन्तरीक्षेऽग्निचय-नाविधानात्तत्राप्रवृत्त्युपपत्तेस्तथा रात्रौ श्राद्धमित्यादिरपि निष्फल-एव भवत्विति वाच्यं । सफलत्वे सम्भवति निष्फलत्वानौचित्यात् अगत्या "नान्तरीक्ष इत्यादेस्तथात्वोपगमात्, प्रकृते तु क्रियापद-वैयर्थ्यमुपगम्य विधिस्थामावस्यादिपदेन "न रात्रावित्यस्यैकवाक्यतया तत्सार्थकतोपपादस्योचितत्वात् । एतेन पर्य्युदासपक्षे नञो भेदरूप-मुख्यार्थपरता न सम्भवति नञोऽपि प्रातिपदिकतया प्रातिपदि-कार्थयोर्भेदेन नान्वय इति व्युत्पत्तौ निपातभेदनिवेशे गौरवेण तद्विरोधादमावस्यादिपदार्थे भेदस्यान्वयासम्भवादतो भेदवति लक्षणैवोपगन्तव्या अयुक्तस्तु मुख्यार्थपरित्याग इति प्रकृते निषेधप-रतैव नञ इत्यपि निरस्तं, तद्वाक्यसार्थक्यानुरोधेन लक्षणोपगमौ-चित्यात् प्रातिपदिकार्थेनेव धात्वर्थेनापि प्रातिपदिकार्थस्य भेदे-नानन्वयात् नञः प्रतिषेधपरत्वपक्षेऽपि "न कुर्व्वीतेत्यत्र धात्वर्थ-श्राद्धकरणे नञ इष्टसाधनत्वाभावबोधकत्वासम्भवाद्भेदान्वयानुरोधेन तस्याभाववति लक्षणाया आवश्यकत्वाच्च प्रसक्तं हि प्रतिषिध्यत इति प्रवादस्यापि यत्र निषेधं विना तत्तत्क्रियायां प्रवृत्तिप्रसक्तिस्तत्रैव निषेधसाफल्यमित्येवार्थः ।

यत्तु प्रतिषेधपक्षेऽपि विधिस्थामावस्यादिपदं न रात्रीतरपरं येन निषेधं विना रात्रिश्राद्धे प्रवृत्तिप्रसक्तिर्न स्यादिति निषेधवैयर्थ्यं

निषेधविधिवैयर्थ्यमिति चेत्, तात्पर्य्यानवबोधनिबन्धन-

स्यात् । न चैवं सति विकल्पोऽपि, निषेधविरोधेन सामान्यशास्त्रस्य रात्रिश्राद्धांशे सफलत्वसंसर्गबोधकत्वानुपगमात् । न च तथा सति कथं प्रवृत्तिप्रसक्तिरिति वाच्यं । असंसर्गाग्रहस्य प्रवर्त्तकतामते संसर्गाग्रहेऽपि प्रवृत्तिप्रसक्तेः । न च सामान्यशास्त्रस्य प्रवर्त्तकासंसर्गाग्रह-सहितधर्म्म-धर्म्मिज्ञानरूपभ्रमजनकत्वे तद्विरोधेन निषेधवाक्येना-संसर्गाग्रहजननासम्भवान्निषेधस्यापि कथं निवर्त्तकतेति वाच्यं । निषेधवाक्यस्य सामान्यशास्त्रापेक्षया बलीयसः संसर्गाविषयकत्वरूप-भ्रमत्वकल्पकतया प्रवृत्तिविरोधित्वात् । अत एव बलीयसा दुर्ब्बलं बाध्यत इति न्यायाद्रागतः प्रवृत्तिप्रसक्तिविषये अगम्यागमनादौ निषेधवाक्यस्य बलीयसो लौकिकमानबाधकतया निवर्त्तकत्वमेव न तु विकल्पः, एवं पशुयागे आघाराज्यभागाङ्गकयागतुल्यताबोध-कातिदेशप्राप्ताघाराज्यभागनिषेधकस्य "न तौ पशौ करोतीति वाक्यस्याघाराज्यभागनिवर्त्तकत्वेऽप्यतिदेशबाध एव न तु विकल्पः, षोडशिग्रहणाग्रहणवाक्ययोस्तुल्यबलतया बाध्य-बाधकभावासम्भवा-द्विकल्प इति, तन्न, सामान्यशास्त्रस्यैवोपजीव्यतया बलवत्त्वेन बाधा-योगाद्विकल्पभयेन पर्य्युदासपक्षावलम्बनस्य युक्तत्वात् इत्याशयेनाह, 'निषेधेति, निषेधविधिः निषेधबोधकवाक्यं, 'तात्पर्य्यानवबोधेति

कारणं कदाचित् सम्भवदपि शाब्दबोधे तादृशप्रसक्तेः कारणत्वं न कस्याप्यनुमतमित्यर्थः, प्रकृते, 'वैयर्थ्यमिति, रात्रौ श्राद्धकरणस्य रागा-द्विधितो वा अप्राप्तौ तन्निषेधप्रतिपादनं निष्प्रयोजनमिति भावः । यद्यपि

निषेधवाक्यासत्त्वे विधिवाक्यस्थामावस्यादिपदस्य रात्रीतरामावस्या-परत्वग्राहकप्रमाणाभावेन रात्रिश्राद्धेऽपीष्टसाधनतायाः सामान्यपर-तया गृहीतामावस्यादिपदघटितवाक्येन बोधनसम्भवाद्रात्रिश्राद्धे प्रवृत्तिप्रसक्त्या तत्प्रवृत्तिवारणस्यैव निषेधवाक्यप्रयोजनत्वादित्यर्थः।

केचित्तु "रात्रौ श्राद्धं न कुर्व्वीत" इत्यस्य क्रियावैयर्थ्यभयेनामा-वस्यायामित्यादिविधिवाक्यैकवाक्यत्वासम्भवेऽपि अमावस्याष्टकादिश्रा-द्धविधायकवाक्येष्वमावस्याद्यनेकपदानां रात्रिभिन्नामावस्यात्वादिना लक्षणामपेक्ष्य निषेधवाक्य एव कालसामान्यबोधकसप्तम्यन्तपदार्थ्या-ध्यारोपयुक्तः तथाच नञः पर्य्युदासार्थकतया श्राद्धनिमित्तीभूत-तत्तत्कालेषु रात्रिभिन्नत्वरूपविशेषणस्यैव विधिरयं। एवञ्चैतद्वाक्या-द्रात्रिकालत्वेन श्राद्धजन्यापूर्व्वसामान्ये रात्रिभिन्नकालहेतुत्वलाभेन रात्रिकृतश्राद्धे अपूर्व्वरूपफलानुपधानग्रहान्न रात्रिश्राद्धकरणप्रसक्ति-रिति पर्य्युदासपक्षं परिष्कुर्व्वन्ति, यत्र नञ्पदं नास्ति अपि तु न कुर्व्वीतेतिसमानार्थकं वर्ज्जयेत् त्यजेत् इति क्रियापदं यथा "याम्यायने हरौ सुप्ते सर्व्वकर्म्माणि वर्जयेदित्यादौ, तत्र न कुर्व्वी-तेत्यादितो यथा श्राद्धादिकरणे विध्यर्थेष्टसाधनत्वाभावबोधस्तथा तत्तत्क्रियायामिष्टसाधनत्वाभावबोधो न सम्भवति अपि तु धात्वर्थे-ऽकरणे इष्टसाधनत्वमेव लिङा प्रत्याय्यं तथाच हरिशयनादिकृत-

---

न कलञ्जं भक्षयेदित्यादाविव निषेधविधेः प्रत्यवायरूपानिष्टसाधनत्वमेवार्थः तथापि तत्र भक्षणस्य इष्टसाधनत्वेन तदभावस्य बाधेन बोधयितुमशक्य-त्वात् निन्दार्थवादप्रायश्चित्तोपदेशाच्चानिष्टसाधनत्वमेव निषेधविध्यर्थः। इह तु इष्टसाधनत्वाभावबोधने बाधाभावान्निन्दार्थवादाद्यभावात् प्रत्यवाय-

रात्रिश्राद्धकरणवारणस्य तदर्थत्वात्, एकविषयतया पुन-
रनन्यगत्या षोडशिग्रहणाग्रहणयोर्विकल्प इति, अत्र च

---

पुष्करिणीयागादीनां निष्फलत्वानुपपत्तिः तदकरणस्य प्रत्यवाया-भावरूपेष्टसाधनत्वसम्भवेन करणं प्रत्यवायमप्यावहेदित्यक्त समाधिः परिचिन्तनीयः । ननु विधिनिषेधस्थले विधेर्निषेधविषयेतरविषयकत्वे विकल्पस्थलमेव दुर्लभमित्याशङ्कामतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णातीति विकल्पस्थलस्य प्रकृताद्विशेषं दर्शयन् निराकरोति, 'एकविषयतया पुनरिति एकरूपावच्छिन्नातिरात्र-विषयकयोर्विधि-निषेधवाक्ययोः प्रकृते दिवा-रात्रिविषयकत्वा-सम्भवे त्वित्यर्थः । 'षोडशिग्रहणाग्रहणयोर्विकल्प इति गृह्णाति न गृह्णातीत्यनयोरतिरात्रे विरुद्धयोरपि षोडशिग्रहण-तदग्रहणयोः कल्पयोरङ्गतया विधायकत्वोपगम इत्यर्थः, राजानमिव याज्ञिका-इत्यत्र चन्द्रवाचकराजन्शब्दस्येव षोडशकलावत्त्वेन चन्द्रबोधक-षोडशिशब्दस्य स्वशक्यसोमपदस्य वाच्यत्वरूपशक्यसम्बन्धात्मकलक्षित-लक्षणया सोमलतार्थकता तयोस्तु नैकव्यक्त्यङ्गता विरोधात् अपि त्वेकजातीयव्यक्तिद्वयाङ्गता, नातिरात्रे इति वाक्यस्य प्रकृते रात्रि-श्राद्धकरण इवातिरात्रे षोडशिग्रहणे इष्टसाधनत्वाभावार्थकत्वे तद-भावस्य नातिरात्राङ्गता निर्व्वहति ग्रहणविधिना तत्र इष्टसाधनता-बोधादेकतराप्रामाण्यञ्च स्यादिति प्रकृताद्विशेषमाह, 'अत्र चेति,

---

कल्पनागौरवाच्च इष्टसाधनत्वाभाव एव विध्यर्थः, इष्टश्चामावास्यायामि-त्यादिविध्युपस्थितं ग्राह्यं प्राकरणिकत्वात् तथाच अमावास्यायामित्यादि-विधेः रात्रीतरामावास्यापरत्वे विधानाभावादेव तादृशेष्टसाधनत्वाभावो

षोड़शिग्रहणं नेष्टसाधनमित्यादिकमर्थो ग्रहणविधिविरोधात्, अपि तु षोड़शिग्रहणाभाव इष्टसाधनमित्यादिकं, व्युत्पन्नः नञ्समभिव्याहृतधात्वर्थस्याभावेऽपि विभक्त्यर्थान्वयः।

---

'अत्र' नातिरात्रे इत्यादिवाक्ये, 'ग्रहणविधिविरोधादिति ग्रहणविध्यर्थविरुद्धार्थकताप्रसङ्गादित्यर्थः। तथाच विरुद्धयोरेकत्रासत्त्वेन विरुद्धार्थकवाक्यद्वयस्य प्रामाण्यानुपपत्त्यैकवाक्यस्याप्रामाण्यं स्यात्। न च वेदवाक्यमप्रमाणीभवितुमर्हतीति भावः। 'इष्टसाधनमितीति, अर्थ इत्यनुषज्यते, इष्टञ्चातिरात्रे षोडशिग्रहणजन्यं परमापूर्व्वं न तु तज्जन्यं प्रधानफलं अङ्गताविरोधात्। तदीयप्रधानफलाजनकत्वस्य तदङ्गताघटकत्वादित्यग्रे व्यक्तीभविष्यति। नन्वेवं विधिप्रत्ययार्थस्येष्टसाधनत्वस्य प्रतियोगितया क्रियान्वय्यन्वयित्वे प्रकृत्यर्थान्वितेति व्युत्पत्तिविरोध इत्याशङ्क्य नञर्थद्वारा प्रकृत्यर्थान्वयित्वेन न तादृशव्युत्पत्तिभङ्ग इत्याह, 'व्युत्पन्नस्येति,(१) 'धात्वर्थस्याभावेऽपीति प्रतियोगितया धात्वर्थान्विते नञर्थाभावेऽपीत्यर्थः। 'विभक्त्यर्थान्वयः'

---

(१) नन्वेवं विधिप्रत्ययार्थेष्टसाधनत्वस्य प्रतियोगितया क्रियान्वितनञर्थाभावेनान्वयो न व्युत्पत्तिसिद्धः "नानुपमृद्य प्रादुर्भावादित्यादौ नामार्थप्रादुर्भावाद्यभावेन तत्प्रकृतिकपञ्चमीविभक्त्यर्थान्वयस्य दृष्टत्वेऽपि धात्वर्थाभावेन तत्प्रकृतिकविभक्त्यर्थान्वयस्य क्वाप्यदृष्टत्वादित्याशङ्कां निराचिकीर्षुराह, 'व्युत्पन्नस्येतीति क्वचित् पुस्तके पाठः।

बोध्यते इति तद्बोधनाय श्राद्धं न कुर्व्वीतेति वाक्यं व्यर्थमिति भावः। 'तात्पर्य्येति, यदि रात्रौ श्राद्धं न निषिध्यते तदा कदाचिदमावास्या-

अत्र प्राभाकराः "न कलञ्जं भक्षयेत्" इत्यादिश्रुतेः

तिङर्थस्यान्वयः, 'गुरवः' प्राभाकराः[१], 'इत्यर्थमाहुरित्यनेनास्य सम्बन्धः, 'कलञ्जभक्षणाभावविषयकं कार्य्यमितीति, एतादृशार्थभाने तन्मतसिद्धविध्यर्थकार्य्यस्य भक्षणान्वितेन नञर्थाभावेन सहान्वयादुपपत्तिसङ्गतिः । नञ्समभिव्याहृतविधिप्रत्ययेन क्वचिदभावे आश्रयतासम्बन्धेनेष्टसाधनत्वं प्रत्याय्यते यथा "नातिरात्र इत्यादौ, क्वचिच्च तत्र प्रतियोगितया तत् प्रत्याय्यते यथा "रात्रौ श्राद्धं न कुर्व्वीते-

(१) अस्मल्लब्धमूलपुस्तके प्राभाकरा इत्येव पाठः ।

यामित्यादिविधेः रात्रीतरामावास्यातात्पर्य्याननुरोधेन रात्रावपि श्राद्धकरणं प्रसज्येत. अतो रात्रौ श्राद्धकरणे निषिद्धेऽमावास्यापदस्य रात्रीतरामावास्यापरत्वनिश्चयान्नैषा प्रसक्तिः एवञ्चामावास्यायामित्यादिविधेस्तात्पर्य्यग्राहकतयैव तस्य सार्थक्यमिति भावः ।

अत्र मीमांसकाः । एकवाक्यत्वं हि द्विविधं विशिष्टैकार्थप्रतिपत्तिजनकत्वं तत्तात्पर्य्यजनकत्वञ्च, "रात्रौ श्राद्धं न कुर्व्वीतेत्यादेः क्रियान्तरवैयर्थ्येनाद्यस्यासम्भवेऽपि द्वितीयस्य सम्भवे न किञ्चिद्बाधकं यथा अग्निहोत्रं जुहोति दध्ना जुहोति इत्यत्र, तत्र हि अग्निहोत्रं जुहोतीतिप्रधानविधिप्रवृत्तौ केन द्रव्येणेति द्रव्याकाङ्क्षायां दध्ना जुहोतीति विधिप्रवृत्तिः तेन हि प्रधानविधेरेकदेशं जुहोतीत्यनेनानूद्य दधिरूपं द्रव्यं करणत्वेन विधीयते, यज्जुहोति तद्दध्ना इत्येवं बोधिते दधिकरणकोऽग्निहोत्रहोम इष्टसाधनमित्येवं रूपं विशिष्टैकार्थपरत्वं विधिद्वयस्य निर्व्वहति तथामावास्यायामित्यादिप्रधानविधिप्रवृत्तौ कालविशेषाकाङ्क्षायां यत् श्राद्धं कुर्व्वीत तद्रात्रिभिन्ने इति रात्रौ श्राद्धं न कुर्व्वीतेत्यनेन पर्य्युदासलक्षणया बोधिते रात्रिभिन्नामावास्याधिकरणकश्राद्धकरणमिष्टसाधनमित्यर्थपरत्वं

कलञ्जभक्षणाभ[illegible]कार्य्यमित्यर्थ इत्याहुः। निय-
मतस्तु तात्पर्य्यादिवशात् [illegible]र्थफलाजनकत्वेऽपि अङ्गस्य

---

त्यादौ, इत्यत्र किं नियामकमित्याकाङ्क्षायामाह, 'नियमतस्त्विति, 'तात्पर्य्यादीत्यादिना योग्यतापरिग्रहः, "रात्रौ श्राद्धं न कुर्व्वीत"

---

विधिद्वयस्य निर्व्वहति। न च मुख्यार्थानुरोधान्निषेधविधित्वमेव युक्तं, एकप्रकरणाम्नातत्वेन तदारम्भाधीनत्वेन चामावास्यादिविशेषणरात्रिभेद-परत्व-विधित्वे निश्चिते मुख्यार्थत्यागस्याप्यदोषत्वात्। अत एव नेच्चेतो-द्यन्तमादित्यमित्यादेर्व्रतप्रकरणाम्नातत्वेन मुख्यार्थं परित्यज्य लक्षणया इक्षणविरोधिसङ्कोचं कुर्य्यादित्यर्थकत्वं सिद्धान्तितं। अत एव दीक्षितो न ददाति इत्यादेरपि न निषेधविधित्वं किन्तु दीक्षितस्य दानाभावादि-रूपाङ्गविधित्वं इत्याहुः। 'तदर्थत्वात्' निषेधविधिप्रयोजनकत्वात्। नन्वेवं विकल्पस्थलमेव दुर्मिलमित्यत आह, 'एकविषयकतयेति, 'अनन्यगत्येति, तत्र सामान्य-विशेषभावाभावेन विशेषेतरपरत्वस्यासम्भवादिति भावः। ननु न कलञ्जं भक्षयेदित्यादौ नञर्थे विध्यर्थस्य इष्टसाधनत्वादेः प्रतियोगि-तयान्वयस्य व्युत्पत्तिसिद्धत्वात् अत्र तथान्वये ग्रहणविधिना तत्रेष्ट-साधनत्वादेर्बोधनाद्विरोध इत्यत आह, 'अत्र चेति, आदिभ्यां बलवद-निष्टाननुबन्धि-कृतिसाध्ययोः परिग्रहः। नन्वेवं नञर्थे धात्वर्थस्य प्रति-योगित्वेनान्वयात् नञर्थे विभक्त्यर्थस्यान्वये च व्युत्पत्तिविरोधः इत्यत आह, 'व्युत्पन्नस्येति, 'नञिति नञ्समभिव्याहृतो योधातुस्तदर्थस्येत्यर्थः, 'अतएव' धात्वर्थस्याभावेऽपि विभक्त्यर्थान्वयस्य व्युत्पत्तिसिद्धत्वादेव, 'प्राभाकरा इति, तेषां वैदिकलिङः कार्य्ये शक्तिः तत्र च प्रकृत्यर्थोविषयतया अन्वेति, तथाच स्वर्गकामो यजेतेत्यत्र स्वर्गकामस्य यागविषयकं कार्य्यमित्यन्वयधीः, न कलञ्जं भक्षयेदित्यत्र कलञ्जभक्षणस्य नञर्थेऽभावेऽभावस्य च लिङर्थे कार्य्ये निषेधापूर्व्वरूपे विषयत्वेनान्वये कलञ्जभक्षणाभावविषयकं कार्य्यमित्य-

इत्यत्र रात्रिश्राद्धकरणाभावस्य फलजनकत्वबाधेन फलजनकत्वाभाव एव तात्पर्य्यं कल्प्यते, "नातिरात्र इत्यादौ अतिरात्रे षोडशि-ग्रहणस्येष्टसाधनताया ग्रहणविधिना बोधनात्तत्र तदभावस्य बाधेन तदभावस्येष्टसाधनत्व एव तात्पर्य्यमिति भावः। नन्वङ्गविधिभिः कथमिष्टसाधनत्वं बोधनीयं "फलवत्सन्निधावफलं तदङ्गमित्यङ्ग-लक्षणेनाङ्गानां निष्फलत्वोपगमादित्याशङ्कामङ्गलक्षणे फलसामान्या-भावरूपाफलत्वनिवेशाभिमानविजृम्भितां निराकुरुते, 'मुख्येति अङ्गलक्षणे अफलपदस्य मुख्यफलाजनकत्वार्थकतया तादृशाफलत्व-सत्त्वेऽपि परमापूर्व्वरूपफलजनकत्वबोधनाविरोधादित्यर्थः, अन्यथाङ्गे प्रवृत्त्यनुपपत्तेः, अत एव "यागे रागादङ्गे वैधीति प्रवादोऽपीति भावः। इष्टप्रयोजकत्वरूपेष्टसाधनत्वस्य विध्यर्थत्वे प्रधानफलरूपेष्ट-साधनताबोधनमप्यविरुद्धमिति बोध्यं। ननु षोडशिग्रहणं विनापि तदभावाङ्गकातिरात्रात् परमापूर्व्वसम्भवेन षोडशिग्रहणे परमापूर्व्व-रूपेष्टसाधनताबोधेऽपि प्रवृत्त्यनुपपत्तिः तज्जन्यश्रमादौ बलवद्द्वेष-

---

न्वयधीरिति फलबलाद्व्युत्पत्त्यन्तरं कल्प्यमिति भावः। अतएव च "नामूढ़-स्येतरोत्पत्तेः" "नानुपमृद्य प्रादुर्भावादित्यादेर्नञर्थे विभक्त्यर्थस्यान्वयादमूढ़-स्येतरोत्पत्त्यभावात् अनुपमृद्य प्रादुर्भावाभावादित्यर्थमाहुः। क्वचिद्विभक्त्यर्थ-प्रतियोगिकाभावस्य धात्वर्थे क्वचिच्च धात्वर्थप्रतियोगिकाभावे विभक्त्यर्थान्वये किं नियामकमत आह, 'नियतमस्त्विति,' 'तात्पर्य्यादीत्यादिना प्रकरणादि-परिग्रहः। ननु षोड़शिग्रहणस्याङ्गत्वेनाफलकत्वादिष्टसाधनत्वाभावबोधने-ऽपि न ग्रहणविधिविरोधः एवं ग्रहणाभावस्याप्यङ्गत्वेनाफलकत्वात्तत्रेष्ट-साधनत्वबोधने बाध इत्यत आह, 'मुख्यफलेति, फलवत्सन्निधावफलमङ्ग-मित्यङ्गलक्षणे चाफलत्वं मुख्यफलाजनकत्वं न तु सर्व्वथैव फलशून्यत्वमिति

परमापूर्व्वरूपोपकारसाधनत्वं अविरुद्धं, ग्रहणविध्यन्यथा-नुपपत्त्या षोड़शिग्रहणादतिशयितं परमापूर्व्वं, तस्माच्चातिशयितं मुख्यं फलं कल्प्यते इति सर्व्वसमञ्जसं। प्रति-

सम्भवादित्याशङ्कां फलभूमानमभ्युपेत्य समाधत्ते, 'ग्रहणविध्यन्यथानुपपत्त्येति ग्रहणविधेः प्रवृत्त्यन्यथानुपपत्त्येत्यर्थः, 'अतिशयितं' अतिशयरूपजातिविशेषवत्, प्रधानफलातिशयविरहेण स्वतोऽसुन्दरे परमापूर्व्वेऽतिशयरूपजातिविशेषस्वीकारेऽपि तत्रोत्कटरागासम्भवेन षोड़शिग्रहणजन्यश्रमादौ बलवद्द्वेष इत्यतः प्रधानफलप्रकर्षस्यापि कल्प्यतामाह, 'तस्माच्चेति अतिशयितपरमापूर्व्वाच्चेत्यर्थः, 'फलं' अतिरात्रप्रधानफलं, 'कल्प्यत इति, तथाच तादृशफले उत्कटरागात्तज्जनकातिशयितापूर्व्वेऽप्युत्कटरागोदयेन तज्जनकषोड़शिग्रहणजन्यश्रमादौ बलवद्द्वेषतिरस्कारेण तत्र प्रवृत्तिनिर्व्वाह इति भावः। अत्र च वाकारासत्त्वेऽपि विकल्पनिर्व्वाहः, तथा हि ययोः कल्पयोरन्योन्यजन्यफलविरोधिता तयोरेव विरुद्धकल्परूपविकल्पता, व्रीहि-

भावः। 'उपकारेति प्रधानोपकारेत्यर्थः, 'अविरुद्धं' अङ्गत्वेनाविरुद्धं, ग्रहणाभावेनैवेष्टसिद्धौ कष्टसाध्यग्रहणे कथं प्रवृत्तिरत आह, 'ग्रहणविधीति, अतिशयितफलाकल्पने अननुष्ठानलक्षणाप्रामाण्यं ग्रहणविधेः स्यादिति भावः। अतिशयितपरमापूर्व्वं स्वतः काम्यं अतः कथं तदिच्छया ग्रहणे प्रवृत्त्या विधावननुष्ठानलक्षणाप्रामाण्यं न स्यादत आह, 'तस्माच्चेति, मुख्यं फलं स्वर्गादिरूपं। ननु भूतले न घट इत्यादौ प्रतियोग्यभावयोः प्रतियोग्यनुयोगिभावः भूतलं न घट इत्यादौ अभावाधिकरणाधिकरणयोराधाराधेयभावः न प्रकारतया भासते तदुपस्थापकपदादेरभावात् न

यवयोः समुच्चितयोरपि फलजनकत्वसम्भवेन तत्र तन्निराकरणाय तयोः फलजनने परस्पराभावसहकारिताप्रमाणमावश्यकं तच्च वाकारं विना न सम्भवतीति वाकारापेक्षा अतो यत्र यवैर्यजेते-त्यादौ वाकारो न श्रूयते तत्रापि स कल्प्यते अत्र च कल्पयोर्भा-वाभावरूपतया विरोधेन मिलनासम्भवादेकस्यापरकारणप्रतिक्षेपक-तया अन्योन्यफलविरोधितायाः अर्थतो लाभान्न वाकारापेक्षा ।

अथ व्रीहि-यवविकल्पस्थले वाकारेण यागरूपकार्य्ये व्रीहि-यवयोः परस्पराभावसाहित्येन करणताप्रत्यायनासम्भवः एकस्यापि यागस्य देवतोद्देश्यकद्रव्यत्यागरूपस्य त्यागविषयपुरोडाशरूपद्रव्य-निष्पत्तिद्वारा व्रीहि-यवोभयसाध्यतासम्भवात् । न च स्वर्गं प्रति व्रीहित्याग-यवत्यागयोःपरस्पराभावसाहित्येन करणता वाकारवशात् प्रतीयत इत्यपि सम्यक्, तथा सति व्रीहियाग-यवयागयोरेव विरुद्धकल्पद्वयरूपतया क्रमेण यागद्वयकर्त्तुः स्वर्गानुत्पादप्रसङ्गात् यवैर्यजेत इत्यस्य प्राप्तयागे करणीभूतव्रीहिरूपद्रव्यलाभेन द्रव्या-काङ्क्षानिवृत्तावपि विकल्पमुख्या द्रव्याकाङ्क्षया यवरूपद्रव्यविधायक-तायाः मीमांसकसिद्धान्तसिद्धाया भङ्गप्रसङ्गाच्च । एतेन गुरुमते प्रधा-नविधेरपि यागजन्यत्वेनापूर्व्वबोधकतया अपूर्व्वं प्रत्येव व्रीहि-यवया-गयोः परस्पराभावसहकारेण करणता वाकारसमभिव्याहारवशात् प्रतीयते एकेन च एकदा यागद्वयानुष्ठानासम्भवात् क्रमेण याग-द्वयानुष्ठानस्थले च एकदा तयोरसत्त्वेन क्रमेणापूर्व्वद्वयोत्पत्तौ बाध-काभावः अपूर्व्वे यागस्य साक्षात्कारणतावत् साक्षादेव प्रतिबन्धकत्वा-दित्यपि निरस्तं, विधिप्रत्ययस्यापूर्व्ववाचकत्ववादिनैयायिकादिमते

ऽपूर्व्वे यागयोर्वैकल्पिककारणताया विधिवाक्यतोऽप्रतीतेश्च । एवं वाकारेण करणयोर्व्रीहि-यवयोः परस्परासमवहितत्वं प्रत्याय्यते दण्डाच्चक्राद्वा घट इत्याद्यप्रयोगात् । व्रीह्यसमवहितयवस्य करणतालाभादेव च व्रीह्यसमवधाने कथं याग इत्याकारात्रयवविध्युत्थापककाकाङ्क्षायाः शान्तिर्न तु परस्पराभावसहकृतत्वपर्य्यन्तं वार्थः तृणादरणेर्वा वह्निर्जायत इत्यादिप्रयोगसत्त्वात्, न हि तृणारण्यादिभिः परस्पराभावसहकारेण वह्न्यादिकार्य्यं जन्यते मिलितादपि तादृशकार्य्योत्पत्तेः, तथाच कथं व्रीहि-यवयोर्म्मिलितयोरशास्त्रार्थतेति चेत्, सत्यं, व्रीहिभिर्यवैर्वा यजेत इत्यतो व्रीहिकरणकत्व-यवकरणकत्वयोर्यागविशेषणयोर्यागनिष्ठेष्टसाधनतावच्छेदकत्वं प्रतीयते एकविशिष्टेऽपरवैशिष्ट्यबोधकशब्दस्य धर्म्मिविशेषणे विशेषणान्तरावच्छेदकत्वबोधकताया व्युत्पत्तिसिद्धत्वादौत्सर्गिकविशिष्टान्वये सम्भवति चोपलक्षितान्वये तात्पर्य्याकल्पनात् । एवञ्च व्रीहिकरणकत्व-यवकरणकत्वयोः कल्पयोर्यागनिष्ठस्वर्गोत्पादकतावच्छेदकत्वरूपप्रयोजकत्वेन विधायकं तादृशवाक्यद्वयं तयोस्तत्प्रयोजकत्वञ्च न मिलितयोरेककरणकत्वान्वयितया भासमानयागेऽन्यकरणत्वाभावस्य वाकारेण बोधात्तस्यापि स्वर्गसाधनत्वान्वयियागविशेषणतया तुल्यन्यायेन एककरणकत्वप्रयोज्यस्वर्गेऽपरकरणकत्वाभावस्य प्रयोजकत्वलाभात् अतः कल्पयोर्विरोधेन विकल्पता वाकारकल्पनवीजन्तु व्रीह्यकरणकः स्वर्गसाधनव्रीहियागजातीययागः किंद्रव्यकरणक इत्येतादृशविकल्पमुख्याव्रीह्यकरणकत्वविशिष्टे करणान्तराकाङ्क्षायास्तद्विशिष्टे करणान्तरलाभेनैव निवृत्तेः तद्विशिष्टे करणान्तरबोधस्य तद्बोधकवाकार-

मन्तरेणानुपपत्तिः, तृणादरणेर्व्वा वह्निः पाकहेतुरित्यादौ प्रमाणवाक्ये चैककारणसाध्यत्वान्वयिनि वाकारेणापरसाध्यत्वाभावबोधनेऽपि तदभावस्यागत्या उपलक्षणतयैव भाने तात्पर्य्यमुपेयते न तु विशेषणतया तद्भाने मिलिताभ्यामपि तत्तत्कारणाभ्यां जनितेन वह्न्यादिना पाकादिकार्य्यजननस्य प्रामाणिकतया एकसाध्यकार्य्येऽपरसाध्यत्वाभावप्रयोज्यत्वाभावात्। अथ इड़ोयजति समिधोयजति इत्यादिविधिबोधितानामङ्गानां न कथं विकल्पता तत्रापि प्रथमाङ्गविधितोऽङ्गाकाङ्क्षानिवृत्त्या यवविधिवद्विकल्पमुख्याकाङ्क्षयैव विध्यन्तरप्रवृत्तेर्व्वाकारकल्पनाया आवश्यकत्वात्तद्बलाच्चैकाङ्गसमवधानाभावरूपवाकारार्थविशिष्टस्यैवापराङ्गस्य परमापूर्व्वसाधनतावगमात् विशेषणीभूतस्याभावस्य फलप्रयोजकताया आवश्यकत्वादिति चेत्, न, अङ्गानां यत्र क्रमः श्रुतस्तत्राङ्गविकल्पासम्भवेन समुच्चितानामनेकेषामङ्गत्वप्रदर्शनादेकाङ्गलाभेऽपि किमन्यदङ्गमित्यङ्गान्तराकाङ्क्षयैव द्वितीयादिविधीनां प्रवृत्तिसम्भवेन विकल्पमुख्या आकाङ्क्षायास्तदुत्थापकत्वानुपगमात्, तथा सति परस्पराभावसापेक्षताकल्पने गौरवात्। न चैवं "अग्रभागं ततस्ते आदद्यान्मूल्यञ्च जीवतां" इति विधिबोधितयोः परभूम्यधिकरणकश्राद्धाङ्गयोरग्रभागदान-मूल्यदानयोर्व्विकल्पो न स्यात् विकल्पमुखीमाकाङ्क्षामन्तरेणाप्युक्ताकाङ्क्षया मूल्यदानविधेः प्रवृत्तिसम्भवात् इति वाच्यम्। तयोः "तद्भूमिस्वामिनस्तस्य हरन्ति पितरो बलात्" इत्यर्थवादबोधितहरणनिवृत्तिद्वारा श्राद्धाङ्गत्वादग्रभागदानमात्रेण हरणनिवृत्तिसम्भवात् हरणनिवर्त्तकतया तल्लाभे हरणनिवर्त्तकान्तराका-

ङ्क्षाया अनुदयेन विकल्पमुख्यैवाकाङ्क्षया मूल्यदानप्रवृत्तेस्तकारस्य विकल्पार्थताया आवश्यकत्वात्। न च तथापि तत्र विकल्पानुपपत्तिर्यतो हरणनिवर्त्तकाग्रदान-मूल्यदानयोः क्रमेण विधानोपगमे एव प्रथमविधितोऽग्रदानस्य हरणनिवर्त्तकत्वलाभेन तन्निवर्त्तकाङ्क्षापूरणाद्विकल्पः सम्भवेत् तदेव नोपेयत इति युगपत्समुच्चितोभयदानविधाने बाधकाभावादिति वाच्यम्। अग्रदान-मूल्यदानयोः सम्प्रदाननियमेनाग्रदानत्व-मूल्यदानत्वावच्छिन्नयोः पृथक्सम्प्रदानद्वयान्वयाद्वाक्यभेदस्यावश्यकतया युगपदुभयविधानासम्भवात्। अथैवं यत्र धवच्छिदात्व-खदिरच्छिदात्वावच्छिन्नयोः पृथग्दात्र-कुठारकरणकत्वान्वये तात्पर्य्यं तत्र वाक्यभेदेन सामार्थ्यविरहात् धव-खदिरौ दात्र-कुठाराभ्यां छिनत्तीति प्रयोगानुपपत्तिः समासासम्भवादिति चेत्, न भवत्येव तथा तात्पर्य्येण तादृशप्रयोगः, यत्र छिदात्वरूपैकधर्म्मावच्छिन्नायामेव विभिन्नव्यक्तौ युगपत् धवकर्म्मकत्व-दात्रकरणकत्वयोः खदिरकर्म्मकत्व-कुठारकरणकत्वयोर्युगपदन्वये-तात्पर्य्यं तत्रैव च तथा प्रयोगः, प्रकृते च भूस्वामिपित्राद्युद्देश्यकत्वविशेष्यतावच्छेकतापन्नाय भागदानत्वादिना प्रवृत्तिनिर्व्वायाग्रभागदानत्वादिरूपविभिन्नधर्म्मावच्छिन्ने पृथक्सम्प्रदानान्वयस्यावश्यकतेत्यलमप्रकृताधिकविचारेण। भूतले न घटः भूतलं न घट इत्यादौ प्रतियोग्यभावयोः प्रतियोग्यनुयोगिभावस्य भूतलं न घटः न पचति चैत्र इत्यादौ अभावाधारयोराधाराधेयभावस्य च संसर्गतया भानं नञः प्रातिपदिकत्वेऽपि प्रातिपदिकार्थयोर्न भेदेन साक्षादन्वय इति व्युत्पत्तौ निपातातिरिक्तत्वस्य प्रातिपदिकविशेषणतया नानुपपन्नं

योग्यभावयोः प्रतियोग्यनुयोगिभावो अभावाधिकरणया-ऽऽधाराधेयभावश्च सम्बन्धविधया भासते, निपातातिरिक्तस्थल एव प्रातिपदिकार्थयोर्भेदेनान्वये प्रकारीभूतविभक्त्युपस्थितेस्तन्त्रत्वात् । अत एव इवाद्यर्थान्वये न

---

इत्याह, 'प्रतियोग्यभावयोरिति, तद्विशेषणप्रवेशः प्रयोजनान्तरानुरोधेनाप्यावश्यक इत्यत आह, 'अत एवेति यतोनिपातार्थस्य प्रातिपदिकान्तरेण साक्षाद्भेदान्वयोनानुपपन्नः अत एवेत्यर्थः, 'इवाद्यर्थान्वय इति चन्द्र इव मुखमित्यादौ इवार्थसादृश्यस्य प्रतियोग्यनुयोगिनोः चन्द्र-मुखयोः प्रतियोगित्वानुयोगित्वभान इत्यर्थः, 'न षष्ठ्याद्यपेक्षेति प्रतियोगिपदोत्तरं षष्ठ्याः अनुयोगिपदोत्तरं सप्तम्याश्च नापेक्षेत्यर्थः । तयोः सादृश्यरूपनामार्थेन साक्षादन्वये प्रतियोगित्वादेः प्रकारतया उपगन्तव्यतया तदुपस्थापकषष्ठ्यादिविभक्त्यपेक्षा स्यात् इति भावः । नन्वेवं अघटं भूतलमित्यादिकर्मधारये असमोदेश इत्यादिनञ्तत्पुरुषे च मुख्ययोर्नञर्थयोरत्यन्तान्योन्या-

---

संसर्गतया नामार्थयोर्भेदेन साक्षादन्वयस्याव्युत्पन्नत्वादत आह, 'प्रतियोग्यभावयोरिति, 'निपातातिरिक्तेति, फलबलान्निपातजन्यतदन्वयबोधे विभक्त्यर्थोपस्थितेस्तन्त्रत्वं न कल्प्यमिति भावः । एतच्च एवकारार्थसारमञ्जर्यामभिहितमस्माभिः । 'अतएवेति यत एव निपातार्थान्वयमात्रे न विभक्त्यर्थापेक्षा अतएवेत्यर्थः । 'इवादीति, चन्द्र इव मुखमित्यादौ इवार्थे-सादृश्ये चन्द्रस्य प्रतियोगितया मुखस्याधिकरणतया अन्वयः, आदिना एव-वा-तु-चादिपरिग्रहः । ननु नञोऽभावमात्रार्थकत्वे अघटं भूतलमित्यादौ भिन्नाभ्यां रूपाभ्यामेकधर्म्मिबोधकत्वरूपं सामानाधिकरण्यं न स्यात् एवमघटः पट-

[illegible], अघटं भूतलं असमोदेश इत्यादौ समासे सामानाधिकरण्याद्यनुरोधात् नञोऽभाववत्परता।

---

भावयोरेवाधारतासम्बन्धेन भूतलदेशादावन्वयसम्भवेन तत्र तत्रा-त्यन्ताभावान्योन्याभाववतोर्धर्म्मिणोर्नञो लक्षणा सर्व्वसिद्धा सोचिता इत्यत आह, 'अघटमिति, 'सामानाधिकरण्यानुरोधादिति एक-धर्म्मिबोधकत्वाद्यनुरोधादित्यर्थः, अन्यथा समानलिङ्ग-वचनत्वाद्यनुप-पत्तेरित्यर्थः, प्रथमे धर्म्मिणि लक्षणां विनान्यपदार्थाबोधकत्वेन बहुव्रीह्यनुपपत्तिः अभावार्थकत्वेनाव्ययीभावापत्तिश्च द्रष्टव्या।

---

इत्यादौ अन्वयस्येत्यत आह, 'अघटमिति, संसर्गाभावान्योन्याभावार्थकनञ्-भेदेनोदाहरणद्वयं, अघटः पट इत्यत्र सामानाधिकरण्यानुरोधात् नञो लक्षणया अभाववत्परतेति मणिकारोक्तं, तत्र च तत्पुरुषसमासेऽपि अघट-इत्यस्यैव सम्भवात् तेन घटभिन्नस्यैव बोधनात् संसर्गाभावरूपवत्त्वं नञो न लभ्यते इत्यतो बहुव्रीहिं स्पष्टीकर्त्तुं 'अघटमिति नपुंसकलिङ्गमेव निर्द्दिष्टं, तत्र च न विद्यते घटो यत्रेति विग्रहेण संसर्गाभावबोधनात्। न च चित्र-गुरित्यादौ उत्तरपद एव लक्षणाया व्युत्पादितत्वात् प्रकृते च घटपदस्यैवा-भाववल्लाक्षणिकत्वे सङ्गतिरिति वाच्यं। चित्रगवोरभेदान्वयबोधपुरःसरं चित्रगोसम्बन्धिनि लक्षणायां गोपदार्थस्य साक्षात् सम्बन्धः चित्रपदार्थस्य परम्परासम्बन्धो भासते इति साक्षात्सम्बन्धलाघवात् गोपद एव लक्षणेति तदुक्तं, अत्र तु घटाभावयोरन्वयबोधोत्तरं घटाभावसम्बन्धिन उपस्थितौ नञ्पदार्थस्यैव साक्षात्सम्बन्धभानमिति पूर्व्वपद एव नञि लक्षणायाः सर्व्वसम्मतत्वात्। एतेनाघटमिति तत्पुरुषसमास एव द्वितीयान्तं पश्यति क्रिया चाध्याहार्य्या प्रथमान्तस्येत् परवल्लिङ्गं द्वन्द्व-तत्पुरुषयोरित्यनुशासनात् अघटो भूतलं इति स्यादिति व्याख्यानं अनादेयं संसर्गाभावार्थकनञ्तत्-पुरुषस्यासाधुत्वात्।

केचित्तु प्रतियोगिपदोत्तरसुपः प्रतियोगित्वे अनु-

उक्तव्युत्पत्तौ निपातातिरिक्तत्वविशेषणमप्रविश्यैव षष्ठ्यादिविभ-क्तिमन्तरेणैव प्रतियोग्यनुयोगिभावादिभानमुपपादयतां मतमुप-न्यस्यति, 'केचित्त्विति, 'सुप इति घटोनास्तीत्यादौ प्रथमाविभक्ते-र्नानुयाजेष्वित्यादौ सप्तम्यादिविभक्तेरित्यर्थः, 'प्रतियोगित्व इति, आधेयतासम्बन्धेन विशेषणीभवतः प्रकृत्यर्थस्य विशेष्यतया निरूपक-तासम्बन्धेन चाभावविशेषणतया भासमान इत्यादिः, एतच्च स्वामि-त्वादेः षष्ठ्यर्थतावादिप्राचीनमतानुसारेण, सर्व्वत्र सप्तम्यन्तोऽग्रिमस्य लक्षणेत्यस्य सम्बन्धः, स्वमतानुसारेणाह, 'अनुयोगित्वे वेति, निरू-प्यत्वसम्बन्धेन विशेषणीभवतः प्रकृत्यर्थस्य विशेष्यतया आश्रयतासम्ब-न्धेन चाभावविशेषणतया भासमान इत्यादिः, यथा स्वामित्वादेः षष्ठ्यर्थतामतेनेदं चैत्रस्येत्यादौ निरूपकतासम्बन्धावच्छिन्नाभावबोध-

---

नामार्थयोर्भेदान्वयबोधे प्रकारीभूतविभक्त्यर्थोपस्थितेस्तन्त्रत्वे निपा-तातिरिक्तत्वविशेषणमनिवेशयतां मतमाह, 'केचित्त्विति, घटस्याभाव-इत्यादौ षष्ठ्यर्थोऽनुयोगित्वं, तत्र च घटस्य निरूपितत्वेनाभावस्य चाधि-करणत्वेनान्वयः, न तु प्रतियोगित्वं षष्ठ्यर्थः, तथा सति घटस्याधेयत्वेनाभावस्य च निरूपकत्वेनान्वय इति घटीयाभावेऽपि न घटस्येति स्यात् घटनिष्ठप्रति-योगित्वस्याभावेऽभावसत्त्वात् निरूपकत्वादेः सम्बन्धस्य चाभावप्रतियोगिता-नवच्छेदकत्वात् एवञ्च न घट इत्यादौ प्रतियोगित्वस्य सुबर्थत्वे घटस्य तत्राधेयत्वेनान्वयकल्पने घटस्याभाव इत्यादौ विभक्त्यर्थे निरूपितत्वसम्बन्धेन प्रकृत्यर्थान्वयोऽन्यत्र क्लृप्तोभज्येत एवं घटस्याभावो न घट इत्यत्र प्रथमाया षष्ठ्यर्थत्वाद्यधिकत्वे घटानुयोगिकत्वाभावः प्रतीयते प्रतियोगित्वस्य प्रथमा-र्थत्वे नञर्थान्वयानुपपत्तिश्च इत्यतः 'अनुयोगित्वे वेति, इदन्तु बोध्य

योगित्वे वा नञुत्तरस्याधिकरणत्वेन नञो वा अभाववति लक्षणा विभक्त्यर्थानुयोगिसमानविभक्तिकस्यैवा-

---

स्यैवोपेयतया तादृशसम्बन्धस्य चाभावप्रतियोगितानवच्छेदकतया असामञ्जस्यं तथाच घटो नेत्यादौ प्रतियोगित्वस्य सुपर्थतामते न काचिदनुपपत्तिः। नञर्थाभावानुयोगिकप्रतियोगिवाचकपदोत्तरविभक्त्यर्थाभावस्य नञा अबोधनात् नेदं चैत्रस्येतिवत्तादृशाभावतात्पर्य्येण न घटो नेत्यप्रयोगादतः प्रथममतेऽस्वरसोनास्ति परन्त्वनुयोगित्वस्याप्युक्तस्थले सुवर्थता सम्भवतीति तस्य सुवर्थताकल्पानुसरणं, एतावता नञर्थे प्रतियोगिनः साचाद्विशेषणत्वं निराकृत्य भूतलं न घटः न पचति चैत्र इत्यादौ नञर्थस्यानुयोगिनि भेदेन साचात्तथात्वं निराकरोति, 'नञुत्तरस्येति, सुप इत्यनुषज्यते, निपातोत्तरविभक्तेर्निरर्थकतामतानुसारेणाह, 'नञो वेति, 'अभाववति लक्षणेति, तथाच नञर्थेनानुयोगिनोऽभेदान्वय इति भावः। न च निपातोत्तरप्रथमाविभक्तेरेव सर्व्वत्रोपगमात् भूतलं न घट

---

भूतले न घट इत्यादौ प्रथमार्थस्यानुयोगित्वस्य नञर्थे अधिकरणत्वेनान्वयः पटाभावो न घटः इत्यादौ तु प्रतियोगित्वेनान्वयस्तत्र प्रकरणादिकमेव नियामकं षष्ठ्याद्यर्थस्यानुयोगित्वस्य नञर्थेऽधिकरणत्वेनान्वये षष्ठ्यादेर्विशेषणविभक्तित्वं तन्त्रं यत्र तु षष्ठीविनिमयविभक्तिस्तत्र तदर्थस्यानुयोगित्वस्य नञर्थे प्रतियोगित्वेनैवान्वयः, अतएव अयमभावो न घटस्येत्यादौ अभावे घटानुयोगित्वाभावः प्रतीयते न तु घटाभावस्यानुयोगिकत्ववान् अभाव-इति नञुत्तरस्य सुपोऽधिकरणत्वं, तत्र च लक्षणा इत्युभयकल्पनापेक्षया प्रथमान्तनञोऽभाववल्लक्षणा युक्ता इत्याशयेनाह, 'नञोवेति।

ऽन्योन्याभाव-संसर्गाभावयोर्बोधने नञोऽसामर्थ्यं, तेन न

इत्यादौ भूतलादिपद-नञ्पदयोः समानविभक्तिकत्वेऽपि नानु-याजेषु यजतिष्वित्यादौ नञः सप्तम्यन्तताविरहेण यजत्यादिपद-समानविभक्तिकताविरहात् तदर्थस्याभाववतो यजत्यादावभेदान्वया-सम्भव इति वाच्यम् । निपातोत्तरं सर्व्वविभक्त्युत्पादाभ्युपगमात् । अतएवैवकारवादे पृथिव्यामेव गन्ध इत्यादौ एवकारोत्तरसप्तम्यर्थ-व्यवच्छेदबोधो दीधितिकृतैवाभिहितः । अयं न पचति इदं न राज्ञ इत्यत्र प्रतियोग्यनुयोगिभावसम्बन्धेन न कथं विभक्त्यर्थविशे-षितभेदबोधः न कथं वा भूतलं न घट इत्यादौ भूतलादौ घटादिसंसर्गाभावबोधः नञर्थसंसर्गाभावे घटादिपदोत्तरप्रथमाया-घटादिप्रतियोगिकत्वस्य नञ्पदोत्तरप्रथमायाश्चाभावाधारत्वस्य भूत-लादौ बोधनसम्भवादित्यात आह. 'विभक्त्यर्थेति विभक्त्यर्थान्योन्याभावस्य समानविभक्तिकपदार्थयोः संसर्गाभावस्य बोधने नञो न सामर्थ्य-

यत्तु विशेषणविशिष्टपदयोर्विरुद्धविभक्तिराहित्यं अन्योन्याभावबोधे प्रागुक्तनियामकमुक्तं तत्र विरुद्धत्वं विरुद्धार्थकत्वं अन्यथा कर्त्तृस्थले कर्मा-ख्यातार्थकप्रथमान्तार्थस्य शुद्धप्रथमान्तार्थेन नञोऽन्योन्याभावबोधापातात् तथाच यथा ब्राह्मणस्य धनं न मूर्खस्य इत्यादौ नञर्थे भेदे मूर्खानुयोगित्वस्य बोधे नञर्थस्याधिकरणत्वेनान्वये मूर्खभिन्नस्य ब्राह्मणस्येत्यर्थो लभ्यते तथा प्रतियोगिपदोत्तरस्य सुपः प्रतियोगित्वादौ साकाङ्क्षत्वेऽनुयोगिपदस्य शुद्ध-सुबन्तत्वे विरुद्धार्थकत्वमेव विभक्तेरिति प्रागुक्तनियामकासम्भवात् अनियमेन सुवर्थप्रतियोगित्वादेरिव तिङादि-सुबाद्यर्थकृतिसम्बन्धादेरपि नञर्थेऽन्यो-न्याभावे साक्षादन्वयेन न पचति न राज्ञ इत्यादौ कृति-सम्बन्धयोर्भेदबोधा-

पर्व्वते न राम इत्यादौ रूत्यादेरन्योन्याभावो भूतले न घट इत्यादौ घटादेः संसर्गाभावो न प्रतीयते इत्याहुः ।

इति महामहोपाध्यायश्रीरघुनाथशिरोमणिभट्टाचार्य्यविरचितं नञ्वादरहस्यं सम्पूर्णं ।

---

मित्यर्थः । असामर्थ्यञ्च तादृशतादृशप्रतियोग्यनुयोगिवाचकपदाभ्यां नञ्पदसमभिव्याहारज्ञानस्य तादृशफलानुत्पादकतया तत्कारणत्वानुपगमादिति भावः । 'आहु'रित्यस्वरससूचनाय स च प्रथमाविभक्त्या सङ्ख्याद्यतिरिक्तार्थबोधने तस्या असाधुत्वापत्तेरिति ।

इति महामहोपाध्याय-श्रीगदाधरभट्टाचार्य्यविरचिता नञ्वादटिप्पनी समाप्ता ।

---

पत्तिः, एवं नञर्थे संसर्गाभावे भेदान्वयोपपत्त्यर्थमनुयोगिपदे सप्तम्यपेक्षा स च नञन्तरस्य सुपोऽधिकरणत्वेन लक्षणयैवोपपन्न इति नञोऽभाववल्लाक्षणिकत्वे तु भेदान्वयप्रसक्त्याभावात् अभेदान्वये सप्तम्या अप्रयोजक इति व्याख्यान्तरं अत्यन्तसमीचीनं ।